॥ श्रीश्रीहृमत्परमहंसपरिव्राजकाचार्य्यगौडस्वामीतित्रिलोकप्रथितनामगुरुचरणारविन्देभ्योनमोनमः ॥

॥ श्रीमन्महीधरकृतवेददीपनामभाष्यसहिता उदात्तादिस्वरचिह्नसमन्विता ॥

# ॥ श्रीशुक्लयजुर्वेदः वाजसनेयिसंहिता माध्यन्दिनी शाखा ॥

॥ काश्यधीतवेदादिश्रीसत्यव्रतसामश्रमिणा संगृह्य संशोध्य च प्रकाशिता ॥

॥ कलिकाताराजधान्यां सत्ययन्त्रे १७९९ शकाब्दीयचैत्रे लौहयन्त्रे श्रीमन्नाचरैः मुद्रणं समाप्तम्

भूयिष्ठां बहुतरां नमउक्तिं नमस्कारवचनं विधेम कुर्यामः इदानीं सपापत्वात्तवपरिचर्यां कर्तुं न शक्नुमस्ततस्त्वया पापनाशे कृते शुद्धा वयं नमस्कारेण त्वां परिचरेमेत्यर्थः ॥ १६ ॥ १—ऋतु० ४,९।

पुनरादित्योपासनमाह। उष्णिक् यजुर्ह्यान्ता उष्णिक् त्रिपादान्त्यो द्वादशक इति वचनात्। हिरण्मयमिव हिरण्मयं ज्योतिर्मयं यत्पात्रम् पिबन्ति यत्र स्थिता रश्मयो रसानिति पात्रं मण्डलम् तेन तेजोरूपेण मण्डलेन सतस्यादित्यमण्डलस्थस्याविनाशिनः पुरुषस्य मुखं शरीरमपिहितमाच्छादितं वर्तते। तथापि यः असौ प्रतश्च: आदित्ये रविमण्डले पुरुषः पुरुषाकारत्वात् पूर्णमनेन प्राणबुद्ध्यात्मना जगत्समस्तमिति वा पुरुषः पुरि शयनाद्वा स मण्डलस्थः पुरुषः असौ प्रतश्च: कार्यकारणसङ्घातप्रविष्टोऽहमस्मि। एतां चोपासनां कुर्यादित्यर्थः॥ ओम् खं ब्रह्मेति यजुषी। ओ३मिति नामनिर्देशो ब्रह्मणः खं ब्रह्मेत्याकाशरूपमन्तं ब्रह्म ध्यायेत्।

**हिरण्मयेनपात्रेणसत्यस्यापिहितम्मुखम्। योसावादित्ये पुरुषःसोसावहम्॥ ओ३म्खम्ब्रह्म ॥ १७ ॥**

**॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां चत्वारिंशोऽध्यायः ॥ ४० ॥**

यद्यपि ब्रह्म चेतनमाकाशस्त्वचेतन स्तथाप्येकदेशे सादृश्यम् नभोवद्व्यापकं ब्रह्म ओमिति जपन् ध्यायेदित्यर्थः। सूर्यमण्डलस्थः पुरुषोऽहमेवेत्यभेदेन चिन्तयेत् ॥ अथ विचारः। विद्यां चाविद्यां चेत्यत्र(१४) विद्याशब्देन किं मुख्या परमात्मविद्योच्यते उतोपासना वा अमृतमश्नुत इत्यत्र(१४) अमृतशब्देन साक्षान्मुक्तिरुत्तरमार्गेण परम्परया वा। नाद्यः। विद्याकर्मणोर्यस्तद्वेदोभयꣳ सहेति(१४) समुच्चयानुपपत्तेः तयोर्विरोधात् विद्योत्पत्तौ तदाश्रयेऽविद्यानुत्पत्तेः वह्निरुष्णः प्रकाशश्चेति ज्ञानोत्पत्तौ शीतोऽग्निरप्रकाशश्चेति अविद्योत्पत्तिर्न सम्भवति नापि संशयोऽज्ञानं वा। यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः तत्र को मोहः कः शोक इत्युक्तत्वात्। किञ्च विद्याशब्देन परमात्मविद्याग्रहणे अग्ने नयेति सुपथयाचनमनुपपन्नम्। तस्माद्विद्योपासना अमृतं चापेक्षिकमिति दिक्॥ १७ ॥

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। [illegible]ऽध्यायः [illegible]मात्मनिरूपकः॥ ४० ॥ शुक्लयजुर्वेदस्य मन्त्रभागः समाप्तः॥

पलक्षणार्थम् समष्ट्यात्मकलिङ्गरूपः प्राणोऽध्यात्मपरिच्छेदं हित्वाधिदैवतरूपं सर्वात्मकममृतं सूत्रात्मानमनिलं वायुं प्रतिपद्यतामिति वाक्यशेषः वायुर्वाव गौतम सूत्रं वायुना गौतम सूत्रेणायं लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति[1] श्रुतेः ज्ञानकर्मसंस्कृतं लिङ्गमुत्क्रामत्वित्यर्थः। अथ इदं स्थूलं शरीरमग्नौ हुतं सत् भस्मान्तं भस्मरूपं भूयात् भस्मान्तः स्वरूपं यस्य तत् कृतप्रयोजनत्वात्॥ अथ योगिनोऽत्र लब्धभूतमक्षरमुच्यते ओमिति ब्रह्मणः प्रतिमा नाम वा। अस्य ब्रह्म ऋषिः गायत्री छन्दः परमात्मा देवता वेदारम्भे होमे शान्ति-पुष्टिकर्मसु काम्येषु नैमित्तिकेष्वपि कर्मसु विनियोगः। ओंप्रतीकात्मकत्वात्तत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते हे ओम् हे क्रतो सङ्कल्पात्मक स्मर यन्मम स्मर्तव्यं तस्यायं कालः प्रत्युपस्थितोऽतः स्मर यत्त्वं ब्रह्मचर्ये गार्हपत्ये च मया परिचरितस्तत्स्मर। क्लिबे स्मर कल्पते भोगायेति क्लृप् लोकः तस्मै स्मर जगादेश आर्षः छन्दस्युभयथेति पदान्तत्वात् मयास्मै अयं लोको दातव्यस्तस्मै क्लृप्ताय लोकाय स्मर। कृतं स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मर। स्मरेत्यस्यावृत्तिरादरार्था। क्रतो त्रिभिर्यजुर्भिरन्ते यज्ञान्योगी स्मारयतीति कात्यायनः[2] ॥ १५ ॥

**अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥१६॥**

पुनरन्येन मन्त्रेणाग्न्याख्यं ब्रह्म प्रति योगी मार्गं याचते। अगस्त्यदृष्टाग्नेयी त्रिष्टुप् व्याख्यातापि(५, ३६) विशेषाय पुनर्व्याख्यायते। हे देव दानादिगुणयुक्त हे अग्ने अस्मान् सुपथा शोभनेन मार्गेण देवयानेन नय सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम् गतागत-लक्षणेन दक्षिणमार्गेण निविष्टोऽहम् अतोऽग्ने त्वां याचे पुनर्गमनागमनवर्जितेन शोभनेन पथास्मान्कर्मफलविशिष्टान्नय। किमर्थम् राये धनाय मुक्तिलक्षणाय कर्मफलभोगायेत्यर्थः। किंविधस्त्वम् विश्वानि सर्वाणि वयुनानि कर्माणि प्रज्ञानानि वा विद्वान् जानन्। किञ्च जुहुराणं हुर्छा कौटिल्ये शानचि जुहोत्यादित्वेन रूपम् कुटिलं प्रतिबन्धकं वञ्चनात्मकमेनः पापमस्मत् अस्मत्तः सका-शात् युयोधि पृथक्कुरु वियोजय नाशयेत्यर्थः यु मिश्रणामिश्रणयोः ह्वादित्वाच्छब्लोपहित्वे छान्दसं हेर्धित्वम् ततो विशुद्धा वयं ते तुभ्यं

[1] — बृ० शा० माध्य० ३, ५, ६। [2] — अनु० ४, ९।

मदर्थनात्मक तमोऽज्ञानं प्रविशन्ति संसारदुःखमनुभवन्तीत्यर्थः । ततस्तस्मादन्धात्मकात्तमसा भूय इव बहुतरमेव तमः ते
प्रविशन्ति ये उ ये पुनर्विद्यायामात्मज्ञाने देवताज्ञाने एव रताः कर्माणि हित्वा कर्माकरणे प्रत्यवायोत्पत्त्याऽन्तःकरणशुद्ध्यभावेन
ज्ञानानुदयादिति भावः ॥ १२ ॥
तयोः फलभेदमाह । विद्याया आत्मज्ञानस्य फलमन्यदेवाहुरमृतरूपम् अविद्यायाः कर्मणश्च फलं पितृलोकरूपमन्यदेवाहुः
धीराः कर्मणा पितृलोको विद्यया देवलोक इति श्रुतेः । ये धीराः धीमन्तः आचार्याः नोऽस्मभ्यं ज्ञानं कर्म च विचचक्षिरे

**ततो भूय इव ते तमो य उ विद्यायां रताः ॥ १२ ॥ अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया । इति शुश्रुम धीराणां**

**ये नस्तद्विचचक्षिरे ॥ १३ ॥ विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥१४॥**

**वायुरनिलममृतमथेदं भस्मान्तं शरीरम् । ओ३म् क्रतो स्मर क्लिबे स्मर कृतं स्मर ॥ १५ ॥**

व्याचख्युः तदुक्तम् इत्येवं धीराणां वचः शुश्रुम श्रुतवन्तः ॥ १३ ॥
समुच्चयमाह । विद्यां देवताज्ञानमविद्यां कर्म च तदुभयं विद्याविद्यारूपं द्वयं यः सह वेद एकोऽनुष्ठेय वेद एकेन पुरुषे-
णानुष्ठेयं जानाति कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतमित्यर्थः । सोऽविद्ययाऽग्निहोत्रादिकर्मणा मृत्युं स्वाभाविककर्मज्ञानं मृत्युशब्द-
वाच्यं तीर्त्वोत्तीर्यान्तःशुद्धो कृतकृत्यो भूत्वा विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते प्राप्नोति तदमृतमुच्यते यद्देवतात्मा-
गमनमिति श्रुतेः ॥ १४ ॥
अथ कृतोपासनो योगी अन्तकाले प्रार्थयते । हे यजुषो अथ इदानीं परोप्यतो मम वायुः प्राणो वायुग्रहणं समस्तैकलिङ्गो

कर्मफलसाधनतः अर्थान् कर्त्तव्यपदार्थान् व्यदधात् यथानुरूपं व्यभजदित्यर्थः। स कीदृशः शुक्रमित्यादिविशेषणानि लिङ्गव्यत्ययेन
पुंलिङ्गे नेतव्यानि शुक्रः शुद्धो दीप्तिमान् अकायोऽशरीरः लिङ्गशरीरवर्जित इत्यर्थः अव्रणोऽक्षतः अस्नाविरः शिरारहितः
अव्रणोऽस्नाविर इति विशेषणद्वयेन स्थूलशरीरप्रतिषेधः शुद्धो निर्मलः अपापविद्धोऽधर्मादिवर्जितः कविः सर्वदृक् नान्यदतोऽस्ति
द्रष्टृति श्रुतेः मनीषी मनस ईषिता सर्वज्ञः परिभूः परि सर्वेषामुपर्युपरि भवतीति परिभूः स्वयम्भूः स्वयमेव भवतीति
येषामुपरि भवति यश्चोपरि]भवति स स्वयमेव भवतीति स्वयम्भूः। स नित्य ईश्वरः सर्वं कृतवानित्यर्थः ॥ ८ ॥

अतः परमुपासनामन्त्रा उच्यन्ते। षडनुष्टुभः। यमनियमसम्बन्धशान्विज्ञानात्मा कश्चिन्नास्ति जलबुद्बुदवज्जीवाः मदशक्तिवद्विज्ञान-
मित्यादिमतवादिनो बौद्धाः प्रस्तूय निन्द्यन्ते। ये नराः असम्भूतिमसम्भवमुपासते मृतस्य पुनः सम्भवो नास्ति अतः शरीरान्तेऽस्माकं

**श्वतीभ्यः समाभ्यः ॥ ८ ॥ अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते। ततो भूय इव ते तमो य उ सम्भूत्याꣳ रताः ॥ ९ ॥**

मुक्तिरेवेति वदन्ति ते अन्धं तमोऽज्ञानलक्षणं प्रविशन्ति। ये उ ये च सम्भूत्यामेव रताः सम्भवत्यस्या इति सम्भूतिरात्मा तत्रैवा-
सक्ताः कर्मपराङ्मुखाः स्वबुद्धिलाघवमजानाना आत्मज्ञानमात्ररताः आत्मैवास्ति नान्यत् कर्मादीनि कर्मकाण्डज्ञानकाण्डयोः सम्बन्धो
नास्तीत्यभिप्रायवन्त इत्यर्थः ते नराः ततोऽन्धात्तमसो भूय इव इवशब्दोऽनर्थकः बहुतरं तमोऽज्ञानं विशन्ति ॥ अस्या ऋचोऽर्था-
न्तरमुच्यते अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते। सम्भवनं सम्भूतिः कार्यस्योत्पत्तिः तस्या अन्या
असम्भूतिः प्रकृतिः कारणमव्याकृताख्यम् तामसम्भूतिमव्याकृताख्यां प्रकृतिं कारणमविद्याकामकर्मबीजभूतामदर्शनात्मिकां ये उपा-
सते ते तदनुरूपमेवान्धं तमोऽदर्शनात्मकं संसारं प्रविशन्ति। ये सम्भूत्यां कार्यब्रह्मणि हिरण्यगर्भाख्ये रताः ते ततस्तस्मा-
दपि भूयो बहुतरमिव तमः प्रविशन्ति ॥ ९ ॥

इममेवार्थमन्यो मन्त्रो वदति। यस्मिन्नवस्थाविशेषे विजानतः आत्मैवेदम् सर्वं खल्विदं ब्रह्मेत्यादिवाक्यविचारणावधृत-परमार्थस्य सतः सर्वाणि भूतानि आत्मैवाभूत् परमार्थदर्शनादात्मैव संवृत्तः तत्र तस्यामवस्थायामेकत्वं विशुद्धं गगणोपममा-त्मैकत्वं पश्यतः जानतः को मोहः कः शोकश्च अविद्याकार्ययोः शोकमोहयोरसम्भवात्सकारणस्य संसारस्यात्यन्तमुच्छेद इति भावः॥ ७॥

एवम्भूतात्मज्ञस्य फलमाह। य एवमात्मानं पश्यति स ईदृशं ब्रह्म पर्यगात् परिगच्छति प्राप्नोतीत्यर्थः। कीदृशम् शुक्रं शुक्लं शुद्धं विज्ञानानन्दस्वभावमचिन्त्यशक्ति। अकायम् न कायः शरीरं यस्य तत्। अकायत्वादेवाव्रणमक्षतम्। अस्नाविरं न विद्यन्ते स्नावाः शिरा यत्र तदस्नाविरं स्नायुरहितम् अकायत्वादेव। शुद्धमनुपहतं सत्त्वरजस्तमोभिः। अपापविद्धं न

यस्मिन्त्सर्वाणिभूतान्यात्मैवाभूद्विजानतः। तत्रकोमोहःकःशोकएकत्वमनुपश्यतः॥ ७॥

सपर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापविद्धम्। कविर्मनीषीपरिभूःस्वयम्भूर्याथातथ्यतोर्थान्व्यदधाच्छा

पापैर्विद्धं क्लेशकर्मविपाकाशयैरस्पृष्टम्। अकायमव्रणमस्नाविरमिति पुनरुक्तमर्थातिशयद्योतनाय अभ्यासे भूयांसमर्थं मन्यन्त इति यास्कोक्तेः(१०,४२)। ईदृशं ब्रह्मात्मज्ञः प्रतिपद्यत इत्यर्थः। पुनस्तस्यैव फलान्तरमाह य ईदृश उपासकः स शाश्वतीभ्यः समाभ्यः निरन्तरमनन्तवर्षेभ्योऽर्थाय अनन्तवर्षप्राप्तये याथातथ्यतः यथातथाभावो याथातथ्यं तेन यथास्वरूपमर्थान् व्यदधात् विहितवान् त्यक्तस्वस्वामिसम्बन्धैश्चेतनाचेतनैरर्थैरुपभोगं कृतवानित्यर्थः। कीदृशः कविः क्रान्तदर्शी। मनीषी मेधावी। परि सर्वतो भव-तीति परिभूः ज्ञानबलात्सर्वरूपः। स्वयं भवतीति स्वयम्भूः ब्रह्मरूपेण भविता। ईदृशोऽपि पूर्वोक्तं शुक्रमकायमित्यादिवि-शेषणविशिष्टं ब्रह्म प्राप्नोतीत्यर्थः॥ एतस्या ऋचोऽर्थान्तरम्। यथा। योऽयमतीतमन्त्रोक्त आत्मा स पर्यगात् परितः सर्वत्र गच्छति नभोवत्सर्वं व्याप्नोति व्याप्य च शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्यो याथातथ्यतः यथाभूत

तत् उ तदेव अन्तिके समीपे विदुषामात्मत्वेन भासमानत्वात् केवलं दूरेऽन्तिके च। अस्य सर्वस्य नामरूपक्रियात्मकस्य जगतो ऽन्तरभ्यन्तरे तदेव। अस्य सर्वस्य बाह्यतः बहिरपि तदु तदेव ब्रह्म नभोवद्व्यापकत्वात्॥ अस्य मन्त्रस्यार्थान्तरम् यथा पूर्वमन्त्रेण कारणरूपमात्मानमुद्दिश्य कार्यरूपमुद्दिशति। तदेजति। तिस्रोऽनुष्टुभः। तत् आत्मतत्त्वमेजति सर्वजन्तुरूपेण स्थितं सत् कम्पते क्रियावद्भवति तदेव च न एजति स्थावररूपावस्थं न चलति। तदेव दूरे आदित्यनक्षत्रादिरूपेण स्थितत्वात् तदु अन्तिके समीपे धरादिरूपत्वात् सर्वं खल्विदं ब्रह्मेति श्रुतेः। अस्य सर्वस्य प्राणिजातस्यान्तर्मध्ये तदेवास्ते विज्ञानघनरूपेण। अस्य सर्वस्य बहिः तदु तदेव जडरूपत्वात् चेतनाचेतनरूपमनन्तं ब्रह्मेत्यर्थः एतदुपासितुरर्चिरादिमार्गेण गमनं नास्ति इहैव ब्रह्मप्राप्तिः न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येतीति श्रुतेः ॥ ५ ॥

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विचिकित्सति ॥ ६ ॥

अथोपासकप्रकारमाह। यस्तु यः पुनः मुमुक्षुः सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि चेतनानि आत्मन् सप्तम्या लुक् आत्मनि एवानुपश्यति तथैव सर्वभूतानि स्थितानि न मद्व्यतिरिक्तानीति पश्यति आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः। सर्वभूतेषु चात्मानमवस्थितं तद्व्यतिरिक्तं पश्यति तेषां भूतानां स्वं आत्मानमात्मत्वेन पश्यतीत्यर्थः। अयमर्थः। अस्य कार्यकारणरूपात्मनः आत्माहं सर्वप्रत्ययसाक्षीभूतश्चेतयिता निर्गुणश्च तथा तेनैव स्वरूपेणाव्यक्तादीनां स्थावरान्तानामहमेवात्मेति सर्वेषु चात्मानं निर्विशेषं पश्यति। ततस्तस्माद्दर्शनात् न विचिकित्सति न संशेते किञ्चिद्गोपनयनं संशये चेति धातोः गुप्तिज्किद्भ्यः सन्निति स्वार्थे सन्प्रत्ययः आत्मनोऽन्यतः स्थितः सर्वः सन्देहो भवत्यात्मानमेवात्यन्तं शुद्धं निरन्तरं पश्यतो न सन्देहावकाश इति भावः अत आत्मज्ञस्य विचारनिवृत्तिः ॥ ६ ॥

अथ काम्यकर्मपरान्निन्दति । ये के च ये केचित् जनाः नराः आत्महनः आत्मानं घ्नन्तीत्यात्महनः अविद्वांसः काम्यकर्मपराः विद्यमानस्याजरामरस्यात्मनोऽविद्यादोषेण तिरस्कारकत्वादात्महन्तारः ते प्रेत्य मृत्वा देहं त्यक्त्वा तान् लोकान् जन्मानि स्थावरान्तानि अपिगच्छन्ति प्राप्नुवन्ति । तान् कान् नाम प्रसिद्धं ते ये यत्तदोर्व्यत्ययः ये लोकाः लोक्यन्ते दृश्यन्ते भुज्यन्ते कर्मफलानि येषु इति लोका जन्मानि असुर्याः असुराणामिमे असुर्याः असुषु प्राणेषु रमन्तेऽसुराः प्राणपोषणपराः अद्वैतमपेक्ष्य देवा अपि असुराः । कीदृशाः लोकाः अन्धेन तमसा अदर्शनात्मकेनाज्ञानेन आवृताः आच्छादिताः । अनात्मज्ञाः पुनर्जायन्ते म्रियन्ते चेत्यर्थः ॥ ३ ॥

मुमुक्षुभिर्यदिदं ब्रह्मात्मत्वेनोपास्यम् यस्याज्ञानात्संसारस्तदात्मस्वरूपमाह । त्रिष्टुप् छन्दस्केयमृक् । यत् ब्रह्म अनेजत् एजृ कम्पने

असुर्यानामतेलोकाअन्धेनतमसावृताः । ताँस्तेप्रेत्यापिगच्छन्तियेकेचात्महनोजनाः ॥ ३ ॥

अनेजदेकंमनसोजवीयोनैनद्देवाआप्नुवन्पूर्वमर्षत् । तद्धावतोन्यानत्यतितिष्ठत्तस्मिन्नपोमातरिश्वादधाति ॥ ४ ॥

न एजतीत्यनेजत् अचलत् स्वावस्थाप्रच्युतिः कम्पनम् तद्रहितम् सदैकरूपमित्यर्थः एकमद्वितीयं सर्वभूतेषु विज्ञानघनरूपेण । मनसः सङ्कल्पादिलक्षणाज्जवीयः वेगवत्तरम् जवोऽस्यास्तीति जववत् अतिशयेन जववत् जवीयः ईयसुनि कृते विन्मतोर्लुगिति मतुपो लुक् । नन्वनेजद्वेगवतोर्विरोधः नैवम् निरुपाधिकेनानेजत् सङ्कल्पविकल्परूपान्तःकरणस्योपाधेरनुवर्तनाज्जविष्ठम् देहस्थस्य मनसो दूरस्थब्रह्मलोकादिसङ्कल्पनं क्षणमात्राद्भवतीति मनो वेगवत्तरं लोके प्रसिद्धम् मनसि दूरं गच्छत्यात्मचैतन्यावभासः प्रथमप्राप्त इव दृश्यतेऽतो मनसो जवीय इत्युक्तम् । देवा द्योतनात्मकाश्चक्षुरादीन्द्रियाणि एनत् प्रकृतमात्मतत्त्वं नाप्नुवन् न प्राप्तवन्तः चक्षुरादिभ्यो मनो जवीयोऽतो मनोव्यापारे व्यवहितत्वादात्मनः आभासमात्रमपि देवानां गोचरो न भवतीत्यर्थः यतः पूर्वमर्षत् वेगवन्मनसोऽपि

परमात्माहमेवेदं सर्वमिति परमार्थसत्यरूपेणात्मना सर्वमिदमनृतमाच्छादनीयम् परमात्माहमेवास्मि नान्यदस्तीति चिन्तयेदित्यर्थः । यत् किम् चेति भिन्नक्रमः किञ्च यत् जगत्यां लोकत्रये जगत् जङ्गमादिकं स्वामिसम्बन्धाजितं भवेत् तेन सर्वेण त्यक्तेन त्यक्तस्वस्वामिसम्बन्धेन भुञ्जीथाः भोगमनुभवेः मा गृधः गृधु अभिकाङ्क्षायाम् आकाङ्क्षां मा कृथाः ममेदमिति धियं त्यजेत्यर्थः । किमिति स्विदिति निपातो वितर्के धनं कस्य स्वित् न कस्यापीत्यर्थः सर्वाणि द्रव्याण्यन्याऽन्यमुपगच्छन्ति दृश्यन्ते अतो ममेदमिति बुद्धिरविद्या तां त्यजतो योगेऽधिकार इत्यर्थः ॥ १ ॥

आत्मज्ञानाशक्तस्य कर्मोपदेशमाह । कर्माणि अग्निहोत्रादीनि निष्कामानि मुक्तिहेतुकानि कुर्वन्नेवेह लोके शतं समाः शतवर्षपर्यन्तं जिजीविषेत् पुरुषव्यत्ययः त्वं जिजीविषेः जीवितुमिच्छेः पुरुषायुषः शतवर्षत्वाच्छतग्रहणम् । त्वयीति विभक्तिव्यत्ययः

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः । एवन्त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥

तवैवं कर्म कुर्वतो जिजीविषतो मुक्तिरस्तीति शेषः इतः प्रकारादन्यथा प्रकारान्तरेण मुक्तिर्नास्ति अयमर्थः स्वर्गादिप्राप्तौ यथा नानाप्रकारा न तथा मुक्तावित्यर्थः निष्कामकर्मानुष्ठानेन शुद्धान्तःकरणस्यैव मुक्तिरित्यर्थः न तु कर्मणः फलेन भाव्यम् कथं मुक्तिरित्यत आह न कर्मेति मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये न लिप्यते न सम्बध्यते मुक्तिकारणान्तःकरणशुद्ध्यापादकत्वेनोपक्षीणशक्तित्वात् यावदिच्छा तावत्कर्मस्वधिकार इति दर्शितम् । उत्तरार्धस्यार्थान्तरं वा एवं प्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि इतः एतस्मात्कर्मकरणादन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म न लिप्यते अतः शास्त्रविहितं कर्म कुर्वन्नेव जीवितुमिच्छेत् प्रत्यवायपरिहारायेत्यर्थः तदुक्तम् द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः प्रवृत्तिलक्षणो धर्मो निवृत्तो च विभाषित इति ॥ २ ॥

लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत्। लोमादीन्यङ्गानि। लोमभ्यः स्वाहा लोमानि जुहोमीत्यर्थः २. त्वचे ४. लोहिताय ६. मेदोभ्यः मेदो धातुविशेषः ८. मांसेभ्यः १०. स्नावभ्यः स्नावानः स्नायवो नसाः १२. अस्थभ्यः छन्दस्यपि दृश्यते इत्यस्थिशब्दस्य हलादिविभक्तावित्यनङादेशः १४. मज्जभ्यः मज्जा षष्ठो धातुः १६. रेतसे रेतो वीर्यम् १७. पायवे पायुर्गुदम् १८.॥१०॥

स्नावभ्यः स्वाहास्थभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः स्वाहा। रेतसे स्वाहा पायवे स्वाहा ॥१०॥

आयासाय स्वाहा प्रायासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा। शुचे स्वाहा शोचते स्वाहा

शोचमानाय स्वाहा शोकाय स्वाहा ॥११॥

तपसे स्वाहा तप्यते स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा घर्माय स्वाहा। निष्कृत्यै स्वाहा प्रायश्चित्यै स्वाहा भेषजाय स्वाहा ॥१२॥

यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा ॥१३॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

आयासाय आयासादयो देवविशेषाः १९. प्रायासाय २०. संयासाय २१. वियासाय २२. उद्यासाय २३. शुचे २४. शोचते २५.

स्थूलान्त्रं तेनोग्रं देवं प्रीणामि। वसिष्ठहनुः वसिष्ठस्य देवस्य हनुः कपोलैकदेशो ज्ञातव्यः यद्वा वसिष्ठा या हनुः कपोलाधोदेशः तत्परा हनुरित्यमरः तत्परा कपोलाधोभागस्था हन्वाधारमिति हनुः लिङ्गव्यत्ययः वसिष्ठहन्वा कोशाभ्यां कोशो हृदयकोशः तत्स्थाभ्यां मांसपिण्डाभ्यां च शिङ्गीनि शिङ्गिसञ्ज्ञानि देवतानि प्रीणामि ॥ ८ ॥

लोहितेनासृजा उग्रं देवं प्रीणामि। शोभनं व्रतं कर्म यस्य स सुव्रतस्तस्य भावः सौव्रत्यं शोभनगत्यादिकर्मकर्तृत्वम्। तेन मित्रं देवं प्रीणामि। दुष्टं स्खलनोत्स्खलनादि व्रतं यस्य स दुर्व्रतः तस्य भावो दौर्व्रत्यम् तेन रुद्रं देवं प्रीणामि। प्रकृष्टं

**उग्रंल्लोहितेनमित्रꣳसौव्रत्येनरुद्रन्दौर्व्रत्येनेन्द्रम्प्रक्रीडेनमरुतोबलेनसाध्यान्प्रमुदा। भवस्यकण्ठ्यꣳरुद्रस्यान्तः**

**पार्श्व्यम्महादेवस्ययकृच्छर्वस्यवनिष्ठुःपशुपतेःपुरीतत् ॥ ९ ॥**

**लोमभ्यःस्वाहालोमभ्यःस्वाहात्वचेस्वाहात्वचेस्वाहालोहिताय**

**स्वाहालोहितायस्वाहामेदोभ्यःस्वाहामेदोभ्यःस्वाहा। माꣳसेभ्यःस्वाहामाꣳसेभ्यःस्वाहास्नावभ्यःस्वाहा**

क्रीडनं प्रक्रीडः तेनेन्द्रं देवं प्रीणामि। बलेन सामर्थ्येन मरुतो देवान्प्रीणामि। प्रमुदा प्रकृष्टा मुत् हर्षः प्रमुत् तया साध्यान् देवान् प्रीणामि ॥ भवस्य कण्ठ्यम् अत्र षष्ठ्यन्तो देवः अङ्गं प्रथमान्तम् कण्ठ्यं कण्ठे भवं मांसं भवस्यास्तु विभक्तिव्यत्ययो वा कण्ठ्येन भवं देवं प्रीणामि। एवमग्रेऽपि। पार्श्वस्यान्तर्मध्ये भवं मांसमन्तःपार्श्व्यं तद्रुद्रस्यास्तु। यकृत् कालखण्डं महादेवस्यास्तु। वनिष्ठुः स्थूलान्त्रं शर्वस्यास्तु। पुरीतत् हृदयाच्छादकमन्त्रं पशुपतेर्देवस्यास्तु ॥ ९ ॥

का० विमुखाय परेभ्यो मा नो मित्र इति प्रत्यृचमनुवाकाभ्यामन्त्यां द्यावापृथिवीयामिति। अस्यार्थः उपस्थेति मन्त्रो विमुखः ततः परेभ्यो देवताङ्गेभ्योऽग्निं हृदयेनेत्यादिभ्यश्चतुर्गृहीतमाज्यं गृहीत्वा गृहीत्वा जुहोति। तत्रापि पक्षद्वयम्। अग्नये स्वाहा हृदयाय स्वाहा अशनये स्वाहा हृदयाग्राय स्वाहा इत्यादि कात्यायनादीनामभिप्रायः अग्निं हृदयेन प्रीणामि स्वाहेत्यादि हरिस्वामिमते प्रयोगः। ततश्चाग्निं हृदयेनेत्यादीन्विश्वेभ्यो देवेभ्यः स्वाहेत्यन्तान्होमान्कृत्वा मान इत्यनुवाकाभ्यां२ षोडशाहुतीर्हुत्वा द्यावापृथिवीभ्यां स्वाहेति चरमामाहुतिं जुहोतीति सूत्रार्थः॥ अरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिं जुहोतीति श्रुतेः अरण्येऽनूच्यानरण्ये पठितानग्निं हृदयेनेत्यादीन्विश्वेभ्यो देवेभ्यः स्वाहेत्येवमन्तान्होमान्कृत्वा द्यावापृथिवीया-

अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिङ्कृत्स्नहृदयेन भवं यक्ना। शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तः पर्शव्येनोग्रन्देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम्॥ ८॥

१—२०,८,६—८। २—२५,१४—२९।

मुत्तमामाहुतिं जुहोतीति श्रुतेरर्थः। तथा चानुक्रमणी अग्निꣳ हृदयेनाश्वमेधिकानि तत्रत्य एवर्षिर्लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिꣳशत्(४,८)। तत्राग्निं हृदयेन शर्वं लोहितेन द्वे कण्डिके ब्राह्मणरूपे देवतावयवसम्बन्धविधानात् अरण्येऽध्येयत्वादिह पाठः। लोमादीन्यङ्गान्येव पठितानि आयासादयो देवता एव॥ अथ मन्त्रार्थः हृदयेनाङ्गेनाग्निं देवं प्रीणामि। हृदयस्याग्रभागेनाशनिं देवं प्रीणामि। समस्तहृदयेन पशुपतिं देवं प्रीणामि। यक्ना यकृता कालखण्डेन भवं देवं प्रीणामि पद्दन्न इत्यादिना यकृच्छब्दस्य यकन्नादेशः। मतस्ने हृदयास्थिविशेषौ ताभ्यां शर्वं देवं प्रीणामि। मन्युना अन्त्रसम्बन्धिक्रोधेन ईशानं देवं प्रीणामि। अन्तर्वर्तमानेन पर्शव्येन पार्श्वास्थिसम्बन्धिना मांसेन महादेवं देवं प्रीणामि पर्शवः पार्श्वास्थीनि। वनिष्ठुः

प्रथमे अहन् दिने घर्मभेदे सविता देवता सवित्रे स्वाहेति जुहोति ॥ एव-

का० सविता प्रथमेऽहन्निति च प्रत्यहमिति[1] । चतुर्थे आदित्यो देवता ।

मग्रेऽपि । अग्निर्द्वितीये द्वितीयेऽहनि घर्मभेदेऽग्निर्देवता । वायुस्तृतीये तृतीयेऽहनि वायुर्देवता । वरुणो दशमेऽह्नि । इन्द्र

चन्द्रमाः पञ्चमेऽह्नि । ऋतुः षष्ठेऽह्नि । मरुतः सप्तमेऽह्नि । बृहस्पतिरष्टमेऽह्नि । मित्रो नवमेऽह्नि । उपसत्प्रभृती एता एवाहुतयः

एकादशेऽह्नि । विश्वे देवाः द्वादशेऽह्नि देवता तत्र भेदे विश्वेभ्यो देवेभ्यः स्वाहेति जुहोति ।

पुनरादित आरभ्यावर्तन्ते ॥ ६ ॥ १—१६,७,५१ । २—१८,४,२४ । ३—१७,८०—८५ ।

का० विमुखेनारण्येऽनूच्यमिति[2] । चयने मारुतान्सप्त पुरोडाशान् शुक्रज्योतिश्चेत्यादिसप्तमारुतमन्त्रैः[2] हुत्वारण्येऽनूच्यसप्त-

## मित्रो नवमे वरुणो दशम इन्द्र एकादशे विश्वे देवा द्वादशे ॥ ६ ॥

## उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा ॥ ७ ॥

मं पुरोडाशं विमुखसञ्ज्ञेनाग्रश्चेति मन्त्रेण जुहुयात् तथाचानुक्रमणी उग्रश्च मारुती गायत्री विमुखाख्यो मन्त्रोऽसौ विनियुक्तस्त-

सप्तमं पुरोडाशं विमुखसञ्ज्ञेनोग्रश्चेति मन्त्रेण जुहुयात् तथाचानुक्रमणी उग्रश्च मारुती गायत्री विमुखाख्यो मन्त्रोऽसौ विनियुक्तस्त- पाठयोग्यत्वात् ॥

स्मादात्मिक एवास्यर्षिः परमेष्ठी प्राजापत्यो वेति(४,८) । आत्मिकः प्रजापतिर्ऋषिः । अस्य मन्त्रस्यात्र पाठोऽरण्ये पाठयोग्यत्वात् ॥ ध्वनति

अथ मन्त्रार्थः य एते उग्रादिनामकाः सप्त मरुतः तेभ्यः स्वाहा सुहुतमस्तु । उग्रः उत्कृष्टः । बिभेत्यस्मादसौ भीमः । कसु-

शब्दं करोतीति ध्वान्तः । धूनयति कम्पयति शत्रूनिति धुनिः । सहते शत्रूनभिभवति ससह्वान् सहतेः क्वसुश्चेति क्वसु- क्वनिप्

प्रत्ययः संहितायामभ्यासदीर्घश्छान्दसः । अभियुनक्ति प्रसन्नमुखं योगं प्राप्नोतीत्यभियुग्वा अन्येभ्योऽपि दृश्यन्त इति युजेः क्वनिप्

प्रत्ययः । विक्षिपः विविधं क्षिपति रिपूनिति विक्षिपः इगुपधेति कप्रत्ययः ॥ ७ ॥

विश्वदेवदेवतः विश्वेभ्यो देवेभ्यः स्वाहेति ॥ घर्म्मः प्रवृक्तः । अधिश्रयणादारभ्य परिशासाभ्यां ग्रहणात्प्राक् प्रवृक्तः प्रवृज्यत इति तत्र भेदे घर्माय स्वाहेति ॥ तेज उद्यतः । उद्यम्यत इत्युद्यतः उद्यमनादारभ्य प्रागजापयोऽवसेकादुद्यतः तत्र भेदे तेजसे स्वाहेति ॥ आश्विनः पयस्यानीयमाने । अजापयस्यासिच्यमाने घर्म्मभेदे आश्विनः अश्विदेवत्यो घर्म्मः अश्विभ्यां स्वाहेति जुहोति ॥ पौष्णो विष्यन्दमाने स्यन्दू स्रवणे विशेषेण स्यन्दमाने घृते बहिर्निःसरति सति भेदे घर्म्मः पौष्णः पूषदेवत्यः पूष्णे स्वाहेति जुहोति ॥ मारुतः क्लथन् । क्लथनं मध्ये घृतस्यावर्त्तनम् तदा मरुद्देवत्यः तत्र भेदे मरुद्भ्यः स्वाहेति जुहोति ॥ मैत्रः शरसि

प्रजापतिःसम्भ्रियमाणःसम्राट्सम्भृतोवैश्वदेवःसꣳसन्नोघर्मःप्रवृक्तस्तेजउद्यतआश्विनःपयस्यानीयमानेपौष्णो विष्यन्दमानेमारुतःक्लथन् । मैत्रःशरसिसन्ताय्यमानेवायव्योह्रियमाणआग्नेयोहूयमानोवाग्घुतः ॥ ५ ॥

सविताप्रथमेहन्नग्निर्द्वितीयेवायुस्तृतीयआदित्यश्चतुर्थेचन्द्रमाःपञ्चमऋतुःषष्ठेमरुतःसप्तमेबृहस्पतिरष्टमे ।

सन्ताय्यमाने । पयोऽवसेके योपरि तरिका जायते सा शरःशब्देनोच्यते तस्मिन् सन्ताय्यमाने एध्यमाने मैत्रो मित्रदेवत्यः ताय् पालनसन्तत्योः कर्म्मणि यकि शानचि रूपम् तत्र शरआदिहरणात्प्राक् भेदे मित्राय स्वाहेति जुहोति ॥ वायव्यो ह्रियमाणः । आहवनीयं ह्रियमाणो होमात्प्राक् वायुदेवतः तत्र भेदे वायवे स्वाहेति जुहोति ॥ आग्नेयो हूयमानः । हूयमानो घर्मोऽग्निदेवतः तत्र तद्भेदे ऽग्नये स्वाहेति जुहोति ॥ वाग्घुतः । हुतो हुतहोमादूर्द्ध्वं प्रागुत्तरघर्मारम्भात् वाक् वाग्देवतः तत्र भेदे वाचे स्वाहेति जुहोति ॥ एता आहुतयः सकृद्गृहीताज्यैः ॥ ५ ॥

पूर्णाहुतिमन्त्रः। ततो विंशतिः स्रष्टा मन्त्राः पृथिव्यै सुहुतमस्तु। एवमग्नेऽपि अग्नये अन्तरिक्षाय वायवे दिवे सूर्याय ॥ १ ॥
दिग्भ्यः चन्द्राय नक्षत्रेभ्यः अद्भ्यः वरुणाय नाभ्यै देवतायै पूताय शोधकाय पुनाति पूतः देवस्तस्मै ॥ २ ॥ १—२६,७,५०।
वाचे वागधिष्ठात्रे एवमग्रेऽपि। प्राणाय प्राणेन्द्रियाधिष्ठात्रे प्राणादीनां द्वित्वान्मन्त्रावृत्तिः। चक्षुषे तदधिष्ठात्रे। श्रोत्राय ॥ ३ ॥
द्वितीयः पूर्णाहुतिमन्त्रः। अहं मनसः काममभिलाषम् आकुञ्चनमाकूतिः प्रयत्नस्तं चाशीय प्राप्नुयाम् वाचः सत्यं चाशीय यद्वाक् सत्यं वदतु। मयि एतत्सर्वं श्रयतां तिष्ठतु पशूनां रूपं पशुसम्बन्धिनी शोभा अन्नस्य रसः स्वादुत्वम् यशः कीर्त्तिः श्रीर्लक्ष्मीश्च ॥ ४ ॥

**दिग्भ्यःस्वाहा। चन्द्रायस्वाहा। नक्षत्रेभ्यःस्वाहा। अद्भ्यःस्वाहा। वरुणायस्वाहा। नाभ्यैस्वाहा। पूतायस्वाहा॥२॥**

**वाचेस्वाहा। प्राणायस्वाहा। प्राणायस्वाहा। चक्षुषेस्वाहा। चक्षुषेस्वाहा। श्रोत्रायस्वाहा। श्रोत्रायस्वाहा॥ ३॥**

**मनसःकाममाकूतिंवाचस्सत्यमशीय। पशूनाꣳरूपमन्नस्यरसोयशःश्रीःश्रयताम्मयिस्वाहा॥ ४॥**

का० प्रजापतिःसम्भ्रियमाण इति यथाकालमिति[१]। सम्भ्रियमाणाद्यवस्थायां महावीरभेदे प्रजापतये स्वाहेत्याद्या यथाकालमाहुतयो होतव्या इति सूत्रार्थः॥ तद्यथा मन्त्रो दर्शयति सम्भ्रियमाणो महावीरो यदि भिद्यते तदा प्रायश्चित्तहोमे प्रजापतिर्देवता प्रजापतये स्वाहेति प्रायश्चित्ताहुतिर्होतव्येत्यर्थः प्रजापतिः सम्भ्रियमाणो यथाकालं प्रायश्चित्तदेवतेत्युक्तत्वात् (श्रुतौ)। निष्ठिताभिमर्शनादारभ्याजापयोऽवसेचनान्तं सम्भ्रियमाणः॥ हस्मात् सम्भृतः। पयोऽवसेकानन्तरं कुशासादनात्प्राक् सम्भृत इत्युच्यते॰तत्र भेदे सम्राट प्रायश्चित्तदेवता सम्राजे स्वाहेति॥ वैश्वदेवः संसन्नः। आसादनादारभ्य मुञ्जप्रलवैर्व्वाधिश्रयणात्प्राक् संसन्नः तत्र भेदे

भाव आर्षः। तथा सुषुम्णस्य शोभनसुखभूतस्य। अग्निंहुतः अग्नौ ह्रयत इत्यग्निहुत् तस्य अग्नौ हुतस्य। इन्द्रपीतस्य इन्द्रेण पीतो भक्षितस्तस्य। प्रजापतिभक्षितस्य प्रजापतिना भक्षितस्तस्य। मधुमतः मधुरस्वादोपेतस्य। उपहूतस्य कृतोपह्वस्य। एवंविधस्य तवांशं हे दधिघर्माहं भक्षयामीत्यर्थः॥ ॥ समाप्ता घर्मेतिकर्त्तव्यता ॥ २८ ॥ १—२६,७,४९।

॥ श्रीमन्महीधरकृते वेददीपे निरूपितः। अष्टाविंशोऽयमध्यायो महावीरनिरूपणः ॥ ३८ ॥

**इन्द्रपीतस्यप्रजापतिभक्षितस्यमधुमतउपहूतउपहूतस्यभक्षयामि ॥ २८ ॥**

## ॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायामष्टाविंशोऽध्यायः ॥ ३८ ॥

**स्वाहाप्राणेभ्यःसाधिपतिकेभ्यः। पृथिव्यैस्वाहा। अग्नयेस्वाहा। अन्तरिक्षायस्वाहा। वायवेस्वाहा। दिवेस्वाहा। सूर्यायस्वाहा ॥ १ ॥**

प्रवर्ग्ये घर्मभेदे प्रायश्चित्तम्। तत्र का० स्वाहाप्राणेभ्यःसाधिपतिकेभ्यः इति पूर्णाहुतिमाद्यामुत्तमां च मनसः काममाकूतिमिति। तदर्थोऽयम् अध्वर्युः भूमिर्भूमिम् यत्क्ते चिदिति मन्त्राभ्यां भग्नं घर्ममभिमृश्य परमेष्ठ्यादिचतुस्त्रिंशदाहुतीर्हुत्वा स्वाहाप्राणेभ्य इत्याद्यां पूर्णाहुतिं हुत्वा पृथिव्यै स्वाहेत्याहुतिविंशतिं सकृद्गृहीतेन हुत्वा मनस इत्यन्त्यां पूर्णाहुतिं करोतीति॥ मन्त्रार्थो यथा। साधिपतिकेभ्यः अधिपतिना हिरण्यगर्भेण सह वर्त्तमानेभ्यः प्राणेभ्यः स्वाहा सुहुतमस्तु इति

का० मयित्यदिति भक्षणम् [५५]। हुतशेषं दधिघर्मं यजमानर्त्विजः सोपहवं भक्षयन्तीत्यर्थः॥ पङ्क्तिः अष्टाक्षरपञ्च-पादा दधिघर्मदेवत्या यजमानाशीर्देवतेति केचित्। बृहत् महत् त्यत् तत् इन्द्रियं प्रसिद्धं वीर्यं मयि विराजति विराजतु लकारव्यत्ययः। दक्षः सङ्कल्पसिद्धिः मयि विराजतु। क्रतुः सत्सङ्कल्पो मयि विराजतु। विशेषेण राजते विराट् तेन जगत्प्रसिद्धेन ज्योतिषा तेजसा आदित्याख्येन सह ब्रह्मणा त्रयीलक्षणेन ज्योतिषा च सह घर्मो मयि विराजतु। कीदृशो घर्मः त्रिशुक् तिस्रः शुचः दीप्तयो यस्य सः तास्तिस्रः शुचो या ते घर्म दिव्या शुगित्यष्टादश्यां कण्डिकायां शालाकमन्त्रे व्याख्याताः॥२७॥

गायत्र्यवसानहीना। दधिघर्मभक्षणे एव विनियुक्ता। पयसो रेतो वीर्यं सारं जगदुत्पत्तिबीजं यत् आभृतमाहृतम्

**मयि॒ त्यदि॑न्द्रि॒यम्बृ॒हन्मयि॒ दक्षो॒ मयि॒ क्रतुः॑। घ॒र्मस्त्रि॒शुग्विरा॑जति वि॒राजा॒ ज्योति॑षा स॒ह ब्रह्म॑णा॒ तेज॑सा स॒ह॥ २७॥**

**पय॑सो॒ रेत॒ आभृ॑तं॒ तस्य॒ दोह॑मशीम॒ह्युत्त॑रामुत्त॒राᳪं समा॑म्। त्विषः॑ सं॒वृक्क्रत्वे॒ दक्ष॑स्य ते सुषु॒म्णस्य॑ सुषुम्णाग्निहु॒तः॥**

दधिघर्मरूपं यत् तस्य दोहं प्रपूरणं वयमुत्तरामुत्तरां समामुत्तरोत्तरमस्मिन्वर्षे अशीमहि व्याप्नुयाम कालाध्वनोरिति द्वितीया वयं सर्वदा यायजूकाः स्यामेत्यर्थः॥ का० त्विषःसंवृगिति महाव्रतीये [५६]। महाव्रतीयेऽहनि त्विष इति मन्त्रेण हुतशेषदधि-घर्मभक्षणं कार्यमित्यर्थः॥ अतिजगती दधिघर्मदेवत्या। संवृणक्ति स्वीकरोतीति संवृक् स्वीकर्ता सम्पूर्वो वृजिः स्वीकरणार्थः हे त्विषः संवृक् कान्तेः स्वीकर्तः हे सुषुम्ण शोभनं सुम्नं सुखं यस्मात् सुषुम्णः तत्सम्बोधनम् हे सुखदातः हे दधिघर्म अहमुपहूतः कृतोपहवः सन् ते तवांशं भक्षयामि कर्मणि षष्ठी वा त्वां भक्षयामि एकस्तेशब्दः पादपूरणः। कीदृशस्य ते क्रत्वे दक्षस्य चतुर्थी षष्ठ्यर्थे क्रतोः सङ्कल्पस्य दक्षः सिद्धिदाता तस्य सङ्कल्पसिद्धिदातुः क्रतुशब्दस्य चतुर्थ्येकवचने गुणा-

का० उद्वयमित्युत्क्रामत्युत्तरपूर्वार्धम्[१] । ऐशानीं दिशं प्रति यजमानो गच्छतीत्यर्थः ॥ व्याख्याता(२०,२१) ॥ २४ ॥ १—२६, ७, ३८ ।

का० अग्नेपेचमित्येधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति[२] । यजमानः पश्चादनवलोकयन्नैशानदेशादेत्यैधोऽसीति मन्त्रेणैकां समिधं गृहीत्वा समिदसीति मन्त्रेणाहवनीये दधातीत्यर्थः ॥ मन्त्रद्वयं व्याख्यातम्(२०,२३) ॥ २५ ॥ २—२६, ७, ३५ ।

का० यावतीद्यावापृथिवी इति दधिघर्मग्रहणम्[३] । सपवित्रायामग्निहोत्रहवण्यां दधिघर्मं गृह्णातीत्यर्थः ॥ ब्राह्मी उष्णिक्

सुमित्रियान आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ २३ ॥

उद्वयन्तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ २४ ॥

एधोऽस्येधिषीमहि । समिदसि तेजोऽसि तेजो मयि धेहि ॥ २५ ॥

यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे । तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम् २६

दधिघर्मदेवत्या इन्द्रदेवत्या च । हे इन्द्र ऊर्जा अन्नेन सह अक्षितमनुपक्षीणं ते तव ग्रहं तावन्तं तत्परिमाणमहं गृह्णामि मयि च अक्षितं यथा स्यात्तथा गृह्णामि तव ग्रहग्रहणेन मयि यज्ञक्षयो मास्त्वित्यर्थः तावन्तं कियन्तम् द्यावापृथिवी यावती द्यावाभूमी यत्परिमाणे च पुनः सप्त सिन्धवः सप्त समुद्राः क्षीरोदाद्याः यावत् यत्परिमाणे देशे वितस्थिरे विशेषेण स्थिताः तावन्तमतिमहत्तरं दधिघर्मं गृह्णामीत्यर्थः ॥ २६ ॥ ३—२६,७,५४ ।

अन्यत् मनुष्यकर्मणः सकाशाद्भिन्नं व्रतं कर्म जगदनुग्रहरूपं यस्य सोऽन्यव्रतः परमात्मा तस्य कर्मणि षष्ठी सप सेवने धातुः अन्यव्रतं परमात्मानं सेवामहे सायुज्यं प्राप्नुम इति भावः अन्यद्वा एतस्य व्रतमन्यन्मनुष्याणामिति(१९) श्रुतेः ॥ २० ॥

का० आसेचनवन्ति पयसः पूरयति घर्मैतत्त इति[१]। आसेचनं गर्तः तद्युतानि पात्राणि दुग्धेन पूरयति तानि सप्त मद्दवीरत्रयं द्वे पिन्वने उपयमनी स्रुवश्चेत्यर्थः॥ अनुष्टुप् घर्मदेवत्या। हे घर्म एतत्पयः ते तव पुरीषम् पृणाति पूरयति पुरीषं पूरयितृ अन्नम् अन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधातीति(१३) श्रुतेः तेन पयसा वर्धस्व आप्यायस्व च भवत्प्रसादाद्वयं वर्धिषीमहि आप्यासिषीमहि चेति व्याख्यातम्(२,१४) ॥ २१ ॥ १—२६, ७, ३१।

घर्मैतत्तेपुरीषन्तेनवर्धस्वचाचप्यायस्व। वर्धिषीमहिचवयमाचप्यासिषीमहि ॥ २१ ॥

अचिक्रदद्वृषाहरिर्महान्मित्रोनदर्शतः। सꣳसूर्येणदिद्युतदुदधिर्निधिः ॥ २२ ॥

का० त्रिः परिषिच्याचिक्रददिति[२]। सामगानानन्तरमुत्पादनदेशे परिषिच्य वक्ष्यमाणं करोतीत्यर्थः॥ परोष्णिक् घर्मदेवत्या। घर्मः सूर्यात्मना स्तूयते। वृषा आहुतिद्वारेण वृष्टिकर्ता घर्मः प्रवृज्यमानः सन् अचिक्रदत् क्रदि शब्दे पुनः पुनः शब्दमकरोत्। कीदृशः हरिः हरितवर्णः रसानां हर्ता वा एष वै वृषा हरिर्य एष तपत्येष उ प्रवर्ग्य इति(२६) श्रुतिः। महान् प्रभावान्। मित्रो न दर्शतः न उपमार्थः मित्र इव दर्शनीयः अत एव सूर्येण सह सन्दिद्युतत् सूर्यतुल्यो द्योतते द्युतेर्लुङि णिजन्तस्य रूपमडभावः सूर्यवत्स्वं द्योतयतीत्यर्थः उदधिः उदकं धीयते यस्मिन् जलस्य धर्ता निधिः सुखानामिति शेषः सुखनिधिः ॥ २२ ॥ २—२६, ७, १२।

का० चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न इति[३]। सपत्नीकाः ऋत्विग्यजमानाः चात्वाले मार्जनं कुर्वते। पत्न्या अपि मन्त्रपाठः॥ व्याख्याता(६,२२) ॥ २३ ॥ ३—२६, ७, ३७।

का० यन्तायत्वेति निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय[९]। होमानन्तरमध्वर्युः पत्नीमग्रे कृत्वा शालायाः निष्क्रामतीत्यर्थः ॥ उपरिष्टाद्बृहती घर्मदेवत्या। हे घर्म वयं त्वा त्वामनुक्रामाम अनुगच्छाम त्वं ब्रह्मणः तन्वं शरीरं पाहि पालय। किमर्थमनुगमनम् चत्रस्य चत्रियस्य देवस्य सूर्यस्य परस्पाय परमपालनाय परःशब्दोऽव्ययम् पर उत्कृष्टं पायते रचत इति परस्पम् तस्मै एतद्वै देवं चत्रं य एष तपतीति' श्रुतेः। किञ्च विशः यज्ञस्य धर्मणा धारणेन निमित्तेन वयं त्वामनुक्रामाम यज्ञो वै विड्यज्ञस्य त्वारिष्ट्यै इति(९) श्रुतेः। किमर्थम् नव्यसे सुविताय नवीयसे नूतनाय सुगताय सुप्रसूताय कर्मणे कर्मसिद्ध्यर्थं त्वामनुगच्छामीत्यर्थः सुष्ठु इतं सुवितम् इण गतौ क्तः उपसर्गस्योवङ्ङादेशः यद्वा षू प्रेरणे सूयते प्रेर्यते सुवितम् इडागमे धातोरुवङ् ॥ १८ ॥ १—१४, ३, १. ९।

चत्रस्यत्वापरस्पायब्रह्मणस्तन्वम्पाहि। विशस्त्वाधर्मणावयमनुक्रामामसुवितायनव्यसे ॥ १९ ॥

चतुःस्रक्तिर्नाभिर्ऋतस्यसप्रथाःसनोविश्वायुःसप्रथाःसनःसर्वायुःसप्रथाः। अपद्वेषोअपह्वरोन्यव्रतस्यसश्चिम ॥२०॥

का० नाभिस्पृशं प्रवृञ्जनीयं निदधाति चतुःस्रक्तिरिति[१४]। प्रवृञ्जनीयं महावीरमुत्तरवेदौ नाभिलग्नं स्थापयतीत्यर्थः ॥ महाबृहती घर्मदेवत्या। स घर्मो नोऽस्माकं सर्वायुरस्तु सर्वं पूर्णमायुर्यस्मात्स सर्वायुः पूर्णायुःप्रदोऽस्त्वित्यर्थः पुनरुक्तिरादरार्था। कीदृशः सः चतुःस्रक्तिः चतस्रः स्रक्तयः कोणा दिग्रूपा यस्य सः एष वै चतुःस्रक्तिर्य एष तपति दिशो ह्येतस्य स्रक्तय इति(१०) श्रुतेः। तथा ऋतस्य सत्यस्य यज्ञस्य वा नाभिः नहनं बन्धनस्थानम्। सप्रथाः सविस्तारः। विश्वायुः विश्वस्य जगतः आयुर्यस्मात् जगत आयुर्दाता। सप्रथाः सर्वतः प्रथयिता च। हे घर्म त्वत्प्रसादात् द्वेषः अप गच्छत्विति शेषः अस्मत्तो द्वेषः गच्छतु वीतरागाः स्यामेति भावः। ह्वृ चलने ह्वरः चलनं जन्ममरणलक्षणं चास्मत्तोऽपगच्छतु। वयमन्यव्रतस्य सश्चिम

वेत्यर्थः। हे अग्ने तव महिमा इमं दिवमभिबभूव अभिभवति छन्दसि लुङ्लिटः दिवशब्दः पुंलिङ्गः अर्द्धर्चादित्वात्। कीदृशो महिमा विप्रः विशेषेण प्राति पूरयति सर्वमिति विप्रो मेधावी। सप्रथाः प्रथनं प्रथो विस्तारस्तेन सहितः सप्रथाः। उतापि च श्रवसा धनेन यशसा वा पृथिवीमभिभवतीत्यनुषङ्गः॥ संसीदस्वेति व्याख्यातैकादशेऽध्याये षट्त्रिंशी[1] कण्डिका तत्र शोचस्वेति पाठोऽत्र रोचस्वेति अर्थ एक एव॥ १७॥

१—सप्तत्रिंशीति वक्तव्ये षट्त्रिंशीति भ्रमादुक्तम्।

का० चतुर्गृहीतेनाभिजुहोति यातेघर्मदिव्याशुगिति प्रतिमन्त्रं[1]। अध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं कृत्वा तेन जुहोति

यातेघर्मदिव्याशुग्यागायत्र्याᳬहविर्धाने। सातआप्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा॥ यातेघर्मान्तरिक्षेशुग्या त्रिष्टुभ्याग्नीध्रे। सातआप्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा॥ यातेघर्मपृथिव्याᳬशुग्याजगत्याᳬसदस्या। सातआप्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा॥ १८॥

अग्नीध्रा ध्रियमाणेषु त्रिषु शलाकात्रिकेषु त्रिभिर्मन्त्रैस्तृतीयेनोपविशेत्यर्थः॥ त्रीणि यजूंषि घर्मदेवत्यानि ऋक्पङ्क्तयः। हे घर्म या ते तव दिव्या दिवि भवा शुक् दीप्तिः या गायत्र्यां छन्दसि प्रविष्टा या हविर्धाने यज्ञगृहे प्रविष्टा सा ते तव शुक् आप्यायतां वर्धताम् निष्ट्यायतां संहता दृढा भवतु ष्ट्यै स्त्यै शब्दसङ्घातयोः लोट् तस्यै शुचे ते तुभ्यं च स्वाहा॥ हे घर्म या ते तवान्तरिक्षे शुक् त्रिष्टुभि छन्दसि आग्नीध्रे सदने च प्रविष्टा सा त इति पूर्ववत्॥ या ते हे घर्म पृथिव्यां शुक् जगत्यां छन्दसि प्रविष्टा कीदृशी सदस्या सदसि प्रविष्टा यज्ञगृहे स्थिता सा त इत्युक्तम्॥ १८॥

१—२६, ७, ४।

सज्ज्योतिषेत्युपयमन्यामासिञ्चति घर्म्यम् । घर्मसम्बन्धि हुतमुपयमन्यामासिञ्चति, पूर्वं स्रुक्स्थं घर्मे नीतमधुना घर्मस्थं स्रुचि नयतीत्यर्थः ॥ पयोदेवतम् यजुरनुष्टुप् । ज्योतिः घर्मस्थं हुतं ज्योतिषोपयमनीस्थेन हुतेन सङ्गच्छताम् स्वाहा सुहुतमस्तु ज्योतिर्वा इतरस्मिन्पयो भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी सङ्गच्छेते इति[40] श्रुतेः पयो देवता ॥ का० मन्त्रक्रमेणोत्तरं रौहिणं जुहोति[2] । उत्तरं रौहिणं मन्त्रक्रमेण सज्ज्योतिषाज्योतिरेतन्मन्त्रकमणोऽनन्तरं जुहोतीत्यर्थः ॥ अहःकेतुना । व्याख्याते यजुषी(२७:१) । का० अग्निहोत्राहुता हुत्वा वाजिनवद्भक्षयन्ति मधुहुतमिति[3] । उपयमन्यामानीतं घर्माज्यमग्निहोत्रहोमप्रकारेण समन्त्रकं हुत्वा वाजिनवदुपहवप्रार्थनपूर्वकं भक्षयन्ति होत्रध्वर्युब्रह्मप्रस्तोतृप्रतिप्रस्थात्रग्नीद्यजमानाः ॥ घर्मदैवत्यम् ऋग्बृहती ।

**अभीमं महिमा दिवं विप्रो बभूव सप्रथाः । उत श्रवसा पृथिवीᳪं सᳪं सीदस्व महाँ२ ॥ऽअसि रोचस्व देववीतमः ।**

**वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥ १७ ॥**

इमौ मधु मधुरं घर्माज्यं हुतमस्माभिः कीदृशेऽस्मै इन्द्रतमे इन्द्रं वीर्यमस्यास्ति इन्द्रवान् अत्यन्तमिन्द्रवानिन्द्रतमः वत्प्रत्यये लोपः वीर्यवत्तमे इत्यर्थः । मधु हुतमिन्द्रियवत्तमेऽमाविन्त्येवैतदाहेति[41] श्रुतेः । हे घर्म हे देव ते तव हुतशेषमंशं वयमश्याम भक्षयाम अश्नोतेर्विकरणव्यत्ययेन बहुलं छन्दसीति शपो लुक् लिङि उत्तमबहुवचने । ते तुभ्यं नमोऽस्तु मा मां हिंसीः आत्मनः परित्राणमर्थितं ॥ १६ ॥ १—२६, ६, १७। २—२६, ६, १८। ३—२६, ६, २०। ४—२६, ६, २५।

का० अभीममिति महावीरम्[4] । प्रचरणीयं घर्ममासन्द्यां करोति मन्त्रेणेतराणि तूष्णीम् ततः शान्तिपाठ इत्यर्थः ॥ गायत्री-बृहत्यौ मध्येऽवसानहीने अभीमं गायत्री संसीदस्व बृहती यद्यावसानद्वयोपेतातिशक्वरी षष्ट्यक्षराग्निदेवत्या एकैव ऋक् ऋग्द्वयं

वाचो शरसे स हकर्वे पूष्णे वाताय प्राणरूपाय स्वाहा सुहुतमस्तु । अवरᳬ स्वाहाकारं करोति परां देवतामिति(३२) श्रुतेरादौ स्वाहाकारस्ततो देवतापदानि । अयं वै पूषा योऽयं पवत एष हीदᳬ सर्वं पुष्यत्येष उ प्राणः प्राणमेवास्मिन्नेतद्दधातीति(३२) श्रुतिः ॥ गृह्णन्ति ते ग्रावाणः प्राणा विषयग्रहणशीलाः तेभ्यः स्वाहा प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधातीति(३३) श्रुतिः ॥ प्रतिरुवन्ति शब्दं कुर्वन्ति प्रतिरमन्ते वा यान्प्राप्येति प्रतिरवाः तेभ्यः स्वाहा प्राणा वै प्रतिरवाः प्राणाः प्राणान्हीदᳬ सर्वं प्रतिरतमिति(३४) श्रुतिः ॥ का० चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति[१] । चतुर्थं शकलमहुतमेवोदीचीं पश्यन्वेदेर्दक्षिणभागे धातिष्ठाबर्हिषि प्रवेशयतीत्यर्थः ॥ पितृभ्यः स्वाहा कीदृशेभ्यः ऊर्ध्वबर्हिर्भ्यः ऊर्ध्वं प्रागग्रं बर्हिर्येषां ते ऊर्ध्वबर्हिषः तेभ्यः सोमपाभ्य इत्यर्थः तथा

स्वाहा रुद्राय रुद्रहूतये । स्वाहा सञ्ज्योतिषा ज्योतिः । अहः केतुना जुषताᳬसुज्योतिर्ज्योतिषा स्वाहा । रात्रिः केतुना जुषताᳬसुज्योतिर्ज्योतिषा स्वाहा । मधु हुतमिन्द्रतमे अग्नावश्याम ते देव घर्म नमस्ते अस्तु मा मा हिᳬसीः ॥ १६

घर्मपावभ्यः घर्मं पिबन्ति घर्मपावानः तेभ्यः स्वाहा ॥ द्यावापृथिवीशब्देन प्राणोदानावुच्येते ताभ्यां सुहुतमस्तु प्राणोदानौ वै द्यावापृथिवी प्राणोदानावेवास्मिन्नेतद्दधातीति(३६) श्रुतिः ॥ विश्वेभ्यो देवेभ्यः स्वाहा प्राणा वै विश्वे देवा प्राणानेवास्मिन्नेतद्दधातीति(३७) श्रुतिः ॥ १५ ॥

१——२६,६,१४ । २——२८,६,१५ । ३——निघ० ३,१६,१२ ।

का० सप्तमं च सर्वलेपान्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति[२] । मूलाद्यावधि घर्मप्लुताभ्यक्तं सप्तमं शकलं दक्षिणां पश्यन्प्रतिप्रस्थात्रे ददातीत्यर्थः ॥ रुद्र इति स्तोतृनामसु पठितम्[३] रुद्रैः स्तोतृभिर्हूयते आह्वयत इति रुद्रहूतिः तस्मै स्तोतृस्तुताय रुद्राय सुहुतमस्तु ॥ एवं सप्तयजुषां मध्ये चतुर्थसप्तमयोर्विनियोग उक्तः शेषैः पञ्चशकलैराज्यहोमः ॥ का० स्वाहा

का० इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते[1]। पिन्वमानमतितप्तं घर्ममभिमन्त्रयन इत्यर्थः॥ ऋचां पङ्क्तिः घर्मदेवता। हे पिन्वमान घर्म इषे वृष्ट्यै पिन्वस्व पुष्टो भव वृष्ट्यर्थम् ऊर्जेऽन्नाय पिन्वस्व अन्नं वर्धय ब्रह्मणे ब्राह्मणेभ्यः पिन्वस्व क्षत्राय क्षत्रियेभ्यः पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व ब्राह्मणक्षत्रियद्यावापृथिवीस्तर्पयेत्यर्थः॥ का० धर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम्[2]। ऐशानीं दिशं प्रत्युत्क्रामतीत्यर्थः॥ यजुर्गायत्री घर्मदेवता। हे घर्म हे सुधर्म सुष्ठु धारयतीति सुधर्मः हे साधुधरणशील त्वं धर्म असि सर्वजगतो धारणमसि आहुतिपरिणामद्वारेण सर्वं धरसीत्यर्थः॥ का० अमेन्यस्मे इति खरे करोति[3]। महावीरं खरे आसादयतीत्यर्थः॥

**अमेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशं धारय ॥ १४ ॥**

**स्वाहा पूष्णे शरसे। स्वाहा ग्रावभ्यः। स्वाहा प्रतिरवेभ्यः। स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्यः।**

**स्वाहा द्यावापृथिवीभ्याम्। स्वाहा विश्वेभ्यो देवेभ्यः॥ १५ ॥**

ऋग्बृहती घर्मं देवत्या। हे घर्म अमेनि मिञ् हिंसायां मिनोति हिनस्तीति मेनिः न मेनिरमेनिः सुपां सुलुगिति सुलोपः अमेनिः अहिंसन् अक्रुध्यन् सन् अस्मे अस्मासु नृम्णानि धनानि धारय स्थापय नॄन्नमयतीति नृम्णम् अक्रुध्यन्नो धनानि धारयेति (३०) श्रुतिः ब्रह्म क्षत्रं विशं च धारय विप्रादीनस्मद्वशान्कुर्वित्यर्थः॥ १४॥ १——२६,६,९। २—२६,६,१०। ३—२६,६,११। ४—२६,६,१२।

का० विकङ्कतशकलैर्जुहोति घर्मं न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम्[4]। घर्मं नितरामक्त्वा विकङ्कतशकलैर्घर्माज्यं जुहोति स्वाहा पूष्ण इति प्रतिमन्त्रमित्यर्थः॥ सप्त लिङ्गोक्तदेवतानि यजूंषि। शरःशब्दो दध्युपरिस्थस्नेहवाचकः अत्र स्नेहमात्र-

पृथिव्यौ च देवताः। हे अश्विना अश्विनौ युवां घर्मं पातं पिबतम् काभिः ऊतिभिरवनैः निमित्तैः अवनं कृत्वा पिबत-मित्यर्थः। कीदृशीभिरूतिभिः अहर्दिवाभिः अहःशब्देन प्रातः कालः दिवाशब्देन सायं कालः प्रातःसायङ्कालोपलक्षिताभिः प्रवर्ग्य-कालः स एव यतः। कीदृशं घर्मं ह्वार्द्वानम् वा गतिगन्धनयोः ल्युट् ह्वरि वानं गमनं यस्य स ह्वानः ह्वान एव ह्वार्द्वानस्तम् स्वार्थेऽण् हृदयप्रियमित्यर्थः एवं घर्मपानायाश्विनौ सम्प्रार्थ्य तत्साहाय्याय सूर्यादीन्नमति तन्त्रायिणे नमः तन्यते तन्त्रम् पटरचनाय तुरीशलाकाप्रोतास्तन्तवस्तन्त्रमुच्यते तद्वद्भासि कालचक्रमपि तन्त्रमुच्यते तथा चाभिधानम् तन्त्रं राष्ट्रे परच्छन्दाप्रधानयोः अगदे कुटुम्बकृत्ये तन्तुवाने परिच्छदे श्रुतिशाखान्तरे शास्त्रे करणे द्व्यर्थसाधके इतिकर्तव्यतातन्त्वारिति तन्त्रे कालचक्रे एति

**अपातामश्विना घर्ममनु द्यावापृथिवी अमꣳसाताम्। इहैव रातयः सन्तु ॥ १३ ॥**

**इषे पिन्वस्व। ऊर्जे पिन्वस्व। ब्रह्मणे पिन्वस्व। क्षत्राय पिन्वस्व। द्यावापृथिवीभ्यां पिन्वस्व। धर्मासि सुधर्म।**

निरन्तरं गच्छति तन्त्रायी तस्मै आदित्याय नमोऽस्तु एष वै तन्त्रायी य एष तपत्येष हीमांल्लोकांस्तन्त्रमिवानुसञ्चरतीति(२१) श्रुतेः। द्यावापृथिवीभ्यामुभाभ्यां लोकाभ्यां तदधिष्ठात्रीभ्यां नमः ॥ १२ ॥

का० अपातामिति यजमानः१। यजमानः घर्मभक्षमनुमन्त्रयत इत्यर्थः। ककुबुष्णिक् अश्विदेवत्या मध्यमः पादो द्वादशार्णः आद्यन्त्यावष्टार्णौ सा ककुप् मध्यमश्चेत्ककुबित्युक्तेः। अश्विना घर्ममपातामपिबतां लुङ् द्यावापृथिवी अन्वमंसातामनुमतवत्यौ साधु कृतमिति अनुमेनाते इत्यर्थः अत एवास्मादिरसादात् इहैव अत्र स्थितानामस्माकं रातयो धनानि सन्तु इहैव रातयः सन्त्वितीहैव नो धनानि सन्त्वित्येवैतदाहेति(२१) श्रुतेः ॥ १३ ॥ १—२६, ६, ८।

त्याहेत्यर्थः ॥ स्वाहा घर्मः पित्रे पितर्य्यायामस्तु ॥ ९ ॥ १—२६,६,४। २—२६,६,५।

का० वषट्कृते जुहोति विश्वा आशा इति[1]। वषट्कृते सति घर्मं जुहोतीत्यर्थः ॥ अश्विदेवत्यानुष्टुप्। इह यज्ञे दक्षिणसत् दक्षिणस्यां दिशि सीदति तिष्ठति दक्षिणसत् सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः दक्षिणतः स्थितोऽध्वर्युर्विश्वाः सर्वाः आशाः दिशो विश्वान् सर्वान् देवान् च अयाट् अयाक्षीत् यजेर्लुङि च्लेर्लोपे रूपम् इष्टवान् दक्षिणतः स्थितो ह्याहुतीर्जुहोति। अतो ब्रवीमि हे अश्विना अश्विनौ स्वाहाकृतस्य वषट्कारानन्तरं हुतस्य मधोर्मधुरास्वादस्य घर्मं युवां पिबतम् कर्मणि षष्ठी ॥ १० ॥

विश्वा आशा दक्षिणसद्विश्वान्देवानयाडिह। स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना ॥ १० ॥

दिवि धा इमं यज्ञमिमं यज्ञं दिवि धाः। स्वाहाग्नये यज्ञियाय शं यजुर्भ्यः ॥ ११ ॥

अश्विना घर्मं पातं हार्द्वानमहर्दिवाभिरूतिभिः। तन्त्रायिणे नमो द्यावापृथिवीभ्याम् ॥ १२ ॥

का० दिवि धा इति विवृत्त्यर्कतिः[2]। महावीरं विवृत्तं कम्पयति सकृन्मन्त्रेण हिङ्कृणोमिति सूत्रार्थः ॥ यजुर्घर्मदेवत्यं सामोष्णिक्। हे महावीर इमं मदीयं यज्ञं त्वं दिवि द्युलोके धाः धेहि स्थापय इमं यज्ञं दिवि धा इति पुनरुक्तिरादरार्था अभ्यासे भूयांसमर्थं मन्यन्त इति वचनात्[3] ॥ का० स्वाहाग्नय इत्यनुवषट्कृते[4]। अनुवषट् स्वाहेति मन्त्रेण घर्मं जुहोतीत्यर्थः ॥ यज्ञियाय यज्ञहितायाग्नये स्वाहा सुहुतमस्तु यजुर्भ्यः सकाशात् अस्माकं शं सुखमस्तु ॥ ११ ॥ ३—निरु०१०,४२, १ ४—२६,६,६। ५—२६,६,७।

का० अश्विना घर्ममिति ब्रह्मानुमन्त्रयते[5]। ब्रह्मा घर्ममभिमन्त्रयत इत्यर्थः ॥ स्वराडुष्णिक्। अश्विनावादित्यो द्यावा-

वसवो विद्यन्ते यस्य स वसुमान् रुद्रा विद्यन्ते यस्य रुद्रवान् तस्मै वसुयुताय रुद्रयुतायेन्द्राय वाताय हे घर्म त्वां स्वाहा जुहोमि अयं वा इन्द्रो योऽयं पवत इति(६) श्रुतेः ॥ आदित्या विद्यन्ते यस्य स आदित्यवान् तस्मै आदित्ययुक्तायेन्द्राय वाताय स्वाहा ॥ अभिमातीन्सपत्नान्हन्तीत्यभिमातिहा सपत्नो वा अभिमातिरिति(७) श्रुतेः शत्रुनाशकायेन्द्राय वाताय त्वां जुहोमि ॥ सुते स सविता तस्मै चेष्टयित्रे वाताय त्वां जुहोमि अयं वै सविता योऽयं पवत इति(९) श्रुतेः कीदृशाय ऋभुमते ऋभुरस्यास्ति ऋभुमान् विभुरस्यास्ति विभुमान् वाजोऽस्यास्ति वाजवान् आङ्गिरसस्य सुधन्वनस्त्रयः पुत्रा ऋभुविभुवाजास्तद्युक्ताय वाताय ॥ बृहस्पतये बृहतां महतां पतिर्वातस्तस्मै अयं बृहस्पति र्योऽयं पवत इति(१०) श्रुतेः कीदृशाय विश्वदेव्यावते विश्वेषां देवानां समूहो विश्वदेव्यम् तदस्यास्ति

विभुमतेवाजवतेस्वाहा। बृहस्पतयेत्वाविश्वदेव्यावतेस्वाहा ॥ ८ ॥

यमायत्वाङ्गिरस्वतेपितृमतेस्वाहा। स्वाहाघर्माय। स्वाहाघर्मःपित्रे ॥ ९ ॥

विश्वदेव्यवान् तस्मै मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मताविति दीर्घः सर्वदेवसहिताय जुहोमि ॥ ८ ॥ १——२६,९,२। २——२६,९,३।

यमाय वायवे हे घर्म त्वां जुहोमि अयं वै यमो योऽयं पवत इति(११) श्रुतेः। कीदृशाय यमाय अङ्गिरस्वते अङ्गिरसो मुनयोऽस्य सन्ति अङ्गिरस्वान् अयस्मयादीनि छन्दसीति भसञ्ज्ञायां सस्य विसर्गाभावः। पितृमते पितरोऽस्य सन्ति पितृमान् अङ्गिरःपितृयुताय वातायेत्यर्थः ॥ ॥ वातनामानि समाप्तानि ॥ ॥ का० स्वाहाघर्मायेत्युपयमन्या सिञ्चति घर्मे। उपयमन्या स्रुचा स्रुवस्थं घृतं घर्मे सिञ्चतीत्यर्थः॥ घर्माय स्वाहा एतदाज्यं सुहुतमस्तु ॥ का० स्वाहाघर्मःपित्र इति जपित्वातिक्रम्याश्राव्याह घर्मस्य यजेति। अपसव्यवान्दक्षिणास्यः स्वाहेति मन्त्रं स्वरेण जपित्वा सव्येन जलं स्पृष्ट्वा घर्महस्तोऽतिक्रम्याश्राव्य घर्मस्य यजे-

निर्नाम येनेमाः सर्वाः प्रजा बिभर्ति तमेवैतत्प्रीणातीति(२१) ॥ ६ ॥ १—१६,६,१ । २—१४,२,२,३ ।

का० प्रैतु ब्रह्मणस्पतिरित्युच्यमाने समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम्[१] । प्रैत्विति होत्रोच्यमाने आहवनीयं प्रति गच्छन्नध्वर्युः समुद्रायेत्याद्दीनि द्वादश वातनामानि स्वरेण जपतीत्यर्थः ॥ द्वादश यजूंषि वातनामदेवत्यानि । हे घर्म वाताय त्वा त्वां स्वाहा जुहोमि कीदृशाय वाताय समुद्राय समुद्रवन्त्युद्रवन्ति सर्वाणि भूतानि यस्मात्स समुद्रस्तस्मै अयं वै समुद्रो योऽयं पवत एतस्माद्वै समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति तस्मा एवैनं जुहोतीति[२] श्रुतेः ॥ सरिराय । सहईरते

समुद्रायत्वावातायस्वाहा । सरिरायत्वावातायस्वाहा । अनाधृष्यायत्वावातायस्वाहा । अप्रतिधृष्याय त्वावातायस्वाहा । अवस्यवेत्वावातायस्वाहा । अशिमिदायत्वावातायस्वाहा ॥ ७ ॥

इन्द्रायत्वावसुमतेरुद्रवतेस्वाहा । इन्द्रायत्वादित्यवतेस्वाहा । इन्द्रायत्वाभिमातिघ्नेस्वाहा । सवित्रे त्वऋभुमते

गच्छन्ति सर्वभूतानि सिद्धार्थानि यस्मात् सरिरस्तस्मै वाताय घर्म त्वां जुहोमि अयं वै सरिरो योऽयं पवत एतस्माद्वै सरिरात्सर्वे देवाः सर्वाणि भूतानि सहेरत इति(३) श्रुतेः ॥ अनाधृष्याय । न आधर्षितुं पराभवितुं शक्योऽनाधृष्यः तस्मै । अप्रतिधृष्याय । न प्रतिधर्षितुं प्रतियोद्धुं शक्योऽप्रतिधृष्यस्तस्मै वातायेत्युक्तम् अयं वा अनाधृष्योऽप्रतिधृष्यो योऽयं पवत इति(४) श्रुतेः ॥ अवस्यवे । अवो रक्षणमिच्छति अवस्यति अवस्यतीत्यवस्युः सुप आत्मनः क्यच् क्याच्छन्दसीति उप्रत्ययः अवनशीलाय ॥ अशिमिदाय । शं शात्मकं कर्मशिमि तन्न ददातीत्यशिमिदस्तस्मै शं शमनिवर्तकाय वाताय अयं वा अवस्युरशिमिदो योऽयं पवत इति(५) श्रुतेः ॥ ७ ॥

परीशासौ देवते। हे परीशास त्वं गायत्रं छन्दोऽसि गायत्र्येव गायत्रं सार्धेऽण् गायत्रीच्छन्दोरूपोऽसि। त्रिष्टुबेव त्रैष्टुभं त्रिष्टुप् छन्दरूपोऽसीति द्वितीयम्॥ का॰ ताभ्यां महावीरं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीति[१४]। ताभ्यां परीशासाभ्यां महावीरमादत्त इत्यर्थः॥ यजुर्जगती महावीरो देवता। हे महावीर द्यावापृथिवीभ्यां द्युभूमिभ्यां कृत्वा त्वा त्वां परिगृह्णामि परीशासयोर्द्यावाभूमी अध्यन्तं महावीरे चादित्योऽध्यस्तः तथाच श्रुतिः इमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्यो॰ तदादित्यमाभ्यां द्यावापृथिवीभ्यां परिगृह्णातीति(१६)॥ का॰ उद्यम्य मुञ्जवेदेनोपमृज्योपयमन्योपगृह्णातान्तरिक्षेणोपयच्छामीति[१५] परीशासगृहीतं महावीरमूर्ध्वं कृत्वा मुञ्जकृतवेदेन सम्मार्ज्योपयमन्या स्रुचा तं गृह्णातीत्यर्थः॥ यजुर्बृहती घर्मो देवता। हे घर्मान्तरिक्षेणाकाशेनोदरेण वा त्वामुपयच्छामि निगृह्णामि उपयमन्यन्तरिक्षत्वेन च स्तूयते तथाच श्रुतिः अन्तरिक्षं वा उपयमन्यन्तरिक्षेण

## इन्द्राश्विना। मधुनःसारघस्यघर्मम्पातवसवोयजतवाट्। स्वाहासूर्यस्यरश्मयेवृष्टिवनये॥ ६॥

हीदꣳ सर्वमुपयतमथो उदरं वा उपयमन्युदरेण हीदꣳ सर्वमन्नाद्यमुपयतं तस्मादाहान्तरिक्षेणोपयच्छामीति(१७)॥ का॰ अजापयः॰ वसिच्य शान्तं गोः पयोऽवनयतीन्द्राश्विनेति[१६]। अजादुग्धेन महावीरं तूष्णीं सिक्त्वा शान्ते क्षीणज्वाले तत्र गोपयः सिञ्चतीत्यर्थः। ब्राह्मी गायत्री विश्वे देवा देवताः। हे इन्द्र हे अश्विना अश्विनौ हे वसवः वासयितारो यूयं मधुनो मधुरस्य पयसो घर्मं रसं पात पिबत पिबादेशाभावश्छान्दसः कीदृशस्य मधुनः सारघस्य सरघा मधुमक्षिका अत्र सरघा मधुकृतो भ्रमरा इव ऋत्विजः तैः कृतं सारघं तस्य। घर्मं पातेति रसं पातेत्येवैतदाहेति(२०) श्रुतिः। किञ्च हे इन्द्रादयः वाट् वषट्कारेण स्वाहा सुष्ठु हुतं माध्वं मधु सूर्यस्य रश्मये किरणाय यूयं यजत दत्त यजतिर्दानार्थः वषट्कृतꣳ हुतमेवमस्यैतद्भवतीति श्रुतिः(२०)। किम्भूताय रश्मये वृष्टिवनये वृष्टिं वनति ददाति वृष्टिवनिस्तस्मै यो रश्मिर्वृष्टिं दत्ते तस्मै मधु दत्तेत्यर्थः। तथाच श्रुतिः सूर्यस्य ह वा एको रश्मिर्वृष्टिव-

गोस्तनानालभते जातावेकवचनमित्यर्थः ॥ वाग्देवत्या त्रिष्टुप् दीर्घतमोदृष्टा ।

का० यस्तस्तन इति स्तनमालभते[१] ।

हे सरस्वति तं स्तनमिहास्मिन्स्थाने धातवे धेट् पाने तुमर्थे तवेप्रत्ययः पानार्थमकः कुरु मम पानाय प्रयच्छेत्यर्थः लोडर्थे लङ् अपि लुप्ते गुणः । तं कम् यस्ते तव स्तनः स्तन इव स्तनः शशयः शेते इति शशयः अच्प्रत्यये द्वित्वम् पूर्वस्यात्वं च छान्दसम् सम् स्तनद्वयास्ते अन्यैरनुपलब्धत्वात् यस्ते स्तनौ निहितौ गुहायामिति(१५)श्रुतेः । यश्च स्तनो मयोभूः मयः सुखं भावयति प्रापयति सर्वभूतानामिति मयोभूः । यश्च रत्नधाः रत्नानि दधाति रत्नधाः रमणीयानां धनानां धारयिता । यश्च वसुवित् वसु धनं विन्दति वेत्ति वा

यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेकः ॥

उर्वन्तरिक्षमन्वेमि ॥ ५ ॥

गायत्रं छन्दोऽसि । त्रैष्टुभं छन्दोऽसि । द्यावापृथिवीभ्यां त्वा परिगृह्णामि । अन्तरिक्षेणोपयच्छामि ।

वसुवित् । यश्च सुदत्रः सुष्ठु ददातीति सुदत्रः दाता धनवानन्यो दातुं न शक्नोति त्वत्स्तनस्तु धनवान्दाता चेति अन्येभ्य आधिक्यम् । किञ्च येन स्तनेन विश्वा विश्वानि सर्वाणि वार्याणि वरणीयाणि वस्तूनि त्वं पुष्यसि पुष्णासि तं स्तनं मत्पानाय प्रयच्छेत्यर्थः ॥ का० उपद्रव पवयेत्युच्यमाने गच्छत्युर्वन्तरिक्षमिति[२] । उपद्रवेति मन्त्रे होत्रोच्यमाने उर्विति मन्त्रेणाध्वर्युर्गार्हपत्यसमीपात्प्रति गच्छतीत्यर्थः ॥ प्राजापत्या गायत्री । विशालमन्तरिक्षमनु एमि गच्छामि ॥ ५ ॥ यजुर्गायत्री

१—२६,५,७ । २—२६,५,११ । ३—२६,५,१२ ।

का० परीशासावादत्ते गायत्रं छन्दोऽसीति प्रतिमन्त्रम्[३] । गायत्रमिति मन्त्राभ्यां परीशासौ गृह्णातीत्यर्थः ॥

का० अदित्यै रास्नेति गां पाशेन प्रतिमुच्य स्थूणायां बद्ध्वा पूषासीति वत्समुत्सृजति[१]। आगतां गामदितास्ना इति मन्त्रेण पाशेन बद्ध्वा तं पाशं स्तम्भे बद्ध्वा पूषासीति वत्सं मुञ्चतीत्यर्थः॥ हे रज्जुपाश त्वमदित्यै रास्ना रसनासि इन्द्राण्यै इन्द्रपत्न्याः उष्णीषः शिरोवेष्टनमसि एतेन पाशमिन्द्राण्युष्णीषं करोतीत्यर्थः तमेवैनमेतत्करोतीति(८) श्रुतेः॥ वत्सं मुञ्चति पूषासि दैव्यनुष्टुप् वत्सो देवता हे वत्स त्वं पूषा वायुरसि वायुर्यथा वृष्टिमाप्याययति तथा त्वं प्रस्नवेन पय आप्याययस्वेति भावः अयं वै पूषा योऽयं पवत एष हीदᳪ सर्वं पुष्यत्येष उ प्रजनयितास्ति इति(९) श्रुतेः॥ का० सम्दाय घर्माय दीष्वेति वत्समुपनयति[२]। धेनुं रज्ज्वा पश्चिमपादयोर्बद्ध्वा वत्समपाकरोतीत्यर्थः॥ दैवी पङ्क्तिः वत्सो देवता हे वत्स घर्माय घर्मार्थं दीष्व देहि पयः पयः

अदित्यै रास्नासीन्द्राण्याऽउष्णीषः। पूषासि। घर्माय दीष्व॥ ३॥

अश्विभ्याम्पिन्वस्व। सरस्वत्यै पिन्वस्व। इन्द्रायपिन्वस्व। स्वाहेन्द्रवत्। स्वाहेन्द्रवत्। स्वाहेन्द्रवत्॥ ४॥

शेषय मा सर्वं पासीरित्यर्थः दो दाने बहुलं छन्दसीति शपो लुक्॥ ३॥ १—२६, ५, ३। २—२३, ५, ४। ३—२६, ५, ५।

का० अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि[३]। पिन्वने पात्रे प्रतिमन्त्रं गां दोग्धीत्यर्थः॥ अश्विभ्यां पिन्वस्व इन्द्राय पिन्वस्व यजुर्गायत्री सरस्वत्यै पिन्वस्व यजुरनुष्टुप् लिङ्गोक्ता देवताः। हे पयः अश्विभ्यामर्थाय त्वं पिन्वस्व सम्पूरस्व सरस्वत्यै च पिन्वस्व अश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणातीति(१२) श्रुतिः सरस्वत्या वाचा कृत्वा इन्द्राय यज्ञशिरोऽश्विभ्यां संहितमिति तयोरर्थं चरस्वेति भावः॥ का० स्वाहेन्द्रवदिति विप्रुषोऽभिमन्त्रयते[४]। पिन्वनपतितान्पयःकणानभिमन्त्रयत इत्यर्थः। यजर्जगती विप्रुषो देवता। यत् दुह्यमाने स्कन्नं तत्स्वाहा सुहुतमस्तु इन्द्रवत् इन्द्रसंयुक्तं चास्तु॥ ४॥ ४—२६, ५, ६।

द्वि: सुहुतमस्तु। रोहति स्वर्गं यजमानो याभ्यां तौ रौहिणौ अस्मादित्यौ अहोरात्रे वा इमौ लोकौ वा चक्षुषी वा शिर: प्रवर्ग्यौ रौहिणौ चक्षुषी तत्र दधातीत्यादिरौहिणप्रशंसा श्रुतौ[1] ज्ञेया॥ का० रात्रिरिति सायम्[2]। सायंकालीने प्रवर्ग्ये रात्रिरिति मन्त्रेण द्वावपि प्रवर्ग्यौ यथाकालं जुहोतीत्यर्थ:॥ केतुना सहिता रात्रि: जुषतां प्रीयताम् ज्योतिषा कृत्वा सुज्योतिरित्युक्तम्॥ २१॥ १—१२, २, १, १—५। २—२६, ४, १४।

॥ श्रीमन्महीधरकृते वेददीपे हरिप्रिये। अभ्रयादिरौहिणान्तोऽयं सप्तत्रिंशो निरूपित:॥ ३७॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्। आददेऽदित्यै रास्नासि॥ १॥

इडऽएहि। अदितऽएहि। सरस्वत्येहि। असावेहि। असावेहि। असावेहि॥ २॥

का० देवस्य त्वेति रज्जुसन्दानमादायेडएहीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन्[1]। अध्वर्युर्देवस्य त्वेति रज्जुसन्दानमादाय गार्हपत्यस्य पश्चाद्गच्छन् इडएहीति वाक्यत्रयेण घर्मदुघां गामाह्वयति असावेहीति गोर्नाम्ना चोच्चैस्त्रिवारमाह्वयतीति सूत्रार्थ:॥ रज्जुदेवत्यं यजुः प्राजापत्या गायत्री। हे रज्जो सवितुर्देवस्याज्ञायां वर्तमानोऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे गृह्णामि यत: त्वमदित्यै अदित्या देवमातुः रास्ना रसना मेखलासि भवसि षष्ठ्यर्थे चतुर्थी॥१॥ २—२६,५,१।

हे इडे मानवि एहि आगच्छ हे अदिते देवमात: एहि हे सरस्वति वाक् एहि। अतोऽस्मिंस्त्वमस्तत्साहश्यार्थं। इडा हि गौरदितिर्हि गौ: सरस्वती हि गौरिति श्रुते:[4]॥ नाम्ना त्रिरुच्चैराह्वयति असौ धवलि एहि एवं त्रि:॥ २॥ ४—१४, २, १, ७।

दिवि द्युलोके वर्तमानेषु देवेषु धेहि स्थापय यज्ञे गते यजमानो गच्छत्येवेति भावः ॥ १९ ॥

ऋग्गायत्री। हे महावीर त्वं नोऽस्माकं पितासि पालको भवसि पितेव नोऽस्मान् बोधि बोधय सर्वथा नमस्ते अस्तु मा मां मा हिंसीः मा जहि ॥ महावीरोपस्थानं समाप्तम् ॥ का० त्वष्टृमन्त इत्येनां वाचयति[1] । महावीरमीक्षमाणामपनीतशिरोवस्त्रां घर्मं पश्यन्तीं पत्नीमध्वर्युर्वाचयतीत्यर्थः ॥ ऋचां त्रिष्टुप् घर्मदेवत्या पत्न्याशीः। हे घर्म वयं त्वा त्वां सपेम सपतिः स्पृशतिकर्मा मैथुनाय त्वामुपस्पृशामः। कीदृशा वयं त्वष्टृमन्तः त्वष्टा विद्यते येषां ते त्वष्टृमन्तः त्वष्टा रेतसामधि-

धेह्यरिष्टाहꣳसहपत्याभूयासम् ॥ २० ॥

अहः केतुना जुषताꣳसुज्योतिर्ज्योतिषा स्वाहा। रात्रिः केतुना जुषताꣳसुज्योतिर्ज्योतिषा स्वाहा ॥ २१ ॥

## ॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

कारी तत्सहिताः मैथुनार्थोपस्पर्शं वीर्याधिष्ठातापेक्षितो ऽत एतद्युताः। अतः पुत्रान् पशून् च मयि विषये त्वं धेहि स्थापय प्रजासुत्तरोत्तरवंशवृद्धिमस्मासु धेहि स्थापय। किञ्च पत्या भर्त्रा सहारिष्टा अनुपहिंसिता अहं भूयासं भवेयम् भर्तृमती चिरं जीवेयमित्यर्थः। इषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियत इति (१९) श्रुतेः ॥ २० ॥ १—२३, ४, १२। २—२६,४,१४

का० अहःकेतुनेति दक्षिणꣳ रौहिणं जुहोति[2] । उपस्थानगानयोः समाप्तौ रौहिणहवन्या स्रुचा दक्षिणं रौहिणं पुरोडाशं सर्वं हुतं जुहोतीत्यर्थः ॥ घर्मदेवत्यं यजुषी सामानुष्टुभा। केतुः प्रज्ञा कर्म वा केतुना प्रज्ञया कर्मणा वा सहितमहः दिनं जुषतां रौहिणहोमेन प्रीयताम् कीदृशमहः ज्योतिषा स्वकीयेनैव तेजसा सुज्योतिः शोभनं ज्योतिर्यस्य तत् विशिष्टतेजस्कम् स्वाहा एत-

ऽत्यष्टिः । हे विश्वासां भुवां पते सर्वासां पृथिवीनां स्वामिन् विश्वस्य सर्वप्राणिगतस्य मनसः पते अधिपते विश्वस्य वचसः पते सर्वप्राणिवचनस्य पालक सर्वस्य त्रयीलक्षणस्य वचसः पते प्रवर्त्तक हे देवश्रुत् देवैः श्रूयत इति देवश्रुत् देवप्रसिद्धः हे देव दीप्यमान हे घर्म देवस्त्वं देवान्पाहि रक्ष । एवं घर्मं सम्प्रार्थ्याश्विनावाह हे अश्विनौ अत्र यज्ञे देववीतये देवतर्पणाय अनु अनन्तरं घर्मो वां प्रावीः प्रावीत् तर्पयतु लोडर्थे लुङ् पुरुषव्यत्ययश्च युवयोस्तृप्त्या सर्वदेवास्तृप्यन्तीति भावः याभ्यां युवाभ्यां दध्यङ्ङाथर्वणो मधुरूपकं ब्राह्मणमुवाच दध्यङ् ह वा आभ्यामाथर्वणो मधुनाम ब्राह्मण-

अत्रप्रावीरनुवान्देववीतये । मधुमाध्वीभ्याम्मधुमाधूचीभ्याम् ॥ १८ ॥

हृदेत्वामनसेत्वादिवेत्वासूर्यायत्वा । ऊर्ध्वोअध्वरन्दिविदेवेषुधेहि ॥ १९ ॥

पितानोसिपितानोबोधिनमस्तेअस्तुमामाहिᳬसीः । त्वष्टृमन्तस्त्वासपेमपुत्रान्पशून्मयिधेहिप्रजामस्मासु

मुवाचेति(१२) श्रुतेः । कीदृशाभ्यां युवाभ्यां माध्वीभ्यां मधुब्राह्मणमीयाते तौ माध्वौ ताभ्याम् ई गतौ क्विप् । तथा माधूचीभ्यां मधुब्राह्मणमञ्चतः पूजयतस्तौ मध्वञ्चौ ताभ्यां मध्वग्भ्यामिति प्राप्ते ङीपि अलोपे मधूचीभ्यामिति लिङ्गव्यत्ययः आदिदीर्घश्छान्दसः॥१८

परोष्णिक् । आद्यावष्टार्णौ तृतीयो द्वादशार्णः सा परोष्णिक् परोष्णिक् परत इत्युक्तेः आद्ययोर्व्यूहः । हे घर्म हृदे त्वा हृदयस्वास्थ्याय त्वा त्वां स्तुम इति शेषः मनसे मनःशुध्यर्थं त्वा त्वां स्तुमः दिवे स्वर्गप्राप्त्यै त्वा त्वां स्तुमः सूर्याय सूर्यतृप्त्यै त्वा त्वां स्तुमः हृदयं संशोध्य मनो निर्मलं कृत्वा दिवमस्मान्नीत्वा सूर्यं तर्पयेति भावः । किञ्च ऊर्ध्वः सावधानः सन् अध्वरमस्मदीयं यज्ञं

विभक्तेः शे-आदेशः वाचं नियच्छ पुरुषव्यत्ययः यज्ञं नियच्छतु स्थापयतु किम्भूतां वाचम् देवयुवं देवान्यौति मिश्रयति देवयुः ताम् क्विपि तुगभाव आर्षः अनित्यमागमशासनमिति वचनात् देवसमूहमाह्वयन्तं यज्ञं समापयत्वित्यर्थः यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच्छ येन देवाञ्छ्रीणामेत्येवैतदाहेति(८) श्रुतेः देवयुवमित्यत्र संहितायां दकारस्य दीर्घः। स कः यो देवः पृथिव्यां विभाति शोभते। कीदृशः दिवो धर्त्ता द्युलोकस्य धारयिता। तपसः रश्मिजालस्य च धर्त्ता। देवानाञ्च धर्त्ता। अमर्त्यः मनुष्यधर्मरहितः अजरामरः। तपोजाः तप आदित्यस्तस्माज्जायत इति तपोजाः सूर्यात्मकः ॥ १६ ॥

त्रिष्टुब्दीर्घतमोदृष्टा। स घर्मो भुवनेषु त्रिलोकेषु अन्तर्मध्ये व्यवस्थितः आवरीवर्त्ति पुनः पुनरावर्त्तते वृतेर्यङ् लुकि

**अपश्यङ्गोपामनिपद्यमानमाचपराचपथिभिश्चरन्तम्। ससध्रीचीस्सविषूचीर्वसानआवरीवर्त्तिभुवनेष्वन्तः ॥१७॥**

**विश्वासाम्भुवाम्पते विश्वस्यमनसस्पते विश्वस्यवचसस्पते सर्वस्यवचसस्पते। देवश्रुत्त्वन्देवघर्मदेवोदेवान्पाहि।**

रूपम्। कीदृशः सध्रीचीः सह अञ्चन्तीति सध्रीच्यः सहस्य सध्रिरादेशः सहाञ्चना दिशो रश्मीन्वा वसानः आच्छादयन् वस आच्छादने शानच् प्रत्ययः विषूचीः विषुनिपातो नानार्थः विषु अञ्चन्तीति विषूच्यः ताः नानाञ्चना दिशो रश्मीन्वा वसानः क्विबन्त्वादुगितश्चेति ङीपि अचश्चेति अल्लोपे चाविति पूर्वपददीर्घः। सध्रीचीश्च ह्येष विषूचीश्च दिशो वस्तेऽथो रश्मीनिति(१०) श्रुतेः। एकः सशब्दः पादपूरणः। स कः यमहमपश्यमादित्यरूपं पश्यामि। कीदृशं गोपाम् गोपायतीति गोपास्तम् क्विपि यलोपः। अनिपद्यमानं निपद्यते पततीति निपद्यमानः न निपद्यमानोऽनिपद्यमानस्तम् अन्तरिक्षे गच्छन्तमपि नाधः पतन्तम्। च पुनः पथिभिः देवमार्गैः आचरन्तमागच्छन्तम् पराचरन्तं परागच्छन्तं च गमनागमने कुर्वाणम् ॥ १७ ॥

कश्यनस्थाहर्ति मक्त कत्वा गर्भोदेवानामित्यादिभिर्नमस्ते अस्तु मा मा हिंसीरित्यन्तैरवकाशसञ्ज्ञकैर्मन्त्रैः सयजमाना ऋत्विजो महावीरमपनिष्ठन्त इति सूत्रार्थः ॥ घर्मदेवत्या अवकाशमन्त्रा मा मा हिंसीरित्यन्ताः आद्या ऋचां पङ्क्तिः। अथ मन्त्रार्थः देवो दीप्यमानो महावीरः सविता देवेन सह सङ्गत सङ्गच्छते गमेर्लुङि वा गम इति आत्मनेपदे विकल्पेन सिचः किच्वादनुदात्तोपदेशेति मलोपे ह्रस्वादङ्गादिति सिचो लोपः बहुलं छन्दस्यमाङ्योगेऽपीति अडभावः समो गम्यृच्छ्यादिना तङ्। यद्य घर्मः सूर्येण सहैकीभूतः सन् संरोचते सम्यग् दीप्यते तं वयं स्तुम इति शेषः। कीदृशः देवानां दीप्तानां रश्मीनां दृश्यमानानां सर्वेषां वा गर्भः गृह्णातीति गर्भः ग्रहीता एष वै गर्भो देवानां य एष तपत्येष हीदꣳ सर्वꣳ संगृभ्णात्यैतेनेदꣳ सर्वं गृभीतमेष

समग्निरग्निना गतमन्दैवेनसविता सꣳसूर्येणारोचिष्ट। स्वाहा समग्निस्तपसा गतमन्दैव्येनसविता सꣳसूर्येणारूरुचत ॥ १५ ॥

घर्त्ता दिवो विभाति तपसस्पृथिव्यान्धर्ता देवो देवानामृमर्त्यस्तपोजाः। वाचमस्मे नियच्छ देवायुवम् ॥ १६ ॥

उ प्रवर्ग्य इति(४,२) श्रुतिः। तथा मतीनां बुद्धीनां पिता पालकः बुद्धिप्रवर्तकः प्रजानां पतिः पालकः ॥ १४ ॥

ब्राह्म्यनुष्टुप्। यः अग्निः घर्मः अग्निना सह सङ्गत सङ्गच्छते एकीभवति देव एव देवः सविता दैवेन देवेन सह सङ्गच्छते यश्च सूर्येण सह समरोचिष्ट संरोचते ॥ अवरं स्वाहाकारं करोति परां देवतामसावेव बन्धुरिति(६) श्रुतेः। स्वाहा अग्निः। स्वाहासहितोऽग्निर्घर्मस्तपसा सूर्यतेजसा सङ्गत सङ्गच्छते दैव्येन देवेन सविता च सङ्गच्छते सूर्येण सह समरूरुचत सर्वं सम्यक् रोचयति प्रकाशयति रोचतिर्णिजन्ताल्लुङ् वयं तं स्तुम इति शेषः ॥ १५ ॥

ऊर्ध्वबृहती। त्रिजागतोर्ध्वबृहती अन्त्याद्यौ त्रयोदशवर्णौ तृतीय एकादशवर्णस्तेनैकाधिका। स देवो घर्मः अस्मे अस्मासु

णतो द्वौ मन्त्रेण। अध्वर्युर्धृष्टिभ्यां गार्हपत्यस्य भस्माङ्गारांश्च महावीरं परितो निक्षिप्य प्रागग्रैरुदगग्रैस्त्रयोदशविकङ्कतशकलैर्महावीरं वेष्टयति अङ्गारोपरि शकलान्निक्षिपतीत्यर्थः तन्मध्याद्द्वौ शकलौ मन्त्रेण प्राञ्चौ निदधाति शेषांस्तूष्णीम् एवं प्रतिदिशं त्रिषु त्रिषु स्थितेषु अधिकं त्रयोदशं दक्षिणतो निदधातीति सूत्रार्थः॥ मासानां त्रयोदशत्वात्त्रयोदशशकलैराच्छादनम् त्रयोदश वै मासाः संवत्सरस्य संवत्सर एष य एष तपत्येष उ प्रवर्ग्य इति(२८) श्रुतेः। यजुःपङ्क्तिर्घर्मदेवत्या। हे घर्म त्वं स्वाहाकारोऽसि हविराधारत्वात् सूर्यरूपोऽसि एष वै स्वाहाकारो य एष तपत्येष उ प्रवर्ग्य इति (२६) श्रुतेः अतस्त्वं मरुद्भिः प्रजाभिरस्मद्रूपाभिः परिश्रीयस्व सेव्यस्व कर्मणि यज्ञ मरुतस्त्वामाश्रयन्त्वित्यर्थः विशो वै मरुतो विशैवैतत्क्षत्रं परिबृ(ँ)हति तदिदं क्षत्रमुभयतो विशापरिबृढमिति(२७) श्रुतिः॥ का० सुवर्णशतमानेनापिदधाति-दिवः स(ँ)स्पृश इति॥ शतरक्तिकामितेन सुवर्णेन महावीरमाच्छा-

गर्भोदेवानाम्पितामतीनाम्पतिःप्रजानाम्। सन्देवोदेवेनसवित्रागतस(ँ)सूर्येणरोचते ॥ १४ ॥

दयतीति सूत्रार्थः॥ देवो जगती सुवर्णदेवत्या। हे शतमान दिवः द्युलोकसम्बन्धिनः संस्पृशः स्पर्शकर्त्तॄन्देवान्पाहि देवा राक्षसेभ्यो भीता महावीररक्षायै स्वर्णं स्थापितवन्त इति श्रुतौ कथा देवा अबिभयुरित्यादिकायां(२९)। का० कृष्णाजिनावकर्तैर्धवित्रै-रुपवाजयति त्रिभिर्दण्डवद्भिर्मधु मध्विति[१]। कृष्णाजिनकृतैर्दण्डयुक्तैस्त्रिभिर्व्यजनै रश्मिं वीजयति दीपनायेति सूत्रार्थः॥ त्रीणि यजूंषि प्राणदेवत्यानि दैव्युष्णिक्। मधुररससाम्यात्प्राणो मधु उच्यते मधु मधु मधु प्राणोदानव्यानत्रयं महावीरे स्थापयामीत्यर्थः तथाच श्रुतिः अथ धवित्रै राधुनोति मधु मध्विति त्रिः प्राणो वै मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधातीति॥ १३॥ १—२६, ३, १०। २—२६,४,२। ३—२६, ४, ११।

का० परिक्रम्योपतिष्ठन्तेऽक्षत चेद्गर्भोदेवानामिति[२]। धवित्रवीजनसमये उत्तरं देववत्परिक्रमणं प्रागकृतं चेदिह त्रिः परि-

पूर्वस्यां दिशि उच्चरत् उच्चरति उदेति इतश्च लोपः परस्मैपदेष्विति इकारलोपः। कीदृशं तत् देवहितं देवैर्हितं स्थापितम् यद्वा देवानां हितं प्रियम् शुक्रं शुक्लं पापासंस्पृष्टं शोचिष्मद्वा तस्य प्रसादात् शतं शरदः वर्षाणि वयं पश्येम शतवर्षपर्यन्तं वयमव्याहतचक्षुरिन्द्रिया भवेम प्रार्थनायां लिङ् अत्यन्तसंयोगे द्वितीया। शतं शरदः जीवेम अपराधीनजीवना भवेम। शतं शरदः शृणुयाम अदुष्टश्रोत्रेन्द्रिया भवेम। शतं शरदः प्रब्रवाम अस्खलितवागिन्द्रिया भवेम। शतं शरदः अदीनाः स्याम न

शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥ २४ ॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्। आददे नारिरसि ॥ १ ॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ॥ २ ॥

कस्याप्यग्रे दैन्यं कुर्याम। शतात् शरदः शतवर्षोपर्यपि भूयश्च बहुकालम् पश्येमेत्यादि योज्यम् ॥ २४ ॥ १—१६,१,२।

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। अध्यायः शान्तिपाठार्थः षट्त्रिंशोऽयं प्रकाशितः ॥ ३६ ॥

का० देवस्य त्वेत्यभिमादायौदुम्बरीं वैकङ्कतीं वार्ताभिमानीं सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति। उदुम्बरतरुत्थां विकङ्कततरुत्थां वा हस्तप्रमाणामभ्रिं देवस्य त्वा नारिरसीति मन्त्रेणादाय वामहस्ते तां कृत्वा दक्षिणहस्तेन स्पृष्ट्वा

मर्त्यास्त्वित्यर्थः ॥ १७ ॥

हे दृते विदारे विदीर्णे जराजर्जरितेऽपि शरीरे हे महावीर मा मां त्वं दृंह दृढीकुरु यद्वा, हे दृते विदीर्णे कर्मणि मां दृंह अच्छिद्रं कर्म कुरु यद्वा सुषिरत्वात् सत्तृत्वाच्च दृतिशब्देन महावीरः हे दृते महावीर मां दृंह दृढीकुरु। कथं दृढीकरणम् तदाह सर्वाणि भूतानि प्राणिनो मा मां मित्रस्य चक्षुषा समीक्षन्तां सम्यक् पश्यन्तु मित्रदृष्ट्या सर्वे मां पश्यन्तु नारिदृष्ट्या सर्वेषां प्रियो भूयासमित्यर्थः। अहमपि सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे पश्यामि सर्वे मे प्रियाः सन्तु। मित्रचक्षुः

दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्। मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।

मित्रस्य चक्षुषा समीक्षामहे ॥ १८ ॥

दृते दृꣳह मा। ज्योक्ते सन्दृशि जीव्यासं ज्योक्ते सन्दृशि जीव्यासम् ॥ १९ ॥

शाक्तं भवति मित्रः कञ्चन न हन्ति मित्रं च कश्चन न हन्ति एवं परस्पराद्रोहेण सर्वानहिंसन्तो मित्रस्य चक्षुषा वयं समीक्षामहे पश्यामः ॥ १८ ॥

हे दृते वीर मां दृंह आदरार्थं पुनर्वचनम्। हे महावीर ते तव संदृशि संदर्शने अहं ज्योक् चिरं जीव्यासं जीवेयम् जीवेराशीर्लिङि रूपम्। ज्योगिति निपातश्चिरार्थः। पुनरुक्तिरादरार्थां ते संदृशि ज्योग्जीव्यासम् ॥ १९ ॥

व्याख्याता (१७.११) ॥ २० ॥

स्योना पृथिवि ॥ व्याख्याता (३५, २१) ॥ आपो हि ष्ठा । तृचो व्याख्यातः (११, ५०—५२) ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

यजूंषि संहृष्य द्यौः शान्तिरित्यन्तानि (१८) एकाधिका शक्वरी । द्यौः द्युलोकरूपा च या शान्तिः अन्तरिक्षरूपा च या शान्तिः पृथिवी भूलोकरूपा या शान्तिः आपो जलरूपा या शान्तिः ओषधयः ओषधिरूपा या शान्तिः वनस्पतयः वृक्षरूपा या शान्तिः विश्वे देवाः

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ १४ ॥

यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ १५ ॥

तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ १६ ॥

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः

शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ १७ ॥

सर्वदेवरूपा या शान्तिः ब्रह्म त्रयीलक्षणं परं वा तद्रूपा या शान्तिः सर्वं सर्वजगद्रूपा या शान्तिः शान्तिरेव शान्तिः या स्वरूपतः शान्तिः या शान्तिः सा मां प्रति एधि अस्तु पुरुषव्यत्ययः । भवतीत्प्रसादादहमपि शान्तिरूपं मां प्रत्यक्षितवान् । यद्वा द्यौरित्यादिषु विभक्तिव्यत्ययः, सप्तम्यर्थे प्रथमा । दिव्यन्तरिक्षे पृथिव्यामप्स्वोषधिषु वनस्पतिषु विश्वेदेवेषु ब्रह्मणि सर्वस्मिंश्च या शान्तिः सा मां

द्विपदा गायत्री अहानि रात्रयश्च देवताः। अहानि दिनानि नोऽस्माकं शं सुखरूपाणि भवन्तु रात्रीः शं सुखरूपाः
अस्मासु प्रतिधीयतां प्रतिदधातु महावीर इति शेषः कर्तरि यक् छान्दसः॥ शं न इन्द्राग्नी। त्रिष्टुप् इन्द्राग्नी इन्द्रावरुणौ
इन्द्रापूषणौ इन्द्रासोमौ देवताः। इन्द्राग्नी अवोभिः पालनैः सह नोऽस्माकं शं सुखरूपौ भवताम्। रातं दत्तं हव्यं ययोस्तौ
रातहव्यौ हविष्मन्तौ इन्द्रावरुणौ नः शं भवताम्। वाजसातौ वाजस्यान्नस्य सातौ दाने निमित्तभूते इन्द्रापूषणा इन्द्रपूषणौ
देवौ नोऽस्माकं सुखरूपौ भवताम्। इन्द्रासोमा इन्द्रसोमौ देवौ शं सुखरूपौ भवताम्। किमर्थम् सुविताय सुष्ठु इतं सुवितम्

शन्नइन्द्रापूषणावाजसातौशमिन्द्रासोमासुवितायशंयोः ॥ ११ ॥

शन्नोदेवीरभिष्टयआपोभवन्तुपीतये। शंयोरभिस्रवन्तुनः ॥ १२ ॥

स्योनापृथिविनोभवानृक्षरानिवेशनी। यच्छानःशर्मसप्रथाः ॥ १३ ॥

साधुगमनाय साधुप्रसवाय वा। तथा शं रोगाणां शमनाय। योः यवनाय पृथक्करणाय च भयानाम् रोगं भयस्य निवर्त्य
सुखरूपौ भवतामित्यर्थः। देवताद्वन्द्वे चेति सर्वत्र पूर्वपदस्य दीर्घः ॥ ११ ॥

अब्देवत्या गायत्री। देवीः देव्यो दीप्यमाना आपो नोऽस्माकमभिष्टये अभिषेकायाभीष्टाय वा पीतये पानाय च शं सुखरूपा
भवन्तु अस्माकं स्नाने पाने चापः सुखयित्र्यो भवन्तु। आपः शं योः रोगाणां शमनं भयानां यवनं पृथक्करणं च अभिस्रवन्तु
नोऽस्माकं भयरोगनाशं कुर्वन्त्वित्यर्थः ॥ १२ ॥

चतुष्पदे चतुष्पदां गवादीनां च शं सुखरूपोऽस्तु ॥ ८ ॥

हे मनुष्या यो मित्रवरुणादयो देवताः । मित्रो देवो नोऽस्माकं शं सुखरूपो भवतु महावीरप्रसादात् मेद्यति भक्तेषु स्निह्यतीति मित्रः । वरुणः शं सुखरूपो भवतु स्वीकरोति भक्तानिति वरुणः । अर्यमा नोऽस्माकं शं भवतु इयर्ति गच्छति भक्तं प्रतीत्यर्यमा । इन्द्रो देवेशो नोऽस्माकं शं भवतु । बृहस्पतिर्देवगुरुर्नः शं भवतु बृहतां वेदानां पतिः पालकः । उरुविस्तीर्णः क्रमः पादन्यासो यस्य स विष्णुः नोऽस्माकं शं भवतु वेवेष्टि व्याप्नोतीति विष्णुः ॥ ९ ॥

शन्नोमित्रःशंवरुणःशन्नोभवत्वर्यमा । शन्नइन्द्रोबृहस्पतिः शन्नोविष्णुरुरुक्रमः ॥ ९ ॥

शन्नोवातःपवतांशन्नस्तपतुसूर्यः । शन्नःकनिक्रदद्देवःपर्जन्योअभिवर्षतु ॥ १० ॥

अहानिशम्भवन्तु नःशंरात्रीःप्रतिधीयताम् । शन्नइन्द्राग्नीभवतामवोभिःशन्नइन्द्रावरुणारातहव्या ।

वातो वायुर्नोऽस्माकं शं सुखकारी अपरुषः अव्याधिजनकश्च पवतां वहताम् पव गतौ लोट् । सुवति जनान्स्वस्वव्यापारेषु प्रेरयति सूर्यः शं सुखरूपोऽदहनो भेषजरूपश्च नोऽस्माकं तपतु किरणान्प्रसारयतु । पर्जन्यः पिपर्ति पूरयति जनमिति पर्जन्यः परोऽस्य पुरो जयतेऽनेन वा पर्जन्यो रसदश्चेन्द्र इति अभिधानम् पर्जन्यः पर्जन्योयो देवः नोऽस्माकं शं सुखकरं कार्यानिचार-रहितं यथा तथा अभिवर्षतु सिञ्चतु कीदृशः कनिक्रदत् अत्यन्तं क्रन्दतीति शब्दं कुर्वन् दाधर्तिदर्धर्तीत्यादिना यङ्लुगन्तो निपातः ॥ १० ॥

मन्त्रार्थः। अथ यजूंषि लिङ्गोक्तदेवतानि। ऋग्रूपां वाचमहं प्रपद्ये प्रविशामि शरणं व्रजामि। यजुः यजूरूपं मनः प्रविशामि। प्राणं प्राणरूपं साम प्रपद्ये। चक्षुरिन्द्रियं श्रोत्रेन्द्रियं च प्रपद्ये। वागादिचतुष्टयं सहदृशावयवोपलक्षणम् समस्तावयवं प्रजापतेर्लिङ्गं प्रपद्ये इत्यर्थः तयोर्विद्यां लिङ्गशरीरं च प्रपद्ये प्रवर्ग्यो न नाशयेदिति भावः॥ तथा वागिन्द्रियमोजो मानसं बलं शाब्दम्। पुनरोजोयुक्ताच्छारीरं च बलम् प्राणापानौ उच्छ्वासनिश्वासवायू च एते सह एकीभूताः सन्तो मयि वर्तन्ते। अतोऽपि प्रवर्ग्योऽस्मान्न हन्तीति भावः॥ १॥

यन्मेछिद्रञ्चक्षुषोहृदयस्यमनसोवातितृण्णम्बृहस्पतिर्मेतद्दधातु। शन्नोभवतुभुवनस्ययस्पतिः॥ २॥

भूर्भुवःस्वः। तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि। धियोयोनःप्रचोदयात्॥ ३॥

कयानश्चित्रआभुवदूतीसदावृधःसखा। कयाशचिष्ठयावृता॥ ४॥

बृहस्पतिदेवत्या पङ्क्तिः। मे मम चक्षुषः चक्षुरिन्द्रियस्य यत् छिद्रमवखण्डनं जातम् प्रवर्ग्याचरणेन। हृदयस्य बुद्धेर्वा यत् छिद्रं जातम्। मनसो वा यत् अतितृण्णमतिहिंसितम्। प्रवर्ग्याचरणेन यत् चक्षुर्बुद्धिमनसां व्याकुलत्वं जातम् बृहस्पतिर्देवगुरुः मे मम तत् छिद्रमतितृण्णं च दधातु सन्दधातु छिद्रं निवर्तयतु। भुवनस्य भूतजातस्य यः पतिरधिपतिः प्रवर्ग्यरूपो यज्ञः स नोऽस्माकं शं सुखरूपो भवतु। बृहस्पतिना छिद्रापाकरणात्प्रवर्ग्यः कल्याणरूपोऽस्त्वित्यर्थः॥ २॥

भूर्भुवःस्वः त्रीणि यजूंषि। तत्सवितुः(३,३५) कया नः(२७,३९) कस्त्वा(२७,४०) अभीषुणः(२७,४१) एताश्चतस्र ऋचो व्याख्याताः।

प्रथः विस्तारः प्रथसा सह वर्तमाना सप्रथाः सर्वतः पृथुः। किंच नोऽस्मभ्यं शर्म शरणं यच्छ देहि॥ अतः परं यजुः तद्विनियोगो यज्ञमूले सम्भृतिसमरणनिमित्ते स्नाने जलापनोदने। तथाहि सव्यस्थानामिकया अपनोद्याप नः शोशुचदघमिति[1]। इदं अघं नोऽस्माकमघं पापमपशोशुचत् अपशोचयतु दहतु ॥ २१ ॥ १—पारस्कर० ३, १०।

का० आहुतिं जुहोति पुत्रो भ्रातान्यो वा ब्राह्मणोऽस्मात्त्वमधिजातोऽसीति[2]। आग्निकस्य पात्रप्रतिपत्त्यन्ते दाहात्पूर्वं-माज्याहुतिं पुत्रादिर्जुहोति॥ अग्निदेवत्या गायत्री अनुष्टुप्। हे अग्ने त्वमस्मात् यजमानात् आधानकाले अधिजातोऽसि

अस्मात्त्वमधिजातोसि त्वदयञ्जायताम्पुनः। असौस्वर्गायलोकायस्वाहा ॥ २२ ॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

ऋचंवाचम्प्रपद्येमनोयजुःप्रपद्येसामप्राणम्प्रपद्येचक्षुःश्रोत्रम्प्रपद्ये। वागोजःसहौजोमयिप्राणापानौ ॥ १ ॥

उत्पन्नोऽसि अतोऽयं यजमानः पुनः त्वत् त्वत्तः जायतामुत्पद्यताम्। असाविति विशेषनामवचनः तथाहि देवदत्तः स्वर्गाय लोकाय स्वर्गलोकप्राप्त्यर्थं त्वत्तो जायतां त्वद्रूप एव भवत्विति भावः। स्वाहा सुहुतमस्तु ॥ २२ ॥ ॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। पञ्चत्रिंशोऽयमध्यायो पितृमेधाभिधोऽगमत् ॥ ३५ ॥ २—२५, ७, ३७। ३—१७, १, १, २०। ४—३९, ७। ४०, ८६। ५—३९, ८—१२।

षडध्यायी आथर्वणेन दधीचा दृष्टा दध्यङ् ह वा आथर्वण एतच्छुक्रमेतं यज्ञं विदाञ्चकारेति[1] श्रुतिः। उपसत्त्वाग्निको मन्त्रः[4] अग्निं हृदयेनेत्याद्यध्यायसमाप्तिपर्यन्तमाश्वमेधिकम्[5] तद्द्वयं वर्जयित्वा॥ का० शान्तिकरणमाद्यन्तयोः। ऋचं वाचमित्यध्यायेन शान्तिकरणं कार्यम् स्वाध्याये मन्त्रपाठे प्रवर्ग्यमन्त्रादावस्याध्यायस्य दर्शनात्॥ अथ

जुहोति वह वपां जातवेदः पितृभ्य इति । अस्यार्थः मध्यमाष्टका गोपशुना कार्या तस्या धेनोर्वपां जुहोति वह वपामिति मन्त्रेणेत्यर्थः ॥ हे जातवेदः जातं वेदो धनं यस्मात्स जातवेदाः तत्सम्बोधने हे जातवेदः पितृभ्योऽर्थाय त्वं वपां धेनुसम्बन्धिनीं चर्मविशेषं त्वं वह प्रापय । पराके पराक्रान्ते दूरेऽपि यत्र यस्मिन्देशे निहितान् स्थापितानेनान् पितॄन् त्वं वेत्थ जानासि तत्र वहेत्यर्थः । तस्याः वपायाः निःसृत्य मेदसः धातुविशेषस्य कुल्याः नद्यः तान्पितॄन्प्रति उपस्रवन्तु प्रसरन्तु । किञ्च एषां दातॄणामाशिषः मनोरथाः सत्याः अवितथाः सन्नमन्तां प्रह्वीभवन्तु । स्वाहा सुहुतमस्तु स्वाहेति च्छिन्नं यजुः ॥ २० ॥

वह्वपाञ्जातवेदःपितृभ्योयत्रैनान्वेत्थनिहिताम्पराके । मेदसःकुल्याउपतान्त्स्रवन्तुसत्याएषामाशिषः

सन्नमन्ताꣳस्वाहा ॥ २० ॥

स्योनापृथिविनोभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथाः ॥ अपनःशोशुचदघम् ॥ २१ ॥

पृथिवीदेवत्या गायत्री मेधातिथिदृष्टा यजुरन्ता । अस्या अपि श्रौते विनियोगो नास्ति स्मार्ते खट्वारोहणे प्रथमे विनियोगः । तथाहि स्योना पृथिवि नो भवेति दक्षिणपार्श्वैः प्राक्शिरसः संविशन्तीति(१,२) ॥ हे पृथिवि त्वं नोऽस्माकं स्योना सुखरूपा भव । किम्भूता त्वम् अनृक्षरा ऋक्षरः कण्टकः ऋच्छतेः कण्टकः कन्तपो वा कण्टतेर्वा कन्ततेर्वा स्याद्गतिकर्मण इति(९,३२) यास्कः तद्वर्जं चौरव्याघ्रादिदुःखनिमित्तवर्जम् न सन्ति ऋक्षराः कण्टकाः दुःखदायिनो यस्यां सा अनृक्षरा । तथा निवेशनी निविशन्ति जनाः यस्यां सा निवेशनी साधुप्रतिष्ठाना करणाधिकरणयोश्चेति ल्युट् । तथा सप्रथाः प्रथनं

वर्तते दाङ् पालने परिदीयते समन्ताद्रक्ष्यतेऽनेनेति परिदाः रक्षकः तम् ॥ इन्द्रदेवत्यानुष्टुप् भरद्वाजात्मजशिरिम्बिठदृष्टा । इमे जीवाः ग्रामनड्वाहं पर्यनेषत परिणीतवन्तः पनहुत्पुच्छालम्भनाभिप्रायम् नयतेर्लुङि तङि सिचि प्रथमबहुवचने रूपम् व्यवहिताश्चेति परेर्व्यवधानं क्रियापदेन । इमे जीवाः अग्निम् पर्यहृषत परिहृतवन्तः यस्मिन्कालेतत्कर्म तत्तं परिजह्नुः प्रेतस्यौपासनं निरस्तवन्तीत्येतदभिप्रायम् । इमे देवाः दीव्यन्ति कर्मसु दीप्यन्ते ते देवाः ऋत्विजः तेषु यत्र यत्रं दक्षिणाः लक्षणमक्रत कृतवन्तः अक्रणवेति प्राप्ते सिचो लोपे अक्रतेति रूपम् । अत एतैः कर्मभिः कृतकृत्यानिमान् जीवान् को नाम आदधर्षति आधर्षयितुं पराभवितुं शक्नुयात् समक्षमतिक्रिया एते जाता इति भावः ॥ १८ ॥

का० अहारिणोपासनं निरस्यति क्रव्यादमितिः[1] । आहुतिहोमानन्तरं यत्र हुतं तस्यौपासनस्य कश्चिषं निरस्यति प्रेतस्यैवोपासन

क्रव्यादमग्निम्प्रहिणोमिदूरं यमराज्यङ्गच्छतुरिप्रवाहः । इहैवायमितरोजातवेदादेवेभ्योहव्यं वहतुप्रजानन् १९

इति पक्षे सर्वमपि निरस्यति ॥ अग्निदेवत्या त्रिष्टुप् दमनदृष्टा । येन पुरुषो दह्यते स क्रव्यात् तं क्रव्यादमग्निमहं दूरम् अपुनरागमनाय प्रहिणोमि प्रेषयामि स प्रहितः क्रव्यादग्निः यमराज्यं गच्छतु यमस्य राज्यं प्रति व्रजतु किम्भूतः रिप्रवाहः रिप्रमिति पापनाम[2] रिप्रं पापं वहति नाशयति रिप्रवाहः ॥ का० इहैवायमिति जपति[3] । यजमानो जपति ॥ अयमितरः क्रव्यादादन्यो जातवेदाः जातप्रज्ञानोऽग्निः इहैवास्मिन्नेव गृहे सदने देवेभ्योऽर्थाय हव्यं हविः वहतु प्रापयतु किं कुर्वन् प्रजानन् स्वाधिकारं जानानः ॥ इति पितृमेधः समाप्तः । उपधानासन्दीशयनयानादीन् तद्दक्षिणात्वेन दद्यात् इच्छन्हेमाद्यपि दद्यात् ॥ १९ ॥

१—२१, ४, २७ । २—निरु० ४, २१ । ३—२१, ४, २८ । ४—पारस्कर० ३, ३ ।

जातवेदोदेवत्या त्रिष्टुप् । अस्या विनियोगः श्रौतसूत्रे नास्ति । गृह्यसूत्रेऽस्ति[4] तथाहि मध्यमा गवा तस्यै वपां

कुर्वन्तु एते जीवाः ॥ १५ ॥

का० आञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान्परिधीन्परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्नआयुᳯआयु-ष्मानग्न इति। कज्जलादिना नेत्राञ्जनमाञ्जनम् तैलेन पादाञ्जनमभ्यञ्जनम् तद्द्वयं कृत्वा औपासनं कर्तुरावसथ्याग्निं दर्भैः परिस्तीर्य वारणवृक्षोद्भवांश्चतुरः परिधींश्चतुर्दिक्षु तूष्णीमेव परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोति मन्त्रद्वयेन। औपासनः प्रेतस्येव तस्यैवाहारेण निरसनीयत्वादिति हरिस्वामिनः कर्तुरेवौपासने होमस्तस्यैकदेशनिरसनमिति कर्कादयः ॥ व्याख्याता(१९, १८) ॥ १६ ॥

आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि। घृतम्पीत्वा मधु चारु गव्यम्पितेव पुत्रमभि रक्षतादिमान्त्स्वाहा ॥१७॥

परीमे गामनेषत पर्यग्निमहृषत। देवेष्वक्रत श्रवः क इमाँ२॥ऽआ दधर्षति ॥ १८ ॥

अग्निदेवत्या त्रिष्टुब्वैखानसदृष्टा। हे अग्ने त्वमेवम्भूत एधि भव किम्भूतः आयुष्मान् चिरञ्जीवी। तथा हविषा वृधानः वर्धतेरसौ वृधानः बहुलं छन्दसीति शानचि शपो लुक्। तथा घृतप्रतीकः घृतं प्रतीकं मुखं यस्य। घृतयोनिः घृतं योनि-रुत्पत्तिस्थानं यस्य उत्तरवेद्याधारत्वाभिप्रायमेतत्। स त्वं गव्यं गोसम्बन्धि घृतं पीत्वा इमान् जीवान् अभिरक्षतादभिरक्ष तुह्योस्तातङ्ङाशिष्यन्यतरस्यामिति हेस्तातङादेशः। तत्र दृष्टान्तः पिता पुत्रमिव यथा पिता पुत्रं रक्षति। किम्भूतं घृतं मधु मधुरं चारु सुगन्धि स्वाहा सुहुतमस्तु ॥ १७ ॥ १—२१,४,२१।

का० अथैषां परिदां वदन्ति परीमेगाममेषतेति। अध्वर्युर्यजमानामात्यानां परिदाम् परिदा रक्षणम् सकाशं मन्त्रं

अनुष्टुप् अनडुद्देवत्या उत्तरोऽर्धर्चः प्रत्यक्षकृतः ततः सर्वत्राऽध्याहारेण सामर्थ्यम् वयं यमनड्वाहमन्वारभामहे आलभामहे स्पृशामः किंभूतं सौरभेयं सुरभ्याः अपत्यम् स नोऽस्मान् उगिति उक्। किमर्थं स्वस्तये अविनाशाय। हे अनड्वन् स त्वं नोऽस्माकं सन्तरणः तारको दुःखनाशको भव। किंच त्वं वह्निः देवानां वोढा। तत्र दृष्टान्तः देवेभ्यः इन्द्र इव यथा इन्द्रो देवार्थं तारको भवति ॥ १२ ॥

उद्वयन्तमिति ग्राममार्गं कुर्वन्ति। व्याख्याता (२०, २१) ॥ १४ ॥ १२—२१,४,२७।

उद्वयन्तमसस्परि स्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १४ ॥

इमं जीवेभ्यः परिधिं दधामि मैषान्नु गादपरो अर्थमेतम्। शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ १५ ॥

अग्न आयूंषि पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम् ॥ १६ ॥

का० ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य इति। स्वनिवासग्रामस्य श्मशानस्य च मध्ये मर्यादालोष्टं तं स्वयमध्वर्युरेव निदधाति ॥ मनुष्यदेवत्या त्रिष्टुप् सङ्कुसुकदृष्टा। जीवेभ्यः विद्यमानजनार्थमिमं परिधिं मर्यादां दधामि स्थापयामि कथमिति चेत् एषां जीवानां मध्ये अपरः कश्चित् नु क्षिप्रं वेदोक्तादायुषोऽर्वाक् एतमर्थं पितृलोकगमनरूपं कार्यमुद्दिश्य मा गात् मा गच्छतु। एते जीवाः शतं शरदः जीवन्तु शतवर्षायुषो भवन्तु। किंभूताः शरदः पुरूचीः पुरु बहु अञ्चन्तीति पुरूच्यः दानाध्ययनयागानुकूलाः। किंच पर्वतेन लोष्टेनैव मृत्युमन्तर्दधताम् मृत्युमन्तर्हितं

का० अपाघमित्यपामार्गैरपमृजत इति[1] । ते अमात्या यज्ञोपवीतिनो भूत्वाप उपस्पृश्य हस्तगृहीतैरपामार्गैः स्वशरीरं शोधयन्ते अपामार्गबीजैर्हवन्तं यन्तीति केचित् ॥ लिङ्गोक्तदेवतानुष्टुप् शुनःशेपदृष्टा दुःस्वप्ननाशनी । हे अपामार्ग त्वमस्मत् अस्मत्तः सकाशात् अघं मानसं पापमपसुव षू प्रेरणे अपगमयेत्यर्थः । किल्बिषं कीर्तिभेदकं कायिकं च पापमपसुव । कृत्यां परकृतमभिचारमपसुव । अप उ रपः रपो रिप्रमिति पापनामनी भवत इति[2] यास्कः रपः पापं वाचिकं च अपसुव उ चार्थे । दुःस्वप्न्यम् दुष्टः स्वप्नो दुःस्वप्नः तत्र भवं दुःस्वप्नोत्थमसुखरूपं फलं चास्मत्तोऽपसुव ॥ ११ ॥ १—२१,४,२१ । २—निरु० ४,२१ ।

अपाघमप किल्बिषमप कृत्यामपो रपः । अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुव ॥ ११ ॥

सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ १२ ॥

अनड्वाहमन्वारभामहे सौरभेयꣳ स्वस्तये । स न इन्द्र इव देवेभ्यो वह्निः सन्तारणो भव ॥ १३ ॥

का० सुमित्रिया न इति स्नात्वाहतवाससोऽनडुत्पुच्छमन्वारभ्यानड्वाहमित्युद्वयमित्यागच्छन्तीति[1] । सुमित्रिया इति मन्त्रेण स्नात्वा नूतनवस्त्राणि परिहितवन्तोऽनड्वाहमिति मन्त्रेण वृषपुच्छमन्वारभ्य उद्वयन्तमिति मन्त्रेण यजमानामात्या ग्राममागच्छन्ति यद्यप्यत्र सुमित्रिया इति मन्त्रेण स्नानमुक्तं तथापि सुमित्रिया इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं परिषिञ्चतीति[2] इयं विधेयम् । दुर्मित्रिया -- द्विष इति यामस्य दिशं द्वेष्यः स्यात्तां दिशं पराषिञ्चेत्तेनैव तं पराभावयतीति[3] श्रुतेः ॥ व्याख्याता[4] ॥ १२ ॥ १—२१,४,२२,। २—१८,५,१५ । ३—१३,८,४,५ । ४—६,२२ ।

अक्तवश्च ते शं भवन्तु । पार्थिवासः पृथिव्यां भवाश्चाग्नयः त्वा त्वां माभिशूशुचन् मा शोचयन्तु अभितापयन्तु ॥ ८ ॥

दिशः ते तुभ्यं त्वदर्थं कल्पन्तां क्लृप्ता भवन्तु आपो जलानि तुभ्यं शिवतमाः कल्याणकारिण्यो भवन्तु सिन्धवः समुद्राश्च शिवतमास्तुभ्यं भवन्तु । अन्तरिक्षमाकाशं तुभ्यं शिवं कल्याणकारि भवतु सर्वाः दिशः ते तुभ्यं कल्पन्ताम् । आदरार्थं कात्स्न्यार्थं वा पुनर्वचनम् ॥ ९ ॥

का० अध्वशिगच्छत्यश्मन्वतीरिति । गर्तान्कृद्माणीय पूर्ववर्णादिभ्यः लष्टा वा मृदमानीय तत् श्मशानं विप्रस्य मुखमितं क्षत्रियोरोमितं वैश्यस्योरुमितं स्त्रिया भगमितं शूद्रस्य जानुमितं सर्वेषां वा जानुमितं मृदा कृत्वा शैवलैः कुशैश्च प्रच्छाद्य

कल्पन्तान्ते दिशस्तुभ्यमापः शिवतमास्तुभ्यम्भवन्तु सिन्धवः । अन्तरिक्षꣳ शिवन्तुभ्यङ्कल्पन्तान्ते दिशः सर्वाः ॥ ९ ॥

अश्मन्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः । अत्रा जहीमो ऽशिवा ये असञ्छिवान्वयमुत्तरेमाभि वाजान् ॥ १० ॥

तद्दक्षिणतो गर्तौ खात्वा क्षीरोदकाभ्यां सम्पूर्य श्मशानोत्तरे सप्त गर्तान्खात्वा दक्षिणोत्तरान्जलेन सम्पूर्योत्तरगर्तेषु अध्वर्यु-यजमानामात्याः स्वीयाश्मन्वतीरिति मन्त्रेण तद्गर्तोपरि गच्छन्ति ॥ विश्वदेवदेवत्या त्रिष्टुप् सुचीकदृष्टा । हे सखायः मित्राणि यथा अश्मन्वती पाषाणवती नदी रीयते गच्छति री गतौ दिवादिः आत्मनेपदी यतो यूयं संरभध्व-मुत्तरणाय प्रयतध्वम् । उत्तिष्ठत अभिमुखा भवत प्रतरत प्रकर्षेण तां नदीं तरत । किमिति यतोऽत्र प्रदेशे ये अशिवाः अशान्ता दुष्टा राक्षसादयः असन् स्युः तान्वयं जहीमः परित्यजामः तेषु त्यक्तेषु शिवान् सुखकरान्वाजानन्नविशेषान्वय-मुत्तरेम प्राप्नुयाम ॥ १० ॥ १—२१, ४, २१ ।

उपोदके उदकसमीपवर्तिनि लोके स्थाने प्रजापतौ देवतायां त्वां निदधामि स्थापयामि। स प्रजापतिर्नोऽस्माकमघं पापं मोचयत् अत्यर्थं दहतु मुच मोक्षे यङ्लुगन्तं रूपम्॥ ६॥ १—२१, ४, ७। २——२१, ४, ८।

का॰ प्रत्यागते परं मृत्यविति जपतीति[१]। दक्षिणां गत्वानुकूलसंकुशं प्रक्षिप्यैहीति कश्चिदिमः प्रेषितोऽस्ति तस्मिन्कुशं क्षिप्त्वा प्रत्यागते सति यजमानोऽध्वर्युर्वा जपति॥ मृत्युदेवत्या त्रिष्टुप् सङ्कसुकदृष्टा। हे मृत्यो परा पराङ्मुखो भूत्वा परमन्यं पन्थां पन्थानं मार्गमन्विहि अनुगच्छ। तमेव दर्शयति यस्ते तव त्वदीयः पन्था देवयानात्पथः इतरः तुच्छः अन्यः पितृयाणाख्यः देवा यान्ति यस्मिन्स देवयानः। किञ्च चक्षुष्मते ज्ञानिने शृण्वते च ते तुभ्यं मृत्यो किञ्चिद्ब्रवीमि वदामि

परम्मृत्योअनुपरेहिपन्थांयस्तेअन्यइतरोदेवयानात्। चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाꣳरीरिषोमोतवीरान्॥ ७॥

शंवातःशꣳहितेघृणिःशन्तेभवन्त्विष्टकाः। शन्तेभवन्त्वग्नयःपार्थिवासोमात्वाभिशूशुचन्॥ ८॥

आदरार्थं वचनम् न हि तस्माददृष्टमश्रुतं वास्ति षष्ठ्यर्थे चतुर्थी चक्षुष्मतः शृण्वतस्तव वदामि किम् हे मृत्यो नोऽस्माकं प्रजां सन्ततिं वंशपरम्परां मा हिंसीः रिष वधे स्वार्थे णिजन्तस्य लुङि रूपम् उत अपि च वीरान्पुत्रान्मा हिंसीः॥ ७॥

का॰ शं वात इति यथाङ्गं कल्पयित्वेष्टकां निदधाति मध्ये तूष्णीमिति[१]। शंवात इति मन्त्रद्वयेन तानि अधेः कुसुमान्यस्थीनि यथाङ्गं कल्पयित्वा यदस्थि यस्याङ्गस्य तेनाङ्गेन तदङ्गकल्पनया प्राक्शिरसं पुरुषाकृतिं कृत्वा तदधः पादमात्रीमिष्टकां तूष्णीं निदधाति॥ हे कवावसुष्टुब्दृष्टौ विश्वदेवदेवते। हे यजमान वातो वायुस्ते तव शं सुखरूपो भवतु। हि पुनः घृणिः सूर्यकिरणः ते तव शं सुखरूपो भवतु। इष्टका मध्ये प्रतिदिशं च तिस्रस्तिस्रः प्रक्षिप्तास्ते तव शं सुखरूपा भवन्तु।

अथवा दीप्तया सूर्यस्य वर्चसा तेजसा च त्वां विहारयतु ॥ का० अनडुहो वियुज्य विमुञ्चन्तामिति¹ । एवं पूर्वोक्तचतुर्मन्त्रैः पार्श्वचतुष्कं कर्षणं कृत्वा मध्येऽपि सर्वं क्षेत्रं यथा कृष्टं भवति तथा परिमिताः सीताः कृत्वा वृषभान् सीराद्विमुञ्चति ॥ यजुः वृषदेवतम् । उस्राः धेनुः तदपत्यानि उस्रियाः अनड्वाहो विमुच्यन्तां सीराद्विमुच्यन्ताम् ॥ ३ ॥

का० दक्षिणा सीरं निरस्याग्नौ वा इति सर्वौषधं वपतीति² । हलं दक्षिणदिशि तूष्णीं प्रक्षिप्य कृष्टक्षेत्रमध्ये सर्वौषधं वपति ॥ अश्वत्थे व्याख्याता(१२,७९,) ॥ ४ ॥ १—२१,४ । २—२१,४,४, । ३—२१,४,५ । ४—१३,८,३,२ ।

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ४ ॥

सविता ते शरीराणि मातुरुपस्थ आ वपतु । तस्मै पृथिवि शं भव ॥ ५ ॥

प्रजापतौ त्वा देवतायामुपोदके लोके निदधाम्यसौ । अप नः शोशुचदघम् ॥ ६ ॥

का० सविता त इति शरीराणि निवपति मध्ये इति³ । तस्य पुरुषमात्रस्य क्षेत्रस्य मध्ये शरीराणि अतस्यास्थीनि राशीकरोति एतच्च सूर्योदयात् कर्तव्यम् यथा कुर्वतोऽभ्युदियादिति⁴ श्रुतेः ॥ गायत्री सवितृदेवत्या । हे यजमान सविता सूर्यः ते तव शरीराणि अस्थीनि मातुः पृथिव्याः उपस्थे उत्सङ्गे आवपतु स्थापयतु । हे पृथिवि भूमे तस्मै सवित्रोक्तायास्थिरूपाय यजमानाय शं भव सुखरूपा भव ॥ ५ ॥

उष्णिक् प्रजापतिदेवत्या अस्थिनिवापे एव विनियुक्ता । असावित्ति नामग्रहणम् अनुदात्तत्वादामन्त्रितम् हे देवदत्त

स्थानम् विधत्तां ऋतुभिर्ऋतुभिः अहोभिः दिवसैः अक्तुभिः रात्रिभिश्च व्यक्तं स्पष्टीकृतम् ऋतुशब्देन श्रुतौ ऋतवः उक्ताः तदेनमृतुभिश्चाहोरात्रैश्च सलोकं करोतीति[1] श्रुतेः । ऋत्वाद्यधिष्ठातृदेवताभिः प्रकटितमस्मै यमो ददात्वित्यर्थः ॥ १ ॥ १——१३,८,१,३ ।

का० औदुम्बरसीरमुत्तरतो वा बहुवे युज्यमाने युञ्जन्तीति सम्प्रेष्य सविता त इति जपतीति[2] । ततोऽध्वर्युस्तां पलाशशाखां दक्षिणस्यां निहत्य परितस्त्रिर्वेष्टयित्वा तत्पश्चेवस्य दक्षिणत उत्तरतो वा षड्भिरनड्भिः सीरं युनक्ति तस्मिन्युज्यमाने युञ्जन्तीति सम्प्रेष्य सवितेति मन्त्रं जपति ॥ गायत्री । हे यजमान सविता सूर्यः ते तव शरीरेभ्यः शरीराणां विभक्तिव्यत्ययः पृथिव्यां लोकं स्थानमिच्छतु सवितृकृपां विना न केनापि स्थातुं शक्यते द्वितीयं वाक्यमाह तस्मै इति तस्मै सविता दत्ताय चैवाय संस्कारार्थम् उस्रियाः

सविता ते शरीरेभ्यः पृथिव्यां लोकमिच्छतु । तस्मै युज्यन्तामुस्रियाः ॥ २ ॥

वायुः पुनातु । सविता पुनातु । अग्नेर्भ्राजसा । सूर्यस्य वर्चसा । विमुच्यन्तामुस्रियाः ॥ ३ ॥

अनड्वाहो युज्यन्तां युक्ता भवन्तु ॥ २ ॥ २——२१,२,१४ । ३——१७,४,१-२ । ४——१३,८,२,६ ।

का० अनुरज्जु चतस्रः सीताः कृषति वायुः पुनात्विति प्रतिमन्त्रमुत्तरतः प्रतीचीं प्रथमामिति[3] । अध्वर्युः परितो वेष्टितां रज्जुमनुलक्षीकृत्य वायुःपुनात्विति प्रतिमन्त्रं पादेन पादेन चतस्रः सीताः अप्रदक्षिणं कृषति तत्र प्रथमां सीतामुत्तरपार्श्वे प्रतीचीं कृषति दक्षिणतः सीरयोजनपक्षेऽपि तत्सीरमप्रदक्षिणमुत्तरत आनीय प्रथममुत्तरत एव कृषति । तदपसलवि पर्याहृतोत्तरतः प्रतीचीं प्रथमां सीतां कृषति वायुः पुनात्विति सविता पुनात्विति जघनार्धेन दक्षिणामग्नेर्भ्राजसेति दक्षिणार्धेन प्राचीं सूर्यस्य वर्चसेत्यग्रेणोदीचीमिति[4] श्रुतेः ॥ चत्वारि यजूंषि लिङ्गोक्तदेवतानि । हे पृथिवि वायुः त्वां पुनातु विदारयतु सूर्यः त्वां पुनातु अग्नेर्भ्रा-

कार्याणि पश्चिमोत्तरपार्श्वयोस्तावन्ति पुरुषप्रमाणादधिकानि तथाहि पुरुषमात्रचेत्रस्यच्छया प्राचीं कृत्वा तत्प्रान्तयोः शङ्कू निखाय सार्धाष्टद्व्यङ्गुलहीनां पुरुषद्वयप्रमाणामुभयतःपाशां रज्जुं मध्यमदेशे सलक्षणां कृत्वा पूर्वापरयोः शङ्क्वोस्तस्याः पाशौ प्रतिमुच्य मध्यलक्षणेन दक्षिणत आयम्य दक्षिणः कोणः साधनीयः ततः सार्धाष्टद्व्याङ्गुलाधिकां पुरुषद्वयप्रमाणां रज्जुमुभयतःपाशां मध्यलक्षणयुतां कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य मध्यलक्षणेनोत्तरत आयम्योत्तरकोणः साध्य इति। ततः पूर्वादिकोणेषु पालाशशमीवारणाश्ममयाश्चत्वारः शङ्कवो निखेयाः। एतत्कुर्वतां निकटे कश्चिद्यजमानपुरुषस्तृणपूलकमुच्छ्रित्य धारयेत्। कर्मसमाप्तौ गृहमागत्य तं गृहे पूजयेत् प्रजावृद्ध्यै। इत्यादि बोध्यम्॥ कात्यायनः अपसलवि सृष्टया रज्ज्वा परितत्यापेतो यन्त्विति पलाशशाखया व्युदूहतीति (२१,३,२२)। अपसलवि अप्रादक्षिण्येन निष्पादितया रज्ज्वा तत्क्षेत्रं समन्तादप्रदक्षिणं संवेष्ट्या-

**अपेतो यन्तु पणयोऽसुम्ना देवपीयवः। अस्य लोकः सुतावतः॥ द्युभिरहोभिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै॥ १॥**

पेतो यन्त्विति मन्त्रेण क्षेत्रमध्यपतितं तृणपर्णादिकं पलाशशाखया कृत्वा क्षेत्राद्बहिर्निःकाशयतीति सूत्रार्थः॥ अस्याध्यायस्य पितरो देवता आदित्या ऋषयो देवा वा। आद्या गायत्री। पणन्ति परद्रव्यं व्यवहरन्तीति पणयोऽसुराः इतोऽपयन्तु अपगच्छन्तु अपवहितावेति उपसर्गस्य यन्त्विति क्रियापदेन व्यवधानम्। किंभूताः पणयः असुम्नाः सुम्नमिति सुखनाम (३,६) नास्ति सुम्नं येभ्यस्ते असुखकराः। तथा देवपीयवः पीयतिर्हिंसाकर्मा देवान्पीयन्ति हिंसन्ति ते देवपीयवः देवद्विषः। किमित्यसुराणामपगमोऽर्थ्यते तत्राह अस्य लोकः अस्य यजमानस्याग्निभूतस्यायं लोकः स्थानम् किंभूतस्यास्य सुतवतः सोमाभिषवं कृतवतः सुषाणेति सुतवान् तस्य षुञ् अभिषवे क्तवतुप्रत्ययान्तः अष्ठरश्मिमतिसुमतीत्यादिना (३,६,१) प्रातिशाख्यसूत्रेण संहितायां सुतशब्दस्याकारे दीर्घः॥ द्युभिरहोभिरिति यजुः। यमोऽस्मै यजमानायावसानं ददातु अवस्यन्त्यस्मिन्नित्यवसानं

बृहत् महत् वदेम दीयतां भुज्यतामित्यादि उच्चारयेम ॥ अथ चतस्रः कण्डिका प्रतीकोक्ताः य इमा विश्वा भुवनानि जुह्वत् (१७,१७) विश्वकर्मा विमनाः (१७,२६) यो नः पिता (१७,२७) अन्नपतेऽन्नस्य नो देहि (११,८३) इति । ता ब्रह्मयज्ञेऽध्येयाः ॥ ५८ ॥

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे । चतुस्त्रिंशोऽयमध्यायो ब्रह्मयज्ञार्थकोऽगमत् ॥ ३४ ॥

त्रयस्त्रिंशेऽध्याये सर्वमेधसम्बन्धिनः कियतो मन्त्रानुक्त्वा प्रवायुमच्छेत्यारभ्य (३३,५५) अनारभ्याधीतान्मन्त्रानुक्त्वा चतुस्त्रिंशेऽध्याये तानेव समाप्येदानीं पञ्चत्रिंशेऽध्याये पितृमेधसम्बन्धिनो मन्त्रा उच्यन्ते । स च पितृमेधो मृतस्य वर्षान्तरे भवति वर्षस्मृतौ तु विषमवर्षेषु भवति एकतारकनक्षत्रे चित्रादौ दर्शे वा ग्रीष्मे शरदि माघे भवति ॥ पितृमेधं करिष्यता द्विजेन कुम्भेऽस्थिसञ्चयः कार्यः । मृतस्य च यावन्तोऽमात्यपुत्रपौत्रास्तावन्तः कुम्भाः कर्मदिने आनेयाः कुम्भेभ्योऽधिकानि छत्राणि च । ततोऽरण्ये कुम्भं कृतमस्थिसञ्चयनं ग्रामसमीपे समानीय शय्यायां कुम्भं संस्थाप्याहतवस्त्रैकदेशेन संवेष्ट्य लोहमयवादित्रेषु वाद्यमानेषु वीणायां च वाद्यमानायां मृतस्य पुत्रपौत्रा उत्तरीयैर्व्यजनैश्चास्थिकुम्भं विजयन्तस्त्रिस्त्रिः प्रदक्षिणं परियन्ति । स्त्रियोऽपीति केचित् । रात्रेः पूर्वमध्यापरभागेषु तद्दिने बह्वन्नदानं कुर्वन्ति नृत्यगीतवादित्राणि च कारयन्ति अस्थिकुम्भायान्नमुपहरन्ति च । तत उपप्रातरस्थिकुम्भसहिताः पूर्वोक्तान्कुम्भान् छत्राणि चादाय ग्रामाद्दक्षिणस्यां बहिर्गच्छन्त्यध्वर्युयजमानामात्याः । श्मशानान्तं कर्म कुर्वतो यथा रविरुदयेत्तथा रात्रावारब्धव्यम् तत्र वने गत्वा ग्रामान्मार्गादश्वत्थतिल्वकहरिद्रुस्फूर्जकविभीतकश्लेष्मान्तककोविदारादिभ्यश्च दूरे अन्यद्वृक्षगुल्मादिवृते ऊषरे वोदक्प्रवणे दक्षिणप्रवणे समे वा सुखकारिणि रम्ये जलादुदकाद्वा पूर्वभागे उत्तरभागे वा वर्तमाने गर्तवति वीरणवल्वजवति प्रदेशे श्मशानार्थं दिक्कोणं पुरुषप्रमाणं क्षेत्रं मिमीते । पैतृक्यां द्विपुरुषं समचतुरस्रं कृत्वा करणीमध्येषु शङ्कवः स समाधिरिति शुल्बोक्तविधिना (७,१) तच्चतुरस्रमुत्तरतः पश्चाच्च पृथु भवति । तत्र साधनप्रकारः पूर्वदक्षिणपार्श्वयोर्नवाङ्गुलानि स्वत्रयोदशांशेनाङ्गुलचतुर्थभागसहितानि पुरुषप्रमाणमध्ये न्यूनानि

षेण प्रीतो भव ॥ देवान्कामयन्ते देवयन्ति ततः शत्रुप्रत्ययः सुप आत्मनः क्यच् न च्छन्दस्यपुत्रस्येति निषेधात्क्यचि चेतीत्वाभावः अश्वाघस्यादिति अश्वाघयोरेवाकारविधानादकृत्सार्वधातुकयोरिति दीर्घोऽपि न स्यात्। ईमहे याचतिकर्मसु पठितः[1] ई गतौ दिवादित्वाद्दागतस्य श्यनश्छान्दसो लोपः। सुदानवः दाभाभ्यां नुः प्राशुः आशुशब्दो दीर्घश्छान्दसः। अथा संहितायां चाचोऽतस्तिङ इति दीर्घः ॥ ५६ ॥ १—निघ० ३, १९,१ ।

ब्रह्मणस्पतिः नूनं निश्चितमुक्थ्यं शस्त्रयोग्यं मन्त्रं प्रवदति प्रकर्षेणोच्चारयति यस्मिन्मन्त्रे इन्द्रः वरुणः मित्रः अर्यमा

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्। यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५७ ॥

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व। विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥

य इमा विश्वा। विश्वकर्मा। यो नः पिता। अन्नपतेऽन्नस्य नो देहि ॥ ५८ ॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

अन्ये च देवाः ओकांसि निवासान् चक्रिरे कृतवन्तः। सर्वदेवाधारभूतं शस्त्रं पठनीयं मन्त्रवदित्यर्थः ॥ ५७ ॥

हे ब्रह्मणस्पते त्वं यतोऽस्य जगतो यन्ता नियन्ता अतः प्रार्थ्यते सूक्तस्यास्मदुक्तस्य साधुवचनस्य कर्मणि षष्ठी सूक्तम् बोधि बुध्यस्व अस्मदुक्ता स्तुतिर्भवता ज्ञायतामित्यर्थः। तनयं च अस्मदपत्यानि जिन्व प्रीणीहि जिन्वतिः प्रीतिकर्मा। देवा यत् भद्रं कल्याणमवन्ति पालयन्ति तत् विश्वं सर्वं भद्रमस्माकमस्त्विति शेषः। किञ्च सुवीराः कल्याणपुत्राः सन्तो वयं विदथे यज्ञे

मामा गिरो नोऽस्माकं गिरः शृणोतु कः मित्रः अर्यमा भगश्च। तुविजातो बहुजातः त्वष्टा वातो वा स हि बहुधः प्रजायते। वरुणः दक्षः अंशश्च। एते सूर्यविशेषाः ॥ ५४ ॥

अध्यात्मवादिनी जगती। सप्त ऋषयः प्राणाः त्वक्चक्षुःश्रवणरसनाघ्राणमनोबुद्धिलक्षणाः शरीरे प्रतिहिताः व्यवस्थिताः ते एव सप्त सदं सदामात्मप्रमादं सावधानं यथा तथा शरीरं रक्षन्ति। ते सप्त स्वपतो नरस्य लोकमात्मानमीयुः प्राप्नुवन्ति लोकशब्देन विज्ञानात्मा हृदयाकाशप्रतिष्ठ उच्यते। किम्भूताः सप्त आपः आप्नुवन्ति व्याप्नुवन्ति देहमित्यापः व्यापनाः।

सप्तऋषयःप्रतिहिताःशरीरेसप्तरक्षन्तिसदमप्रमादम्। सप्तापःस्वपतोलोकमीयुस्तत्र

जागृतोअस्वप्नजौसत्त्रसदौचदेवौ ॥ ५५ ॥

उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे। उपप्रयन्तुमरुतःसुदानवइन्द्रप्राशूर्भवासचा ॥ ५६ ॥

तत्र तस्यामृषीणां लोकगमनावस्थायां देवौ दीप्यमानौ प्राणापानौ जागृतः जागरणं कुर्वाते कीदृशौ अस्वप्नजौ न स्वप्नो निद्रा जायते ययोस्तौ अस्वप्नजौ। तथा सत्त्रसदौ सतां जीवानां त्राणं रक्षणं सत्त्रम् तत्र सीदतः तौ सत्त्रसदौ जीवितदातारावित्यर्थः ॥ ५५ ॥

ऋचो ब्रह्मणस्पतिर्देवतः हे बृहती तृतीया त्रिष्टुप। हे ब्रह्मणो देवस्य पते पालक उत्तिष्ठ ऊर्ध्वः आरब्धकार्यो भव। यतो वयं देवयन्तो देवान्कामयमानाः त्वा त्वामीमहे याचामहे आगच्छेति। मरुतः भवन्तमागच्छन्तमुप समीपे प्रयन्तु आगच्छन्तु किम्भूताः मरुतः सुदानवः शोभनं ददति ते सुदानवः। हे इन्द्र त्वमपि सचा सह गमनाय प्राशूः प्रक-

दाक्षायणाः दक्षस्यापत्यानि नडादित्वात्फक् दक्षवंशोत्पन्ना ब्राह्मणा यत् हिरण्यं शतानीकाय राज्ञे अबध्नन् बबन्धुः शतं बहूनि अनीकानि सैन्यानि यस्य सः शतानीकस्तस्मै । किम्भूताः दाक्षायणाः सुमनस्यमानाः मनसि शोभनं ध्यायन्तः शोभनं मनः कुर्वन्ते सुमनस्यन्ते सुमनस्यन्ते सुमनस्यमानाः । तत् हिरण्यं मे मयि आबध्नामि किमर्थं शतशारदाय शतं शरदो जीवनाय । यथा येन प्रकारेण हिरण्यबन्धनाख्येन अहमायुष्मान्दीर्घजीवी जरदष्टिश्च आसं भूयासम् तथा आबध्नामि । जरत् जरामश्नुते व्याप्नोति जरदष्टिः यद्वा जरन्ती जरां प्राप्ता अष्टिः शरीरं यस्य स जरदष्टिः ॥ ५२ ॥

बहुदेवत्या त्रिष्टुप् । उत अपि च अहिर्बुध्न्यः रुद्रविशेषः शृणोतु नः अस्माकं वचांसीति शेषः अज एकपात् रुद्रः प्राणो वा शृणोतु पृथिवी च शृणोतु समुद्रश्च शृणोतु विश्वे देवाश्च शृण्वन्तु । श्रुत्वा च ते अहिर्बुध्न्यादयः अवन्तु पालयन्तु अस्मान् । किम्भूतास्ते ऋतावृधः सत्यवृधो यज्ञवृधो वा । हुवानाः आहूयमानाः । मन्त्राः मन्त्रैरिति विभक्तिव्यत्ययः स्तुताः । कविशस्ताः मेधाविभिः पूजिताः ॥ ५३ ॥

॥ अ० ३४ मं० ५३ ॥ उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः । विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥ ५३ ॥ ॥ ऋ० ७।३५।१३ ॥

॥ मं० ५४ ॥ इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि । शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥ ५४ ॥ ॥ ऋ० २।२७।१ ॥

आदित्यदेवत्या त्रिष्टुप् । इमा गिरो वाचः जुह्वा स्रुचा कृत्वा आदित्येभ्यो जुहोमि स्तुतिलक्षणा वाणीर्जुहूरूपया स्रुचादित्येभ्यः समर्पयामीत्यर्थः । किम्भूता गिरः घृतस्नूः घृतं स्नुवन्ति स्रवन्ति ताः घृतस्नुवः ता घृतस्नूः तुगभावश्छान्दसः घृतप्रसारिणीर्घृतहोमसहचरिता वा । किम्भूतेभ्यः आदित्येभ्यः सनात् चिरकालं राजभ्यः दीप्यमानेभ्यः । ताः स्रुचाहुय-

त्रिषः उष्णिककुब्मध्येत्रिष्टुभः दक्षदृष्टा। हिरण्यस्तुतिः। इदं हिरण्यं कनकं जैत्राय जयाय माम् मामेवाविशतात् आविशतु मयि तिष्ठतु। कीदृशमायुष्यमायुषे हितम् वर्चस्यं वर्चसे तेजसे हितम् रायो धनस्य पोषं पोषयितृ वर्धकम् औद्भिदम् उद्भिनत्तीति उद्भित् उद्भिदेवौद्भिदमुत्कृष्टं धनस्य स्वर्गस्य वा प्रकाशकम् वर्चस्वत् अन्नसंयुक्तम् ॥ ५० ॥

रक्षांसि पिशाचाश्च तत् हिरण्यं न तरन्ति न हिंसन्ति हि यस्मात् एतत् हिरण्यं देवानां प्रथमजमोजः प्रथमोत्पन्न

आयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदम्। इदꣳहिरण्यंवर्चस्वज्जैत्रायाविशतादुमाम् ॥ ५० ॥

नतद्रक्षाꣳसिनपिशाचास्तरन्तिदेवानामोजःप्रथमजꣳह्येतत्। योबिभर्तिदाक्षायणꣳ

हिरण्यꣳसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ ५१ ॥

यदाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः। तन्मआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् ५२

देवानां तेज एवेदम्। अत एव यो हिरण्यं दाक्षायणं बिभर्ति अलङ्कारत्वेन धारयति दाक्षायणशब्दोऽलङ्कारार्थः स देवेषु देवलोकेषु दीर्घमायुः कृणुते कुरुते देवलोके चिरं वसतीत्यर्थः स च मनुष्येषु मनुष्यलोकेषु स्वमायुर्दीर्घं कृणुते मनुष्यायुरतिक्रम्य जीवति ॥ ५१ ॥

मारुती त्रिष्टुप्। हे मरुतः कारोः कर्तुर्यजमानस्य एषः स्तोमः इयञ्च गीः सत्या च प्रिया च वो युष्मभ्यं युष्मदर्थं वर्तत इति शेषः। किम्भूतस्य कारोः मान्दार्यस्य मां ममेति स्वस्वामिसम्बन्धं दारयति इति मान्दार्यः तस्य वीतरागस्येत्यर्थः। यद्वा मां दारयतीत्येवं यः शत्रूणां प्रत्ययमादधाति मान्दार्यः। यद्वा मन्दारः कल्पवृक्षः तत्तुल्यो मान्दार्यः तस्य अत्र कामपूरकस्येत्यर्थः। मान्यस्य मानार्हस्य। किञ्च हे मरुतः यूयमिषा अन्नेन निमित्तेन आयासीष्ट आगच्छत किमर्थं वयां वयसाम् आमि टिलोप आर्षः बाल्ययौवनस्थाविराणां वयसां सम्बन्धिन्यै तन्वे शरीराय सर्वदा शरीरस्थित्यर्थः अस्मच्छरीरं दृढीकर्तुमिति भावः। किञ्च इषमन्नं वृजनं बलं च वयं विद्याम लभेमहि किम्भूतमिषं वृजनं च जीरदानुं जीवयतीति जीरदानुस्तम् जीवेरौणादिको रदानु प्रत्ययः लोपो व्योर्वलीति वलोपः जीवितदातृ बलमन्नं च वयं प्राप्नुयामेति प्रार्थना॥ ४८॥

सहस्तोमाः सहच्छन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः। पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन्॥ ४९॥

ऋषिसृष्टिप्रतिपादिका त्रिष्टुप्। दैव्याः सप्त ऋषयः देवस्य प्रजापतेः इमे दैव्याः प्रजापतिप्राणाभिमानिनः सप्त ऋषयः भरद्वाजकश्यपगोतमात्रिवसिष्ठविश्वामित्रजमदग्निसञ्ज्ञाः। अन्वालेभिरे सृष्टवन्तः सृष्टियज्ञमिति शेषः। किं कृत्वा पूर्वेषां पन्थां पन्थानमनुदृश्य अधस्तनकल्पोत्पन्नानामेवमिताधिकाराणां मार्गं विलोक्य पूर्वकल्पोत्पन्नैर्ऋषिभिर्यथा सृष्टम् तथा सृष्टवन्त इत्यर्थः सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्युक्तेः। कथमिव रथ्यो न रश्मीन् नकार उपमार्थः रथे साधुः रथ्यः रथीर्यथा इष्टदेशप्राप्त्यर्थं प्रथमं रश्मीन्प्रग्रहानालभते स्पृशति सृजति वा तथा तेऽपि सृष्टियज्ञं सृष्टवन्तः। किम्भूता ऋषयः सहस्तोमाः स्तोमसहिताः। सहच्छन्दसः छन्दोभिर्गायत्र्यादिभिः सहिताः। आवृतः अत्रापि सहशब्दाध्याहारः आवृच्छब्देन कर्मोच्यते सहावृतः कर्मसहिताः श्रद्धासत्यप्रधानानां कर्मणामनुष्ठातारः। सहप्रमाः प्रमाणं प्रमा तत्सहिताः शब्दप्रमाणपरीक्षणतत्पराः। धीराः धीमन्तः ४९

यतो वयं तान्सपत्नान् इन्द्राग्निभ्यां कृत्वा अवबाधामहे इन्द्राग्निबलेन नाशयामः। किञ्च वसवोऽष्टौ रुद्रा एकादश आदित्या द्वादश एते मा मामेतादृशमक्रन् कुर्वन्तु। कीदृशमुपरिस्पृशम् उपरि स्पृशतीति उपरिस्पृक् तमुच्चस्थानस्थितम्। उग्रमुत्कृष्टम्। चेत्तारं ज्ञातारं श्रेयस्य। अधिराजम् अधिकश्चासौ राजा च अधिराजस्तम् अधिपतिमीश्वरं कुर्वन्त्वित्यर्थः॥ ४६॥

जगती अश्विदेवत्या। हे नासत्या नासत्यौ हे अश्विनौ त्रिभिः एकादशैः त्रिगुणैरेकादशभिः त्रयस्त्रिंशत्संख्याकैः देवेभिः देवैः इह स्थाने मधुपेयं सोमपानं प्रति आयातमागच्छतम् मधुः सोमस्तस्य पेयं पानम्। किञ्च आयुः प्रतारि-

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातम्मधुपेयमश्विना। प्रायुस्तारिष्टन्नी रपाꣳसि मृक्षतꣳ सेधतन्द्वेषो भवतꣳ सचाभुवा॥ ४७॥

एष वस्तोमो मरुत इयङ्गीर्मान्दार्यस्य मान्यस्य कारोः। एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनञ्जीरदानुम्॥ ४८॥

ष्टम् तरतिर्वृद्ध्यर्थः प्रवर्धयतम्। रपांसि पापानि निर्मृक्षतं निःशेषं शोधयतम् नाशयतमित्यर्थः। द्वेषः दौर्भाग्यं सेधतं षिधु गत्याम् गमयतं नाशयतम्। सचाभुवा भवतम् सचा इत्यव्ययं सहार्थे सचा सह भवतस्तौ सचाभुवौ क्षिप्कार्येषु संयुक्तौ भवतम्। अष्टौ वसव इत्यादिना त्रयस्त्रिंशद्देवा गणिताः। तारिष्टम् तरतेर्लुङि मध्यमद्विवचनम् 'बहुलं छन्दस्यमाङ्योगेऽपीति अडभावः। मृक्षतम् मृजूष् शुद्धौ लेटोऽडाटौ सिब्बहुलं लेटीति सिप् तस्थस्थमिपामिति व्यत्ययेन थसः तमादेशः॥ ४७॥

धर्माणि पुण्यानि कर्माणि धारयन्। धर्ममस्त्रियाम्॥ ४३॥

तस्य विष्णोः यज्ञस्य यत् परमं पदं ब्रह्मलक्षणम् तद्विप्रासः विप्राः ब्राह्मणाः समिन्धते णिचो लोपः समिन्धयन्ति दीपयन्ति उपासते इत्यर्थः। किंभूताः विप्राः विपन्यवः विगतः पन्युः संसारव्यवहारो येभ्यः निष्कामाः। जागृवांसः जागरणशीलाः अप्रमत्ताः ज्ञानकर्मसु समुच्चयकारिण इत्यर्थः॥ ४४॥

जगती द्यावापृथिवीदेवत्या। द्यावापृथिवी द्यावापृथिव्यौ वरुणस्यादित्यस्य धर्मणा धारणेन धरणशक्त्या विष्कभिते

तद्विप्रासो विपन्यवो जागृवाᳬंसः समिन्धते। विष्णोर्यत्परमम्पदम्॥ ४४॥

|| ऋ० ६।७०।१ || घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा। द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा॥४५॥

|| माध्यं० श्रौ० || ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान्। वसवो रुद्रा आदित्या उपरिस्पृशम्मोग्रञ्चेत्तारमधिराजमक्रन्॥४६॥

स्तभिते स्कभ्नोतिर्दृढीकरणार्थः वरुणेन स्वशक्त्या दृढीकृते इत्यर्थः। किंभूते ते घृतवती उदकवत्यौ घृतमित्युदकनाम[1] भुवनानां भूतजातानामभिश्रिया अभिश्रियौ आश्रयणीये कर्मणि क्विप् विभक्तेराकारः। उर्वी उर्व्यौ विस्तीर्णे पृथ्वी पृथ्व्यौ पृथुले आयामविस्ताराभ्यां महत्त्वं विशेषणद्वयेनोक्तम्। मधुदुघे मधु उदकं तस्य दोग्ध्र्यौ। सुपेशसा सुरूपे। अजरे जरारहिते। भूरिरेतसा भूरि रेतो ययोस्ते भूरिरेतसौ बहुरेतस्के सर्वभूतानां हि रेतांसि ताभ्यामेवोत्पद्यन्ते॥ ४५॥ १—निघ० १, १२, १०।

|| य० || जगती लिङ्गोक्तदेवता। ये नोऽस्माकं सपत्नाः शत्रवः ते अपभवन्तु अपगतवीर्या निरुद्यमा भवन्तु पराभवं यान्त्वित्यर्थः।

दिनानि गणयति। राजा चित् राजापि यं भगं भक्षि इत्याह तदुदये हि राज्ञां व्यवहारदर्शनादिना सर्वेष्टसिद्धिः॥ भक्षि भजतेः अपि लुप्ते लटि मध्यमे रूपम् ॥ ३५ ॥

हे भग हे प्रणेतः प्रकर्षेण नयति प्रापयति धनमिति प्रणेता तस्य सम्बोधने हे प्रणेतः। आदरार्थं पुनः सम्बोधनम् हे भग हे सत्यराधः सत्यमनश्वरं राधो धनं यस्य स सत्यराधाः तत्सम्बुद्धौ हे सत्यराधः हे भग त्वं ददत् धनं प्रयच्छन् सन् नोऽस्माकमिमां धियं प्रज्ञां कर्म वा उदव उन्नमय यथा सूक्ष्मार्थान्पश्यामस्तथा कुर्विति भावः। किञ्च हे भग नोऽस्मान्

भगप्रणेतर्भगसत्यराधोभगेमांधियमुदवाददन्नः। भगप्रनोजनयगोभिरश्वैर्भगप्रनृभिर्नृवन्तःस्याम ॥ ३६ ॥

उतेदानींभगवन्तःस्यामोतप्रपित्वउतमध्येअह्नाम्। उतोदितामघवन्त्सूर्यस्यवयन्देवानांसुमतौस्याम ॥ ३७ ॥

भगएवभगवाँ२॥ऽअस्तुदेवास्तेनवयम्भगवन्तःस्याम। तन्त्वाभगसर्वइज्जोहवीतिसनोभगपुरएताभवेह ॥ ३८ ॥

गोभिः अश्वैः प्रजनय प्रवर्धय गा अश्वांश्च बह्वन्देहीत्यर्थः। हे भग वयं नृभिः पुत्रादिभिः नृवन्तः मनुष्यवन्तः प्रकर्षेण स्याम भवेम ॥ ३६ ॥

हे मघवन् धनवन् रवे उत अपि च वयमिदानीं भगवन्तः धनवन्तो ज्ञानवन्तो वा स्याम भवेम। उतापि च सूर्यस्य प्रपित्वे प्रपतने अस्तमये भगवन्तः स्याम। उत अह्नां मध्ये मध्यन्दिने भगवन्तः स्याम उत सूर्यस्य उदिता उदितौ उदयसमये भगवन्तः स्याम। किं बहुना सर्वदास्माकं धनवत्तास्त्वित्यर्थः। किञ्च देवानां सुमतौ कल्याण्यां बुद्धौ वयं स्याम देवा

उषोदेवत्या पुरोष्णिक्। हे उषः हे वाजिनीवति हे अन्नवति अस्मभ्यं तत् प्रसिद्धं चित्रं चायनीयमाश्चर्यकारि महनीयं धनमाभर आहर देहि येन धनेन वयं तोकं पुत्रं तनयं पौत्रं च सर्वं सन्तानवर्गं धामहे दधाहे पुष्णीमः॥ धामहे दधातेः शपो लुकि रूपम्॥ ३३ ॥

जगती बहुदेवत्या। प्रातःशब्दो वीप्सावचनः। वयं प्रातः पुनः-पुनः एतान्देवान्हवामहे आह्वयाम इति प्रत्येकं सम्बध्यते। कान् अग्निम् इन्द्रम् मित्रावरुणौ अश्विनौ भगम् पूषणम् ब्रह्मणस्पतिम् उत अपि च रुद्रं हुवेम आह्वयाम॥ हवामहे हुवेम ह्वयतेः सम्प्रसारणे रूपद्वयम् ॥ ३४ ॥

प्रातरग्निम्प्रातरिन्द्रꣳहवामहेप्रातर्मित्रावरुणाप्रातरश्विना। प्रातर्भगम्पूषणम्ब्रह्मणस्पतिम्प्रातस्सोममुतरुद्रꣳहुवेम ॥ ३४ ॥

प्रातर्जितम्भगमुग्रꣳहुवेमवयम्पुत्रमदितेर्योविधर्ता। आध्रश्चिद्यम्मन्यमानस्तुरश्चिद्राजाचिद्यम्भगम्भक्षीत्याह ॥३५॥

पञ्च भगदेवत्यास्त्रिष्टुभः। वयं तं भगमादित्यं हुवेम आह्वयाम। किम्भूतम् प्रातर्जितं प्रातर्जयतीति प्रातर्जित् तम् प्रातर्जयनशीलम्। उग्रमुत्कृष्टमुद्गूर्णदानं वा। अदितेः पुत्रं तनयम्। तं कम् यो विधर्ता जगतो धारयिता। यं च आध्रश्चित् चिच्छब्दोऽप्यर्थे न ध्यायति ध्यै तृप्तौ न तृप्यति स अध्रः नञो दीर्घश्छान्दसः यद्वा आ समन्तात् ध्रः आध्रः यद्वा अध्र एवाध्रः स्वार्थे तद्धितः आध्रः अदनः बुभुक्षितो दरिद्रो वापि यं भगं भक्षि भजस्व अर्थादुदयम् इत्याह किं कुर्वन् मन्यमानः पूजयन् स्वार्थसिद्धये मन्यतिरर्चतिकर्मा स हि सूर्योदये भिक्षादिना किञ्चिल्लभते तत उदयं वाञ्छति। तुरश्चित् आतुरोऽपि यं भगं मन्यमानो भक्षि उदयं भजस्वेत्याह दिवसे तस्य सुखोदयात् रोगिणो रात्रिः कष्टेन याति यद्वा तुरो यमः स हि मारणाय

हे अश्विना अश्विनौ द्युभिः दिवसैः अक्तुभिः रात्रिभिः सप्तम्यर्थे तृतीया दिवसेषु रात्रिषु च अहोरात्रम् अस्मान्परिपातं सर्वतो रक्षतम्। कैः सौभगेभिः सौभगैः भग इति धननाम। शोभनैः धनैः किम्भूतैः अरिष्टेभिः अनुपहिंसितैः अखण्डितैधनैरस्मान् रक्षतमित्यर्थः। किञ्च मित्रः वरुणः अदितिः सिन्धुः समुद्रः उतापि च द्यौः एते नोऽस्माकं तत् भवत्कृतं रक्षणं मामहन्तां पूजयन्तामनुमन्यन्ताम् इत्यर्थः॥ द्युरित्यह्नो नाम अक्तुरिति रात्रेः। मामहन्ताम् मह पूजायाम् बहुलं छन्दसीति शपः श्लुः श्लाविति द्वित्वम् तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः॥ ३०॥ १——निघ०२,१०,१०।

व्याख्याता(२३,४३)॥ ३१॥

आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च। हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन्॥ ३१॥

आरात्रिपार्थिवꣳरजःपितुरप्रायिधामभिः। दिवःसदाꣳसिबृहतीवितिष्ठसआत्वेषंवर्ततेतमः॥ ३२॥

उपस्त्वचित्रमाभराऽस्मभ्यंवाजिनीवति। येनतोकञ्चतनयञ्चधामहे॥ ३३॥

रात्रिदेवत्या पथ्याबृहती। हे रात्रि यया त्वया पार्थिवं रजः पृथिवीसम्बन्धिलोकः पितुः मध्यमलोकस्य धामभिः स्थानैः सह आ अप्रायि समन्तात्पूर्यते। या च त्वं दिवो द्युलोकस्य सदांसि स्थानानि बृहती महती सती वितिष्ठसे आक्रमसे व्याप्नोषि। तस्यास्तव तमः आवर्तते तथापि प्रवर्तते किम्भूतं तमः त्वेषं दीप्तं महाप्राग्भारमित्यर्थः। रजःशब्दो लोकवचनः। अप्रायि प्रा पूरणे कर्मणि लुङि चिणि रूपम्॥ ३२॥

अश्विन्यस्तिस्रः एका गायत्री द्वे अनुष्टुभौ। हे अश्विनौ उभा उभौ द्वावपि युवां पिबतम् सोममिति शेषः। उभा द्वौ युवां नोऽस्मभ्यं शर्म शरणं सुखं वा यच्छतम् काभिः सह अविद्रियाभिः अविदीर्णाभिः अखण्डिताभिः ऊतिभिः अवनैः पालनैः सह। सुखं दत्तं पालयतं चेत्यर्थः॥ उभा अश्विना विभक्तेराकारः। विदीर्यन्तीति विद्रियाः दृ विदारे औणादिक इयक्प्रत्ययः॥२८॥ हे अश्विना अश्विनौ हे दस्रा दर्शनीयौ हे वृषणा वर्षितारौ सेक्तारौ युवानौ अस्मे अस्माकं वाचम् अप्रस्वतीं कर्म्मवतीं युवां कृतं कुरुतम् तथा नोऽस्माकं मनीषां मनस इच्छामप्रस्वतीमेव कुरुतम्। मनसा वचसा च यच्च कुर्म्मस्तथा कुरुतमित्यर्थः।

उभापिबतमश्विनोभानःशर्मयच्छतम्। अविद्रियाभिरूतिभिः ॥ २८ ॥

अप्नस्वतीमश्विनावाचमस्मेकृतन्नोदस्राद्वृषणामनीषाम्। अद्यूत्येवसेनिह्वयेवांवृधेचनोभवतंवाजसातौ ॥ २९ ॥

द्युभिरक्तुभिःपरिपातमस्मानरिष्टेभिरश्विनासौभगेभिः। तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥३०॥

यतो द्व वां युवां निह्वये आह्वयामि किं निमित्तम् अद्यूत्ये सन्मार्गागते अवसे अन्ने अन्ननिमित्तम् तद्दानार्थमित्यर्थः द्यूतादागतं द्यूते भवं वा द्यूत्यम् न द्यूत्यमद्यूत्यम् द्यूतादागतं कर्म्मण्यं न भवतीत्येवमुच्यते द्यूतमन्येषामप्यन्याय्यधनागमानामुपलक्षणम्। किञ्च वाजसातौ वाजानामन्नानां सातिः सम्भजनं यस्मिन् स वाजसातिः तस्मिन्यज्ञे नोऽस्माकं वृधे वृद्ध्यै भवतम्॥ अस्मे विभक्तेः शे-आदेशः। कृतम् करोतेः बहुलं छन्दसीति शपि लुप्ते लोण्मध्यमद्विवचने रूपम्। वृषणा वृषणौ वा सपूर्वस्य निगम इति उपधादीर्घाभावः। वृधे वर्धनं वृत् सम्पदादित्वाद्भावे क्विप्॥ २९॥

उभे द्यावापृथिवी षष्ठ्यर्थे द्वितीया। अन्तर्योगे वा। ईयते ईङ् गतौ दिवादिः॥ २५॥

यो देवो रविः रक्षसो राक्षसान् यातुधानान् असुखकारांश्च अपसेधन् अपगमयन्सन् अस्थात् उदस्थात् उदेति स देवः अर्वाङ् अर्वागञ्चनः अस्मदभिमुखः यातु आयात्वित्यर्थः। कीदृशो देवः हिरण्यहस्तः हिरण्यं दानार्थं हस्तं यस्य स तथोक्तः रूपेण वा स्तुतिः। असुरः असून्प्राणान्राति ददातीत्यसुरः। सुनीथः नीथा स्तुतिः कल्याणस्तुतिः। सुमृडीकः साधु सुखयिता। स्ववान्धनवान्। प्रतिदोषम् प्रतिजनं यो दोषः प्रतिदोषः तम् श्रुतिस्मृतिविहितधर्मपराङ्मुखानां यावन्तो दोषास्तावतः गृणानः उच्चारयन् उपभोगार्थमित्यभिप्रायः। स्ववान् यातु इत्यत्र दीर्घादटि समानपाद इति नस्य रुत्वे भोभगोऽघो

**हिरण्यहस्तो असुरः सुनीथः सुमृडीकः स्ववाँ यात्वर्वाङ्। अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः॥२६॥**

**ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे। तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव॥२७॥**

अपूर्वस्य योऽशीति तस्य दीर्घादिशि हलि सर्वेषामिति तस्य लोपः। रक्षस् शब्दस्य व्यत्ययेनाक्लीवत्वम्॥ २६॥

हे सवितः हे देव अन्याः पन्थानो मार्गाः अन्तरिक्षे सुकृताः धात्रा वर्तन्ते। कीदृशास्ते पूर्व्यासः पूर्वेषु कालेषु भवाः पूर्व्याः। अरेणवः नास्ति रेणुर्येषु अपांसुलाः। तैर्भिः तैः पथिभिः मार्गैः नोऽस्मान् अद्य नयेति शेषः। च पुनः गच्छतो नोऽस्मान् रक्ष पालय। अधिब्रूहि च अधि अङ्गीकृत्य ब्रूहि एते मदीया इति यद्वा अधिब्रूहि उपदिशास्माकं यद्धितं पथ्यं तत् यद्वा अधि अधिकान्वद एते महार्याशिका दातार इत्यादि। किम्भूतैः पथिभिः सुगेभिः सुगैः सुखेन गम्यते येषु सुगाः तैः अन्नपानप्रभृतैरित्यर्थः अधिकरणे गच्छतेर्डप्रत्ययः॥ पूर्व्यासः पूर्वैः कृताः पूर्वैः कृतमिनियौ चेति यप्रत्ययः॥ २७॥

चतस्रः सावित्र्यः द्वितीया जगती त्रिष्टुभोऽन्याः हिरण्यस्तूपदृष्टाः। स सविता देवः आगात् आगच्छतु इणो गा लुङीति इणो गादेशः। किं कुर्वन् दाशुषे हवींषि दत्तवते यजमानाय वार्याणि वरणीयानि रत्ना रत्नानि दधत् ददत् स्थापयन्वा। कीदृशः हिरण्याक्षः हिरण्यमिव कान्तियुक्ते अक्षिणी यस्य स हिरण्याक्षः अमृतदृष्टिर्वा। स कः यः सविता पृथिव्याः सम्बन्धिनीः अष्टौ ककुभो दिशः व्यख्यत् प्रकाशितवान्। यश्च त्री त्रीणि धन्व धन्वानि लोकान् व्यख्यत्। धन्वेत्यन्तरिक्षनाम[1] तेन तदुपलक्षितावितरावपि लोकौ लक्ष्येते क्षियन्ति गच्छन्तीति वा। यश्च योजना योजनानि योजनगव्यूतिक्रोशादीनध्वपरिमाणविशेषान् व्यख्यत्। यश्च सप्त सिन्धून् समुद्रान् क्षीरोदादीन् व्यख्यत्। उपलक्षणमेतत् सर्वं जगत्प्रकाशकः

हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते। अपामीवां बाधते वेति सूर्यमभि

कृष्णेन रजसा द्यामृणोति ॥ २५ ॥

सविता रत्नानि ददान आयात्वित्यर्थः॥ अख्यत् ख्या प्रकथने अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङ्। अतोऽत्र धातूनामनेकार्थत्वादत्र प्रकाशनार्थो ग्राह्यः। त्री योजना सुपां सुलुगित्यादिना पूर्वसवर्णदीर्घो विभक्तेः। धन्व सुपो लुक्। रत्ना सुप आकारः। दाशुषे दाश्वान्साह्वानिति निपातः। वार्याणि ऋहलोर्ण्यदिति वृणोतेर्ण्यत् ॥ २४ ॥

१—निघ० १, ३, १।

सविता प्रसविता सूर्यं सूर्यः विभक्तिव्यत्ययः उभे उभयोः द्यावापृथिवी द्यावापृथिव्योः अन्तमध्ये ईयते आगच्छति यदा तदा अमीवां व्याधिमपबाधते अन्धकारलक्षणरोगं निवर्तयति। अथ यदा वेति अस्तमयसमये गच्छति तदा कृष्णेन रजसा अन्धकारलक्षणेन द्यां द्युलोकमभि ऋणोति अभिव्याप्नोति। कीदृशः सूर्यः हिरण्यपाणिः सुवर्णपाणिः। विचर्षणिः विविधं द्रष्टा कृताकृतप्रत्यवेक्षकः।

छन्दसीति शपः श्लुः द्वित्वम् इतश्च लोपः परस्मैपदेष्विति तिप इलोपः लेटोऽडाटावित्यडागमः ॥ २१ ॥

हे सोम त्वमिमाः विश्वाः सर्वाः ओषधीः अपो जलानि गाः धेनूः अजनयः जनितवानसि। त्वमुरु विस्तीर्णमन्तरिक्ष मातनय विस्तारितवानसि त्वं च ज्योतिषा तेजसा तमोऽन्धकारं विववर्थ विवृणोषि आदित्यात्मना सर्वं तमोऽपनयसीति सर्वात्मा त्वमित्यर्थः बभूथाततन्थ जगृम्भ ववर्थेति निगम इति निपातः ॥ २२ ॥

हे देव सोम हे सहसावन् बलवन् देवेन मनसा देवसम्बन्धिना मनसा सह रायो धनस्य भागं नोऽस्मभ्यमभियुध्य युध्यतिर्गतिकर्मा अन्तर्भावितण्यर्थः अभिगमय देहीत्यर्थः। एवं दानप्रवृत्तं त्वां कश्चित् मा आतनत् त्वा त्वां मा आतनोतु

देवेननोमनसादेवसोमरायोभागꣳसहसावन्नभियुध्य। मात्वातनदीशिषेवीर्यस्योभयेभ्यःप्रचिकित्सागविष्टौ॥२३॥

अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिन्धून्। हिरण्याक्षःसवितादेवआगाद्दधद्रत्नादाशुषेवार्याणि॥२४॥

मा प्रतिबध्नातु तनोतिः प्रतिबन्धार्थः। कुतस्त्वमेव मुच्यस इति चेत् यतस्त्वं वीर्यस्य ईशिषे वीरकर्मण ईश्वरो भवसि अधीगर्थदयेशामिति कर्मणि षष्ठी। किञ्च गविष्टौ गोः स्वर्गस्य इष्टौ इच्छायां स्वर्गैषणायां विषयभूतायां सत्यामुभयेभ्यः प्रचिकित्स उभयलोकप्राप्त्यर्थं चिकित्सां कुरु व्याध्यपगमं कुरु उभयलोकप्रतिबन्धकं विघ्नं निवर्तयेत्यर्थः। दैवं मनः प्राप्य लब्धधना अरोगाश्च सत्कर्म कुर्वाणा यथा स्वर्गं यास्यामस्तथा कुर्विति वाक्यार्थः॥ देवेन देवानामिदं देवम् तद्धितप्रत्यय-लोपः। सहसावन् प्रथमार्थे तृतीया सहसा सहो बलमस्यास्तीति सहसावान् अलुक्। तनत् तनोतेः परस्य लेटोऽडागम इलोपश्च चिकित्स गुप्तिज्किद्भ्यः सन् अन्येषामपि दृश्यत इति दीर्घः ॥ २३ ॥

चतस्रः सोमदेवत्यास्त्रिष्टुभः। हे सोम त्वां जयन्तमनुगतैर्वर्तमानमनु वयं मदेम हृष्टाः स्याम। किम्भूतं त्वां युत्सु युद्धेषु अषाढमसहनमनभिभूतम्। पुनः कीदृशं पृतनासु सेनासु पप्रिं पालयितारम्। स्वर्षाम् स्वर्दिवं सनोति सम्भजते स स्वर्षाः तम्। अप्साम् अपो जलानि सनोतीत्यप्साः तम्। वृजनस्य बलस्य गोपां रक्षकम्। भरेषुजां संग्रामेषु जेतारम्। सुक्षितिं सुनिवासम्। सुश्रवसं शोभनं श्रवः कीर्तिर्यस्य स सुश्रवाः तम्॥ अषाढम् सह्यतेऽसौ साढः न साढः असाढस्तम्। सहेः क्तः ढत्वं धत्वं ष्टुत्वम् ढो ढे लोपः ढ्लोपे पूर्वस्य दीर्घोऽणः छान्दसत्वात् सहिवहोरोदवर्णस्येति अस्याप्रवृत्तिः षत्वं छान्दसम्। पप्रिम् पॄ पालनपूरणयोः आदृगमहनेति किः द्वित्वादि। स्वर्षाम् स्वःपूर्वात्सनोतेर्विट् विड्वनोरनुनासिकस्यात्।

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति। सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥२१॥

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः। त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ २२ ॥

एवमप्साम्। गोपायतीति गोपाः क्विप् अतो लोपः यलोपः। भरेषुजाम् भरेषु संग्रामेषु जयति शत्रूनिति भरेषुजाः हलदन्तात्सप्तम्या इति अलुक् जयतेरौणादिको डाप्रत्ययः। मदेम मदी हर्षे लिङ् व्यत्ययेन शप्॥ २०॥

यो यजमानोऽस्मै सोमाय ददाशत् ददाति हविः तस्मै सोमो धेनुं ददाति। आशुं शीघ्रगमनमर्वन्तमश्वं च सोमो ददाति। सोमश्च तस्मै वीरं पुत्रं ददाति कीदृशं वीरं कर्मण्यं कर्मणि साधुम्। सादन्यं सदने गृहे साधुम्। विदथ्यं विदथो यज्ञस्तत्र साधुम्। सभेयं सभामर्हतीति सभेयस्तम्। पितृश्रवणं पितरं शृणोति पितृश्रवणः पित्राज्ञाकारिणं विनीतमित्यर्थः॥ कर्मण्यमित्यादौ तत्र साधुरिति यत्। सभेयं ढश्छन्दसीति सभायाः साध्वर्थे ढप्रत्ययः तस्यैयादेशः। ददाशत् दाशृ दाने बहुलं

हे इन्द्र त्वत् त्वत्तः सकाशात् कश्चन चनशब्दोऽप्यर्थे कोऽपि लोकोत्तरः प्रकेतः प्रकृष्टो ज्ञानविशेषः आ समन्तात् हि यतो भवति अतः सखायो विप्राः त्वामिच्छन्ति अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवा इत्युक्तेर्देवानां विप्राणां च सखित्वम्। किंभूताः सखायः सोम्यासः सोमसम्पादिनः। इच्छन्तीति कथं ज्ञातं तत्राह यतस्ते सोमं सुन्वन्ति अभिषुण्वन्ति प्रयांसि अन्नानि दधति च प्रय इत्यन्ननाम¹ हवींषि धारयन्ति। किञ्च जनानामभिशस्तिं दुर्वचनं तितिक्षन्ते सहन्ते मनोवाक्कायसंयताः क्षान्तिपराः इत्यर्थः ॥ १८ ॥ १—निघ० २,७,१।

इच्छन्तित्वासोम्यासःसखायःसुन्वन्तिसोमन्दधतिप्रयांसि। तितिक्षन्तेअभिशस्तिञ्जनानामिन्द्रत्वदाकश्चनहिप्रकेतः ॥ १८ ॥

नतेदूरेपरमाचिद्रजांस्यातुप्रयाहिहरिवोहरिभ्याम्। स्थिरायवृष्णेसवनाकृतेमायुक्ताग्रावाणःसमिधानेअग्नौ ॥ १९ ॥

अषाढंयुत्सुपृतनासुपप्रिंस्वर्षामप्सांवृजनस्यगोपाम्। भरेषुजांसुक्षितिंसुश्रवसञ्जयन्तन्त्वामनुमदेमसोम २०

हे हरिवः हरी अश्वौ विद्येते यस्य स हरिवान् तस्य सम्बोधनम् मतुवसोरिति रुत्वम् हे हरिवः स्थिराय दृढ़सौहृदाय वृष्णे सेक्त्रे तुभ्यम् इमा सवना कृता इमानि सवनानि प्रातःसवनादीनि कृतानि। क सति अग्नौ समिधाने समिध्यमाने सति छान्दसो यको लुक्। ग्रावाणः च युक्ताः योजिताः अभिषवकर्मणि। तुशब्दो हेत्वर्थे अतो हेतोः हरिभ्यामश्वाभ्यामा प्रयाहि आगच्छ। ननु स्वर्गात्कथमतिदूरे मया गन्तव्यमित्यत आह परमा परमाणि दूरदेशस्थानि रजांसि स्थानानि ते तव दूरे न चित् दूरे न सन्ति चिच्छब्दोऽप्यर्थे अतिदूरमपि ते निकटम् अत आयाहीत्यर्थः ॥ १९ ॥

च अर्चाम उच्चारयाम धातूनामनेकार्थत्वादर्चतिरुच्चारणार्थः अङ्गिरस्वत् अङ्गिरस इव तैर्यथा स्तोमो ध्यातो मन्त्रस्य पठितस्तद्वत्। किम्भूतायेन्द्राय शवसानाय शवो बलमात्मन इच्छति शवस्यति· शवस्यतीति शवसानः तस्मै बलमभिलषमाणाय सुप आत्मनः क्यजिति क्यच् तदन्ताच्छानच् शप् बहुलं छन्दसीति तस्य लुक् छन्दस्युभयथेति तस्य शानचोऽप्यार्धधातुकत्वात् क्यस्य विभाषेति क्यचो लोपः शवसान इति सिध्यति। पुनः कीदृशाय गिर्वणसे गिरा स्तुत्या वनयति सम्भाजयति आत्मानमभिलषितदानात्स्तोतृभ्य इति गिर्वणाः गीःशब्दोपपदाद्वनोतेर्ण्यन्तादसुनि वनिर्घटादित्वेन मित्त्वप्राप्त्वात् ह्रस्वत्वम् णिचो लोपः गीर्वणा इति प्राप्ते दीर्घाभावश्छान्दसः यद्वा स्वार्थे णिच् गीर्भिरेनं देवा भजन्ति इति गीर्वणाः तस्मै गीर्वाणशब्देन समानार्थो गीर्वणःशब्दः। पुनः किम्भूताय सुवृक्तिभिः शोभनाभिः स्तुतिभिः स्तुवते स्तौतीति स्तुवन् तस्मै यजमानानिति शेषः तदुक्तम् त्वमङ्ग प्रशंसिषो देवः शविष्ठ

प्र वो॑ म॒हे महि॒ नमो॑ भरध्वमाङ्गू॒ष्य॑ᳪ शवसा॒नाय॒ साम॑। येना॑ नः॒ पूर्वे॑ पि॒तरः॑ पद॒ज्ञा अर्च॑न्तो॒ अङ्गि॑रसो॒ गा अवि॑न्दन् ॥१७॥

मर्त्यमिति (१,८४,१९)। पुनः कीदृशाय ऋग्मियाय ऋङ्मयाय वेदमयाय मयडर्थे छान्दसो मियट् यद्वा ऋच स्तुतावित्यस्माद्भावे औणादिको मक् कुत्वं जश्त्वम् ऋक्मः स्तुतिः तमर्हतीति ऋग्मियः अर्हार्थे घच् स्तुतियोग्याय। पुनः कीदृशाय नरे नररूपाय नृशब्दस्य ङि परे छान्दसो गुणः। पुनः कीदृशाय विश्रुताय शौर्यदानबलादिभिर्विख्याताय ॥ १६ ॥

महे महते शवसानाय बलमभिलषमाणायेन्द्राय महि महत् नमोऽन्नं वः यूयं प्रभरध्वं प्रहरतम समर्पयत यूयमित्यर्थे व इत्यव्ययम् मुनीनां पुत्रादीन्प्रति वचः। आङ्गूष्यमाङ्गूषाय हितं साम प्रभरध्वमुच्चारयत। नोऽस्माकं पूर्वे पितरः अङ्गिरसः येनान्नेन साम्ना चार्चन्तः स्तुवन्तः सन्तः गाः सूर्यकिरणानविन्दन् लेभिरे स हि साम्नां लोकः तत्साम प्रभरध्वम्। कीदृशाः अङ्गिरसः पदज्ञाः पदमात्मस्वरूपं जानन्तीति पदज्ञाः ॥ १७ ॥

पालय। नोऽस्माकं तन्वः शरीराणि च रक्ष। कैः तव पायुभिः त्वदीयैः पालनैः यतस्त्वमनिमेषं सावधानं रक्षमाणः पालयन्सन् तोकस्य पुत्रस्य तनये विभक्तिव्यत्ययः तनयस्य पौत्रस्य गवां च त्राता रक्षकोऽसि ॥ १३ ॥

यः इडायाः पृथिव्याः पुत्रोऽग्निर्वयुने प्रज्ञाने कर्तव्ये अजनिष्ट जातः। किम्भूतः अरुषस्तूपः रुष वधे रोषति रुषः अरुषोऽहिंसकःस्तूपो ज्वालोच्छ्रायो यस्य स तथा ष्टुप उच्छ्राये। अस्याग्नेः रुशत् दीप्तं पाजः बलमुत्तानायामरण्यामवभर अवाचीनं हर द्व्यचोऽतस्तिङ इति दीर्घः। चिकित्वान् अरणिबलं जानन् किं बलमिति चेत् यारणिः प्रवीता कामिता सती वृषणं सेक्तारमग्निं सद्यः तत्कालं

उत्तानायामव भरा चिकित्वान्त्सद्यः प्रवीता वृषणं जजान। अरुषस्तूपो रुशदस्य पाज इडायास्पुत्रो वयुनेऽजनिष्ट ॥ १४ ॥

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि। जातवेदो नि धीमह्यग्ने हव्याय वोढवे ॥ १५ ॥

प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत्। सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १६ ॥

जजान जनयति छन्दसि लुङ्लङ्लिट इति लिट्। सोऽग्निर्जात इत्यर्थः ॥ १४ ॥

हे जातवेदः जातप्रज्ञान हे अग्ने इडायाः पृथिव्याः स्थाने देवयजनाख्ये पृथिव्या नाभा अधि उत्तरवेद्या मध्ये वयं त्वा त्वां निधीमहि स्थापयामः किमर्थम् हव्याय वोढवे हव्यं वोढुम् विभक्तिव्यत्ययः वहते स्तुमर्थे सेसेनिति तवेप्रत्ययः सहिवहोरिति ओकारः ॥ १५ ॥

चतस्र ऐन्द्र्यस्त्रिष्टुभः। वयमिन्द्राय इन्द्रार्थमाङ्गूषं स्तोमं त्रिवृदादिकं प्रमन्महे जानीमः किम्भूतं स्तोमम् शूषं बलहेतुम्। अर्कं मन्त्रं

सरस्वतीनदीदेवत्या। याः दृषद्वत्याद्याः पञ्च नद्यः सरस्वतीमपियन्ति गच्छन्ति किम्भूताः सस्रोतसः समानं स्रोतः प्रवाहो यासां ताः। तुरवधारणे सा उ सेव सरस्वत्येव पञ्चधा देशे सरिद्वती अभवत् पञ्चापि स्वनामानि त्यक्त्वा सरस्वत्येवाभवत् ॥ ११ ॥

चतस्र आग्नेय्यः द्वे जगत्यौ अन्ये त्रिष्टुबनुष्टुभौ। हे अग्ने त्वं देवानां प्रथमः सखा अभवः भूतोऽसि आद्यो मित्रभूतो देवानां त्वमेवेत्यर्थः। किम्भूतस्त्वम् अङ्गिराः अङ्गानां रसः यद्वा अङ्गिभ्य आत्मभ्यो यजमानेभ्यो राति सुखमित्यङ्गिराः।

पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥ ११ ॥

त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा। तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः १२

त्वन्नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते॥ १३ ॥

ऋषिर्द्रष्टा। देवो द्योतमानः। शिवः कल्याणः। किञ्च तव व्रते कर्मणि वर्तमाने मरुतः ईदृशा अजायन्त। कीदृशाः कवयः क्रान्तदर्शिनः। विद्मनापसः अप इति कर्मनाम[1] विद्मना विदितानि अपांसि कर्माणि येस्ते विद्मनापसः विदितकर्माणः। भ्राजदृष्टयः भ्राजन्त्यः शोभमानाः ऋष्टयः आयुधानि येषां ते तथा शत्रुघातकत्वात्। विद्मनेति वेत्तेः कर्मणि मनिन् प्रत्ययः बहुलग्रहणात् ततो विभक्तेराकारः तस्य चालुक् विद्मनापसः। अजायन्त जनेर्लङ् जादेशश्च श्यन् ॥ १२ ॥ [1]—निघ० २,१,१।

रक्षणार्थो मन्त्रः। हे अग्ने हे देव द्योतमान हे वन्द्य स्तुत्य तव व्रते कर्मणि वर्तमानान्मघोनो धनवतो यजमानांश्च

यं च यमिव सुखमिव कृधि कुरु। च पुनः नोऽस्माकं क्रत्वे क्रतवे सङ्कल्पाय दक्षाय तत्समृद्धये सङ्कल्पसिद्धये च नोऽस्मान् हिनु गमय नोऽस्माकमायूंषि प्रतारिषः प्रतारय वर्धय। छेटोऽडाटाविति आट् वैतोऽन्यत्रेति ऐकारः। कृधि श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिः बहुलं छन्दसीति शपो लुक्। क्रत्वे गुणाभावे यणादेशः। तारिषः सिब्बहुलं छन्दसि णिद्वक्तव्य इति इडिः अन्यत्पूर्ववत् प्रपूर्वस्तरतिर्वृद्ध्यर्थः॥ ८॥

अनुमतिः अद्य नोऽस्माकं यज्ञं देवेषु यज्ञियेषु अनुमन्यताम् अग्निश्च यज्ञं देवेषु अनुमन्यताम् किञ्चातोऽग्निः हव्यवाहनः

अग्निदनुमते त्वम्मन्यासै शन्नस्कृधि। क्रत्वे दक्षायनो हिनु प्रण आयूंषितारिषः॥ ८॥

अनुनोद्यानुमतिर्यज्ञन्देवेषुमन्यताम्। अग्निश्चहव्यवाहनो भवतन्दाशुषेमयः॥ ९॥

सिनीवालिपृथुष्टुके यादेवानामसिस्वसा। जुषस्वहव्यमाहुतम्प्रजान्देवि दिदिड्ढिनः॥ १०॥

हविषो वोढा। किञ्च दाशुषे हवींषि दत्तवते यजमानाय मयः सुखरूपो अनुमत्यग्नी भवतं भवतामिति पुरुषव्यत्ययः। हव्यं वहतीति हव्यवाहनः हव्येऽनन्तःपादमिति वहेर्ण्युट्। दाशुषे दाश्वान्साह्वानिति साधुः॥ ९॥

सिनीवाली देवता। हे सिनीवालि हे पृथुष्टुके स्तुकं केशभारः स्तुतिः कामो वा हे पृथुकेशभारे महास्तुते वा पृथुकामे वा या त्वं देवानां स्वसा असि भगिनी भवसि सा त्वमाहुतं हव्यं जुषस्व प्रीत्या गृहाण हे देवि नोऽस्मभ्यं प्रजां च दिदिड्ढि दिश देहि बहुलं छन्दसीति दिशतेः शपः श्लुः ततो द्वित्वादि॥ १०॥

यत् मनो मनुष्यान्नरान्नेनीयते अत्यर्थमितस्ततो नयति नयतेः क्रियासमभिहारे यङ् मनःप्रेरित एव प्राणिनः प्रवर्तन्ते मनुष्यग्रहणं प्राणिमात्रोपलक्षकम्। तत्र दृष्टान्तः सुषारथिः अश्वानिव शोभनः सारथिर्यन्ता यथा कशया अश्वान्नेनीयते। द्वितीयो दृष्टान्तः अभीशुभिर्वाजिन इव यथा सुसारथिरभीशुभिः प्रग्रहैः वाजिनोऽश्वान्नेनीयत इत्यनुषङ्गः रश्मिभिर्नियच्छतीत्यर्थः। उपमाद्वयम् प्रथमायां नयनं द्वितीयायां नियमनम् तथा मनः प्रवर्तयति नियच्छति च नरानित्यर्थः। यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिर्यस्य तत् हृद्येव मन उपलभ्यते। यच्च मनः अजिरं जरारहितम् बाल्ययौवनस्थाविरेषु मनसस्तदवस्थत्वात्। यच्च जविष्ठम् अतिजववद्वेगवत् जविष्ठम् न वै वातात्किंचनाशीयोऽस्ति न मनसः किंचनाशीयोऽस्तीति श्रुतेः। तन्म इत्युक्तम् ॥ ६ ॥

पितुन्नु स्तोषम्महोधर्माणन्तविषीम् । यस्यत्रितोव्योजसावृत्रंविपर्वमर्दयत् ॥ ७ ॥

उष्णिक् अन्नस्तुतिः। तं पितुमन्नं स्तोषं स्तौमि किंभूतम् महो महसः तविषीं तविष्याः बलस्य धर्माणं धारयितारम् तविषीति बलनाम[1] विभक्तिव्यत्ययः अन्नेनैव बलोत्पत्तेः। तं कम् यस्य पितोरोजसा बलेन त्रितः त्रिस्थान इन्द्रः वृत्रं दैत्यं विपर्वं विगतसम्बन्धनं कृत्वा वि अर्दयत् विविधमर्दितवान् इन्द्रेण हतोऽन्नबलेनैव हत इत्यर्थः। स्तोषं स्तौतेर्मिपि इतश्च लोपः परस्मैपदेष्विति इकारलोपे लेटोऽडाटाविति अडागमे सिब्बहुलं लेटीति सिप्प्रत्यये गुणे च रूपम्। महः महच्छब्दस्य ङसि छान्दसष्टिलोपः। धर्माणम् धरतेर्मन्। विपर्वम् विगतानि पर्वाणि यस्य तम् डप्रत्यये टिलोपः। अर्दयत् बहुलं छन्दस्यमाङ्योगेऽपीति अडभावः व्यवहिताश्चेति वेरुपसर्गस्य व्यवधानम्॥ ७॥

१—निघ० २, ९।

चतस्रोऽनुष्टुभः द्वयोरनुमतिर्देवता। इत् निपातोऽनर्थकः हे अनुमते त्वमनुमन्यासै अनुमन्यस्वास्मदुक्तं बुध्यस्व नोऽस्माकं

नम् भवतेः क्तप्रत्ययः वर्तमानकालसम्बन्धि। भविष्यत् लृटः सदिति शतृप्रत्ययः तौ सदित्युक्तोः त्रिकालसम्बद्धवस्तुषु मनः प्रवर्तत इत्यर्थः श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति। कीदृशेन येन। अमृतेन शाश्वतेन मुक्तिपर्यन्तम् श्रोत्रादीनि नश्यन्ति मनस्त्वनश्वरमित्यर्थः। येन च मनसा यज्ञोऽग्निष्टोमादिः तायते विस्तार्यते तनोतेर्यकीति श्राकारः। कीदृशो यज्ञः सप्तहोता सप्त होतारो देवानामाह्वातारो होतृमैत्रावरुणाद्यो यत्र स सप्तहोता अग्निष्टोमे सप्त होतारो भवन्ति। तन्मे मनः इति व्याख्यातम् ॥ ४ ॥

येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्वम् । येनयज्ञस्तायतेसप्तहोतातन्मेमनःशिवसङ्कल्पमस्तु ॥ ४ ॥

यस्मिन्नृचःसामयजूᳪषियस्मिन्प्रतिष्ठितारथनाभाविवाराः । यस्मिँश्चित्तᳪसर्वमोतम्प्रजानान्तन्मेमनःशिवसङ्कल्पमस्तु ॥ ५ ॥

सुषारथिरश्वानिवयन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिनइव। हृत्प्रतिष्ठंयदजिरञ्जविष्ठन्तन्मेमनःशिवसङ्कल्पमस्तु ॥ ६ ॥

यस्मिन्मनसि ऋचः प्रतिष्ठिताः यस्मिन् साम सामानि प्रतिष्ठितानि यस्मिन्यजूंषि प्रतिष्ठितानि। मनसः स्वास्थ्ये एव वेदत्रयीस्फुर्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम् अन्नमयं हि सोम्य मन इति छान्दोग्ये मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता। तत्र दृष्टान्तः रथनाभौ आराः इव यथा आराः रथचक्रनाभौ मध्ये प्रतिष्ठितास्तद्वच्छब्दजालं मनसि। किञ्च प्रजानां सर्वं चित्तं ज्ञानम् सर्वपदार्थविषयि ज्ञानं यस्मिन्मनसि ओतं प्रोतं निक्षिप्तम् तन्तुसन्ततिः पटे इव सर्वं ज्ञानं मनसि निहितम् मनःस्वास्थ्ये एव ज्ञानोत्पत्तिर्मनोवैयग्र्ये ज्ञानाभावः। तन्मे मम मनः शिवसङ्कल्पं शान्तव्यापारमस्तु ॥ ५ ॥

अप इति कर्मनाम। अपो विद्यते येषां ते अपस्विनः कर्मवन्तः अस्मायामेधास्रजो विनिरिति विनिप्रत्ययः विन्मतोर्लुगिति लुगभावे ऽपि छान्दसो विनो लुक् सदा कर्मनिष्ठा इत्यर्थः। तथा धीराः धीमन्तः धीर्विद्यते येषां ते धीराः कर्मज्ञाः। यच्च मनः अपूर्वम् न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम् इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः यद्वा अपूर्वमनपरमबाह्यमित्युक्तेरपूर्वमात्मरूपमित्यर्थः। यच्च यक्षं यष्टुं शक्तं यक्षम् यजतेरौणादिकः सन्प्रत्ययः ञ्नित्यादिर्नित्यमिति आद्युदात्तं पदम्। यच्च प्रजायन्ते इति प्रजास्तासां प्राणिमात्राणामन्तः शरीरमध्य आस्ते इतरेन्द्रियाणि बहिःस्थानि मनस्त्वन्तरिन्द्रियमित्यर्थः। तत् तादृशं मे मनः शिवसङ्कल्पमस्त्विति व्याख्यातम् ॥ २ ॥ १—निघ० २, १, १।

यत् मनः प्रज्ञानं विशेषेण ज्ञानजनकम् प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम् करणाधिकरणयोश्चेति करणे ल्युट् प्रत्ययः।

**यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु। यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥**

उत अपि यत् मनः चेतः चेतयति सम्यक् ज्ञापयति तच्चेतः चिती संज्ञाने अस्मात् ण्यन्तादसुन्प्रत्ययः सामान्यविशेषज्ञानजनकमित्यर्थः। यच्च मनो धृतिः धैर्यरूपम् मनस्या धैर्योत्पत्तेर्मनसि धैर्यमुपचर्यते कार्यकारणयोरभेदात्। यच्च मनः प्रजासु जनेषु अन्तर्वर्तमानं सत् ज्योतिः प्रकाशकं सर्वेन्द्रियाणाम् उक्तमपि पुनरुच्यते आदरार्थम् अभ्यासे भूयांसमर्थं मन्यन्त इति यास्कोक्तेः। यच्चामृतममरणधर्मि आत्मरूपत्वात्। यस्मान्मनसः ऋते यन्मनो विना किञ्चन किमपि कर्म न क्रियते जनैः सर्वकर्मसु प्राणिनां मनः पूर्वं प्रवृत्तेर्मनः स्वास्थ्यं विना कर्माभावादित्यर्थः। अन्यारादितरर्ते इत्यादिना यस्मादिति ऋते-योगे पञ्चमी। तन्मे मन इति व्याख्यातम् ॥ ३ ॥ २—निरु० १०, ४२।

येन मनसा इदं सर्वं परिगृहीतम् परितः सर्वतो ज्ञातम्। इदं किम्भूतम् भूतकालसम्बन्धि वस्तु भुवनं भवतीति भुव-

अनारभ्याधीतोऽध्यायः आ पितृमेधात् आदित्ययाज्ञवल्क्यदृष्टा मन्त्राः पाठे विनियुक्ताः ॥ षड्‍ऋचस्त्रिष्टुभो मनोदेवत्याः शिवसङ्कल्पदृष्टाः। ऋषिर्वेदेति। तन्मे मनः शिवसङ्कल्पमस्तु शिवः कल्याणकारी धर्मविषयः सङ्कल्पो यस्य तत् तादृशं भवतु मन्मनसि सदा धर्म एव भवतु न कदाचित्पापमित्यर्थः। तत्किम् यत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति चक्षुराद्यपेक्षया मनो दूरगामीत्यर्थः। यच्च दैवं दीव्यति प्रकाशते देवो विज्ञानात्मा तत्र भवं दैवमात्मग्राहकमित्यर्थः मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवमिति श्रुतेः। तत् उ यदः स्थाने तच्छब्दः उकारश्चार्थः। यच्च मनः सुप्तस्य पुंसः तथैव एति यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्तावस्थायां पुनरागच्छति। यच्च दूरङ्गमं दूरं गच्छतीति दूरङ्गमम् खश्प्रत्ययः अतीतानागतवर्तमान-

यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति। दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ ॥

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः। यदपूर्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥

विप्रकृष्टव्यवहितपदार्थानां ग्राहकमित्यर्थः। यच्च मनो ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्तकमित्यर्थः प्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्तन्ते आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेति न्यायोक्तेर्मनः सम्बन्धमन्तरा तेषामप्रवृत्तेः तादृशं मे मनः शान्तसङ्कल्पमस्तु ॥ १ ॥

मनीषिणः मेधाविनः यज्ञे येन मनसा सता कर्माणि कृण्वन्ति कुर्वन्ति कृ करणे स्वादिः मनःस्वास्थ्यं विना कर्माप्रवृत्तेः। केषु सत्सु विदथेषु ज्ञानेषु सत्सु विद्यन्ते तानि विदथानि तेषु वेत्तेरौणादिकोऽथप्रत्ययः प्रत्ययोदात्तत्वेन मध्योदात्तं पदम् प्रत्ययः परश्च आद्युदात्तश्चेति पाणिन्युक्तेः यज्ञसम्बन्धिनां हविरादिपदार्थानां ज्ञानेषु सत्स्वित्यर्थः। कीदृशा मनीषिणः अपसः

कीदृशेन वज्रेण शतपर्वणा शतसंख्याकानि पर्वाणि धारा ग्रन्थयो वा यस्य स शतपर्वा तेन। कीदृशो इन्द्रः शतक्रतुः शतं क्रतवो यस्य बहुकर्मा बहुप्रज्ञो वा ॥ ९६ ॥

मेधातिथिदृष्टा माहेन्द्री सतोबृहती। इन्द्रः अस्य इत् अस्यैव यजमानस्य वृष्ण्यं शवः च वावृधे वर्धयति णिजन्तत्वं बोध्यम् वर्षति सिञ्चति वृषा तस्येदं वृष्ण्यं वीर्यम् यप्रत्यये उपधालोपः शवः बलम्। क्व सति सुतस्याभिषुतस्य सोमस्य मदे सति कीदृशे मदे विष्णवि वेवेष्टि व्याप्नोति विष्णुस्तस्मिन् सर्वशरीरव्यापके सप्तम्येकवचने घेर्ङितीति गुणेऽवादेशः यद्वा विष्णवि विष्णौ यज्ञेऽभिषुतस्येति सम्बन्धः यज्ञो वै विष्णुरिति श्रुतेः। सोमपानेन मत्त इन्द्रो यजमानस्य माहात्म्यं

अस्येदिन्द्रो वावृधे वृष्ण्यꣳ शवो मदे सुतस्य विष्णवि। अद्या तमस्य महिमानमायवोऽनुष्टुवन्ति पूर्वथा ॥ इमा उत्वा। यस्यायम्। अयꣳ सहस्रम्। ऊर्ध्व ऊ षु णः ॥ ९७ ॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

बलं च वर्धयतीत्यर्थः। किञ्च अस्येन्द्रस्य तमुक्तं यज्वनो वीर्यादिवर्द्धनरूपं महिमानमद्यास्मिन्कालेऽपि आयवः मनुष्याः अनुष्टुवन्ति आनुपूर्व्येण स्तुवन्ति। तत्र दृष्टान्तः पूर्वथा पूर्वमिव यथा पूर्वमृषयोऽस्तुवन्नेवमिदानीमपि नराः स्तुवन्तीत्यर्थः प्रत्नपूर्वविश्वेमात्थाल्छन्दसीति पूर्वशब्दादिवार्थे थाल् प्रत्ययः इमा उत्वा (३३,८१) यस्यायम् (३३,८२) अयं सहस्रम् (३३,८३) ऊर्ध्व ऊ षु णः (११,४२) एताः प्रतीकोक्ताः ॥ ९७ ॥

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। त्रयस्त्रिंशत्तमोऽध्यायो गतोऽयं सार्वमेधिकः ॥ ३३ ॥

यास्कः मदर्थमेकमत्यं प्राप्ताः यद्वा मन्युना क्रोधेन सह वर्तमानाः अस्मच्छत्रुहननाय क्रोधयुक्ता इत्यर्थः। तथा सरातयः रातिर्दानं तत्सहिताः दातार इत्यर्थः ॥ ९४ ॥

नृमेधदृष्टे हे मरुत्वद्गुणविशिष्टेन्द्रदेवत्ये। बृहतो महान्तो भानवो दीप्तयो यस्य स बृहद्भानुः मरुतां गणो यस्य स मरुद्गणः हे बृहद्भानो हे मरुद्गण हे इन्द्र देवाः वसुरुद्रादित्याः ते तव सख्याय मैत्रे येमिरे कथं नु नाभिन्द्रोऽस्मान्सखिभावाय वृणीत इत्यभिप्राया आत्मानं संयतं कृतवन्त इत्यर्थः। स भवान् अभिशस्तीः अभिशापान् शत्रुप्रयुक्तानपवादान् अपाधमत् अपगमयति निवर्तयति धमतिर्गतिकर्मेति[1] यास्कः। अथ पश्चात् द्युम्नी अन्नवान् यशस्वी वा आ अभवत् सर्वतो

अपाधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत्। देवास्त इन्द्र सख्याय येमिरे बृहद्भानो मरुद्गण ॥ ९५ ॥

प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत। वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ९६ ॥

धनवान्भवति। कीदृशो भवान् अशस्तिहा शंसनं शस्तिः प्रशंसा सा नास्ति येषां ते अशस्तयः निन्द्या असुरास्तान्हन्तीत्यशस्तिहा। इन्द्रः ऐश्वर्यवान् इन्दतीतीन्द्रः। यो दुष्टहन्ताभिशापनाशको यशस्वी तेजस्वी बहुभृत्यसेव्यस्तस्य सख्यायान्ये पतन्त इति युक्तमिति भावः॥ ९५ ॥

[1]—निरु० ६, २।

हे मरुतः वो युष्माकं स्वामिने इन्द्राय यूयं ब्रह्म वेदं सामरूपस्तोत्रं प्रार्चत प्रोच्चारयत। कीदृशायेन्द्राय बृहते महते। ततो वृत्रहा वृत्रस्यासुरस्य पाप्मनो वा हन्तेन्द्रो वृत्रं हनति हन्तु बहुलं छन्दसीति शपो लुगभावः केन वज्रेण स्वायुधेन

यिवी यद्वा शिरो हित्वी हित्वा त्यक्त्वा स्वयमशिरस्का सती जिह्वया प्राणिनां वागिन्द्रियेण वावदत् यङ्लुगन्तं भृशं शब्दं कुर्वती सती चरत् चरति प्रसरति अडभावः। एवं चरन्ती उषाः एकदिनेन त्रिंशत्संख्यानि पदा पदानि गमनसाधनभूतान्मुहूर्त्तान् नि अक्रमीत् नितरां क्रमते अहोरात्रेण त्रिंशन्मुहूर्तान्क्रामतीत्यर्थः॥ यद्वा वाक्पक्षेऽर्थः। इन्द्रः प्राणः अग्निः पुरुषः हे इन्द्राग्नी युवयोरेवैतत्कर्म यत् अपात् पादरहिता गद्यात्मिका त्रयीलक्षणेयं वाक् पूर्वा प्रथमभाविनी सती आ अगात् पद्वतीभ्यः पादयुक्ताभ्यो रामायणभारतादिश्लोकात्मकवाल्मीकिव्यासादिवाणीभ्यः सकाशात्। वेदवाचः प्राथम्यं श्रुत्योक्तम् ततो अश्रेव प्रथममसृज्यतेति। एवं प्रथमजाया वाचोऽविकृतत्वं निर्णीय मानुष्या वाचो विकृतत्वमाह हित्वी शिर इति शिर इति प्राधान्यादाख्यातपदमुच्यते अभ्याज गां दण्डेन शुक्लां गां दण्डेनाभ्याजेत्येवं लौकिक्या वाचः पदप्रयोगनियमाभावात

देवासो हि ष्मा मनवे समन्यवो विश्वे साकं सरातयः। ते नो अद्य ते अपरं तुचे तु नो भवन्तु वरिवोविदः॥ ९४॥

शिरः शिरःस्थानीयमाख्यातपदं हित्वा त्यक्त्वा जिह्वया विदुषो वागिन्द्रियेण वावदत् अतिवदन्ती सती चरति प्रकाशीभवति। एवं चरन्ती सा त्रिंशत्पदानि न्यक्रमीत् क्रमति अत्र पदशब्दोऽङ्गुलवचनः मूलाधारादारभ्य मुखपर्यन्तं त्रिंशदङ्गुलानि क्रामति। एवं वाग्विषयोऽर्थः॥ ९३॥ १—निघ० २, २, १। २—निरु० १०, २९।

मनुदृष्टा वैश्वदेवी। हि स्म एतौ निपातौ प्रसिद्धातिशयार्थौ छान्दसौ सत्वदीर्घौ ते प्रसिद्धा विश्वे देवासः अद्य वर्तमानकाले नोऽस्माकं साकं सहैव वरिवोविदः भवन्तु वरिवो धनं वेदयन्ति लम्भयन्ति वरिवोविदः एकीभूय धनप्रापका भवन्तु। तु पुनः अपरं भविष्यति काले नोऽस्माकं तुचे अपत्याय पुत्रपौत्रादिकाय ते वरिवोविदः भवन्तु तुगित्यपत्यनाम[१]। कीदृशास्ते मनवे समन्यवः मनुनामकाय मनवे मन्त्रदर्शिने मह्यं समानो मन्युर्दीप्तिर्येषां ते मन्युर्मन्यतेर्दीप्तिकर्मण इति[२]

पर्जन्यरूपात्यर्थं स्तनितं कुर्वन् दाधर्तीत्यादि निपातः ॥ ९० ॥

मनुदृष्टा वैश्वदेवी। वीप्सार्थोऽभ्यासः यावन्तो देवास्तान्वो युष्मानवसेऽवनाय पालनाय वयं हुवेम आह्वयामः। अभिष्टयेऽभिलषितफलाप्तये देवं-देवं हुवेम। वाजसातयेऽन्नलाभाय देवं देवं हुवेम। अभ्यासे भूयांसमर्थं मन्यन्त इति[1] यास्कः। कीदृशा वयम् देवया देवतायाथात्म्यानुसन्धानपरया धिया बुद्ध्या गृणन्तः स्तुवन्तः यद्वा देव्या स्वरादिसौष्ठवेन दीप्यमानया धिया स्तुत्या गृणन्तः ॥ ९१ ॥ १—निरु० १०,४२।

मेधदृष्टा वैश्वानरी। योऽग्निः दिवि द्युलोके पृष्टः सिक्तः आदित्यात्मना स्थितः सन् अरोचत दीप्यते पृषु सेके निष्ठान्तः

दिविपृष्टोअरोचताग्निर्वैश्वानरोबृहन्। क्ष्मयावृधानओजसाचनोहितोज्योतिषाबाधतेतमः॥ ९२ ॥

इन्द्राग्नीअपादियम्पूर्वागात्पद्वतीभ्यः। हित्वीशिरोजिह्वयावावदच्चरत्त्रिꣳशत्पदान्यक्रमीत्॥ ९३ ॥

सेकः स्थितिरेव। कीदृशोऽग्निः वैश्वानरः विश्वेषां नराणां हितः। बृहन् महान्। किञ्च सोऽग्निः ज्योतिषा स्वप्रकाशेन तमः नैशं बाधते लोकानुग्रहायान्धकारं निवर्तयति। कीदृशः क्ष्मया वृधानः क्ष्मा पृथिवी तया तत्स्था मनुष्या उपलक्ष्यन्ते मञ्चाः क्रोशन्तीति वत् भूस्थैर्वर्णाश्रमिभिः नरैर्दत्तेन हविषा वर्धमानः अत एव ओजसो चनोहितः ओषधिपाकक्षमेण तेजसा चनसेऽन्नाय हितः चन इत्यन्ननाम[2] अन्ननिष्पादक इत्यर्थः ॥ ९२ ॥ २—निरु० ६,१८।

सुहोत्रदृष्टा इन्द्राग्निदेवत्या प्रवह्लिका। हे इन्द्राग्नी अपात् स्वयं पादरहितापि इयमुषाः पद्वतीभ्यः पादयुक्ताभ्यः सुप्ताभ्यः प्रजाभ्यः पूर्वा प्रथमभाविनी सती आ अगात् आगच्छति सा च तासां प्रजानां शिरो हित्वी निद्रात्याजनेन प्रेर-

धसम् इन्द्रस्य पुरोडाशः हर्योर्धानाः पूष्णः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या एषा हविःपङ्क्तिः द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यन्दिनं सवनं सक्तन्नाराशंसं तृतीयं सवनम् एषा नाराशंसपङ्क्तिः त्रीणि सवनानि प्रशुरूप-वसथ्यः पशुरनुबन्ध्यः एषा सवनपङ्क्तिः एताभिः पङ्क्तिभिः राधः समृद्धिर्यस्य पङ्क्तयो राध्यन्ते साध्यन्ते यत्रेति वा पङ्क्ति-राधाः तम् । ब्रह्मणस्पत्यादयः ईदृशं यज्ञमस्माभिः कारयन्त्विति सर्वार्थः ॥ ८९ ॥ १——निरु० ४,१९ । २——निरु० ४, १७ ।

चितदृष्टाहुतिपरिणामवादिन्यैन्द्री । आहुतेर्होमद्रव्यस्य परिणामो द्युपर्जन्यपृथिवीपुरुषयोषात्मकपञ्चाग्निक्रमेण परिपाकः इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति श्रुत्योक्तः तं वदत्येषा ऋक् । अधियज्ञं तावदर्थः । चन्द्रं देवानामाह्लादं

चन्द्रमा॑ऽअ॒प्स्व॒न्तरा सु॑प॒र्णो धा॑वते दि॒वि । र॒यिम्पि॒शङ्गं॑ ब॒हु॒लम्पु॑रु॒स्पृह॒ꣳ हरि॑रेति॒ कनि॑क्रदत् ॥ ९० ॥

दे॒वन्दे॑वं वो॒ऽव॒से दे॒वन्दे॑वम॒भिष्ट॑ये । दे॒वन्दे॑वꣳ हुवेम॒ वाज॑सातये गृ॒णन्तो॑ दे॒व्या धि॒या ॥ ९१ ॥

मिमीते करोति चन्द्रमाः लतारूपः सोमोऽभिषुतः सन् अप्सु वसतीवरीनिग्राभ्यादिजलेषु अन्तर्मध्ये रसरूपेण स्थिताग्नौ हुतः सन् सुपर्णः गरुडाकृतिः साधुपतनो भूत्वा दिवि आधावते शीघ्रं गच्छति सृ गतावित्यस्य शीघ्रगतौ धावादेशः तृतीयस्या-मितो दिवि सोम आसीदिति श्रुतेः । हरिः सोमो हरितवर्ण इति[1] यास्कोक्तेर्हरिः पूर्वोक्तः सोम एव दिवि गतः पर्जन्य-रूपमास्थायोदकदानद्वारेण रयिमेति रयिरिति धननामेति[2] यास्कः धान्यभावं प्राप्नोति व्रीहियवाद्यन्नरूपो भवतीत्यर्थः । कीदृशं रयिं पिशङ्गम् परिपाकेन व्रीहियवादिकं धान्यं पीतवर्णं भवति । बहुलमसंख्यातम् चतुर्विधभूतग्रामजीवनपर्याप्तमित्यर्थः । पुरुस्पृहं पुरूणां बहूनामपि स्पृहा लिप्सा यत्र तम् बहवोऽपि यद्धान्यमिच्छन्ति तद्रूपो भवतीत्यर्थः । कीदृशो हरिः कनिक्रदत्

च। स नरः इत्था अनेन हेतुना सेवनरूपेण शशमे शाम्यति यमनियमशमदमादियुक्तो भवतीत्यर्थः। कीदृक् सः देवतातये देवस्य कर्म देवतातिः तस्मै यज्ञाय ऋधक् ऋध्नोतीति ऋधक् समृद्धिमान् यज्ञसम्पत्तिचमधनाढ्यः सन् शान्तो भवतीत्यर्थः। बट् सत् सत्या इत्थेति[1] निपातः सत्यवचना वा सत्यं शाम्यति। एत्वाभ्यासलोपाभाव आर्षः शशमे ऽत्र ॥ ८७ ॥ १—निघ० ३, १०

वसिष्ठदृष्टाश्विदेवत्या। हे अश्विना अश्विनौ युवामायातं यज्ञं प्रत्यागच्छतम् आगत्य च उपभूषतमलंकुरुतं यज्ञम्। मध्वः मधुरं सोमं पिबतम् कर्मणि षष्ठी नुमभावश्छान्दसः। किञ्च हे वृषणा वृषणौ वर्षको यज्ञफलस्य सेक्तारौ हे जेन्यावसू जेन्यं जेतव्यं जितं वा आ समन्तात् वसु धनं याभ्यां तौ जेन्यावसू वशीकृतधनौ तादृशौ युवां पयः दुग्धादकम् दुग्धमन्तरिक्षा-

आयातमुपभूषतम्मध्वः पिबतमश्विना। दुग्धम्पयो वृषणा जेन्यावसू मा नो मर्धिष्टमागतम् ॥ ८८ ॥

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा वीरन्नर्य्यम्पङ्क्तिराधसन्देवा यज्ञन्नयन्तु नः ॥ ८९ ॥

त्प्रचारयतम् दुहेर्लोण्मध्यमद्विवचनं दुग्धमिति। किञ्च नोऽस्मान्मा मर्धिष्टं मा हिंस्तम् मृधिर्हिंसार्थः लुङ्। किं बहुना युवामागतमागच्छतम् आदरार्थं पुनर्वचनम् ॥ ८८ ॥ २—निरु० १०, १२। ३—निरु० १, ७।

कण्वदृष्टा विश्वेदेवी। ब्रह्मणो वेदस्य पतिः हिरण्यगर्भः नोऽस्माकं यज्ञमच्छ यज्ञाभिमुखं प्रैतु प्रकर्षेणागच्छतु ब्रह्मणस्पतिः ब्रह्मणः पाता पालयिता वेति[2] यास्कः। तथा देवी देवतात्मा सूनृता प्रियसत्यस्वरूपा तस्यैव वाक् वशीरूपा यज्ञं प्रैतु। किञ्च देवा यष्टव्या नोऽस्मान्यज्ञं नयन्तु प्रापयन्तु यज्ञं कारयन्त्वित्यर्थः। कीदृशं यज्ञं वीरं विशेषेणेरयति वीरस्तम् शत्रूणां विशेषेणोत्कूलयितारम् वीरो वीरयत्यमित्रानिति[3] यास्कः। नर्यं नृभ्यो मनुष्येभ्यो हितम् उगवादिभ्य इति यत्। पङ्क्तिरा-

इतोऽध्यायसमाप्त्यन्तं त्रयोदश ऋचः प्रतीकोक्ताश्चतस्रश्चेति ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां ग्रहणमन्त्राः पूर्ववत् ॥ जमदग्निदृष्टा वायुदेवत्या। वृहत्य आद्या नव द्वादशी च दशम्येकादशीत्रयोदश्यः सतोवृहत्यः। हे वायो नोऽस्माकं यज्ञमायाहि आगच्छ कीदृशं यज्ञं दिविस्पृशं द्युलोकव्यापिनम् ऋत्विग्यजमानवैदुष्याद्दक्षिणासम्पन्नत्वाच्च स्वर्गेऽपि श्रूयमाणमित्यर्थः। आगम्य किं फलमत आह अन्तरिति अन्तः पात्रमध्यस्थः पवित्रे दशापवित्रस्योपरि ओषानः अयमाणः होतृचमसेन सिषिच्यमानोऽयं शुक्रः शुद्धः ऋजीषकल्करहितः सोमो रसात्मा ते तुभ्यं त्वदर्थमयामि नियतः त्वदीयभागत्वेन मया संस्कृतः यमु उपरमे कर्मणि विण् ॥ ८५ ॥

इन्द्रवायू सुसन्दृशा सुहवेह हवामहे। यथा नः सर्व इज्जनोऽनमीवः सङ्गमे सुमना असत् ॥ ८६ ॥

ऋधगित्था स मर्त्यः शशमे देवतातये। यो नूनं मित्रावरुणावभिष्टय आचक्रे हव्यदातये ॥ ८७ ॥

तापसदृष्टैन्द्रवायवी। इह यज्ञे वयमिन्द्रवायू हवामहे आह्वयामः उभयत्र वायोः प्रथिवेव इति आनङ्भावः। कीदृशौ सुसंदृशा सुसंदृशौ सुतरां सम्यक् पश्यन्तौ। सुहवा सुहवौ। शोभनाह्वानौ। तथा हवामहे यथा नोऽस्माकं सर्व इत् सर्व एव जनः पुत्रपौत्रादिरीदृशः असत् भवेत् अस्तेर्लेटाडागमः कीदृशः अनमीवः व्याधिरहितः सङ्गमे धनप्राप्तौ बहूनां समागमे वा सुमनाः शोभनचित्तः उदारो वक्ता चेत्यर्थः ॥ ८६ ॥

जमदग्निदृष्टा मैत्रावरुणी। नूनं निश्चितं यो मर्त्यो मनुष्यो मित्रावरुणौ आचक्रे आकुरुते सेवते गन्धनावक्षेपणेत्यादिना करोतेः सेवनार्थे आत्मनेपदम्। किमर्थम् अभिष्टये अभिमतलाभाय पृषोदरादित्वादिलोपः हव्यदातये हविषो दानाय

रथार्थमायुधधारके तथा यास्कः पविः शल्यो भवति यद्विपुनाति कायं तद्वत् पवीरमायुधं तद्वानिन्द्रः पवीरवानिति[1] धनि-
नातियत्नेन गुप्तमपि धनं ततः आच्छिद्य धर्मिष्ठाय ददातीति भावः ॥ ८२ ॥

[1]—निरु० १२, ३१।

मेधातिथिदृष्टादित्यदेवत्या सतोबृहती। अयमादित्यरूप इन्द्रः समुद्र इव उदधिवत् पप्रथे प्रथितो विस्तीर्णो व्यापकोऽभूत् कीदृशोऽयम् ऋषिभिरतीन्द्रियार्थदर्शिभिः सहस्कृतः सहसा बलेन युक्तः कृतः स्तुत्या हि देवता बलं वर्धते किञ्च अस्या-

अयꣳसहस्रमृषिभिःसहस्कृतःसमुद्रइवपप्रथे। सत्यःसोअस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ये ॥ ८३ ॥

अदब्धेभिःसवितःपायुभिष्ट्वꣳशिवेभिरद्यपरिपाहिनोगयम्। हिरण्यजिह्वःसुवितायनव्यसेरक्षा

माकिर्नोअघशꣳसईशत ॥ ८४ ॥

आनोयज्ञन्दिविस्पृशंवायोयाहिसुमन्मभिः। अन्तःपवित्रउपरिश्रीणानोयꣳशुक्रोअयामिते ॥ ८५ ॥

दित्यस्य स महिमा सत्योऽवितथः। शवो बलं च सत्यम्। यज्ञेषु विप्रराज्ये विप्राणां राज्ये स्तोत्रशस्त्रसंदेहे गृणे स्तौमि तं महिमानमिति शेषः। यज्ञेषु विप्राः स्वतन्त्राः राजान इव भवन्ति राज्ञां कर्म राज्यम्। स्तोत्रशस्त्राणां संसदि पठनेन सोऽयं स्तूयत इत्यर्थः ॥ ८३ ॥

व्याख्याता(३३,९९) ॥ षष्ठः पुरोरुग्गणः समाप्तः ॥ ८४ ॥

ह्यत्तासित्यर्मित, नदन्तात्येव नघाता न। कीदृशा विश्व जमाः ग्रवन्ति रचन्ति जमाः रचकाः पवतेर्मन्प्रत्ययः कौः ग्रुर्हित जठ् ॥ ८० ॥ १——निरु० २, ४।

मेधातिथिदृष्टे आदित्यदेवत्ये हे बृहत्यौ। पुरु बहु वसु धनं यस्य स पुरुवसुः संहितायां छान्दसो दीर्घः पुरुशब्दस्य हे पुरुवसो बहुधनादित्य या मम गिरः शस्त्ररूपा वाचः इमाः त्वा त्वां वर्धन्तु वर्धयन्तु। किञ्च विपश्चितो विद्वांसः तव स्वरूपाभिज्ञा उद्गातारश्च स्तोमैः स्तोत्रैः बहिष्पवमानादिभिः त्वमभ्यनूषत अस्तुवत नू स्तुतौ लुङ् कुटादित्वाद्गुणाभावः कीदृशा विपश्चितः पावकवर्णाः अग्नितुल्यतेजसः ब्रह्मवर्चसवन्तोऽत एव शुचयः शुद्धागमाः स्तोत्रशस्त्ररूपा गिरस्त्वां स्तुवन्तीत्यर्थः ॥ ८१ ॥

इमाउत्वापुरूवसोगिरोवर्धन्तुयामम। पावकवर्णाःशुचयोविपश्चितोभिस्तोमैरनूषत ॥ ८१ ॥

यस्यायंविश्वआर्योदासःशेवधिपाअरिः। तिरश्चिदर्येरुशमेपवीरवितुभ्येत्सोअज्यतेरयिः ॥ ८२ ॥

हे आदित्य यस्य तवायं विश्वः सर्वोऽपि आर्यः वर्णाश्रमविहितकर्मानुष्ठाता सन् दासः दासवत् सर्वदा रक्षणीयः शेवधिपाः निधिरक्षकः कृपणो यस्य तवारिः शत्रुः निधिः शेवधिरिति यास्कः१। किञ्च एवंविधे कृपणे अर्ये धनस्वामिनि वैश्ये वा तिरश्चित् तिरोऽन्तर्धौ चिदप्यर्थे अन्तर्भूतो भूमिगर्तादौ निक्षिप्तोऽपि तस्य रयिर्धननिचयः तुभ्य इत् मलोपश्छान्दसः तुभ्यमेव त्वदर्थमेवाज्यते व्यक्तो भवति कर्मकर्तरि यक्। कृपणस्य धनं त्वदर्थमेवोपयुज्यते पञ्चहरणादिना न तु कृपणभोगाय भवतीत्यर्थः। कीदृशेऽर्ये रुशमे रुशतिर्हिंसाकर्मा औणादिकोऽमप्रत्ययः रुशति हिनस्तीति रुशमः तस्मिन्धनापहर्तॄणां हिंसके आतिथ्यादितिरस्कारेणान्नोऽपि हिंसके। पवीरवि पविः शस्त्रमस्यास्ति पवीरमायुधम् रो मत्वर्थीयः पवीरं वाति गच्छति पवीरवाः तस्मिन् धन-

अत्ति भक्षयति रिपूनित्यद्रिः अदिशदिभूशुभिभ्यः क्रिन्निति क्रिन्प्रत्ययः आद्युदात्तः ॥ ७८ ॥

एवमिन्द्रेणोक्ता मरुतः प्रत्याहुः । णुद प्रेरणे अस्य निष्ठायां नसत्तनिषत्तेत्यादिना अनुत्तमिति निपातः । आ इति स्मरणे स्मृतवन्तो वयम् हे मघवन् धनवन् इन्द्र ते तव अनुत्तं न केनापि नुत्तं नाशितं महाभाग्यमिति शेषः । नु निश्चये न किः न कोऽपि त्वन्महाभाग्यनाश इति शेषः । न केवलं तवैश्वर्यमात्रं किन्तु सर्वज्ञत्वमपीत्याह न त्वेति वतुबत्र सादृश्ये त्वावान् त्वत्सदृशो विदानः विद्वान् देवता देवो नास्ति स्वार्थे तल् विदेः शानन् निस्वादाद्युदात्तः । किञ्च हे प्रवृद्ध प्रकर्षेण वृद्ध पुराण पुरुष यानि कर्माणि वृत्रवधादीनि त्वं कृणुहि करोषि व्यत्ययेन लोट् तानि कर्माणि जायमानः वर्तमानः जातो

अनुत्तमातेमघवन्नकिर्नुनत्वावाँ२॥ऽअस्तिदेवताविदानः।नजायमानोनशतेनजातोयानिकरिष्याकृणुहिप्रवृद्ध॥७९॥

तदिदासभुवनेषुज्येष्ठंयतोजज्ञउग्रस्त्वेषनृम्णः। सद्योजज्ञानोनिरिणातिशत्रूननुयंविश्वेमदन्त्यूमाः ॥ ८० ॥

भूतपूर्वश्च देवमनुष्येषु कश्चित् न नशते न व्याप्नोति न करोतीत्यर्थः नशतिर्व्याप्तिकर्मा । न करिष्या न च करिष्यति उत्पत्स्यमान इति शेषः तिलोपो दीर्घश्च छान्दसः । कालत्रये त्वादृशो नास्तीत्यर्थः अतो यज्ञ मस्त्वम् ॥ ७९ ॥

बृहद्दिवदृष्टा माहेन्द्री त्रिष्टुप् । भुवनेषु भूतजातेषु तत् इत् तदेव ज्येष्ठं श्रेष्ठमास बभूव छन्दस्युभयथेति लिटः सार्वधातुकत्वादस्तेर्भूभावो न सर्वोत्कृष्टं ब्रह्मैवासीत् यतो ज्येष्ठात् उग्रः उत्कृष्टः इन्द्रो जज्ञे जातः । कीदृशः त्वेषनृम्णः त्वेषः कान्तिः नृम्णं धनं यस्य तेजोधनः कार्यं दृष्ट्वा कारणमहत्त्वं कल्प्यते । किञ्च य इन्द्रो जज्ञानः जायमान एव सद्यः तत्क्षणं शत्रून् निरिणाति नितरां हन्ति री वधे क्र्यादिः प्वादित्वाद्ध्रस्वः । किञ्च विश्वे सर्वे देवाः यमिन्द्रमनुमदन्ति अनुतृप्यन्ति अनुर्लक्षणइति द्वितीया यद्-

पाप्मनां हन्तृतमौ नाहस्येति शुम्। मन्दाना मन्दानौ मोदमानौ स्वभावतः सर्वत्र विभक्तेर्डादेशः॥ ७६॥

सुहोत्रदृष्टा वैश्वदेवी गायत्री। ये अमृतस्य मरणहीनस्य प्रजापतेः सूनवः पुत्राः विश्वे देवाः ते नोऽस्माकं गिरः उप शृण्वन्तु समीपमागत्यावधारयन्तु श्रुत्वा च नोऽस्माकं सुमृडीकाः सुखकराः भवन्तु शोभनं मृडीकं सुखं येभ्यस्ते॥ ७७॥

तिस्रस्त्रिष्टुभः हे इन्द्रमरुत्संवादे इन्द्रमरुद्देवत्ये आद्ये ऽगस्त्यदृष्टे इन्द्रो मरुतः सहचरानाह हे मरुतः ब्रह्माणि मन्त्रवाक्यात्मकानि स्तुतिवचांसि हवींषि वा सोमाज्यादीनि मे मम स्वभूतानि चोदनावाक्येऽग्न्यादिदेवतान्तरसम्बन्धेन प्रतीयमानान्यपि सर्वदेवतात्मन्यात्मनो ममेन्द्रस्यैव तानीति भावः। मतयः मननयुक्ताः स्तुतयोऽपि शं मम सुखोत्पादिकाः अतो यज्ञे गन्त-

उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये। सुमृडीका भवन्तु नः॥ ७७॥

ब्रह्माणि मे मतयः शं सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः। आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ॥ ७८

व्यमिति भावः। किञ्च मे मया प्रभृतः प्रकर्षेण धृतः अद्रिः वज्रः इयर्ति गच्छत्येव लक्ष्यं प्रति न प्रतिहन्यत इत्यर्थः। कीदृशः शुष्मः शोषयति शत्रूनिति शुष्मः अत एव गमने राक्षसाद्युपद्रवो नास्तीत्यर्थः। न केवलं हविरादीनां मदीयत्वेन गन्तव्यम् अपि तु आशासते प्रार्थयन्ते यजमाना यानि उक्थानि तानि स्तोत्रशस्त्राणि मां प्रति हर्यन्ति कामयन्ते हर्यतिः प्रेप्साकर्मेति यास्कः। किञ्च नोऽस्माकमिमा इमौ हरी अश्वौ अच्छ यज्ञाभिमुखं वहतः मां प्रापयतः अत एवास्माभिर्गन्तव्यमिति भावः। यद्वार्थान्तरम् ब्रह्माणि मतयः सुताः सोमाः प्रहृतः अद्रिः सोमाभिषवग्रावा शुष्मः सुखरूपः एतत्सर्वं मम शं सुखमियर्ति अर्पयति उद्गमयति णिजन्तभूतः समानमन्यत्॥ शुष्मः अविसिविशुषिभ्यः किदिति मन्प्रत्ययः कित्त्वाद्गुणाभावः निस्त्वादाद्युदात्तः।

प्रत्ययः अस्तीति चेति अवरशब्दस्यावादेशः। एतद्वा इदं सर्वमन्नं चैवान्नादश्चेति श्रुतिः॥ ७४॥ १—अष्ट० ८,३,१० वाज० १०,११,१।

तमेव वैश्वानराख्यं ओंकारं परमात्मानं स्तौति। विश्वामित्रदृष्टा जगती वैश्वानरदेवत्या। यत् यदा जातमरणीत उत्पन्नमात्रमेनं वैश्वानरमपसोऽपस्विनः कर्मवन्तो यजमाना अधारयन् कर्मणि स्थापितवन्तः। तदा स रोदसी द्यावाभूमी आ सर्वतः अपृणत् पूरयति स्म स्थावराणां प्रस्तरादौ तदुपलब्धेः। न केवलं रोदसी किन्तु महत् प्रभूतं स्वः अन्तरिक्षमापृणत् स्वात्मना। त्रैलोक्यं जाठरात्मना पूरितमित्यर्थः। गार्हपत्यादीनां लोकत्वं श्रुतम्। अयं वै लोको गार्हपत्यो द्यौराहवनीय इति। एकधैव विहरणीति स इति सोऽग्निरध्वराय यागाय परिणीयते सर्वतोऽग्निप्रणीताग्नीषोमीयादौ धिष्ण्यादिषु प्रकर्षेण

आ रोदसी अपृणदा स्वर्महज्जातं यदेनमपसो अधारयन्। सो अध्वराय परि णीयते कविरत्यो न वाजसातये चनोहितः॥ ७५॥

उक्थेभिर्वृत्रहन्तमा या मन्दाना चिदा गिरा। आङ्गूषैराविवासतः॥ ७६॥

प्राप्यते। नयने दृष्टान्तः अत्यो न यथाश्वो वाजसातयेऽन्नलाभाय सर्वतो नीयते। राजाश्वान्भोगजातं लभते यथा तद्वद्विप्रोऽग्निं सेवमानो ब्रह्मलोकान्तभोगानिति भावः। कीदृशोऽग्निः कविः सर्वज्ञः। चनोहितः चन इत्यन्ननाम[1] यास्कः चनसेऽन्नाय भोग्याय हितः सर्वभोगसम्पादक इत्यर्थः॥ ७५॥ १—निरु० ६,१६। २—निरु० १५,११। ३—निरु० ११,२३।

वसिष्ठदृष्टेन्द्राग्निदेवत्या गायत्री। या यौ इन्द्राग्नी आङ्गूषैः आघोषैः चित् लौकिकवाक्स्तोमैरपि स्तुतौ आ आगच्छतः आङ्गूषः स्तोम आघोष इति[1] यास्कः तौ उक्थेभिः उक्थैः गिरा स्तोत्रात्मिकया स्तुत्या आविवासतः आविवस्यते परिचर्यते यजमानैरिति शेषः व्यत्ययेन कर्तरि लट् विवासतिः परिचर्यायामिति[2] यास्कः। कीदृशौ तौ वृत्रहन्तमा वृत्राणामावरकाणां

अवस्तात् अवरो होमात्प्राक् नीच आसीत् प्रयतिः पयतते प्रयतिः प्रयत्नवान् होमानन्तरं लब्धफलकः सन् परस्तात् परः उत्कृष्टः आसीत् ॥ अथाधिदैवतं व्याख्या । एषां प्रसिद्धानां सूर्यरश्मीनां मध्ये एकः सुषुम्णाख्यो रश्मिः तिरश्चीनः विततः विस्तृतः सन् किम् द्युलोकादधः स्थित् आसीत् उतोपरि स्विदासीत् स्विदिति वितर्कं विचार्यमाणानामिति प्लुतः । किञ्च स रश्मिः रेतोधाः रेतसो विश्वबीजस्योदकस्य धारयिता आसीत् व्यत्ययेनैकवचनम् तथाच श्रुतिः सूर्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्तीति । अन्ये रश्मयो महिमानः महात्म्याधायका आसन् विश्वप्रकाशत्वेन । किञ्च स्वधान्ननिष्पादकः स एव रश्मिः अवस्तात् अवरो भूम्यभिमुखः प्रयतिः प्रयत्नात्सोर्ध्वमुखः सन् परस्तात् परः उत्कृष्टः दर्शनमात्रेण देवानां तृप्तिदः तथोक्तं छान्दोग्यश्रुतौ असौ वा आदित्यो देवमध्वित्युपक्रम्य न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्तीति ( ५,१,६ ) ॥ अथाध्यात्मपक्षे व्याख्या । नासदासीदिति समर्वेऽध्यात्मप्रतिपादके सूक्ते बह्वृचा इमामृचं पठन्ति तत्र नासदासीदिति निरस्तसमस्तप्रपञ्चां प्रलयावस्थामनूद्य विश्वबीजमविद्योक्ता । कामस्तदग्रे समवर्ततेति पादेन च काम उक्तः । मनसोरेतः प्रथमं यदासीदिति पादेन पुण्यापुण्यात्मकं कर्मोक्तम् । एवमविद्याकामकर्माणि सृष्टिहेतून्युक्त्वा तेषां स्वकार्यं जनने शैघ्र्यमाह तिरश्चीन इति । एषामविद्याकामकर्मणां रश्मिरिव रश्मिः कार्यवर्गो वियदादि विततः विस्तृतः सन् तिरश्चीनः तिर्यगवस्थितो मध्ये स्थितः अधश्चासीदुपरि चासीत् सूर्यरश्मिवद्युगपत्सर्वं व्याप्येत्यर्थः । तदेव विभज्यते रेतोधा इति । सृष्टे कार्यवर्गे केचन रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्त्तारो भोक्तारश्च जीवाः आसन् अन्ये महिमानः महान्तो विपुला वियदादयो भोग्या आसन् महिमान इति स्वार्थे इमनिच् । एवं मायायामीश्वरः सर्वं जगत्सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यरूपेण विभागं कृतवानित्यर्थः । तयोर्भोक्तृभोग्ययोर्मध्ये स्वधान्नं भोग्यप्रपञ्चोऽवस्तादवरो निकृष्ट आसीत् प्रयतिः प्रयतिता भोक्ता परस्तात् परः उत्कृष्टः भोक्तृप्रपञ्चाधीनं भोग्यप्रपञ्चं कृतवानित्यर्थः । विभाषा परावराभ्यामिति प्रथमार्थेऽस्तात-

हितयोर्युवयोः आजानेषु आ समन्ताज्जन्मसु सोमपानार्थमाविर्भूतभूमिषु देवयजनादिषु दुरोणे यज्ञगृहे च क्रत्वा क्रतुना यज्ञ-कर्मणा सत्ता दक्षस्य उत्साहवतः यज्ञं समर्धयत इत्यर्थः। दक्षस्येति विशेषणात् यजमानपदमध्याहर्तव्यम् आ इत्युपसर्गेण गच्छतमिति क्रियाध्याहारः ॥ ७२ ॥ १—का० ९, ५, १७।

व्याख्याता (२३, ३२)। तंप्रत्नथा (७, १२) अयंवेनः (७, १६) इति द्वे प्रतीकोक्ते ॥ ७३ ॥

प्रजापतिदृष्टा त्रिष्टुप् भाववृत्तदेवत्या भावेषु पदार्थेषु वृत्तः स्थितो भाववृत्तः परमात्मा सोऽस्या देवता। आग्रयणग्रहे विनि-योगः क्रमपाठाल्लभ्यते ततोऽभियज्ञं तावद्व्याख्यायते। आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानस्ततो ग्रह-ग्रहणमा ध्रुवादिति१ कात्यायनेनोक्तं तदभिप्रायेणोच्यते। एषां पूयमानसोमानां रश्मिः यमनात् ऋजीषादिकल्कनियामको

दैव्यावध्वर्यूआगतꣳरथेन०॥ तम्प्रत्नथा। अयंवेनः॥ ७३ ॥

तिरश्चीनोविततोरश्मिरेषामधःस्विदासीदुपरिस्विदासीत्रेतोधाआसन्महिमानआसन्त्स्वधाअवस्तात्प्रयतिःपरस्तात् ॥ ७४ ॥

दशापवित्रलक्षणः तिरश्चीनः तिर्यङ् एव विततो विस्तारितः उन्नादिभिरिति शेषः। तस्मिन्दशापवित्रे सोमः प्रक्षिप्तः सन् दशापवि-त्रादधश्च आसीत् उपरि च आसीत् स्विच्छब्दौ चार्थौ उपरि स्विदासीदितीकारः प्लुतः। किञ्च तत्रैके पदार्थाः ग्रहचमसाधव-नीयद्रोणकलशादयो रेतोधा आसन् रेतो जगदुत्पत्तिबीजं सोमं दधति धारयन्ति ते रेतोधाः सोमाधारभूताः आसन् यज्ञाद्वै प्रजाः प्रजायन्त इति श्रुतेर्जगद्बीजत्वं सोमस्य। तथापरे पदार्थाः सोमरसरूपास्तदाधेयाः सन्तो महिमानः महान्तः उत्कृष्टा आसन्। आधाराधेयभावेन सर्वोऽयं यज्ञात्मैव स्थित इति भावः ब्रह्मार्पणं ब्रह्म हविरिति स्मृतेः। किञ्च स्वधान्नं तद्रूपः

वसिष्ठदृष्टा त्रिष्टुप्। वायुर्देवत्याः पञ्चदश ऋचः हे प्रतीकोक्ते एवं सप्तदशकः पुरोरुचां समूहः। वःमिति द्विवचनं पत्नीयजमानविषयम् हे पत्नीयजमानौ वां युवयोः स्वनुताः सोमाः दद्रिरे विदीर्णाः चूर्णीभूताः दृ विदारे कर्मकर्तरि लिट् कीदृशाः प्रवीरया प्रकृष्टा वीरा प्राणोद्भवा ऋत्विजो येषां सोमानां ते प्रवीराः सुपां सुलुगिति जसो याजादेशः। शुचयः निर्मलाः। अध्वर्युभिः सुतासः सुताः अभिषवधर्मेण ग्रावभिः द्रवीभावमापादिताः अभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यादिति १ कात्यायनस्मरणादध्वर्युभिरिति बहुवचनम् अध्वर्युनेष्ट्रभिरृत्विग्विशेषैः सुता इत्यर्थः। मधुमन्तः मधु निशाभ्यारूपमुदकम् तद्वन्तः। एवं पूर्वार्धे पत्नीयजमानौ सम्बोध्य वायुमाह वाति सर्वत्र गच्छति वायुः हे वायो नियुतोऽश्वान् त्वं वह

गाव उपावतावतं मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया ॥ ७१ ॥

काव्ययोराजानेषु क्रत्वा दक्षस्य दुरोणे। रिशादसा सधस्थ आ ॥ ७२ ॥

देवयजनदेशं प्रापय अच्छयाहि अच्छाभेरर्थे आप्तुमिति वा सामाभिमुखं सोममाप्तुं वा याहीत्यर्थः। यात्वा च मदाय तृप्तये मत्ततायै वा सुतस्याभिषुतस्यान्धसः सोमस्य स्वमंशं पिब ॥ ७० ॥ १—का० ९, ५, १।

व्याख्याता (३३, १९) ॥ ७१ ॥

दक्षदृष्टा गायत्री मैत्रावरुणी। कवीनां क्रान्तदर्शिनां ज्ञानसमुच्चयकारिणां हितौ काव्यौ तयोः। रिशन्ति हिंसन्ति रिशाः तान् समन्तादस्यतो नाशयतः तौ रिशादसौ द्विवचनं मित्रावरुणविषयम् हे रिशादसा मंत्रप्रचयितारौ मित्रावरुणौ यजमानस्य सधस्थे देवमनुष्याणां सहस्थानस्थाने युवाम् आ आगच्छतम्। कीदृशस्य यजमानस्य काव्ययोः कवि-

स्पृधः स्पर्धमानाः शत्रुसेनाः ते तव मन्यवे पञ्चम्यर्थे चतुर्थी तव क्रोधात् अश्नथयन्त अश्नथयन्त श्नथिताः खिन्ना भवन्ति तव क्रोधदर्शनादुद्विजन्त इत्यर्थः युक्तमेतत् यत् यस्मात् युद्धे इन्द्र त्वं हत्रं देवासुरावध्यं तूर्वसि हंसि तूर्वतिर्हिंसार्थः ॥ ६७ ॥

कुत्सदृष्टा त्रिष्टुप्। व्याख्याता (८,४) ॥ ६८ ॥

भरद्वाजदृष्टा जगती सवितृदेवत्या। हे सवितः सर्वस्य प्रसवितः पायुभिः पालनैः नोऽस्माकं गयं गृहं धनं वा त्वमद्य परिपाहि रक्ष गयः छदरः इति[1] गृहनामसु मीलहं गय इति[2] धननामस्वपि पाठात् गृहधनयोर्गयशब्दः। कीदृशैः पायुभिः

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परि पाहि नो गयम्। हिरण्यजिह्वः सुविताय नव्यसे

रक्षा माकिर्नो अघशꣳस ईशत ॥ ६९ ॥

प्र वीरया शुचयो दद्रिरे वामध्वर्युभिर्मधुमन्तः सुतासः। वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय ॥ ७० ॥

अदब्धेभिः अदब्धैरनुपहिंसितैः। शिवेभिः शान्तैः सुखरूपैः कीदृशस्त्वम् हिरण्यजिह्वः हिरण्यवदविचला जिह्वा यस्य सत्यवाक यद्वा हिरण्या हितरमणीया जिह्वा ज्वाला यस्येति वा हिरण्यं कस्मादित्यादि हितरमणीयं भवतीति वेति[3] यास्कोक्तेः। किञ्च नव्यसे नवीयसे नवतराय सुविताय सु इताय सुखाय अस्मान्रक्ष पालय। किञ्च माकिः मा कश्चनाघशंसः पापमाशंसमानः शत्रुः नोऽस्माकमीशत ऐश्वर्यं कुर्यात् त्वत्प्रसादात्पाप्मास्माकमीशिता मा भूदित्यर्थः। ईशत लङ् बहुलं छन्दसीति शपो लुगभावः अडभावश्च ॥ ६९ ॥

1—निघ० ३,४,१। 2—निघ० २,१०,१२। 3—निरु० २,१२।

देशमागहि देवयजनदेशं प्राप्नुहीत्यर्थः। कीदृशस्त्वम् मह्वीभिः महतीभिः ऊतिभिः अवनैः रक्षाभिः महान् योऽन्यं रक्षति स महानुच्यते ॥ ६५ ॥

त्वमिधहस्ते हे ऐन्द्री पथ्याबृहतीसतोबृहत्यौ। प्रकृष्टा तूर्तिर्हिंसा येषां यत्र वा ते प्रतूर्तय शत्रवः संग्रामा वा तेषु प्रतूर्तिषु हे इन्द्र त्वं विश्वाः सर्वाः स्पृधः स्पर्धमानाः शत्रुसेनाः अभि असि अभिभवसि। किञ्च यतः त्वं विश्वतूरसि विश्वा-

त्वमिन्द्रप्रतूर्तिष्वभिविश्वाअसिस्पृधः ॥ अशस्तिहाजनिताविश्वतूरसित्वन्तूर्यतरुष्यतः ॥ ६६ ॥

अनुतेशुष्मन्तुरयन्तमीयतुःक्षोणीशिशुन्नमातरा। विश्वास्तेस्पृधःश्नथयन्तमन्यवे वृत्रंयदिन्द्रतूर्वसि ॥ ६७ ॥

यज्ञोदेवानाम्प्रत्येतिसुम्नमादित्यासोभवतामृडयन्तः। आवोऽर्वाचीसुमतिर्ववृत्यादंहोश्चिद्यावरिवोवित्तरासत् ६८

न्सर्वान्रिपून् तूर्यते हिनस्ति विश्वतूः ततः तरुष्यतः हनिष्यतः शत्रून् तूर्य जहि मारय। कीदृशस्त्वम् अशस्तिहा नास्ति शंसा प्रशस्तिर्येषां ते अशस्तयः दुष्टास्तान् हन्तीत्यशस्तिहा। जनिता जनयिता स्वपक्षप्रशंसोत्पादकः ॥ ६६ ॥ १—निरु०१०,१०।

हे इन्द्र क्षोणी द्यावापृथिव्यौ ते तव शुष्मं बलमन्वीयतुः अनुगच्छतः द्यावापृथिवीस्था लोकास्त्वद्बलं बहु मन्यन्ते इति भावः। कीदृशं शुष्मं तुरयन्तं शत्रुषु त्वरामाविष्कुर्वन्तम्। अनुगमने दृष्टान्तः मातरौ मातापितरौ शिशुं न शिशुमिव यथा पितरौ बालमनुगच्छतः यस्य बलाद् द्यावापृथिव्यावप्यबिभीतामिति यास्कः। तदेव प्रपञ्चयति विश्वा इति विश्वाः सर्वाः

मरुतो नूनं निश्चितं त्वामनु मदन्ति हर्षयन्ति तर्पयन्ति वा। हे इन्द्र तैर्मरुद्भिः सगणः गणसहितः सन् सोमं पिब मरुत्व-
तीयादिग्रहं पिबार्हम्। अहिहत्ये हनेर्भावे हनस्त चेति क्यप् कृदुत्तरपदसमासः। अवर्धन् भेः सार्वधातुकत्वेऽपि छन्द-
स्युभयथेति आर्धधातुकत्वे णिलोपः यङ्लयोगाभावात् आभावः। गवाशिरिति बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्व-
पदस्वरः। अनुमदन्ति भेः सार्वधातुकानुदात्तत्वे धातुस्वरः तिङि चोदात्तवतीति गतेर्निघातः॥ ६३॥

गौरीवितिदृष्टा। हे इन्द्र त्वं सहसे बलाय जनिष्ठा अजनिष्ठाः जातोऽसि लुङ् अडभावः। कीदृशाय सहसे तुराय त्वरमाणाय वेगवते। कीदृशः त्वम् उग्रः उत्कृष्टः। मन्द्रः स्तुत्यः ओजिष्ठः अत्यन्तमोजस्वी ओजिष्ठः विन्मतोर्लुगिति

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः। अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा॥ ६४॥

आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि। महान्महीभिरूतिभिः॥ ६५॥

विनो लुक्। बहुलाभिमानः सर्वं जगदस्मद्विभूतिरिति भूयिष्ठाभिमानः। अत्र वृत्रवधे ईदृशमिन्द्रं मरुतश्चित् मरुतोऽपि अवर्धन् स्तुतिसहायाभ्यामिति शेषः। इदं चेन्द्रसौभाग्यं गर्भकालीनमित्याह यत् यस्मात् माता अदितिः धनिष्ठा धन्या वीरमिन्द्रं दधनत् गर्भं धारितवती नकार उपजनः॥ ६४॥

वामदेवदृष्टा गायत्री। तु इति निपातः क्षिप्रवचनः ऋचि तुनुघेत्यादिना तस्य संहितायां दीर्घः। वृत्राणामावरकाणां पाप्मनां हन्ता वृत्रहा हे वृत्रहन् हे इन्द्र त्वं नोऽस्मान् प्रति तु क्षिप्रम् आ आगच्छेत्यर्थः आगत्य चास्माकमर्धमस्मन्निवास-

भरद्वाजदृष्टा ऐन्द्राग्नी गायत्री। वयमिन्द्राग्नी हवामहे आह्वयामः कीदृशाविन्द्राग्नी उग्रौ उद्गूर्णबलौ। मृधो हिंसकान्विघनिनौ विशेषेण हन्तौ नाशयतस्तौ विघनिनौ हन्तेर्घः। ता तौ आहूतौ इन्द्राग्नी नोऽस्मान् ईदृशे भयानके सङ्ग्रामे कर्मणि वा मृडातः मृडयतः सुखयतः॥ ६१॥

देवलदृष्टा सोमदेवत्या गायत्री। हे नरो यज्ञनेतारः ऋत्विजः अस्मै इन्दवे सोमाय उपगायत उद्गात्रमाज्ञमनुसृत्योपगायत्यत

उग्राविघनिनामृधइन्द्राग्नीहवामहे। तानोमृडातईदृशे॥ ६१॥

उपास्मैगायतानरःपवमानायेन्दवे। अभिदेवाँ२॥ऽइयक्षते॥ ६२॥

येत्वाहिहत्येमघवन्नवर्धन्येशाम्बरेहरिवोयेगविष्टौ। येत्वानूनमनुमदन्तिविप्राःपिबेन्द्रसोमंसगणोमरुद्भिः॥६३॥

स्तोत्राणि कुरुतेत्यर्थः। कीदृशायेन्दवे पवमानाय पव गतौ पवते दशापवित्राद्द्रोणकलशं गच्छति पवमानस्तस्मै। देवान् यष्टव्यानभि सम्मुखमियक्षते यष्टुमिच्छते यजेः सनि छान्दसोऽभ्यासयकारलोपः॥ ६२॥

विश्वामित्रदृष्टाद्या हे त्रिष्टुभौ इन्द्रदेवत्यास्तिस्रः। हे मघवन्धनवन् ये मरुतो गणदेवाः अहिहत्ये वृत्रहननरूपे कर्मणि त्वा त्वामवर्धन् जहि वीरयस्वेत्यादिवचोभिस्ते वृद्धिमकुर्वन्। हे हरिवः हरिनामकाश्वयुक्त शाम्बरे शम्बरसम्बन्धिनि युद्धे ये त्वामवर्धन्। ये च मरुतो गविष्टौ गवां पणिभिरपहृतानामिष्टौ प्रत्याहरणेच्छायां ये त्वामवर्धयन्। ये च विप्राः मेधाविनो

सुख्यो भवति। एवमधियज्ञं मन्त्रो व्याख्यातः। बह्वृचानां तु संवादसूक्तमिदम्। तत्र पणिभिरसुरैर्देवगोधनेऽपहृते इन्द्रेण देवशुनी तन्नीत्यै प्रेरिता तदभिप्रायेण व्याख्यायते। सरमा देवशुनी इन्द्रेण गवन्वेषणाय प्रहिता सती यदि यदा अद्रेः गिरेः रुग्णं भग्नम् द्वारम् विदत् अविदत् अलभत् तदा इन्द्रः पाथः हविरन्नं कः अकार्षीत् तस्यै दत्तवान्। ततः सुपदी शोभन-पादयुक्ता सा सरमा अक्षराणां क्षरणेन नाशेन रहितानामनुपद्रुतानां गवाम् अग्रं प्रान्तं नयत् अनयत् प्राप्नोत्। प्रथमा प्रथमम् रवं गवां हम्भारवं जानती सती अच्छ गवामभिमुखं गात् अगात् जगाम। कीदृशं पाथः मही महत्। पूर्व्यं पूर्वं प्रेषणकाले अन्नादिनीं ते प्रजां करिष्यामीति प्रतिज्ञातम्। सध्र्यक् सध्रीचीनमितरैरपि सह भोज्यम्। विदत् विदॢ

**नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारमग्नेः। एमेनमवृधन्नमृता अमर्त्त्यंवैश्वानरंक्षैत्रजित्यायदेवाः ॥६०॥**

लाभे पुषादीत्यादिना च्लेरङादेशः अडभाव आर्षः। सरमा सृ गतौ औणादिकोऽमप्रत्ययः सरमा सरणादिति यास्कः। रुग्णम् रुजो भङ्गे निष्ठायामोदितश्चेति नत्वम्। पाथः पातीति पा रक्षणे अन्नम् असुन्प्रत्ययस्य थुडागमः। कः करोतेर्लुङि मन्त्रे घसह्वरेत्यादिना च्लेर्लुकि रूपम्। सुपदी पादोऽन्यतरस्यामिति ङीप्। गात् इणो गा लुङि ॥ ५९ ॥

विश्वामित्रदृष्टा त्रिष्टुब्वैश्वानरी। देवाः वैश्वानरात् विश्वेभ्यो हितात् अग्नेः अन्यं स्पशं दूतं पुरएतारं सर्वकार्येषु पुरःसरं च नहि अविदन् नालभन्त नहिशब्दो निषेधवाची। स्पशः प्रणिधिरुच्यते। पुर एति गच्छति पुरएता तम्। आ ईम् निपातौ अथार्थौ अमृता देवाः एनं वैश्वानरमवृधन् अवर्द्धयन् कीदृशमग्निम् अमर्त्यममरणधर्माणम् किमर्थमवृधन् क्षैत्रजित्याय क्षत्रमेव क्षैत्रं तस्य जित्यं जयस्तस्मै यजमानस्य क्षेत्राय ॥ ६० ॥

आश्विनौ द्वयोरश्विनोरेकस्य दस्र इति नामापरस्य नासत्य इति। हे दस्रौ दर्शनीयौ हे नासत्यौ न असत्यौ सत्यवादिनावित्यर्थः। युवामायातमागच्छतम् यतः सुताः अभिषुताः सोमा इति शेषः। कीदृशाः सोमाः युवाकवः युवां कामयन्ते ते युवाकवः मां पिबतमितीच्छन्तः यद्वा युवन्ति अग्नौ मिश्रीभवन्ति युवाकवः कटिकुषिभ्यां काकुरिति बहुलग्रहणात्काकुप्रत्ययः। वृक्तबर्हिषः वृक्तं बर्हिर्येन ते। कीदृशौ युवां रुद्रवर्तनी रुद्रस्येव वर्तनिः पन्था ययोस्तौ रुद्रवद्गमनशीलौ। तस्मतथा (७,१२) अयंवेनः (७,१९)एते द्वे प्रतीकोक्ते ॥ ॥ ५८

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः। आ यातꣳ रुद्रवर्तनी ॥ तस्मतथा। अयंवेनः ॥ ५८ ॥

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यꣳ सध्र्यक्कः। अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥ ५९ ॥

कुशिकदृष्टा त्रिष्टुप् इन्द्रदेवत्या। सह रमन्ते देवा विप्रा वा यस्यां सा सरमा वाक्। प्रथमा आद्या सरमा लक्षीलक्षणा वाक् अच्छ यज्ञाभिमुखं गात् आगच्छति यज्ञं प्रतिपादयतीत्यर्थः। कीदृशी सरमा सुपदी शोभनानि पदानि सुप्तिङन्तानि यस्यां सा। अक्षराणामकारादीनां रवं शब्दं जानती आपयन्ती अन्तर्भूतण्यर्थः। तां सरमां यदि चेत् विदत् जानीयात् अध्वर्युः तर्हि पाथः सोमलक्षणमन्नं कः कुर्यात् वेदानभिज्ञस्य सोमकण्डनानधिकारात्। कीदृशं पाथः अद्रेः रुग्णम् विभक्तिव्यत्ययः अद्रिणा सोमाभिषवग्रावणा रुग्णमभिषुतम्। महि महत्। पूर्व्यं पूर्वं दृष्टीतमुपांश्वन्तर्यामैन्द्रवायवादिपात्रेषु। सध्र्यक् सहाञ्चति वृद्धस्य सध्रिः सहैव हवनाय गच्छत। अग्रं नयत् अग्रं मुख्यत्वं यजमानं प्रापयत् यज्ञेन यजमानो

यिम् बृहद्रयिर्यस्य तम् महाधनम् । विश्ववारम् विश्वेन विश्वैः वरणीयम् विश्वं वृणोतीति वा सर्वव्यापकम् । रथप्राम् रथं प्राति पूरयति रथप्राः तम् यजमानाय दातुं धनैः रथं पूरयति । ध्रुतयामा व्यत्ययः ध्रुतयामानम् ध्रुतत् दीप्यमानं याम यमनं नियमनं यस्य तम् । नियुतः पत्यमानः उभयत्रविभक्तिव्यत्ययः नियुद्भिरश्वैः पत्यमानं गच्छन्तम् । कविं क्रान्तदर्शनम् । ईदृशं वायुं यजेत्यर्थः (७, ८) ॥ ५५ ॥

व्याख्याता ॥ ५६ ॥

इन्द्रवायूइमेसुताउपप्रयोभिरागतम् । इन्दवोवामुशन्तिहि ॥ ५६ ॥

मित्रंहुवेपूतदक्षंवरुणञ्चरिशादसम् । धियंघृताचींसाधन्ता ॥ ५७ ॥

हे मधुच्छन्दोदृष्टे गायत्र्या आद्या लिङ्गोक्तदेवत्या । मित्रं वरुणं चाहं हुवे आह्वयामि । कीदृशं पूतदक्षम् पूतं पवित्रं सदाचारं दक्षयति धनपुत्रादिभिर्वर्धयति पूतदक्षस्तम् दक्ष कम्पृद्धोरित्यस्माण्णिजन्तात्कर्मण्यण् । रिशादसम् रिशन्ति हिंसन्ति रिशा दुष्टाः तान्समन्तादसति नाशयति रिशादसः तम् रिश हिंसायाम् दस उपक्षये । द्वयोर्विशेषणे । कीदृशावुभौ धियं कर्म साधन्ता साधयन्तौ । कीदृशीं धियं घृताचीम् घृतमच्यते हूयते यत्र तम् ॥ ५७ ॥

ये चाग्निजिह्वाः वह्निमुखाः उत वा अपि च यजत्राः यजनीयाः ते सर्वे यूयमिमं मे मत्कृतं हवमाह्वानं शृणुत श्रुत्वा चास्मिन् बर्हिषि आसद्योपविश्य मादयध्वं तृप्यध्वम् ॥ ५३ ॥

वामदेवदृष्टा जगती सावित्रप्रहस्य पुरोरुक्। हे सवितः हि निश्चितं प्रथममुदयसमये यज्ञियेभ्यः यज्ञार्हेभ्यो देवेभ्यः त्वमुत्तमं भागममृतत्वमग्निहोमरूपं सुवसि प्रेरयसि षू प्रेरणे तुदादिः अभ्यनुज्ञानासीत्यर्थः। कीदृशं भागममृतत्वममृतप्रदमित्यर्थः कार्यकारणयोरभेदेन निर्देशः। आत् इत् अनन्तरमेव उदयानन्तरम् दामानम् ददाति प्रकाशमिति दामा रश्मिसमूहः तं व्यूर्णुषे विहणोषि विस्तारयसि। ततो मानुषेभ्यः जीवितानि जीवनहेतूनि कर्माणि व्यूर्णुषे सूर्योदयानन्तरमेव प्राणिनां

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वꣳ सुवसि भागमुत्तमम्। आदिद्दामानꣳ सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥ ५४ ॥

प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारꣳ रथप्राम्। द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥ ५५ ॥

कर्मसु प्रवृत्तेः कीदृशानि जीवितानि अनूचीनानि अन्वञ्चन्ति तान्यनूचीनानि रश्मिसमूहानुगतानि तमसि तदभावात्। लौकिकवैदिकव्यवहारप्रवर्त्तयिता त्वमेवेत्यर्थः ॥ ॥ इति वैश्वदेवस्तुच्चतुर्थमहः। समाप्तोऽयं सर्वमेधः ॥ ५४ ॥

अथ पञ्चदशपञ्चदशर्चास्त्रयोऽनुवाकाः पुरोरुचोऽनारभ्याधीताः श्रौतकर्मण्यविनियुक्ताः ब्रह्मयज्ञार्थाः आदित्ययाज्ञवल्क्यदृष्टाः पितृमेधपर्यन्तम्। ऋजिश्वदृष्टा त्रिष्टुप् वायुदेवत्या। प्रकर्षेण यजति प्रयज्युः हे प्रयज्यो अच्छा बृहती मनीषा महत्या बुद्धा कृत्वा अच्छ आभिमुख्येन त्वं वायुं प्र इयक्षसि प्रकर्षेण यष्टुमिच्छसि। कीदृशः त्वम् कविः ज्ञानी। कीदृशं वायुं बृहद्र-

अर्वाञ्च इत्यस्य प्रथमा पुरोरुक्। यजन्ते त्रायन्ते यजत्राः यष्टव्या वा हे यजत्राः देवाः अद्य यूयमर्वाञ्चः अस्मदभिमुखाः भवत दीर्घो संहितायाम्। यतो भयमानः बिभ्यत् अहं वो युष्माकं हार्दि हृदि भवं मनः आव्ययेयम् आगमयेयमभिमुखं सम्पादयेयमित्यर्थः। व्यय गतौ णिजन्तः। भिञो व्यत्ययेन शपि भयमानः। किञ्च हे यजत्राः देवाः नोऽस्मान् वृकस्य वृकात् त्राध्वम् पालयत कर्तात् कूपाच्च त्राध्वम्। कीदृशाद्वृकात् निजुरः जूरी बधे नितरां जूर्यते हिनस्ति निजूः क्विप्

अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम्। त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥ ५१

विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः। विश्वे नो देवा अवसागमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥ ५२

विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ॥ ५३

तस्मान्निजुरः हिंसकात्। कीदृशात्कर्तात् अवपदः अवाचीनाः पादन्यासा यत्र सः अवपात् तस्मादवपदः सोपानैर्यत्रोत्तरीतुं शक्यत इत्यर्थः ॥ ५१ ॥

विश्वे अद्येत्यपुनराधेये। (१८,३१) व्याख्याता ॥ ५२ ॥

विश्वे देवा इत्यग्रहस्य दशा अयणे विनियुक्ता। हे विश्वे देवाः ये यूयमन्तरिक्षे स्थ भवथ ये च द्यवि उप स्वर्गसमीपे स्थ

वत्सारदृष्टा जगती सप्तममरुत्वतीयपुरोरुक्। इन्द्राग्नी मित्रावरुणौ अदितिम् स्वः आदित्यम् पृथिवीम् द्यां द्युलोकम् मरुतः पर्वतान् अपः विष्णुम् पूषणम् ब्रह्मणस्पतिम् भगम् शंसं स्तुत्यं सवितारम् एतान् नु क्षिप्रमूतयेऽवनायाहं हुवे आह्वयामि ॥ ४९ ॥

पञ्च त्रिष्टुभः आद्या प्रगाथदृष्टा माहेन्द्रपुरोरुक्। यो नरः शंसते शस्त्राणि शंसति स्तुवते स्तौति स्तोत्राणि प्रकर्षेण जपति पज्रः प्रार्जितधनः सन् धायि दधाति हवींषि तान् अस्मांश्च यजमानान् देवा अवन्तु पान्तु पज्रः पृषोदरादिः। कीदृशा देवाः अस्मे अस्मासु

इन्द्राग्नीमित्रावरुणादितिँस्वःपृथिवीन्द्याम्मरुतःपर्वताँ२॥ऽअपः। हुवेविष्णुम्पूषणम्ब्रह्मणस्पतिम्भगन्नु

शँसँसवितारमूतये ॥ ४९ ॥

अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः। यःशँसतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअस्माँ२॥ऽअवन्तुदेवाः ५०

मेहना जलस्याकारः मेहन्ति सिञ्चन्ति मेहनाः धनादिसेक्तारः। रोदयन्ति शत्रूनिति रुद्राः। पर्वतासः पर्वाणि उत्सवा विद्यन्ते येषां ते पर्वताः उत्सववन्तः पर्वमरुद्भ्यां तबिति तप्प्रत्ययः। वृत्रहत्ये वृत्रासुरवधाय भरहूतौ भरे संग्रामे हूतिराह्वानम् तत्र सजोषाः समानो जोषः प्रीतिर्येषां ते एकमतय इत्यर्थः। इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठो येषां ते। ईदृशा देवा नोऽवन्तु ॥ ५० ॥

वरुणः मित्रश्च विश्वाभिः सर्वाभिः ऊतिभिः अवनैः रक्षणप्रकारैः प्राविता प्रकर्षेण रक्षको भुवत् भवतु भवतेर्व्यत्ययेन तुदादित्वात् शप्रत्ययः इतश्च लोप इति तिप इलोपः धातोरुवङ् । किञ्च मित्रावरुणौ नोऽस्मान्सुराधसः शोभनधनान् करतां कुरुताम् शोभनं राधो येषाम् ॥ ४६ ॥

कुसीदिदृष्टा गायत्र्याश्विनपुरोरुक् । हे इन्द्र हे विष्णो हे मरुतः हे अश्विना अश्विनौ नोऽस्माकमेषां सजात्यानां समानजातीयानामधि सजात्यमध्ये यूयमित आगच्छत । अत्र प्रतीकोक्ताः तम्प्रत्नथा (७,१२) शुक्रग्रहे अयंवेनः (७,१६) मन्थिग्रहे येदेवासः (७,१९) आग्रयणस्य आनइडाभिः (१३,१४) ध्रुवस्य विश्वेभिःसोम्यम्मधु (३३,१०) ऐन्द्राग्नस्य ओमासश्चर्षणीधृतः (७,३३)वैश्वदेवस्य ग्रहस्य ॥ ४७ ॥

अधिनइन्द्रैषांविष्णोसजात्यानाम् । इतामरुतोअश्विना ॥ तम्प्रत्नथा । अयंवेनः । येदेवासः ।

आनइडाभिः । विश्वेभिःसोम्यम्मधु । ओमासश्चर्षणीधृतः ॥ ४७ ॥

अग्नइन्द्रवरुणमित्रदेवाःशर्धःप्रयन्तमारुतोतविष्णो । उभानासत्यारुद्रोअधग्नाःपूषाभगःसरस्वतीजुषन्त ॥ ४८ ॥

प्रतिक्षत्रदृष्टा त्रिष्टुप् मरुत्वतीयपुरोरुक् । हे अग्ने हे इन्द्र हे वरुण हे मित्र हे देवाः हे मारुत मरुद्गण उतापि हे विष्णो यूयं शर्धः बलं प्रयन्त प्रयच्छत दत्त यमेः शपो लुक् । एवं प्रत्यक्षमुक्त्वा परोक्षमाह उभा नासत्या उभौ नासत्यावश्विनौ रुद्रः अध अथ ग्नाः देवपत्न्यः पूषा भगः सरस्वती च जुषन्त जुषन्तां सेवन्तां हवींषि ॥ ४८ ॥

आगच्छतः इ काव्यसमगतिव्याप्त्यादौ व्यत्ययेन तङ्। कीदृशो वायुः नियुत्वान् नियुतो नियुत्सञ्ज्ञा अश्वाः सन्त्यस्य सः नियुतो वायोरित्युक्तेः। कस्मिन् काले अक्तोः रात्रेः उषसः दिनस्य पूर्वहूतौ पूर्वा चासौ हूतिश्च पूर्वहूतिस्तस्याम् प्रथमाह्वानकाले अग्निहोत्रहोमकाले इत्यर्थः। उषसः पूर्वाह्वाने पूषा रविरायाति रात्रौ वायुः वायुना वायुमत्त्वादग्निर्नेष्यते रात्रिर्होमस्याग्निदैवत्यत्वात्। तत्र दृष्टान्तः कानिव विश्पतीव यथा विशां पती द्वौ राजानौ विशां वीरिटे मनुष्याणां गणे आगच्छतस्तद्वत् तावपि तेषां स्वस्तये इयाते। एषां केषाम् येषां बर्हिः प्रवाञ्जे प्रवृज्यते प्रस्तीर्यते वृजी वृजित्यागयोः लिट् अभ्यासदीर्घः संहितायाम्। कीदृशं बर्हिः सुप्रयाः शोभनं प्रयः प्रगमनं प्रस्तरणं यस्य तत्सुप्रयः दीर्घश्छान्दसः सम्यक् विधिना प्रस्तीर्णमित्यर्थः। वीरिटशब्दो गुणवाचकः तथाच यास्कः

इन्द्रवायू बृहस्पतिम्मित्राग्निम्पूषणम्भगम्। आदित्यान्मारुतङ्गणम् ॥ ४५ ॥

वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतां नः सुराधसः ॥ ४६ ॥

प्रवृज्यते सुप्रायणं बर्हिरेषामेयाते सर्वस्य पातारौ वा पालयितारौ वा वीरिटमन्तरिक्षं भियो वा भासो वा ततिरिति गणाभिधानं वा स्यात् सोऽपि भीततनो भासस्तनयश्च अन्तरिक्षे निरालम्बनं भयम भासो नक्षत्राणां तननम् गणमपि दृष्ट्वा योद्धारो बिभ्यति भियो वी-आदेशे तनोते रिट इति[१] ॥ ४४ ॥ १——निघ॰ १,१५, १०। २—— निरु॰ ५,२८।

मेधातिथिदृष्टे द्वे गायत्र्यौ आद्या ऐन्द्रवायवस्य पुनर्ग्रहणे द्वितीया मैत्रावरुणग्रहणे। इन्द्रवायू बृहस्पतिं मित्रा विभक्तेराकारः अग्निं पूषणं भगम् आदित्यान् मारुतं मरुत्सम्बन्धिनं गणम् एतानाह्वयामि ॥ ४५ ॥

कुत्सदृष्टा त्रिष्टुप् दर्शादित्यग्रहत्रयणे विनियोगः। दीव्यन्ति दीप्यन्त इति देवाः रश्मयः हे देवाः नोऽस्मानंहसः पापात् निःपिपृत निर्गमयत अवद्यात् दुर्यशसोऽपि निःपिपृत पृथक् कुरुतं अस्माकं पापानि दुर्यशांसि च नाशयतेत्यर्थः। अद्य अस्मिन् दिने सूर्यस्य उदिता उदिते उदये अद्य सूर्योदयेऽस्मान् शुद्धान् कुरुतेत्यर्थः। अद्येत्यत्र द्व्यचोऽतस्तिङः निपातस्य चेति दीर्घः। अन्येषामपि दृश्यत इति दीर्घः पिपृतेत्यत्र। किञ्च मित्रादयः तत् अस्मद्वचनं मामहन्तां पूजयन्तु अङ्गीकुर्वन्त्वित्यर्थः। के मित्रः वरुणः अदितिः देवमाता सिन्धुः समुद्रो नदी वा पृथिवी उतापि च द्यौः स्वर्गः ॥ ४२ ॥ १—१२,७,१,६।

आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ४३ ॥

प्रवावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते। विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥ ४४ ॥

हिरण्यस्तूपदृष्टा त्रिष्टुप् सावित्रपुरोरुक्। सविता देवः हिरण्ययेन हिरण्मयेन रथेन आयाति आगच्छति। किं कुर्वन् कृष्णेन रजसा रात्रिलक्षणेन सह आवर्तमानः पुनर्भ्रमणं कुर्वन् अमृतं देवादिकं मर्त्यं मनुष्यादिकं च निवेशयन् स्वस्वप्रदेशेषु स्थापयन् भुवनानि पश्यन् कानि साधु कुर्वन्ति कान्यसाध्विति विचारयन् ॥ तृतीयं सूर्यस्तुदुक्थमहः समाप्तम् ॥ ४३ ॥

अथ चतुर्थमहः वैश्वदेवस्तुत्। तथाच श्रुतिः वैश्वदेवं चतुर्थमहर्भवति वैश्वदेवा ग्रहा भवन्ति वैश्वदेव्यः पुरोरुच इति। वैश्वदेवस्तुति चतुर्थेऽह्नि एकादश पुरोरुचः षट् प्रतीकोक्ताः इति सप्तदश ऐन्द्रवायवादिसावित्रान्तग्रहाणां पुरोरुचो ग्रहणमन्त्राः। वसिष्ठदृष्टा त्रिष्टुप् ऐन्द्रपुरोरुक्। एषां यजमानानां स्वस्तये कल्याणाय वीरिटेऽन्तरीक्षे वर्तमानो वायुः पूषा च आ इयाते

श्रेष्ठोऽसि केन मह्ना महत्त्वेन। कीदृशः त्वम् असुर्यः असवः प्राणा येषां सन्ति तेऽसुराः तेभ्यो हितोऽसुर्यः प्राणिहितः। पुरोहितः पुरोऽग्रे हितः स्थापितः सर्वकार्येषु पुरः पूज्यः सर्वदेवानां सूर्यार्घ्यदानानन्तरमेव पूजाधिकारात्। विभु व्यापकमदाभ्यमनुपहिंस्यं ज्योतिः तेजस्त्वमेव तेजोरूप इत्यर्थः ॥ ४० ॥

ऋषिवद्दृष्टा बृहती। आदित्यस्य पुनर्ग्रहणम्। श्रयन्त इति आयन्तः श्रिञ् सेवायाम् अतः अतरि अपि गुणे प्राप्ते व्यत्ययेन वृद्धिः इव एवार्थः। सूर्यं श्रयन्तः आश्रयन्तः एव अर्थाद्रश्मयः इन्द्रस्य विश्वा इत् विश्वानि सर्वाण्येव वसूनि धनानि वृष्टिधान्य-

श्रायन्तइवसूर्यं विश्वेदिन्द्रस्यभक्षत। वसूनिजातेजनमानओजसाप्रतिभागन्नदीधिम ॥ ४१ ॥

अद्यादेवाउदितासूर्यस्यनिरंहसःपिपृतानिरवद्यात्। तन्नोमित्रोवरुणोमामहन्ताम-

दितिःसिन्धुःपृथिवीउतद्यौः ॥ ४२ ॥

निष्पत्त्यादीनि भक्षत अभक्षत भजन्ते विभजन्ते प्राणिभ्यो विभज्य ददतीत्यर्थः भज भागसेवयोः अस्य लङि तङि प्रथम-बहुवचने रूपम् अडभाव आर्षः आत्मनेपदेष्वनत इति झस्यादादेशः। सूर्यकिरणा इन्द्रदत्तां वृष्टिं भूमौ विभजन्तीत्यर्थः। किञ्च वयं तान्येव वसूनि जाते पुत्रे जनमाने उत्पद्यमाने च ओजसा तेजसा सह प्रतिदीधिम धारयाम स्थापयामेत्यर्थः। किमिव भागं न भागमिव यथा स्वभागं पुत्रादिषु धारयामस्तथेत्यर्थः धि धृतौ लङ् व्यत्ययेन अपः श्लुः द्वित्वम् तुजादित्वादभ्यासदीर्घः ॥ ४१ ॥

सूर्यो द्योः द्युलोकस्योपस्थे उत्सङ्गे मित्रस्य वरुणस्य च तद्रूपं रूपं कुरुते येन रूपेण जनानभिचष्टे अभिवृष्टे पश्यति मित्ररूपेण सुकृतिनोऽनुगृह्णाति वरुणरूपेण दुष्कृतिनो निगृह्णातीत्यर्थः। अस्य सूर्यस्य अन्यत् एकं पाजो रूपमनन्तम् कालतो देशतश्चापरिच्छेद्यम् रुशत् शुक्लं दीप्यमानं विज्ञानघनानन्दं ब्रह्मैव। अन्यत् कृष्णं द्वैतलक्षणं रूपं हरितः दिशः इन्द्रियवृत्तयो वा सम्भरन्ति धारयन्ति। इन्द्रियग्राह्यं द्वैतरूपमेकम् एकं शुद्धं चैतन्यमद्वैतमिति द्वे रूपे सूर्यस्य सगुणनिर्गुणं ब्रह्म सूर्य एवेत्यर्थः॥ पाज इति बलनाम[1] इह रूपमुच्यते। रोचतइति रुशत् औणादिकेऽति प्रत्यये चकारस्य शकारो गुणाभावश्च निपात्यते यद्वा रुश हिंसायाम् कृत्यर्थे वर्तमानादस्माल्लटः शतरि रुशदिति रूपम्॥ ३८॥

१—निघ० २,९,२।

बयमहाँ२॥असिसूर्यबडादित्यमहाँ२॥असि। महस्तेसतोमहिमापनस्यतेद्धादेवमहाँ२॥असि॥ ३९॥

बटसूर्यश्रवसामहाँ२॥ सिसत्रादेवमहाँ२॥असि। मह्नादेवानामसुर्यःपुरोहितोविभुज्योतिरदाभ्यम्॥ ४०॥

जमदग्निदृष्टे द्वे बृहतीसतोबृहत्यौ। आद्या माहेन्द्रपुरोरुक्। बडित्यव्ययं सत्यार्थम्। हे सूर्य सुवति प्रेरयति कार्येषु जगदिति सूर्यः राजसूयसूर्येत्यादिना क्यबन्तो निपातः। बट् सत्यं त्वं महान् असि श्रेष्ठोऽसि। आदत्तेऽशूनित्यादित्यः हे आदित्य बट् त्वं महानसि। किञ्च महः महतः सतः नित्यस्य ते तव महिमा पनस्यते लोकैः स्तूयते। हे देव दीप्यमान अद्धा सत्यं त्वं महानसि अभ्यासे भूयांसमर्थं मन्यन्तइति पुनरुक्तिरादरार्था॥ ३९॥

आदित्यग्रहप्रथमग्रहणम्। हे सूर्य बट् सत्यं श्रवसा धनेन यशसा वा त्वं महानसि। हे देव सत्यं त्वं महानसि देवानां मध्ये

प्रस्कण्वदृष्टा गायत्री वैश्वदेवपुरोरुक्। हे सूर्य त्वं ज्योतिष्कृत् तेजसः कर्त्तासि विश्वमाभासि प्रकाशयसि च अग्निविद्युन्नक्षत्रचन्द्रग्रहतारकादिषु त्वदीयं तेज इत्यर्थः। कीदृशं विश्वं रोचनं दीप्यमानं त्वत्प्रकाशेनेति भावः। कीदृशस्त्वम् तरणिः तरत्यतिक्रामति नभोवर्त्मेति तरणिः अर्त्तिसृधृधम्यश्यवितॄभ्योऽनिरिति तरतेरनिप्रत्ययः। विश्वदर्शतः विश्वस्य दर्शतो दर्शनीयः दृशेरतच्॥ ३६॥

कुत्सदृष्टे द्वे त्रिष्टुभौ मरुत्वतीययोः पुरोरुचौ। सूर्यस्य तत् देवत्वं देवतानुभावः तच्च महित्वं महाभाग्यमैश्वर्यम् तत्किं कर्तोः ईश्वरे तोसुन्कसुनाविति करोतेस्तोसुन्प्रत्ययः कार्यस्थस्य जगद्रूपस्य मध्ये विततं विस्तारितमंशुजालं सञ्जभार सञ्जहार संह-

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्वमाभासि रोचनम्॥ ३६॥

तत्सूर्यस्य देवत्वन्तन्महित्वम्मध्या कर्तोर्विततꣳ सञ्जभार। यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै॥ ३७॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपङ्कृणुते द्योरुपस्थे। अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति॥ ३८॥

रति न ह्यन्य एतादृशमंशुजालं प्रसारयितुं संहर्तुं वा शक्नोतीत्यर्थः। किञ्च यदा इत् यदैव हरितः हरितवर्णानश्वानयुक्त युङ्क्ते आत्मनि आरोपयति सधस्थात् सह तिष्ठन्त्यश्वा यत्र तत्सधस्थं व्योममण्डलम् सध मादस्थयोश्छन्दसीति सहस्य सधादेशः सन्ध्याकाले पीतवर्णानश्वान्यदा व्योममण्डलात्स्वस्मिन्योजयति। आत् अनन्तरमेव रात्री निशा सिमस्मै वासः तनुते सर्वं वस्तु तमसाच्छादयतीत्यर्थः सूर्यास्तादनन्तरं रात्रिसद्भावात्। सिमशब्दः सर्वपर्यायः॥ ३७॥

हवींषि कुरुतमित्यर्थः । तस्मवथा (७।१२ प्रयंवेनः (७,११) चितस्देरानाम् (७,१२) तिस्त्रः प्रतीकोक्ता: पादो हे एकमन्त्रिपुरोहवो तृतीयाध्यायस्य ॥ ३३ ॥

अगस्त्यदृष्टा त्रिष्टुप् भुवपुरोवक् । विश्वानरो विश्वनरहितकारी सविता देवः नोऽस्माकं विदथे यज्ञगृहे आ एतु आगच्छतु। कथम् इडाभिः सुशस्ति यथा स्यात्तथा इडाभक्षणेन शोभना शस्तिः शंसनं प्रसंशा यस्यां क्रियायां तथा यथा सर्वे इडां भक्षयन्ति तथा एत्वित्यर्थः । यद्वा सुशस्ति विभक्तिलोपः कीदृशे यज्ञगृहे सुशस्ति सुशस्तौ इडाभिः शोभनप्रशंसायुक्ते । एवं सूर्यमुक्त्वा देवानाह । हे युवानः जरारहिता देवा अपि निपितम् अभिपित्वे अभिपतने आगमनकाले यथा येन प्रकारेण यूयं मत्सथ मद तृप्तौ तृप्तथ

आनइडाभिर्विदथेसुशस्तिविश्वानरःसविताद्देवएतु । अपियथायुवानोमत्सथानोविश्वञ्जगदभिपित्वेमनीषा ॥३४

यदद्यकच्चवृत्रहन्नुदगाअभिसूर्य । सर्वन्तदिन्द्रतेवशे ॥ ३५ ॥

तथा नोऽस्माकं विश्वं सर्वं जगत् गन्तृ जङ्गमं पुत्रगवादिकं मनीषा मनीषया बुद्ध्या मत्सथ मत्तभूतमर्थः तर्पयत यथा भवद्भिस्तृतिः क्रियते तथास्मत्प्रजास्तर्पणीया इत्यर्थः ॥ ३४ ॥

श्रुतकक्षसुकक्षदृष्टा गायत्री ऐन्द्राग्मपुरोवक । वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिराविति कोशात् हवमन्धकारं शार्वरं हन्ति हवहा रविः । हे वृत्रहन् हे सूर्य हे इन्द्र ऐश्वर्ययुक्त अद्य यत् कच्च यत्र कुत्रचित् त्वमभि उदगाः अभ्युदेषि तत्सर्वं ते तव वशे॰ स्थीति शेषः । यद्वा उदगाः अत्र पुरुषव्यत्ययः यत्किञ्चित्प्राणिजातमुदेति तत्सर्वं तव वशे सर्वस्येशिता त्वमेवेत्यर्थः ॥ ३५ ॥

स्थापयन् । वातजूतः वातेन प्रेरितः वातेन प्रेरितं रविमण्डलं भ्रमतीति प्रसिद्धिः ॥ अना मन्त्रेष्वाङ्यादेरात्मन इत्याकारलोपः । कृ कौटिल्ये कृ इरेन्त्वन्दसीति कृ-धादेशः ॥ ३० ॥

ऐन्द्रवायवस्य द्वितीया पुरोरुक् । व्याख्याता (७,४१) ॥ ३१ ॥

प्रस्कण्वदृष्टा गायत्री मैत्रावरुणपुरोरुक् । सर्वमेधे पक्ष्याकारेणाग्निश्चीयते तद्रूपमात्मानं कस्मादा स्मिमाप्नोति तदत्र प्रार्थ्यते । हे पावक शोधक येन चक्षसा दर्शनेन त्वं भुरण्यन्तमनुपश्यसि चिप्रपाती पक्षी भुरण्युः भुरण्युमात्मानं करोति भुरण्यति भुरण्यतीति

उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः । दृशेविश्वायसूर्यम् ॥ ३१ ॥

येनापावकचक्षसाभुरण्यन्तञ्जनाँ२॥अनु । त्वंवरुणपश्यसि ॥ ३२ ॥

दैव्यावध्वर्यूआगतꣳरथेनसूर्यत्वचा । मध्वायज्ञꣳसमञ्जाथे ॥ तम्प्रत्नथा । अयंवेनः । चित्रन्देवानाम् ॥ ३३ ॥

भुरण्यन् तस्मात् क्विबन्तात् शतृप्रत्ययः । सर्वमेधयाजिनं भुरण्युपचिद्रूपमात्मानं कृत्वा स्वर्गं गच्छन्तं येन चक्षसानुपश्यसीत्यर्थः । तेन चक्षसा अस्मानस्मानपि भुरण्यतः हे वरुण त्वं पश्य वरुणः सूर्यः ॥ ३२ ॥

आश्विनपुरोरुक् गायत्री । देवानामिमौ दैव्यौ हे दैव्यौ अध्वर्यू अश्विनौ युवां रथेन आगतमागच्छतम् शपो लुक् । कीदृशेन रथेन सूर्यत्वचा सूर्यस्येव त्वक् कान्तिर्यस्य तेन । एत्य मध्वा मधुरेण हविषा सोमपुरोडाशदध्यादिना यज्ञं समञ्जाथे युवां संश्लेषयतम् बहूनि

कुत्सदृष्टा जगती सावित्रपुरोरुक् वाममद्येत्यस्याः (८,९)स्थाने । हे इन्द्र इमां मामकीं धियं बुद्धिं स्तुतिं वा कर्म वा ते तुभ्यं प्रभरे प्रहर समर्पयामि । कीदृशस्य ते मह्नः महतः पूज्यस्य । कीदृशीं धियं महीं महतीम् यत् यस्मात् अस्य यजमानस्य धिषणा बुद्धि- र्वाम्वा स्तोत्रे क्रियमाणे तं तव आनजे त्वां व्यनक्ति कर्मणि षष्ठी अञ्जे लिट् नलोपश्छान्दसः । किञ्च देवासः देवाः तमिन्द्रमत्वम- दन् अनुमदन्ति स्तुवन्ति छन्दसि परेऽपीति अनोः परः प्रयोगः । क्व स्तुवन्ति उत्सवे अभ्युदये प्रसवे गुर्वाद्यनुज्ञायां सत्याम् यद्वा प्रसवे पुत्राद्युत्पत्तिरूपे उत्सवे इन्द्रं स्तुवन्ति । कीदृशमिन्द्रं शवसा बलेन मासहिम् सहते सासहिः शत्रूणामभिभवितारम् चो समुच्चये ॥ ॥ इन्द्रस्तुत्सञ्ज्ञं द्वितीयमहः समाप्तम् ॥ २८ ॥ १——१२,७,१,५ ।

विभ्राड्बृहत्पिबतुसोम्यम्मध्वायुर्दधद्यज्ञपतावविह्रुतम् । वातजूतोयोअभिरक्षतित्मना

प्रजाःपुपोषपुरुधाविराजति ॥ ३० ॥

अथ तृतीयमहः सूर्यस्तुत् । तथाच श्रुतिः सूर्यस्तुदुकथ्यस्तृतीयमहर्भवति तस्य सौर्या ग्रहा भवन्ति सौर्य्यः पुरोरुचः सर्वं ( ) अथ तृतीयमहः सूर्यस्तुत् । तथाच श्रुतिः सूर्यस्तुदुकथ्यस्तृतीयमहर्भवति तस्य सौर्या ग्रहा भवन्ति सौर्य्यः पुरोरुचः सर्वं सौर्यमसदिति१ । चतुर्दश पुरोरुचस्तिस्रः प्रतीकोक्ताः एवं सप्तदश ऋचः सूर्यस्तुत्सञ्ज्ञे उक्थ्यसंस्थे सर्वमेधस्य तृतीयेऽहनि । ऐन्द्र- वायवादिशाविश्वान्तानां ग्रहाणां पूर्वोक्तक्रमेण ग्रहणमन्त्रा बोध्याः । विभ्राड्दृष्टा जगती ऐन्द्रवायवपुरोरुक् । विविधं भ्राजते विभ्राट् सूर्यः सोम्यं सोमरूपं हविः पिबतु कीदृशं सोम्यं बृहत् महत् मधु मधुरस्वादम् । यः सूर्यः त्मना आत्मना प्रजाः अभि- रक्षति पालयति पुपोष पुष्णाति च पुरुधा बहुधा विराजति च शोभते । कीदृशः यज्ञपतौ यजमाने अविह्रुतमखण्डितमायुः दधत्

मित्यर्थः ॥ तिस्रः प्रतीकोक्ताः तत्र महाँइन्द्र इत्यस्याः (७,१०) महेन्द्रग्रहणे विनियोगः तृवदित्यस्याः (७,१८) स्थाने कदाचनेति(८,१-२) द्वयोरादित्यग्रहणे विनियोगः ॥ २७ ॥

गौरीवितिदृष्टा त्रिष्टुप् आदित्यग्रहस्य दधिश्रयणे विनियोगः। यज्ञो देवानामित्यस्याः(८,४)स्थाने। हे इन्द्र आयवो मनुष्याः ते तव तत्कर्म आपनन्त पूजयन्ति पनतिः पूजाकर्मा लङ् अडभाव आर्षः। ये आयवः ऊर्वम् सोमरूपमभितितृत्सान् अभितितृत्सन्ति नदितुं हिंसितुमिच्छन्ति तितृत्सन्ति उतृदिर् हिंसानादरयोः सनन्तः इतश्च लोपः परस्मैपदेष्विति अतेरिकारलोपः। सोमं सोतुमिच्छन्तीत्यर्थः। कीदृशममुं गोमन्तं गोरूदकमस्ति यस्मिन् स गोमान् तम् निम्नाभ्यालचर्णोदकयुतम् ताभिरेव सोमः सूयते।

आतत्तइन्द्रायवःपनन्ताभियऊर्वङ्गोमन्तन्तितृत्सान्। सकृत्स्वंयेपुरुपुत्रान्महीं सहस्रधाराम्बृहतीन्दुदुक्षन्॥ २८

इमान्तेधियम्प्रभरेमहोमहीमस्यस्तोत्रेधिषणायत्तआनजे। तमुत्सवेचप्रसवेचसासहिमिन्द्रन्देवासःशवसामदन्ननु २९

किञ्च ये मनुष्याः महीं भूमिं दुदुक्षन् दुधुक्षन्ति दोग्धुमिच्छन्ति दुहेः सनन्तात्लट् पूर्ववदिकारलोपः तेऽपि तव कर्म पनन्ति स्तुवन्ति। कीदृशीं महीं सकृत्स्वम् सकृदेकवारमेव सूते हिरण्यधान्यादि ददाति सकृत्सूः ताम् पुरुपुत्रां बहुपुत्राम् सर्वे पदार्थाः पृथिवीत उत्पद्यन्ते। सहस्रधारां सहस्रं धारा हिरण्यादयो यस्याः सा ताम् बहुभोगदाम् यद्वा सहस्रमसङ्ख्यं प्राणिजातं धरति सहस्रधारा ताम्। बृहतीं महतीम्। ये विप्राः सोमाभिषवं कुर्वन्ति ये च क्षत्रिया भूमिं दुहन्ति पालयन्ति ददते ते इन्द्रस्य वृत्रवधादिकर्म स्तुवन्ति नान्ये दुर्मेधस इत्यर्थः ॥ २८ ॥

मृगादिरहन्तः यंसयति स्वान् परानिति यंसो दुष्टः तमु वनेषु वनस्थान् हन्तीत्यर्थः । रमयन्ति देवान् ऋते राम्याः यायजूकाः तेषां धेनाः स्तुतिरूपा वाचः आविः अकृणोत् आविःकरोति यजमानाः स्तुवन्तीति देवेषु प्रकटयतीत्यर्थः । कीदृशः इन्द्रः अर्धनीतः अर्ध इति[1] बलनाम अर्धं चतुरङ्गे बले नीतिर्यस्य सः । वर्पणीतिः वर्प इति[2] रूपनाम वर्पं नानारूपं नयति प्राप्नोति वर्पणीतिः नानारूपधारी । उशधक् उशन्ति कामयन्ते परस्वं ते उशाश्चोरास्तान्दहति उशधक् ॥ २६ ॥

१——निघ० २,९,७ । २——निघ० ३,७,१ ।

अगस्त्यदृष्टा त्रिष्टुप् अग्रस्तमरुत्वतीयपुरोरुक् महत्वन्तमित्यस्याः (७,२९) स्थाने । इन्द्रं प्रति मरुद्वाक्यम् हे इन्द्र हे सत्पते श्रुतिस्मृत्युक्ताचाररताः सन्तः तेषां पते पालक त्वमेकः सन् कुतो यासि असहायः क गच्छसि । ते तव किमित्था गमने को हेतुः किं प्रयोजनम् ।

कुतस्त्वमिन्द्रमाहिनःसन्नेकोयासिसत्पतेकिन्तइत्था। सम्पृच्छसेसमराणःशुभानैर्वोचेस्तन्नोहरिवोयत्ते अस्मे ॥

महाँ२॥ इन्द्रोयओजसा। कदाचनस्तरीरसि। कदाचनप्रयुच्छसि॥ २७॥

थाहेतौ च छन्दसीति इदमः थाप्रत्ययः एतेतौ रथोरिति इदम इदादेशः । कीदृशस्त्वं माहिनः महितः पूज्यः निष्ठा तस्य नत्वम् धातोर्ह्रस्वश्छान्दसो यद्वा मह उत्सवोऽस्यास्तीति मही एव माहिनः स्वार्थेऽण् इनण्यनपत्य इति टिलोपाभावः । किञ्च समराणः सम्यक् गच्छन् सन् शुभानैः शोभनैः वचनैः त्वं सम्पृच्छसे कतमः पन्था इति लोकान्पृच्छसि एकाकित्वात् शोभन्ते तानि शुभानानि शानचि अपि लुप्तं रूपम् । सम्पूर्वस्यर्तेः शानचि अपि लुप्तं समराण इति । हरयोऽश्वा अस्य सन्तीति हरिवान् मतुवसो रुः सम्बुद्धौ छन्दसीति रुः हे हरिवः इन्द्र नोऽस्माकं तत् एकाकिगमनकारणं वोचेः ब्रूहि यत् यतो हेतोः अस्मे वयं ते तव त्वदीया वर्यामिति हेतोर्वक्तव्य-

रूपेण मन्दमानाय मोदमानाय । विश्वभुवे विश्वं भवति प्राप्नोति विश्वभूः तस्मै सर्वव्यापिने विश्वा भयस्यति वा विश्वं भवति तस्मादिति वा संहितायां दीर्घः । किञ्च रोदसी द्यावापृथिव्यौ यस्येन्द्रस्य एतान् पदार्थान् सपर्यतः पूजयतः कान् सुमखं शोभनं यज्ञम् सहः बलम् महि महत् श्रवो यशः नृम्णं धनं च द्यावाभूमी यस्य मखादीनि मानयतस्तं पूजयतेत्यर्थः ॥ २३ ॥

विश्वामित्रदृष्टा गायत्री ऐन्द्राग्नपुरोरुक् इन्द्राग्नी इत्यस्याः (७,३१) स्थाने । युवा समर्थः इन्द्रः येषां यजमानानां सखा सहायः एषामिन्द्रः हवन् इत् महानेव भवति । भ्रंत भरतं भार वह । स्वरुः खड्गः पृथुः विशालः । यद्वा वाहुल्यमाशास्यत इत्यर्थः ॥ २४ ॥

बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः । येषामिन्द्रो युवा सखा ॥ २४ ॥

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ २॥ अभिष्टिरोजसा ॥ २५ ॥

इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥ २६

मधुच्छन्दोदृष्टा गायत्री वैश्वदेवपुरोरुक् ओमास इत्यस्याः (७,३२) स्थाने । इन्द्र आ इहि ओमासश्चर्षणीति परुरूपम् हे इन्द्र आ इहि आगच्छ आगत्य अन्धसः अन्धसान्नेन हविर्लक्षणेन विश्वेभिः विश्वैः सर्वैः सोमपर्वभिः सोमांशुभिश्च त्वं मत्सि तृप्यस्व मद तृप्तौ शपो लुक् । कीदृशः त्वम् ओजसा तेजसा महान् श्रेष्ठः । अभिष्टिः अभीज्यत इत्यभिष्टिः अभियष्टव्यः पृषोदरादिः ॥ २५ ॥

विश्वामित्रदृष्टा त्रिष्टुप् प्रथममरुत्वतीयपुरोरुक् इन्द्रमरुत्व इत्यस्याः (७,३३) स्थाने । इन्द्रः वृत्रं दैत्यमवृणोत् युधाय वृणोति स्म । मायिनां मायिनो दैत्यान् प्रमिणात् हिनस्ति मीञ् हिंसायाम् क्र्यादिः पादित्वाद्ह्रस्वः कर्मणि षष्ठी । व्यंसमहन् हन्ति व्यंस विभागे

दधीत पुष्णाति दधातर्लिङ् नदीममोपे हि सोमीत्यस्त:। तस्मिन् सोमे सुते अभिषुते सति पासिञ्चत षमसेष्विति शेष: ऋत्विज: प्रति वचनमेतत्। कीदृशं वृषभं रोदस्यो: द्यावापृथिव्यो: श्रियं श्रीयते श्री: तम् पाश्रयम् सोमस्य जगदाधारत्वात्। अभिश्रियम् अभि सर्वत: श्री: शोभा यस्य सोऽभिश्री: तम्। तंप्रत्नथा (७,१२) अयंवेन:(७,१६) इे प्रतीकोक्ते शुक्रमन्थिनो: प्राक्ते पुरोरुचौ ॥ २१ ॥

विश्वामित्रदृष्टाग्रयणपुरोरुक् येदेवासइत्यस्या: (७,१८) स्थाने। इन्द्रस्य वृष्टिकर्मोच्यते। विश्वे देवा: आतिष्ठन्तं समन्तात् स्थितमिन्द्रं पर्यभूषन् परिरक्षितवन्त:। स इन्द्र: चरति सर्वत्र गच्छति। कीदृश: श्रियो वसान: देवानां दीप्ती: आच्छादयन्

आतिष्ठन्तम्परिविश्वेअभूषञ्छ्रियोवसानश्चरतिस्वरोचि:। महत्तद्वृष्णोअसुरस्यनामा

विश्वरूपोअमृतानितस्थौ ॥ २२ ॥

प्रवोमहेमन्दमानायान्धसोऽर्चाविश्वानरायविश्वाभुवे। इन्द्रस्ययस्यसुमखंसहोमहिश्रवोनृम्णञ्चरोदसीसपर्यत: २३

स्वरोचि: स्वं रोचिर्यस्य स: अनन्याधीनदीप्ति:। किञ्च विश्वं रूपयति निरूपयति विश्वरूप: इन्द्रो यत: अमृतानि जलानि आतस्थौ वृष्टये आस्थितवान् वृष्ण: इन्द्रस्य तत् महत् प्रसिद्धं नाम वासवो वृत्रहा इत्यादि। कीदृशस्य वृष्ण: असुरस्य असवो विद्यते यस्य सोऽसुरस्तस्य प्राणवत: सावधानस्य प्रज्ञावतइत्यर्थ: ॥ २२ ॥

सुचीकदृष्टा त्रिष्टुप् ध्रुवग्रहपुरोरुक् मूर्धानमित्यस्या: (७,२४) स्थाने। हे ऋत्विजो यूयं विश्वानराय विश्वे सर्वे नरा यजमाना यस्य तस्मै प्राप प्रार्चत वचनव्यत्यय: इन्द्रं पूजयतेत्यर्थ:। कीदृशाय महे महते। वो युष्माकमन्धस: अन्धसा अन्नेन हवी-

सोमः सूयते ता गावो वाश्रा वेदरूपा इव ता यथा सामभाप्यायन्ति तथापोऽपि। अतएव त्वं नोऽस्मानच्छ अभिमुखं याहि आगच्छ वायुर्न वायुरिव वायुर्यथा नियुतः स्थानस्थानमभियाति। हि यतः त्वं धीभिः बुद्धिभिः कर्मभिर्वा वाजानन्नानि विदयसे विविधं ददासि दय दानादौ अतएवागच्छ ॥ १८ ॥ १——निघ० २,२२,७।

तिस्रो गायत्र्यः आद्या पुरुमीढाजमीढदृष्टा ऐन्द्रवायवस्य द्वितीया पुरोरुक् इन्द्रवायू इत्यस्याः (७,८) स्थाने। गाव उच्यन्ते हे गावः अवतं कूपं आत्वालरूपं प्रति उपावत उपगच्छत दानार्थम् आत्वालान्तरेण गवां सञ्चरोऽस्ति अवत इति कूपनाम[१]। को हेतुरागमने तत्राह मही महत्यौ द्यावापृथिव्यौ यज्ञस्य रप्सुदा रप्सुदे रप्शिति रूपनाम तद्दत्तस्ते रप्सुदौ वर्तेते द्यावाभूमी यज्ञस्य शोभां

गाव उपावतावतं मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया ॥ १९ ॥

यदद्य सूर उदितेऽनागा मित्रो अर्यमा। सुवाति सविता भगः ॥ २० ॥

आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम्। रसा दधीत वृषभम् ॥ तं प्रत्नथा। अयं वेनः ॥ २१ ॥

कुरुत इति यूयमुपागच्छत। किञ्च उभा कर्णा भवतीनामुभौ कर्णौ हिरण्ययौ हिरण्मयौ अतएव दानार्थमागच्छतेत्यर्थः ॥ १९ ॥

वसिष्ठदृष्टा मैत्रावरुणपुरोरुक् अयं वामित्यस्याः (७,९) स्थाने। अद्य सूरे सूर्ये उदिते सति मित्रः अर्यमा सविता भगश्च यत्सुवाति प्रेरयति तत्कर्म कुर्यादिति शेषः। नास्ति आगोऽपराधो यस्य सोऽनागा इति चतुर्णां विशेषणम् ॥ २० ॥ २——निरु० ११,२५।

सुमीतिदृष्टाश्विनपुरोरुक् यावामित्यस्याः (७,११) स्थाने। रसा नदी रसतेः शब्दकर्मण इति[२] यास्कः। रसा नदी वृषभं वर्षितारं सोमं

सुमेधानामकद्दृष्टा त्रिष्टुप् सावित्रग्रहपुरोरुक् वाममद्यत्यस्याः (८,१) स्थाने । देवानां तत् अवः अन्नं हविर्लक्षणमद्य वयं वृणीमहे संभजामः क्व सति सवितुः सूर्यस्य सवीमनि सति आज्ञायां सत्याम् देवस्य त्वा सवितुः प्रसवइत्युक्तेः सवीमा प्रसवोऽनुज्ञेति कोशः । कीदृशे सवीमनि श्रेष्ठे अन्यदेवाज्ञातः सूर्याज्ञोत्कृष्टा । तत्किम् येनान्नेन वयं स्वस्तये स्वस्तिमन्तो भवेम । कीदृशां वयम् अग्नेः अर्यम्णि अरुणे आश्रये मित्रे वरुणे च अनागा: अनागसः सुपां सुप इति जसः सुः अग्निमित्रवरुणेष्वपराधरहिताः । कीदृश-स्याग्नेः मह: पुज्यस्य मह्यते पूज्यते मट् तस्य मह पूजायां क्विप् समिधानस्य दीप्यमानस्य ॥ १७ ॥ १—१३,७,१,४ ।

इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति तस्यैन्द्रा ग्रहा भवन्त्यैन्द्र्यः पुरोरुचः सर्वमैन्द्रमवदिति[1] सर्वमेधे श्रुतिः । ततः इन्द्रस्तुत्स्तत्र

महोअग्नेःसमिधानस्यशर्मण्यनागामित्रेवरुणेस्वस्तये । श्रेष्ठेस्यामसवितुःसवीमनितद्देवानामवोअद्यावृणीमहे ॥१७

आपश्चित्पिप्युस्तर्योनगावोनक्षन्नृतञ्जरितारस्तइन्द्र । याहिवायुर्ननियुतोनोअच्छात्वᳪंहिधीभिर्दयसेविवाजान् १८

उक्थ्यसंस्थे सर्वमेधस्य द्वितीयेऽहनि आपश्चिदित्यादि इमान्तइत्यन्ता द्वादश ऋचः तंप्रत्नथा अयंवेनः महांइन्द्रः कदाचनस्तरीः कदाचनप्रयुच्छसीति पञ्च प्रतीकोक्ताः एवं सप्तदशैन्द्रदेवत्याः ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां ग्रहणमन्त्राः ॥ ॥ वसिष्ठ-दृष्टा त्रिष्टुप् ऐन्द्रवायवस्य पुरोरुक् आ वायो इत्यस्याः (७,७) स्थाने । हे इन्द्र जरितारः स्तोतारः ऋत्विजः ते तव ऋत यज्ञं नक्षन् नक्षन्ति व्याप्नुवन्ति नक्षतिर्व्याप्तिकर्मा लङि अडभाव आर्षः । आपः चित् आपोऽपि निघण्ट्वाक्रूपाः पिप्युः आप्याययन्ति सोमं वर्धयन्ति आप्यायी इत्येतौ लिटि प्यायः पी-आदेशः । तत्र दृष्टान्तः स्तर्यो गावः इव स्तृणन्ति सुन्वन्ति याभिः ताः स्तर्यः याभिः

हे वह्न्यो आदित्यवद्बुरोवचो माथा वसिष्ठदृष्टा अन्या प्रस्कण्वदृष्टा कदाचनस्तरीरसि(८,१) कदाचनप्रयुच्छसीत्यनयोः (८,१) स्थाने। सुष्टु स्तूयते स्वाहुतः हे स्वाहुत ईऽस्मे जनानां मध्ये ये जना: गोनां गवां सम्बन्धिभिर्दुग्धदधिघृतैः सह सर्वान् यज्ञविशेषान् पुरोडाशादीन् दयन्त ददति दय दानगतिहिंसादानेषु लङ् अडभाव आर्षः। ते सूरयः पण्डिताः त्वे तव प्रियासः सन्तु। कीदृशास्ते यन्तारः निगृहीतेन्द्रियाः। मघवानः धनवन्तः। गोनामित्यत्र गोः पादान्तइति नुडागमः ॥ १४ ॥

श्रवणः इति श्रुतौ अर्थिवचःश्रोतारौ कर्णौ यस्य स श्रुत्कर्णः हे श्रुत्कर्ण देवैः सह त्वमध्वरं यज्ञं श्रुधि शृणु। कीदृशैः

श्रुधिश्रुत्कर्णवह्निभिर्देवैरग्नेसयावभिः। आसीदन्तुबर्हिषिमित्रोअर्यमाप्रातर्यावाणोअध्वरम् ॥ १५ ॥

विश्वेषामदितिर्यज्ञियानांविश्वेषामतिथिर्मानुषाणाम्। अग्निर्देवानामवआवृणानःसुमृळीकोभवतुजातवेदाः॥ १६

देवैः वह्निभिः हवींषि वहन्ति ते वह्नयः तैः। सयावभिः सह यान्ति ते सयावानः तैः। किञ्च मित्रः अर्यमा प्रातर्यावाणश्च देवाः बर्हिषि आसीदन्तु उपविशन्तु प्रातर्यान्ति हविः प्राप्नुवन्ति ते प्रातःसवने येषां हविःप्राप्तिस्ते ॥ १५ ॥

त्रिष्टुब् गोतमदृष्टादित्यवदृषिश्रयणी विनियुक्ता यज्ञो देवानामित्यस्याः(८,४) स्थाने। अग्निः ईदृशो भवतु। कीदृशः विश्वेषां सर्वेषां देवानां मध्ये अदितिः नास्ति दितिः खण्डनं यस्य अदीनः कीदृशानां देवानाम् यज्ञियानां यज्ञार्हाणाम्। तथा विश्वेषां सर्वेषां मानुषाणां नराणामतिथिः पूज्यः देवानामवो हविर्लक्षणमन्नमावृणानः समर्पयन्। सुमृळीकः शोभनं मृळीकं सुखं यस्मात् सुखकारी। जातवेदाः जातप्रज्ञानः ॥ १६ ॥

त्रिष्टुप् विश्ववारा दृष्टा द्वितीयमरुत्वतीयपुरोरुक् मरुत्वन्तं वृषभमित्यस्याः (७,१८) स्थाने। हे अग्ने त्वं शर्ध उत्सहस्व बलमाविष्कुरु किमर्थं महते सौभगाय महत्सौभाग्यं लोकस्थितिः। उदाचरतस्तव द्युम्नानि उत्तमानि उत्कृष्टानि सन्तु द्युम्नं द्योततेर्यशो वान्नं वेति यास्कः हविर्लक्षणान्यन्नानि यशांसि वा सन्तु। किञ्च जास्पत्यं जायापत्यमित्यर्थे जास्पत्यमिति निपातः जायापत्यं पत्नीयजमानरूपं सुयमं सुनियमं जितेन्द्रियमन्योन्यावरुद्धाशं समाकृणुष्व कुरु खलु यम्यते सुयमम् ईषद्दुःसुष्विति खल् प्रत्ययः। किञ्च शत्रूयतां शत्रुत्वमिच्छतां महांसि तेजांसि अभितिष्ठ आक्रमस्व अभिभव ॥ १२ ॥ १——निरु० ६,६।

अग्ने॒ शर्ध॑ मह॒ते सौभ॑गाय॒ तव॑ द्यु॒म्नान्यु॑त्त॒मानि॑ सन्तु। सं जा॑स्प॒त्यꣳ सु॒यम॒मा कृ॑णुष्व शत्रूय॒ताम॒भि ति॑ष्ठा॒ महा॑ꣳसि ॥१२॥

त्वाꣳ हि म॒न्द्रत॑ममर्कशो॒कैर्व॑वृ॒महे॒ महि॑ नः॒ श्रोष्य॑ग्ने। इन्द्रं॒ न त्वा॒ शव॑सा दे॒वता॑ वा॒युं पृ॑णन्ति॒ राध॑सा॒ नृत॑माः ॥ १३ ॥

त्वे अ॑ग्ने स्वाहुत प्रि॒यासः॑ सन्तु सू॒रयः॑। य॒न्तारो॒ ये म॒घवा॑नो॒ जना॑नामू॒र्वान्दय॑न्त॒ गोना॑म् ॥ १४ ॥

त्रिष्टुभरद्वाजदृष्टा माहेन्द्रग्रहपुरोरुक् इन्द्रो नृवदित्यस्याः (७,२९) स्थाने। हे अग्ने वयं त्वां ववृमहे वृतवन्तः कीदृशं त्वां मन्द्रतममतिगम्भीरम् कैः अर्कशोकैः अर्कवत् शोचन्तोऽर्कशोका मन्त्रास्तैः अविप्लुतब्रह्मचर्यैर्यथोक्तमधीता मन्त्रा अर्कवद्दीप्ताः स्युरिति भावः। हि यस्मात् नोऽस्माकं महि महत् स्तोत्रं त्वं श्रोषि शृणोषि विकरणव्यत्ययः। किञ्च नृतमाः मनुष्यश्रेष्ठाः देवता देवतां त्वा त्वां राधसा हवीरूपेणान्नेन पृणन्ति पूरयन्ति देवताशब्दात्सुपो लुक्। कीदृशं त्वां शवसा बलेन इन्द्रं न इन्द्रमिव वायुमिव च स्थितम् न इवार्थे उभयोः सम्बध्यते ॥ १३ ॥

द्रविणस्यति सुप आत्मनः क्यच् क्याच्छन्दसीति क्यजन्तादुप्रत्ययः हविर्लक्षणं धनमिच्छन्। समिद्धः दीप्तः। शुक्रः शुद्धः। आहुतः निमन्त्रितः॥ ९॥

गायत्री मेधातिथिदृष्टा वैश्वदेवग्रहपुरोरुक् ओमासश्चर्षणीत्यस्याः (७,३३) स्थाने। हे अग्ने विश्वेभिः विश्वैर्देवैः इन्द्रेण वायुना च सह सोम्यं सोममयं मधु पिब। कीदृशस्त्वं मित्रस्य धामभिः नामभिः स्तुत इति शेषः त्वमग्ने वरुणो जायसे यस्त्वं मित्रो भवसि इत्त ईड्यः इति श्रुतेः॥ १०॥

विश्वेभिः सोम्यम्मध्वग्नऽइन्द्रेणवायुना। पिबामित्रस्यधामभिः॥ १०॥

आयदिषेन्नृपतिन्तेजआनट्शुचिरेतोनिषिक्तन्द्यौरभीके। अग्निःशर्द्धमनवद्यंयुवानꣳस्वाध्यञ्जनयत्सूदयच्च॥ ११॥

विष्णुपराशरदृष्टा मरुत्वतीयग्रहपुरोरुक् इन्द्र मरुत्व इत्यस्याः (७,३५) स्थाने। आ उपसर्गः आनडित्यनेन सम्बध्यते यत् यदा तेजः तेजसो हेतुभूतं हविर्नृपतिं नृर्यजमानस्य पालकमग्निमानट् अश्नुते व्याप्नोति यदाग्नौ हविर्हूयतइत्यर्थः तदा अग्निः रेतो जगद्बीजभूतं जलम् द्यौरभीके प्रथमा षष्ठ्यर्थे दिवः समीपेऽन्तरिक्षे जनयत् जनयति मेघरूपे च पुरः सूदयत् सूदयति चरति वृष्टिद्वारेण षुद चरणे। कीदृशं तेजः इषे वृष्ट्यै निषिक्तं देवतोद्देशेनाग्नौ सिक्तं हुतम्। शुचि मन्त्रसंस्कृतम्। कीदृशं रेतः शर्धं बलहेतुभूतम् अनवद्यं निर्दोषम् अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेष्विति गर्ह्यार्थेऽवद्यमिति निपातः न अवद्यमनवद्यमगर्ह्यम् प्रशस्यम्। युवानं युवतुल्यं परिपक्वरसं दृढमित्यर्थः। स्वाध्यं सुष्ठु आ समन्तात् ध्यायते चिन्त्यत इति स्वाध्यं चिन्तनीयम् सर्वो वृष्टिमिच्छति। हविषा तर्पितोऽग्निरिष्टमासैर्जलं निष्पाद्य वर्षासु वर्षतीत्यर्थः। व्यवहितपदो मन्त्रः॥ ११॥

विश्वामित्रदृष्टा त्रिष्टुप् विश्वदेवदेवतस्याग्रयणग्रहस्य पुरोरुक् ये देवास इति (७,१९) स्थाने । त्रीणि शता त्रीणि शतानि त्री त्रीणि सहस्राणि त्रिंशत् नव च देवाः यथा ३३३९ । एते वस्वादिगणा देवा अग्निमसपर्यन् परिचरन्ति सपर्य्यतिः परिचरणकर्मा । यद्वा-गमोक्ता देवाः नवैवाङ्गास्त्रिसङ्ख्याः स्युर्देवानां दशकैर्गणैः ते ब्रह्मविष्णुरुद्राणां शक्तीनां वर्णभेदत इति ते च ३३३ ३३३ ३३३ एतावन्तो भवन्ति । कथं परिचरन्ति तदाह ते घृतैरग्निमौक्षन् असिञ्चयन् उक्ष सेचने लुङ् अस्मै अग्नये बर्हिरस्तृणन् आच्छादयन् यात् इत्

त्रीणिशतात्रीसहस्राण्यग्निन्त्रिꣳशच्चदेवानवचासपर्यन् । औक्षन्घृतैरस्तृणन्बर्हिरस्माआदिद्धोतारन्न्यसादयन्त ॥७

मूर्द्धानन्दिवोअरतिम्पृथिव्यावैश्वानरमृतआजातमग्निम् । कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥८॥

अग्निर्वृत्राणिजङ्घनद्द्रविणस्युर्विपन्यया । समिद्धःशुक्रआहुतः ॥ ९ ॥

अनन्तरमेव होतारं हत्वा हौत्रे कर्म्मणि न्यसादयन्त नियुक्तवन्तः । घृतसेचनबर्हिःस्तरणहोतृवरणमेवाग्निपरिचर्य्येति भावः ॥ ७ ॥

प्रकृतिवदेव ध्रुवग्रहपुरोरुक् । व्याख्याता[१] ॥ ८ ॥

१——७,२४ ।

गायत्री भरद्वाजदृष्टा ऐन्द्राग्नग्रहपुरोरुक् इन्द्राग्नी आगतमित्यस्याः (७,३१) स्थाने । अग्निर्वृत्राणि पापानि जङ्घनत् अत्यर्थं हन्ति यङ्लुगन्तम् । कया विपन्यया पनतिरर्चतिकर्मा विविधया पूजया पापं हन्ति । कीदृशोऽग्निः द्रविणस्युः द्रविणो धनमिच्छति

गायत्री गौतमदृष्टा मैत्रावरुणस्य पुरोरुक् अयं वामित्यस्याः (७,९) स्थाने। हे अग्ने नोऽस्माकं मित्रावरुणा यज। यज देवान्। यज बृहत् महत् ऋतं यज्ञम्। स्वं दमं गृहं यक्षि यज ॥ ३ ॥

आश्विनग्रहस्य पुरोरुक् या वां कशेत्यस्याः (७,११) स्थाने व्याख्यातेयम्[1] ॥ ४ ॥ १—१३,२०।

शुक्रग्रहपुरोरुक् कुत्सदृष्टा त्रिष्टुप् तं प्रत्नथेत्यस्याः (७,१२) स्थाने। हे रात्र्यहनी चरतः निरन्तरं प्रवर्तेते। कीदृशे विरूपे विविधं रूपं

युष्मा हि देवहूतमाँ२॥ऽश्वाँ१॥ऽग्ने रथीरिव। नि होता पूर्व्यः सदः ॥ ४ ॥

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुपधापयेते। हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ ५ ॥

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥ ६ ॥

ययोस्ते कृष्णा रात्रिः शुक्लमहः। स्वर्थे शोभनोऽर्थो ययोस्ते कल्याणप्रयोजने। अन्यान्या अन्या च अन्या च वत्समुपधापयेते क्षीरं पाययतः अन्या एका रात्रिः वत्समग्निमुपधापयते रात्रावग्निदेवत्यमग्निहोत्रम् अन्या दिवसरूपा वत्समादित्यमुपधापयते अह्नि सूर्यदेवत्यमग्निहोत्रम्। किञ्च तदेवाह अन्यस्यां रात्रौ हरिः हरितवर्णोऽग्निः स्वधावान् अन्नवान्भवति अन्यस्यामहनि शुक्रः शुक्लः आदित्यः सुवर्चाः शोभनतेजाः ददृशे दृश्यते। यद्वा हे द्यावापृथिव्यौ अग्निर्भूमौ स्वधावान् रविर्दिवि सुवर्चाः दृश्यते ॥ ५ ॥

मन्थिग्रहपुरोरुक् अयं वेन इत्यस्याः (७,१६) स्थाने। व्याख्याता[2] ॥ ६ ॥ २—२,१५।

दीनि॥ आद्ये द्वे ऐन्द्रवायवग्रहस्य पुरोरुचौ। वत्सप्रीदृष्टाग्नेयी त्रिष्टुप् आ वायवीत्यस्याः (७,१) स्थाने। अस्य यजमानस्य अग्नयः ईदृशाः सन्तु। कीदृशाः अजरासः नास्ति जरा येषां ते अजराः वार्द्धक्यहीनाः। इमां गृहाणामरित्राः रक्षकाः नावामित्र कोनिपाताः अरिभ्यः त्रायन्तेऽरित्राः यद्वा इमानां इमनीयानां रक्षसामरित्राः नारकाः विभक्तेर्लुङभावात्सवर्णदीर्घः। अर्चद्धूमासः अर्चन् अर्चनीयः पूजनीयो धूमो धूमोपलक्षिता ज्वाला येषां तेऽर्चद्धूमाः। पावकाः शोधकाः। श्वितीचयः श्वितिं श्वेतवर्णं चिन्वन्ति श्वितिचयः चिनोतेः क्विप् अनित्यमागमशासनमिति तुगभावः श्वितिशब्दस्य छान्दसो दीर्घः श्वेतत्वमुज्ज्वलत्वं यजमानस्य वर्धयन्तः।

हरयोधूमकेतवोवातजूताउपद्यवि। यतन्तेवृथगग्नयः॥ २॥

यजानोमित्रावरुणायजादेवाँ२॥ऋतम्बृहत्। अग्नेयक्षिस्वन्दमम्॥ ३॥

श्वात्रासः श्वात्रशब्दः क्षिप्रवाचकः श्वात्राः क्षिप्रफलप्रदाः। भुरण्यवः भरणकर्तारः। वनर्षदः वनसदः वने काष्ठे सीदन्तीति वनसदः वनसदोऽवेटी रेफेणेति[१] प्रातिशाख्यसूत्रेण रेफागमः। वायवो न वायव इव दीपयितारः। सोमाः सोमा इव यजमानेष्टदाः॥ १॥

गायत्री विश्वरूपदृष्टा इन्द्रवायू इत्यस्याः (७,८) स्थाने। अग्नयः वृथक् पृथक् नानाप्रकारेण द्यवि स्वर्गे उपयतन्ते स्वर्गं गन्तुं यत्नं कुर्वन्ति। कीदृशाः हरयः हरितवर्णाः। धूमकेतवः धूम एव केतुर्ज्ञापको येषां ते यत्र धूमस्तत्राग्निरिति व्याप्तेः। वातजूताः वातेन जूतं गमनं प्रसारो येषां ते। आ वायो इन्द्रवायू इमे अनयोः (७,७-८) स्थाने एते द्वे उक्ते॥ २॥ १—३,२,११।

मन्त्रोक्तदेवतानुष्टुप्। श्रीकामोऽनया श्रियं याचते। ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः इदमिमे उभे ब्रह्मक्षत्रे मे मम श्रियमश्नुताम्। देवाः मयि उत्तमां श्रियं दधतु स्थापयन्तु। तस्यै प्रसिद्धायै ते तुभ्यं श्रियै स्वाहा सुहुतमस्तु। यो सम्बन्धार्थौ। श्रीमेधे विना यज्ञासिद्धेस्ते प्रार्थ्येते ॥ १६ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे। सार्वमेधिकमन्त्रोक्तिर्द्वात्रिंशोऽध्याय ईरितः ॥ ३२ ॥

इदम्मे ब्रह्म च क्षत्रञ्चोभे श्रियमश्नुताम्। मयि देवा दधतु श्रियमुत्तमान्तस्यै ते स्वाहा ॥ १६ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयः पावकाः। श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः ॥ १ ॥

सर्वमेधेऽग्निष्टोमसंस्थेऽग्निष्टुत्संज्ञे प्रथमेऽहनि अस्याजरास इत्याद्या मही अग्ने इत्यन्ताः सप्तदश ऋचोऽग्निदेवत्याः पुरोरुचो भवन्ति। पुरोरुक्शब्देन ऋग्रूपा ग्रहणमन्त्रा उच्यन्ते न यजूरूपाः ऋगेव पुरोरुगिति श्रुतेः। उक्थमहावैश्वदेवपात्नीवतहारियोजनेषु यजूरूपे ग्रहणमन्त्रे सत्यपि तं वाऽअपुरोरुक्कं गृह्णातीति श्रुतेस्तत्र न दोषः अत एवाग्नेयीभिर्ऋच एव निवर्त्यन्ते नोपयामा-

इत उत्तरसूक्तये मेधा याच्यते चतुर्थ्या श्रीर्याच्यते। प्रथमा गायत्री लिङ्गोक्तदेवता। अग्निं सनिं द्रव्यदानं मेधां बुद्धिं च अयासिषं याचे दिवश्चक:। कीदृशमग्निम् सदसः यज्ञगृहस्य पतिं पालकम् अद्भुतमचिन्त्यशक्तिम् इन्द्रस्य प्रियं मित्रम् काम्यं कामनीयं धनमेधार्थिभिः ॥ १३ ॥

सदसस्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्यम्। सनिम्मेधामयासिषᳮ स्वाहा ॥ १३ ॥

याम्मेधान्देवगणाःपितरश्चोपासते। तयामामद्यमेधयाग्नेमेधाविनङ्कुरु स्वाहा ॥१४॥

मेधाम्मेवरुणोददातुमेधामग्निःप्रजापतिः। मेधामिन्द्रश्चवायुश्चमेधान्धाताददातुमे स्वाहा ॥१५॥

अनुष्टुप्। हे अग्ने तया मेधया अद्य मां मेधाविनं बुद्धियुक्तं कुरु। स्वाहा सुहुतमस्तु। अस्मायामेधास्रजो विनिरिति विनिप्रत्ययः मेधास्यास्ति मेधावी-तम्। तया कया देवगणाः देवसमूहाः पितरश्च यां मेधामुपासते पूजयन्ति। देवपितृमान्या बुद्धिरस्माकमस्त्वित्यर्थः ॥ १४ ॥

लिङ्गोक्तदेवतानुष्टुप्। वरुणो मे मह्यं मेधां ददातु अग्निः प्रजापतिश्च मे मेधां ददातु इन्द्रः वायुश्च मेधां ददातु धाता मे मेधां ददातु स्वाहा सुहुतमस्तु ॥ १५ ॥

इदानीं सर्वभूतेष्वहमस्मि सर्वाणि भूतानि मयीति ज्ञानवतः सर्वमेधयाजिनो मुक्तिरुच्यते । किञ्च सर्वमेधयज्ञोऽपि न ज्ञानं प्रधानम् ब्रह्मज्ञानवतो यजमानस्याग्निहोत्रादयोऽपि यज्ञाः सर्वमेधा एवेत्याह परीत्य भूतानीति कण्डिकाभ्याम् ॥ एवं ज्ञानवान् सर्वमेधयाजी आत्मना जीवरूपेण ऋतस्य यज्ञस्यात्मानं यज्ञाधिष्ठातारं परमात्मानमभिसंविवेश प्रविशति ब्रह्मैव भवतीत्यर्थः । किं कृत्वा भूतानि परीत्य सर्वभूतानि ब्रह्मत्वेन विज्ञाय । लोकान्भूरादीन् परीत्य ब्रह्मरूपान् ज्ञात्वा । सर्वाः प्रदिशः विदिशः दिशश्च परीत्य तद्रूपा ज्ञात्वा । प्रथमजां प्रथमोत्पन्नां त्रयीरूपां वाचमुपस्थाय संसेव्य यज्ञादि कृत्वेत्यर्थः अपि हि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यतेति श्रुतेः प्रथमजा वाक् वेदरूपा ॥ ११ ॥

परीत्यभूतानिपरीत्यलोकान्परीत्यसर्वाः॑प्रदिशोदिशश्च । उपस्थायप्रथमजामृतस्यात्मनात्मानमभिसंविवेश ॥११॥

परिद्यावापृथिवीसद्यइत्वापरिलोकान्परिदिशःपरिस्वः । ऋतस्यतन्तुंविततंविचृत्यतदपश्यत्तदभवत्तदासीत् ॥१२॥

परीत्युपसर्ग इत्वेत्यनेन सम्बध्यते । सर्वमेधयाजी तत् ब्रह्म अपश्यत् पश्यति तत् अभवत् भवति तत् आसीत् वस्तुगत्या तदेवास्ति । अज्ञाननिवृत्तिरेव दर्शनं भवनं चेति भावः । किं कृत्वा द्यावापृथिवी सद्यः परि इत्वा परीत्य तद्रूपेण ज्ञात्वा लोकान् परीत्य दिशः परीत्य स्वरादित्यं च परीत्य । गुह्यं वस्तु पुनः-पुनः कथितं चित्तमारोहतीति पुनरुक्तिः । ऋतस्य यज्ञस्य तन्तुमितिकर्तव्यतां विततं प्रसारितं यथा तथा विचृत्य समाप्य यज्ञं कृत्वेत्यर्थः । तदेव सन्तस्तदु तद्भवामेति श्रुतेः ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेश्च ब्रह्मरूपस्य जीवस्याज्ञाननिवृत्तिरेव ब्रह्मप्राप्तिरित्यर्थः ॥ १२ ॥

काले। स परमात्मा प्रजासु ओतः प्रोतश्च ऊर्ध्वतन्तुषु पटइव शरीरभावेन ओतः तिर्य्यक्तन्तुषु पटइव शरीरिभावेन प्रोतश्च। कीदृशः विभूः कार्य्यकारणरूपेण विविधं भवतीति विभूः। सर्वं स एवेत्यर्थः ॥ ८ ॥

गां वेदवाचं धारयति विचारयतीति गन्धर्वः वेदान्तवेत्ता विद्वान् पण्डितः नु क्षिप्रम् अमृतं शाश्वतम् तत् ब्रह्म प्रवोचेत् प्रब्रूयात् गुहा गुहायां सत् विद्यमानम् धाम स्वरूपं विभृतं विहृतं सर्गस्थितिप्रलयरूपैर्विभक्तम्। किञ्च अस्यामृतस्य त्रीणि पदानि स्वरूपाणि गुहा गुहायां निहितानि। पदानि सर्गस्थितिप्रलयाः वेदाः काला वा ब्रह्मान्तर्यामिविज्ञानात्मानो वा। किञ्च यः तानि

प्रतद्वोचेदमृतन्नुविद्वान्गन्धर्वोधामविभृतङ्गुहासत्। त्रीणिपदानिनिहितागुहास्ययस्तानिवेदसपितुःपितासत् ॥९॥

सनोबन्धुर्ज्जनितासविधाताधामानिवेदभुवनानिविश्वा। यत्रदेवाअमृतमानशानास्तृतीयेधामन्नध्यैरयन्त ॥१०॥

पदानि वेद जानाति स पितुः ब्रह्मणोऽपि पिता परमात्मा असत् भवति परं ब्रह्मैव भवतीत्यर्थः ॥ ९ ॥

स परमात्मा नोऽस्माकं बन्धुः बन्धुवत्मान्यः जनिता जनयिता जनिता मन्त्रइति णिचो लोपः स च विधाता धारयिता। सः विश्वा सर्वाणि भुवनानि भूतजातानि धामानि स्थानानि च वेद। देवा अग्न्यादयः तृतीये धामन् धामनि स्थाने स्वर्गरूपे अध्यैरयन्त स्वेच्छया वर्तन्ते। कीदृशा देवाः अमृतं मोक्षप्रापकं ज्ञानं यत्र ब्रह्मणि आनशानाः व्याप्नुवानाः अश्नुवते आनशानाः बहुलं छन्दसीति अशेर्द्वाद्वित्वेन द्वित्वे मानचि अभ्यासस्य नुगागमः। ब्रह्मनिष्ठं ज्ञानं प्राप्ताः सन्तः स्वर्गे देवा मोदन्तइति भावः ॥ १० ॥

क्रन्दसी द्यावापृथिव्यौ यं पुरुषं मनसा अभ्यैक्षेतां साधु कृतमित्यपश्यताम् कीदृश्यौ क्रन्दसी अवसा हविर्लक्षणेनान्नेन दृष्टिजनकेन तस्तभाने प्राणिजातं स्तम्भयन्त्यौ व्यत्ययेन स्तम्भेर्ह्रादित्वम्। रेजमाने शोभमाने। सूरः सूर्यः यत्र द्यावापृथिव्योः उदितः सन् अधिविभाति अधिकं शोभते विभासयति वा। तं विहाय कस्मै हविर्दद्मः॥ आपो ह यद्बृहतीः (२७,२५) यश्चिदापः (२७,२६) द्वे प्रतीकोक्ते उपादावध्येये॥ ७॥

वेनः पण्डितो विदितवेदान्तरहस्यः तत् ब्रह्म पश्यत् पश्यति जानातीत्यर्थः। कीदृशं तत् गुहा गुहायां रहःस्थाने निहितं स्थापितं दुर्ज्ञेयमित्यर्थः। सत् नित्यम्। यत्र ब्रह्मणि विश्वं कार्यजातमेकनीडं भवति एकमेव नीडमाश्रयो यस्य तत् अविभक्त-

येनद्यौरुग्राप्थिवीचदृढायेनस्वस्तभितंयेननाकः। योअन्तरिक्षेरजसोविमानःकस्मैदेवायहविषाविधेम॥६॥

यङ्क्रन्दसीअवसातस्तभानेअभ्यैक्षेताम्मनसारेजमाने। यत्राधिसूरउदितोविभातिकस्मैदेवायहविषाविधेम

आपोहयद्बृहतीर्यश्चिदापः॥ ७॥

वेनस्तत्पश्यन्निहितङ्गुहासद्यत्रविश्वम्भवत्येकनीडम्। तस्मिन्निदꣳसञ्चविचैतिसर्वꣳसओतःप्रोतश्चविभूःप्रजासु॥८॥

मविशेषं कारणमेव भवतीत्यर्थः। तस्मिन्ब्रह्मणि इदं सर्वं भूतजातं समेति च सङ्गच्छते संहारकाले व्येति च निर्गच्छति सर्ग-

अतस्तमिष्टुमः। ह प्रसिद्धम् एषो ह देवः सर्वाः प्रदिशः अनुतिष्ठति व्याप्य स्थितः। हे जनाः ह प्रसिद्धमेष पूर्वः प्रथमो जातः उत्पन्नः गर्भे अन्तः गर्भमध्ये स उ स एव तिष्ठति। जातोऽपि स एव। जनिष्यमाणः उत्पत्स्यमानोऽपि स एव। प्रत्यङ् प्रतिपदार्थमञ्चति प्रत्यङ्। सर्वतोमुखः सर्वतो मुखाद्यवयवा यस्य अचिन्त्यशक्तिरित्यर्थः॥ ४॥

यस्मात्पुरा किञ्चन किमपि न जातमेव य आ विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आबभूव सम्पादयामास अन्तर्भूतो ऽर्थः। स षोडशी षोडशावयवलिङ्गशरीरी प्रजापतिः प्रजया संरराणः रममाणः त्रीणि ज्योतींषि रवीन्द्वग्निरूपाणि सचते सेवते॥ ५॥

नतस्यप्रतिमाऽअस्तियस्यनाममहद्यशः। हिरण्यगर्भऽइत्येषमामाहिंसीदित्येषायस्मान्नजातऽइत्येषः॥ ३॥

एषोहदेवःप्रदिशोनुसर्वाःपूर्वोहजातःसऽउगर्भेऽअन्तः। सएवजातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः॥ ४॥

यस्माज्जातन्नपुराकिञ्चनैवयऽआबभूवभुवनानिविश्वा। प्रजापतिःप्रजयासंरराणस्त्रीणिज्योतींषिसचतेसषोडशी॥

येन पुरुषेण द्यौरुग्रा उद्गूर्णा वृष्टिदा कृतेति शेषः पृथिवी च येन दृढा कृता सर्वप्राणिधारणे वृष्टिग्रहणम् अन्ननिष्पादनञ्चेति भूमेर्दार्ढ्यम्। येन स्वः आदित्यमण्डलं स्तभितं स्तम्भितम् येन नाकः स्वर्गोऽपि स्तम्भितः। यः अन्तरिक्षे नभसि रजसो जलस्य वृष्टिरूपस्य विमानः विमिमीते निर्माता। तं विहाय कस्मै देवाय हविषा विधेम हविर्दद्मः न कस्मैचिदित्यर्थः॥ ६॥

आप्तोर्यामसञ्ज्ञिके सर्वहोमे विनियुक्ताः आप्तोर्यामः सप्तममहर्भवतीत्युपक्रम्य सर्वं जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै इति[१] श्रुतेः ॥ द्वे अनुष्टुभौ । विज्ञानात्मा परेणात्मना विशिष्टोऽस्मादिष्वोतप्रोतत्वेनोपास्योऽभिधीयते । अग्निः तदेव कारणं ब्रह्मैव आदित्यस्तदेव वायुस्तदेव चन्द्रमास्तत् तदेव उ एवार्थे । शुक्रं शुक्लं तत् प्रसिद्धम् । ब्रह्म त्रयीलक्षणं तत् ब्रह्मैव । ताः प्रसिद्धाः आपः जलानि प्रसिद्धः प्रजापतिरपि तदेव ब्रह्म ॥ १ ॥ १—१३,७,१,८।

सर्वे निमेषाः निमिषाः त्रुटिकाष्ठाघटादयः कालविशेषाः पुरुषात् अधि पुरुषसकाशाज्जज्ञिरे । कीदृशात्पुरुषात् विद्युतः विशेषेण द्योतते विद्युत् तस्मात् । किञ्च कश्चिदपि एनं पुरुषमूर्द्ध्वमुपरिभागे न परिजग्रभत् परिगृह्णाति । एवं तिर्यञ्चं चतुर्दिक्षु न परि मध्ये

तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचन्द्रमाः । तदेवशुक्रन्तद्ब्रह्मताआपःसप्रजापतिः ॥ १ ॥

सर्व्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधि । नैनमूर्द्ध्वन्नतिर्य्यञ्चन्नमध्येपरिजग्रभत् ॥ २ ॥

मध्यदेशेऽपि न गृह्णाति न ह्यसौ प्रत्यक्षादीनां विषय इत्यर्थः स एष नेति-नेत्यात्माऽगृह्यो न हि गृह्यत इति श्रुतेः । जग्रभत् ग्रहेः प्रतरि जुहोत्यादित्वेन रूपम् ॥ २ ॥

द्विपदा गायत्री तस्य पुरुषस्य प्रतिमा प्रतिमानमुपमानं किञ्चिद्वस्तु नास्ति अतएव नाम प्रसिद्धं महत् यशः यस्यास्ति सर्वातिशयिता इत्यर्थः । हिरण्यगर्भ इत्येषोऽनुवाकश्चतुर्ऋचः हिरण्यगर्भः यः प्राणतः यस्येमे य आत्मदाः इति (२५,१०—१३) मा मा हिंसीज्जनितेत्येका ऋचा (१२,१०२) यस्मान्न जातः इन्द्रश्च सम्राडिति (८,३६—३७) द्व्यृचोऽनुवाकः[१] एताः प्रतीकचोदिताः पर्वं पठितत्वात्तदिमा चेपोक्ताः वृत्वाग्रे जपे च सर्वा अध्येयाः । एवं सर्वत्र ॥ ३ ॥

चतस्रस्त्रिष्टुभः। ह प्रसिद्धम् एषो ह देवः सर्वाः प्रदिशः अनुतिष्ठति व्याप्य स्थितः। हे जनाः ह प्रसिद्धमेष पूर्वः प्रथमो जातः हिरण्यगर्भः गर्भे अन्तः गर्भमध्ये स उ स एव तिष्ठति। जातोऽपि स एव। जनिष्यमाणः उत्पत्स्यमानोऽपि स एव। प्रत्यङ् प्रति-पदार्थमञ्चति प्रत्यङ्। सर्वतोमुखः सर्वतो मुखान्यवयवा यस्य अचिन्त्यशक्तिरित्यर्थः ॥ ४ ॥

यस्मात्पुरा किञ्चन किमपि न जातमेव यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आबभूव सम्यक् प्रादुर्भावयामास उत्प-न्नानीत्यर्थः। स षोडशी षोडशावयवलिङ्गशरीरी प्रजापतिः प्रजया संरराणः रममाणः त्रीणि ज्योतींषि रवीन्द्वग्निरूपाणि सचते सेवते ॥ ५ ॥

न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः। हिरण्यगर्भ इत्येष मा मा हिंसीदित्येषा यस्मान्न जात इत्येषः ॥ ३ ॥

एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः। स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ॥ ४ ॥

यस्माज्जातं न पुरा किं चनैव य आबभूव भुवनानि विश्वा। प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी ॥

येन पुरुषेण द्यौः उग्रा उद्गूर्णा वृष्टिदा कृतेति शेषः पृथिवी च येन दृढा कृता सर्वप्राणिधारणं वृष्टिग्रहणम् अन्ननिष्पादनञ्चेति भूमेर्दार्ढ्यम्। येन स्वः आदित्यमण्डलं स्तभितं स्तम्भितम् येन नाकः स्वर्गोऽपि स्तम्भितः। यः अन्तरिक्षे नभसि रजसो जलस्य वृष्टिरूपस्य विमानः विमिमीते निर्माता। तं विहाय कस्मै देवाय हविषा विधेम हविर्दद्मः न कस्मैचिदित्यर्थः ॥ ६ ॥

आशीर्यामसञ्ज्ञिके सर्वहोमे विनियुक्ताः आशीर्यामः सप्तममहर्भवतीत्युपक्रम्य सर्वं जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै इति[1] श्रुतेः ॥ द्वे अनुष्टुभौ । विज्ञानात्मा परमात्मना विशिष्टोऽग्न्यादिष्वोतप्रोतत्वेनोपास्योऽभिधीयते । अग्निः तदेव कारणं ब्रह्मैव आदित्यस्तदेव वायुस्तदेव चन्द्रमास्तत् तदेव उ एवार्थे । शुक्रं शुक्लं तत् प्रसिद्धम् । ब्रह्म त्रयीलक्षणं तत् ब्रह्मैव । ताः प्रसिद्धाः आपः जलानि प्रसिद्धः प्रजापतिरपि तदेव ब्रह्म ॥ १ ॥ १—१७,७,१,९।

सर्वे निमेषाः निमिषाः त्रुटिकाष्ठाघटाद्याः कालविशेषाः पुरुषात् अधि पुरुषसकाशाज्जज्ञिरे । कीदृशात्पुरुषात् विद्युतः विशेषेण द्योतते विद्युत् तस्मात् । किञ्च कश्चिदपि एनं पुरुषमूर्ध्वमुपरिभागे न परिजग्रभत् परिगृह्णाति । एनं तिर्यञ्चं चतुर्दिक्षु न परि मध्ये

तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचन्द्रमाः। तदेवशुक्रन्तद्ब्रह्मताआपःसप्रजापतिः॥ १ ॥

सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधि। नैनमूर्द्ध्वन्नतिर्य्यञ्चन्नमध्येपरिजग्रभत्॥ २ ॥

मध्यदेशेऽपि न गृह्णाति न ग्राह्यो प्रत्यक्षादीनां विषय इत्यर्थः स एष नेति-नेत्यात्माऽगृह्यो न हि गृह्यत इति श्रुतेः । जग्रभत् ग्रहेः प्रतरि जुहोत्यादित्वेन रूपम् ॥ २ ॥

द्विपदा गायत्री तस्य पुरुषस्य प्रतिमा प्रतिमानमुपमानं किञ्चिद्वस्तु नास्ति अतएव नाम प्रसिद्धं महत् यशः यस्यास्ति सर्वातिरिक्तयशा इत्यर्थः । हिरण्यगर्भ इत्येषोऽनुवाकश्चतुर्ऋचः हिरण्यगर्भः यः प्राणतः यस्येमे य आत्मदा इति (२५,१०—१३) मा मा हिंसीज्जनितेत्येका एषा (१२,१०२) यस्मान्न जातः इन्द्रश्च सम्राडिति (८,३६-३७) द्व्यृचोऽनुवाकः[1] एताः प्रतीकचोदिताः पूर्वं कण्डिकात्वादिमात्रेणोक्ताः ब्रह्मयज्ञे जपे च सर्वा अध्येयाः । एवं सर्वत्र ॥ ३ ॥

देवाः दीप्यमानाः प्राचाः एवं शोभनं ब्राह्मं ब्रह्मणोऽपत्यमादित्यं जनयन्तः उत्पादयन्तः अग्रे प्रथमं तत् वचोऽब्रुवन् जगुः ब्राह्मो जाताविति निपातः। तत्किमत आह यो ब्राह्मणः हे आदित्य त्वा त्वामेवमुक्तविधिना उत्पन्नं विद्यात् जानीयात् तस्य ब्राह्मणस्य देवा वशे असन् वश्या भवन्ति आदित्योपासिता जगत्पूज्यो भवतीत्यर्थः ॥ २१ ॥

ऋषिरादित्यं स्तुत्वा प्रार्थयते। हे आदित्य श्रीःश्चतप लक्ष्मीश्च ते व गौ जायास्थानीये त्वद्दृश्ये इत्यर्थः। यया सर्वजनाश्रणीयो भवति सा श्रीः श्रीयतेऽनया श्रीः सम्पदित्यर्थः। यया लक्ष्यते दृश्यते जनैः सा लक्ष्मीः सौन्दर्यमित्यर्थः। अहोरात्रे तव पार्श्वे पार्श्वस्थानीये। नक्षत्राणि गगनभास्तारा: तव रूपम् तवैव तेजसा भासमानत्वात् तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलका इति ज्योतिःशास्त्रोक्तेः।

श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम्। इष्णन्निषाणामुम्मइषाणसर्व्वलोकम्मइषाण २२

## इति माध्यन्दिनीयायां वाजसनेयसंहितायां एकत्रिंशोऽध्यायः ॥ ३१ ॥

अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विकासितमुखस्थानीये अश्रुवाते व्याप्नुतस्तौ अश्विनौ द्यावापृथिव्यौ इमे हीदं सर्वमश्नुवातामिति श्रुतेः। य ईदृशस्तं त्वां याचे इष्णन् कर्मफलमिच्छन् सन् इषाण इच्छ इषु इच्छायाम् विकरणव्यत्ययः यद्वा इष आभीक्ष्ण्ये क्र्यादिः अमेष्यार्थः किमेषणीयम् तत्राह अमुं परलोकं मे मम इषाण मम परलोकः समीचीनोऽस्त्विति इच्छा अमोघेच्छत्वादिष्टं भवतीत्यर्थः। सर्वं मे मम इषाण सर्वलोकात्मकोऽहं भवेयमितीच्छेत्यर्थः मुक्तो भवेयमित्यर्थः सर्वं खल्विदं ब्रह्मेति सामश्रुतेः ॥ २२ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे। नरमेधोऽध्याय एष एकत्रिंशोऽयमीरितः ॥ ३१ ॥

पुरुषमन्त्रा उक्ताः। अथ सर्वमेधमन्त्रा उच्यन्ते अग्नायुमच्छेत्यन्तात्प्राक् (१,५५)। स्वयम्भुब्रह्मदृष्टाः आत्मदेवत्याः सर्वमेऽहनि

उपमानतराभावात्स्वोपमम् तथा तमसः परस्तात् दूरतरम् तमोरहितमित्यर्थः तमःशब्देनाविद्योच्यते। तमेवादित्यं विदित्वा ज्ञात्वा मृत्युमत्येति अतिक्रामति परं ब्रह्म गच्छति। अयनायाश्रयायान्यः पन्था मार्गः न विद्यते सर्वमण्डलान्तःपुरुषमात्मरूपं ज्ञात्वैव मुक्तिः॥१८॥

यः सर्वात्मा प्रजापतिः अन्तर्हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति यश्चाजायमानो नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्चरूपेणोत्पद्यते। धीराः ब्रह्मविदस्तस्य प्रजापतेः योनिं स्थानं स्वरूपं परि पश्यन्ति अहं ब्रह्मास्मीति

प्रजापतिश्चरतिगर्भेअन्तरजायमानोबहुधाविजायते। तस्ययोनिम्परिपश्यन्तिधीरास्तस्मिन्हतस्थुर्भुवनानिविश्वा॥१९॥

योदेवेभ्यआतपतियोदेवानाम्पुरोहितःप। र्वोयोदेवेभ्योजातोनमोरुचायब्राह्मये॥२०॥

रुचम्ब्राह्मञ्जनयन्तोदेवाअग्रेतदब्रुवन्। यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाअसन्वशे॥२१॥

जानन्ति। विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन्ह तस्मिन्नेव कारणात्मनि ब्रह्मणि तस्थुः स्थितानि। सर्वं तदात्मकमेवेत्यर्थः॥ १९ ॥

यः प्रजापतिरादित्यरूपो देवेभ्योऽर्थायातपति द्योतते यश्च देवानां पुरोहितः सर्वकार्येष्वग्रे नीतः यश्च देवेभ्यः सकाशात् पूर्वः जातः प्रथममुत्पन्नः तस्मै आदित्याय नमः। कोदृशाय रोचतेऽसौ रुचस्तस्मै दीप्यमानाय इगुपधेति कप्रत्ययः तथा ब्राह्मये ब्रह्मणोऽपत्यं ब्राह्मि इञि टिलोपः ब्रह्मावयवभूताय वा॥ २० ॥

इति पुरुषसूक्तानुवाकः। अद्भ्यः सम्भृत इत्युत्तरनारायणेनादित्यमुपस्थायेति (१३,६,२,२०) षट् कण्डिका उत्तरनारायणम्। उपान्त्ये द्वे अनुष्टुभौ शेषास्त्रिष्टुभः आदित्यदेवत्याः। पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते। अद्भ्यः जलात् पृथिव्याः सकाशाच्च पृथिव्यपां ग्रहणं भूतपञ्चकोपलक्षकम् भूतपञ्चकात् यो रसः सम्भृतः पुष्टः तथा विश्वं कर्म्म यस्य विश्वकर्म्मणः कालस्य रसात् प्रीतेः यो रसोऽग्रे प्रथमं समवर्त्तत समभवत् भूतपञ्चकस्य कालस्य च सर्वं प्रति कारणत्वात् पुरुषमेधयाजिनो लिङ्गशरीरे पञ्च भूतानि तुष्टानि कालश्च ततस्तुष्टेभ्यः कश्चिद्रसविशेषफलरूप उत्तमजन्मप्रद उत्पन्न इत्यर्थः। तस्य रसस्य रूपं विदधत् धारयन् त्वष्टा

यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन्। तेहनाकम्महिमानस्सचन्तयत्रपूर्व्वेसाध्याःसन्तिदेवाः ॥१६॥

अद्भ्यःसम्भृतःपृथिव्यैरसाच्चविश्वकर्म्मणःसमवर्त्तताग्रे। तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्वमाजानमग्रे ॥१७॥

वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसःपरस्तात्। तमेवविदित्वातिमृत्युमेतिनान्यःपन्थाविद्यतेऽयनाय ॥१८॥

आदित्यः एति प्रत्यहमुदयं करोति। अग्रे प्रथमं मर्त्यस्य मनुष्यस्य सतस्तस्य पुरुषमेधयाजिनः आजानं देवत्वं मुख्यं देवत्वम् सूर्यरूपेण। द्विविधा देवाः कर्म्मदेवा आजानदेवाश्च कर्म्मणोत्कृष्टेन देवत्वं प्राप्ताः कर्म्मदेवाः सृष्ट्यादावुत्पन्ना आजानदेवाः ते कर्मदेवेभ्यः श्रेष्ठाः ये शतं कर्म्मदेवानामानन्दाः स एक आजानदेवानामानन्द इति १ श्रुतेः सूर्यादय आजानदेवाः ॥१७॥ १ – बृहदार० आ० ४,१,३५।

एतं महान्तं सर्वोत्कृष्टं पुरुषं सूर्यमण्डलस्थमहं वेद जानामि इति ऋषिर्वचनम् कीदृशमादित्यवर्णमादित्यस्येव वर्णो यस्य तम्।

ऐष्टिकस्याहवनीयस्य त्रयः परिधयः औत्तरवेदिकाः त्रयः आदित्यः सप्तमः परिधिः प्रतिनिधिरूपः तथा च श्रुतिः गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सर्वमेव पुरस्तादगोप्तारं करोतीति तत एते आदित्यसहिताः सप्त परिधयोऽत्र सप्तच्छन्दोरूपाः । त्रिः सप्त त्रिगुणाः सप्त एकविंशतिसङ्ख्याकाः समिधः कृताः द्वादश मासाः पञ्चर्तवः त्रय इमे लोकाः असावादित्यः एते एकविंशतिरेकविंशतिदारुयुक्तत्वेन भाविताः । यद्वा सप्त समुद्राः क्षीरोदादयोऽस्य यज्ञस्य परिधयः आसन् भारतखण्डे यागा भवन्ति समुद्राणां परिधित्वम् त्रिः त्रिगुणाः सप्त छन्दोवर्गाः समिधः कृताः गायत्र्यादीनि सप्त अतिजगत्यादीनि सप्त कृत्यादीनि सप्तेति ॥ १५ ॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥

पूर्वप्रपञ्चेनोक्तमर्थं सङ्क्षिप्याह । देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन सङ्कल्पेन यज्ञेन यज्ञं यज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः तस्मात्पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि भूतानि आसन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थः उक्तः अथोपासनतत्फलानुवादकभागार्थः सङ्गृह्यते । यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातनाः विराडुपाधिसाधकाः देवाः सन्ति तिष्ठन्ति तं नाकं विराट्प्राप्तिरूपं स्वर्गं ह एव ते महिमानः तदुपासका महात्मानः सचन्त सचन्ते समवयन्ति प्राप्नुवन्ति अडभावः आर्षः । सृष्टेः प्रवाहनित्यतां दर्शयति तदुक्तम् सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति ॥ १६ ॥

यथा दध्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदाः ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह । मनसः सकाशात् चन्द्रमाः जातः चक्षोः चक्षुषः सकाशात्सूर्य्यः अजायत वायुः प्राणश्च श्रोत्रात्कर्णादजायत मुखादग्निरजायत ॥ १२ ॥

यथा प्रजापतेर्मनःप्रभृतयश्चन्द्रादीनकल्पयन् तथान्तरिक्षादिलोकानित्याह नाभ्येति प्रजापतेः नाभेः सकाशात् अन्तरिक्षमासीत् शीर्ष्णः शिरसः द्यौः स्वर्गः समवर्ततोत्पन्ना अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना श्रोत्राद्दिशः उत्पन्नाः तथा तेनोक्तेन विधिना लोकान् भूरादीन् प्रजापतेः सकाशादकल्पयन् कल्पितवन्तः फलदानोन्मुखाः काला इति शेषः ॥ १३ ॥

नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ ॥ऽअकल्पयन् ॥१३॥

यत् यदा पूर्वोक्तक्रमेण देवशरीरेषु सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन पुरुषस्वरूपमेव मनसा हविष्ट्वेन सङ्कल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वतातनिषत तदानीमस्य यज्ञस्य वसन्तः ऋतुरेवाज्यमासीत् आज्यत्वेन सङ्कल्पितवन्त इत्यर्थः एवं ग्रीष्मः इध्मः आसीत् ग्रीष्ममेवेध्मत्वेन सङ्कल्पितवन्तः तथा शरत् हविः आसीत् शरदमेव पुरोडाशादिहविष्ट्वेन सङ्कल्पितवन्तः । पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन सङ्कल्पः अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन सङ्कल्प इति द्रष्टव्यम् ॥ अत्र कण्डिकाव्युत्क्रमोऽस्ति अस्यानन्तरं तं यज्ञम् ततः तस्माद्यज्ञादिति तिस्रः क्रमेणैव ततः सप्तास्यासन्निति क्रमोऽपेक्षितः ॥ १४ ॥

यत् यदा देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पुरुषं पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वं पुरुषेण हविषेत्युक्तम् तदा अस्य सङ्कल्पितस्य यज्ञस्य सप्त गायत्र्यादीनि छन्दांसि परिधयः आसन्

विराजो अधि पूरुष इति । पुरुषरूपेण पशुना देवा अयजन्त मानसयागं निष्पादितवन्तः के ते देवा इत्यत्राह ये साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः ये च तदनुकूला ऋषयः मन्त्रद्रष्टारः ते सर्वेऽप्ययजन्त ॥ ९ ॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते । प्रजापतेः प्राणरूपा देवा यत् यदा पुरुषं व्यदधुः संकल्पेनोदपादयन् तदा कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः अस्य पुरुषस्य मुखं किमासीत् किं बाहू ऊरू चास्ताम् किञ्च पादौ उच्येते पादावपि किमास्तामित्यर्थः ॥ १० ॥

तंयज्ञंबर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः । तेनदेवाअयजन्तसाध्याऋषयश्चये ॥ ९ ॥

यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् । मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाउच्येते ॥ १० ॥

ब्राह्मणोऽस्यमुखमासीद्बाहूराजन्यःकृतः । ऊरूतदस्ययद्वैश्यःपद्भ्याᳪंशूद्रोअजायत ॥ ११ ॥

चन्द्रमामनसोजातश्चक्षोःसूर्य्योअजायत । श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ १२ ॥

पूर्वोक्तप्रश्नोत्तराण्याह । ब्राह्मणः ब्रह्मत्वजातिविशिष्टः पुरुषोऽस्य प्रजापतेर्मुखमासीत् मुखादुत्पन्न इत्यर्थः । राजन्यः क्षत्रियत्वजातिविशिष्टो बाहुकृतः बाहुत्वेन निष्पादितः । तत् तदानीमस्य प्रजापतेः यत् ऊरू तद्रूपो वैश्यः सम्पन्नः ऊरुभ्यामुत्पादित इत्यर्थः । तथास्य पद्भ्यां शूद्रत्वजातिमान् पुरुषोऽजायत उत्पन्नः ॥ ११ ॥

देवत्याः वायुर्वै पशव इति श्रुतेः अन्तरिक्षस्य च वायुदेवत्यत्वात्पशूनां वायुदेवत्वम्। तान् कान् ये चारण्याः अरण्ये भवाः हरिणादयः ये च ग्रामभवा गवाश्वादयस्तान् पशून् चक्रे ॥ ६ ॥

सर्वहुतः तस्माद्यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नानि। छन्दांसि गायत्र्यादीनि जज्ञिरे तस्माद्यजुरप्यजायत। ऋग्यजुः सामभिश्छन्दोभिश्च विना यज्ञा न सिध्यन्ति ॥ ७ ॥

तस्माद्यज्ञात् अश्वाः अजायन्त उत्पन्ना तथा ये के चाश्वातिरिक्ता गर्दभादयोऽश्वतराश्च उभयादतः उभयोर्भागयोर्दन्ता येषां ते उभय-

तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम्। पशूँ स्तांश्चक्रे वायव्यानारण्याग्राम्याश्चये ॥ ६ ॥

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दाᳬसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥

तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥

दतः हन्वस्य दीर्घम् ऊर्ध्वाधोभागयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त। तथा ह स्फुटं तस्माद्यज्ञात् गावः च जज्ञिरे। किञ्च तस्मा-यज्ञात् अजावयः अजाः अवयश्च जाताः। न हि पशुभिर्विना यज्ञः सिध्येत् ॥ ८ ॥

यज्ञसाधने बर्हिष्यः यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वमाभाव्य यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः प्रोक्षणादिभिः संस्कारैः संस्कृतवन्तः। कीदृशम् अग्रतः सृष्टेः पूर्वं जातं पुरुषत्वेनोत्पन्नम् एतच्च प्रागेवोक्तम् तस्माद्विराडजायत

वर्त्तमानं साशनम् अशनादिव्यवहारोपेतं चेतनप्राणिजातम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकम् ते अभिलक्ष्य स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥४॥

विष्वङ् व्यक्रामदिति यदुक्तम् तदेव प्रपञ्च्यते । ततः तस्मादादिपुरुषात् विराट् ब्रह्माण्डदेहोऽजायत जातः विविधं राजन्ते वस्तून्यत्रेति विराट् । विराजः अधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी एक एव पुमानजायत सर्ववेदान्तवेद्यः परमात्मा स्वमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवदि-

त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः । ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ ४ ॥

ततोविराडजायतविराजोअधिपूरुषः । सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥

त्यर्थः । एतच्चाथर्वणोत्तरतापनीये स्पष्टमुक्तम् । स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्य अमूढो मूढ इव व्यवहरन्नास्ते माययैवेति[1] । किञ्च स जातो विराट्पुरुषोऽत्यरिच्यत अतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः । अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥ ६ ॥ १ — नृ०ता० २,९ ।

यत् सर्वहुतं यस्मिन् यज्ञे सर्वहुत् तस्मात्पुरुषमेधाख्यात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं सम्भृतम् सम्पादितम् दध्याज्यादिभोग्यजातं सम्पादितमित्यर्थः पुरुषेणेति शेषः । अथवा स पुरुषः वायव्यान्वायुदेवताकान् तान् प्रसिद्धान् पशून् चक्रे उत्पादितवान् अन्तरिक्ष-

नातिरोहति स्वीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्पुरुष एव । प्राणिनां कर्मफलभोगाय
जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः । यद्वा सर्वं पुरुषश्चेत्तर्हि परिणामीत्याशङ्क्याह अमृतत्वस्यामरणधर्मस्येशानः
मुक्तेरीशः यो हि मोक्षेश्वरो नासौ म्रियतइत्यर्थः किञ्च यत् जीवजातमन्नेनातिरोहति उत्पद्यते तस्य सर्वस्य चेशानः
ब्रह्मादिस्तम्बपर्यन्तो भूतग्राम उक्तः तस्यान्नेनैव स्थितेः इतः प्रदानाद्धि देवा उपजीवन्तीति श्रुतेः ॥ २ १—भग०गी०१०,४२।
अतीतानागतवर्तमानकालसम्बद्धं जगद्यावदस्ति एतावान् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषो विभूतिः न
तु वास्तवं स्वरूपम् वास्तवपुरुषस्तु अतः अस्मान्महिम्नो जगज्जालात् ज्यायान् च अतिशयेनाधिकः । एतदुभयं स्पष्टीक्रियते अस्य
पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादश्चतुर्थांशः अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपम् अमृतं विनाश-

एतावानस्यमहिमातोज्यायांश्चपूरुषः। पादोऽस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥

रहितम् तत् दिवि द्योतनात्मके स्वप्रकाशे स्वरूपेऽवतिष्ठतइति शेषः । यद्यपि सत्यं ज्ञानमनन्तं ब्रह्मेत्याम्नातस्य परब्रह्मणः इय-
त्ताया अभावात् पादचतुष्टयं निरूपयितुमशक्यम् तदापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ॥ ३॥
योऽयं त्रिपात्पुरुषः संसारस्पर्शरहितब्रह्मरूपः अयमूर्ध्वः उदैत् अस्मादज्ञानकार्यात्संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्टः
उत्कर्षेण स्थितवान् । तस्यास्य पादो लेशो जगद्रूपः इह मायायां पुनः अभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति । सर्वस्य जगतः
परमात्मलेशत्वं भगवताप्युक्तम् विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति[१] । ततो मायायामागत्यानन्तरं विष्वङ् विषु सर्व-
त्राञ्चतीति विष्वङ् देवतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान् किं कृत्वा साशनानशने अभि अभिलक्ष्य अशनेन सह

ततः सहस्रमसङ्ख्यानि शीर्षाणि शिरांसि यस्य सः शीर्षंश्छन्दसीति शिरःशब्दस्य शीर्षन्नादेशः शिरोग्रहणं सर्वावयवोपलक्षणम् । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तस्यैवेति सहस्रशीर्षत्वम् एवमग्रेऽपि । सहस्राक्षः सहस्रमक्षीणि यस्य सः अक्षिग्रहणं सर्वज्ञानेन्द्रियोपलक्षणम् । सहस्रपात् सहस्रं पादा यस्य सङ्ख्यासुपूर्वस्येति पादस्यान्त्यलोपः पादग्रहणं कर्मेन्द्रियोपलक्षणम् । सः पुरुषो भूमिं ब्रह्माण्डलोकरूपां सर्वतः तिर्यक् ऊर्ध्वमधश्च स्पृत्वा व्याप्य स्पृणोतिर्व्याप्तिकर्मा यद्वा भूमिशब्दो भूतोपलक्षकः पञ्च भूतानि व्याप्य दशाङ्गुलपरिमितं देशमध्यतिष्ठत् अतिक्रम्यावस्थितः । दशाङ्गुलमित्युपलक्षणम् ब्रह्माण्डाद्बहिरपि सर्वतोव्याप्यावस्थित इत्यर्थः यद्वा नाभेः सकाशाद्दशाङ्गुलमतिक्रम्य हृदि स्थितः नाभित इति कुतो लभ्यते कतम आत्मेत्युपक्रम्य सोऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरिति श्रुतेः विज्ञानात्मनो

पुरुषएवेदᳪंसर्वंयद्भूतंयच्चभाव्यम् । उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥

हृदयवस्थानं कर्मफलोपभोगाय अन्तर्यामिणो नियन्तृत्वेन तदुक्तम् द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽअभिचाकशीति[1] इति ॥ स पुरुषोऽत्र देवता तथा च श्रुतिः इमे वै लोकाः पूरयमेव पुरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुष इति[2] ॥ १ ॥

१——मुण्ड० ३,१,१ । २——१३,६,२,१ ।

यत् इदं वर्तमानं जगत् तत्सर्वं पुरुष एव यत् भूतमतीतं जगत् यच्च भाव्यं भविष्यं जगत् तदपि पुरुष एव यथास्मिन्कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमिति भावः । उतापि च अमृतत्वस्य देवत्वस्य ईशानः स्वामी स पुरुषः यत् यस्मात् अन्नेन प्राणिनां भोग्येनान्नेन फलेन निमित्तभूते-

समारोप्य वनं व्रजेत् वने वा गत्वा निर्मथ्याग्निं स्थापयेत् यथेच्छं यज्ञानपि कुर्यात् । अयमपि पक्षोऽस्ति तत्पुरुषमेधानन्तरं समाप्त एव ॥२२॥ श्रीमन्महीधरकृते वेददीपे मनोरमे । त्रिंशोऽध्याये प्रकथिताः पशवो नरमेधिके ॥ ३० ॥

रमाकान्तमिदं नत्वा हेरम्बं शिवमम्बिकाम् । एकत्रिंशोऽधुनाध्याये वेददीपो वितन्यते ॥ ॥ कात्या० नियुक्तान् ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति[1] । अस्यार्थः । नियुक्तान् ब्राह्मणमित्यादिपशून् सहस्रशीर्षेत्यनुवाकेन षोडशर्चेन ब्रह्मा स्तौति होतृवदिति किं: प्रथमाम् त्रिरुत्तमामित्याद्युक्तप्रकारेणेत्यर्थः ॥ का० त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्यवेयाद् ग्रामे वा विवसेदरण्योः[2] । त्रैधातवी उदवसानीयेष्टिः तदन्ते अयं ते योनिरित्यग्नी आत्मनि समारोह्य तदुपायभावे प्रविश्याद्भ्यः सम्भृत इति षडृचेनानुवाकेन सूर्यमुपस्थाय पश्चादपश्यन्वनं गत्वा ग्रामं

सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् । सभूमिꣳसर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

नागच्छेत् वानप्रस्थो भवेदित्यर्थः । यद्वा ग्रामे वस्तुमिच्छन् अरण्योरग्नी समारोप्यार्कोपस्थानानन्तरं ग्रामे गत्वा यज्ञान्कुर्यादिति सूत्रार्थः ॥ अथ मन्त्रार्थः । नारायणपुरुषदृष्टा जगद्बीजपुरुषदेवत्याः षोडश ऋचः पञ्चदशानुष्टुभः षोडशी त्रिष्टुप् । ब्रह्मणे ब्राह्मणमित्याद्याः पुरुषमेधरूपस्य परमात्मनोऽवयवाः पूर्वाध्यायान्ते प्रोक्तास्तेषामवयवी पुरुषोऽत्र स्तूयते । अव्यक्तमहदादिविलक्षणतमो यः पुरुषः पुरुषान्न परं किञ्चिदित्यादिश्रुतिषु प्रसिद्धः सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराजाख्योऽस्ति । कीदृशः सहस्रशीर्षा सहस्रशब्दो बहुत्ववाची । सङ्ख्यावाचकत्वे सहस्राक्ष इति विरोधः स्यात् नेत्रं सहस्रद्वयेन भाव्यम् ।

१——२१,१,११ । २——२१,१,१७-१८ ।

सर्वेषां नियोजनानन्तरं तान्नियुक्तान् पुरुषान् 'सहस्रशीर्षा पुरुष' इति[१] षोडशर्चेनानुवाकेन दक्षिणत उपविष्टो होता-भिष्टौति। होतृकर्तृकमिदं ब्रह्मोत्तमयोश्चिर्वचनम् अमन्त्राणां प्रणवेन सन्धानं च। यथा सहस्रशीर्षा पुरुषः—०ओ३म् पुरुष एवेद०—०रोहतोऽ३म्। एवमभिष्टौति। तत आलम्भनक्रमेण यथादेवतं प्रोक्षणादि। ब्राह्मणादीनां पर्यग्निकरणानन्तरमिदं ब्रह्मणे इदं प्रजापतये इत्येवं सर्वेषां यथास्वदेवतोद्देशेन त्यागः। ततः सर्वान् ब्राह्मणादीन् यूपेभ्यो विमुच्योत्सृजति। तत एकादशिनैः पशुभिः सञ्ज्ञपनादिप्रधानयागान्तं वनस्पतियागं कृत्वा प्राक् स्विष्टकृतः अध्वर्युराज्यं संस्कृत्य स्रुवेण गृहीतमाज्यं

लोमशम्। अशूद्रा अब्राह्मणास्ते प्राजापत्याः। मागधः पुँश्चली कितवः क्लीबोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः ॥२२॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां त्रिंशोऽध्यायः ॥ ३० ॥

गृहीत्वा ओम् पुरुषदेवताभ्यो ब्रह्मादिभ्यः आहवनीये जुहोति ओम् ब्रह्मणे स्वाहा १, क्षत्राय स्वाहा २, मरुद्भ्यः ३, तपसे ४, तमसे ५, इत्याद्यध्यायान्तं सर्वदेवताभ्यः चतुरशीत्युत्तरशतसङ्ख्याकाभ्यः तावतीष्टिताहुतीर्हुत्वा स्विष्टकृदादि उदवसानीयान्तं कर्म कृत्वान्ते यजमानः अयं ते योनिरिति मन्त्रेणात्मन्यग्नीन् समारोप्याद्भ्यः सम्भृत इति (३१,१७) षड्चेनानुवाकेन सूर्यमुपस्थाय पश्चादनवलोकयन्नरण्यं गत्वा वसेत् गार्हपत्ये धरारणिमनुप्रहृत्याहवनीयउत्तरारणिमात्मन्यग्नौ समारोप्यारण्यं व्रजेदिति शाङ्खायनोक्तेः। यदि पुरुषमेधानन्तरं ग्रामवासेच्छा तर्ह्युदवसानीयान्ते सायमाहुतौ हुत्वारण्योरग्नौ समारोप्योत्तरनारायणेनार्कमुपस्थाय देवयज-

१—३१,१—१६।

अग्नये पीवानं स्थूलम् ५. पृथिव्यै पीठसर्पिणं पीठेनासनेन सर्पति गच्छति पीठसर्पी तं पङ्गुम् ६. वायवे चाण्डालं चण्डालकर्माणम् ७. अन्तरिक्षाय वंशनर्तिनम् वंशेन नर्तनशीलम् ८. दिवे खलतिमलोमशिरस्कं खल्वाटमित्यर्थः ९. सूर्याय हर्यक्षं हरितनेत्रम् १०. नक्षत्रेभ्यः किर्मिरं कर्बुरवर्णम् ११. चन्द्रमसे किलासं सिध्मरोगवन्तम् १२. अह्ने शुक्लवर्णं पिङ्गाक्षम् १३. रात्र्यै कृष्णवर्णं पिङ्गाक्षम् १४. ॥२१॥ १–१३,६,२,७-८।

तत एतानचमाचानष्टौ विरूपान् परस्परं विरुद्धरूपान् पशूनालभते। तानाह। अतिदीर्घम् अतिह्रस्वम् अतिस्थूलम्

अग्नयेपीवानम्पृथिव्यैपीठसर्पिणंवायवेचाण्डालमन्तरिक्षायवꣳशनर्त्तिनन्दिवेखलतिꣳसूर्य्यायहर्य्यक्षन्नक्-

क्षत्रेभ्यःकिर्म्मिरञ्चन्द्रमसेकिलासमह्नेशुक्लम्पिङ्गाक्षꣳरात्र्यैकृष्णम्पिङ्गाक्षम् ॥ २१ ॥

अथैतानष्टौविरूपानालभतेतिदीर्घञ्चातिह्रस्वञ्चातिस्थूलञ्चातिकृशञ्चातिशुक्लञ्चातिकृष्णञ्चातिकुल्वञ्चाति

अतिकृशम् अतिशुक्लम् अतिकृष्णम् अतिकुल्वं रोमरहितम् अतिलोमशं सर्वाङ्गव्यापिरोमाणम्। ते अष्टौ अशूद्राः अब्राह्मणाः शूद्रब्राह्मणव्यतिरिक्ताः पशवो भवन्ति तेऽष्टावपि प्राजापत्याः प्रजापतिदेवताः अष्टाउत्तमानालभतइत्युपक्रम्य ते वै प्राजापत्या भवन्तीति श्रुतेः। अत्र जातिनियमात्पूर्वेषु जातेरनियमः। वीणावादादयश्चतुर्दश अतिदीर्घादयोऽष्टौ एवं द्वाविंशतिः शेषाः। तथा मागधः पुंश्चली कितवः क्लीबः एते चत्वारोऽपि शूद्रब्राह्मणव्यतिरिक्ताः प्रजापतिदेवताः पूर्वैः सहैते षड्विंशतिः ते सर्वे द्वितीययूपे नियोज्याः॥ ॥

प्रतिश्रुत्काया अर्तनं दुःखिनम् ७. घोषाय भषं जल्पकम् ८. अन्ताय बहुवादिनम् ९. अनन्ताय मूकं वाग्विकलम् १०. शब्दाय आडम्बराघातम् आडम्बरमाहन्ति तम् कोलाहलकर्तारम् ११. ॥ अथैकादशे यूपे । महसे वीणावादं वीणावादनकर्तारम् १. क्रोशाय तूणवध्मम् तूणवं वाद्यविशेषं धमति तथाभूतम् २. अवरस्पराय शङ्खध्मं शङ्खवादकम् ३. वनाय वनपं वनपालकम् ४. अन्यतोऽरण्याय दावपं वनवह्निपम् ५. ॥ १९ ॥

नर्माय पुंश्चलूं दुष्टां नारीम् हसाय कारिं करणशीलम् यादसे शाबल्याम् शबलः कर्बुरवर्णः तदपत्यभूतां स्त्रियम् ग्रामण्यं ग्रामने-

नर्मायपुँश्चलूँहसायकारिंयादसेशाबल्याङ्ग्रामण्यङ्गणकमभिक्रोशकन्तान्महसेवीणावादम्पाणिघ्नन्तूण

वध्मन्तान्नृत्तायानन्दायतलवम् ॥ २० ॥

तारम् गणकं ज्योतिर्विदम् अभिक्रोशकं निन्दकम् तान् सर्वान् महसे जुष्टं नियुनज्मीति एकादशे यूपे आलभते ॥ एवं प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टास्तान् समाप्तिपर्यन्तान्तृतीयोच्छ्रिते यूपे नियुनक्ति तांश्च वीणावादं पाणिघ्नमित्यादीन् रात्रै श्वेतं भिक्षाघमित्यन्तांश्चतुर्दश ततोऽथैतानष्टौ विरूपानित्यष्टौ च मागधादींश्चतुरः एवं षड्विंशतिं द्वितीये यूपे पूर्वोक्ता एकादश एवं सप्तत्रिंशत् । तानेवाह । वीणावादम् पाणिघ्नं हस्ततालवादकम् तूणवध्मम् तान् त्रीन् नृत्ताय आलभते ३. आनन्दाय तलवम् वा गतिगन्धनयोः अव्ययं हिंसा तलं हस्तादितलं वाति वाद्यमुखं हन्ति स तलवस्तम् वाद्यवादकम् ४. ॥ २० ॥

यूपे । प्रमादोषाय स्राविनं स्रौ हर्षयये कुक्कुटम् १. विद्धेभ्यो भूर्तेभ्यः सिध्मलं सिध्माख्यरोगवन्तम् २. भूत्यै जागरणं जागरूकम् ३. अभूत्यै स्वपनं शयालुम् ४. आर्त्यै जनवादिनं जनान्वदति तम् ५. व्यृद्ध्यै अपगल्भम् ६. संशराय प्रच्छिदं प्रच्छेदनकर्तारम् ७. ॥ १७ ॥

अक्षराजाय कितवं धूर्तम् ८. कृताय आदिनवदर्शम् आदिनवो दोषस्तं पश्यति तथाभूतम् ९०. त्रेतायै कल्पिनं कल्पकम् १०

अक्षराजाय कितवं कृतायादिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम् ॥ १८ ॥

प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकं शब्दायाडम्बराघातं महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्यतोरण्याय दावपम् ॥ १९ ॥

द्वापराय अधिकल्पिनम् अधिकल्पनाकर्तारम् ११. ॥ अथ दशमे यूपे । आस्कन्दाय सभास्थाणुं सभायां स्थिरम् १. मृत्यवे गोव्यच्छं गाः प्रति गमनशीलम् २. अन्तकाय गोघातं गवां हन्तारम् ३. क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति यः पुमान् गां विकृन्तन्तं छिन्दन्तं भिक्षमाणो याचमानः उपतिष्ठते तं याचितारं क्षुधे देव्यै आलभेत ४. दुःकृताय चरकाचार्यं चरकाणां गुरुम् ५. पाप्मने सैलगं सैलगो दुष्टस्तदपत्यम् ६. ॥ १८ ॥

सरोभ्यो धैवरं कैवर्तापत्यम् ८. उपस्थावराभ्यः दाशम् दाशृ दाने दातारम् दाशो धीवरो वा ९. वैशन्ताभ्यो बैन्दं बिन्दो निषादापत्यम् १०. नड्वलाभ्यः शौष्कलं मत्स्याजीविनम् शुष्कला मत्स्यास्तैर्जीवति तम् ११. ॥ अथाष्टमे यूपे । पाराय मार्गारम् मृगारेरपत्यं मार्गारस्तम् १. अवाराय कैवर्तम् २. तीर्थेभ्यः आन्दम् अदि बन्धने अन्दति आन्दस्तं बन्धनकर्तारम् ३. विषमेभ्यो मैनालम्

सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो बैन्दन्नड्वलाभ्यः शौष्कलम्पाराय मार्गारमवाराय कैवर्तन्तीर्थेभ्य आन्दं विषमेभ्यो मैनालꣳ स्वनेभ्यः पर्णकङ्गुहाभ्यः किरातꣳ सानुभ्यो जम्भकम्पर्वतेभ्यः किम्पूरुषम् ॥ १६ ॥

बीभत्सायै पौल्कसं वर्णाय हिरण्यकारन्तुलायै वाणिजम्पश्चादोषाय ग्लाविनं विश्वेभ्यो भूतेभ्यः सिध्मलम्भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनं व्यृद्ध्या अपगल्भꣳ सꣳशराय प्रच्छिदम् ॥ १७ ॥

अल् वारणे मीनानलति वारयति जालैरसौ मीनालस्तदपत्यम् ४. स्वनेभ्यः पर्णकं भिल्लम् ५. गुहाभ्यः किरातम् ६. सानुभ्यः जम्भकं जभि नाशने जम्भयतीति तम् हिंसकम् ७. पर्वतेभ्यः किम्पूरुषं कुत्सितनरम् ८. ॥ १६ ॥

बीभत्सायै पौल्कसं पुल्कसापत्यम् ९. वर्णाय हिरण्यकारं स्वर्णनिष्पादकम् १०. तुलायै वाणिजं वणिगपत्यम् ११. ॥ अथ नवमे

मन्यवे अयस्तापमयस्तपं लोहतापकम् १०, क्रोधाय निसरं नितरां सर्तारम् ११. ॥ अथ षष्ठे यूपे । योगाय योक्तारं योगकर्तारम् १. शोकाय अभिसर्तारं सम्मुखमागच्छन्तम् २. क्षेमाय विमोक्तारं विमोचनकरम् ३. उत्कूलनिकूलेभ्यः त्रिष्ठिनम् त्रिषु तिष्ठतीति त्रिष्ठी तम् विद्यादिषु स्थितं शीलवन्तमित्यर्थः ४. वपुषे मानस्कृतं पूजाया अभिमानस्य वा कर्तारम् सक् छान्दसः ५. शीलाय आञ्जनीकारीम् अञ्जनविद्याकर्त्रीम् ६. निर्ऋत्यै कोशकारीं खड्गाद्यावरणं कोशस्तत्कारिणीं स्त्रियम् ७. यमाय असूम् न सूते सा असूः ताम् वन्ध्याम् ८. ॥ १४ ॥

वपुषे मानस्कृतꣳ शीलायाञ्जनीकारीं निर्ऋत्यै कोशकारीं यमायासूम् ॥ १४ ॥

यमाय यमसूमथर्वभ्योऽवतोकाꣳ संवत्सराय पर्यायिणीं परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीं वत्सराय विजर्जराꣳ संवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धꣳ साध्येभ्यश्चर्मम्नम् ॥ १५ ॥

यमाय यमसूं युग्मप्रसवित्रीम् ९. अथर्वभ्योऽवतोकां निरपत्याम् १०. संवत्सराय पर्यायिणीम् पर्यायोऽनुक्रमस्तद्वतीमनुक्रमज्ञाम् ११. ॥ अथ सप्तमे यूपे । परिवत्सराय अविजाताम् अप्रसूताम् १. इदावत्सराय अतीत्वरीमत्यन्तं कुलटाम् पुंश्चली कुलटेत्वरी २. इद्वत्सराय अतिष्कद्वरीम् अतिस्कन्दति स्रवति इत्यतिस्कद्वरी स्कन्देर्वनन्तात् छान्दसौ रेफौ ३. वत्सराय विजर्जरां शिथिलशरीराम् ४. संवत्सराय पलिक्नीं श्वेतकेशाम् ५. ऋभुभ्यः अजिनसन्धं चर्मसन्धातारम् ६. साध्येभ्यः चर्मम्नं चर्माभ्यासकरम् ७ ॥ १५ ॥

सूर्यलोकाय अभिषेक्तारम् ६. वर्षिष्ठाय नाकाय उत्कृष्टस्वर्गाय परिवेषणकर्तारम् ४. देवलोकाय पेशितारम् पिश अवयवे पिंशतीति पेशिता तम् प्रतिमाद्यवयवकर्तारम् ५. मनुष्यलोकाय प्रकरितारम् कॄ विक्षेपे विक्षेप्तारम् ६. सर्वेभ्यो लोकेभ्यः उपसेक्तारमुपसेचनकर्तारम् ७. अवऋत्यै वधाय उपमन्थितारमुपमन्थनकर्तारम् ८. मेधाय वासःपल्पूलीम् वाससां प्रक्षालनकर्तारम् पल्पूल प्रक्षालनच्छेदनयोः ९. प्रकामाय रजयित्रीं वस्त्राणां रङ्गकारिणीं नारीम् १०. ॥ १२ ॥

ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दं प्रियाय प्रियवादिनमरिष्ट्या अश्वसादꣳ स्वर्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम् ॥ १३ ॥

मन्यवेऽयस्तापं क्रोधाय निसरं योगाय योक्तारꣳ शोकायाभिसर्तारं क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनं

ऋतये स्तेनहृदयं स्तेनस्येव हृदय यस्य तम् ११. ॥ अथ पञ्चमे यूपे। वैरहत्याय पिशुनं परहस्तसूचकम् १. विविक्त्यै क्षत्तारं प्रतीहारम् २. औपद्रष्ट्र्याय अनुक्षत्तारं प्रतिहारसेवकम् ३. बलाय अनुचरं सेवकम् ४. भूम्ने परिष्कन्दम् परितः स्कन्दति रेतः सिञ्चति तम् ५. प्रियाय प्रियवादिनं मधुरभाषिणम् ६. अरिष्ट्यै अश्वसादम् अश्वारोहम् ७. स्वर्गाय लोकाय भागदुघम् भागं दुग्धे भागदुघस्तम् विभागप्रदम् ८. वर्षिष्ठाय नाकाय परिवेष्टारम् ९. ॥ १३ ॥

अर्मेभ्यो हस्तिपं गजपालकम् २. जवाय अश्वपं तुरगपालकम् ३. पुष्ट्यै गोपालं धेनुपालकम् ४. वीर्याय अविपालम् ५. तेजसे अजपालम् ६. इरायै कीनाशं कर्षकम् कीनाशः कर्षके यमे ७. कीलालाय सुराकारं मद्यकृतम् ८. भद्राय गृहपं गेहपालकम् ९.

अर्मेभ्यो हस्तिपञ्जवायाश्वपम्पुष्ट्यै गोपालं वीर्यायाविपालन्तेजसेऽजपालमिरायै कीनाशङ्कीलालाय सुरा

कारम्भद्राय गृहपꣳ श्रेयसे वित्तधमाध्यक्ष्यायानुक्षत्तारम् ॥ ११ ॥

भायै दार्वाहारम्प्रभाया अग्न्येधम्ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारन्देवलोकाय पेशितार

म्मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्य उपसेक्तारमवऋत्यै वधायोपमन्थितारम्मेधाय वासःपल्पूली

म्प्रकामाय रजयित्रीम् ॥ १२ ॥

९. श्रेयसे वित्तधं वित्तं दधातीति वित्तधस्तम् धनकर्तारम् १०. आध्यक्ष्याय अनुक्षत्तारं सारथ्यनुसारिणम् ११. ॥ ११ ॥

अथ चतुर्थे यूपे। भायै दार्वाहारं काष्ठानामाहर्तारम् १. प्रभायै अग्न्येधम् अग्निमेधयतीति तमग्नेर्वर्धकम् २. ब्रध्नस्य विष्टपाय

निःकृत्य पेशस्कारीं रूपकर्त्रीम् ४६. संज्ञानाय स्मरकारीं कामदीपनकरीम् ४७. प्रकामोद्याय तत्कृपाय देवाय उपसदतीत्युपसत् समीपस्थितस्तम् ४८. एतानालिष्टे नियुनक्ति ॥ अथ द्वितीये यूपे। वर्णाय अनुरुधम् अनुरुध्यतेऽनुसरतीत्यनुरुत् तम् १. बलाय उपदाम् उपददातीत्युपदास्तमुपायनदातारम् ॥ ९ ॥

सन्धये जारङ्गेहायोपपतिमार्त्यै परिवित्तन्निर्ऋत्यै परिविविदानमराध्या एदिधिषुःपतिन्निष्कृत्यै पेशस्कारीᳬ

सञ्ज्ञानायस्मरकारीम्प्रकामोद्यायोपसदंवर्णायानुरुधम्बलायोपदाम् ॥ ९ ॥

उत्सादेभ्यःकुब्जम्प्रमुदे वामनन्द्वार्भ्यःस्रामᳬस्वप्नायान्धमधर्मायबधिरम्पवित्रायभिषजम्प्रज्ञानायनक्षत्रदर्श

माशिक्षायै प्रश्निनमुपशिक्षायाऽअभिप्रश्निनम्मर्यादायै प्रश्नविवाकम् ॥ १० ॥

उत्सादेभ्यः कुब्जं वक्राङ्गम् ३. प्रमुदे वामनं ह्रस्वाङ्गम् ४. द्वार्भ्यः स्रामं सर्वदा जलक्लिन्ननेत्रम् ५. स्वप्नाय अन्धं नेत्रहीनम् ६. अधर्माय बधिरं कर्णेन्द्रियहीनम् ७. पवित्राय भिषजं वैद्यम् ८. प्रज्ञानाय नक्षत्रदर्शं नक्षत्राणि दर्शयति तम् गणकम् ९. आशिक्षायै प्रश्निनं प्रश्नवन्तम् शकुनादिप्रष्टारमित्यर्थः १०. उपशिक्षायै अभिप्रश्निनमभिप्रश्नवन्तम् ११. ॥ अथ तृतीये यूपे। मर्यादायै प्रश्नविवाकं कृतान्प्रश्नान्यो विविनक्ति ब्रूते स प्रश्नविवाकस्तम् १. ॥ १० ॥

नदीभ्यः पौञ्जिष्ठं पुञ्जिष्ठोऽन्त्यजः पुल्कसस्तदपत्यम् ३१. ऋक्षीकाभ्यो नैषादं निषादपुत्रम् ३२. पुरुषव्याघ्राय दुर्मदमुन्मत्तम् ३३. गन्धर्वाप्सरोभ्यो व्रात्यं सावित्रीपतितम् ३४. प्रयुग्भ्यः उन्मत्तम् ३५. सर्पदेवजनेभ्यः अप्रतिपदं प्रतिपद्यते जानातीति प्रतिपत् अतथाविधं विकलमित्यर्थः ३६. अयेभ्यः कितवं द्यूतकारम् ३७ ईर्यतायै अकितवमद्यूतकृतम् ३८. पिशाचेभ्यः बिदलकारीं वंशविदारिणीं वंशपात्रकारिणीम् ३९. यातुधानेभ्यः कण्टकीकारीं कण्टकी कर्म तत्कारिणीम् ४०. ॥ ८ ॥

तपसेकौलालम्मायायैकर्मारꣳरूपायमणिकारꣳशुभेवपꣳशरव्यायाइषुकारꣳहेत्यैधनुष्कारङ्कर्मणे

ज्याकारन्दिष्टायरज्जुसर्जम्मृत्यवेमृगयुमन्तकायश्वनिनम् ॥ ७ ॥

नदीभ्यःपौञ्जिष्ठमृक्षीकाभ्योनैषादम्पुरुषव्याघ्रायदुर्मदङ्गन्धर्वाप्सरोभ्योव्रात्यम्प्रयुग्भ्यउन्मत्तꣳसर्पदेवजनेभ्यो

प्रतिपदमयेभ्यःकितवमीर्यतायाअकितवम्पिशाचेभ्योबिदलकारींयातुधानेभ्यःकण्टकीकारीम् ॥ ८ ॥

सन्धये जारमुपपतिम् ४१. गेहाय उपपतिं व्यभिचारिणम् ४२. आर्त्यै परिवित्तम् ऊढे कनिष्ठेऽनूढम् ४३. निर्ऋत्यै परिविविदानम् अनूढे ज्येष्ठे ऊढवन्तम् ४४. आराद्ध्यै देव्यै एदिधिषुःपतिम् ज्येष्ठायां दुग्नामनूढायाम् ऊढा एदिधिषुः तत्पतिम् ४५.

अतः परं पुरुषमेधकाः पशवः आ अध्यायसमाप्तेः। ततः प्रतियूपमेकैकमेकादशिनं नियुज्य ब्राह्मणादीनष्टचत्वारिंशत्सङ्ख्यान् पुरुषान् प्रकामोद्याय सदमित्यन्तानग्निष्ठे यूपे नियुनक्ति इतरेषु यूपेष्वेकादशैकादश पुरुषान् वर्णायानुरुधमित्यादीन्नियुनक्ति। ब्रह्मणे ब्राह्मणम् तत्र ब्रह्मणे जुष्टं नियुनज्मीति अग्निष्ठे ब्राह्मणं प्रथमं नियुनक्ति। एवमग्रे सर्वेषां यूपे एव बन्धनम् चतुर्थ्यन्तं देवतापदं द्वितीयान्तं पुरुषपदं बोद्धव्यम्। क्षत्राय राजन्यं क्षत्रियम् २. मरुद्भ्यो वैश्यम् ३. तपसे शूद्रम् ४. तमसे तस्करं स्तेनम् ५. नारकाय वीरहणं नष्टाग्निं शूरं वा ६. पाप्मने क्लीबं नपुंसकम् ७. आक्रयायै अयोगूमयसो गन्तारम् ८. कामाय पुंश्चलूं व्यभिचारिणीम् ९. अतिक्रुष्टाय मागधं मगधदेशजं क्षत्रियायां वैश्यपुंसो जातं वा। १०. ॥ ५ ॥

नृत्ताय सूतङ्गीताय शैलूषन्धर्माय सभाचरन्नरिष्ठायै भीमलन्नर्माय रेभꣳ हसाय कारिमानन्दाय स्त्रीषखम्प्रमदे कुमारीपुत्रम्मेधायै रथकारन्धैर्याय तक्षाणम् ॥ ६ ॥

नृत्ताय सूतं ब्राह्मण्यां क्षत्रियाज्जातः सूतः ११. गीताय शैलूषं नटम् १२. धर्माय सभाचरं सभायां चरतीति तम् १३. नरिष्ठायै भीमलं भयङ्करम् १४. नर्माय रेभं शब्दकर्तारं वाचाटम् १५. हसाय कारिं करणविशिष्टम् १६. आनन्दाय स्त्रीषखं स्त्रियाः सखायम् १७. प्रमदे कुमारीपुत्रं कानीनम् १८. मेधायै रथकारं माहिष्येण करण्यां जातम् १९. धैर्याय तक्षाणं सूत्रधारम् २०. ॥ ६ ॥

तपसे कौलालं कुलालापत्यम् २१. मायायै कर्मारं लोहकारम् २२. रूपाय मणिकारं रत्नकर्तारम् २३. शुभे शुभाय वपं बीजवप्तारम् २४. शरव्यायै इषुकारं बाणकर्तारम २५. हेत्यै धनुःकारं चापकारिणम् २६. कर्मणे ज्याकारं प्रत्यञ्चनकर्तारम् २७. दिष्टाय रज्जुसर्जं रज्जोः स्रष्टारं निर्मातारम् २८. मृत्यवे मृगयुं मृगग्राहम् २९. अन्तकाय श्वनिनं शुनो नेतारम् ३०. ॥ ७ ॥

इति चत्वारिंशद्दिनैः सिध्यति । अत्र यूपैकादशिनी भवति एकादशाग्नीषोमीयाः पशवो भवन्ति तेषां च प्रतियूपं मध्यमे वा यूपे यथेच्छ नियोजनम्। आज्येन सकृद्गृहीतेन देव सवितरिति प्रत्यृचं तिस्र आहुतीराहवनीये जुहोति। तत्र देव सवितः[1] तत्सवितुः[2] इ व्याख्याते ॥ १ । २ ॥

१—११, ७।  २—३, ३५।

विश्वानिदेवसवितर्दुरितानिपरासुव। यद्भद्रन्तन्नआसुव॥ ३॥

विभक्तारꣳहवामहेवसोश्चित्रस्यराधसः। सवितारन्नृचक्षसम्॥ ४॥

ब्रह्मणेब्राह्मणङ्क्षत्रायराजन्यम्मरुद्भ्योवैश्यन्तपसेशूद्रन्तमसेतस्करन्नारकायवीरहणम्पाप्मनेक्लीबमाक्र

याया अयोगूङ्कामायपुँश्चलूमतिक्रुष्टायमागधम्॥ ५॥

हे देव सवितः विश्वानि सर्वाणि दुरितानि पापानि परासुव दूरे गमय। यद्भद्रं कल्याणं तन्नोऽस्मान्प्रति आसुव आगमय ॥ ३ ॥

वयं सवितारं हवामहे आह्वयामः किम्भूतं वसोः वासयितुश्चित्रस्य नानाविधस्य राधसः धनस्य विभक्तारं विभज्य दातारम् नृचक्षसं नृणां द्रष्टारं यथायोग्यम् ॥ ४ ॥

प्राजापत्यश्चरुः प्रजापतिदेवत्यश्चरुः कार्यः ७. विष्णुपत्न्यै अदित्यै चरुरेव ८. वैश्वानराय वैश्वानरगुणविशिष्टायाग्नये द्वादशकपालः पुरोडाशः ९. अनुमत्यै देवतायै अष्टाकपालः पुरोडाशः कार्यः १०. दशहविषोऽवेष्टेर्देवता हवींषि अश्वमेधोपयोगित्वादुक्तानि समिष्टोपञ्चाश्वमेधिकोऽध्याय इति कात्यायनोक्तः[1] ॥ ६० ॥ १—अनुक्रमण्याम् ।

श्रीमन्महीधरकृते वेददीपे मनोहरे। शिष्टाश्वमेधमन्त्रोक्तिर्गतोऽध्यायोऽष्टविंशतः ॥ २९ ॥

कपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः ॥ ६० ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

देवसवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥ १ ॥

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ २ ॥

श्रीगणेशाय नमः । इत उत्तरं पुरुषमेधः । द्वावध्यायौ नारायणः पुरुषोऽपश्यत् । ब्राह्मणराजन्ययोरतिष्ठाकामयोः पुरुषमेधसञ्ज्ञको यज्ञो भवति । सर्वभूतान्यतिक्रम्य स्थानमतिष्ठा । चैत्रशुक्लदशम्यामारम्भः । अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसदः पञ्च सुत्या

अथाग्निषोमीयस्य पशुपुरोडाशमनुदिशामावेष्टीर्निर्वपतीत्युपक्रम्य तदाहुर्दशहविषमन्त्यामिष्टिं (१८) निर्वपेदिति श्रुत्या दशहविष्कावेष्टिसञ्ज्ञेष्टिः कथिता तस्या देवता हवींषि चाह। इमान्यपि ब्राह्मणवाक्यानि न मन्त्राः। अग्नयेऽष्टाकपालः पुरोडाशः कार्यः अष्टसु कपालेषु संस्कृतोऽष्टकपालः तद्धितार्थोत्तरपदसमाहारे चेति समासः अष्टनः कपाले हविषीति अष्टन्शब्दस्य दीर्घः कौहशायाग्नये गायत्राय गायत्र्या स्तुताय त्रिवृते त्रिवृत्स्तोमेन स्तुताय राथन्तराय रथन्तरसाम्ना स्तुताय १. इन्द्राय एकादशकपालः पुरोडाशः समासः पूर्ववत् कौहशाय इन्द्राय त्रैष्टुभाय त्रिष्टुभा स्तुताय पञ्चदशाय पञ्चदशस्तोमस्तुताय बार्हताय बृहत्सामस्तुताय २.

देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्याम्पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्र औष्णिहाय त्रयस्त्रिꣳशाय रैवताय द्वादश

विश्वेभ्यो देवेभ्यः द्वादशकपालः पुरोडाशः कौहशेभ्यः जागतेभ्यः जगत्या छन्दसा स्तुतेभ्यः सप्तदशेभ्यः सप्तदशस्तोमस्तुतेभ्यः वैरूपेभ्यः वैरूपसामस्तुतेभ्यः ३. मित्रावरुणाभ्यां पयस्या पयसि श्रितः चरुः कौहशाभ्यामानुष्टुभाभ्याम् अनुष्टुभा स्तुताभ्याम् एकविंशाभ्यामेकविंशस्तोमस्तुताभ्याम वैराजाभ्यां वैराजसामस्तुताभ्याम् ४. बृहस्पतये चरुः कौहशाय पाङ्क्ताय पङ्क्तिच्छन्दसा स्तुताय त्रिणवाय त्रिणवस्तोमस्तुताय शाक्वराय शाक्वरसामस्तुताय ५. सवित्रे द्वादशकपालः पुरोडाशः कौहशाय सवित्रे औष्णिहाय उष्णिक्छन्दसा स्तुताय त्रयस्त्रिंशाय त्रयस्त्रिंशस्तोमस्तुताय रैवताय रैवतसामस्तुताय ६. एवं छन्दःस्तोमसामसहितान् षट् देवानभिधाय चतुरः केवलानाह

शितिपृष्ठः बार्हस्पत्यः बृहस्पतिदेवत्यः ५. शिल्पो विचित्रवर्णो वैश्वदेवः विश्वदेवदेवत्यः ६. अरुणः रक्तः ऐन्द्रः इन्द्रदेवत्यः ७. कल्माषः कर्बुरो मारुतः मरुद्देवत्यः ८. संहितः दृढाङ्गः ऐन्द्राग्नः इन्द्राग्निदेवत्यः ९. अधोरामः अधोदेशे श्वेतः सावित्रः सवितृदेवत्यः १०. एकः शितिः श्वेतः पादो यस्य स एकशितिपात् एकपदे श्वेतोऽन्यत्र कृष्णः पेत्वः पतनशीलो वेगवान् पशुः वारुणः वरुणदेवत्यः ११. एवमेकादश जाताः ॥ ५८ ॥

अ॒ग्नये॑ऽनी॑कवते॒ रोहि॑ताञ्जिरन॒ड्वान॒धोरा॑मौ सावि॒त्रौ पौ॒ष्णौ र॑जत॒नाभी॑ वैश्वदे॒वौ पि॒शङ्गौ॑ तूप॒रौ मा॑रु॒तः

क॒ल्माष॑ आग्ने॒यः कृ॒ष्णो॒ऽजः सा॑रस्व॒ती मे॒षी वा॑रु॒णः पेत्वः॑ ॥ ५९ ॥

अ॒ग्नये॑ गाय॒त्राय॑ त्रि॒वृते॒ राथ॑न्तराया॒ष्टाक॑पाल॒ इन्द्रा॑य॒ त्रैष्टु॑भाय पञ्चद॒शाय॒ बार्ह॑तायैका॑दशकपालो॒ विश्वे॑भ्यो

द्वितीयैकादशिनीपशुदेवानाह। रोहितो रक्तोऽञ्जिश्तिलको यस्य सोऽनड्वान् वृषभोऽनीकवतेऽग्नये आलभ्यः अनीकं मुखं सैन्यं वा यस्य सोऽनीकवान् तस्मै १. अधोरामौ अधोभागे श्वेतौ द्वौ पशू सावित्रौ सवितृदेवतौ २. ३. रजतवर्णा नाभिर्ययोस्तौ रजतनाभौ द्वौ पौष्णौ पूषदेवत्यौ ४. ५. पिशङ्गौ पीतौ तूपरौ निःशृङ्गौ वैश्वदेवौ विश्वदेवदेवत्यौ ६. ७. कल्माषः कर्बुरो मारुतः ८. कृष्णः श्यामोऽजो मेषः आग्नेयः अग्निदेवत्यः ९. मेषी सारस्वती १०. पेत्वः वेगवान्वरुणदेवत्यः ११. एवमेकादश ॥ ५९ ॥

इतोऽश्वसेनायाः सकाशात् दुच्छुनाः दुच्छुनः दुष्टाश्च ते श्वानश्च दुच्छ्वानः तान् दुष्टान् शुनः श्वसदृशान् शत्रूनपप्रोथ नाशय प्रोथतिर्नाशनार्थः । यतः त्वमिन्द्रस्य मुष्टिः असि मुष्टिवद्दृढभूतोऽसि अतो वीडयस्व आत्मानमस्मान्दृढय ॥ ५६ ॥

हे इन्द्र अमूः शत्रुसेनाः त्वमा अज समन्तात्परिक्षिप अज गतिक्षेपणयोः । यतो दुन्दुभिः केतुमत् प्रज्ञावत् यथा वावदीति सत्यमर्थं वदति अत इमाः अश्वसेनाः प्रत्यावर्तय जयं प्रापय्य प्रत्यानय । किञ्च नोऽस्माकं नरः योधाः सञ्चरन्ति कीदृशा नरः अश्वपर्णाः

आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति । समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥ ५७ ॥

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो

मारुतः कल्माष ऐन्द्राग्नः संहितोऽधोरामः सावित्रो वारुणः कृष्ण एकशितिपात्पेत्वः ॥ ५८ ॥

अश्वस्येव पर्णं पतनं येषां ते । किञ्च अस्माकं रथिनः रथस्थाः जयन्तु युद्धे जयं प्राप्नुवन्तु ॥ ५७ ॥ १—१३, ५, १, ३ ।

अश्वमेधे श्रुतिरस्ति ह त्वेवैतएकादशिन्यावालभेतेति[१] । तयोरेकादशिन्योः पशवस्तद्देवताश्च कण्डिकाद्वयेनोच्यन्ते तेनेमानि ब्राह्मणवाक्यानि द्रव्यदेवताप्रतिपादकानि न तु मन्त्राः । कृष्णा ग्रीवा यस्य स कृष्णग्रीवः पशुराग्नेयः अग्निदेवत्यः १. मेषी सारस्वती सरस्वतीदेवताका २. बभ्रुः पिङ्गलवर्णः पशुः सौम्यः सोमदेवत्यः ३. श्यामः कृष्णवर्णः पौष्णः पूषदेवत्यः ४. शिति श्यामं पृष्ठं यस्य स

हे रथ हे देव स त्वं हव्या हवींषि प्रतिगृभाय प्रतिगृहाण । कीदृशः त्वम् इन्द्रस्य वज्रः वज्रोत्पन्नत्वात् । मरुतामनीकं मुखं मुख्यः देवानां जयप्रापकत्वात् । मित्रस्य देवस्य गर्भः गीयते स्तूयते गर्भः गृणातेर्भप्रत्ययः सूर्येण स्तूयमानः । वरुणस्य नाभिः नभ्यते हिंस्यतेऽनेनेति नाभिः नभ हिंसायाम् इण्प्रत्ययः वरुणस्य हननसाधनम् । नोऽस्माकमिमां हव्यदातिं हविषो दानं जुषाणः सेवमानः । सेमामित्यत्र सोऽचि लोपे चेत्पादपूरणमिति सन्धिः । गृभाय गृह्णातेर्हलः श्नः शानज्झावित्यनुवृत्तौ छन्दसि शायजपीति हौ परे श्नाप्रत्ययस्य शायजादेशः हस्य भश्च ॥ ५४ ॥

उपश्वासयपृथिवीमुतद्यांपुरुत्रातेमनुतांविष्ठितञ्जगत् । सदुन्दुभेसजूरिन्द्रेणदेवैर्दूराद्दवीयोअपसेधशत्रून् ॥ ५५ ॥

आक्रन्दयबलमोजोनआधानिष्टनिहिदुरिताबाधमानः । अपप्रोथदुन्दुभेदुच्छुनाइतइन्द्रस्यमुष्टिरसिवीडयस्व ५६

तिस्र ऋचो दुन्दुभिदेवत्याः । हे दुन्दुभे स त्वं पृथिवीमुत द्यामन्तरिक्षमपि उपश्वासय उपशब्दय श्वसिः शब्दार्थः । विष्ठितं विविधं स्थितं जगत् स्थावरजङ्गमात्मकं विश्वम् पुरुत्रा बहुधा ते त्वां मनुतां जानातु दुन्दुभिर्नदतीति । स त्वं दूराद्दवीयः अतिदूरं शत्रूनपसेध अपगमय अत्यन्तं दूरं दवीयः स्थूलदूरेति यणादिलोपपूर्वगुणौ । कीदृशः त्वम् इन्द्रेण देवैश्च सजूः प्रीतियुक्तः ॥ ५५ ॥

हे दुन्दुभे त्वं बलं शत्रुसैन्यमाक्रन्दय रोदय पलायध्वं मदीयाः सर्वे हता इत्यादि दीनरवं कारयेत्यर्थः । नोऽस्माकमोजः तेजः आधाः आधेहि देहि । दुरिता दुरितानि पापानि बाधमानो निराकुर्वन् सन् निष्टनिहि शब्दं कुरु स्तन शब्दे चुरादिरदन्तः । किञ्च

तिस्र ऋचो रथदेवता:। हे वनस्पते वनस्पतिविकार काष्ठमय रथ त्वम् अस्मिन् कर्मणि[1] त्वं वीड्वङ्गः दृढाङ्गो भूयाः भव वीडूनि अङ्गानि यस्य। कीदृशः अस्मत्सखा अस्माकं मित्रभूतः। प्रतरणः प्रतरति सङ्ग्राममपारं गच्छति प्रतरणः। सुवीरः शोभनो वीरो रथी यत्र। किञ्च हे रथ यतः त्वं गोभिः गोविकारैश्चर्मभिः सन्नद्धः बद्धोऽसि अतो वीडयस्व आत्मानं स्तम्भय। किञ्च ते तवास्थाता आरोढा रथी जेत्वानि जेतव्यानि रिपुधनानि जयतु हि पादपूरणः ॥ ५२ ॥ १—निरु० २, ५।

हे अध्वर्यो त्वं हविषा कृत्वा रथं यज। कीदृशं रथम् दिवः द्युलोकात् पृथिव्याः भूमेः सकाशात् पर्युद्भृतं समन्तादुद्धृतम् ओजः

दिवः पृथिव्याः पर्योजऽउद्भृतं वनस्पतिभ्यः पर्याभृतꣳ सहः। अपामोज्मानम्परि गोभिरावृतमिन्द्रस्य वज्रꣳ हविषा रथं यज ॥५३॥

इन्द्रस्य वज्रो मरुतामनीकम्मित्रस्य गर्भो वरुणस्य नाभिः। सेमान्नो हव्यदातिञ्जुषाणो देव रथ प्रति हव्या गृभाय ॥ ५४ ॥

तेजः। तथा वनस्पतिभ्यो वृक्षेभ्यः पर्याभृतं समन्तादाहृतमानीतं सहः बलम्। तथा अपां जलानामोज्मानं तेजः सारभूतम् ओज बलतेजसोरिति धातोः अन्येभ्योऽपि दृश्यन्त इति मनिन् ओजयति बलिनं करोतीति ओज्मा तम्। द्यावाभूमिवृक्षजलानां तेजस्तुष्टयेन निर्मितमित्यर्थः। तथा गोभिः किरणैः पर्यावृतं वेष्टितम् तेजोनिर्मितत्वात् यद्वा गोभिः चर्मभिर्वेष्टितम्। तथा इन्द्रस्य वज्रमिन्द्रवज्राज्जातमित्यर्थः इन्द्रो यदा वृत्राय वज्रं प्रजहार तदा वृत्रशरीरकाठिन्येन प्रतिहतं चतुर्धा जातम् यूपः स्फ्यः रथः शरश्चेति शतुःखण्डाः तत्र यूपस्फ्यौ विप्रैर्गृहीतौ रथशरौ नृपैरिति श्रुतिकथानुसन्धेया इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारेत्युपक्रम्य रथस्तृतीयमित्यभिधाय रथेन च शरेण चेति राजन्यबन्धव इति[1] श्रुतेः। ईदृशं रथं यजेत्यर्थः ॥ ५३ ॥ १—१, २, ४, १-२।

अनुष्टुप्। कशा स्तूयते अज गतौ क्षेपणे च। अश्वाः अज्यन्ते क्षिप्यन्ते यया सा अश्वाजनी हे अश्वाजनि कशे समत्सु सङ्ग्रामेषु त्वमश्वान् चोदय प्रेरय जयाय कीदृशानश्वान् प्रचेतसः प्रकृष्टं शूरं चेतो मनो येषां ते। हे कशे यया त्वयाश्ववारा एषामश्वानां सानु सानूनि सानुतुल्यानि मांसोपचिताङ्गानि आजङ्घन्ति वचनव्यत्ययः आघ्नन्ति ताडयन्ति जघनान् कटिभागान् उपजिघ्नते निघ्नन्ति। तुरङ्गारोहा यया अश्वान्वशयन्ति सा त्वमश्वान् प्रेरयेत्यर्थः ॥ ५० ॥

आजङ्घन्तिसान्वेषाञ्जघनाँ२॥उपजिघ्नते। अश्वाजनिप्रचेतसोश्वान्त्समत्सुचोदय ॥ ५० ॥

अहिरिवभोगैःपर्येतिबाहुञ्ज्यायाहेतिम्परिबाधमानः। हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसम्परिपातुविश्वतः ॥ ५१ ॥

वनस्पतेवीड्वङ्गोहिभूयाअस्मत्सखाप्रतरणःसुवीरः। गोभिःसन्नद्धोअसिवीडयस्वास्थातातेजयतुजेत्वानि ॥ ५२ ॥

हस्तघ्नः स्तूयते। सप्त त्रिष्टुभः। हस्ते स्थितो हन्ति हस्तघ्नः खेटकः यद्वा हस्तं हन्ति प्राप्नोति हस्तघ्नः प्रकोष्ठत्राणम् पुमांसं मां विश्वतः सर्वतः परिपातु रक्षतु। किम्भूतो हस्तघ्नः विश्वा विश्वानि सर्वाणि वयुनानि ज्ञानानि विद्वान् जानन्। तथा पुमान् पुंस्त्वयुक्तः शूर इत्यर्थः। यो हस्तघ्नो भोगैः स्वशरीरावयवैः कृत्वा बाहुं पर्येति हस्तं वेष्टयति क इव अहिरिव यथाहिः सर्पो भोगैः स्वदेहैः हस्तादिकं वेष्टयति। कीदृशः ज्यायाः हेतिं बाणं धनुःप्रेरितम् परिबाधमानः निवर्तयन् खेटकपक्षे प्रकोष्ठत्राणपक्षे तु ज्याया हेतिं प्रहारं निवारयन् ज्याघातस्य निवारकत्वात् ॥ ५१ ॥

द्वाभ्यामिषुं स्तौति आद्या त्रिष्टुप् अन्त्यानुष्टुप्। या इषुः सुपर्णं पक्षिपिच्छं वस्ते परिधत्ते वस परिधाने शोभनं पर्णं पिच्छं यस्य स सुपर्णः पक्षी तस्य विकारः सौपर्णम्। तत्र तत्त्ववन्निगमा भवन्तीति[1] यास्कोक्तेः सुपर्णशब्देन तत्पिच्छं गृह्यते बाणपुच्छे पिच्छस्यारोपणमावश्यकत्वात्। किञ्च अस्या इषोः दन्तः फलं मृगः मृगयतेऽन्विष्यति रिपून्हन्तुमिति मृगः मृग मार्गणे चुरादिरदन्तः पचाद्यच् मृगो मृगयतेरिति[2] यास्कः अस्यं हि वेध्यं मृगयते। किञ्च या इषुः गोभिः गोविकारैः स्नायुभिः सन्नद्धा बद्धा प्रसूता धनुषा प्रेरिता सती पतति शत्रुबलं प्रति गच्छति। किञ्च यत्र नरो योद्धारः सन्द्रवन्ति च सम्यक् गच्छन्ति विद्रवन्ति च विविधं प्रसरन्ति च

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन्॥ ४८॥

ऋजीते परि वृङ्धि नोऽश्मा भवतु नस्तनूः। सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु॥ ४९॥

समुच्चये तत्र रणे इषवः बाणाः अस्मभ्यं शर्म सुखं यंसन् यच्छन्तु यमु उपरमे लेटि तिप इतोलोपे अडागमे सिब्बहुलं लेटीति सिबागमे यंसन्निति रूपम् सुखं ददतु॥ ४८॥

ऋजुः सरला इतिर्यस्याः सा ऋजीतिः टिलोप आर्षः। हे ऋजीते ऋजुगामिनि हे इषो नोऽस्मान्परिवृङ्धि परिवर्जय अस्मासु मा पतेत्यर्थः। किञ्च नोऽस्माकं तनूः शरीरम् अश्मा पाषाणतुल्यदृढा भवतु। सोमः नोऽस्मानधिब्रवीतु अधिकाम्वदतु। अदितिः देवमाता शर्म सुखं यच्छतु ददातु॥ ४९॥

१—निरु० २,५। २—निरु० ९,१९।

ते। इषुबलाः इषुभिर्बाणैर्बलं येषां ते। अमृध्राः मृध्रा मृदवो न भवन्त्यमृध्राः कठिनाङ्गा उग्रशासना वा। सतोवीराः इत्येकं पदम् सतोऽवमेधयाजिनो वीराः शूराः यद्वा सतो विद्यमानस्य बलस्य वीराः प्रेरकाः विविधमीरयन्तीति वीराः षष्ठ्या अलुक्। उरवः विशालाः पृथुजघनोरस्का इत्यर्थः। व्रातसाहाः व्रातान् शूरसमूहान्सहन्तेऽभिभवन्ति ते व्रातसहाः पचाद्यच् अभिमातिघ्नतने त्यादिना सूत्रेण सहतेरुपधादीर्घः ॥ ४६ ॥

जगती लिङ्गोक्तदेवता। ब्राह्मणासः ब्राह्मणाः नोऽस्मान् पान्तु रक्षन्तु पातिरत्र रक्षार्थवशादुवचनव्यत्ययः कार्यः। पितरः च पान्तु।

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा। पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंस ईशत ॥ ४७ ॥

कीदृशाः सोम्यासः सोम्याः सोमसम्पादिनः सोमपानयोग्या वेत्युभयोर्विशेषणम्। द्यावापृथिवी द्यावाभूमी नः पाताम्। कीदृश्यौ शिवे कल्याणकारिण्यौ। अनेहसा अनेहसौ नास्ति एहोऽपराधो ययोस्ते अपराधनिवर्तिके। किञ्च पूषा सूर्यो नोऽस्मान्दुरितात् पातु। एवं परोक्षेणोक्त्वा प्रत्यक्षमाह हे ऋतावृधः ऋतं सत्यं यज्ञं वा वर्धयन्ति ऋतवृधः देवाः संहितायामृतस्य दीर्घः रक्ष रक्षतास्मान् वचनव्यत्ययः। माकिः मा कश्चन अघशंसः पापो नोऽस्माकमीशत ऐश्वर्यं मा करोतु अघं दुःशंसः मा भूदित्यर्थः। अघं पापं शंसति वक्ति प्रकाशयति वाघशंस : दुष्टः ईशतेति वचनव्यत्ययः ॥ ४७ ॥

शकटद्वारा रथः स्तूयते । यस्यासौ रथवाहनं नाम रथं वहतीति रथवाहनम् वाजपेयेऽनसि रथस्यारोप्यमाणत्वात् । तथास्य हविः हविर्धानं नाम पृषोदरादित्वादुत्तरार्धलोपः । यत्रानसि अस्य योद्धुर्वर्म आयुधं च निहितं स्थापितम् तत्रानसि वयं रथमुपसदेम उपसादयामः । कीदृशं रथं शग्मं सुखकरम् । कीदृशा वयम् विश्वाहा सर्वदा सुमनस्यमानाः शोभनं मनो येषां ते सुमनसः असुमनसः सुमनसो भवन्ति सुमनस्यन्ते भृशादिभ्यो भुव्यच्वेरिति क्यङ् ततः शानच् अनुकूलचित्ता इत्यर्थः । तत्रेत्यस्य संहितायां निपातस्य चेति दीर्घः ॥ ४५ ॥

१—३, ६, २ ।

रथवाहनꣳहविरस्यनामयत्रायुधन्निहितमस्यवर्म । तत्रारथमुपशग्मꣳसदेमविश्वाहावयꣳसुमनस्यमानाः ॥ ४५ ॥

स्वादुषꣳसदःपितरोवयोधाःकृच्छ्रेश्रितःशक्तीवन्तोगभीराः । चित्रसेनाइषुबलाअमृध्राःसतोवीराउरवोव्रातसाहाः ॥ ४६ ॥

रथगोपान्स्तौति । ईदृशा नरा अस्माकं रथं गोप्तारो भवन्त्विति शेषः । कीदृशाः स्वादुसंसदः स्वादु सुखं यथा तथा संसीदन्ति ते स्वादुसंसदः । पितरः पान्ति ते पितरः रक्षितारः । वयोधाः वयोऽन्नमायुर्वा दधति धारयन्ति वयोधाः । कृच्छ्रेश्रितः इत्येकं पदम् कृच्छ्रे कष्टे श्रीयन्ते सेव्यन्ते कृच्छ्रेश्रितः कर्मणि क्विप् अलुक् सप्तम्याः दुःखे सति आश्रयणयोग्याः दुःखनाशकत्वात् यद्वा सप्तमी द्वितीयार्थे कृच्छ्रं श्रयन्ति कृच्छ्रेश्रितः दुःखं प्राप्यापि स्वामिसेवनपराः । शक्तीवन्तः शक्तिः सामर्थ्यमायुधं वा अस्ति येषां ते । अश्वर-श्मिमतीत्यादिप्रातिशाख्यसूत्रेण[1] शक्तिशब्दस्य दीर्घः । गभीराः गम्भीरबलाः गम्भीरप्रज्ञाश्च । चित्रसेनाः चित्रा नानाविधा सेना येषां

शब्दानुकरणमेतत् वाणे तूणान्निष्क्राम्यमाणे चिश्चेति शब्दो भवति । च पुनः स इषुधिर्धानुष्केण पृष्ठे निनद्धः बद्धोऽपि प्रसूतः अनुज्ञातः सन् सर्वाः पृतनाः जयति शत्रुसेनाः पराभवति । कीदृशाः पृतनाः सङ्काः सङ्काः सचतेः सम्पूर्वाद्वा किरतेरिति[1] यास्कोक्तेः सचतेः किरतेर्वा रूपम् सचन्ते सम्बध्यन्ते सङ्कीर्यन्ते वा योधा यासु ताः सङ्काः । विवचानः कारकाणि भवन्तीति वचनाद्विषुधेः कर्तृत्वम् ॥४२॥

अर्धेन सारथिरर्धेन रश्मयः स्तूयन्ते । जगती इयम् । सुषारथिः सुसारथिः शोभनः सारथिः यत्र-यत्र प्रदेशे कामयते इच्छति मयात्र गन्तव्यमिति तत्र-तत्र पुरो वर्तमानान् वाजिनः नयति प्रापयति । कीदृशः रथे तिष्ठन् । तं स्तुम इति शेषः । इदानीं रश्मयः

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः । अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥४३॥

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः । अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूँ१ ॥ रनपव्ययन्तः ॥४४॥

स्तूयन्ते हे जनाः अभीशूनां रश्मीनां महिमानं महाभाग्यं यूयं पनायत स्तुत । ये रश्मयः पश्चाद्वर्तमानाः सन्तः मनोऽश्वचित्तमनुयच्छन्ति अनुगम्य गृह्णन्ति वशवर्तिनं कुर्वन्तीत्यर्थः । पन स्तुतौ गुपूधूपेत्यादिना आयप्रत्ययान्तात्पनेर्लोट् ॥ ४३ ॥

अश्वाः स्तूयन्ते । वृषाः अश्वाः पाणौ हस्ते येषां ते वृषपाणयोऽश्ववाराः तीव्रान् घोषान् जय-जयेति शब्दान् कृण्वते कुर्वन्ति । अश्वा अपि रथेभिः रथैः सह वाजयन्तः गच्छन्तः सन्तस्तीव्रान् घोषान् हेषाशब्दान् कुर्वन्ति शत्रून् क्षिणन्ति नाशयन्ति च । कीदृशाः अश्वाः प्रपदैः पादाग्रैः खुरैः अमित्रान् रिपून् अवक्रामन्तः आक्रामन्तः । अनपव्ययन्तः व्यय चये अदन्तश्चुरादिः अपव्ययन्ति ते अपव्ययन्तः न अपव्ययन्तोऽनपव्ययन्तः अत्यजन्तः समर्थाः । वज गतौ स्वार्थे णिच् वाजिनः ॥ ४४ ॥

१—निरु० ९, १४ ।

गन्ति आकृष्टा सती योद्धुः कर्णं प्रत्यवर्षमागच्छति यङ्लुकि गमेः रूपम्। कीदृशी उत्प्रेक्षा वक्ष्यन्तीव वक्तुमिच्छन्तीव अन्योऽपि वक्तुमिच्छन् कर्णं प्रत्यागच्छति। प्रियं सखायमिष्टं मित्रं बाणरूपं परिषस्वजाना आलिङ्गन्ती स्वजेः शानचि अपः स्वो सति हित्वम्। इत् पादपूरणार्थः ॥ ४० ॥

धनुःकोटी स्तूयेते। ते प्रसिद्धे इमे आर्त्नी आर्त्नी धनुःकोटी उपस्थे उत्सङ्गे मध्यभागे विध्यतां धारयतां शरमिति शेषः। तत्र दृष्टान्तः माता पुत्रमिव यथा जननी पुत्रमुत्सङ्गे बिभर्ति। शत्रून् अपविध्यतां ताडयतां च। कीदृश्यौ आर्त्नी आचरन्ती आचरन्त्यौ

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे। अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥ ४१ ॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य। इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥ ४२ ॥

आगच्छन्त्यौ धानुष्कं प्रति तत्र दृष्टान्तः समना योषा इव वचनव्यत्ययः समना समानमेकरूपं गतं मनो ययोस्ते समनसौ विभक्तेर्डा-देशः समचित्ते योषे योषितौ यथा कान्तमागच्छतः। संविदाने संविदाते ते संविदाने समो गम्यृच्छीत्यादिना शानच् परस्परं सङ्केतं कुर्वाणे। अमित्रान् शत्रून् प्रति विष्फुरन्ती टङ्कारं कुर्वाणे ॥ ४१ ॥

इषुधिः स्तूयते। य इषुधिः तूणी बह्वीनामिषूणां पिता पालकः। यतो बाणान्धरति। अस्येषुधेर्बहुः पुत्रः। बाणसमूहः पुत्र-स्थानीयः पाल्यमानत्वात्। पुरून् बहून् त्रायत इति पुत्रः। स इषुधिः समना सङ्ग्रामान् अवगत्य प्राप्य चिश्चा कृणोति शब्दं करोति

उत यदा वर्मी कवचवान् समदां सङ्ग्रामाणामुपस्थे उत्सङ्गे याति तदा प्रतीकं सेनामुखं जीमूतस्य मेघस्येव भवति। सह माद्यन्ति योधा यासु ताः समदः सङ्ग्रामाः मदेः क्विप्। मेघस्य मुखं विद्युत्स्तनयित्नुधाराभिर्यथासह्यम् एवं हस्त्यश्वरथपादातशस्त्रजालतूर्यनादप्रघोषैः सेनामुखमसह्यं भवतीत्यर्थः। अतोऽहं ब्रवीमि हे वर्मिन् अनाविद्धया अक्षतया तन्वा शरीरेण त्वं जय शत्रून्हत्वा जयं प्राप्नुहि। किंच स वर्मणः महिमा त्वा त्वां पिपर्तु पालयतु ॥ ३८ ॥

धनुः स्तूयते। धन्वना धनुषा कृत्वा वयं गाः धेनूः जयेम। धन्वना आजिं मार्गं जयेम आजन्ति गच्छन्ति यस्मिन्नसावाजिर्मार्गः।

धन्वना॒ गा धन्व॑नाजिं ज॑येम॒ धन्व॑ना ती॒व्राः स॒मदो॑ जयेम। धनुः॒ शत्रो॑रपका॒मं कृ॑णोति॒ धन्व॑ना॒ सर्वाः॑ प्र॒दिशो॑ जयेम ॥ ३९ ॥

व॒क्ष्यन्ती॒वेदा ग॑नीगन्ति॒ कर्णं॑ प्रि॒यꣳ सखा॑यं परिषस्वजा॒ना। योषे॑व शिङ्क्ते॒ वित॒ताधि॒ धन्व॒ञ्ज्या इ॒यꣳ सम॑ने पा॒रय॑न्ती ॥ ४० ॥

तीव्राः उग्राः समदः सङ्ग्रामान्धन्वना जयेम। धनुः शत्रोरपकामं मनोरथाभावं कृणोति करोति कामस्याभावोऽपकामम् अव्ययं विभक्तीत्यादिना अर्थाभावेऽव्ययीभावः। किंच धन्वना सर्वाः प्रदिशो जयेम। ईदृशो धनुःप्रभावः ॥ ३९ ॥

ज्या स्तूयते। इयं ज्या धन्वन् धन्वनि धनुषि अधि वितता उपरि विस्तारिता सती शिङ्क्ते अव्यक्तशब्दं कुरुते शिजि अव्यक्ते शब्दे अदादिः इदितो नुम् धातोरिति नुम्। का इव योषेव यथा योषा कामिनी कामुकस्यानायाव्यक्तं वदति एवमियमपि। कीदृशी ज्या समने सङ्ग्रामे पारयन्ती पार तीर कर्मसमाप्तौ अदन्तः सङ्ग्रामादुत्तारयन्ती विजयं कुर्वन्तीत्यर्थः। इयं का या ज्या कर्णमागनी-

देवा हविरदन्तु भक्षयन्तु। कीदृशं हविः अस्याग्नेः वाचि वागिन्द्रियोपलक्षिते मुखे स्वाहाकृतं स्वाहाकारेण हुतम् कीदृशस्यास्य होतुः देवानामाह्वातुः प्रदिशि पूर्वदिशि ऋतस्य ऋ गतौ आहवनीयात्मना स्थितस्य। अस्य कस्य योऽग्निः सद्यो जातः उत्पन्नः सन् यज्ञं व्यमिमीत विशेषेण निरमात् यश्च देवानां पुरोगाः अग्रगामी मुख्योऽभवत् पुरो गच्छति पुरोगाः विटि प्रत्यये विड्वनोरनुनासिकस्यादिति मस्याकारः ॥ ३६ ॥

१८ सद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः। अस्यहोतुःप्रदिश्यृतस्यवाचिस्वाहाकृतꣳहविरदन्तुदेवाः॥३६॥

केतुङ्कृण्वन्नकेतवेपेशोमर्याअपेशसे। समुषद्भिरजायथाः॥ ३७ ॥

जीमूतस्येवभवतिप्रतीकंयद्वर्मीयातिसमदामुपस्थे। अनाविद्धयातन्वाजयत्वꣳसत्वावर्मणोमहिमापिपर्तु ॥३८॥

अग्निर्देवत्या गायत्री मधुच्छन्दोदृष्टानिरुक्ता। हे अग्ने त्वमुषद्भिः कत्वा अजायथाः उत्पन्नोऽसि जनेर्लङि रूपम् उष दाहे उषन्ति हविर्दहन्ति ते उषन्तोऽग्निहोमकर्तारो यजमानाः। कीदृशस्त्वम् अकेतवे अज्ञानाय मर्याः मर्याय मनुष्याय केतुं ज्ञानं कृण्वन् कुर्वन् विभक्तिव्यत्ययः। नास्ति पेशः सुवर्णं यस्य स अपेशाः तस्मै अपेशसे मर्याय पेशः सुवर्णं कुर्वन् ॥ ३७ ॥

एवमग्निं स्तुत्वाश्वरक्षणे योधा युद्धोपकरणानि च स्तूयन्ते। भरद्वाजसुतपायुः सङ्ग्रामाङ्गानि प्रत्यृचं स्तौति त्रिष्टुब्भिः। वर्म स्तूयते

भारती इडा सरस्वती च नोऽस्माकं यज्ञं तूयं क्षिप्रमा एतु आगच्छतु । कीदृशी मनुष्वत् मनुष्यवदिह कर्मणि चेतयन्ती ज्ञापयन्ती कर्मज्ञानं बोधयन्ती इदं तिसृणां विशेषणम् । एतास्तिस्रो देवीः देव्यः स्योनं सुखरूपमिदं बर्हिः आसदन्तु आसीदन्तु । कीदृश्यः स्वपसः शोभनमपः कर्म यासां ताः शुभकर्माणः । अप इति कर्मनाम[1] ॥ ३३ ॥

[1] —— निघ० २, १, १ ।

हे होतः अद्य इषितः प्रेषितः सन् तं त्वष्टारं देवमिह यज्ञे यक्षि यज । कीदृशः त्वम् यजीयान् अत्यन्तं यष्टा तुरिष्ठमेयःस्विति ईयसुनि तृचो लोपः । विद्वान् स्वाधिकारज्ञः । तं कम् यः त्वष्टा इमे द्यावापृथिवी द्यावाभूमी रूपैः अपिंशदवयवैर्विचित्रे अकरोत्

यऽइमे द्यावापृथिवी जनित्री रूपैरपिꣳशद्भुवनानि विश्वा । तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ॥ ३४

उपावसृज त्मन्या समञ्जन्देवानां पाथ ऋतुथा हवींषि । वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥ ३५ ॥

पिश अवयवे तुदादिः लङि शे मुचादीनामिति नुम् । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि रूपैः अपिंशत् विविधरूपाण्यकरोत् । कीदृश्यौ द्यावापृथिव्यौ जनित्री जनयतस्ते जनित्र्यौ प्राण्युत्पादिके ॥ ३४ ॥

यजमानो वदति । हे होतः त्मन्या आत्मना हवींषि ऋतुथा ऋतौ-ऋतौ यज्ञकाले त्वमुपावसृज देहि । किं कुर्वन् देवानां पाथः हविः मधुना मधुररसेन घृतेन समञ्जन् सम्यक् नयन् । देवानामित्युक्तं तानाह वनस्पतिर्यूपः शमिता देवः अग्निः एते त्रयो हव्यं होत्रा सम्यक् दत्तं स्वदन्तु भक्षयन्तु । आत्मन् शब्दस्य विभक्तेर्यादेशे मन्त्रेष्वाङ्यादेरात्मन इति आकारलोपः ॥ ३५ ॥

आ नि एतयोः सदतामिति सम्बन्धः अधीत्यस्य दधाने इत्यनेन सम्बन्धः। उषासानक्ता अहोरात्रे देवते योनौ यज्ञगृहे आ निसदताम् सम्यक् उपविशताम्। कीदृश्यौ ते सुष्वयन्ती स्मयतेः स्वपतेर्वा सुपूर्वस्य रूपम् पूर्वपक्षे मकारस्य वकारश्छान्दसः उत्तरपक्षे पकारस्य यकारः परस्परं हसन्त्यौ साधु स्वपन्त्यौ वा। यजते यजनीये। उपाके उप समीपमकतस्ते उपाके अक गतौ परस्परं समीपस्थिते। दिव्ये दिवि भवे। योषणे योषे स्त्रीरूपिण्यौ। बृहती बृहत्यौ महत्यौ। सुरुक्मे शोभनं रुक्मं सुवर्णं ययोस्ते साभरणे इत्यर्थः। शुक्रपिशं शुक्लां कपिशां च श्रियं शोभामधिदधाने अधिकं धारयन्त्यौ। शुक्लमहः कपिशा रात्रिः ॥ ३१ ॥

आसुष्वयन्तीयजतेउपाकेउषासानक्तासदतान्नियोनौ। दिव्येयोषणेबृहतीसुरुक्मे अधिश्रियᳪशुक्रपिशन्दधाने॥३१॥

दैव्याहोताराप्रथमासुवाचामिमानायज्ञम्मनुषोयजध्यै। प्रचोदयन्ताविदथेषुकारूप्राचीनञ्ज्योतिःप्रदिशादिशन्ता॥३२॥

आनोयज्ञम्भारतीतूयमेत्विडामनुष्वदिहचेतयन्ती। तिस्रोदेवीर्बर्हिरेदᳪस्योनᳪसरस्वतीस्वपसःसदन्तु॥३३॥

दैव्यौ होतारौ ईदृशौ आयाते इति शेषः। कीदृशौ प्रथमा आद्यौ। सुवाचा शोभना वाक् ययोस्तौ। मनुषो मनुष्यस्य यजध्यै यष्टुं यज्ञं मिमाना निर्मिमाणौ। तुमर्थे अध्यैप्रत्ययः। विदथेषु यज्ञेषु प्रचोदयन्ता प्रचोदयन्तौ ऋत्विजः प्रेरयन्तौ। कारू कुरुतस्तौ कारू उणादयो बहुलमिति उण् स्वयं कर्तारौ। प्राचीनं पूर्वदिशि भवं ज्योतिः आहवनीयाख्यं प्रदिशा अभिनयेन श्रुतिवाक्येन दिशन्ता यष्टव्यमिति कथयन्तौ। सर्वत्र विभक्तेराकारः ॥ ३२ ॥

त्वं देवानां होता आह्वाता असि स त्वमिनान्यचि यज। कीदृशस्त्वम् इषितः प्रेषितः अभीष्टो वा। यजीयान् यजतीति यष्टा अत्यन्तं यष्टा यजीयान् ईतसुनि तुरिष्ठेमेयःस्विति तृचो लोपः ॥ २८ ॥

अक्तां दिनानामग्रे पूर्वाह्णे बर्हिः प्राचीनं प्रागग्रं वृज्यते प्रस्तीर्यते प्रातर्यागकालस्य प्रशस्तत्वादह्नामग्रे इत्युक्तम्। किं स्वबुद्धा चेत्याह प्रदिशा प्रागग्रं बर्हिः स्तृणातीति श्रुतिवाक्येन प्रदिक्शब्देन श्रुतिवाक्यम् अस्याः पृथिव्या वेदेः वस्तोः वसितुमाच्छादयितुमित्यर्थः। तद्बर्हिः वृज्यमानं सत् विप्रथते विविधं विस्तीर्णं भवति। उकारः पादपूरणः। कीदृशं बर्हिः वितरं वरीयः अत्यन्तं वि

प्राचीनम्बर्हिःप्रदिशापृथिव्यावस्तोरस्याष्टज्यतेअग्रेअह्नाम्। व्युप्रथतेवितरंवरीयोदेवेभ्योअदितयेस्योनम् ॥२९॥

व्यचस्वतीरुर्वियाविश्रयन्ताम्पतिभ्योनजनयःशुम्भमानाः। देवीद्वारोबृहतीर्विश्वमिन्वादेवेभ्योभवतसुप्रायणाः ॥३०॥

वितरमतिततराम् वरीयः अत्यन्तमुरु वरीयः प्रियस्थिरस्फिरोरुबहुलेत्यादिना उरोर्वरादेशः। देवेभ्यः अदितये च स्योनं सुखकरम् ॥ २९ ॥

द्वारो देवीः देव्यो विश्रयन्तां विवृता भवन्तु। कीदृश्यो द्वारः उर्विया उरुत्वेन व्यचस्वतीः व्यञ्चनवत्यो गमनवत्यः कथमिव पतिभ्यो जनयो न जनय इव यथा जनयः जायाः यथा पत्यर्थं ऊरू विश्रयन्ति। एवं परोक्षमुक्त्वा प्रत्यक्षमाह हे द्वारो देव्यो यूयं देवेभ्यो देवार्थं सुप्रायणाः सुप्रगमना भवत। कीदृश्यः बृहतीः बृहत्यः विश्वमिन्वाः विश्वमेति गच्छति यासु ताः एतेर्न्वक्प्रत्ययः अलुक्समासः शुम्भमानाः शोभमानाः। उर्विया इति द्वार्विशेषणं वा उरव्यो विशालाः इयाडियाजिकाराणमिति विभक्तेरियाजादेशः चित्त्वादन्तोदात्तः ॥ ३० ॥

रोच यथभचत्यर्थः। यायन्ति यैर्येषु वा ते यानास्तान् करणाधिकरणयोरिति ल्युप्रत्ययः ऋतो यज्ञः तस्य गमनसाधनमार्गा हवींषि तान्भचयेत्यर्थः। हविभिर्यज्ञः प्रवर्तते इति यज्ञगमनपन्थानो हवींषि। किङ्कुर्वन् मध्वा समञ्जन् मधुरेण रसेन संस्रवयन्। किञ्च नोऽस्माकमध्वरं यज्ञं देवत्रा कृणुहि देवान्गमय करोतिर्गत्यर्थः। किङ्कुर्वन् धीभिः बुद्धिभिः सह मन्मानि ज्ञानानि उत अपि च यज्ञमृन्धन् समर्धयन् अस्माकं ज्ञानं यज्ञं च वर्धयन् यज्ञं देवलोकं नयेत्यर्थः॥ २६॥

नरा अस्मिन्नाशंसन्तीति नराशंसोऽग्निः प्रजापतिर्वा नरैः प्रशस्यो भवतीति वा। नराशंसस्य प्रजापतेरग्नेर्वा महिमानं महा-

नराशꣳसस्यमहिमानमेषामुपस्तोषामयजतस्ययज्ञैः। येसुक्रतवःशुचयोधियन्धाःस्वदन्तिदेवाउभयानिहव्या॥२७॥

आजुह्वानईड्योवन्द्यश्चायाह्यग्नेवसुभिःसजोषाः। त्वन्देवानामसियह्वहोतासएनान्यक्षीषितोयजीयान्॥२८॥

भाग्यमेषां देवानां मध्ये वयमुपस्तोषाम उपस्तुमः स्तौतेर्लेटि उत्तमैकवचने सिब्बहुलं लेटीति सिप्प्रत्यये रूपम्। कीदृशस्य नराशंसस्य यज्ञैः यजतस्य यजेरतच्प्रत्ययः। एषां केषाम् ये देवाः उभयानि हव्या हवींषि सोमम् घृतराशिं च स्वदन्ति भक्षयन्ति। कीदृशाः देवाः सुक्रतवः शोभनः क्रतुः कर्म येषां ते। शुचयः शुद्धाः निष्पापाः। धियन्धाः धियं बुद्धिं कर्म वा दधतीति अलुगार्षः॥२७॥

हे अग्ने त्वमायाहि आगच्छ कीदृशस्त्वम् आजुह्वानः आहूयते आह्वयति देवानित्याजुह्वानः ह्वयतेः शपः श्लुः ह्वः सम्प्रसारणमिति अभ्यासस्य सम्प्रसारणं शानचि। ईड्यः स्तुत्यः। वन्द्यः नमनीयः। वसुभिः देवैः सजोषाः समानप्रीतिः। किञ्च हे यह्व महन् यः

खमग्न स्तुत्वा यजमानमाह । अर्वान् अर्वाञ्चः पितरं मातरं च अच्छ द्यावापृथिव्यौ अभि समीपे परमनुत्कृष्टं यत्सधस्थं सहस्थानं तत् उपप्रागात् अर्वन्शब्दस्य नलोपाभावश्छान्दसः अश्वे एव देवलोकं गते हे यजमान जुष्टतमः प्रीततमः सन् अद्य त्वं देवान् गम्याः देवलोकं गच्छेः गमेराशीर्लिङि मध्यमैकवचने गम्या इति रूपम् अथैवं देवत्वं गताय दाशुषे हविर्दत्तवते तुभ्यं वार्याणि वरणीयानि भोग्यवस्तूनि हि नूनम् आशास्ते देवगणोऽश्वो वा ददात्वित्यर्थः ॥ २४ ॥

द्वादशाप्रीसञ्ज्ञास्त्रिष्टुभो जमदग्निदृष्टाः समित्तनूनपादादयो देवताः हे जातवेदः जातज्ञान मनुषो मनुष्यस्य यजमानस्य दुरोणे

१ समिद्धोऽअद्यमनुषोदुरोणेदेवोदेवान्यजसिजातवेदः । आचवहमित्रमहश्चिकित्वान्त्वन्दूतःकविरसिप्रचेताः ॥२५॥

२ तनूनपात्पथऋतस्ययानान्मध्वासमञ्जन्त्स्वदयासुजिह्व । मन्मानिधीभिरुतयज्ञमृन्धन्देवत्राचकृणुह्यध्वरन्नः ॥ २६॥

यज्ञगृहे अद्य त्वं देवान् यजसि । कीदृशस्त्वम् समिद्धः दीप्तः देवः दानादिगुणयुक्तः । हे मित्रमहः मित्रान् यजमानान्महति पूजयति मित्रमहाः तत्सम्बुद्धौ हे मित्रमहः आवह च देवानावह यज चेत्यर्थः । यतः त्वमीदृशोऽसि कीदृशः चिकित्वान् चेतनावान् दूतः कविः क्रान्तदर्शी प्रचेताः प्रकृष्टं चेतो यस्य सोऽतएव यज ॥ २५ ॥

तनूनामपां नपात्पौत्रोऽग्निः अद्भ्यो वृक्षाः जायन्ते तेभ्योऽग्निरित्यपां पौत्रत्वमग्नेः । हे तनूनपात् अग्ने हे सुजिह्व शोभना जिह्वा यस्य स सुजिह्वः नानादेवत्यानि हवींषि भक्षयन्नपि नोच्छिष्टानि करोतीति वह्नेः शोभनजिह्वत्वम् हे सुजिह्व ऋतस्य यानान् पथः स्वदय

हे अर्वन् तव शरीरं पतयिष्णु उत्पतनशीलम्। तव चित्तं ध्रजीमान्गतिमान् वात इव वेगवत् सूक्ष्मार्थान् गच्छतीत्यर्थः। तव शृङ्गाणि दीप्तयः अरण्येषु वनेषु दवाग्निरूपेण चरन्ति प्रसरन्ति कीदृशानि शृङ्गाणि पुरुत्रा बहुधा विष्ठिता विविधं स्थितानि विद्युच्चन्द्रार्काग्निषु स्थितानि। जर्भुराणा जर्भुराणानि जृम्भ विकसने विकसितानि ॥ २२ ॥

अर्वा अश्वः शसनं विशसनस्थानमुपप्रागात् आगतः। कीदृशोऽर्वा वाजी व्रजति वाजी गमनशीलः अन्नवान्वा। देवद्रीचा मनसा

तवशरीरम्पतयिष्ण्वर्वन्तवचित्तंवातइवध्रजीमान्। तवशृङ्गाणिविष्ठितापुरुत्रारण्येषुजर्भुराणाचरन्ति ॥२२॥

उपप्रागाच्छसनंवाज्यर्वादेवद्रीचामनसादीध्यानः। अजःपुरोनीयतेनाभिरस्यानुपश्चात्कवयोयन्तिरेभाः ॥२३॥

उपप्रागात्परमंयत्सधस्थमर्वाँ२॥ अच्छापितरम्मातरञ्च। अद्यादेवाञ्जुष्टतमोहिगम्याअथाशास्तेदाशुषेवार्याणि॥२४

दीध्यानः। देवान्प्रत्यञ्चति देवद्र्यक् तेन विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये इति देवशब्दस्य टेरञ्चतौ परेऽद्र्यादेशः। दीधीते दीध्यानः दीधी दीप्तिदेवनयोः शानच्प्रत्ययः देवान्प्रति गतेन चित्तेन दीप्यमानः। किञ्च अस्याश्वस्य पुरोऽग्रे अजो नीयते स्थाप्यते तदुक्तम् कृष्णग्रीव आग्नेयो रराटे पुरस्तादिति। अस्य नाभिः अजो नीयते नाभौ स्थाप्यते तदुक्तम् सौमापौष्णः श्यामो नाभ्यामिति। अस्य पश्चात् कवयः ऋत्विजः अनुयन्ति अनुगच्छन्ति। कीदृशाः कवयः रेभाः रेभन्ते रेभाः रेभृ शब्दे स्तोतार इत्यर्थः ॥ २३ ॥

यः प्रथमः मुख्यः अर्वन्तमश्वमध्यतिष्ठत् अधिष्ठितवान् सोऽपि इन्द्रः अवरः इन्द्रापेक्षया न्यून आसीत् कीदृश इन्द्रः हिरण्यशृङ्गः हिरण्यवत् शृङ्गं दीप्तिर्यस्य शृङ्गमिति ज्वलतामसु पठितम् । अस्याश्वस्य पादा अयः लोहं हिरण्यं वा अयोरूपाः पादा इत्यर्थः कीदृशाः पादाः मनोजवाः मनोवत् जवो वेगो येषां ते । किञ्च देवा अस्याश्वस्य हविरद्यमायन् अत्तुं योग्यमद्यं हविश्च तदद्यं च हविरद्यम् हविर्लक्षणं भक्ष्यं प्रति आयन् आगच्छन् इत् एवार्थे अप्यर्थे वा ॥ २० ॥

सूर्याश्वरूपेणायमश्वः स्तूयते । यत् यदा अश्वाः सप्त रविरथस्थाः श्रेणिशः श्रेणीभूता हंसा इव संयतन्ते सम्यक् प्रयत्नं कुर्वन्ति

हिरण्यशृङ्गोयोऽअस्यपादामनोजवाऽअवरऽइन्द्रऽआसीत् । देवाऽइदस्यहविरद्यमायन्योऽअर्वन्तम्प्रथमोऽअध्यतिष्ठत् ॥२०॥

ईर्मान्तासःसिलिकमध्यमासःसंशूरणासोदिव्यासोऽअत्याः । हꣳसाऽइवश्रेणिशोयतन्तेयदाक्षिषुर्दिव्यमज्ममश्वाः ॥२१॥

तदा दिव्यं दिवि भवमज्मं गमनं सङ्ग्रामं वा आक्षिषुः व्याप्नुवन्ति अक्ष व्याप्तौ लुङि रूपम् । हंसा यथा गमनाय यतन्ते तथाश्वा अपि । कीदृशा अश्वाः ईर्मान्तासः ईर्मान्ताः ईर्यते ईर्मः ईर प्रेरणे मप्रत्ययः ईर्मः प्रेरितः अन्तः शरीरप्रान्तो येषां ते पृथुजघनोरस्का इत्यर्थः । सिलिकमध्यमासः सिलिकः श्लिष्टः संलग्नो मध्यमो मध्यप्रदेशो येषां ते शिलिकमध्यमाः कृशोदरा इत्यर्थः षिल संश्लेषे इकप्रत्ययः । शूरणासः शू शीघ्रं रणो रवो युद्धं वा येषां ते शूरणाः यद्वा शूरणो रविस्तदीयाः शूरणाः । दिव्यासः दिवि भवा दिव्याः । अत्याः अतन्ति सततं गच्छन्ति अत्याः सततयुक्ता ब्रह्माहपर्यन्तं रविरथं वहन्ति ॥ २१ ॥

ते शिरः सूर्यरूपं पश्यामि । कीदृशं शिरः पथिभिः नभोमार्गैः जेहमानं गच्छत् कीदृशैः पथिभिः सुगेभिः सुगैः सुखेन गम्यते येषु ते सुगास्तैः सुदुरोरधिकरण इति गमेर्डः अरेणुभिः नास्ति रेणुर्येषु ते अरेणवस्तैः उपद्रवरहितैरित्यर्थः । पुनः कीदृशं शिरः पतत्रि पतनशीलं गन्तृ ॥ १७ ॥

हे अश्व अत्राश्मिन्गोः सूर्यस्य पदे मण्डले ते तवोत्तमं रूपमहम् आ अपश्यम् समन्तात्पश्यामि गौर्नादित्ये बलीवर्दइत्यभिधानाद्गौरादित्यः । कीदृशं रूपम् इषः अन्नानि हवींषि जिगीषमाणं जेतुमिच्छत् जयतेः सन्नन्ताच्छानच् सन्लिटोर्जेरिति गः । किञ्च मर्तः

अत्रा ते रूपमुत्तममपश्यञ्जिगीषमाणमिष आ पदे गोः । यदा ते मर्तो अनु भोगमानडादिद्ग्रसिष्ठ ओषधीरजीगः ॥१८॥

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् । अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥१९॥

मनुष्यो यदा ते तव भोगमनु आनट् अनुव्याप्नोति हवीरूपं भोगं समर्पयति आत् इत् अनन्तरमेव त्वमोषधीः हवीरूपाः अजीगः गृ निगरणे गिरसि भक्षयसि । कीदृशस्त्वम् ग्रसिष्ठः ग्रसते इति ग्रसिता अतिशयेन ग्रसिता ग्रसिष्ठः अत्यन्तं भक्षयिता इष्ठनि तृचो लुक् । गृणातेर्णिजन्तस्याजीगः ॥ १८ ॥

हे अर्वन् अश्व रथः त्वा त्वामनु वर्तत इति शेषः । मर्यः मनुष्यः त्वामनु । गावः त्वामनु । कनीनां कन्यानां भगः सौभाग्यं त्वामनु । यत्र त्वम् तत्र रथादयः स्युरित्यर्थः । किञ्च व्रातासः व्राताः मनुष्यसङ्घाः तव सख्यं मैत्रीम् अन्वीयुः प्रापुः । किम्बहुना देवाः तव वीर्यं सामर्थ्यमनुममिरे अनुमितवन्तः ॥ १९ ॥

त्रीणि बन्धनानि आहुः कृषिर्वृष्टिर्बीजमिति। अन्तः समुद्रे अन्तरिक्षमध्ये त्रीणि बन्धनानि आहुः मेघो विद्युत्स्तनयित्नुरिति। उतेव उतापि च वरुणः वरुणरूपः त्वं मे मां छन्त्सि प्रशंससि कर्मणि षष्ठी छन्दतिरर्चतिकर्मा अर्चनं प्रशंसनम्॥ १५॥

हे वाजिन् ते तव इमा इमानि अवमार्जनानि अहमपश्यं पश्यामि अवमार्ज्यते यैस्तानि अवमार्जनानि वेतसकटादीनि। शफानां खुराणां सनितुः सम्भक्तुर्नियन्तुः पादचारस्य इमा इमानि निधाना निधानानि स्थानानि अपश्यम्। अत्र यज्ञे ते तव रशनाः

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे। उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम्॥१५॥

इमा ते वाजिन्नवमार्जनानीमा शफानाᳬ सनितुर्निधाना। अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः॥१६॥

आत्मानं ते मनसाराद्जानामवो दिवा पतयन्तं पतङ्गम्। शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि॥१७॥

मध्यबन्धनरज्जूः अपश्यम्। कीदृशी रशनाः भद्राः कल्याणरूपाः स्तुत्याः। गोपाः गोपायन्ति गोपाः रक्षणकर्त्र्यः। याः रशनाः ऋतस्य ऋतं यज्ञमभिरक्षन्ति कर्मणि षष्ठी। निपातस्य चेति अत्रपदस्य दीर्घः॥ १६॥

एवमश्वं स्तुत्वा भविष्यत्कर्मणा स्तौति। हे अश्व ते तवात्मानं मनसा आरात् दूरे अहमजानां जानामि जानातेर्लङुत्तमैकवचनम्। कीदृशमात्मानम् अवः अधस्तात्प्रदेशात् दिवा नभोमार्गेण पतङ्गं सूर्यं प्रति पतयन्तमुत्पतन्तम् पत ऐश्वर्यगत्योश्चुरादिरदन्तः। किञ्च

तवान् हेषारवमकार्षीः तदा ते तव महि माहात्म्यम् उपस्तुत्यं स्तोतुं योग्यं जातम्। कथं स्तुत्यम् तदाह श्येनस्य पक्षौ हरिणस्य बाहू अनेन क्रन्दनेन जिताविति शेषः श्येनपक्षौ शौर्येण हरिणबाहू वेगेनेत्यर्थः। कीदृशस्त्वम् समुद्रात् अन्तरिक्षात् उदधेर्वा प्रथमं जायमानः उत वा अथवा पुरीषात् पशोः सकाशात् उद्यन् उत्पद्यमानः ॥ १२ ॥

वसवोऽष्टगणदेवाः सूरादादित्यमण्डलादश्वं निरतष्ट निःसृष्टवन्तः तक्षतेर्लुङि मध्यमबहुवचनम्। ततः त्रितः त्रिस्थानो वायुः यमेन दत्तमेनमश्वम् अयुनक् युक्तवान् युजेर्लङ् संहितायामटो दीर्घः। इन्द्रश्चैनमश्वं प्रथमः अध्यतिष्ठत् आदावधिष्ठितवान्।

यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥१३॥

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥ १४ ॥

गन्धर्वः विश्वावसुरस्याश्वस्य रशनामगृभ्णात् गृहीतवान्। य ईदृशस्तं स्तुमः। एणमिति णत्वं छान्दसम् ॥ १३ ॥

हे अर्वन् त्वं यमोऽसि आदित्यश्चासि गुह्येन गोप्येन व्रतेन कर्मणा त्रितः त्रिस्थान इन्द्रोऽसि। सोमेन समया सह विपृक्तः सम्पृक्तः एकीभूतोऽसि। एवं यमादिभिः सायुज्यं प्राप्तस्य तव दिवि नभसि आदित्यरूपेण स्थितस्य त्रीणि बन्धनानि बुधा आहुः। ऋग्यजुः-सामरूपाणि मण्डलान्तरपुरुषार्चींषि त्रीणि बन्धनानि स्वरूपाणि। यदेतन्मण्डलं तपति तन्महदुक्थमित्यादिश्रुतेः ॥ १४ ॥

हे अर्वन् यत्र ते तव परमं जनित्रं बुधा आहुः आदित्यरूपेण तत्र ते तव त्रीणि बन्धनानि पूर्वमन्त्रोक्तान्याहुः। अप्सु उदकेषु

पाथ इत्यन्ननाम। अन्नः पाथः अन्नरूपं हविः ऋतुथः ऋतौ-ऋतौ यज्ञकाले अन्या आत्मन्या स्वयं देवान् उप एतु प्राप्नोतु। विभक्तेर्यादेशे अन्न्व्याकारादेशात्मन इति यालोपः। कीदृशोऽश्वः घृतेन समक्तः अङ्गोभिः समुचितः। किञ्च वनस्पतिर्देवः हव्या हव्यानि वचत् वहतु देवान्प्रति। कीदृशो वनस्पतिः देवलोकं प्रजानन्विदन् अत एव वहतु। कीदृशानि हव्यानि अग्निना स्वादितानि आस्वादितानि आस्वाद्य मिष्टीकृतानि ॥ १० ॥

अश्वोघृतेनत्मन्यासमक्तउपदेवाँ२॥ऋतुथःपाथएतु। वनस्पतिर्देवलोकम्प्रजानन्नग्निनाहव्यास्वदितानिवक्षत् ॥१०॥

प्रजापतेस्तपसावावृधानःसद्योजातोदधिषेयज्ञमग्ने। स्वाहाकृतेनहविषापुरोगायाहिसाध्याहविरदन्तुदेवाः ॥११॥

यदक्रन्दःप्रथमञ्जायमानउद्यन्त्समुद्रादुतवापुरीषात्। श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यम्महिजातन्तेअर्वन् ॥१२॥

हे अग्ने त्वं यज्ञं दधिषे धारयसि लडर्थे लिट्। कीदृशस्त्वम् प्रजापतेस्तपसा वावृधानः वर्धमानः। सद्यो जातः अरण्यादुत्पन्नः। किञ्च स्वाहाकृतेन स्वाहाकारयुक्तेन हुतेन हविषा सह पुरोगाः पुरो गच्छतीति अग्रगामी सन् याहि देवान् गच्छ त्वयि गते सति देवाः हविरदन्तु भक्षयन्तु कीदृशं हविः साध्या साधु-श्रेष्ठम् विभक्तेर्ड्यादेशे टिलोपे रूपम् ॥ ११ ॥

त्रयोदशाश्वस्तुतिरूपास्त्रिष्टुभो जमदग्निदीर्घतमोभ्यां दृष्टाः अश्वस्तुतौ विनियुक्ताः। हे अर्वन् अश्व यत् यदा त्वमक्रन्दः क्रन्दि-

हे यजमानौ वां युवयोः प्रथमा प्रथमौ मुख्यौ होतारा होतारौ अहमपि प्रयं प्रीणितवानस्मि प्रीणातेर्णिजन्तस्य लुङि उत्तमैकत्वे रूपम् अयं चाग्निरसौ च मध्यम इति होतारा । कीदृशौ सरथिना सरथिनौ समानो रथो ययोस्तौ एकरथारूढौ सुवर्णा सुवर्णौ शोभनो वर्णो द्युतिर्ययोस्तौ देवा दीप्यमानौ दातारौ । विश्वा सर्वाणि भुवनानि पश्यन्तौ । वां युवयोश्चोदना चोदनानि कर्माणि मिमाना मिमानौ निर्मिमाणौ । प्रदिशा प्रदेशेनाभिनयेन ज्योतिः दिशन्तौ आहवनीयाख्यं ज्योतिर्यष्टव्यमिति दर्शयन्तौ ॥ ७ ॥

आदित्यैः युता भारती नोऽस्माकं यज्ञं वष्टु कामयताम् । सरस्वती रुद्रैः सह नोऽस्माकं यज्ञमावीत् अवतु । इडा चावतु कीदृशी

**आदित्यैर्नो भारती वष्टु यज्ञं सरस्वती सह रुद्रैर्न आवीत् । इडोपहूता वसुभिः सजोषा यज्ञं नो देवीरमृतेषु धत्त ॥८॥**

**त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः । त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः ॥९॥**

उपहूता आहूतोपहवा वसुभिः देवैः सजोषाः प्रीतियुता । एवं परोक्षमभिधाय प्रत्यक्षमाह हे देवीः देव्यो भारतीसरस्वतीडाः नोऽस्माकं यज्ञममृतेषु देवेषु धत्त यूयं स्थापयत ॥ ८ ॥

त्वष्टा वीरं पुत्रं जजान जनयति कीदृशं वीरं देवकामं देवान्कामयते देवकामस्तम् यष्टारमृणत्रयापाकरणसमर्थमित्यर्थः । त्वष्टुः सकाशात् अश्वः जायते उत्पद्यते कीदृशोऽश्वः अर्वा इयर्ति गच्छति अर्वा अन्येभ्योऽपि दृश्यन्त इति अर्तेर्वनिप् आशुः अश्नुते दिशो व्याप्नोति अश्नाति भक्षयति वा आशुः उण् प्रत्ययः । किञ्च त्वष्टा इदं विश्वं सर्वं भुवनं भूतजातं जजान उदपादयत् । हे होतः एवं बहोः कार्यस्य कर्तारं त्वष्टारमिह यज्ञे त्वं यक्षि यज यजतेः अपि लुप्तं रूपम् ॥ ९ ॥

मांणा: कीदृश्यः पर्चीभिः उत् अर्थम् आतः यत्यन्ते विस्तार्यन्ते आता. यत सातत्यगमने अर्ध्वं प्रसृतेरित्यर्थः । पुनः कीदृश्यो द्वारः ऋष्वाः ऋषन्ति ऋष्वाः ऋष गतौ इतस्ततो गमनशीलाः महत्यः । सतीः सत्यः समीचीनाः । कवषः कु शब्दे कुवन्ति शब्दं कुर्वन्ति कवषः कुवतेरसुन् प्रत्ययः षत्वमार्षम् कपाटपिधानसमये शब्दं कुर्वाणाः ससुषिरा वा । शुम्भमानाः शोभमानाः । सुप्रायणाः सुखेन प्रकृष्टमयनं गमनं यासु सुगमनाः ॥ ५ ॥

अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभिसंविदाने । उषासावाᳬसुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि ॥ ६ ॥

प्रथमावाᳬसरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा । अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता ॥ ७ ॥

हे पत्नीयजमानौ वां युवयोः ऋतस्य यज्ञस्य योनौ इह उषासा उषसौ नक्तोषसौ सादयामि स्थापयामि द्विवचनात्सहचारित्वाच्च द्वितीया रात्रिः । कीदृश्यौ उषसा मित्रावरुणा मित्रावरुणौ अन्तरा द्यावापृथिव्योर्मध्ये सञ्चरन्ती सञ्चरन्त्यौ वर्तमाने अयं वै लोको मित्रोऽसौ वरुण इति श्रुतेर्मित्रवरुणशब्देन द्यावापृथिव्यावुच्येते । यज्ञानां मुखमग्निहोत्रहोमकालमभिसंविदाने कथयन्त्यौ उत्तिष्ठतायमग्निहोत्रहोमकाल इति प्रातर्विप्रा वदन्ति तदुषस्युपचर्यते । सुहिरण्ये साधु हिरण्यं भूतं ययोस्ते । सुशिल्पे अन्योन्यं प्रतिरूपे शिल्पं प्रतिरूपं भवतीति वचनात् ॥ ६ ॥

हे वाजिन् हे सप्ते ईड्यः स्तुत्योऽसि वन्द्यः नमनीयोऽसि आशुः शीघ्रः मेध्यः मेधायाश्वमेधाय योग्यः चकाराः समुच्चयार्थाः। किंच जातवेदाः अग्निः त्वा त्वां वहतु देवान्प्रापयतु। कीदृशोऽग्निः वसुभिः देवैः सजोषाः जोषसा प्रीत्या सहितः। कीदृशं त्वाम् प्रीतं तुष्टम् वह्निं हविषो वोढारम् ॥ ३ ॥

वयं बर्हिः सुष्टरीम साधु स्तरीम स्तृणाम अदितिर्देवी स्तीर्णं तत् बर्हिः सुविते सु इते साधु गते स्वर्गलोके दधातु स्थापयतु।

ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते। अग्निष्ट्वा देवैर्वसुभिः सजोषाः प्रीतं वह्निं वहतु जातवेदाः ॥ ३ ॥

स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम्। देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥ ४ ॥

एता उ वः सुभगा विश्वरूपा वि पक्षोभिः श्रयमाणा उदातैः। ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु ॥ ५ ॥

कीदृशी अदितिः सजोषाः जोषसा प्रीत्या युक्ता। स्योनं कृण्वाना सुखं कुर्वती। जुषाणा प्रीयमाणा। कीदृशं बर्हिः उरु बहु पृथु विस्तीर्णम् पृथिव्यां प्रथमानं विस्तार्यमाणम् देवेभिर्युक्तं देवैः सहितम् ॥ ४ ॥

हे ऋत्विग्यजमानाः वो युष्माकमेता द्वारो देवीः यज्ञगृहद्वारो देव्यः ईदृश्यो भवन्तु उ पादपूरणः। कीदृश्यः सुभगाः शोभनं भगं श्रीर्यासां ताः। विश्वरूपाः नानारूपचित्राः। पक्षोभिः पक्षस्शब्दः दान्तः पक्षवाची पक्षैः पक्षप्रायैः कपाटैः विश्रयमाणाः विस्तार्य-

आश्वमेधिकोऽध्यायः ततोऽस्य प्रजापतिर्ऋषिः। आद्या एकादश त्रिष्टुभः आप्रीसञ्ज्ञाः अश्वस्तुतयो वामदेवपुत्रेण बृहदुक्थेन समुद्रपुत्रेणाश्वेन वा दृष्टाः समित्तनूनपादिडादिदेवताकाः। हे अग्ने हे जातवेदः जातप्रज्ञान त्वं देवानां सधस्थं सह तिष्ठन्ति यत्रेति सहस्थानं प्रति प्रियं प्रीतिमावक्षि आवह देवान् प्रीणयेत्यर्थः वहतेः शपो लुकि मध्यमैकवचने रूपम्। कीदृशस्त्वं समिद्धः दीप्तः मतीनां सदरं बुद्धीनामुदरं गर्भमञ्जन् व्यक्तीकुर्वन् बुद्धिरहस्यं प्रकाशयन्नित्यर्थः। मधुमत् स्वादु घृतं पिन्वमानः देवेषु सिञ्चन्।

समिद्धो अञ्जन्कृदरम्मतीनाङ्घृतमग्ने मधुमत्पिन्वमानः। वाजी वहन्वाजिनञ्जातवेदो देवानांवक्षि

प्रियमासधस्थम्॥ १॥

घृतेनाञ्जन्त्सम्पथो देवयानान्प्रजानन्वाज्यप्येतु देवान्। अनु त्वा सप्ते प्रदिशः सचन्ताᳪ स्वधामस्मै यजमानाय धेहि॥२॥

वाजी वजति वाजी वज गतौ चलनवान्। वाजिनं हविः वहन् देवान् प्रापयन् सन् प्रीणय॥ १॥

वाजी अश्वो देवानप्येतु। कीदृशः घृतेन देवयानान्पथः समञ्जन् देवा यायन्ते प्राप्यन्ते यैस्ते देवयानाः पन्थानो हवींष्युच्यन्ते। प्रजानन् देवानां हविरहमिति जानन्। एवं परोक्षमुक्त्वा प्रत्यक्षमाह। हे सप्ते अश्व प्रदिशो दिगाश्रयाणि भूतानि त्वा त्वामनुसचन्ताम् षप् सम्बन्धे सपति कर्मणा सम्बध्यते स सप्तिः। किञ्च अस्मै यजमानाय स्वधामन्नं धेहि प्रयच्छ। अत्र घृतशब्दस्तनूनपाद्वाची॥२॥

ब्राह्मी बृहती। देवो दाता स्विष्टकृत् अग्निः देवो वयोधसं देवं दीप्तमिन्द्रं देवमवर्धयत्। सोऽयं अतिच्छन्दसा छन्दसा चव घताघाताघारूपमिन्द्रं वयश्चेन्द्रे दधत्। स वसुवननाय वसुधानाय च वेतु। हे होतः त्वमपि यज ॥ ४५ ॥
अग्निमद्य एकाधिका ब्राह्मी गायत्री। सूपस्थाः ब्राह्मानुष्टुप्। एते व्याख्याते (१२ क०)॥ त्वामद्य प्रतीकोक्तः सर्वोऽपि पाठः

देवोऽअग्निः स्विष्टकृद्देवमिन्द्रं वयोधसन्देवोदेवमवर्धयत्। अतिच्छन्दसाछन्दसेन्द्रियंक्षत्रमिन्द्रेवयोदधद्वसु

वनेवसुधेयस्यवेतुयज ॥ ४५ ॥

अग्निमद्यहोतारमवृणीतायंयजमानःपचन्पक्तीःपचन्पुरोडाशम्बध्नन्निन्द्रायवयोधसेछागम्। सूपस्थाअद्यदेवो

वनस्पतिरभवदिन्द्रायवयोधसेछागेन। अधत्तमेदस्तःप्रतिपचताग्रभीदवीवृधत्पुरोडाशेन। त्वामद्यऋषे ॥४६॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायामष्टाविंशोऽध्यायः ॥ २८ ॥

एकाधिका विकृतिः अयमपि व्याख्यातः (१२ क०)। इन्द्राय वयोधसे इति विशेषः ॥ ४६ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे। अष्टाविंशोऽयमध्यायोऽगमत्सौत्रामणीभवः ॥

इति सौत्रामणीसम्बन्धिप्रयाजानुयाजप्रैषनिरूपणं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

अतिजगती। देवी दाता नराशंसो देवः देवं दीप्तं वयोधसमिन्द्रमवर्धयत्। कीदृशः विराजा छन्दसा रूपमिन्द्रियं वयश्चेन्द्रे दधत् ॥ ४२ ॥

अतिजगती। देवी दाता वनस्पतिर्यूपः देवं द्योतनं वयोधसमिन्द्रं देवमवर्धयत्। कीदृशः द्विपदा छन्दसा भगं सौभाग्यरूपमिन्द्रियं वयश्चेन्द्रे दधत् ॥ ४३ ॥

देवो वनस्पतिर्देवमिन्द्रं वयोधसं देवो देवमवर्धयत्। द्विपदा छन्दसेन्द्रियं भगमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ ४३ ॥

देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसं देवं देवमवर्धयत्। ककुभा छन्दसेन्द्रियं यश इन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ ४४ ॥

ब्राह्मी बृहती। बर्हिः देवमिन्द्रमवर्धयत्। कीदृशमिन्द्रं देवं दीप्यमानम् वयोधसं वयसो दातारम्। कीदृशं बर्हिः वारितीनां वार्भ्यः सकाशात् इतिरुत्पत्तिर्यासां ता वारितय ओषधयस्तासां मध्ये देवं दीप्तं श्रेष्ठमित्यर्थः। ककुभा छन्दसा यशोरूपमिन्द्रियं वयश्चेन्द्रे दधत् ॥ ४४ ॥

ग्रकरी। देवी दाग्गो ऊर्जाह्वान्यौ देव्यौ पयसा वयोधसं देवमिन्द्रमवर्धताम्। कीदृश्यौ दुघे दोग्ध्र्यौ। सुदुघ सुखेन दोग्ध्रं, ग्रबे। पङ्क्त्या छन्दसा शुक्रं वीर्यमिन्द्रियं वयः चेन्द्रे दधत्यौ ॥ ३९ ॥

अतिजगती। देव्या देव्यौ देवा देवौ दीप्तौ देवसम्बन्धिनौ होतारा होतारौ देवौ वयोधसं देवं दीप्तमिन्द्रं देवमवर्धताम्।

देवा दैव्या होतारा देवमिन्द्रं वयोधसं देवौ देवमवर्धताम्। त्रिष्टुभा छन्दसेन्द्रियं त्विषिमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज ॥४०॥

देवीस्तिस्रस्तिस्रो देवीर्वयोधसं पतिमिन्द्रमवर्धयन्। जगत्या छन्दसेन्द्रियꣳ शूषमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्यन्तु यज ॥४१॥

देवो नराशꣳसो देवमिन्द्रं वयोधसं देवो देवमवर्धयत्। विराजा छन्दसेन्द्रियꣳ रूपमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥४२॥

त्रिष्टुभा छन्दसा त्विषिं कान्तिमिन्द्रियं त्वगिन्द्रियं वयश्चेन्द्रे दधतौ ॥ ४० ॥

एकाधिका ब्राह्मी अनुष्टुप्। तिस्रो देव्यो भारतीडासरस्वत्यः पतिं पालकं वयोधसमिन्द्रमवर्धयन् अभ्यास आदरार्थः। कीदृश्यः जगत्या छन्दसा शूषं बलमिन्द्रियं वयश्चेन्द्रे दधत्यः ॥ ४१ ॥

व्रस्य देवताद्वन्द्वं उभासा आदेशः विभक्तेराकारश्च । कीदृश्यौ ते देवी दीप्यमाने । कीदृशमिन्द्रं देवं दीप्यमानम् । एकौ देवीदेवशब्दौ दीप्तिवाचकौ अन्यौ सुरवाचकौ । अनुष्टुभा छन्दसा बलमिन्द्रियं वयश्च इन्द्रे दधत् दधत्यौ । दधदित्यव्ययम् लिङ्गवचनव्यत्ययो वा । ते वीताम् ॥ ३७ ॥

दे॒वीऊर्जा॑ह्वती॑दु॒घेस॑दु॒घेप॑य॒सेन्द्रं॑व॒यो॒ध॒सन्दे॒वीदे॑वम॑वर्ध॒ताम् । बृ॒ह॒त्याछन्द॑से॒न्द्रि॒यꣳश्रोत्र॒मिन्द्रे॒वयो॒द॒ध॒द्व॒सु॒वने॑व॒सु॒धेय॑स्यवीतां॒यज॑ ॥ ३८ ॥

दे॒वीऊर्जा॑हुतीदु॒घेस॑दु॒घेप॑य॒सेन्द्रं॑व॒यो॒ध॒सन्दे॒वीदे॑वम॑वर्ध॒ताम् । प॒ङ्क्त्याछन्द॑से॒न्द्रि॒यꣳशु॒क्रमिन्द्रे॒वयो॒द॒ध॒द्व॒सु॒वने॑व॒सु॒धेय॑स्यवीतां॒यज॑ ॥ ३९ ॥

देवी देव्यौ दीप्यमाने देवी देव्यौ अनुयाजदेवते देवं दीप्तं वयोधसमिन्द्रं देवमवर्धताम् । देवीदेवशब्दौ पूर्ववत् । कीदृश्यौ जोष्ट्री जुषेते ते जोष्ट्री प्रीतियुक्ते जुषेस्तृच् । वसुधिती वसुनो धनस्य धारयित्र्यौ । बृहत्या छन्दसा श्रोत्रमिन्द्रियं वयश्च इन्द्रे दधत्यौ ॥ ३८ ॥

व ायोधसे पशाविवंकादशानुयाजानां प्रैषाः बर्हिरादिदेवताः। एकाधिके आर्च्यौ त्रिष्टुभौ द्वे। बर्हिः देवं वयोधसमिन्द्रं देवमवर्धयत्। कीदृशं बर्हिः गायत्र्या छन्दसा कृत्वा चक्षुरिन्द्रियं वयश्चेन्द्रे दधत्। तत् वसुवननाय वसुधानाय चाज्यं वेतु षष्ठीसप्तम्यौ चतुर्थ्यर्थे। हे मनुष्यहोतस्त्वमपि यज। एवमग्रेऽपि व्याख्येयम्॥ ३५॥

देवम्बर्हिर्वयोधसन्देवमिन्द्रमवर्धयत्। गायत्र्याछन्दसेन्द्रियञ्चक्षुरिन्द्रे वयोदधद्वसुवनेवसुधेयस्यवेतुयज।३५॥

देवीर्द्वारोवयोधसꣳशुचिमिन्द्रमवर्धयन्। उष्णिहाछन्दसेन्द्रियम्प्राणमिन्द्रे वयोदधद्वसुवनेवसुधेयस्यव्यन्तुयज॥ ३६॥

देवीउषासानक्तादेवमिन्द्रं वयोधसन्देवीदेवमवर्धताम्। अनुष्टुभाछन्दसेन्द्रियम्बलमिन्द्रे वयोदधद्वसुवने वसुधेयस्यवीतांयज॥ ३७॥

• द्वारो देव्यः वयोधसं शुचिं पवित्रमिन्द्रमवर्धयन्। कीदृश्यो द्वारः उष्णिहा छन्दसा कृत्वा सह वा प्राणमिन्द्रियं प्राणेन्द्रियं वयश्चेन्द्रे दधत् दधत्यः लिङ्गवचनव्यत्ययः। ता व्यन्तु॥ ३६॥

हे आश्र्यौ बृहत्यौ। उषासानक्तौ देवी देव्यौ वयोधसमिन्द्रं देवमवर्धताम् उषाश्च नक्तं च उषासानक्ता उषासोषस इति उषःश-

हिरण्यपर्णं हिरण्मयानि पर्णानि यस्य तम्। उक्थिनम् उक्थानि शस्त्राणि सन्त्यस्य इत्युक्थवन्तं वा। रशनां रज्जुं बिभ्रतम् स्वभावानुवादः यूपे हि पशुबन्धाय रज्जुर्बध्यते। वशिं कान्तम्। भगं भजनीयम्। किं कुर्वन् ककुभं छन्दः इन्द्रियम् वशां वन्ध्यां वेहतं गर्भोपघातिनीं च गाम् वयश्च इह इन्द्रे दधत्। स इन्द्रो वनस्पतिर्वेतु॥ ३३॥

होतायक्षद्वनस्पतिꣳशमितारꣳशतक्रतुꣳहिरण्यपर्णमुक्थिनꣳरशनाम्बिभ्रतंवशिम्भगमिन्द्रंवयोधसम्।

ककुभञ्छन्दऽइहेन्द्रियंवशांवेहतङ्गांवयोदधद्वेत्वाज्यस्यहोतर्यज॥ ३३॥

होतायक्षत्स्वाहाकृतीरग्निङ्गृहपतिम्पृथग्वरुणम्भेषजङ्कविंक्षत्रमिन्द्रंवयोधसम्। अतिच्छन्दसञ्छन्दऽ

इन्द्रियम्बृहदृषभङ्गांवयोदधद्व्यन्त्वाज्यस्यहोतर्यज॥ ३४॥

अतिशक्करी। होता स्वाहाकृतीः प्रयाजदेवताः इन्द्रं च यजतु। कीदृशमिन्द्रम् अग्निमङ्गतीत्यग्निः अग्रे गन्तारम्। पृथक् प्रत्येकं यज्ञेषु गृहपतिं गृहस्य पालकम्। वरुणम् व्रियतेऽसौ वरुणस्तम् ऋत्विग्भिर्वरणीयम्। भेषजं रोगनाशकम्। कविं क्रान्तदर्शनम्। क्षत्रं क्षतात्प्रहाराच्चातारम्। वयोधसमायुषो दातारम्। किं कुर्वन् अतिच्छन्दसं छन्दः इन्द्रियं वीर्यं बृहत् महत् ऋषभं पुष्टं गां वयश्चेन्द्रे दधत्। सेन्द्राः स्वाहाकृतयः आज्यं व्यन्तु। मनुष्यहोतस्त्वमपि यज॥ ३४॥

समानयोगौ। किंकुर्वन्। जगतीं छन्दः इन्द्रियम् अनड्वाहं गाम् वयश्च इन्द्रे दधत्। अनः शकटं वहतीत्यनड्वान् शकटवाही वृषः तौ वीताम् ॥ ३० ॥

एकाधिका शक्वरी। होता तिस्रो देवीः पतिं पालकं वयोधसमिन्द्रं च यजतु। कीदृशीस्तिस्रः पेशो रूपमस्ति यासां ताः रूपसम्पन्नाः। हिरण्ययीः हिरण्यालङ्कृतदेहाः। बृहतीः प्रभावेन। मह्वीः महतीः तेजसा आदित्येन्द्राग्निसम्बन्धात्। कास्ताः भारतीः बहुवचनमिडासरस्वत्युपलक्षणम् इडासरस्वतीभारत्यस्तिस्र इत्यर्थः। किंकुर्वन्। विराजं छन्द इन्द्रियम् धेनुं दोग्ध्रीं गाम् वयश्चेन्द्रे दधत्। नकारश्चार्थः। सेन्द्रास्ता व्यन्तु ॥ ३१ ॥

होता यक्षत्सुरेतसन्त्वष्टारम्पुष्टिवर्धनं रूपाणि बिभ्रतम्पृथक्पुष्टिमिन्द्रं वयोधसम्। द्विपदञ्छन्द इन्द्रियमुक्षाणङ्गान्न वयो दधद्वेत्वाज्यस्य होतर्यज ॥ ३२ ॥

एकाधिका शक्वरी। होता त्वष्टारं वयोधसमिन्द्रं च यजतु। कीदृशं त्वष्टारं सुरेतसं शोभनं रेतो यस्य तम् जगदुत्पादकत्वात्त्वष्टुः शोभनं रेतः। पुष्टिवर्धनं पुत्रादिपुष्टेर्वर्धयितारम्। पृथक् नानाजातिषु रूपाणि पुष्टिं च बिभ्रतम्। किंकुर्वन् द्विपदं छन्दः इन्द्रियम् उक्षाणं रेतःसेकक्षमं गां वृषम् वयश्चेन्द्रे दधत्। नश्चार्थः। सेन्द्रस्त्वष्टा वेतु ॥ ३२ ॥

अत्यष्टिः। होता वनस्पतिं वयोधसमिन्द्रं च यजतु। कीदृशं वनस्पतिं शमितारं संस्कर्तारं हविषाम्। शतक्रतुं बहुकर्माणम्।

अतिशक्वरी। होता उभे नक्तोषासा नक्तोषसौ विश्वं सर्वात्मकं वयोधसमिन्द्रं च यजतु। नक्ता रात्रिः उषा रात्रेरपरभागः। नकारश्चार्थः। कीदृश्यौ नक्तोषसौ सुपेशसा सुपेशसौ पेशः रूपनाम शोभनं पेशो ययोस्ते सुरूपे। सुशिल्पे यद्धै प्रतिरूपं तच्छिल्पमिति श्रुतेः सुष्ठु शिल्पं ययोस्ते अन्योऽन्यं प्रतिरूपे। बृहती बृहत्यौ। दर्शते दर्शनीये हशेरतच्प्रत्ययः। किङ्कुर्वन् त्रिष्टुभं छन्दः इन्द्रियम्

होताऽयक्षत्प्रचेतसा देवानामुत्तमं यशो होतारा दैव्या कवी सयुजेन्द्रं वयोधसम्। जगतीञ्छन्द इन्द्रियमनड्वाहं

गां वयो दधद्वीतामाज्यस्य होतर्यज ॥ ३० ॥

होता यक्षत्पेशस्वतीस्तिस्रो देवीर्हिरण्ययीर्भारतीर्बृहतीर्महीः पतिमिन्द्रं वयोधसम्। विराजञ्छन्द इहे

न्द्रियन्धेनुङ्गान्न वयो दधद्व्यन्त्वाज्यस्य होतर्यज ॥ ३१ ॥

पष्ठवाहं गाम् वयश्च इहेन्द्रे दधत्। ते वीतां पिबताम् ॥ २९ ॥

एकाधिका शक्वरी। होता दैव्यौ होतारौ वयोधसमिन्द्रं च यजतु अयं चाग्निरसौ च मध्यम इति होतारौ। कीदृशौ प्रचेतसा प्रकृष्टं चेतो ज्ञानं ययोस्तौ प्रचेतसौ। देवानामुत्तमं यशः पुञ्जीकृतदेवयशोरूपौ। कवी क्रान्तदर्शिनौ। सयुजा सह युक्तस्तौ

स्तम् पूष्णा युक्तम् अमर्त्यममरणधर्माणम् । प्रिये रुचिते अमृता अमृते अनश्वरे बर्हिषि सीदन्तं तिष्ठन्तम् । किङ्कुर्वन् बृहतीं छन्दः इन्द्रियम् त्रिवत्सं गां वयश्चेन्द्रे दधत् । वत्सः संवत्सरः वयो वत्सा यस्य त्रिवत्सो गौः त्रिवर्षो वृषः । स वेतु ॥ २७ ॥

अतिशक्करी । होता द्वारो देवोः ब्रह्माणं परिवृढं वयोधसमिन्द्रं च यजतु । कीदृशीर्द्वारः व्यचस्वतीः व्यचो व्यचनं गमनाव काशो

होतायक्षद्व्यचस्वतीः सुप्रायणाऽऋतावृधोद्वारोदेवीर्हिरण्ययीर्ब्रह्माणमिन्द्रंवयोधसम् । पङ्क्तिश्छन्दऽइहे

न्द्रियन्तुर्यवाहङ्गांवयोदधद्व्यन्त्वाज्यस्यहोतर्यज ॥ २८ ॥

होतायक्षत्सुपेशसासुशिल्पे बृहतीऽउभेनक्तोषासानदर्शतेविश्वमिन्द्रंवयोधसम् । त्रिष्टुभश्छन्दऽइहेन्द्रियम्पष्ठ

वाहङ्गांवयोदधद्वीतामाज्यस्यहोतर्यज ॥ २९ ॥

विद्यते यासु ताः । अतएव सुप्रायणाः शोभनं प्रकर्षेणायनं गमनं यासु ताः । ऋतवृधः सत्यस्य वर्धयित्रीः । हिरण्ययीः हिरण्मयीः दृढाः । किङ्कुर्वन् पङ्क्तिं छन्दः इन्द्रियम् तुर्यवाहं गाम् वयश्च इह इन्द्रे दधत् । सार्धत्रिवर्षो गौस्तुर्यवाट् तुर्यं चतुर्थं वर्षं वहतीति ॥ २८ ॥

पातम् उद्भिदम् उद्भिनत्ति प्रकटयति फलमित्युद्भित् तं यज्ञफलानामुद्भेत्तारम्। शुचिं पवित्रम्। किङ्कुर्वन् उष्णिहं छन्दः इन्द्रियम् दित्यवाहं गाम् वयश्च इन्द्रे दधत्। द्विवर्षा गौर्दित्यवाट्। स चेन्द्रो वेतु ॥ २५ ॥

व्यूहेन प्रकारो। होता इडाभिः प्रयाजदेवताभिः सह वयोधसमिन्द्रं यजतु। कीदृशमिन्द्रम् ईडेन्यम् ईडितुं योग्यं ईडेन्यः

होतायक्षदीडेन्यमीडितंवृत्रहन्तममिडाभिरीड्यꣳसहःसोममिन्द्रंवयोधसम्। अनुष्टुभञ्छन्दइन्द्रियम्पञ्चाविङ्गांवयोदधद्वेत्वाज्यस्यहोतर्यज ॥ २६ ॥

होतायक्षत्सुबर्हिषम्पूषण्वन्तममर्त्यꣳसीदन्तम्बर्हिषिप्रियेऽमृतेन्द्रंवयोधसम्। बृहतीञ्छन्दइन्द्रियन्त्रिवत्सङ्गांवयोदधद्वेत्वाज्यस्यहोतर्यज ॥ २७ ॥

ईडेरेन्यप्रत्ययः। ईडितमृषिभिः स्तुतम्। वृत्रहन्तमम् अत्यन्तं वृत्रहा वृत्रहन्तमः तम् नाद्घस्येति नुडागमः। ईड्यं सर्वैः स्तुत्यम्। सहः सोमं सहसा बलेन सोमवदाह्लादकम्। किङ्कुर्वन् अनुष्टुभं छन्दः इन्द्रियम् पञ्चाविं गाम् वयश्चेन्द्रे दधत्। पञ्चावयो यस्याः सा सार्धद्विवर्षा गौः। स वेतु ॥ २६ ॥

प्रकारो। होता वयोधसमिन्द्रं यजतु। कीदृशम् सुबर्हिषं शोभनं बर्हिः प्रयाजदेवता यस्य तम्। पूषण्वन्तम् पूषाऽस्यास्ति पूषण्वां

एकादश वायोधसे पशौ प्रयाजप्रैषाः समित्तनूनपादाद्याप्रीदेवताः। अतिजगती। दैव्यो होता अग्निं वयोधसमिन्द्रं च यजतु वयः आयुर्दधाति वयोधाः तम् आयुषो दातारं धारयितारं वा। कीदृशमग्निं समिधानं दीप्यमानम्। महद्यशः सुपां सुलुगिति तृतीयैकवचनस्य सुआदेशः महता यशसा समिद्धं दीप्तम्। वरेण्यं वरणीयम्। किं कुर्वन्यजतु गायत्री छन्दः वीर्यम् त्र्यविं गाम्

होतायक्षत्समिधानम्महद्यशःसुसमिद्धंवरेण्यमग्निमिन्द्रंवयोधसम्। गायत्रीञ्छन्दइन्द्रियन्त्र्यविङ्गांवयो

दधद्वेत्वाज्यस्यहोतर्यज ॥ २४ ॥

होतायक्षत्तनूनपातमुद्भिदंयङ्गर्भमदितिर्दधेशुचिमिन्द्रंवयोधसम्। उष्णिहञ्छन्दइन्द्रियन्दित्यवाहङ्गांवयोद

धद्वेत्वाज्यस्यहोतर्यज ॥ २५ ॥

वयः आयुश्च दधत् स्थापयन् इन्द्रे इति शेषः। षण्मासात्मकः कालोऽविः त्रयो ऽवयो यस्याः सा त्र्यविः सार्धसंवत्सरा गौः ताम्। प्रयाजदेवतेन्द्रयुता आज्यं वेतु हे मनुष्यहोतः त्वमपि यज। एवमग्रेऽपि ॥ २४ ॥

एकाधिका जगती। होता तनूनपातं प्रयाजदेवं वयोधसमिन्द्रं च यजतु अदितिर्यं गर्भं दधे तम् इन्द्रमित्यर्थः। कीदृशं तनू-

आर्षी त्रिष्टुप्। बर्हिः अनुयाजदेव इन्द्रं देवमवर्धयत् अन्या अन्यानि बर्हींष्यभिभूत् अभिभवति तद्वेतु। कीदृशं बर्हिः वारितीनामोषधीनां मध्ये देवं दीप्यमानं अथ वारि जले इतिर्गतिर्यासां ता वारितयो जलाश्रिता ओषधयः। स्वासस्थं सुखेनासनेन स्थीयते यत्र तत्स्वासस्थम्। इन्द्रेणासन्नमाश्रितम् ॥ २१ ॥

देवोऽअग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत्। स्विष्टं कुर्वन्स्विष्टकृत्स्विष्टमद्य करोतु नो वसुवने वसुधेयस्य वेतु यज ॥ २२ ॥

अग्निमद्य होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोडाशं बध्नन्निन्द्राय छागम्। सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राय छागेन। अघत्तं मेदस्तः प्रति पचताग्रभीदवीवृधत्पुरोडाशेन त्वामद्य ऋषे० ॥ २३ ॥

आर्षी त्रिष्टुप्। स्विष्टकृद्देवः अग्निः इन्द्रं देवमवर्धयत् स नोऽस्माकं स्विष्टं साधु इष्टं करोतु वेतु च। कीदृशः स्विष्टं कुर्वन् सन् स्विष्टकृत् नाम शोभनमिष्टं कर्तव्यमिति तस्याधिकारः ॥ २२ ॥

त्वामद्य अस्य प्रतीकः उभयत्रापि। ऐन्द्रपशुसम्बन्धी सूक्तवाकप्रैषः त्वामद्यऋषे इत्ययं मन्त्र उभयत्रापि ऐन्द्रानुवाके वायोधसानुवाके च प्रतीकोक्तः आदिमात्रेणोक्तः सकलो ज्ञेयः। अग्निमद्य एकाधिका प्राजापत्या जगती। सूपस्थाः ब्राह्मी उष्णिक्। त्वामद्य एकाधिका विकृतिः। व्याख्यातः प्रैषः[१] ॥ २३ ॥ १—२१, ५९.

नर्ाम यस्य। स नराशंसः श्रितिपृष्ठानां शतेनान्वितः सन् सहस्रेण गोसहस्रेण प्रवर्तते। श्रिति श्यामं पृष्ठं यासां ताः श्रितिपृष्ठा गावः। मित्रावरुणा इत् मित्रावरुणावेवास्य नराशंसस्य होत्रमर्हतः होतृकर्मणि योग्यौ भवतः बृहस्पतिः स्तोत्रमौद्गात्रमर्हति अश्विना अश्विनौ अध्वर्यवमर्हतः। स वेतु ॥ १९ ॥

मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज ॥ १९ ॥

देवो देवैर्वनस्पतिर्हिरण्यपर्णो मधुशाखः सुपिप्पलो देवमिन्द्रमवर्धयत्। दिवमग्रेणास्पृक्षदान्तरिक्ष-

म्पृथिवीमदृंहीद्वसुवने वसुधेयस्य वेतु यज ॥ २० ॥

देवम्बर्हिर्वारितीनान्देवमिन्द्रमवर्धयत्। स्वासस्थमिन्द्रेणासन्नमन्या बर्हीᳪष्यभ्यभूद्वसुवने वसुधेयस्य वेतु यज ॥२१॥

अतिशयकरी। यूप उच्यते वनस्पतिर्देवो देवैः सह इन्द्रमवर्धयत्। कीदृशः हिरण्यपर्णः हिरण्मयानि पर्णानि यस्य। मधुशाखः मधुर्मधुरा रसवती शाखा यस्य। सुपिप्पलः शोभनानि पिप्पलानि फलानि यस्य। यो वनस्पतिरग्रेण दिवं स्वर्गमस्पृक्षत्. स्पृशति स्पृशेर्लुङि शल इगुपधादनिटः क्सइति क्सप्रत्ययः। अन्तरिक्षं मध्येनेति शेषः आ स्पृशति। पृथिवीमुपरेणेति शेषः अदृंहीत दृढा-मकरोत्। स वेतु ॥ २० ॥

अतिजगती। एकः पार्थिवोऽग्निः अन्यो मध्यमः। देवा देवौ दैव्यौ देव्यौ होतारौ इन्द्रं देवमवर्धताम् यजमानाय वार्याणि वसु वसूनि च आभार्ष्टाम् आहार्ष्टामाहृतवन्तौ आङ्पूर्वाद्धरतेर्लुङ् हस्य भः। कीदृशौ हताघशंसौ अघं पापं शंसतीच्छति अघशंसः पापी हतोऽघशंसो याभ्यां तौ पापिनिवर्तकौ। तौ वीताम् ॥ १७ ॥

अतिजगती। तिस्रो देवीः देव्यः पतिं पालकमिन्द्रमवर्धयन् आदरार्थं पुनरुक्तिः। ता एवाह भारती दिवं स्वर्गमस्पृक्षत् स्पृशति

देवीस्तिस्रस्तिस्रोदेवीःपतिमिन्द्रमवर्धयन्। अस्पृक्षद्भारतीदिवꣳरुद्रैर्यज्ञꣳसरस्वतीडावसुमतीगृहान्व

सुवनेवसुधेयस्यव्यन्तु यज ॥ १८ ॥

देवइन्द्रोनराशꣳसस्त्रिवरूथस्त्रिवन्धुरोदेवमिन्द्रमवर्धयत्। शतेनशितिपृष्ठानामाहितःसहस्रेणप्रवर्तते

भरतो रविस्तत्कान्तिर्भारती। सरस्वती रुद्रैः युता यज्ञमस्पृक्षत्। वसुमती वसुयुता इडा गृहानस्पृक्षत् गृहशब्देन भूलोकः। ता व्यन्तु ॥ १८ ॥

कृतिः। नरा ऋत्विजासीनाः शंसन्ति नराशंसः यज्ञो देवः इन्द्रं देवमवर्धयत्। कीदृशो नराशंसः इन्दतीतीन्द्रः ऐश्वर्यवान्। त्रिवरूथः वरूथं गृहम् त्रीणि वरूथानि सदोहविर्धानाग्नीध्राणि यस्य सः। त्रिवन्धुरः त्रीणि वन्धुराणि ऋग्यजुःसामलक्षणानि वन्धु-

विहृतिः। अधस्तनमन्त्रोक्तो देवताविकल्पः। देवी देव्यौ पूर्वप्रैषोक्ते पयसा दुग्धेनेन्द्रमवर्धताम् अवर्धयताम् छन्दस्युभयथेति अप आर्धधातुकत्वाण्णिचो लोपः। कीदृश्यौ ऊर्जाहुती ऊर्जा बलं तद्युक्ता आहुतिराह्वानं ययोस्ते। दुघे दुग्धस्ते दुघे दुहः कब्घश्चेति कप् घादेशश्च दोग्ध्र्यौ अनयोरनु सम्भोगमिमाः सर्वाः प्रजा अनुसम्भुञ्जत इति श्रुतिः। सुदुघे साधुदोहने। तयोर्मध्ये अन्या एका इषमन्नमूर्जं दध्यादि च वक्षत् वहति यजमानाय। अन्या द्वितीया सग्धिं सपीतिं च वक्षत् समाना ग्धिर्भोजनं सग्धिः ताम् समाना

देवीऊर्जाहुतीदुघेसुदुघेपयसेन्द्रमवर्धताम्। इषमूर्जमन्यावक्षत्सग्धिꣳसपीतिमन्यानवेनपूर्वन्दयमाने

पुराणेननवमधातामूर्जमूर्जाहुतीऊर्जयमानेवसुवार्याणियजमानायशिक्षितेवसुवनेवसुधेयस्यवीतांयज ॥ १६ ॥

देवादेव्याहोताराहदेवदेवमिन्द्रमवर्द्धताम्। हताघशꣳसावाभार्ष्टांवसुवार्याणियजमानायशिक्षितौवसुव

नेवसुधेयस्यवीतांयज ॥ १७ ॥

पीतिः सपीतिः पुत्रादिभिः सह पानभोजने वहति। ये देव्यौ नवेनान्नेन पूर्वं पुराणमन्नमधाताम् पुराणेनान्नेन नवमन्नमधाताम् यजमानाय वार्याणि वसु वसूनि चाधाताम् अन्नं धनं चाक्षयं कृतवत्यावित्यर्थः। कीदृश्यौ दयमाने रक्षन्त्यौ कृपयन्त्यौ वा। ऊर्जाहुती ऊर्जा युता आहुतिर्होमो ययोस्ते। ऊर्जं रसमूर्जयमाने वर्धयन्त्यौ। शिक्षिते तत्त्वज्ञे। ते वीतां पिबताम् ॥ १६ ॥

ब्राह्मी उष्णिक्। उषाश्च नक्ता च उषासानक्ता समासे उषःशब्दस्य उषासादेशः अहोरात्राधिष्ठात्र्यौ देवी देव्यौ यज्ञे प्रयति प्रवर्तमाने सति इन्द्रमह्वेतामाहूतवत्यौ। प्रेति प्रयत् प्रपूर्वादिणः शतृ। ये च दैवीः देवसम्बन्धिनीर्विशः प्रजाः प्रायासिष्टां प्रगतवत्यौ यातेर्लुङ् वसवो रुद्रा आदित्या विश्वेदेवा मरुत इत्यादयो देवप्रजाः। ते च वीतां पिबताम्। कीदृश्यौ सुप्रीते अतितुष्टे सुधिते सुतरां हिते ॥ १४ ॥

दे॒वीऽउ॒षासा॒नक्तेन्द्रं॑ य॒ज्ञे प्र॑य॒त्य॑ह्वेताम्। दैवी॒र्विशः॒ प्राया॑सिष्टा॒ᳬ सुप्री॑ते॒ सुधि॑ते॒ वसु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑ ॥१४॥

दे॒वी जोष्ट्री॒ वसु॑धिती॒ दे॒वमिन्द्र॑मवर्धताम्। अया॑व्य॒न्याघा॒ द्वेषा॒ᳬस्यान्या व॑क्ष॒द्वसु॒ वार्या॑णि॒ यज॑मानाय शिक्षि॒ते

व॒सु॒वने॑ वसु॒धेय॑स्य वीतां॒ यज॑ ॥ १५ ॥

एकाधिकातिजगती। जोष्ट्री जुषेते ते जोष्ट्र्यौ प्रीतियुक्ते देवी देव्यौ वसुधिती वसुनो धनस्य धितिर्धारणं याभ्यां ते द्यावापृथिव्यौ अहोरात्रे वा सस्यं च समा चेति कात्थक्यः[1]। ते इन्द्रं देवमवर्धतामवर्धयताम् तयोर्मध्ये अन्या एका अघा अघानि पापानि द्वेषांसि दौर्भाग्यानि च अयावि यु पृथग्भावे दूरीकरोति यौतेर्णिच् लकारव्यत्ययः। अन्या द्वितीया वार्याणि वरणीयानि भोगयोग्यानि वसु वसूनि धनानि आवक्षत् आवहति। कीदृश्यौ ते शिक्षिते विदितवेद्ये तत्त्वज्ञे। ते वीताम् ॥ १५ ॥

1—निरु० ८। ११।

रक्षोरित्यव्ययपदं क्रमाद्दहनिर्गावाचकम्। यत् बर्हिः राया हविर्लक्षणेन धनेन बर्हिष्मतः बर्हिषा युक्तानन्यान्यागानत्यगात् अतिक्रम्य गतं संस्कारोत्कर्षात् तत् बर्हिः वसुवने वसुवननाय धनदानाय वसुधेयस्य वसुधेयाय वसुनो धानाय निधानाय यजमानगृहे निखननाय वेतु आज्यं पिबतु। वसुवने वसुधेयस्येति सप्तमीषष्ठ्यौ चतुर्थ्यर्थे। हे मनुष्यहोतः त्वमपि यज। एवमग्रेऽपि कश्चिद्विशेषो व्याख्येयः ॥ १२ ॥

एकाधिका शक्वरी। यज्ञगृहद्वारोऽत्र देवताः। यच्छन्ति नियता भवन्ति ऋत्विजो यत्रेति याम कर्म यमेरनिषप्रत्ययो द्विश्च

देवीर्द्वारइन्द्रꣳसङ्घातेवीड्वीर्यामन्नवर्धयन्। आवत्सेनतरुणेन कुमारेणचमीवतापार्वाणꣳरेणुककाटन्नु

दन्तांवसवनेवसुधेयस्यव्यन्तुयज ॥ १३ ॥

सप्तम्या लुक् यामनि कर्मणि या द्वारो देव्यः इन्द्रमवर्धयन्। कीदृश्यो द्वारः सङ्घाते देहलीकपाटद्वारशाखार्गलादिसमूहे सति वीड्वीः वीड्व्यः दृढाः सङ्घातं विना न द्वारां दृढत्वं स्यात्। ता द्वारो रेणुककाटमपनुदन्ताम् काटः कूपः कुत्सितः काटः ककाटः रेणुभिः कृत्वा ककाटो रेणुककाटः तम् अपनुदन्तां निवर्तयन्तु। किमित्यतो विशेषणं। कीदृशं कूपं वत्सेन गोपुत्रेण तरुणेन कुमारेण च आ आभिमुख्येन अर्वाणम् अर्यते गम्यते यत्रेत्यर्वा तम् ऋ गतावित्यतोऽन्येभ्योऽपि दृश्यन्त इति वनिप्प्रत्ययः। कीदृशेन मीवता मीञ् हिंसायां मयनं मीः क्विप् मीरस्यास्ति मीवान् तेन हिंसाशीलेन। हिंसाशीलाश्चञ्चला उच्चलन्तो वत्साः कुमाराश्च यत्र पतन्ति तं कूपमपनुदेत्यर्थः उपलक्षणमेतत् यज्ञप्रजाविघ्नकराणि कूपादीनि मार्गादपनयन्त्वित्याशयः। ता व्यन्तु च ॥ १३ ॥

प्रकारो। होता इन्द्रं यजतु। स्वाहाकारेणाज्यस्य देवान्यजतु। स्वाहाकारेण मेदसो देवान्यजतु। स्वाहाकारेण स्तोकानां सोमबिन्दूनां देवान्यजतु। स्वाहाकारेण स्वाहाकृतीनां देवानां स्वाहाकृतीः प्रयाजदेवताः यजतु। स्वाहाकारेण हव्यसूक्तीनां हव्यसम्बन्धिसुवचनानां देवान्यजतु। स्वाहाकारेणाज्यपा देवाः प्रयाजाः जुषाणाः प्रीयमाणा भवन्तः सन्तः इन्द्रश्चाज्यं व्यन्तु पिबन्तु ॥ ११ ॥

**होता यक्षदिन्द्रꣳ स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानाꣳ स्वाहा स्वाहाकृतीनाꣳ स्वाहा हव्यसूक्तीनाम्।**

**स्वाहा देवा आज्यपा जुषाणा इन्द्र आज्यस्य व्यन्तु होतर्यज ॥ ११ ॥**

**देवं बर्हिरिन्द्रꣳ सुदेवं देवैर्वीरवत्स्तीर्णं वेद्यामवर्धयत्। वस्तोर्वृतम्प्राक्तोर्भृतꣳ राया बर्हिष्मतोऽत्यगाद्वसु**

**वने वसुधेयस्य वेतु यज ॥ १२ ॥**

एकादश ऐन्द्रपशोः सम्बन्धिन एवानुयाजप्रैषाः। देवत्ता बर्हिरादयः॥ अतिजगती। मैत्रावरुणो वदति। बर्हिः देवं बर्हिः-सञ्ज्ञानुयाजदेवता इन्द्रमवर्धयत् पुष्णाति। किम्भूतं बर्हिः सुदेवं शोभना देवा मरुदादयो यत्र तत्। तथा देवैः दातृभिः ऋत्विग्भिः वीरवत् वीरयुतम्। वेद्यां स्तीर्णमाच्छादितम्। वस्तोरह्नि वृतं लूनम् धातूनामनेकार्थत्वात्। अक्तोः रात्रौ प्रभृतं प्रकर्षेण धृतम वस्तो-

पुरुरूपं पुरूणि बहूनि रूपाणि यस्य तम्। सुरेतसं शोभनं रेतो वीर्यं यस्य तम्। मघोनं मघवन्तं धनवन्तम्। स त्वष्टा इन्द्राय इन्द्रियाणि वीर्याणि दधत् सन् आज्यं वेतु ॥ ९ ॥

शक्वरी। होता वनस्पतिं प्रयाजदेवतां यजतु। कीदृशं वनस्पतिं शमितारम् उलूखलादिरूपेण हविषां संस्कर्तारम्। शतक्रतुं

होता यक्षत्त्वष्टारमिन्द्रन्देवम्भिषजꣳसुयजङ्घृतश्रियम्। पुरुरूपꣳसुरेतसम्मघोनमिन्द्राय त्वष्टा दधदिन्द्रियाणि वेत्वाज्यस्य होतर्यज ॥ ९ ॥

होता यक्षद्वनस्पतिꣳशमितारꣳशतक्रतुन्धियो जोष्टारमिन्द्रियम्। मध्वा समञ्जन्पथिभिः सुगेभिः स्वदाति यज्ञम्मधुना घृतेन वेत्वाज्यस्य होतर्यज ॥ १० ॥

शतं क्रतवः कर्माणि यस्य तं बहुकर्माणम्। धियो जोष्टारं बुद्धेः सेवितारम्। इन्द्रियमिन्द्रस्यात्मनो हितं वीर्यरूपं वा। स त्वष्टा मध्वा मधुना स्वादुना घृतेन समञ्जन् यज्ञं संम्रक्षयन् सन् सुगेभिः सुगैः सुगमनैः पथिभिर्मार्गैः मधुना स्वादुना घृतेन युतं यज्ञं स्वदाति देवान्प्रापयति स्वदातिः प्रापणार्थः स आज्यं वेतु। सुखेन गम्यते येषु ते सुगाः सुदुरोरधिकरणइति गमेर्डप्रत्ययः ॥ १० ॥

अतिजगती । दैव्यौ होतारौ अयं चाग्निरसौ च मध्यमस्तौ होता यजतु यौ च हविषा इन्द्रं भिषज्यतः चिकित्सतः भिषज् रुग्जये कण्ड्वादिभ्यो यक् । इन्द्राय इन्द्रियं वीर्यं धत्तः च तौ आज्यं वीताम् । कीदृशौ भिषजा भिषजौ चिकित्साकुशलौ । सखाया सखायौ अन्योन्यं स्नेहवन्तौ । कवी क्रान्तदर्शनौ देवौ दीप्यमानौ । प्रचेतसौ प्रकृष्टं चेतो ज्ञानं ययोस्तौ ॥ ७ ॥

ब्राह्मी अनुष्टुप् भेषजं भेषजरूपा ये त्रयो लोकास्तान् इडा सरस्वती भारतीति तिस्रो देवीश्च होता यजतु ताश्चाज्यं व्यन्तु नकार-

होतायक्षद्दैव्याहोताराभिषजासखायाहविषेन्द्रम्भिषज्यतः । कवीदेवौप्रचेतसाविन्द्रायधत्तइन्द्रियं

वीतामाज्यस्यहोतर्यज ॥ ७ ॥

होतायक्षत्तिस्रोदेवीर्नभेषजन्त्रयस्त्रिधातवोपसइडासरस्वतीभारतीमहीः इन्द्रपत्नीर्हविष्मतीर्व्यन्त्वाज्यस्यहोतर्यज ॥ ८ ॥

स्वार्थे । कीदृशास्त्रयः त्रिधातवः त्रयोऽग्निवायुसूर्या धातवो धर्तारो येषां ते । अपसः अपस्विनः कर्मवन्तः शीतोष्णवातवर्षादीनि लोकानां कर्माणि । कीदृश्यस्ताः महीः महत्यः । इन्द्रपत्नीः इन्द्रस्य पत्न्यः पालयित्र्यः । हविष्मतीः हविर्विद्यते यासां ताः ॥ ८ ॥

अतिजगती । होता त्वष्टारं प्रयाजदेवतां यजतु । कीदृशं त्वष्टारम् इन्द्रम् इदि परमैश्वर्ये ईश्वरं प्रभुम् । देवं दातारम् । भिषजं रोगनिवर्तकम् । सुयजं सुष्ठु इज्यते स सुयजस्तम् साधु यष्टव्यम् । घृतश्रियं घृतेन श्रीः शोभा यस्य तम् आज्यहविष्का हि प्रयाजाः ।

र्गतिजगती। नकारस्वार्थः। या द्वारः प्रयाजदेवा इन्द्रमिन्द्रे ओजो वीर्यं सहस्रावर्धयन् ओज इन्द्रियबलं वीर्यं शारीरं बलं सहो मनोबलम् ता द्वारो होता यजतु। ताश्च द्वारः इन्द्राय इन्द्रार्थं विश्रयन्तां विवृता भवन्तु अस्त्रिन्यस्त्र आज्यं व्यन्तु पिबन्तु च। कीदृश्यो द्वारः सुप्रायणाः सुखेन प्रकृष्टमयनं गमनं यासु ताः विवृतत्वादित्यर्थः। ऋतं यज्ञं वर्धयन्ति ऋतवृधः संहितायामृतमन्दस्य दीर्घः। इन्द्राय कीदृशाय मीढुषे मेहति मीढ्वान् तस्मै सेक्त्रे क्वसन्तो निपातः॥ ५॥

होतायक्षद्दोजोनवीर्यꣳसहोद्वारइन्द्रमवर्धयन्। सुप्रायणाअस्मिन्यज्ञे विश्रयन्तामृतावृधोद्वारइन्द्रायमी

ढुषेव्यन्त्वाज्यस्यहोतर्यज॥ ५॥

होतायक्षदुषेइन्द्रस्यधेनूसुदुघेमातरामही। सवातरौनतेजसावत्समिन्द्रमवर्द्धतांवीतामाज्यस्यहोतर्यज॥६॥

आर्षी त्रिष्टुप्। उषे इत्र पूर्वपदलोपः होता उषे नक्तोषे यजतु ते च तेजसा इन्द्रमवर्धताम् आज्यं वीतां पिबतां च। तत्र दृष्टान्तः स वातरौ न न इवार्थे समानो वाता वत्सरो यथोक्ते सवत्सरौ एकशिशुके गावौ वत्सं यथा वर्धयेते तथेन्द्रं वर्धयताम् कीदृश्यौ उषे इन्द्रस्य धेनू धेनुतस्ते धेनू प्रीणयित्र्यौ। सुदुघे सुष्ठु दुग्धस्ते सुदुघे दुग्धं पूरयन्त्यौ। मातरा मातरौ विभक्तेराकारः मातृवत्पालिके। मही मह्यौ महत्यौ विभक्तिलोपः॥ ६॥

स्वादोऽस्ति येषु ते मधुमन्तः अत्यन्तं मधुमन्तो मधुमत्तमाः तैः। कीदृशमिन्द्रं जेतारं शत्रूणाम् अपराजितं केनापि न पराभूतम् स्वर्विदं स्वः स्वर्गं वेत्ति स्वीयं जानाति स्वर्वित् यद्वा स्वः स्वर्गं विद्यते स्वर्वित्तम् विद सत्तायाम्। कीदृशेन नराशंसेन तेजसा तेजस्विना। एवं देवद्वययुत इन्द्रः आज्यस्य वेतु। शेषं पूर्ववत्। अत्र तनूनपान्नराशंसावेकत्र प्रयाजे पठितावित्युभयवानयं प्रयाजः ॥२॥

ब्राह्मी उष्णिक्। होता इडाभिः प्रयाजदेवताभिः सह इन्द्रं यजतु। कीदृशमिन्द्रम् ईडितम् ऋत्विग्भिः स्तुतम् आजुह्वानमाह्वयमानम् यजमानैः देवानाह्वयन्तं वा। अमर्त्यममरणधर्माणम्। ईदृशो देव इन्द्रः आज्यस्य वेतु कीदृशो देवः सवीर्यः समानं वीर्यं

होता यक्षदिडाभिरिन्द्रमीडितमाजुह्वानममर्त्यम्। देवो देवैः सवीर्यो वज्रहस्तः पुरन्दरो वेत्वाज्यस्य होतर्यज ॥३॥

होता यक्षद्बर्हिषीन्द्रन्निषद्वरं वृषभन्नर्यापसम्। वसुभी रुद्रैरादित्यैः सयुग्भिर्बर्हिरासदद्वेत्वाज्यस्य होतर्यज ॥४॥

यस्य सः सर्वदेवेषु यादृशं वीर्यं तदेकस्मिन्निन्द्रे इत्यर्थः। वज्रहस्तः वज्रं हस्ते यस्य। पुरन्दरः पुरं शत्रूणां नगरं दारयति पुरन्दरः। उक्तमन्यत् ॥ ३ ॥

आर्षी त्रिष्टुप्। बर्हिषि प्रयाजदेवतायां स्थितमिन्द्रं होता यजतु कीदृशमिन्द्रं निषद्वरं निषीदन्ति निषद उपवेष्टारः तेषां वरं श्रेष्ठम् वृषभं वर्षितारम् नर्यापसं नरेभ्यो यजमानेभ्यो हितं नर्यमपः कर्म यस्य स नर्यापाः तम् नराणां हितकारिणम्। स इन्द्रो वसुभिः रुद्रैः आदित्यैः सवनत्रयदेवैः सहितः बर्हिरासदत् आसीदतु आज्यस्य वेतु च। कीदृशैर्वस्वादिभिः सयुग्भिः सह युञ्जन्ति ते सयुजः तैः समानयोगैः ॥ ४ ॥

वायोधसयोराद्यन्तपशौ: प्रयाजानुयाजप्रैषरूप: ततश्च प्रजापत्यश्विसरस्वत्योऽध्यायस्य ऋषय: । आद्येऽनुवाके एकादशैन्द्रपशो: सम्बधिन आप्रीदेवता: समित्तनूनपादित्यादिदेवताका: प्रयाजानां प्रैषा: होता यक्षत्समिधेन्द्रमित्यादयो होता यक्षदिन्द्रमित्यन्ता: । अथ मन्त्रार्थ: । आर्षी त्रिष्टुप् । दैव्यो होता समिधा समित्काष्ठेन हविर्भूतेन समिधाप्रीदेवतया सहितं वा इन्द्रं यक्षत् यजतु । य इन्द्रः त्रिषु स्थानेषु समिध्यते दीप्यते प्रथमम् इडः पृथिव्या: पदे यजनीये प्रदेशे अग्न्यात्मना समिध्यते । द्वितीयम् पृथिव्या: नाभौ पृथिवीशब्देनान्तरिक्षम् अन्तरिक्षस्य मध्ये विद्युदात्मना समिध्यते अधि उपरि । तृतीयम् दिवो वर्ष्मन् स्वर्गस्य वर्ष्मणि वर्षिष्ठे प्रदेशे आदित्यात्मना समिध्यते ।

होतायक्षत्तनूनपातमूतिभिर्ज्जेतारमपराजितम् । इन्द्रन्देवꣳस्वर्विदम्पथिभिर्म्मधुमत्तमैर्नराशꣳसेनतेज

सावेत्वाज्यस्यहोतर्य्यज ॥ २ ॥

कीदृश:चर्षणिसहामोजिष्ठ: चर्षणयो मनुष्यास्तान्सहन्तेऽभिभवन्ति चर्षणिसहो मनुष्याभिभावुकास्तेषां मध्ये ओजस्वितमः अत्यन्तमोजस्वी ओजिष्ठ: इष्ठनि परे विन्मतोर्लुगिति विनो लुकि टिलोपे ओजिष्ठ इति रूपम् । संहितायां चर्षणिशब्दस्य दीर्घः । एवंविध इन्द्र: आज्यस्य वेतु घृतं पिबतु । हे मनुष्यहोत: त्वमपि यज ॥ १ ॥

अतिजगती । नराशंसेन देवेन स्तुतं तनूनपातमिन्द्रं च देवं होता यजतु कै: पथिभिः पतन्ति गच्छन्ति स्वर्गं यजमाना यैस्ते पन्थानो हवींषि तै: । कीदृशै: ऊतिभि: अवन्ति तर्पयन्ति ते ऊतयस्तै: ऊतियूतीत्यादिना कर्तरि निपातः तथा मधुमत्तमै: मधुर्मधुर॰

प्रातःकालादयः कालविशेषाः सङ्गवमध्याह्नादयः अहोरात्राः दिवसंनिशाः अर्धमासाः पक्षाः मासाश्चैत्रादयः ऋतवो वसन्तादयः कल्पन्तामवयवत्वेन क्लृप्ता भवन्तु। संवत्सरस्य उपलक्षणम् संवत्सरादयः पञ्चापि कल्पन्ताम्। क्रियावृत्तिरादरार्था। किञ्च प्रेत्यै प्रगमनाय एत्यै आगमनाय च समञ्च सङ्कुच प्रसारय च स्वेच्छया सङ्कोचविकासौ कुर्विति भावः। किञ्च सुपर्णाकारेण चितत्वात्सुपर्ण-

कल्पन्ताम्मासास्तेकल्पन्तामृतवस्तेकल्पन्ताᳪसंवत्सरस्तेकल्पताम्। प्रेत्याएत्यैसञ्चाञ्चप्रचसारय।

सुपर्णचिदसितयादेवतयाङ्गिरस्वद्ध्रुवः सीद ॥ ४५ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां सप्तविंशोऽध्यायः ॥ २७ ॥

होतायक्षत्समिधेन्द्रमिडस्पदेनाभापृथिव्याअधि। दिवोवर्ष्मन्त्समिध्यतओजिष्ठश्चर्षणीसहांवेत्वाज्यस्यहोतर्यज॥१॥

चिदसि। तया देवतया वाचा सहितः सन् अङ्गिरस्वत् अङ्गिरसइव प्राणइव ध्रुवः स्थिरः सीद तिष्ठ ॥ ४५ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे। सप्तविंशोऽयमध्याय आग्निको विरतोऽधुना ॥ २७ ॥

श्रीगणेशाय नमः। इन्द्रमिडः सौत्रामणिकोऽध्याय इति कात्यायनोक्तेः अयमध्यायः सौत्रामणीसम्बन्धी सौत्रामण्यङ्गभूतयोरैन्द्र-

द्वितीयया यजुर्लक्षणया स्तुतः सन् पाहि। तिसृभिर्गीर्भिः ऋग्यजुःसामलक्षणाभिः स्तुतो नः पाहि। चतसृभिः ऋग्यजुःसामनिगदलक्षणाभिः स्तुतो नः पाहि गद्यपद्यकाव्यादिरूपा चतुर्थी गीः ॥ ४३ ॥

यजमानोऽध्वर्युं प्रार्थयते। हे अध्वर्यो ऊर्जोनपातमपां पौत्रमग्निं स त्वं हिन हिनु तर्पय हि गतौ वृद्धौ स्वादिः लोट् उलोपश्छान्दसः उर्क् शब्देनाप उच्यन्ते अद्भ्यो वृक्षा जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः। यतोऽयमग्निरस्मयुः अस्मानिच्छति अस्मयुः क्याच्छन्दसीति उप्रत्ययः अतो हव्यदातये हविषो दानाय दाशेम सङ्कल्पयामः दाशृ दाने अत्र सङ्कल्पार्थः। यतोऽयं वाजेष्वन्नेषु अविता रक्षिता

**ऊर्ज्जोनपातꣳसहिनायमस्मयुर्द्दाशेमहव्यदातये। भुवद्वाजेष्वविताभुवद्वृधउतत्रातातनूनाम् ॥ ४४ ॥**

**संवत्सरोसिपरिवत्सरोसीदावत्सरोसीद्वत्सरोसिवत्सरोसि। उषसस्तेकल्पन्तामहोरात्रास्तेकल्पन्तामर्द्धमासास्ते**

भुवत् भवति वृधे वृद्धे च भुवत् भवति उतापि च तनूनां शरीराणां त्राता रक्षिता भवति बहुवचनं भार्यादिशरीररक्षार्थमुपात्तम्। अग्निरन्नतनुरक्षिता वर्धयितास्मान् कामयतेऽतो हविर्दानाय तं सङ्कल्पयामः ॥ ४४ ॥

अग्निदेवत्यं यजुः अत्र यजुषि नवनवत्यक्षराणि एको व्यूहः ततः शताक्षराभिकृतिश्छन्दः। चित्याग्नेरभिमर्शने विनियोगः। पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिमिति ज्योतिःशास्त्रोक्तमिहोच्यते। हे अग्ने त्वं संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि इद्वत्सरोऽसि वत्सरोऽसि निर्विशेषणः पञ्चसंवत्सरात्मकयुगरूपोऽसीत्यर्थः युगं भवेद्वत्सरपञ्चकेनेति ज्योतिःशास्त्रोक्तिः। तस्य ते तव उषसः

संहितायामभीत्यस्य दीर्घः। सुच इति सुशब्दस्य षत्वम्। नश्च धातुस्थोरुषुभ्य इति षुशब्दात् परस्य नः इत्यस्य णत्वम्॥ ४१॥

त्र्यचः प्रगाथः आग्नेयः शम्युदृष्टः यज्ञायज्ञियस्य साम्नो योनिः। यज्ञायज्ञियं पुच्छमिति श्रुतेः। द्वे बृहत्यौ तृतीया सतोबृहती। यज्ञायज्ञा वीप्सायां द्वित्वम् सुपस्येकवचनस्याकारः। व इति द्वितीयाबहुवचनमेकवचनार्थे यजमानविषयं वा। अग्नये चतुर्थ्येकवचनं द्वितीयैकवचनार्थे। गिरागिरा वीप्सायां द्वित्वम्। चः पादपूरणः। दक्षसे चतुर्थी द्वितीयार्थे। प्र प्र समपोदः पादपूरण इति द्वित्वम् तस्य च शंसिषमिति क्रियया सम्बन्धः। वयमिति प्रथमाबहुवचनमेकवचनार्थे। तथा चैवं योजना। यज्ञेयज्ञेऽनेकयज्ञेषु गिरा-

यज्ञायज्ञावोअग्नयेगिरागिराचदक्षसे। प्रप्रवयमम्रुतञ्जातवेदसम्प्रियम्मित्रन्नशꣳसिषम्॥ ४२॥

पाहिनोअग्नएकयापाह्युतद्वितीयया। पाहिगीर्भिस्तिसृभिरूर्जाम्पतेपाहिचतसृभिर्वसो॥ ४३॥

गिरान्ययान्यया स्तुत्या वः त्वाम् यद्वा वो युष्माकमर्थे अग्निं प्रशंसिषं स्तौमि शंस स्तुतौ लुङ् अडभाव आर्षः। कीदृशमग्निं दक्षसम् दक्षतेरुत्साहार्थस्य धातोरसुन् प्रत्ययः दक्षते उत्सहते दक्षाः तम् उत्साहिनम् यद्वा दक्ष इति बलनाम अन्तर्नीतमत्वर्थं द्रष्टव्यम् दक्षसं बलवन्तम्। अमृतममरणधर्माणम्। जातवेदसम् जातं वेदो ज्ञानं धनं वा यस्मात्तम्। प्रियं प्रीतिजनकम्। नशब्द उपरिष्टादुपचारादुपमार्थीयः मित्रं न मित्रमिव यथा कश्चित्प्रियं मित्रं स्तौति तद्वदग्निं स्तुमहइत्याशास्महे॥ ४२॥

भर्गदृष्टा। हे अग्ने हे ऊर्जां पते अन्नानां पालक हे वसो वासयितः यद्वा लुप्तमत्वर्थं द्रष्टव्यम् हे वसो वसुमन् धनवन् एकया गिरा इति पदस्यानुषङ्गः एकया गिरा ऋग्लक्षणया तृतीयानिर्देशात् स्तुतः सन्निति वाक्यशेषः नोऽस्मान् पाहि रक्ष। उत अपि च

भवति। तथा वृता वर्ततइति वृत् तया वृता वर्तमानया शचिष्ठया अतिशयेन शची शचिष्ठा तया अतिशयवत्या यागक्रिययास्माकं सखा भवति। शचीति कर्मनाम तत इष्ठन्प्रत्ययः। कीदृश इन्द्रः चित्रः विचित्रः पूज्यो वा। सदावृधः सदा वर्धतइति सदावृधः इगुपधेति कप्रत्ययः सदा वर्धमानः। ऊती तृतीयैकवचनस्य सुपां सुलुगिति पूर्वसवर्णः। आभुवत् इतश्च लोपः परस्मैपदेष्विति तिप इलोपः शपश्छान्दसं ङित्त्वं धातोरुवङादेशः ॥३९॥

हे इन्द्र अन्धसोऽन्नस्य सोमरूपस्य कः अंशः त्वा त्वां मत्सत् माद्यति मत्तं करोति मदी हर्षे लेटोऽडाटाविति आडागमः सिब्बहुलं

कस्त्वासत्योमदानाम्मंहिष्ठोमत्सदन्धसः। दृढाचिदारुजेवसु ॥४०॥

अभीषुणःसखीनामविताजरितॄणाम्। शतम्भवास्यूतये ॥४१॥

लेटीति सिप्प्रत्ययः तिप इलोपः। कीदृशः मदानां मंहिष्ठः मदयन्ति तानि मदानि पचाद्यच् मदजनकानि हवींषि तेषां मध्ये मंहिष्ठः श्रेष्ठः अत्यन्तमदजनकः मंहि कान्तौ चुरादिः मंहयति द्योतते मंही अत्यन्तं मंही मंहिष्ठः यद्वा महि वृद्धौ भ्वादिः मंहते वर्धते मंही अत्यन्तं मंही मंहिष्ठः। येनांशेन मत्तः सन् दृढा चित् दृढान्यपि वसु वसूनि धनानि कनकादीनि त्वमारुजे रुजो भङ्गे पुरुषपदव्यत्ययः आरुजसि चूर्णयसि दातुं भनक्षि भङ्क्त्वा भङ्क्त्वा ददासीत्यर्थः ॥ ४० ॥

हे इन्द्र त्वमूतयेऽवनाय पालनाय सु सुष्ठु सम्यक् अभि आभिमुख्येन शतं भवासि भवसि आडागमः शतशब्दो बहुवाची बहुरूपो भवसि पालनाय नानारूपाणि दधासीत्यर्थः। कीदृशस्त्वम् सखीनां मित्राणां जरितॄणां स्तोतॄणां नोऽस्माकमृत्विजामविता पालयिता।

हे इन्द्र कारवः कर्तारः यज्ञानाम् नरः ऋत्विजो वयं त्वामेव हवामहे आह्वयामः इत् एवार्थे हि निश्चये । किंनिमित्तम् वाजस्यान्नस्य सातौ लाभनिमित्तम् वृत्रेषु शत्रुषु शत्रुघातनिमित्तम् काष्ठासु दिक्षु दिग्विजयनिमित्तम् । कीदृशं त्वां सत्पतिं सतां पालयितारम् । श्रुतिस्मृत्युक्ताचाररता निषिद्धत्यागिनः सन्तः कथ्यन्ते । तथा अर्वतः अश्वप्राप्तिनिमित्तं च विभक्तिव्यत्ययः । त्वांशब्दावृत्तिरादरार्था ॥३७॥

हे चित्र आश्चर्यकारिन् हे वज्रहस्त वज्रं हस्ते यस्य हे अद्रिवः अद्रयोऽजेयत्वेन सन्तीत्यद्रिवान् तत्सम्बुद्धिः मतुवसोरिति रुत्वम् हे इन्द्र स त्वं नोऽस्मभ्यं गामश्वं च सङ्किर देहि सम्पूर्वः किरतिर्दानार्थः । कीदृशमश्वम् रथ्यं रथे साधुं रथवहनसमर्थम् ।

स त्वन्नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः । गामश्व७ रथ्यमिन्द्र सङ्किर सत्रा वाजन्न जिग्युषे ॥३८॥

कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥३९॥

कीदृशस्त्वम् धृष्णुया प्रागल्भ्येन महः महसा तेजसा च स्तवानः स्तूयमानः । धृषेः क्नुः ततो विभक्तेर्यादेशः धृष्णुना धृष्णुत्वेन भावप्रधानो निर्देशः । महः विभक्तिलोपः । स्तवान इत्यत्र विकरणव्यत्ययः । वाजमिव वाजं न वाजमिव न इवार्थे यथा जिग्युषे जितवतेऽश्वाय हस्तिने वा यथा सत्रा त्राणं त्रा रक्षणम् तत्सहितं वाजमन्नं यवं यथा ददति तथास्मभ्यं देहि ॥३८॥

तिस्रो गायत्र्य इन्द्रदेवत्या वामदेवदृष्टाः वामदेव्यसाम्नो योनिः वामदेव्यमात्मन्निति श्रुतेः अन्त्या पादनिचृत् सप्ताक्षरत्रिपादा । पूर्वर्चः इन्द्रपदमनुषञ्जनीयम् । इन्द्रः कया ऊती ऊत्या अवनेन तर्पणेन प्रीणनेन वा नोऽस्माकं सखा सहायः आभुवत् आभिमुख्येन

बृहतीसतोबृहतीद्वय प्रगाथं वसिष्ठदृष्टमिन्द्रदेवत्यम्। रथन्तरं दक्षिणे पक्षे इति श्रुतेः। नान्योऽध्वर्योर्गाये दित्यध्वर्योगानं विहितम्। अतः साम्नां योनय ऋचः पठ्यन्ते तत्रैन्द्रः प्रगाथो रथन्तरस्य योनिः। हे शूर हे इन्द्र वयं त्वा त्वामभिनोनुमः आभिमुख्येनात्यन्तं स्तुमः नु स्तुतौ यङ्लुगन्तम्। तत्र दृष्टान्तः अदुग्धाः धेनवः इव यथा अदुग्धा गावो वत्सान् स्तुवन्ति। कीदृशं त्वाम् जगतो जङ्गमस्येशानं प्रभुम् स्वर्दृशं स्वः पश्यतीति स्वर्दृक् तम् यद्वा स्वः आदित्य इव दृश्यते स्वर्दृक् तस्थुषः स्थावरस्य ईशानम् विश्वनियन्तारमित्यर्थः ॥३५॥

नत्वावाँ२॥अन्योदिव्योनपार्थिवोनजातोनजनिष्यते। अश्वायन्तोमघवन्निन्द्रवाजिनोगव्यन्तस्त्वाहवामहे ॥३६॥

त्वामिद्धिहवामहेसातौवाजस्यकारवः। त्वांवृत्रेष्विन्द्रसत्पतिन्नरस्त्वाङ्काष्ठास्ववंतः ॥३७॥

हे मघवन् धनवन् हे इन्द्र दिवि भवो दिव्यः पार्थिवः पृथिवीभवश्च त्वावान् त्वत्सदृशोऽन्यो नास्तीति शेषः न च जातः न जनिष्यते उत्पत्स्यते। त्वत्सदृशोऽस्तीति त्वावान् सादृश्यार्थं वतुप्रत्ययः। अतो वयं त्वा त्वां हवामहे। कीदृशा वयम् अश्वायन्तः अश्वान् कामयमानाः अश्वाघस्यादिति क्यचि आत्वम् ततः शतृप्रत्ययः। वाजिनोऽन्नवन्तः हविर्युताः। गव्यन्तः गा इच्छन्ति गव्यन्तः गोकामाः। गवाश्वान्देहीत्यर्थः ॥३६॥

ऋग्द्वयमैन्द्रः प्रगाथः शम्युदृष्टः बृहत्साम्नो योनिः अध्वर्योर्गानस्योक्तेः आद्या बृहती द्वितीया सतोबृहती बृहदुत्तरे पक्षे इति श्रुतेः।

अग्रेगाः अग्रे गच्छत्यग्रेगाः विड्वनोरनुनासिकस्यादिति आकारः । यज्ञप्रीः यज्ञेन प्रीयते तुष्यति यज्ञप्रीः शिवः कल्याणकरः ॥२१॥

हे वायो ये ते तव सहस्रिणः सहस्रसङ्ख्याका रथासः रथाः तैभिस्तैः रथैः आगहि आगच्छ किमर्थं सोमपानाय । कीदृशस्त्वं नियुत्वान् अश्वायुक्तः नियुतो वायोरित्युक्तेः[1] ॥२२॥

[1]—निघ० १,१५,२ ।

त्रिष्टुप् अनयर्चा पात्राणि मुच्यन्ते । स्वा निजा भूतिः समृद्धिर्जगद्रूपा यस्य स स्वभूतिः हे स्वभूते हे वायो एकया दशभिः द्वाभ्यां

एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशती च । तिसृभिश्च वहसे त्रिꣳशता च नियुद्भिर्वायविह ता वि मुञ्च ॥३३॥

तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवाꣳस्या वृणीमहे ॥३४॥

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥३५॥

विंशती विंशत्या पूर्वसवर्णः तिसृभिः त्रिंशता च नियुद्भिः अश्वाभिः कृत्वा इष्टये यज्ञाय त्वं यानि पात्राणि वहसे ता तानि पात्राणि इह यज्ञे विमुञ्च । पञ्च चकाराः समुच्चयार्थाः ॥३३॥

गायत्री व्यश्वदृष्टा । हे वायो हे ऋतस्पते सत्यस्य पालक ऋतस्य पतिपरे सुडागमः । हे त्वष्टुर्जामातः आदित्यादप आदाय वायुर्गर्भयति ततो वृष्टिर्भवतीति वायुरादित्यस्य जामाता । हे अद्भुत आश्चर्यरूप तवावांसि अवानि वयमावृणीमहे प्रार्थयामः ॥३४॥

षडृचो वायुदेवत्याः वायव्येष्टकापशुपक्षे वपादीनां याज्यानुवाक्यात्वेन नियुक्ताः आद्या गायत्री गृत्समददृष्टा । हे वायो यतः सुन्वतो यजमानस्य गृहं प्रति त्वं गन्ता गमनशीलोऽसि तृन्नन्त आद्युदात्तत्वात् अतो नियुत्वानश्ववान् सन् आगहि आगच्छ शपो लुक् । अयं शुक्रो ग्रहः ते त्वां प्रति अयामि अयतु प्राप्नोतु लकारपुरुषव्यत्ययः । शुक्रादिग्रहाणां पात्रं त्वमेवेति भावः ॥२९॥

अनुष्टुप् पुरुमीढाजमीढदृष्टा हे वायो शुक्रो ग्रहः त्वामयामि आगच्छतु । कीदृशः शुक्रः दिविष्टिषु मध्वः अग्रं द्यौरिष्यते प्रार्थ्यते

वायोशुक्रोअयामितेमद्ध्वोअग्रन्दिविष्टिषु । आयाहिसोमपीतयेस्पार्हौदेवनियुत्त्वता ॥३०॥

वायुरग्रेगायज्ञप्रीःसाकङ्गन्मनसायज्ञम् । शिवोनियुद्भिःशिवाभिः ॥३१॥

वायोयेतेसहस्रिणोरथासस्तेभिरागहि । नियुत्त्वान्त्सोमपीतये ॥३२॥

याभिस्ता दिविष्टयो यज्ञाः ज्योतिष्टोमेन स्वर्गकामो यजेतेत्युक्ताः मध्व मधुनो रसस्याग्रं सारभूतः यज्ञरसेषु शुक्रो ग्रहः सारभूत इत्यर्थः । किञ्च हे देव वायो नियुत्वता अश्ववता रथेन आयाहि आगच्छ किमर्थं सोमपीतये सोमपानाय कीदृशस्त्वं स्पार्हः स्पृहायोग्यः यजमानादिभिः स्पृहणीयः ॥३०॥

हे गायत्री । वायुः शिवाभिः कल्याणरूपाभिः नियुद्भिरश्वाभिः कृत्वा मनसा साकं चित्तेन सह सादरं यज्ञं गन् गच्छतु । कीदृशः

इह वायुदेवत्या त्रिष्टुभो वसिष्ठदृष्टे। हे वायो त्वं याभिर्नियुद्भिरश्वाभिः कृत्वा इष्टये यागाय दुरोणे यज्ञगृहे वर्तमानं दाश्वांसं हविर्दत्तवन्तं यजमानमच्छ अभिमुखं प्रयासि गच्छसि निपातस्य चेति संहितायामच्छा इति दीर्घः व्यवहिताश्चेति प्रेण यासीत्यस्य व्यवधानं ताभिर्नियुद्भिरागत्य नोऽस्मभ्यं रयिं धनं नियुवस्व देहि नियौतिर्दानार्थः व्यत्ययेन शप्रत्ययः। कीदृशं रयिं सुभोजसं सुष्ठु भुज्यतइति सुभोजास्तम् भुजेरसुन्प्रत्ययः। किञ्च वीरं पुत्रं गव्यं गोसम्बन्धि अश्व्यमश्वसम्बन्धि गोऽश्वरूपं राधः धनं च नियुवस्व॥२७॥

प्रयाभिर्यासिदाश्वाᳲसमच्छानियुद्भिर्वायविष्टयेदुरोणे। निनोरयिᳲसुभोजसंयुवस्वनिवीरङ्गव्यमश्व्यञ्चराधः॥२७॥

आनोनियुद्भिःशतिनीभिरध्वरᳲसहस्रिणीभिरुपयाहियज्ञम्। वायोअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः॥२८॥

नियुत्वान्वायवागह्ययᳲशुक्रोअयामिते। गन्तासिसुन्वतोगृहम्॥२९॥

हे वायो नियुद्भिरश्वाभिः नोऽस्माकमध्वरं यज्ञमुपयाहि। कीदृशीभिः शतिनीभिः सहस्रिणीभिः शतं सहस्रं च सङ्ख्या यासां ताभिः वयं बहुवाहनतर्पणे शक्ता इति भावः। एत्य चास्मिन् सवने तृतीये मादयस्व तृप्यस्व। अथ पादेन ऋत्विज आह हे ऋत्विजः स्वस्तिभिः कल्याणैर्यूयं नोऽस्मान् पात रक्षत॥२८॥

दितः। धिषणेति ऋस्वमार्षम्। अध अथ उत्पत्त्यनन्तरमेव उत निश्चितं त्वा नियुतो निजाश्वा वायुं सश्चत सश्चन्ते सेवन्ते षच् सेवने पुरुषव्यत्ययः। क्व निरेके निर्गतः रेकः रेचनं रेकः शून्यता यस्मात् तादृशे बहुजनाकीर्णे स्थाने। कीदृशं वायुं श्वेतं श्वेतवर्णम्। तथा वसुधितिं वसुनो धनस्य धितिर्धारणं यत्र तम् धनस्य धारयितारम् ॥२४॥

द्वे प्रजापतिदेवत्ये त्रिष्टुभौ हिरण्यदृष्टे प्रथमा ह्यधिका। आपो ह वाइदमग्रे सलिलमेवासेति[१] ब्राह्मणमेतयोः कण्डिकयोर्निदानभूतं बोध्यम्। ह प्रसिद्धौ यत् यदा पुरा आपो जलानि विश्वमायन् प्रापुः। कीदृश्य आपः बृहतीः बृहत्यो महत्यः बहुलाः। तथा

आपो॒ह॒यद्बृ॑ह॒तीर्विश्व॒माय॒न्गर्भं॒न्दधा॑ना॒जन॒यन्ती॑र॒ग्निम्।ततो॑दे॒वाना॒ꣳसम॑वर्त्त॒तासु॒रेकः॒कस्मै॑दे॒वाय॑ह॒विषा॑विधेम

यश्चि॒दापो॑महि॒नाप॒र्य्यप॑श्य॒द्दक्ष॒न्दधा॑ना॒जन॒यन्ती॑र्य॒ज्ञम्।योदे॒वेष्वधि॑दे॒वएक॒आसी॒त्कस्मै॑दे॒वाय॑ह॒विषा॑विधेम ॥२६॥

गर्भं हिरण्यगर्भलक्षणं दधानाः धारयन्त्यः अत एवाग्निं जनयन्तीः अग्निरूपं हिरण्यगर्भं जनयन्त्यः उत्पादयिष्यन्त्यः। ततो गर्भात् संवत्सरोषितात् देवानामसुः प्राणरूप आत्मा लिङ्गशरीररूपो हिरण्यगर्भः समवर्तत उदपद्यत। कस्मै प्रजापतिरूपाय देवाय हिरण्यगर्भाय हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः विधतिर्दानार्थः ॥२५॥

[१] —११,१,६,१।

चिदप्यर्थः यो देवोऽन्तर्यामी महिम्ना आपः विभक्तिव्यत्ययः अपः पूर्वोक्ताः पर्यपश्यत् सर्वतो ददर्श। कीदृशीः दक्षं कुशलं प्रजापतिं दधानाः। यज्ञं जनयन्तीः यज्ञशब्देन यज्ञकर्ता प्रजा उच्यते सृष्टिकर्तारित्यर्थः। यश्च देवेष्वधि अधिकः एको मुख्यो देव आसीत्। तस्मै देवाय हविर्दद्मः ॥२६॥

हे अग्ने हे जातवेदः जातप्रज्ञान हव्यमिन्द्राय स्वाहा कृणुहि स्वाहाकारेण प्रयच्छ । किञ्च विश्वे देवा इदं हविर्जुषन्तां सेवन्ताम् ॥ २२ ॥

अथ तं वायवे नियुत्वते शुक्लं तूपरमालभते इति ऋतस्य पशोः पीवोऽअन्ना रयिवृध इत्याद्याः षट् याज्यानुवाक्याः । द्वे वायुदेवत्ये त्रिष्टुभौ वसिष्ठदृष्टे । शुक्लो हि वायुरिति श्रुतेः श्वेतो वायुः यान्नियुतोऽश्वान् सिषक्ति सेवते ते नियुतः समनसः सममनस्काः सन्तो वायवेऽर्थाय वितस्थुर्विशेषेण तिष्ठन्ति । कीदृशान्नियुतः पीवोअन्ना पीवः पुष्टमन्नं येषां तान् नकारलोपः प्रकृत्यान्तःपादमिति पीवो

पीवो॑अन्ना रयि॒वृधः॑ सुमे॒धाः श्वे॒तः सि॑षक्ति नि॒युता॑मभि॒श्रीः । ते वा॒यवे॒ सम॑नसो॒ वि त॑स्थु॒र्विश्वे॒न्नरः॑ स्वप॒त्यानि॑ चक्रुः ॥ २३ ॥

रा॒ये नु यं ज॒ज्ञतू॒ रोद॑सी॒मे रा॒ये दे॒वी धि॒षणा॑ धाति दे॒वम् । अध॑ वा॒युं नि॒युतः॑ सश्चत॒ स्वा उ॒त श्वे॒तं वसु॑धितिं निरे॒के ॥ २४ ॥

ऽअन्नानित्यत्र सन्ध्यभावः । तथा रयिवृधः रयिं धनं वर्धयन्ति तान् । कीदृशः श्वेतः सुमेधा शोभना मेधा बुद्धिर्यस्य । नियुतामभिश्रीः अश्वानामाश्रयणीयः । एवमश्वयोगी वायुना कृते नरो मनुष्या ऋत्विजः विश्वा इत् विश्वानि सर्वाण्येव स्वपत्यानि शोभनापत्यप्रापकानि चक्रुः कर्माणीति शेषः ॥ २३ ॥

इमे रोदसी द्यावापृथिव्यौ यं वायुं जज्ञतुः उत्पादयामासतुः नु क्षिप्रम् किमर्थम् राये धनायोदकरूपाय । धियं सनोति ददाति धिषणा वाक् देवी देवं वायुं धाति धारयति शपो लुक् राये धनाय । रोदस्योः सद्भावेऽपि वायुं विना जगद्धारणाभावात्कृत्वा-

तिस्रो देव्यः इदं बर्हिरासदन्तु आसीदन्तु छान्दसः सीदादेशाभावः व्यवहिताश्चेति आङा सह क्रियापदव्यवधानम्। कास्ता अत आह इडा पृथिवीस्थाना सरस्वती मध्यस्थाना भारती द्युस्थाना। मही महती दधानास्तुवन्तीति विशेषणद्वयं तिसृणाम् ॥१९॥

त्वष्टा देवः तं प्रसिद्धं रायो धनस्य पोषं पुष्टिमस्मे अस्माकं नाभिं प्रति विष्यतु विमुञ्चतु नाभौ मुक्तमुक्तं पततीति भावः षोऽन्तकर्मणि श्यतः स्यतीति ओकारलोपः स्यतिरुपसृष्टो विमोचने इति यास्कः। कीदृशं रायः पोषम् नोऽस्माकं तुरीपम् तुरा वेगेन

तन्नस्तुरीपमद्भुतम्पुरुक्षुत्वष्टासुवीर्यम्। रायस्पोषंविष्यतुनाभिमस्मे ॥ २० ॥

वनस्पतेवसृजाररराणस्त्मनादेवेषु। अग्निर्हव्यꣳशमितासूदयाति ॥ २१ ॥

अग्नेस्वाहाकृणुहिजातवेदइन्द्रायहव्यम्। विश्वेदेवाहविरिदञ्जुषन्ताम् ॥ २२ ॥

आप्नोति तुरीपं शीघ्रप्रापकम्। अद्भुतं महान्तम्। पुरुक्षु पुरुषु बहुषु क्षियति निवसति पुरुक्षु सुपां सुलुगिति अमो लुक् क्षियतेरौणादिको डुप्रत्ययः। सुवीर्यं साधु वीर्यं सामर्थ्यं येन तम्। ईदृशं धनं देहीत्यर्थः ॥ २० ॥

अग्निः शमिता हव्यं सूदयाति सूदयति संस्करोति यतः अतो हे वनस्पते त्वं संस्कृतं हव्यमवसृज सुज सृज ततोऽवाचीनं क्षिप। कीदृशस्त्वम् त्मना आत्मना देवेषु रराणः हविर्ददानः रा दाने कानच्। मन्त्रेष्वाङ्यादेरात्मन इति आलोपः ॥ २१ ॥

द्वारो देव्योऽस्याग्नेर्व्रता व्रतानि कर्माणि दद्रन्ते धारयन्ति दद दाने धृतौ च। अनु पश्चात् विश्वे सर्वे देवाः अग्निव्रतानि दद्रन्ते। कीदृश्यो द्वारः उरुव्यचसः उरु विशालं व्यचोऽवकाशो यासां ताः विशालान्तराः। तथा धाम्ना स्थानेन पत्यमानाः पत ऐश्वर्ये दिवादिरात्मनेपदी पत्यन्ते ईशते वा: पत्यमानाः स्थानैरैश्वर्यं कुर्वाणाः ऋत्विजां स्थानानि ददाना इत्यर्थः ताः स्तुमः ॥ १६ ॥

उषाश्च नक्ता रात्रिश्च उषासानक्ता उषस उषासादेशो द्वन्द्वे ति प्रसिद्धे उषासानक्ता अहोरात्रिदेव्यौ नोऽस्माकमिमं यज्ञमवतां रक्षताम्।

तेअस्ययोषणेदिव्येनयोनाउषासानक्ता। इमंयज्ञमवतामध्वरन्नः॥ १७ ॥

दैव्याहोताराऊर्ध्वमध्वरन्नोअग्नेर्जिह्वामभिगृणीतम्। कृणुतन्नःस्विष्टिम्॥ १८ ॥

तिस्रोदेवीर्बर्हिरेदꣳसदन्त्विडासरस्वतीभारती। महीगृणाना॥ १९ ॥

ताम्। कीदृश्यौ ते अस्याग्नेः योषणे भार्ये। तथा दिव्ये दिवि भवे स्वर्गस्थे। कीदृशस्याग्नेः योनौ गार्हपत्यस्थाने स्थितस्येति शेषः नकारः पादपूरणः। कीदृशं यज्ञम् अध्वरम् ध्वृ कौटिल्ये न ध्वरतीत्यध्वरस्तम् अकुटिलम् शास्त्रोक्तमित्यर्थः॥ १७ ॥

अयं चाग्निरसौ च मध्यमो वायुः हे दैव्या होतारौ अग्निवायू युवां नोऽस्माकं स्विष्टिं शोभनं यजनं कृणुतं कुरुतम् किञ्च नोऽस्माकमध्वरं यज्ञमूर्ध्वं कृणुतं देवमार्गगामिनं कुरुतम्। अग्नेर्जिह्वां ज्वालामभिगृणीतं वर्णयतम् समीचीना वह्निज्वालेति स्तुतमित्यर्थः ॥१८॥

तर्पयन् । नराशंसः नरैर्ऋत्विग्भिराशंस्यते स्तूयते नराशंसः । सुकृत् शोभनकारी । देवः दीप्तिमान् । सविता विश्वस्योत्पादकः । विश्वेन व्रियते सेव्यते विश्ववारः विश्वं वृणोति अङ्गीकरोतीति वा कर्मण्यण् सर्वस्य वरणीयः सर्वाङ्गीकर्ता वा ॥ १३ ॥

अयमध्वर्युः अध्वरेषु प्रयत्सु वर्तमानेषु सत्सु अग्निमच्छ एति अभ्येति अच्छाभेराप्तुमिति[1] शाकपूणिः । कीदृशः शवसा ज्ञानबलेन ईडानः ईड स्तुतौ शानच् तथा वह्निः वहति यज्ञभारमिति वह्निः यज्ञनिर्वाहकः । किं कृत्वा घृतेन नमसा अन्नेन हविर्लक्षणेनोपलक्षिताः स्रुचो जुह्वाद्या गृहीत्वेति शेषः ॥ १४ ॥

१—निरु० ५,२८ ।

**अच्छायमेति शवसा घृतेना ईडानो वह्निर्नमसा । अग्निं स्रुचो अध्वरेषु प्रयत्सु ॥ १४ ॥**

**स यक्षदस्य महिमानमग्नेः स ईं मन्द्रा सुप्रयसः । वसुश्चेतिष्ठो वसुधातमश्च ॥ १५ ॥**

**द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः । उरुव्यचसो धाम्ना पत्यमानाः ॥ १६ ॥**

सोऽध्वर्युरस्याग्नेः महिमानं यक्षत् यजतु सिब्बहुलं लेटि लेटोऽडाटौ इतश्च लोपः परस्मैपदेष्विति सूत्रैर्यक्षदिति रूपम् । सः ईम् स च मन्द्रा मन्द्राणि मदजनकानि हवींषि च यजतु ददातु । कीदृशस्याग्नेः सुप्रयसः प्रयस् इत्यन्ननाम[2] शोभनानि प्रयांसि यस्य सुप्रयास्तस्य । कीदृशस्याग्नेर्महिमानं यजतु यो वसुः वासयिता । चेतिष्ठः अतिचेतयिता वसुधातमः वसूनां धनानां दातृतमः तिबन्तात्तमप् ॥ १५ ॥

२—निघ० २,०,५ ।

द्वादशाप्रीदेवत्या उष्णिहो विषमपादा आग्नेय्योऽग्निना दृष्टाः। अग्निः प्रजापतित्वेन स्तूयते तेन प्राजापत्या अपि। ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिमप्रीणात्तेन प्राजापत्या इति श्रुतेः। अस्याग्नेः समिधः ऊर्ध्वाः देवगामिन्यो भवन्ति शोचींषि तेजांस्यपि ऊर्ध्वा ऊर्ध्वानि भवन्ति। कीदृशानि शोचींषि शुक्रा शुक्राणि शुद्धा शुद्धानि। द्युमत्तमा द्यौः दीप्तिः प्रकाशो येषां तानि द्युमन्ति अयन्तं द्युमन्ति द्युमत्तमानि विश्वप्रकाशकानि। कीदृशस्याग्नेः सुप्रतीकस्य सुष्ठु प्रतीकं मुखं यस्य। तथा सूनोः यजमानपुत्रस्य स यदेनं जनयति तेनास्यैष सूनुरिति श्रुतेः। य ईदृशस्तं स्तुम इति शेषः॥ ११॥

तनूनपादसुरोविश्ववेदादेवोदेवेषुदेवः। पथोअनक्तुमध्वाघृतेन॥ १२॥

मध्वायज्ञन्नक्षसेप्रीणानोनराशꣳसोअग्ने। सुकृद्देवःसविताविश्ववारः॥ १३॥

देवोऽग्निः मध्वा मधुना मधुरेण घृतेन पथो यज्ञमार्गाननक्तु। मध्वेति नुमभावः अनित्यमागमशासनमित्युक्तेः। पथोऽनक्तु इत्यत्र प्रकृत्यान्तःपादमव्यपरइति सन्ध्यभावः। यज्ञे बहु घृतमस्तु येन मार्गा घृताभ्यक्ताः स्युरितिभावः। कीदृशो देवः तनूनपात् तनूनामपां नपात् पौत्रः अद्भ्यो वृक्षा जायन्ते तेभ्योऽग्निरिति अपां पौत्रः। असुरः असवोऽस्य सन्ति प्राणवान् रो मत्वर्थः। विश्ववेदाः सर्वधनः। देवेषु अपि देवः दीप्तिमान् श्रेष्ठः॥ १२॥

हे अग्ने त्वं मध्वा स्वादुना घृतेन यज्ञं नक्षसे व्याप्नुषि नक्षतिर्व्याप्तिकर्मा। कीदृशस्त्वम् प्रीणानः प्रीणाति प्रीणानः देवान्

हे बृहस्पते हे सवितः एनं यजमानं बोधय कर्माभिज्ञं कुरु। किञ्च चिदप्यर्थे संशितं चित् संशितं शिक्षितमपि सन्तरामतितरां संशिशाधि शिक्षय शासेः शपः श्लौ द्वित्वम् छान्दसमभ्यासस्येत्वम्। किञ्च महते सौभगाय ऐश्वर्याय एनं वर्धय। विश्वे देवाः एनं यजमानमनुमदन्तु तृप्ता हृष्टा वा भवन्तु। बृहस्पतिसवितृशब्दाभ्यां सामिधेन्यङ्गभूतोऽग्निरेवोच्यते वाक्यद्वयं वा एकेन बृहस्पतिरुक्तोऽन्येन सविता ॥ ८ ॥

अमुत्रभूयादधयद्यमस्यबृहस्पतेअभिशस्तेरमुञ्चः। प्रत्यौहतामश्विनामृत्युमस्माद्देवानामग्नेभिषजाशचीभिः ॥९॥

उद्वयन्तमसस्परिस्वःपश्यन्तउत्तरम्। देवन्देवत्रासूर्यमगन्मज्योतिरुत्तमम् ॥ १० ॥

ऊर्ध्वाअस्यसमिधोभवन्त्यूर्ध्वाशुक्राशोचींष्यग्नेः। द्युमत्तमासुप्रतीकस्यसूनोः ॥ ११ ॥

हे बृहस्पते त्वममुत्रभूयादमुञ्चः अमुत्र परलोके भवनममुत्रभूयम् भुवो भाव इति क्यप् परलोकगमनान्मरणात् मुञ्च मारणाद्रक्षेत्यर्थः लकारव्यत्ययः। अध अथ यत् यमस्य भयं परलोकभयं नरकपातादि तस्मादपि मुञ्च। किञ्च अभिशस्तेः अभिशापादपि लोकापवादादपि मुञ्च। देवानां भिषजा भिषजौ अश्विना अश्विनौ अस्मात् यजमानान्मृत्युं प्रत्यौहतां निवर्तयतां कैः शचीभिः कर्मभिः कृत्वा। अत्र बृहस्पतिरग्निरेव सामिधेनीप्रकरणस्याग्नेयत्वात् ॥ ९ ॥

हे अग्ने हि निश्चितं विश्वा विश्वानि सर्वाणि दुरिता दुरितानि पापानि त्वं सहस्व अभिभव निवर्तयेत्यर्थः। किं कृत्वा निहः निहन्ति निहः निपूर्वाद्धन्तेर्डप्रत्ययः सुपां सुलुगिति शसः सु-आदेशः निहान् हन्तॄन् अतिक्रम्य। स्रेधतिः कुत्सितकर्मा स्रेधन्ति स्रिधः क्विप् कुत्सिताचारान् अतिक्रम्य। अचित्तिमन्यमनस्कतामतिक्रम्य। न रातिर्दानं यस्य सोऽरातिस्तमदातारमतिक्रम्य। दुष्टान्सर्वानतिक्रम्य पापं नाशयेत्यर्थः। किञ्च अथानन्तरं हे अग्ने अस्मभ्यं सहवीरां वीरैः पुत्रैः सहितां रयिं दाः देहि लुङ् ॥ ६ ॥

अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह। विश्वा आशाः प्रमुञ्चन्मानुषीर्भियः

शिवेभिरद्य परि पाहि नो वृधे ॥ ७ ॥

बृहस्पते सवितर्बोधयैनꣳ सꣳशितं चित्सन्तराꣳ सꣳशिशाधि। वर्धयैनं महते सौभगाय विश्व एनमनु मदन्तु देवाः ॥ ८ ॥

हे अग्ने इह कर्मणि वर्तमानस्त्वं विश्वा आशाः दीदिहि सर्वाः दिशः प्रकाशय। कीदृशस्त्वम् अनाधृष्यः पराभवितुमशक्यः। जातवेदाः जातं वेदो धनं ज्ञानं वा यस्मात्। अनिष्टृतः न हिंसित केनापि स्तृ हिंसायां क्तान्तः। विराट् विविधं राजमानः क्षत्रभृत् क्षत्रं बिभर्ति पुष्णाति। किञ्च मानुषीः मनुष्यसम्बन्धिनीर्भियः जन्मजरामृतिदैन्यशोकादिकाः प्रमुञ्चन्निवर्तयन्सन् शिवेभिः शिवैः शान्तैरूतिभिरद्य वृधे वृद्ध्यै नोऽस्मान्परिपाहि। वर्धनं वृत् तस्मै वृधे सम्पदादित्वाद्भावे क्विप् ॥ ७ ॥

निकारिणः नितरां यज्ञकरणशीलाः त्वा त्वां मा निक्रन् मा नीचैः कुर्वन्तु मावजानन्त्वित्यर्थः करोतेः अपि लुङि लङि प्रथमबहुवचने रूपम्। किञ्च हे अग्ने क्षत्रं क्षत्रजातिः तुभ्यं तव सुयममस्तु सुखेन यन्तुं शक्यं सुयमं सुखेन वशीकर्तुं शक्यमस्तु ईषद्दुःसुष्विति सुपूर्वाद्यमेः खल्। किञ्च ते तव उपसत्ता उपसदनकर्ता यष्टा अनिष्टृतः अनुपहिंसितः सन्वर्धताम् धनपुत्रादिभिरेधताम् स्तृञ् हिंसायां निष्ठान्तः ॥ ४ ॥

हे अग्ने त्वं क्षत्रेण संरभस्व समारभस्व लान्तो बोध्यः क्षत्रेण समारभ्य यज्ञमिति शेषः क्षत्रियान्यज्ञं कारयेत्यर्थः। कीदृशस्त्वं

क्षत्रेणाग्ने स्वायुः सꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व। सजातानाम्मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह ५

अति निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने। विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीराꣳ रयिं दाः ॥ ६ ॥

स्वायुः शोभनमायुः जीवनं यस्य सः यद्वा आयुः उकारान्तो मनुष्यवाची शोभन आयुर्मनुष्यो यजमानो यस्य स स्वायुः। किञ्च हे अग्ने मित्रेण सूर्येण सह वर्तमानः सन् मित्रधेये यतस्व धातुं धारयितुं योग्यं धेयं कार्यं यागलक्षणं तत्र यत्नं कुरु यजमानेन यज्ञं कारय। किञ्च सजातानां समानजन्मनां मध्यमेष्ठाः मध्यमे तिष्ठतीति क्विप् मध्यमस्थ एधि भव सजाता अपि यज्वानो भवन्त्वित्यर्थः। किञ्च हे अग्ने इह यज्ञगृहे दीदिहि दीप्यस्व दीव्यतेर्व्यत्ययेन शपः श्लुः श्लाविति द्वित्वम् तुजादीनां दीर्घ इति अभ्यासदीर्घः। कीदृशस्त्वम् राज्ञां विहव्यः कर्तरि षष्ठी राजभिर्विविधं हूयते आहूयते विहव्यः राजभिर्यज्ञे आह्वातव्यः ॥ ५ ॥

व्यवहिताश्चेति पाणिन्युक्तेः उपसर्गक्रिययोर्व्यवधानम्। हे अग्ने समिध्यस्व च दीप्यस्व व्यत्ययेन श्यन् एनं यजमानं प्रबोधय च ज्ञातार्थं कुरु अग्निश्चेतव्य इति। महते सौभगाय ऐश्वर्याय उत्तिष्ठ च ऐश्वर्यं दातुमुद्यमं कुर्वित्यर्थः। किञ्च हे अग्ने ते तव उपसीदतीत्युपसत्ता तृच् सेवको मा रिषत् च मा नश्यतु च यजमानो अग्निमुपसीदति। ते तव ब्रह्माणः ब्राह्मणा ऋत्विग्यजमानाः यशसः यशस्विनः सन्तु मत्वर्थीयप्रत्ययलोपः। मा अन्ये अन्ये अयज्वानो मा यशसः सन्तु ॥ २ ॥

समिध्यस्वाग्नेप्रबोधयैनमुत्तिष्ठमहतेसौभगाय। माचरिषदुपसत्तातेअग्नेब्रह्माणस्तेयशसःसन्तुमान्ये ॥ २ ॥

त्वामग्नेवृणतेब्राह्मणाइमेशिवोअग्नेसंवरणेभवानः। सपत्नहानोअभिमातिजिच्चस्वेगयेजागृह्यप्रयुच्छन् ॥ ३ ॥

इहैवाग्नेअधिधारयारयिम्मात्वानिक्रन्पूर्वचितोनिकारिणः। क्षत्रमग्नेसुयममस्तुतुभ्यमुपसत्तावर्धतान्तेअनिष्टृतः ॥ ४

हे अग्ने इमे ब्राह्मणाः ऋत्विजः त्वा त्वां वृणते वृङ् सम्भक्तौ यागाय भजन्ति अतो हे अग्ने संवरणे ब्राह्मणैः सहैकस्मिन्वरणे सति नोऽस्माकं शिवः शान्तो भव। अस्माकं सपत्नहा अभिमातिजिच्च भव अभिमातिरपि शत्रुः तत एवं व्याख्या सपत्नानां हन्ता भव हृतावशिष्टानां जेता च भव। किञ्च स्वे गये निजे गृहे जागृहि सावधानो भव किङ्कुर्वन् अप्रयुच्छन् अप्रमाद्यन्॥ ३॥

हे अग्ने इहैवास्मास्वेव यजमानेषु रयिं धनं त्वमधिधारय अधिकं देहि। किञ्च पूर्वं चिन्वन्ति पूर्वचितः पूर्वमग्निं चितवन्तोऽत एव

सोमः द्रोणे विभक्तिव्यत्ययः द्रोणं द्रुणकलशलक्षणं योनिं स्थानमभि आसदत् आभिमुख्येन सीदति तिष्ठति। कीदृशः सोमः रक्षोहा रक्षांसि हन्तीति रक्षोहा दुष्टनाशकः। विश्वचर्षणिः विश्वं सर्वं जगत् चष्टे पश्यति विश्वचर्षणिः सर्वस्य शुभाशुभद्रष्टा यद्वा चर्षणिरिति मनुष्यनामसु पठितम् विश्वे सर्वे चर्षणयो मनुष्या ऋत्विग्यजमानलक्षणा यस्य कण्डनाहरणादिषु सः। तथा कीदृशं द्रोणम् अयः सुपां सुलुगिति तृतीयैकवचनलोपः अयसा लोहेन हतमुत्कीर्णम् वास्या कृत्वा तक्ष्णा सोमभाजनीकृतम् हतमिति विभक्तिव्यत्ययः। तथा सधस्थं सह सार्धं तिष्ठन्ति सोमा यत्र स सहस्थः सुपि स्थ इति कप्रत्ययः। आतो लोप इति आलोपः सधमादस्थयोश्छन्दसीति सहस्य सधादेशः। असदत पुषादीति लुङि च्लेरङ् छन्दसि लुङ्लङ्लिट इति लडर्थे लुङ्॥ २९॥

श्रीमन्महीधरकृते वेददीपे मनोहरे। अनुक्तमन्त्रकथनः षड्विंशोऽध्याय ईरितः॥ २६॥

समास्त्वाग्नऋतवोवर्धयन्तुसंवत्सराऋषयोयानिसत्या। सन्दिव्येनदीदिहिरोचनेनविश्वाआभाहिप्रदिशश्चतस्रः॥१

अयमध्यायः पञ्चवितिकस्याग्नेः सम्बन्धी प्रजापतिदृष्टः। नव ऋचोऽग्निदेवत्यास्त्रिष्टुभोऽग्निना दृष्टाः इष्टकापशौ समिध्यमानसमिद्धयोरन्तराले आसां विनियोगः। अग्निर्ऋषिः कर्माङ्गभूतमग्निं स्तौति। हे अग्ने एते त्वा त्वां वर्धयन्तु। के। समा मासाः संवत्सरस्य पृथगुक्तेः समाशब्दो मासवाचकः। ऋतवो वसन्ताद्याः संवत्सराः तदधिष्ठातारः ऋषयो मन्त्रद्रष्टारः यानि सत्या सत्यानि सत्यरूपा मन्त्रा इत्यर्थः। त्वमप्येतैर्वर्धमानो दिव्येन दिवि भवेन रोचनेन दीप्त्या सन्दीदिहि सन्दीप्यस्व दिवेः श्लौ लुकि रूपम् तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः। किञ्च विश्वाः सर्वाः प्रदिशो विदिशः चतस्रो दिशश्च आभाहि दीपय अन्तर्भूतो ण्यर्थः भा दीप्तौ॥ १॥

तान तनेति सर्वत्र तनविध्यादेश: । कीदृशो यूयं सुहवा: शोभन: सुकरो हव आह्वानं यासां ता: । एवं देवपत्नीरुक्त्वाथ त्वष्टारमाह हे त्वष्टः त्वमथानन्तरं देवपत्नीष्वागतासु मदस्व मोदस्व तृप्यस्वेत्यर्थः । कीदृशस्त्वम् अन्धसः अन्धः हविर्लक्षणमन्नं जुजुषाणः सेवमानः जुषी प्रीतिसेवनयोः व्यत्ययेन शानचि शपः श्लुः । अन्धसः इति कर्मणि षष्ठी । देवेभिः देवैः जनिभिः देवपत्नीभिश्च सुमद्गणः सह माद्यन्ति हृष्यन्ति सुमदः मदेः क्विप् सुमदः सन्तु गणा देवाः स्तोगणाश्च यस्य स सुमद्गणः । जनयन्ति जनयो नार्यः ॥ २४॥

स्वादिष्ठयामदिष्ठयापवस्वसोमधारया । इन्द्रायपातवेसुतः ॥ २५ ॥

रक्षोहाविश्वचर्षणिरभियोनिमयोहते । द्रोणेसधस्थमासदत् ॥ २६ ॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां षड्विंशोऽध्यायः ॥ २६ ॥

सोमदैवत्ये द्वे गायत्र्यौ मधुच्छन्दोदृष्टे जपादिषु नियुक्ते । हे सोम धारया कृत्वा पवस्व गच्छ दशापवित्राद्द्रोणकलशं प्रति गच्छ । कीदृश्या धारया स्वादिष्ठया स्वादो विद्यते यस्यां सा स्वादवती अत्यन्तं स्वादवती स्वादिष्ठा तया विन्मतोर्लुगिति इष्ठनि मतुपो लुक् स्वादुतमया । मदिष्ठया मदयति मदयित्री अत्यन्तं मदयित्री मदिष्ठा तया इष्ठनि तुरिष्ठेमेयःस्विति तृचो लोपः । यत इन्द्राय पातवे इन्द्रस्य पातुं त्वं सुतोऽभिषुतोऽसि अस्माभिरतो धारया पवस्व ॥ २५ ॥

पानेऽस्माद्दैवादिकात्क्तप्रत्ययः। अतो हे ऋत्विजः यूयं जुहोत जुहुत प्रतितिष्ठत च तमनविति तवादेशः कर्मसूद्युक्ता भवतेत्यर्थः। किञ्च नेष्टुरिदं नेष्ट्रम् वृद्ध्यभाव आर्षः नेष्टुर्धिष्ण्यात् ऋतुभिः देवैः सह इष्यत सोमं प्रतिगच्छत इष गतौ दिवादित्वात् श्यन् लोट्॥ २३॥

इन्द्रदेवत्या त्रिष्टुप् विश्वामित्रदृष्टा। माध्यन्दिने सवने नेष्टृचमसयागे याज्या। हे इन्द्र तव अयं सोमोऽस्ति अतः अर्वाङ् अस्मदभिमुखः त्वमेहि आगच्छ शश्वत्तमं सर्वकालमस्य पाहि कर्मणि षष्ठी इमं सोमं रक्ष पा रक्षणे लोट्। कीदृशः त्वं सुमनाः शोभनं

तवायं सोमस्त्वमेह्यर्वाङ् शश्वत्तमꣳ सुमना अस्य पाहि। अस्मिन्यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इन्दुमिन्द्र॥२३॥

अमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन। अथा मदस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः

मनो यस्य सः प्रसन्नचित्तः। किञ्च अस्मिन्यज्ञे बर्हिषि आस्तृतदर्भेषु निषद्य उपविश्य इममिन्दुं सोमं जठरे उदरे दधिष्व धारय धि धारणे तुदादिः व्यत्ययेन शपः श्लुस्तङ् च अभ्यासेकारस्याकार आर्षः॥ २३॥

त्वष्टृदेवत्या जगती गृत्समदहृष्टा। तृतीयसवने नेष्टृचमसयागे याज्या। देवपत्न्यः प्रार्थ्यन्ते। अमाशब्दो गृहवाचकः अमेव स्वगृहमिव नोऽस्माकं यज्ञगृहाणि हे देवपत्न्यो यूयमागन्तन आगच्छत गमेः शपो लुक् लोटि मध्यमबहुवचने। हि पादपूरणः बर्हिषि दर्भे निसदतन निषीदत उपविशत सद्‌ गतौ रणिष्टन रण शब्दे अस्य लङि रूपम् अडागमाभावः परस्परं वार्त्तां कुरुतेत्यर्थः;

अग्निर्देवत्या गायत्री मेधातिथिदृष्टा । इतः पञ्च ऋचोऽग्निष्टोमे नेष्टुर्याज्याः आद्या प्रातःसवने नेष्टृचमसयागे याज्या , अग्ने देवानां पत्नीः इह यज्ञे त्वमुपावह आगमय कीदृशीः पत्नीः उशतीः हविः कामयमानाः वशेः शत्रन्तात् उगित इति ङीप् । किञ्च सोमपीतये सोमपानाय त्वष्टारं देवं चोपावह ॥२०॥

द्वे ऋतुदेवते गायत्र्यौ मेधातिथिदृष्टे ऋतुयागे नेष्टुर्याज्ये । ग्नाः पत्न्योऽस्य सन्तीति ग्नावान् तदस्यास्तीति मतुप् । मादुपधाया

अग्ने पत्नीरिहावह देवानामुशतीरुप । त्वष्टारꣳ सोमपीतये ॥ २० ॥

अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना । त्वꣳ हि रत्नधा असि ॥ २१ ॥

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ २२ ॥

इति वत्वम् तस्य सम्बोधनं हे ग्नावः पत्नीवन् हे नेष्टः नोऽस्माकं यज्ञमभिगृणीहि स्तुहि गॄ शब्दे क्र्यादित्वात् श्ना ई हल्यघोरिति तस्येकारः प्वादीनां ह्रस्व इति धातोर्ह्रस्वः । किञ्च ऋतुना देवेन सह पिब सोममिति शेषः । हि यस्मात् त्वं रत्नधा असि रत्नानि दधाति ददाति रत्नधाः रमणीयधनानां दातासि ॥ २१ ॥

द्रविणस्शब्दः सान्तो धनवाची द्रविणो धनं ददाति द्रविणोदाः धनदाताग्निः पिपीषति पातुमिच्छति सोममिति शेषः पीङ्

हे सोम स त्वं नोऽस्माकं परिस्रव चर रसवो भूयादिति त्वमिहोऽर्थः किमर्थमिन्द्राय वरुणाय मरुद्भ्य इन्द्रादीनां तृप्तये परिस्रवेत्यर्थः। कीदृशायेन्द्राय यज्यवे यष्टुं योग्यो यज्युस्तस्मै यष्टव्याय इदं त्रयाणां विशेषणम् यज्युभ्य इति मरुताम्। कीदृशस्त्वं वरिवोवित् वरिवो धनं वेत्ति जानाति विन्दति लभते वा वरिवोवित् धनस्य ज्ञाता प्रापकश्च ॥ १७ ॥

अर्थः ईश्वरः सोमः एना एनानि विश्वानि सर्वाणि मानुषाणां नराणां द्युम्नानि धनानि यशांसि वा आ नयत्विति शेषः अस्मभ्यं ददात्वित्यर्थः तानि सोमदत्तानि द्युम्नानि वयं वनामहे वन सम्भक्तावित्यस्यार्थः लट् सम्भजामहे। कीदृशा वयं सिषासन्तः षनु दाने

एनाविश्वान्यर्यआद्युम्नानिमानुषाणाम्। सिषासन्तोवनामहे ॥ १८ ॥

अनुवीरैरनुपुष्यास्मगोभिरन्वश्वैरनुसर्वेणपुष्टैः। अनुद्विपदानुचतुष्पदावयन्देवानोयज्ञमृतुथानयन्तु ॥ १९ ॥

सनितुं दातुमिच्छन्ति सिषासन्ति ते सिषासन्तः सनेर्धातोः सन्नन्ताच्छतृप्रत्ययः जनसनखनां सञ्झलोरिति आत्वम् सन्यत इति अभ्यासेकारः दानं कुर्वाणा धनभाजः स्वामीत्यर्थः ॥ १८ ॥

आशीरियं देवदेवत्या त्रिष्टुप् मुद्गलदृष्टा। वयं वीरैः पुत्रैः अनुपुष्यास्म पुष्टा भवेम पुषेराशीर्लिङि उत्तमबहुवचनम् गोभिर्धेनुभिः अनुपुष्यास्म उपसर्गावृत्त्या क्रियावृत्तिः अश्वैरनु पुष्यास्म सर्वेणान्येनापि कामेन पुष्यास्म पुष्टैः सर्वपदार्थैर्गृहादिभिः पुष्यास्म। द्वौ पादौ यस्येति द्विपात् तेन द्विपदा मनुष्येण दासादिना चतुष्पदा गजादिना च पुष्यास्म पादोऽन्यतरस्यामिति अन्तलोपः पादः पदिति पदादेशः। किञ्च ऋतुथा ऋतावृतौ काले-काले देवा नोऽस्माकं यज्ञं नयन्तु प्रापयन्तु प्राप्नुवन्तु ॥ १९ ॥

पान्तु । संवत्सरस्तदधिष्ठाता देवः ते तुभ्यं त्वदर्थं नोऽस्माकं यज्ञं दधातु पुष्णातु नोऽस्माकं प्रजां पुत्रादिकां च परिपातु रक्षतु संवत्सर एव ॥ १४ ॥

सोमदेवत्या गायत्री वत्सदृष्टा । गिरीणां पर्वतानामुपह्वरे निकटे नदीनां गङ्गादीनां च सङ्गमे विप्रो मेधावी सोमः अजायत उत्पन्नः जनेर्लङ् कया धिया बुद्ध्या विप्रादयो मया यज्ञं करिष्यन्तीति विचार्येत्यर्थः ॥ १५ ॥

सोमदेवत्यास्तिस्रो गायत्र्य आमहीयवदृष्टाः । हे सोम ते तव अन्धसोऽन्नाद्रसरूपात् जातमुत्पन्नं द्योमतो जातमपूर्वम् उच्चा उच्चं

उपह्वरेगिरीणाᳪसङ्गमेचनदीनाम् । धियाविप्रोअजायत ॥ १५ ॥

उच्चातेजातमन्धसोदिविसद्भूम्यादद‌े । उग्रᳪशर्ममहिश्रवः ॥ १६ ॥

सनइन्द्रायययज्यवेवरुणायमरुद्भ्यः । वरिवोवित्परिस्रव ॥ १७

गतं दिवि स्वर्गे सत् विद्यमानं भूमिः आददे गृह्णाति भूमिशब्दस्य विसर्गलोपे सन्धिश्छान्दसः । किन्तत् द्युलोकस्थं भूमिर्गृह्णाति तदाह । उग्रमुत्कृष्टं शर्म सुखं गृहपुत्रादिजन्यं महि महत् श्रवः कीर्तिर्धनं वा ॥ अनेन मन्त्रेण पञ्चाहुतिपरिणाम उक्तः । स यथा । हुताहुतिरादौ दिवि गच्छति ततोऽन्तरिक्षे जलरूपेण ततो भूमावन्नरूपेण ततो नरे रेतोरूपेण ततो योनौ नररूपेणागत्य तं नरं धनयशोभ्यां सुखिनं करोतीति भावः ॥ १६ ॥

अग्निदेवत्यानुष्टुब्वसूयुदृष्टा। हे उद्गातः अग्नये अग्न्यर्थं तत् बृहत्साम अर्च गाय बृहत्साम्नो गानं कुरु तत्किम् यत् वाहिष्ठम् वाहयति प्रापयति इष्टमिति वाहयितृ वहेर्ण्यन्तात्तृच् अत्यन्तं वाहयितृ वाहिष्ठम् अतिशायने तमबिष्ठनाविति अनुवृत्तौ तुश्छन्दसीति इष्ठनि परे तुरिष्ठेमेयःस्विति च तृचो लोपे वाहिष्ठमिति रूपम्। किञ्च सामगानेन प्रत्यक्षमग्निं ब्रुहि किम् हे विभावसो विभा कान्तिरेव वसु धनं यस्य स विभावसुः हे अग्ने रयिः धनं वाजा अन्नानि च त्वत् त्वत्तः सकाशात् उदीरते उद्गच्छन्ति ईर गतौ कम्पे च लट् शपो लुक् अदभ्यस्तात्। तत्र दृष्टान्तः महिषीव यथा महिषी प्रथमपरिणीता स्त्री गृहात् भोगार्थं पतिं प्रति उदीर्ते उद्गच्छति। एकं त्वत्पदं पादपूरणम् रयिः त्वदुदीर्ते इति वा॥ १२॥

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः। एभिर्वर्धास इन्दुभिः॥ १३॥

ऋतवस्ते यज्ञं वि तन्वन्तु मासा रक्षन्तु ते हविः। संवत्सरस्ते यज्ञं दधातु नः प्रजां च परि पातु नः॥ १४॥

अग्निदेवत्या गायत्री भरद्वाजदृष्टा हे अग्ने त्वमेहि आगच्छ उ पादपूरणः सुञि चेति संहितायामुकारस्य दीर्घः। इत्था इत्थमनेन प्रकारेण न इतराः अन्याः गिरो वाणीः स्तुतिलक्षणाः ते तव सु ब्रवाणि सुतरां वदानि ब्रूञो लोट् किञ्च एभिरिन्दुभिः सोमैः वर्धासे वर्धस्व लेटोऽडाटौ॥ १३॥

अग्निदेवत्या बृहती ९.८.११.८. वर्णपादा विषमपादा नवकाष्टकैकादशाष्टिनी विषमपादेति वचनात्। हे अग्ने ऋतवः ऋतूपलक्षिताः कालविशेषाः ते तव यज्ञं वितन्वन्तु विस्तारयन्तु। मासाः चैत्राद्यधिष्ठातारो देवास्ते तव हविः पुरोडाशादिकं रक्षन्तु

महेन्द्रदेवत्या गायत्री वसिष्ठकृता। पुरोरुक्। इन्द्रः शर्म सुखं यच्छतु ददातु योऽस्मान्द्वेष्टि तं च पाप्मानं पापिष्ठं हन्तु नाशयतु यद्वास्मद्द्वेष्टारं पाप्मानं च पापं ब्रह्महत्यादिकं हन्तु अस्त्री पङ्कं पुमान्पाप्मेत्यमरः। कीदृश इन्द्रः महान् श्रेष्ठः। वज्रहस्तः वज्रं हस्ते यस्य सः। षोडशी पञ्च प्राणा दशेन्द्रियाणि मनश्चेति षोडशपदार्था लिङ्गशरीररूपा यस्य स षोडशी आत्मरूपइत्यर्थः॥ उप० एष० उक्ता ॥ १० ॥

इन्द्रदेवत्या पथ्या बृहती नोधागौतमदृष्टा स्वाध्यायादिषु नियुक्ता। आदित्ययाज्ञवल्क्ययोरार्षमाध्यायात्। हे यजमानाः तमिन्द्रं

तंवोदस्ममृतीषहंवसोर्मन्दानमन्धसः। अभिवत्संनस्वसरेषुधेनवइन्द्रंगीर्भिर्नवामहे ॥ ११ ॥

यद्वाहिष्ठन्तदग्नयेबृहदर्चविभावसो। महिषीवत्वद्रयिस्त्वद्वाजाउदीरते ॥ १२ ॥

वयं गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः अभिनवामहे सम्यक् स्तुमहे नु स्तुतौ व्यत्ययेन शप्। किम्भूतमस्मिं वो युष्माकं दस्मं दर्शनीयम् दस दर्शने म-प्रत्ययः। ऋतीषहम् ऋ गतौ क्तिन् प्रत्ययः ऋत्या गत्या सहतेऽभिभवति शत्रूनिति ऋतिषट् तम् पूर्वपदाच्चेति षत्वम् संहितायां दीर्घः। वसोः वासयितुः स्थितिहेतुभूतस्यान्धसोऽन्नस्य षष्ठी तृतीयार्थे अन्नेन मन्दानं मोदमानम् मदिङ् स्वप्ने जाड्ये मोदे स्तुतौ गतावितिति धातोः शानच्प्रत्ययेन शपो लुक्। दृष्टान्तमाह वत्सं न नकार इवार्थः स्वसरेषु स्वेनैवात्मनैव सरन्ति प्रसरन्ति किरणा येषु ते स्वसरा दिवसाः तेषु यथा धेनवो नवप्रसूता गावो वत्सं नुवन्ति स्तुवन्ति शब्दैराह्वयन्तीत्यर्थः। तद्वदमिन्द्रं स्तुमः ॥ ११ ॥

गायत्री । नोऽस्माकमूतयेऽवनाय परावतः दूरदेशाद्वैश्वानरः आ प्रयातु आगच्छतु केन वाहसा वाहनभूतेन उक्थेन स्तोमेन वाहिष्ठो वाहनानां स्तोमो दूतो हुतं नरा इति श्रुत्यन्तरे स्तोमस्य वाहनत्वमुक्तम् । उप० एष० उक्तं ॥ ८ ॥

अग्निदेवत्या गायत्री वसिष्ठभरद्वाजदृष्टा पुरोरुक् । महान्मयः स्तुतिर्यस्य स महागयो महान्गृहरूपो वा तमग्निं वयमीमहे

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् । उपयामगृहीतोस्यग्नये त्वा वर्चसे ।

एष ते योनिरग्नये त्वा वर्चसे ॥ ९ ॥

महाँ २॥ इन्द्रो वज्रहस्तः षोडशी शर्म यच्छतु । हन्तु पाप्मानं योऽस्मान्द्वेष्टि । उपयामगृहीतोसि महेन्द्राय त्वा ।

एष ते योनिर्महेन्द्राय त्वा ॥ १० ॥

याचयामः । तं कं योऽग्निर्ऋषिः मन्त्रद्रष्टा । पवमानः पव गतौ पवतइतस्ततो गच्छति पवमानः यद्वा पूङ् शोधने पवते शोधयति पवमानः । पाञ्चजन्यः पञ्चजनेभ्यो हितः विप्रादयश्चत्वारो वर्णा निषादश्चेति पञ्चजनास्तेषां यथाधिकारात् पुरोहितः पुरोऽग्रे हितः स्थापितः दधातेर्निष्ठा ॥ उप० वर्चसे तेजोरूपायाग्नये त्वां गृह्णामि । एष० । ९ ॥

मत्वर्थे वप्रत्ययः संहितायामृतस्य दीर्घः । ऋतस्य सत्यस्याविनाशिनो ज्योतिषः तेजसः पतिं पालकम् तेजोऽधिष्ठानमित्यर्थः । अजस्रं न जस्यति जस्यति अजस्रस्तमनुपक्षीणम् जसु हिंसायाम् नमिकम्पीति रप्रत्ययः । घर्मं घृ क्षरणदीप्त्योः जिघर्ति क्षरति जलं घर्मस्तम् दीप्तं वा ॥ उपयाम० वैश्वानराय त्वां गृह्णामि । एष ते० सादयामि ॥ ६ ॥

वैश्वानरस्य सुमतौ स्याम राजा हि कम्भुवनानामभिश्रीः । इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ।

उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥ ७ ॥

वैश्वानरो न ऊतय आ प्र यातु परावतः । अग्निरुक्थेन वाहसा । उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥ ८ ॥

त्रिष्टुप् कुत्सदृष्टा । वैश्वानरस्य सुमतौ शोभनबुद्धौ वयं स्याम भवेम । कं निपातः पादपूरणः हि यस्मादितो वैश्वानरः इतोऽरणितो जातः उत्पन्नः सन् इदं विश्वं सर्वं विचष्टे कर्मानुरूपं पश्यति सूर्येण सह यतते स्पर्धते च सूर्यसमतेजा इत्यर्थः । कीदृशोऽग्निः राजा राजते दीप्यते राजा । भुवनानां भूतजातानामभिश्रीः आश्रयणीयः अभि समन्तात् श्रीयते सेव्यतेऽभिश्रीः कर्मणि क्विप् । उप० एष ते उक्तो ॥ ७ ॥

स्तिङ इति दीर्घः। कीदृशं सोमं ग्रावभिः सुतमश्मभिरभिषुतम् कीदृशैर्ग्रावभिः विद्यद्भिः विशेषेण द्यन्ति खण्डयन्ति ते विद्यन्तः तैः दो अवखण्डने दिवादित्वाच्छ्यन् शतरि ओतः श्यनीति ओकारलोपः॥ उपया° गोमते इन्द्राय त्वां गृह्णामि। सादयति एष ते°।४।

वृत्रं दैत्यं हन्ति वृत्रहा शतं क्रतवो मखा यस्य स शतक्रतुः। हे वृत्रहन् हे शतक्रतो हे इन्द्र त्वमायाहि आगच्छ सोमं च पिब

**इन्द्रायाहिवृत्रहन्पिबासोमꣳशतक्रतो। गोमद्भिर्ग्रावभिःसुतम्। उपयामगृहीतोसीन्द्रायत्वागोमते।**

**एषतेयोनिरिन्द्रायत्वागोमते॥ ५॥**

**ऋतावानंवैश्वानरमृतस्यज्योतिषस्पतिम्। अजस्रङ्घर्ममीमहे। उपयामगृहीतोसिवैश्वानरायत्वा।**

**एषतेयोनिर्वैश्वानरायत्वा॥ ६॥**

कीदृशं सोमं ग्रावभिः सुतम् कीदृशैर्ग्रावभिः गोमद्भिः गोः स्तुतिर्विद्यते येषां ते गोमन्तस्तैः॥ उप° एष ते° व्याख्याते॥ ५॥

तिस्रो वैश्वानरीयाः पुरोऽनुवाक्याः। आद्या गायत्री भरद्वाजदृष्टा। वयं वैश्वानरमीमहे याचामः यज्ञसमाप्तिमिति शेषः ईमहे याच्ञाकर्मसु पठितः। कीदृशं वैश्वानरम् ऋतवानम् ऋतं सत्यं यज्ञो जलं वास्यास्ति ऋतवा तम् छन्दसीवनिपौ वाच्याविति

यजमानेषु धेहि धारय स्थापय देहीत्यर्थः। तत्किम् अर्यः स्वामी यद्धनमर्हात् अर्हति पूजयति लेटोऽडाटाविति आडागमः अर्यः स्वामिवैश्ययोरिति अर्यशब्दः स्वामिन्यन्तोदात्तः वैश्ये आद्युदात्तः ईश्वरयोग्यं धनं देहीत्यर्थः। यद्धनं जनेषु लोकेषु विभाति विविधं शोभते। कीदृशं धनं द्युमत् द्यौः कान्तिरस्यास्ति द्युमत् दिवउच्चेति उकारः। क्रतुमत् क्रतवो यज्ञा क्रियन्ते येन तत् येन यज्ञाः क्रियन्ते तादृशं धनं देहीत्यर्थः। यत् धनं शवसा बलेन दीदयत् दापयति प्रापयति वा धनान्तरम् तद्धनं देहीत्यर्थः दय दानगति-

चित्रम्। उपयामगृहीतोसिबृहस्पतयेत्वा। एषतेयोनिर्बृहस्पतयेत्वा॥ ३॥

इन्द्रगोमन्निहायाहिपिबासोमꣳशतक्रतो। विद्यद्भिर्ग्रावभिः सुतम्। उपयामगृहीतोसीन्द्रायत्वागोमते।

एषतेयोनिरिन्द्रायत्वागोमते॥ ४॥

हिंसादानेषु अस्मात्स्विजन्ताल्लुङि रूपम् अडभाव आर्षः॥ उपयामेन पात्रेण गृहीतोऽसि बृहस्पतयेऽर्थाय त्वा गृह्णामि। स्थापयति एष ते योनिः स्थानम् बृहस्पतये त्वां सादयामि॥ ३॥

हे इन्द्रदेवत्ये गायत्री रम्याचिदृष्टे गोसवे यज्ञे ग्रहग्रहणे नियुक्ते सोपयामे। शतं क्रतवः कर्माणि यस्य स शतक्रतुः हे शतक्रतो हे इन्द्र हे गोमन् गावो धेनवः स्तुतयः किरणा वा विद्यन्ते यस्य स गोमान् त्वमिह यज्ञे आयाहि आगच्छ सोमं च पिब द्योत-

इमां कल्याणीमनुद्वेगकरीं वाचमहं यथा यतः आवदानि सर्वतो ब्रवीमि दीयतां भुज्यतामिति सर्वेभ्यो वच्मि । केभ्यस्तदाह ब्रह्मराजन्याभ्यां ब्राह्मणाय राजन्याय क्षत्रियाय च शूद्राय अर्याय वैश्याय स्वायात्मीयाय अरणाय पराय अरणोऽपगतोदकः यस्तु नास्ति रणः शब्दो येन सह वाक्सम्भाषरहितः शत्रुरिति वा ॥ प्रियो देवानाम् मध्येऽवसानरहितानुष्टुप् लौगाक्षिदृष्टा । यथेति पूर्वोक्तेरत्र तथाशब्दोऽध्याहार्यः यतोऽहं ब्राह्मणादिभ्यः कल्याणीं वाचं वदामि तथा ततोऽहं देवानां प्रियः भूयासम् इह संसारे दक्षि-

यथेमांवाचङ्कल्याणीमावदानिजनेभ्यः । ब्रह्मराजन्याभ्याᳪंशूद्रायचार्यायचस्वायचारणाय ।

प्रियोदेवानान्दक्षिणायैदातुरिहभूयासमयम्मेकामःसमृध्यतामुपमादोनमतु ॥ २ ॥

बृहस्पतेअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु । यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणन्धेहि

णायै दक्षिणायाः दातुश्च प्रियः भूयासम् देवा दक्षिणादातारश्च मयि प्रीतिं कुर्वन्त्वित्यर्थः । किञ्च मे ममायं कामः समृध्यतां सफलो भवतु अयमिति नामनिर्देशः धनपुत्रादिलाभकामो मे समृध्यतामित्यर्थः । किञ्च अदो मा मामुपनमतु अद इति दृष्टनामग्रहणम् देवदत्तादिर्मां प्रीणयतु ॥ २ ॥

ब्रह्मदेवत्या त्रिष्टुप् गृत्समददृष्टा बृहस्पतिसवे बार्हस्पत्यग्रहणेऽस्याः सोपयामाया विनियोगः । ऋतात् सत्यात् ब्रह्मणः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य ऋतप्रजातः हे ऋतप्रजात हे बृहस्पते बृहतां वेदानां पते पालक चित्रं नानाविधं तत् द्रविणमस्मासु

आसुर्यनुष्टुप्। सकामान् प्राजापत्यानुष्टुप्। यश्चेमाम् ब्राह्मी गायत्री॥ अग्निश्च पृथिवी च सन्नते सन्नमनं सन्नतम् आनुकूल्यं न प्रवृत्तिः अग्निपृथिव्यौ भोगाय सङ्गते यतो ब्रवीमि ते अग्निपृथिव्यौ मे ममादः अमुकं सन्नमताम् सन्नमयतां वशवर्तिनं कुरुतामित्यर्थः। अद इति पुरुषादेर्नाम द्वितीयान्तं प्रयोज्यम्। छन्दस्युभयथेति अपोऽप्यार्धधातुकत्वात्रेरनिटीति णिचो लोपः सन्नमतामित्यत्र। एवमुत्तरेष्वपि मन्त्रेषु योज्यम्। वायुरन्तरिक्षं च सन्नते ते ममामुकं सन्नमयताम्। आदित्यः द्यौश्च सन्नते ते म०। आपश्च वरुणश्च सन्नते ते म०। परमात्मानं प्रत्युच्यते हे स्वामिन् यस्य तव सप्त संसदः संसदनानि अधिष्ठानानि अग्निवाय्वन्तरिक्षादित्यद्युलोकाब्वरुणाख्यानि

सन्नमतामदआपश्चवरुणश्चसन्नतेतेमेसन्नमतामदःसप्तसꣳसदोअष्टमीभूतसाधनीसकामाँ २॥ अध्वनस्कुरु

सञ्ज्ञानमस्तुमेमुना॥ १॥

तत्राष्टमी भूतसाधनी पृथ्वी भूतानि साधयति उत्पादयति भूतसाधनी भूमिं विना भूतोत्पत्तेरभावात् अतः सर्वाधिष्ठानभूतस्त्वमध्वनो मार्गान् सकामान्कुरु येषु मार्गेषु मया गम्यते तत्रास्माकं कामप्राप्तिरस्त्वित्यर्थः। किञ्च मे ममामुना देवदत्तादिना सञ्ज्ञानं सङ्गतं ज्ञानमस्तु दृष्टेन मम प्रीतिरस्तु॥ विज्ञानात्मा वोच्यते यस्य तव सप्त संसदः पञ्च बुद्धीन्द्रियाणि मनो बुद्धिश्चेति सप्तायतनानि अष्टमी भूतसाधनी भूतानि साधयति वशीकरोति भूतसाधनी वाक् स त्वं नोऽस्माकमध्वनः सकामान्कुरु अमुना सह मे सञ्ज्ञानं सङ्गतमस्तु॥ १॥

तिस्रो द्विपदा व्याख्याताः ( ३,२५—२६ ) ॥ समिद्धो अञ्जन् ( २९,१ ) आश्वमेधिकोऽध्याय इति वचनादत्र हौत्रे तन्मन्त्राणां विनियोगः ॥ समाप्तोऽश्वमेधः सप्तविंशत्युत्तरवर्षसाध्यः ॥ ४७ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे। अध्यायः पञ्चविंशोऽयमश्वमेधगतोऽगमत् ॥ २५ ॥

अग्नेत्वन्नोअन्तमउतत्राताशिवोभवावरूथ्यः। वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमᳪरयिन्दाः।

तन्त्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ॥ ४७ ॥

इति माध्यन्दिनीयायां वाजसनेयसᳪहितायां पञ्चविंशोऽध्यायः ॥ २५ ॥

अग्निश्चपृथिवीचसन्नतेतेमेसन्नमतामदोवायुश्चान्तरिक्षञ्चसन्नतेतेमेसन्नमतामदआदित्यश्चद्यौश्चसन्नतेतेमे

इषेत्वेत्यारभ्य दर्शपौर्णमासपितृयज्ञाग्निहोत्रोपस्थानपशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधसम्बद्धा मन्त्रा व्याख्याताः। इदानीं खिलान्युच्यन्ते क्वचिद्विहितनियोगानुक्ताः। तेषां विवक्षानृषिरन्यस्यानुक्ताः आदित्यानीमानि यजूंषि व्याख्यायन्त इति श्रुतेः याज्ञवल्क्यो वा याज्ञवल्क्येन व्याख्यायन्त इति[1] श्रुतेः ॥ अग्निश्च। सप्त लिङ्गोक्तानि यजूंषि। चतस्र ऋग्गायत्र्यः। सप्त संसदः



१—बृह० ५,५,३३।

धनं करोत्वित्यर्थः संहितायां विश्वशब्दस्य दीर्घः । किञ्च नोऽस्माकमनागस्त्वं करोतु नास्ति आगः अपराधः पापरूपो यस्य सोऽनागाः तस्य भावोऽनागस्त्वम् दीर्घश्छान्दसः निष्पापत्वं करोतु पापसद्भावे उत्तमफलाप्राप्तिः । किञ्च अस्मो नोऽस्माकं घनं संततायं बलं पराभवाद्रक्षणं वा करोतु । कीदृशोऽग्नः अदितिः नास्ति दितिः खण्डनं दैन्यं वा यस्य सः । हविष्मान् हविरस्यास्ति हविष्मान् तदस्यास्तीति मतुप् हविर्भूतावयवः यद्वा देवत्वागमात् हविष्मान् । ईदृशोऽस्मो नः घनं वनतां करोतु वनतिः करोत्यर्थः ॥ ४५ ॥

का० इमा नु कमिति च द्विपदाः१ । अयस्मयपात्रे पात्रवलोहितहोमानन्तरमिमा नु कमित्याद्याः षट् द्विपदाः जुहोति । कण्डि-

इमानुकम्भुवनासीषधामेन्द्रश्चविश्वेचदेवाः । आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यम्भेषजाकरत् ।

यज्ञञ्चनस्तन्वञ्चप्रजाञ्चादित्यैरिन्द्रःसहसीषधाति ॥ ४६ ॥

काद्वयस्य षडर्धानि सन्ति तैः षडाहुतीर्जुहोतीति सूत्रार्थः ॥ द्विपदाच्छन्दस्का विश्वदेवदेवत्या आप्त्यपुत्रभुवनदृष्टास्तिस्र ऋचः । नु कम् एतौ निपातौ पादपूरणौ इमा इमानि भुवना भुवनानि भूतजातानि वयं सीषधाम साधयामः वशीकुर्म इत्यर्थः साधयतेर्लुङि उत्तमबहुवचने रूपम् अडभाव आर्षः । किञ्च इन्द्रः इदि परमैश्वर्ये ऐश्वर्यवान् सगणो निजगणैः परिवारैः सहित इन्द्रो देवैश्च विश्वे देवाश्च आदित्यैः द्वादशभिः मरुद्भिः एकोनपञ्चाशत्संख्यैश्च सहिताः अस्मभ्यं भेषजा भेषजानि औषधानि हितानि करत् कुर्वन्तु सर्वे देवा अस्माकं हितकारिणो भवन्त्वित्यर्थः । किञ्च इन्द्रः आदित्यैः सह नोऽस्माकं यज्ञमश्वमेधं तन्वं शरीरं प्रजां पुत्रादिकां च सीषधाति साधयतु वशीकरोत्वित्यर्थः नीरोगाः सपुत्रा वयं यज्ञं सम्यक् कुर्म इति भावः ॥ ४६ ॥ १—२०,८,११ ।

सुष्ठु गम्यते यत्र ते सुगाः तैः सुगेभिः सुगैः साधुगमनैः पथिभिर्मार्गैः देवयानरूपैः देवान् इत् एषि देवानेव गच्छसि अथो युक्ता मदुक्तिः। कथं देवान्प्रति गमनम् तत्राह हे अश्व ते तव हरी इन्द्राश्वौ युञ्जा युञ्जौ रथे युक्तौ अभूतां भविष्यतः आशंसायां भूतवच्चेति भूतकालप्रयोगो भविष्यदर्थे। हरी इन्द्रस्येति यास्कः[1]। तथा पृषती मरुतां वाहनभूते तव युञ्जौ अभूताम् पृषत्यो मरुतामिति[2] यास्कः। युङ् तास्ते युञ्जौ ऋत्विग्दधृगित्यादिना क्विन् क्विन्प्रत्ययस्य कुरिति कुत्वम् युजेरसमासे इति नुम् सुपां सुलुगिति विभक्तेरात्वम्। किं च रासभस्याश्विवाहनस्य धुरि अश्विवाहनस्थाने वाजी कश्चिदश्वः उपास्थात् उपस्थास्यति। देवत्वं प्राप्तस्य तव वहनाय इन्द्रादयो निजवाहनानि प्रेषयिष्यन्तीति भावः यद्वा तत्तद्देवभावं प्राप्तं त्वां तानि-तानि वाहनानि वक्ष्यन्तीत्यर्थः ॥ ४४ ॥

१—निघ० १,१५,१।

सुगव्यन्नोवाजीस्वश्व्यम्पुꣳसःपुत्राँ२॥उतविश्वापुषꣳरयिम्। अनागास्त्वन्नोअदितिःकृणोतुक्षत्रन्नोअश्वो

वनताꣳहविष्मान् ॥ ४५ ॥

इदानीं याच्ञा क्रियते। वाजी देवत्वं प्राप्तोऽश्वः नोऽस्माकं सुगव्यं शोभनं गोसमूहं कृणोतु करोतु गवां समूहो गव्यम् खलगोरथादिति यत् प्रत्ययः शोभनं गव्यं सुगव्यम्। तथा स्वश्व्यं कृणोतु अश्वानां समूहः अश्व्यम् केशाश्वेति विकल्पात् पक्षे यत् शोभनमश्व्यं स्वश्व्यम्। तथा पुंसः पुत्रान्करोतु पुत्रशब्दोऽपत्यवाचक इति पुंस इति विशेषणम्। यद्वा पुंसः पुरुषार्थसाधकान् पुत्रान्करोतु। उतापि च रयिं धनं करोतु कीदृशं रयिं विश्वपुषम् पुष्णाति पुषः इगुपधेति कप्रत्ययः विश्वस्य सर्वस्य पुषस्तम् सर्वजनपोषणसमर्थं

हे अश्व प्रियः वल्लभो भोगायतनत्वात् तवात्मा देहः त्वा त्वां मा तपत् तप्तं दुःखितं मा कार्षीत् तत्र देहवियोगजनिता व्यथा मा भूदिति विज्ञानात्मानं प्रत्युच्यते। किंभूतं त्वाम् अपियन्तम् अप्येतीत्यपियन् तम् देवलोकं गच्छन्तम् अपिपूर्वादेतेः शतृप्रत्ययः। किञ्च स्वधितिः शस्त्रं ते तव तन्वः तनूः अङ्गानि मा आतिष्ठिपत् मा स्थापयतु सर्वाणि छित्त्वा देवेभ्यो ददत्वित्यर्थः। तिष्ठतेर्ण्यन्तस्य लुङि चङि तिष्ठतेरिदिति इकारे कृते द्वित्वादि। किञ्च शमिता ते तव गात्राणि अङ्गानि अतिहाय त्यक्त्वा शास्त्रोक्तक्रमं त्यक्त्वा असिना शासेन मिथु मिथ्या छिद्रा छिद्राणि अयथच्छिन्नानि मा कः मा कार्षीत् करोतेर्लुङि मन्त्रे घसह्वरेत्यादिना च्लेर्लुक् गुणे

मात्वातपत्प्रियऽआत्मापियन्तम्मास्वधितिस्तन्वऽआतिष्ठिपत्ते। मातेगृध्नुरविशस्तातिहायच्छिद्रागात्राण्यसिनामिथूकः ॥४३॥

नवाऽउऽएतन्म्रियसेनरिष्यसिदेवाँ२॥ इदेषिपथिभिः सुगेभिः। हरीतेयुञ्जापृषतीऽअभूतामुपास्थाद्वाजीधुरिरासभस्य ॥४४॥

हल्ङ्यादिति तिपो लोपे विसर्गः। मिथु इति मिथ्यार्थेऽव्ययम् संहितायां दीर्घः। कीदृशः शमिता गृध्नुः गृध्यतीति गृध्नुः लुब्धः केवलं मांसग्रहणेच्छुः अत एवाविशस्ता न विशेषेण शसति हिनस्ति अविशस्ता विशसने अकुशलः अत एवान्यथा मा छिदत् सम्यग-वदानानि करोत्वित्यर्थः॥ ४३ ॥

वै एवार्थे उ अवधारणे हे अश्व त्वमेतद्वै व म्रियसे इतराश्ववन्मृतो न भवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात् अत एव न रिष्यसि हिंस्यसे व्यर्थहिंसाया अभावात् रिषतेर्यकि परस्मैपदमार्षम्। ननु प्रत्यक्षत्वे मरणमङ्गनाशश्च दृश्यते तर्हि कथमेवमुच्यते तत्राह

स्वधितिः पशुच्छेदनसाधनोऽसिः अश्वस्य चतुस्त्रिंशत् वङ्क्रीः चतुस्त्रिंशत्संख्याकान्युभयपार्श्वास्थीनि समेति सम्यगागच्छति छेदनाय । कीदृशस्याश्वस्य वाजिनः वजति गच्छतीति वाजी तस्य वेगवत इत्यर्थः । देवबन्धोः देवानां बन्धुः प्रियस्तस्य देवा बन्धवो यस्येति वा । भावी निर्देशः । अश्वस्य चतुस्त्रिंशद्वङ्क्रयः अजादीनां षड्विंशतिः । अतो हे ऋत्विजो वयुना वयुनेन ज्ञानेनाश्वस्य गात्रा गात्राणि अच्छिद्रा अच्छिद्राणि छिद्रहीनानि यूयं कृणोत कुरुत स्वधितिना छिन्नानि यच्छिद्राणि वर्तन्ते तान्यच्छिद्राणि कुरुत । किञ्च परुः परुः ग्रन्थिर्ना पर्वपरुषीति अमरः नित्यवीप्सयोरिति द्वित्वम् प्रतिपर्व प्रत्यवयवम् अनुघुष्य इदमिदमिति नाम्ना संशब्द्य यूयं विशस्त विशसनं छेदं कुरुत शसु हिंसायाम् छान्दसः शपो लुक् । कृणोत कृञ् करणे स्वादिः तप्तनविति मध्यमबहुवचनस्य तबादेशः ततो गुणः । अनुघुष्य घुषिर् शब्दे क्त्वो ल्यप् ॥ ४१ ॥

एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथ ऋतुः । याते गात्राणामृतुथा कृणोमि ताता पिण्डानाम्प्र जुहोम्यग्नौ ४२

अश्वस्य विशस्ता विशसनकर्ता एकः ऋतुः । कीदृशस्याश्वस्य त्वष्टुः दीप्तस्य । ऋतूपलक्षितः कालात्मा प्रजापतिरेवाश्वस्य शस्तेत्यर्थः शसेस्तृच् । तथा यन्तारा यन्तारौ नियमकर्तारौ द्वा द्वौ द्यावापृथिव्यभिमानिदेवौ भवतः तयोरेव सर्वेषां नियन्तृत्वादिति भावः । तथा ऋतुः अत्र ऋत्यक इति ह्रस्वप्रकृतिभावौ । एवमश्वस्य विशसितृयन्तृनुक्त्वाध्वर्युः स्वकर्माह हे अश्व ते तव गात्राणां पिण्डानां गात्रसम्बन्धिनां मांसपिण्डानां या यानि अङ्गानि अहं कृणोमि हन्मि छिनद्मि कृञ् बधे स्वादिः ऋतुथा ऋतौ ऋतूपलक्षिते वसन्तादियज्ञकाले ता-ता तानि-तान्यङ्गानि अग्नौ प्रजुहोमि प्रकर्षेण हुतानि करोमि ॥ ४२ ॥

प्रिया प्रियाणि एतानि वस्तूनि देवेषु आयामयन्ति आगमयन्ति ऋत्विजोऽश्वस्यैतानि देवेष्वेव प्रापयन्तीत्यर्थः। कानीत्यत आह अश्वाय यत् अधीवासमाच्छादकं वासो वस्त्रमुपस्तृणन्ति स्तृञ् आच्छादने क्रयादिकः तथा या यानि हिरण्यानि सौवर्णशकलानि अस्मै अश्वाय उपस्तृणन्ति। तथा अर्वन्तम् षष्ठ्यर्थे द्वितीया अर्वतोऽश्वस्य सन्दानं शिरोबन्धनं पड्बीशं पादबन्धनम्। एतानि देवेषु प्रापयन्ति। कीदृशानि प्रिया प्रियाणि देवानामिष्टानि ॥ ३८ ॥

यदश्वा॑य॒ वास॑ उपस्तृ॒णन्त्य॑धीवा॒सं या हिर॑ण्यान्यस्मै। स॒न्दान॒मर्व॑न्तं॒ पड्बी॑शं प्रि॒या दे॒वेष्वा या॑मयन्ति ॥ ३९ ॥

यत्ते॑ सा॒दे मह॑सा॒ शूकृ॑तस्य॒ पार्ष्ण्या॑ वा॒ कश॑या वा तु॒तोद॑। स्रु॒चेव॒ ता ह॒विषो॑ अध्व॒रेषु॒ सर्वा॒ ता ते॒ ब्रह्म॑णा सूदयामि ॥ ४० ॥

चतु॑स्त्रिꣳशद्वा॒जिनो॑ दे॒वब॑न्धो॒र्वङ्क्री॒रश्व॑स्य॒ स्वधि॑तिः॒ समे॑ति। अच्छि॑द्रा॒ गात्रा॑ व॒युना॑ कृणोत॒ परु॑ष्परुरनु॒घुष्या॒ वि श॑स्त ॥ ४१ ॥

हे अश्व अश्ववारः सादे गमने यत्ते तव त्वां पार्ष्ण्या पादाधोभागेन कशया वा तुतोद पीडितवान् तुद व्यथने लिट् सदनं सादः घञ् कीदृशस्य तव महसा बलेन शूकृतस्य शूकृतमस्यास्ति शूकृतः तस्य शब्दानुकरणमेतत् शूकारं कुर्वतः। अध्वरेषु ता सर्वा तानि सर्वाणि ते तव पार्ष्णिकशाताडनानि ब्रह्मणा मन्त्रेणाहं सूदयामि षूद चरणे चुरादिः चारयामि यज्ञे आहुतित्वेन कल्पयामीत्यर्थः। तत्र दृष्टान्तः हविषः स्रुचेव हविराज्यादिकं यथा स्रुचा जुह्वा सूदयामि तद्वत्। एकं ता पदं पादपूरणाय ॥ ४० ॥

हे अश्व पच्यमानात्वावयव अग्निः त्वा त्वां मा ध्वनयीत् ध्वनिं मा कारयतु ध्वनौ सति भाण्डभङ्गः स्यात् दह्यमानं मांसं सिमसिमेति शब्दं करोति तस्मात्तु नोनयतिध्वनयतीत्यादिना च्लेश्चङ्प्रतिषेधः ह्म्यन्तक्षणेति वृद्ध्यभावः। कीदृशोऽग्निः धूमगन्धिः धूमस्य गन्धो लेशो यत्र सः अल्पधूमवानित्यर्थः अल्पाख्यायामिति धूमादिकारः। किञ्च भ्राजन्ती अतितापेन दीप्यमाना उखा स्थाली मा अभिविक्त मा चलतु ओविजी भयचलनयोः लुङि तङि झलो झलीति सिलोपे रूपम् न माङ्योगइति अडभावः। कीदृशी उखा जघ्रिः जिघ्रति गन्धं गृह्णातीति जघ्रिः आदृगमेति किन्प्रत्ययः अधिष्ठात्र्या देवताया घ्राणम्। तमेवंविधमश्वं देवासः देवाः प्रति-

मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभिविक्त जघ्रिः। इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रतिगृभ्णन्त्यश्वम् ॥ ३७

निक्रमणं निषदनं विवर्तनं यच्च पड्वीशमर्वतः। यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥ ३८ ॥

गृभ्णन्ति प्रतिगृह्णन्तु। कीदृशमश्वम् इष्टं प्रयाजैः वीतमाप्रीभिः पर्यग्निकृतम् अभिगूर्तं ये यजामहइत्यागूर्योक्तम् वषट्कृतं वषट्कारेण संस्कृतम् ॥ ३७ ॥

यत् निक्रमणं नितरां क्रमते यत्र तत् निक्रमणस्थानम् निषदनं नितरां सीदत्यस्मिन्निति निषदनमुपवेशनस्थानम् विवर्तनं विविधं वर्तते यत्र तत् इतस्ततो लुण्ठनस्थानम् सर्वत्राधिकरणे ल्युट् यच्चार्वतोऽश्वस्य पड्वीशम् पदेषु विशति पड्वीशं पादबन्धनम्। क्रियापरा वा निक्रमणादयः शब्दाः आलम्भसमये यानि अश्वस्य निक्रमणादीनि चेष्टितानि। किञ्च यच्च पपौ यज्जलं पीतवान् यच्च घासिमदनीयं तृणादिकं जघास भक्षितवान् घस्लृ अदने लिट् हे अश्व ता तानि सर्वाणि ते तव निक्रमणादीनि देवेषु अस्तु सन्तु। देवार्थत्वात्तव श्रमादीनामपि निरर्थकत्वं मास्त्वित्यर्थः ॥ ३८ ॥

रातं दत्तमस्तु रा दाने । कीदृशेभ्यो देवेभ्यः उशन्ति कामयन्ते ते उशन्तः तेभ्यः हविः कामयमानेभ्यः वश कान्तौ लटः शत्रादेशः ॥ ३४ ॥

ये जनाः पक्वं वाजिनमश्वं परिपश्यन्ति अयं पक्व इति जानन्ति । ये ईम् ईमित्यव्ययं चार्थे ये च इत्याहुः एवं कथयन्ति किम् सुरभिः सुगन्धः पाको जातः अतो निर्हर अग्नेः सकाशादुत्तारयेति । ये च जनाः अर्वतोऽश्वस्य मांसभिक्षामुपासते हुतशिष्टमांसयाचनां कुर्वते । उतो अपि च तेषां पाकद्रष्ट्रादिजनानामभिगूर्तिः उद्यमो नोऽस्मानिन्वतु प्रीणातु । यद्वायं मन्त्रो देवपरो व्याख्येयः । ये देवाः पक्वं वाजिनं परिपश्यन्ति कदा होष्यतीति ये च विलम्बं दृष्ट्वा सुरभिः पाको जातोऽस्मभ्यं निर्हर देहीत्याहुः ये चार्वतो मांसभिक्षामुपासते मांसं याचन्ते तेषामभिगूर्तिः सङ्कल्पोऽस्मान्प्रीणातु सफलो भवत्वित्यर्थः ॥ ३५ ॥

यन्नीक्षणम्माᳫस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि । ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ॥३६॥

एते पदार्था अश्वं परिभूषन्ति अलंकुर्वन्ति स्वव्यापारेण साधयन्तीत्यर्थः भूष अलङ्कारे भौवादिकः । एते के तानाह यत् उखायाः स्थाल्याः नीक्षणं नितरामीक्षणं पाकपरीक्षार्थं दर्शनम् । कीदृश्या उखायाः मांस्पचन्याः मांसं पच्यते यस्यां सा मांस्पचनी तस्याः मांसपाकाधिकरणभूतायाः करणाधिकरणयोश्चेति ल्युट् मांसस्य पचि युड्घञोरिति मांसस्याकारलोपः टिड्ढाणञिति ङीप् । तथा यूष्णः पक्वरसस्य आसेचनानि आसिच्यन्ते येषु तानि आसेचनसाधनानि या यानि पात्राणि पद्दन्निति यूषशब्दस्य यूषन्नादेशः । यानि च चरूणां मांसपूर्णपात्राणामपिधाना अपिधानानि आच्छादनपात्राणि । कीदृशानि तानि ऊष्मण्या ऊष्माणं धारयन्ति तानि ऊष्मण्यानि ऊष्मन्शब्दाद्धारणार्थे यप्रत्ययः आच्छादने ऊष्मा वह्निर्न यातीत्यर्थः । तथा अङ्काः चिह्नसाधनानि हृदयाद्यवयवज्ञापकानि वेतसमयानि । सूनाः विशसनकरणभूताः स्वधित्यादयः । एतेऽश्वं परिभूषयन्ति ॥ ३६ ॥

रिप्तं लिप्तमस्ति स्वरुणा पशुमनक्तीति श्रुतेः । यत् स्वधितौ शस्त्रे लिप्तमस्ति छेदनकालेऽवदानकाले च । यच्च शमितुर्हस्तयोः लिप्तं यच्च शमितुर्नखेषु लिप्तम् हे अश्व सर्वा ता सर्वाणि तानि अपि देवेषु अस्तु भवन्तु वचनव्यत्ययः सर्वं त्वदीयं देवभोग्यं भवतु ॥ ३२ ॥

उदरस्य ऊवध्यमीषज्जीर्णतृणपुरीषं यत् अपवाति अपगच्छति । भक्षितमपक्वमामाशयस्थमूवध्यमुच्यते । आमस्यापक्वस्य क्रविषो मांसस्य यो गन्धो लेशोऽस्ति शमितारः विशसितारः तत्सर्वं सुकृता सुकृतं सुसंस्कृतं कृण्वन्तु कुर्वन्तु । उतापि च मेधं मेध्यमश्वं शृतपाकं यथा पचन्तु शृतो देवयोग्यो जातः पाको यस्मिन्कर्मणि तथा पचन्तु अतिपक्वमीषत्पक्वं च मा कुर्वन्त्वित्यर्थः ॥ ३३ ॥

यदूवध्यमुदरस्यापवाति यऽआमस्य क्रविषो गन्धोऽअस्ति । सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकं पचन्तु ॥ ३३ ॥

यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति । मा तद्भूम्यामाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥ ३४ ॥

ये वाजिनं परिपश्यन्ति पक्वं यऽईमाहुः सुरभिर्निर्हरेति । ये चार्वतो माꣳसभिक्षामुपासतऽउतो तेषामभिगूर्तिर्नऽइन्वतु ॥ ३५ ॥

हे अश्व अग्निना पच्यमानात्ते तव गात्रात् शरीरात् यत् ऊष्मा रसो वा अवधावति अधस्ताद्गच्छति । तथा निहतस्य निःशेषेण हतस्य यत् अङ्गं शूलमभि अवधावति शूलेन पाके क्रियमाणे यन्निर्गच्छति तन्निर्गतमूष्माङ्गादिकं भूम्यां मा आश्रिषत् भूम्याश्लिष्टं मा भूत् । श्लिषेः पुषादित्वात् च्लेरङ् । तथा तृणेषु माश्रिषत् विशसनसमये तृणलग्नं मास्तु । किं तर्हि तत्पतितं तृणलग्नं सर्वं देवेभ्यो

नावयजतीत्यावयाः श्वेतवाहोक्थशसेति डस् आवयाः प्रतिप्रस्थाता अवे यजः इति विन् अनाप्योरिति यवस्यालोपः। अग्निमिन्धः अग्निमिन्द्धे दीपयति अग्निमिन्धः अग्नीत् अरुर्द्विषदजन्तस्य मुम्। ग्रावग्राभः ग्राव्णो गृह्णाति स्तौति ग्रावग्राभः कर्मण्यण् छन्दसि भः ग्रावस्तोता। उतापि शंस्ता शंसति स्तौति शंस्ता प्रशास्ता। सुविप्रः शोभनो विप्रो मेधावी सुविप्रो ब्रह्मा ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हतीत्युक्तेः। अयमनुक्तर्त्विगुपलक्षकः। एते यज्ञेन वक्षणाः पृणध्वमिति सम्बन्धः ॥ २८ ॥

तेषामृत्विजामभिगूर्तः अभिगोरणमभिगूर्तिरुद्यमः नोऽस्मानिन्वतु प्रीणातु व्याप्नोतु वा अस्माकं यज्ञं सम्यक् साधयत्वित्यर्थः इवि

यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति। ये चार्वते पचनꣳ सम्भरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥२९॥

उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः। अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥३०॥

व्याप्तिप्रीणनयोः लोट् अपि इदितो नुम धातोरिति नुमागमः। तेषां केषाम् ये यूपव्रस्काः यूपाय व्रश्चन्ति तरुं छिन्दन्ति ते यूपव्रस्काः। उतापि च ये यूपवाहाः यूपं वहन्ति ते यूपवाहाः कर्मण्यण् छिन्नस्य यूपस्य वोढारः। ये च अश्वयूपाय अश्वबन्धनयूपार्थं चषालं तक्षति यूपाग्रे भावी स्थाप्यं काष्ठं तक्षन्ति वचनव्यत्ययः। चषालो यूपकटक इत्यमरः तक्षू तनूकरणे साधु सम्पादयन्तीत्यर्थः। उतो अपि च ये नराः अर्वते अश्वाय पचनं पच्यतेऽनेनेति पचनं पाकसाधनं काष्ठभाण्डादिकं सम्भरन्ति संहरन्ति आनयन्ति तेषामुद्यमोऽस्मान्प्रीणात्वित्यर्थः ॥ २९ ॥

का० इयं वेदिरित्यध्वर्युः[१] । अध्वर्युः यजमानं प्रत्याह । इयं वेदिः उत्तरवेदिः पृथिव्याः परः अन्तोऽवधिः वेदेः स पृथ्वीरूप-त्वादित्यर्थः । भुवनस्य नाभिः कारणम् अयं यज्ञोऽश्वमेधः भुवनस्य प्राणिजातस्य नाभिः कारणम् यज्ञाद्धि प्रजाः प्रजायन्तइति श्रुतेः । वृष्णः अश्वस्य रेतः अयं सोमः सोमलताश्वस्य वीर्याज्जातेत्यर्थः । अयं ब्रह्मा ऋत्विक् वाचः त्रयीरूपायाः परमं व्योम स्थानम् ब्रह्मण-स्त्रिवेदसंयोगादित्यर्थः ॥ ब्रह्मोद्यं समाप्तम् ॥ ६२ ॥ १—२०,७,१५ ।

सुभूरिति पूर्वस्य महिम्नः पुरोऽनुवाक्या उत्तरस्य याज्या च । उदिते ब्रह्मोद्ये सम्प्रदायाध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यं

सुभूः स्वयम्भूः प्रथमोऽन्तर्महत्यर्णवे । दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः ॥ ६३ ॥

होता यक्षत्प्रजापतिꣳ सोमस्य महिम्नः । जुषतां पिबतु सोमꣳ होतर्यज ॥ ६४ ॥

महिमानं ग्रहं गृह्णाति तस्य पुरोरुग्घिरण्यगर्भः समवर्तताग्रइत्य पुरोऽनुवाक्या सुभूः स्वयम्भूरिति[२] श्रुतेः । प्रजापतिदेवत्यानुष्टुप् । ह इति प्रसिद्धम् प्रथमः सर्वस्य आदिः अनादिनिधनः पुरुषः महति अर्णवे कल्पान्तकालीने समुद्रे अन्तर्मध्ये गर्भं दधे स्थापितवान् कीदृशः सुष्ठु भूरुत्पत्तिर्यस्मात्स सुभूः विश्वोत्पादकः स्वयं भवतीति स्वयम्भूः स्वेच्छाधृतशरीरः कीदृशं गर्भम् ऋत्वियम् ऋतुः प्राप्तो यस्य यस्य ऋत्वियः प्राप्तकालम् यतो गर्भात् प्रजापतिः ब्रह्मा जातः उत्पन्नः ॥ ६३ ॥ २—१३,५,२,२२ । ३—१२,५,२,२१ ।

महिम्नः प्रैषः । होता यक्षत्प्रजापतिमिति प्रैष इति[३] श्रुतेः । आर्षी गायत्री । महिम्नः सोमस्य महिमसञ्ज्ञस्य सोमग्रहस्य

पृथिवी द्यावापृथिव्यौ अन्तरिक्षं च को वेद । बृहतो महतो जनित्रं जन्म को वेद सूर्यस्योत्पत्तिः कस्मादित्यर्थः जनेरित्रप्रत्ययः । यतो जायते उत्पद्यते इति यतोजाः यत इत्युपपदे जनसनखनक्रमगमो विडिति विट्प्रत्ययः विड्वनोरनुनासिकस्येति नकारस्यात्वम् प्रथमा द्वितीयार्थे यतोजाः यत उत्पन्नं चन्द्रमसमिन्दुं को वेद यतश्चन्द्रस्योत्पत्तिस्तं को वेदेत्यर्थः ॥ ५९ ॥

ब्रह्मा प्रत्याह । अस्य भुवनस्य नाभिं कारणमहं वेद जानामि विदो लटो वा परब्रह्मैव जगत्कारणं जानामीत्यर्थः । द्यावा-

**वेदाहमस्यभुवनस्यनाभिंवेदद्यावापृथिवीअन्तरिक्षम् । वेदसूर्यस्यबृहतोजनित्रमथोवेदचन्द्रमसंयतोजाः ॥६०॥**

**पृच्छामित्वापरमन्तम्पृथिव्याःपृच्छामियत्रभुवनस्यनाभिः । पृच्छामित्वावृष्णोअश्वस्यरेतःपृच्छामिवाचःपरमंव्योम ॥ ६१ ॥**

**इयंवेदिःपरोअन्तःपृथिव्याअयंयज्ञोभुवनस्यनाभिः । अयꣳसोमोवृष्णोअश्वस्यरेतोब्रह्मायंवाचःपरमंव्योम ॥ ६२ ॥**

पृथिवीं अन्तरिक्षं च वेद ब्रह्मणो विकारभूतं जानामि । बृहतः सूर्यस्य जनित्रमुत्पत्तिकारणं ब्रह्मैव वेद । अथो अपि च यतोजां चन्द्रमसमहं वेद परमात्मनो जातं चन्द्रमहं वेद्मीत्यर्थः ॥ ६० ॥

का० यजमानोऽध्वर्युं पृच्छामि त्वेति[1] । यजमानोऽध्वर्युं पृच्छति ॥ हे अध्वर्यो पृथिव्याः परमन्तमवधिभूतं पर्यन्तं त्वा त्वामहं पृच्छामि द्विकर्मकः । यत्र यस्मिन् स्थले भुवनस्य भूतजातस्य नाभिः कारणं तदपि त्वां पृच्छामि । वृष्णः सेक्तुः अश्वस्य रेतः वीर्यं त्वां पृच्छामि । वाचो वाण्याः त्रयीलक्षणायाः परममुत्कृष्टं व्योम स्थानं त्वां पृच्छामि ॥ ६१ ॥

१—२०, ७, १४ ।

उद्गाता प्रत्याह। रससङ्ख्याया अक्षसङ्ख्यामाह अस्य यज्ञस्य षट् विंशाः अक्षाणि सर्वेषामक्षाणां षड्सात्मत्वात् षडेवाक्षाणीत्यर्थः। अस्य यज्ञस्य शतमक्षराणि छन्दोभिर्यज्ञो निष्पाद्यते तानि च छन्दांसि गायत्र्यादीन्यतिधृत्यन्तानि चतुर्दश चतुर्विंशत्यक्षरादीनि चतुर्वर्णोत्तराणि तेषां क्रमोत्क्रमगत्या द्वाभ्यां शतमक्षराणि भवन्ति। तथा हि। गायत्री चतुर्विंशतिवर्णा अतिधृतिः षट्सप्तत्यक्षरा एवं द्वे मिलित्वा शतमक्षराणि उष्णिक् २८ धृतिः ७२ एवं शतम् अनुष्टुप् ३२ अत्यष्टिः ६८ एवं शतम् अष्टिः ६४ बृहती ३६ एवं शतम् अतिशक्वरी ६० पङ्क्तिः ४० एवं शतम् शक्वरी ५६ त्रिष्टुप् ४४ एवं शतम् अतिजगती ५२ जगती ४८ एवं शतमक्षराणि अनेनाभिप्रायेण शतमक्षराणीत्युक्तम्। होमाः अशीतिः अश्वमेधएकविंशतियूपाः तत्राग्निष्ठे मध्यम-

**षडस्य विष्ठाः शतमक्षराण्यशीतिर्होमाः समिधो ह तिस्रः। यज्ञस्य ते विदथा प्र ब्रवीमि सप्त होतार ऋतुशो यजन्ति ॥५८॥**

**को अस्य वेद भुवनस्य नाभिं को द्यावापृथिवी अन्तरिक्षम्। कः सूर्यस्य वेद बृहतो जनित्रं को वेद चन्द्रमसं यतोजाः ॥५९॥**

यूपेऽश्वतूपरगोमृगान्नियुनक्ति इतरेषु षोडश पशून् तत्र विंशतियूपेषु चतस्रोऽशीतयः पशवो भवन्तीत्यभिप्रायेणोक्तम् अशीतिर्होमाः। ह स्फुटं तिस्रः समिधः अश्वतूपरगोमृगाः प्राजापत्याः पशवः तद्रूपाभिः समिद्भिर्यज्ञो दीप्त इति तिस्रः समिधः उक्ताः यज्ञस्य विदथा वेदनेन हेतुना ते तुभ्यं प्रब्रवीमि प्रवदामि। किञ्च सप्त होतारो वषट्कर्तारः ऋतुशः ऋतुयाजेषु यजन्ति ॥ ५८ ॥

उद्गाता ब्रह्माणं पृच्छति। हे ब्रह्मन् अस्य भुवनस्य भूतजातस्य नाभिं नह्यते यत्र स नाभिर्बन्धनस्थानं कारणमिति यावत् नाभौ हि सर्वा नाडी बध्यन्ते नह हिंसायामत्र बन्धनार्थः औणादिक इप्रत्ययः भूतजातस्य कारणं को वेद जानाति। द्यावा-

समुत्क्रान्तः आस्कद्य उत्प्लुत्य अर्षति गच्छति ऋष गतौ तुदादिः व्यत्ययेन शप् कश पन्थां पन्थानं मार्गं प्रति विसर्पति विविधं गच्छति ॥ ५५ ॥

अरे अध्वर्यो अजा पिशङ्गिला अजा नित्या माया रात्रिर्वा पिशङ्गिला पिशं रूपं गिलति भक्षयति पिशङ्गिला माया विश्वं ग्रसते रात्रावपि रूपाणि न प्रतीयन्ते तमसा । श्वावित् सेधा कुरुपिशङ्गिला कुरुशब्दोऽनुकरणे पिश अवयवे इति धातोरिगुपधेति कप्रत्ययः कुरु इति शब्दानुकुर्वाणा पिशान्मूलाद्यवयवान् गिलति पिशङ्गिला मूलानां शतं कुक्षौ स्थापयति शतं च भक्षयतीति सेधायाः स्वभावः । शशः वन्यो जीवविशेषः आस्कन्दमास्कद्यास्कद्य अर्षति स तस्य स्वभावः । अहिः सर्पः पन्थां पन्थानं विसर्पति विशेषेण गच्छति ॥ ५६ ॥

**अजारेपिशङ्गिला श्वावित्कुरुपिशङ्गिला । शशआस्कन्दमर्षत्यहिःपन्थांविसर्पति ॥ ५६ ॥**

**कत्यस्यविष्ठाःकत्यक्षराणिकतिहोमासःकतिधासमिद्धः । यज्ञस्यत्वाविदथापृच्छमत्रकतिहोतारऋतुशोयजन्ति ॥ ५७**

का० उत्तरौ च कत्यस्येति[१] । उत्तरौ पश्चादुक्तौ ब्रह्मोद्गातारौ चतुरृग्भिः संवदेते ॥ ब्रह्मोद्गातारं पृच्छति । अस्य कति विष्ठाः कियन्ति अन्नानि का सङ्ख्या यासां ताः कति विशेषेण तिष्ठति यज्ञो यासु ताः विष्ठाः अन्नानि कियत्प्रकाराणि यज्ञे । अक्षराणि च कति । होमासः होमाः कति । समिद्धः समिधः कतिप्रकाराः धकारस्य द्वित्वमार्षम् । यज्ञस्य विदथा वेत्तीति विदः विदस्य भावो विदथा यज्ञविद्वित्त्वेन हेतुना अत्र स्थले त्वा त्वामहं पृच्छमपृच्छम् पृच्छामि पृच्छतेर्लङ् अडभाव आर्षः । ऋतुशः ऋतौ-ऋतौ कति होतारः यजन्ति ॥ ५७ ॥

१—२०,७,१२ ।

ब्रह्मा प्रत्याह । पुरुषः आत्मा पञ्चसु प्राणेषु अन्तः प्राणमध्ये आविवेश प्रविष्टः तानि प्रसिद्धानि श्रोत्रादिकरणानि पुरुषे अन्तः मध्ये अर्पितानि प्राणात्मनामन्योऽन्यापेक्षासिद्धिरित्यर्थः न चात्मानमन्तरेण प्राणाः ख्यायन्ते न प्राणानन्तरेणात्मेति बहृच श्रुतेः यद्वा पञ्चसु भूतेषु भूम्यादिषु आत्मा प्रविष्टस्तानि चात्मनि प्रविष्टानि तानि सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । उद्गातः अहमत्र प्रश्ने त्वा त्वां प्रति एतदुत्तरं प्रतिमन्वानः प्रतिजानानोऽस्मि एवमुत्तरं ददामीत्यर्थः । किञ्च मायया बुद्ध्या मत् मत्तः उत्तरोऽधिकस्त्वं न भवसि मत्तो बुद्धिमान्नासीत्यर्थः ॥ ५२ ॥

कास्विदासीत्पूर्वचित्तिः किꣳस्विदासीद्बृहद्वयः । कास्विदासीत्पिलिप्पिला कास्विदासीत्पिशङ्गिला ॥ ५३ ॥

द्यौरासीत्पूर्वचित्तिरश्वआसीद्बृहद्वयः । अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ॥ ५४ ॥

कईमरे पिशङ्गिला कईं कुरुपिशङ्गिला । कईमास्कन्दमर्षति कईं पन्थां विसर्पति ॥ ५५ ॥

का० पुनः पूर्वावपरेणोत्तरवेदिं का स्विदिति । ततः सदसो निष्क्रम्य हविर्धानस्य पुर उत्तरवेदेः पश्चादुपविश्य पूर्वौ पूर्वोक्तौ होत्रध्वर्यू चतुर्ऋग्भिः संवदेते इति सूत्रार्थः ॥ होताध्वर्युं पृच्छति व्याख्याता (११) ॥ ५३ ॥ व्याख्याता (१२) ॥ ५४ ॥ १—२०,७,१२।

अध्वर्युर्होतारं पृच्छति । ईमिति निपातश्चार्थः अरे होतः का च पिशङ्गिला का च कुरुपिशङ्गिला कश्च आस्कन्दं

विष्णुः यज्ञो येषु त्रिषु पदेषु गार्हपत्याहवनीयदक्षिणाग्निषु एषः आ इष्टः याज्ञेन तर्पितः यजिः कः तेषु त्रिषु पदे विश्वं सर्वं भुवनमाविवेश प्रविष्टमुत नेति प्रश्ने प्लुतः ॥ ४९ ॥

उद्गाता प्रत्याह । येषु त्रिषु पदेषु विश्वं भुवनमाविवेशेति यत्त्वया पृष्टम् तेषु त्रिषु पदेषु गार्हपत्यादिषु अहमस्मि अहमपि तत्रैव स्थितोऽस्मि अपिशब्दात् त्वं च तत्रैवासि किमेतावदेव जानामि किन्तु पृथिवीमुतापि च द्यां स्वर्गं दिवः स्वर्गस्य पृष्ठमुपरिभागमपि सद्यः क्षणमेव एकेनाङ्गेन मनसा पर्येमि परिगच्छामि सर्वं जानामि किम्पुनर्भूतानि प्रविष्टानीति भावः ॥५०॥

अपितेषुत्रिषुपदेष्वस्मियेषुविश्वम्भुवनमाविवेश। सद्यःपर्येमिपृथिवीमुतद्यामेकेनाङ्गेनदिवोअस्यपृष्ठम् ॥ ५० ॥

केष्वन्तःपुरुषआविवेशकान्यन्तःपुरुषेअर्पितानि । एतद्ब्रह्मन्नुपवल्हामसित्वाकिꣳस्विन्नःप्रतिवोचास्यत्र ॥ ५१ ॥

पञ्चस्वन्तःपुरुषआविवेशतान्यन्तःपुरुषेअर्पितानि । एतत्त्वात्रप्रतिमन्वानोअस्मिनमाययाभवस्युत्तरोमत् ॥ ५२ ॥

उद्गाता ब्रह्माणं पृच्छति । हे ब्रह्मन् पुरुषः केषु पदार्थेषु अन्तर्मध्ये आविवेश प्रविष्टः । पुरुषे अन्तः पुरुषमध्ये कानि वस्तूनि अर्पितानि स्थापितानि । एतत् त्वा त्वां वयमुपवल्हामसि उपवल्हामः स्पर्धया पृच्छामः वल्ह प्राधान्यपरिभाषणहिंसादानेषु लट् इदन्तो मसि । अत्र प्रश्ने किं स्वित् । त्वं प्रतिवोचासि प्रतिवदसि वच उमिति लेटि छान्दस उम् लेटोऽडाटाविति आडागमः ॥ ५१ ॥

अध्वर्युर्होतारं पृच्छति । हे होतः स्विदिति तर्के सूर्यसमं सूर्यमण्डलतुल्यं ज्योतिः तेजः किं तत् ब्रूहि । समुद्रसमं सरः किं स्वित् । पृथिव्यै पृथिव्याः सकाशात् वर्षीयः महत्तरं किं स्वित् प्रियस्थिरेत्यादिना वृद्धस्य वर्षादेशः । कस्य मात्रा परिमाणं न विद्यते ॥ ४७ ॥

होता प्रत्याह सूर्यसमं ज्योतिर्ब्रह्म त्रयीलक्षणम् परं च । समुद्रसमं सरो द्यौरन्तरिक्षं यतो वृष्टिर्भवति । पृथिव्यै पृथिव्याः

किꣳस्वित्सूर्यसमञ्ज्योतिःकिꣳसमुद्रसमꣳसरः । किꣳस्वित्पृथिव्यैवर्षीयःकस्यमात्रानविद्यते ॥ ४७ ॥

ब्रह्मसूर्यसमञ्ज्योतिर्द्यौःसमुद्रसमꣳसरः । इन्द्रःपृथिव्यैवर्षीयान्गोस्तुमात्रानविद्यते ॥ ४८ ॥

पृच्छामित्वाचितयेदेवसखयदित्वमत्रमनसाजगन्थ । येषुविष्णुस्त्रिषुपदेष्वेष्टस्तेषुविश्वम्भुवनमाविवेशाँ३ ॥ ४९ ॥

सकाशात् इन्द्रः वर्षीयान् वृद्धतरः । तु पुनः गोः धेनोः मात्रा न विद्यते यज्ञधारकत्वात् ॥ ४८ ॥ १-२०,७,११ ।

का० ब्रह्मोद्गातारौ च पृच्छामि त्वेति । ब्रह्मोद्गातारं पृच्छति पृच्छामीति । चकाराच्चतुर्ऋत्विजः सदसि ब्रह्मोद्गातारौ संवदेते ॥ ब्रह्मा उद्गातारं पृच्छति । पृच्छामि देवानां सखा देवसखः राजाहःसखिभ्यष्टच् हे देवसख देवानां मित्र उद्गातः त्वा त्वां चितये ज्ञानायाहं पृच्छामि अत्र मत्कृते प्रश्ने यदि त्वं मनसा जगन्थ जानासि गमेर्लिट् ये गत्यर्थास्ते ज्ञानार्थाः । किं पृच्छसीत्यत आह

छिद्रं पृणातु वचनव्यत्ययः पृणन्तु पूरयन्तु यत् न्यूनं तत्पूरयन्तु । किञ्च नक्षत्रैः सह नक्षत्रयुक्तः सूर्यः ते तव साधुया साधु समीचीनं लोकं कृणोतु करोतु सुपां सुलुगित्यादिना साधुशब्दात्परस्यामो यादेशः सूर्यस्ते उत्तमं लोकं ददात्वित्यर्थः ॥ ४३ ॥

हे अश्व ते तव परेभ्योऽवयवेभ्य उच्चेभ्यः शिरआदिभ्यः शं सुखमस्तु । अवरेभ्यः अधःस्थेभ्यश्च पादादिभ्यो गात्रेभ्यः शमस्तु । अस्थभ्यः तवास्थिभ्यश्च शमस्तु अस्थिदधीति अस्यानुवृत्तौ छन्दस्यपि दृश्यतइति सूत्रेण हलादावप्यस्थिशब्दस्यानङादेशः । मज्जभ्यः

शन्ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यः शम्वस्तु तन्वै तव ॥ ४४ ॥

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किꣳ स्विद्धिमस्य भेषजं किम्वावपनं महत् ॥ ४५ ॥

सूर्य्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ ४६ ॥

पृष्ठधातुभ्योऽपि शमस्तु किम्बहुना तव तन्वै तन्वाः सर्वस्यापि शरीरस्य शमु सुखमेवास्तु । षष्ठी चतुर्थ्यर्थे आशिषि वा चतुर्थी । उ एवार्थे ॥ ४४ ॥

का० प्रागुपाहोमाद्धोताध्वर्यू च सदसि संवदेते चतसृभिः कः स्विदेकाकीति पूर्ववत्[१] । वपाहोमात्प्राक् च चतुर्ऋग्भिः पूर्ववदुक्तिप्रत्युक्त्या सदोमध्ये गत्वा होता अध्वर्युश्च संवादं कुरुतः ॥ अष्टादश ऋचो ब्रह्मोद्यसञ्ज्ञाः ब्रह्मोद्यं परस्परं संवादः आद्याश्चतस्रोऽनुष्टुभः का स्विदित्याद्याश्च अनुष्टुभः । होताध्वर्युं पृच्छति । व्याख्याता (९) ॥ ४५ ॥ ॥ व्याख्याता (१०) ॥ ४६ ॥ १—२०,७,१।

विशासतु भिन्नानि कुर्वन्तु । केन संवत्सरस्य संवत्सरात्मकस्य कालस्य तेजसा । किञ्च ऋतवः त्वा त्वां शम्यन्तु पर्वविशासनेन हविः कुर्वन्तु ॥ ४० ॥

अर्धमासाः पक्षाः मासाश्च तदभिमानिनो देवाः शम्यन्तः संस्कुर्वन्तः सन्तो हे अश्व ते तव परूंषि पर्वाणि आच्छ्यन्तु समन्ताच्छिन्दन्तु शम्यिनां पर्वपरुषीति कोशः । किञ्च अहोरात्राणि अहोरात्राभिमानिदेवा मरुतश्च देवाः ते तव विलिष्टं लिश अल्पीभावे विशेषेणाल्पमङ्गम् तत्सूदयन्तु सन्दधतु सूद निरासे अत्र सन्धानार्थः व्यर्थं मास्तु ॥ ४१ ॥

अर्धमासाः परूᳪषि ते मासा आच्छ्यन्तु शम्यन्तः । अहोरात्राणि मरुतो विलिष्टᳪ सूदयन्तु ते ॥ ४१ ॥

दैव्या अध्वर्यवस्त्वाच्छ्यन्तु वि च शासतु । गात्राणि पर्वशस्ते सिमाः कृण्वन्तु शम्यन्तीः ॥ ४२ ॥

द्यौस्ते पृथिव्यन्तरिक्षं वायुश्छिद्रं पृणातु ते । सूर्यस्ते नक्षत्रैः सह लोकं कृणोतु साधुया ॥ ४३ ॥

देवानामिमे दैव्याः अश्विनौ देवानामध्वर्यू इत्युक्तत्वात् अश्विप्रभृतयो देवसम्बन्धिनोऽध्वर्यवः हे अश्व त्वा त्वामाच्छ्यन्तु आच्छिन्दन्तु विशासतु च चकारो भिन्नक्रमः हविः कुर्वन्तु किञ्च ते तव गात्राणि विभक्तिव्यत्ययः गात्रेषु शरीरेषु पर्वशः पर्वणि पर्वणि सिमाः सीमा मर्यादाः कृण्वन्तु कृ करणे स्वादिः कीदृशीः सीमाः शम्यन्तीः संस्कुर्वाणाः ॥ ४२ ॥

द्यौः स्वर्गः पृथिवी अन्तरिक्षं लोकत्रयाभिमानिनो देवाः अग्निवायुसूर्याः वायुरन्योऽपि शरीरस्थः प्राणादिः हे अश्व ते तव

दिशो वै लोहमय्योऽवान्तरदिशो रजता ऊर्ध्वा हरिण्यस्ताभिरेवैनं कल्पयन्तीति[1] श्रुतेः। सूचीनां दिग्रूपत्वादश्वसंस्कारचमत्वम् ताः सूच्यः कर्मभिः अश्वदेहे सीमाकरणलक्षणैः युज्यन्ते योगं प्राप्नुवन्ति सीमाकरणयोग्या भवन्तीत्यर्थः। कीदृश्यस्ताः युजः युज्यन्ते ता युजः संयुता एकीभूता इत्यर्थः। ताः सूच्यो वाजिनो वेगवतोऽश्वस्य त्वचि सिमाः सीमा रेखाः शम्यन्तु सम्यक् कुर्वन्तु सिमाशब्दः सीमापर्यायः। कीदृश्यस्ताः शम्यन्तीः शम्यन्त्यः संस्कारं कुर्वाणाः॥ ३७॥ ॥ व्याख्याता(१०,२२)॥ ३८॥

का० अश्वं विशास्त्यनुवाकेन कस्त्वाच्छ्यतीति[2]। षडृचेनानुवाकेनाश्वं विशास्ति अश्वोदरं पाटयति मेदस उद्धरणाय वपाया

**कुविदङ्गयवमन्तोयवञ्चिद्यथादान्त्यनुपूर्वंव्वियूय। इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमउक्तिंयजन्ति॥ ३८॥**

**कस्त्वाच्छ्यतिकस्त्वाविशास्तिकस्तेगात्राणिशम्यति। कउतेशमिताकविः॥ ३९॥**

**ऋतवस्तऋतुथापर्वशमितारोविशासतु। संवत्सरस्यतेजसाशमीभिःशम्यन्तुत्वा॥ ४०॥**

अभावात् उदरमध्यस्थं स्थानं घृताभं घनं श्वेतं मांसं मेद इति सूत्रार्थः॥ अश्वदेवत्याः षडृचः आद्या गायत्री। हे अ कः प्रजापतिः त्वा त्वामाच्छ्यति छिनत्ति छो छेदने लट् ओतः श्यनीति। हे अश्व कः त्वां विशास्ति त्वचा वियोजयति। ते तव गात्राणि कः शम्यति शमनेन हविः करोति। कः उ कश्च प्रजापतिरेव कविर्मेधावी ते तव शमिता शमयिता प्रजापतिरेव सर्वं करोति नाहमित्यर्थः॥ ३९॥ १—१३,२,१०,६। २—२०,७,६।

पञ्चानुष्टुभः। हे अश्व ऋतवः शमितारः ऋतुथा ऋतौ ऋतौ काले-काले ते तव पर्व पर्वाणि अस्थिग्रन्थीन् शमीभिः कर्मभिः

महत् नाम यासां ता महानाम्न्यः शक्वर्य ऋचः। रेवत्यः ऋचः यस्यामृचि रैवतं साम गीयते सा रेवती। विश्वाः सर्वाः आशा दिशः। कीदृश्य आशाः प्रभूवरीः प्रभवन्ति सर्वभूतानि धारयितुं समर्था भवन्ति प्रभूवर्यः अन्येभ्योऽपि दृश्यन्तइति वनिप् ऋन्नेभ्य इति ङीप् वनो रचेति तस्य रेफः पूर्वसवर्णदीर्घत्वम्। मेघे भवा मैघ्यः पर्जन्यवर्णः मेघोत्था विद्युतः वाचो वेदलक्षणा अन्या अपि। एताः सर्वाः सूचीभिः हे अश्व त्वां शम्यन्तु हविः कुर्वन्तु ॥ ३५ ॥

महानाम्न्योरेवत्योविश्वाआशाःप्रभूवरीः। मैघोर्विद्युतोवाचःसूचीभिःशम्यन्तुत्वा ॥ ३५ ॥

नार्यस्तेपत्न्योलोमविचिन्वन्तुमनीषया। देवानाम्पत्नोदिशःसूचीभिःशम्यन्तुत्वा ॥ ३६ ॥

रजताहरिणीःसीसायुजोयुज्यन्तेकर्म्मभिः। अश्वस्यवाजिनस्त्वचिसिमाःशम्यन्तुशम्यन्तीः ॥ ३७ ॥

हे अश्व नार्यः नृणामपत्यानि स्त्रियः ते तव लोम रोमाणि मनीषया मनसा इच्छया विचार्य विचिन्वन्तु पृथक्कुर्वन्तु रोमेत्यत्र जातावेकवचनं विभक्तिलोपो वा। कीदृश्यो नार्यः पत्न्यः पत्युर्नो यज्ञसंयोगइति नकारः यजमानभार्या महिष्याद्या इत्यर्थः। किञ्च देवानामिन्द्रादीनां पत्न्यः दिशः प्राच्याद्याः सूचीभिः त्वां शम्यन्तु ॥ ३६ ॥

रजताः रजतमय्यः हरिणीः हरिण्यः सुवर्णमय्यः सीसाः सीसं ताम्रं तन्मय्यः। त्रय्यः सूच्यो भवन्ति। लोहमय्यो रजता हरिण्यो

गच्छति वाजी वाजोऽस्यास्तीति वा वाजी । तस्य च नोऽस्माकं मुखा मुखानि सुरभि सुरभीणि करत् करोतु यज्ञ इति शेषः अश्लील-भाषणेन दुर्गन्धं प्राप्तानि मुखानि सुरभीणि यज्ञः करोत्वित्यर्थः । तथा च श्रुतिः सुरभिमतीमृचमन्ततोऽन्वाहुर्वाचमेव पुनत इति[1] । सुरभिशब्दाद्विभक्तिलोपः । किञ्च नोऽस्माकमायूंषि जीवनानि बाल्ययौवनवार्द्धकानि प्रतारिषत् प्रतारयतु प्रवर्धयतु लेटि रूपम् ॥३२॥

का० तिस्रः पत्न्योऽसि पथान् कल्पयन्त्याश्वस्य सूचीभिर्लौहराजतसौवर्णाभिर्मणिसङ्ख्याभिर्गायत्री त्रिष्टुबिति द्वाभ्यां द्वाभ्याम्[2] । गायत्री त्रिष्टुबिति षडृचे द्वाभ्यां द्वाभ्यामृग्भ्यां महिष्याद्यास्तिस्रः पत्न्यः ताम्ररूप्यसुवर्णमयीभिः प्रत्येकमेकाधिकशतसङ्ख्याभिः

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह । बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा ॥ ३३ ॥

द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः । विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा ॥ ३४ ॥

सूचीभिरश्वाङ्गेऽसेः शासस्य मार्गान् कुर्वन्ति सुखप्रवेशाय सूचीभिर्वितुद्य-वितुद्याश्वत्वचं जर्जरीकुर्वन्तीति सूत्रार्थः ॥ अश्वदेवत्याः षडृचः आद्योष्णिक् । हे अश्व गायत्री त्रिष्टुप् जगती अनुष्टुप् पङ्क्त्या सह बृहती उष्णिहा सह ककुप् एतानि छन्दांसि सूचीभिरेताभिः त्वां शम्यन्तु संस्कुर्वन्तु विकरणव्यत्ययः असि-पथार्थं त्वग्भेदनं संस्कारः ॥ ३३ ॥

चतस्रोऽनुष्टुभः । द्वे पदे यासां ता द्विपदाः याः चतुष्पदाः याः त्रिपदाः याः षट्पदाः याः विच्छन्दाः विगतं छन्दो याभ्यस्ताः छन्दोलक्षणहीनाः याः सच्छन्दाः छन्दोलक्षणयुताः ताः सर्वाः छन्दोजातयः हे अश्व सूचीभिः त्वां शम्यन्तु ॥ ३४ ॥

1—१३,२,६,६ । 2—२०,७,१ ।

उपपतिर्यस्याः सा अर्यजारा। शूद्राच्चामहत्पूर्वाज्जातिरिति शूद्राज्जात्यर्थे टाप्। वैश्यो यदा शूद्रां गच्छति तदा शूद्रः पोषाय न धनायते पुष्टिं न इच्छति मद्भार्या वैश्येन भुक्ता सती पुष्टा जातेति न मन्यते किन्तु व्यभिचारिणी जातेति दुःखितो भवतीत्यर्थः अशनायोदन्येति क्वचि धनायतीति इच्छार्थे निपातः ॥ ३० ॥

पालागली क्षत्तारमाह। यदा हरिणो यवमत्ति तदा बहु यथा तथा पशुं पुष्टं न मन्यते इदं भवतोऽपि तुल्यम् इयान्विशेषः यत् यदा शूद्रः अर्यायै अर्याया वैश्याया जारो भवति तदा वैश्यः पोषं पुष्टिं नानुमन्यते मम स्त्री पुष्टा जातेति नानुमन्यते किन्तु शूद्रेण नीचेन भुक्तेति क्लिश्यतीत्यर्थः ॥ अश्लीलभाषणं समाप्तम् ॥ ३१ ॥ १—२०, ६, २१।

यद्धरिणो यवमत्ति न पुष्टम्बहु मन्यते। शूद्रो यदर्यायै जारो न पोषमनु मन्यते ॥ ३१।

दधिक्राव्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत्प्रण आयूꣳषि तारिषत् ॥ ३२ ॥

का० महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहुः[१]। महिषीं यजमानस्य प्रथमपरिणीतां पत्नीमश्वसमीपसुप्तामुत्थाप्य पुरुषा अध्वर्युब्रह्मोद्गातृहोतृचत्वारो मन्त्रं पठेयुरिति सूत्रार्थः ॥ वामदेवात्मजदधिक्रावदृष्टाश्वदेवत्यानुष्टुप्। वयमध्वर्य्वादयः अकारिषम० कार्ष्म कृतवन्तः वचनव्यत्ययः अश्लीलभाषणमिति शेषः किमर्थम् अश्वस्य संस्कारायेति शेषः अश्वसंस्कारायाश्लीलभाषणं कृतवन्त इत्यर्थः। कीदृशस्याश्वस्य दधिक्राव्णः दधाति धारयति नरमिति दधिः आदृगमहनेति किप्रत्ययः दधिः सन् क्रामतीति दधिक्रावा तस्य अन्येभ्योऽपि दृश्यतइति वनिप् प्रत्ययः विड्वनोरनुनासिकस्यादिति धातोराकारः। जिष्णोः जयन-शीलस्य। वाजिनः वजति

प्रवेशयन्ति। अव रक्षे गतौ कान्तौ तृप्तौ प्रीतौ श्रुतौ श्रुगौ। प्राप्तौ स्वेवेऽर्पणे वेशे भागे वृद्धौ गृहे वधे। इत्युक्तेरवावधातुः प्रवेशनार्थः लुङ् छन्दसि लुङ्लङ्लिट इति वर्त्तमाने लुङ् व्यवहिताश्चेति प्रोपसर्गेण व्यवधानम्। ललामेति सुखनाम ललामं सुखं गच्छति प्राप्नोति ललामगुः शिश्नः यद्वा ललामं पुण्ड्रं गच्छति ललामगुः लिङ्गं योनिं प्रविशदुत्थितं पुण्ड्राकारं भवतीत्यर्थः। कीदृशं ललामगुं विष्टीमिनं ष्टीम क्लेदे विशेषेण स्तीमनं क्लेदनं विष्टीमः घञ्प्रत्ययः विष्टीमः क्लेदोऽस्यास्ति विष्टीमी तम् अत इनिठनाविति अस्त्यर्थे इनिप्रत्ययः शिश्नस्य योनिप्रवेशे क्लेदनं भवतीत्यर्थः। यदा देवाः शिश्नक्रीडिनो भवन्तो ललामगुं योनौ प्रवेशयन्ति तदा नारी सक्थ्ना ऊरुणा ऊरुभ्यां देदिश्यते निर्दिश्यते अत्यन्तं लक्ष्यते दिश्यतेर्यङ्प्रत्ययः भोगसमये सर्वस्य नार्यङ्गस्य नरेण व्याप्तत्वादूरुमात्रं

यद्धरिणो यवमत्ति न पुष्टम्पशु मन्यते। शूद्रा यदर्यजारा न पोषाय धनायति ॥ ३० ॥

लक्ष्यते इयं नारीतीतार्थः। तत्र दृष्टान्तः सत्यस्याक्षिभुवो यथेति सत्यं द्विविधम् अक्षिभ्यां भवतीत्यक्षिभु प्रत्यक्षम् एकं च श्रोत्रग्राह्यम् षष्ठी तृतीयार्थे। यथा कश्चिदक्षिभुवा प्रत्यक्षेण सत्येन निर्दिश्यते तत्र विश्वासो भवति तथा ऊरुणा दृष्टेन नारीति लक्ष्यते इत्यर्थः। श्रोत्रग्राह्ये तु सत्ये वक्तुराप्ततमत्वमपेक्षितम् ॥ २९ ॥

क्षत्ता पालागलीमाह। यत् यदा हरिणो यवमत्ति मृगो यदा क्षेत्रस्थं धान्यं भक्षयति तदा क्षेत्री पशु पशुं हरिणं पुष्टं न मन्यते मम धान्यभक्षणेन पशुः पुष्टो जातः सम्यगिति न जानाति किन्तु मदीयं क्षेत्रं भक्षितमिति दुःखी भवतीत्यर्थः। पशुशब्दात् अपां सुलुगित्यमो लुक्। एवं शूद्रा शूद्रजातिः स्त्री यदा अर्यजारा भवति अर्यः स्वामिवैश्ययोरिति निपातनादर्यो वैश्यो जार

वावाताद्गातारं प्रत्याह। भवतोऽप्येतत्समानम्। हे नर एनमुद्गातारमूर्ध्वमुच्छ्रयतात् ऊर्ध्वं कुरु गिरौ भारमिति पूर्ववत्। अथ यथास्य उद्गातुर्मध्यं लिङ्गमेजतु कम्पताम् एजृ कम्पने लोट्। शीते वाते उक्तम् ॥ २७ ॥

होता परिवृक्तामाह। यत् यदा अस्याः परिवृक्तायाः कृधु ह्रस्वं स्थूलं च शिश्नमुपातसत् उपगच्छेत् योनिं प्रतिगच्छेत् तंस उपक्षये तदा मुष्कौ वृषणौ इत् एव अस्याः योनेरुपरि एजतः कम्पेते। लिङ्गस्य स्थूलत्वात् योनेरल्पत्वात् वृषणौ बहिस्तिष्ठत इत्यर्थः।

ऊर्द्ध्वमेनमुच्छ्रयताद्गिरौभारꣳहरन्निव। अथास्यमध्यमेजतुशीतेवातेपुनन्निव ॥ २७ ॥

यदस्याअꣳहुभेद्याःकृधुस्थूलमुपातसत्। मुष्काविदस्याएजतोगोशफेशकुलाविव ॥ २८ ॥

यद्देवासोललामगुंप्रविष्टीमिनमाविषुः। सक्थ्नादेदिश्यतेनारीसत्यस्याक्षिभुवोयथा ॥ २९ ॥

तत्र दृष्टान्तः गोशफे जलपूर्णे गोः खुरे शकुलौ मत्स्याविव यथा उदकपूर्णे गोः पदे मत्स्यौ कम्पेते। कृध्विति ह्रस्वनाम[1]। कीदृश्या अस्याः अंहुभेद्याः अंहु भगं भेद्यं विदार्यं यस्याः सा अंहुभेदी तस्याः अंहुर्भिद्यते यस्या वा ॥ २८ ॥

१—निघ० ३, २,६।

परिवृक्ता होतारमाह। यत् यदा देवासः देवाः दीव्यन्ति क्रीडन्ति देवा होत्रादय ऋत्विजो ललामगुं लिङ्गं प्र आविषुः योनौ

सानुचरो महिषी ब्रह्माणं प्रत्याह। हे ब्रह्मन् ते तव माता ते पिता च यदि वृक्षस्य वृक्षविकारस्य मञ्चकस्याग्रे क्रीडतः रमेते तदा तवोत्पत्तिरिति तवापि तुल्यम्। यत्रोभयोः समो दोषः परिहारोऽपि वा समः नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे इति न्यायात्त्वयेदं न वक्तव्यमिति भावः। एवं सत्यपि विवक्षतः वक्तुमिच्छोरिव ते तव मुखं लक्ष्यतइति शेषः। हे ब्रह्मन् त्वं मा बहु वदः मा ब्रूहि ॥ २५

उद्गाता वावातामाह। कश्चिन्नरं प्रत्याह। हे नर एनां वावातामूर्ध्वामुच्छ्रापय उच्छ्रितां कुरु। कथमिव गिरौ भारं हरन्निव

माताचतेपिताचतेऽग्रंवृक्षस्यक्रीडतः। विवक्षतइवतेमुखंब्रह्मन्मात्वंवदोबहु ॥ २५ ॥

ऊर्ध्वामेनामुच्छ्रापयगिरौभारꣳहरन्निव। अथास्यै मध्यमेधताꣳशीतेवातेपुनन्निव ॥ २६ ॥

यथा कश्चित् गिरौ पर्वते भारं हरन् पर्वतोपरि भारमारोपयन् यथा तमुच्छ्रयति तथैनामूर्ध्वां कुरु। कथमूर्ध्वा कार्या तदाह अथेति निपातो यथार्थः यथा अस्यै अस्या वावाताया मध्यमेधतां योनिप्रदेशो वृद्धिं यायात् यथा योनिर्विशाला भवति तथा मध्ये गृहीत्वोच्छ्रापयेत्यर्थः। दृष्टान्तान्तरमाह शीते वाते पुनन्निव यथा शीतले वायौ वाति पुनन्धान्यपवनं कुर्वाणः कृषीवलो धान्यपात्रं यथा ऊर्ध्वं करोति तथेत्यर्थः ॥ २६ ॥

हलाशब्दो भवतीत्यर्थः। गभे वर्णविपर्यय आर्षः भगे योनौ शकुनिसदृश्यां यदा पसो लिङ्गमाहन्ति आगच्छति पस इति पसतेः स्पृशतिकर्मण इति[1] यास्कः पुंप्रजननस्य नाम हन्तिर्गत्यर्थः यदा भगे शिश्नमागच्छति तदा धारका धरति लिङ्गमिति धारका योनिर्निगल्गलीति नितरां गलति वीर्यं क्षरति यद्वानुकरणम् गल्गलेति शब्दं करोति ॥ २२ ॥

[1]—निरु० ५,१६।

कुमारी अध्वर्युं प्रत्याह। अङ्गुल्या शिश्नं प्रदर्शयन्त्याह। हे अध्वर्यो यकः यः असकौ असौ शकुन्तकः पक्षीव विवक्षतः

**यकोसकौशकुन्तकआहलगितिवञ्चति। विवक्षतइवतेमुखमध्वर्योमानस्त्वमभिभाषथाः ॥ २३ ॥**

**माताचतेपिताचतेग्रंवृक्षस्यरोहतः। प्रतिलामीतितेपितागभेमुष्टिमतꣳसयत् ॥ २४ ॥**

वक्तुमिच्छतस्ते तव मुखमिव आहलगिति वञ्चति इतस्ततश्चलति अग्रभागे सच्छिद्रं लिङ्गं तव मुखमिव भासते। अतो नोऽस्मान्प्रति मा अभिभाषथाः मा वद तुल्यत्वात् ॥ २३ ॥

ब्रह्मा महिषीमाह। महिषि हये हये महिषि ते तव माता च पुनस्ते तव पिता यदा वृक्षस्य वृक्षजस्य काष्ठमयस्य मञ्चकस्याग्रमुपरिभागं रोहतः आरोहतः तदा ते पिता गभे भगे मुष्टिं मुष्टितुल्यं लिङ्गमतंसयत् तंसयति प्रक्षिपति एवं तवोत्पत्तिरित्यश्लीलम् तंसि अलङ्कृतौ चुरादिः लिङ्गमुत्थानेनालंकरोति वा। किं कुर्वन् प्रतिलामीति वदन्निति शेषः तिल स्नेहने तव भोगेन स्निह्यामीति वदन्। एवं तवोत्पत्तिः ॥ २४ ॥

का० उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयते ॥ अश्वदेवत्या गायत्री । हे वृषन् सेक्तः अश्व महिष्या गुदमव गुदोपरि रेतो धेहि वीर्यं धारय कीदृश्याः उत्सक्थ्याः उत् ऊर्ध्वे सक्थिनी ऊरू यस्याः सा उत्सक्थी तस्याः । कथम् तदाह अञ्जिं लिङ्गं सञ्चारय अनक्ति व्यनक्ति पुंस्त्वमित्यञ्जिर्लिङ्गम् लिङ्गं योनौ प्रवेशय योऽञ्जिः स्त्रीणां जीवभोजनः जीवयति जीवः भोजयति भोजनः जीवश्चासौ भोजनश्च जीवभोजनः यस्मिन् लिङ्गे योनौ प्रविष्टे स्त्रियो जीवन्ति भोगांश्च लभन्ते तं प्रवेशय ॥२१॥ १—२०,६,१७। २—२०,६,१८।

**उत्सक्थ्याऽअव गुदन्धेहि समञ्जिञ्चारया वृषन् । य स्त्रीणाञ्जीवभोजनः ॥ २१ ॥**

**यकासकौ शकुन्तिकाहलगिति वञ्चति । आहन्ति गभे पसो निगल्गलीति धारका ॥ २२ ॥**

का० अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति दशर्चस्य द्वाभ्यां द्वाभ्याꣳ हये-हयेऽसावित्यामन्त्र्या-मन्त्र्य २। अध्वर्य्वादयः पञ्च हये-हयेऽसाविति सम्बुद्ध्यन्तनामोच्चारणपूर्वकं सम्मुखीकृत्य यकासकाविति दशर्चसम्बन्धिनीभ्यां द्वाभ्यामृग्भ्यां कुमारीपत्नीभिः सह सोपहासं संवदन्ते तत्र प्रथममध्वर्युः कुमारीं पृच्छति कुमारि हये हये कुमारि यकासकौ शकुन्तिकेतीत्यर्थः ॥ कुमार्यादिदेवत्या दश तन्मध्ये द्वितीयोपरिष्टाद्बृहती अन्या नवानुष्टुभः । अव्ययसर्वनाम्नामकच् प्राक् टेरिति अकच् कुत्सायाम् । अल्पा शकुन्तिः शकुन्तिका अल्पार्थे कन् । अङ्गुल्या योनिं प्रदर्शयन्नाह । यका या असकौ असौ शकुन्तिका अल्पपक्षिणीव आहलक् शब्दानुकरणम् हलं हलं इति शब्दयन्ती वञ्चति गच्छति । स्त्रीणां शीघ्रगमने योनौ हल-

मध्ये गणपतिं गणरूपेण पालकम् प्रियाणां वल्लभानां मध्ये प्रियपतिं प्रियस्य पालकम् निधीनां सुखनिधीनां मध्ये निधिपतिं सुखनिधेः पालकं त्वां हवामहे । हे वसुरूप अश्व मम पतिस्त्वं भूया इति शेषः ॥ का० प्रचालितेषु महिष्यश्वमुपसंविशत्याह-मजानीनि । प्रचालितेषु शोधितेषु पशूनां प्राणेषु पत्नीभिरध्वर्युणा यजमानेन प्राणशोधने कृते महिषी अश्वसमीपे शेते ॥ अश्वदेवत्यम् । हे अश्व गर्भधं गर्भं दधाति गर्भधं गर्भधारकं रेतः अहम् आ अजानि आकृष्य क्षिपामि अज गतिक्षेपणयोः लोट् त्वं च गर्भधं रेतः आ अजासि आकृष्य क्षिपसि ॥ १९ ॥

ताऽउभौ चतुरः पदः सम्प्रसारयाव स्वर्गे लोके प्रोर्णुवाथां वृषा वाजी रेतोधा रेतो दधातु ॥ २० ॥

पूर्वमन्त्रशेषः । तौ त्वमहं च उभौ चतुरः पदः पादानावां सम्प्रसारयाव तत्र द्वौ मम द्वौ एवं संवेशनप्रकारः ॥ का० अधीवासेन प्रच्छादयति स्वर्गे लोकइति[1] । अधीवासेनाश्वमहिष्यौ छादयति अथ उपरिष्टादाच्छादनचर्म यागोऽधीवासः ॥ अश्वदेवत्यम् । अध्वर्युर्वदति । हे अश्वमहिष्यौ युवां स्वर्गे लोके ऽस्मिन् यज्ञभूमौ प्रोर्णुवाथां वास आच्छादयतम् ऊर्णुञ् आच्छादने एष वै स्वर्गो लोको यत्र पशुꣳ संज्ञपयन्तीति श्रुतिः[2] ॥ का० अश्वशिश्नमुपस्थे कुरुते वृषा वाजीति[3] । महिषी स्वयमेवाश्वशिश्नमाकृष्य स्वयोनौ स्थापयति ॥ अश्वदेवत्यम् । वाजी अश्वो रेतो दधातु मयि वीर्यं स्थापयतु कीदृशोऽश्वः वृषा सेक्ता रेतोधाः रेतो दधातीति रेतोधाः वीर्यस्य धारयिता ॥ २० ॥

१—२०,६,१४ । २—२०,६,१५ । ३—१३,२,८,५ । ४—२०,६,१६ ।

तानि कश्चन नरो मां न नयति अश्वं प्रति न प्रापयति तर्हि किं नये गम्यते तत्राह अश्वकः कुत्सितोऽश्वोऽश्वकः अकुत्सितोऽपीर्ष्यया कुत्स्यते सुभद्रिकां कुत्सिता सुभद्रा सुभद्रिका ईर्ष्यया कुत्स्यते तां नारीमादाय ससस्ति शेते सस स्वप्ने धातुः मद्गमनेऽश्वोऽन्यामादाय शयिष्यत इति मया गम्यते न तु मां कश्चिन्नयतीति भावः । किंभूतां सुभद्रिकां काम्पीलवासिनीं काम्पीले नगरे वसतीति काम्पीलवासिनी ताम् तत्र हि विदग्धाः सुरूपाः कामिन्यो भवन्ति आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बे अम्बालेऽम्बिकेपूर्वे इति प्रकृतिभावः ॥ १८ ॥

१—२०,६,१३,

गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम ।

आहमजानि गर्भधमा त्वमजासि गर्भधम् ॥ १९ ॥

का० अश्वं त्रिस्त्रिः परियन्ति पितृवत्सव्यं गणानां प्रियाणां निधीनामिति[1] । सर्वाः पत्न्यः पात्नेजनहस्ता एव प्राणशोधनात्प्राक् अश्वं त्रिस्त्रिः परियन्ति सव्यं पितृवत् अप्रदक्षिणं परियन्ति त्रिः त्रिभिर्मन्त्रैः वसो ममेति त्रिष्वप्यनुषङ्गः ततश्चैवम् प्रथमं गणानामिति त्रिः प्रदक्षिणं परियन्ति तत्र सकृन्मन्त्रेण द्विस्तूष्णीम् ततः प्रियाणामित्यप्रदक्षिणं त्रिः निधीनामिति प्रदक्षिणं त्रिः एवं नवकृत्व इति सूत्रार्थः । त्रीणि यजूंषि लिङ्गोक्तदेवत्यानि । हे अश्व वयं त्वां हवामहे आह्वयामः कीदृशं त्वाम् गणपतिं गणानां

मोचणीरपः पिब। तथा च श्रुतिः यावानग्नेर्विजयो यावांल्लोको यावदश्वर्यं तावांस्ते विजयस्तावांल्लोकस्तावदैश्वर्यं भविष्यतीत्येवैनं तदाहेति (१३) ॥ वायुः पशुरासीत् सूर्यः पशुरासीत् वायुलोकोऽन्तरिक्षं सूर्यलोकः स्वर्गः तावपि ते भविष्यत इत्यर्थः ॥ १७ ॥

का० परिपशव्यं हुत्वा प्राणाय स्वाहेति तिस्रोऽपराः[१] । परिपशव्यं स्वाहा देवेभ्यो देवेभ्यः स्वाहेति द्वे आहुती हुत्वा प्राणायेत्याद्यास्तिस्र आहुतीर्जुहोति एकामश्वसंज्ञपनादौ चतस्रोऽन्ते इति सूत्रार्थः ॥ त्रीणि यजूंषि । प्राणाय अपानाय व्यानाय आभि-

त्तेनायजन्त सएतंल्लोकमजयद्यस्मिन्त्सूर्यःसतेलोकोभविष्यतितञ्जेष्यसिपिबैताअपः ॥ १७ ॥

प्राणायस्वाहापानायस्वाहाव्यानायस्वाहा। अम्बेअम्बिकेम्बालिकेनमानयतिकश्चन। ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ १८ ॥

१—२०,६,११ । २—२०,६,१२ ।

राहुतिभिरश्वं प्राणवन्तं करोति। तथा च श्रुतिः। प्राणानेवास्मिन्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टं भवतीति ॥ का० वाचयति पत्नीर्नयन्नमस्तेऽम्ब इति[२] । सर्वाः पत्नीः पशुशोधनाय पात्नेजनीहस्ताः पशून्प्रति नयन्नमस्तेआतानेति प्राकृतं मन्त्रमम्बे-इत्याद्यमधिकं च वाचयतीति सूत्रार्थः ॥ अश्वदेवत्यानुष्टुप्। पत्न्यः परस्परं वदन्ति हे अम्बे हे अम्बिके हे अम्बालिके नामान्ये-

आर्षी त्रिष्टुप् । हे अश्व अस्माभिर्यत्त्वं संज्ञप्यसे एतत्त्वं न म्रियसे मरणं नाप्नोषि न च रिष्यसे न विनश्यसि विशस्यमानः । वै उ निपातौ पादपूरणौ । यत्सु गेभिः सुगैः सुदुरोरधिकरणऽइति गमेर्डप्रत्ययः साधुगमनैः पथिभिः देवयानमार्गैः देवानित् देवान्-प्रति एषि गच्छसि । किञ्च सुकृतः साधुकारिणो नरा यत्र लोके आसते तिष्ठन्ति यत्र च ते सुकृतो ययुर्गताः तत्र लोके सविता देवः त्वा त्वां दधातु स्थापयतु सवितैवैनᳪं स्वर्गे लोके दधातीति (१२) श्रुतेः ॥ १६ ॥

१—२०,६,८।

नवाऽउऽएतन्म्रियसेनरिष्यसिदेवाँ२॥ऽइदेषिपथिभिःसुगेभिः।यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसविताऽदधातु१६

अग्निःपशुरासीत्तेनायजन्तसएतंलोकमजयद्यस्मिन्नग्निःसतेलोकोभविष्यतितञ्जेष्यसिपिबैताअपः । वायुः

पशुरासीत्तेनायजन्तसएतंलोकमजयद्यस्मिन्वायुःसतेलोकोभविष्यतितञ्जेष्यसिपिबैताअपः । सूर्य्यःपशुरासी

का० उपगृह्णात्यपां पेरुरग्निः पशुरिति१ । अपां पेरुरिति प्राकृतेन मन्त्रेणाग्निः पशुरिति वैकृतेन च प्रोक्षणीरश्वास्ये उपगृह्णातीति सूत्रार्थः ॥ अश्वदेवत्यानि त्रीणि जूंषि । सृष्टिदेवानामग्निः पशुरासीत् तेनाग्निरूपेण पशुना देवा अयजन्त ईजिरे स पशुभावमुपगतोऽग्निः एतं लोकं पृथ्वीलोकमजयत् यस्मिन् लोकेऽग्निः हे अश्व ! स लोकः ते तव भविष्यति तं लोकं त्वं जेष्यसि एताः

का० सूर्य इत्याचष्टे[१] । होता ब्रह्माणं प्रति वक्ति ॥ सूर्योऽसहायो गच्छति अनेन होतृब्रह्माणौ यजमाने ब्रह्मवर्चसं धत्तः । असौ वाऽआदित्य एकाकी चरत्येष ब्रह्मवर्चसं ब्रह्मवर्चसमेवास्मिंस्तद्धत्त इति[२] श्रुतेः । चन्द्रमाः क्षीणः पुनर्जायते वर्धते अनेनायुर्धत्तः । चन्द्रमा वै जायते पुनरायुरेवास्मिंस्तद्धत्त इति (१) श्रुतेः । हिमस्य भेषजमग्निः अनेन तेजो धत्तः । अग्निर्वै हिमस्य भेषजं तेज एवास्मिंस्तद्धत्त इति (१०) श्रुतेः । भूमिरयं लोको महदावपनम् अनेन प्रतिष्ठां धत्तः । अयं वै लोक आवपनं महदस्मिन्नेव लोके प्रतितिष्ठतीति (१३) श्रुतेः ॥ १० ॥ १—२०,५,२१ । २—१३,२,६,१० । ३—१०,५,१२ ।

सूर्य्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजम्भूमिरावपनम्महत् ॥ १० ॥

का स्विदासीत्पूर्वचित्तिः किं स्विदासीद्बृहद्वयः । का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला ॥ ११ ॥

द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ॥ १२ ॥

का० होता ब्रह्माणं का स्विदासीदिति[४] । होता ब्रह्माणं पृच्छति ॥ पूर्वं चित्यत इति पूर्वचित्तिः सर्वेषां प्रथमस्मृतिविषया का स्वित् बृहत् महत् वयः पक्षी किं स्वित् आसीत् । पिलिप्पिला का स्वित् पिशङ्गिला च का स्विदासीत् ॥ ११ ॥ ४—१०,५,२१ ।

का० द्यौरिति प्रत्याह[५] । ब्रह्मा होतारं प्रति वक्ति ॥ पूर्वचित्तिः पूर्वस्मरणविषया द्यौर्वृष्टिरासीत् द्योशब्देन वृष्टिर्लक्ष्यते सर्वप्राणि-

का० युनक्त्येनं युञ्जन्ति ब्रध्नमिति[१]। अश्वं रथे युनक्ति। मधुच्छन्दोदृष्टा आदित्यदेवत्या गायत्री। तस्थुषः विभक्तिर्व्यत्ययः तस्थिवांसः कर्मार्थं स्थिता ऋत्विजः ब्रध्नमादित्यं युञ्जन्ति रथे योजयन्ति। अत्र आदित्येन स्तूयते असौ वाऽआदित्यो ब्रध्नोऽश्वोऽ-श्वमेवास्याऽआदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्या इति[२] श्रुतेः। किम्भूतं ब्रध्नम् अरुषं रोषति क्रुध्यति रुषः इगुपधेति कः न रुषः अरुषः तं क्रोधरहितम् परिचरन्तं वैदिककर्मसिद्ध्यर्थं सर्वत्र गच्छन्तम्। यस्य ब्रध्नस्य रोचना विभक्तिलोपः रोचनाः दीप्तयो दिवि आकाशे रोचन्ते प्रकाशन्ते यद्वा रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि ब्रध्नस्य भासा रोचन्ते तेजसां गोलकः सूर्यो नक्षत्राण्यम्बु-गोलका इति ज्योतिःशास्त्रोक्तेः ॥ ५ ॥

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः। रोचन्ते रोचना दिवि ॥ ५ ॥

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसा ॥ ६ ॥

का० इतरौ च युञ्जन्त्येति[३]। इतरान् द्वौ नवांश्च युनक्ति। गायत्री अश्वस्तुतिः। ऋत्विजो हरी अश्वौ रथे युञ्जन्ति। कीदृशौ अस्याश्वमेधिकाश्वस्य काम्या काम्यौ काम्येते तौ काम्यौ कामसम्पादिनौ न त्वेकाश्वं रथं वोढं, अश्व इति तौ काम्यौ विपक्षसा पक्ष परिग्रहे अयुक्तत्वात् पक्षयन्ति शरीरं बध्नन्ति पक्षसः पक्षाः विविधाः पक्षसः पक्षाः ययोस्तौ विपक्षसौ यद्वा विरिति शकुनिनाम[४]

१–२०,५,११। २–१३,२,६,१। ३–२०,५,११। ४–निरु०२,६।

प्राणतः प्राणनं जीवनं कुर्वतो निमिषतो निमेषं कुर्वतः उपलक्षणमेतत् इन्द्रियव्यापारं कुर्वतः सचेतनस्य जगतः विश्वस्य एक एव राजा बभूव येन महित्वा महेर्महिम्नो भावो महित्वं तेन महित्वेन विभक्तेः पूर्वसवर्णः महाभाग्येनेत्यर्थः । यश्चास्य द्विपदः द्वौ पादौ यस्य स द्विपात् तस्य पादः पदिति पदादेशः द्विपदस्य मनुष्यपक्ष्यादेः चतुष्पदः हस्तिगवादेः प्राणिजातस्य ईशे ईष्टे ऐश्वर्यं करोति लोपस्त आत्मनेपदेष्विति तकारलोपे ईशे इति रूपम् अधीगर्थदयेशां कर्मणीति कर्मणि षष्ठी ॥ ३ ॥

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिश्चन्द्रमास्ते महिमा । यस्ते रात्रौ संवत्सरे महिमा सम्बभूव यस्ते पृथिव्यामग्नौ महिमा सम्बभूव यस्ते नक्षत्रेषु चन्द्रमसि महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये देवेभ्यः स्वाहा ॥ ४ ॥

उपयामपात्रेण गृहीतोऽसि प्रजापतये जुष्टं त्वां गृह्णामि ॥ सादयति । एष ते । चन्द्रमास्ते तव महिमा दीप्तिः ॥ का॰ वपान्ते द्वितीयेन पूर्ववदस्ते रात्राविति जुहोति१ । वपायागान्ते द्वितीयेन महिम्ना पूर्ववदिति सर्वहुतं महिमानं जुहोति ॥ अर्थः हे महिमन् रात्रौ संवत्सरे च यस्ते तव महिमा सम्बभूव पृथिव्यामग्नौ च यस्ते महिमा सम्बभूव नक्षत्रेषु चन्द्रमसि च यस्तव महिमा सम्बभूव सर्वव्यापकस्तव यो महिमा तस्मै महिम्ने प्रजापतये देवेभ्यश्च स्वाहा सुहुतमस्तु ॥ ४ ॥ १—२०,७,१९।

मघवे। मघ्वादयो मासाधिष्ठातारः ॥३१॥ वाजाय। वाजादयोऽन्नाधीशाः ॥३२॥ आयुः। यज्ञेनाश्वमेधेनायुः कल्पताम्। एवमग्रेऽपि प्रार्थनामन्त्राः ॥३३॥ एकस्मै। सङ्ख्याधीशाः। व्युष्टी रात्रिः स्वर्गो दिनम्। रात्रिर्वै व्युष्टिरहः स्वर्गोऽहोरात्रे एव तत्प्रीणातीति[1] श्रुतेः। प्राणादयोऽश्वमेधस्यावयविनोऽवयवाः स च प्रजापतेरवयवः स आत्मन इत्यात्मैव स्तूयते स्तूयत इति भावः। सर्वमिदं यदयमात्मेति श्रुतेः ॥३४॥

१—१३,२,१,६। २—२०,५,१—२।

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। अश्वमेधाहुतिर्नाम द्वाविंशोऽध्याय ईरितः ॥ २२ ॥

एकस्मै स्वाहा द्वाभ्याᳬ स्वाहा शताय स्वाहैकशताय स्वाहा व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ॥ ३४ ॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां द्वाविंशोऽध्यायः ॥ २२ ॥

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १॥

श्रीगणाधिपतये नमः। द्वाविंशे होममन्त्रास्त्रयोविंशेऽध्याये शिष्टं कर्मोच्यते ॥ का० प्रातरुक्थ्यो महिमानौ गृह्णाति सौवर्णेन पूर्वᳬ हिरण्यगर्भ इति[2]। प्रातर्द्वितीयेऽहनि उकथ्यसंस्थमहर्भवति तत्र महिमसञ्ज्ञौ द्वौ ग्रहौ गृह्णाति आगन्तुत्वादाग्रयणोकथ्ययोर्मध्ये तौ गृह्णाति अन्तराग्रयणोक्थावागन्तुस्थानं ग्रहाणामिति वचनात् द्वयोर्मध्ये पूर्वं महिमानं सौवर्णेनोलूखलेन गृह्णाति ॥ व्याख्याता (१३,४)।२

वाजायस्वाहाप्रसवायस्वाहापिजायस्वाहाक्रतवेस्वाहास्वःस्वाहामूर्ध्नेस्वाहाव्यश्नुविनेस्वाहान्त्यायस्वाहान्त्यायभौव
नायस्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहाप्रजापतयेस्वाहा ॥ ३२ ॥

आयर्यज्ञेनकल्पताᳪंस्वाहाप्राणोयज्ञेन कल्पताᳪंस्वाहापानोयज्ञेनकल्पताᳪंस्वाहाव्यानोयज्ञेनकल्पताᳪं
स्वाहोदानोयज्ञेन कल्पताᳪंस्वाहासमानोयज्ञेन कल्पताᳪंस्वाहाचक्षुर्यज्ञेनकल्पताᳪंस्वाहाश्रोत्रंयज्ञेन
कल्पताᳪंस्वाहावाग्यज्ञेनकल्पताᳪंस्वाहामनोयज्ञेनकल्पताᳪंस्वाहाब्रह्मायज्ञेनकल्पताᳪंस्वाहा
ज्योतिर्यज्ञेनकल्पताᳪंस्वाहास्वर्यज्ञेनकल्पताᳪंस्वाहापृष्ठंयज्ञेनकल्पताᳪंस्वाहायज्ञोयज्ञेनकल्पताᳪंस्वाहा॥३३

वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ॥ २९ ॥

असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा गणश्रिये स्वाहा गणपतये स्वाहाभिभुवे स्वाहाधिपतये स्वाहा शूषाय स्वाहा संसर्पाय स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहा मलिम्लुचाय स्वाहा दिवा पतयते स्वाहा ॥ ३० ॥

मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा नभसे स्वाहा नभस्याय स्वाहेषाय स्वाहोर्जाय स्वाहा सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहांहसस्पतये स्वाहा ॥ ३१ ॥

प्राच्यै । दिग्देवताः ॥ २४ ॥ अद्भ्यः । जलदेवताः ॥ २५ ॥ वाताय । मेघोपयोगिदेवताः ॥ २६ ॥ अग्नये । अग्न्यादयः प्रसिद्धाः ॥ २७ ॥ नक्षत्रेभ्यः । नक्षत्रादयः कालाधिष्ठातारः ॥ २८ ॥ पृथिव्यै । पृथिव्यादयो लोकाधिष्ठातारः ॥ २९ ॥ असवे । असवादयश्च ॥ ३० ॥

र्व्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ २७ ॥

नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाहोरात्रेभ्यः स्वाहार्धमासेभ्यः स्वाहा मासेभ्यः स्वाहर्तुभ्यः स्वाहार्तवेभ्यः
स्वाहा संवत्सराय स्वाहा द्यावापृथिवीभ्याᳪं स्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा वसुभ्यः
स्वाहा रुद्रेभ्यः स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा
वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥ २८ ॥

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहौषधीभ्यः स्वाहा

अद्भ्यःस्वाहावार्भ्यःस्वाहोदकायस्वाहातिष्ठन्तीभ्यःस्वाहास्रवन्तीभ्यःस्वाहास्यन्दमानाभ्यःस्वाहाकूप्याभ्यःस्वाहा

सूद्याभ्यःस्वाहाधार्याभ्यःस्वाहार्णवायस्वाहासमुद्रायस्वाहासरिरायस्वाहा ॥ २५ ॥

वातायस्वाहाधूमायस्वाहाभ्रायस्वाहामेघायस्वाहाविद्योतमानायस्वाहास्तनयतेस्वाहावस्फूर्जतेस्वाहावर्षते

स्वाहाववर्षतेस्वाहोग्रंवर्षतेस्वाहाशीघ्रंवर्षतेस्वाहोद्गृह्णतेस्वाहोद्गृहीतायस्वाहाप्रुष्णतेस्वाहाशीकायतेस्वाहा

प्रुष्वाभ्यःस्वाहाह्रादुनीभ्यःस्वाहानीहारायस्वाहा २६ ॥

अग्नयेस्वाहासोमायस्वाहेन्द्रायस्वाहापृथिव्यैस्वाहान्तरिक्षायस्वाहादिवेस्वाहादिग्भ्यःस्वाहाशाभ्यःस्वाहो,

का० आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वाहेति प्रतिमन्त्रꣳ सर्वरात्रमावर्तम्१ । आज्यादीनां प्रतिप्रहरमेकैकं क्रमेण सर्वरात्रमुत्तरवेदिस्थाग्नौ जुहोति प्राणाय स्वाहेत्यादिमन्त्रगणमेकैकद्रव्येणावृत्त्या । जिं कृत्वा आवर्तम् प्राणाय स्वाहेत्यादिकमेकशताय स्वाहेत्यन्तं मन्त्रगणमावर्त्याविच्छिन्नं सर्वरात्रमिति द्वितीयायां रात्रौ आवृत्तावृत्या रात्रेः कार्त्स्न्येन संयोगः कार्यः ततः प्रथमयामे

प्राणायस्वाहापानायस्वाहाव्यानायस्वाहाचक्षुषेस्वाहाश्रोत्रायस्वाहावाचेस्वाहामनसेस्वाहा ॥ २३ ॥

प्राच्यै दिशेस्वाहार्वाच्यै दिशेस्वाहादक्षिणायै दिशेस्वाहार्वाच्यै दिशेस्वाहाप्रतीच्यै दिशेस्वाहार्वाच्यैदिशेस्वाहो

दीच्यै दिशेस्वाहार्वाच्यैदिशेस्वाहोर्ध्वायैदिशेस्वाहार्वाच्यैदिशेस्वाहावाच्यै दिशेस्वाहार्वाच्यै दिशेस्वाहा ॥ २४॥

घृतेन यागः द्वितीये सक्तुभिः तृतीये धानाभिः चतुर्थे लाजैः । एकस्मै इति द्वादशेऽनुवाके एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेत्यत्र त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहा पञ्चभ्यः स्वाहा षड्भ्यः स्वाहा सप्तभ्यः स्वाहा अष्टभ्यः स्वाहा नवभ्यः स्वाहेत्येवमादयो मन्त्रा अपठिता अपि एकैकोच्चयेन शतपर्यन्ताः प्रयोज्याः । एकोत्तरा जुहोतीति२ श्रुतेः । व्युष्टायां समाप्तायां रात्रौ व्युष्ट्यै स्वाहेति घृताहुतिमेकामुदिते सूर्ये स्वर्गाय स्वाहेति च जुहोतीति सूत्रार्थः ॥ लिङ्गोक्तदेवतानि यजूंषि । प्राणादय इन्द्रियदेवाः ॥ २३ ॥ १—२०,४,२१ ।

२—१३,२,१,५ ।

विमूर्धावेति अपानन्तरमित्यर्थः ॥ लिङ्गोक्तदेवता उत्कृतिः । हे ब्रह्मन् राष्ट्रेऽस्मदीये ब्रह्मवर्चसी यज्ञाध्ययनशीलो ब्राह्मण आजायतामुत्पद्यताम् । राजन्यः क्षत्रियश्चेह आजायताम् । कीदृशः शूरः पराक्रमी । शूर विक्रान्तौ शूरयति शूरः । इषव्यः इषुभिर्विध्यतीति इषव्यः यद्वा इषौ कुशलः इषव्यः । अतिव्याधी अत्यन्तं विध्यतीत्यतिव्याधी शत्रुभेदनशीलः । महारथः एकः सहस्रं जयति स महारथः । दोग्ध्री दुग्धपूरयित्री धेनुः आजायतां राष्ट्रे इति सर्वत्र सम्बन्धः । अनड्वान् वृषभो वोढा वहनशीलो जायताम् । सप्तिरश्व आशुः शीघ्रगामी जायताम् । योषा स्त्री पुरन्धिः पुरं शरीरं सर्वगुणसम्पन्नं दधाति पुरन्धिः । रथे तिष्ठति रथेष्ठाः क्विप् सप्तम्या अलुक् रथे स्थितो युयुत्सुर्नरो जिष्णुः जयनशीलो जायताम् । युवा आ अस्येति पदच्छेदः अस्य यजमानस्य युवा समर्थः सभेयो सभायां योग्यो वीरः पुत्रो जायताम् सभायां साधुः सभेयः ढश्छन्दसीति सभाशब्दात्साध्वर्थे ढप्रत्ययः । तस्य एयादेशः । किञ्च नोऽस्माकं राष्ट्रे पर्जन्यो निकामे निकामे नितरां कामनायां सत्यां वर्षतु अभ्यासो नित्यार्थः । नोऽस्माकमोषधयः यवाद्याः फलवत्यः फलयुक्ताः पच्यन्तां स्वयमेव पक्का भवन्तु । नोऽस्माकं योगक्षेमः कल्पतां योगेन युक्तः क्षेमो योगक्षेमः स क्लृप्तो भवतु अलब्धलाभो योगः लब्धस्य परिपालनं क्षेमः ॥२२॥

ढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो

वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ २२ ॥

दिधेष्टि प्रस्ग्रयति उदग्रेण स नरन्धिषः तस्मै पूष्णे दुग्रुपधेति कः। त्वष्टे त्वचति तनूकरोति त्वष्टा तस्मै तुरीपाय तुर वेगे तस्य रूपं तुरी वेगस्तं पाति रचति तुरीपस्तस्मै त्वष्ट्रे पुरुरूपाय पुरूणि बहूनि रूपाणि यस्य तस्मै त्वष्ट्रे। वेवेष्टि व्याप्नोति विष्णुस्तस्मै निभूयपाय नितरां भूत्वा मत्स्याद्यवतारं कृत्वा पाति निभूयपस्तस्मै विष्णवे शिपिषु पशुषु प्राणिषु विष्टः प्रविष्टोऽन्तर्यामिरूपेण शिपिविष्टस्तस्मै विष्णवे॥ एते औदग्रभणमन्त्राः॥ २०॥

विष्णोर्देवस्य नेतुर्मर्तो वुरीत सख्यम्। विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा॥ २१॥

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वो

का० षडात्मिकानि चतुःस्थाने दशमं विष्णो देवस्येति[1]। सप्तम्यां दीक्षणीयायामयं विशेषः प्रययानि चत्वार्यौदग्रभणान्याध्वरिकाणि हूयन्ते तेषां चतुर्णां स्थाने षडात्मिकानि आकूति प्रयुजमग्नि्ँ स्वाहेति (११,६६) हुत्वाश्वमेधिकानि च त्रीणि विष्णवे स्वाहेत्यादीनि हुत्वा विष्णो देवस्येति दशममौदग्रभणं जुहोतीति सूत्रार्थः॥ व्याख्याता (४,८)॥ २१॥ १——२०,४,९-१०।

का० कृष्णाजिनाद्या समिद्धानात् कृत्वा ब्रह्मन्निति जगत्युत्सर्गकालएके। कृष्णाजिनदीक्षात आरभ्योखायां वयोदशसमिदाधानान्तं कृत्वाध्वर्युर्वा ब्रह्मन्निति जपति उत्सर्गैरुपतिष्ठतऽइत्यु कर्मोपदहनकाले एके आ ब्रह्मन्निति जपमिच्छन्ति यद्वाश्वस्योत्सर्गकाले

यादिव समाप्य प्रयाजिनदीया तत्रोपवेशमान्ता कर्तव्या। समाहं प्रवरन्तीतिः श्रुतेः। समाहं दीक्षणीया कार्या तत्र मन्त्रं कर्तव्यमाह अध्वरदीक्षणीयायाश्चत्वारि चत्वारींद्यभयानि आकूत्यै प्रयुजे इत्यादीनि त्रीणि त्रीणि चान्यमिधिकानि काव स्वाहेत-कण्डिकापठितानि प्रत्यहमन्यान्यन्यानि पाठक्रमेण एवं सप्तसु प्रत्यहं हूयन्ते। काय स्वाहेति कण्डिकायां सप्त त्रिकाणि पठितानि तन्मध्ये सप्तस्वहःसु क्रमेणैकेकं त्रिकं हूयते तत्र द्वितीयत्रिके स्वाहाकाराद्यं मन्त्रयं स्वाहाधिमाधीतायेत्यादीति सूत्रार्थः॥ औद्ग्रभणदृश्यानि यजूंषि लिङ्गोक्तदेवतानि। काय प्रजापतये सुहृतमस्तु कस्मै प्रजापतये कतमस्मै प्रजापतिश्च हाय। आधिमाधानमाधीताय प्राप्ताय मनः मनसि वर्तमानाय प्रजापतये चित्तं विज्ञाताय सर्वेषां चित्तसाक्षिणे। अदित्यै अखण्डितायै

स्वाहादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहा सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा

पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा

विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहा ॥ २० ॥

१—१२,१,७,१।

मह्यै पूज्यायै अदित्यै सुमृडीकायै सुखयित्र्यै अदित्यै। सरस्वत्यै वागभिमानिन्यै पावयति पावका तस्यै शोधयित्र्यै सरस्वत्यै बृहत्यै महत्यै सरस्वत्यै। पूष्णे प्रपथ्याय प्रगतः पन्थाः प्रपन्थाः तत्र भवः प्रपथ्यः तस्मै पूष्णे नरान्धिषाय धिष् शब्दे हादिर्वैदिकः नर

विशेषेण धारयामि इष्टये केन हेतुना गोजीरया जीवनं जीरा यस्य रेफः छान्दसः गवां जीरा गोजीरा तया गवां जीविकाहेतुना अन्नं धारयामि तासां हविषा यज्ञनिष्पत्तेः प्राणिनां जीवनाच्च। कीदृशस्त्वं पुरन्ध्या रंहमाणः पुरं बहु दधाति पुरन्धिर्धीस्तया रंहमाणः रंहतइति रंहमाणो गच्छन् दयापवित्वादुद्रावकत्वमभिगच्छन्नित्यर्थः। विधारे विधारये विधारयसि पुरुषव्यत्ययः धारयतेश्लाकि लटि उत्तमैकवचने धारये इति प्राप्ते छन्दस्युभयथेति शितोऽप्यार्धधातुकत्वे सति णेरनिटीति णिलोपे धारे इति रूपम्॥ १८॥

१—२०,१,१८। १०-१३,१,६,८।

विभूर्मात्रा प्रभुः पित्राश्वोऽसि हयोऽस्यत्योऽसि मयोऽस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणा असि। ययुर्नामासि शिशु

का० अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति। तृतीयायां सावित्र्यामिष्टौ समाप्तायामध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति सूत्रार्थः॥ अश्वदैवतं यजुः अतिजगतीच्छन्दस्कम्। मात्रा पित्रेति तृतीये पञ्चम्यर्थे हे अश्व त्वं मात्रा मातुः पृथिव्याः सकाशात् विभूरसि विभवति विभुः समर्थोऽसि पित्रा पितुः सकाशाद्दिवः प्रभुः समर्थोऽसि इयं वै मातासौ पिता ताभ्यामेवैनं परिददातीति श्रुतेः। अथ नामभिरश्वं स्तौति त्वमश्वोऽसि अश्नुते व्याप्नोति मार्गम्। अन्यत्र: अशूप्रुषेत्यादिना अशेः क्वन्प्रत्ययः अश्नाति वाश्वः। हयोऽसि हयति याति हयः हय गतौ पचाद्यच्। अत्योऽसि अत सातत्यगमने अततीत्यत्यः सततगामी औणादिको यत्प्रत्ययः। मयोऽसि मयते गच्छति मयः मय गतौ पचाद्यच् यद्वा मय इति सुखनाम सुखरूपोऽसि। अर्वासि इयर्ति गच्छति अर्वा स्नामदियर्तिपृधिभ्यो वनिबिति वनिप्प्रत्ययः यद्वा अर्वति हिनस्ति रिपूनित्यर्वा कनिन्प्रत्ययः। सप्तिरसि सपति

सोऽग्निर्धिया बुद्ध्या समृण्वति सङ्गच्छते देवैः सह हविर्दानाय। कीदृशोऽग्निः हव्यवाट् हव्यं वहतीति हविषां वोढा। अमर्त्यः मरणहीनः। उशिक् वष्टि उश्यते वा सर्वैरित्युशिक् कामनीयः मेधावी वा। दूतः देवानां दूत्यकर्ता। चनोहितः[१] । चन इत्यन्ननाम चनसेऽन्नाय हितः हवीरूपान्नस्यादनाय स्थापितः ॥ १६ ॥ १—निरु० ६.१५

यमग्निमहं पुरो दधे पुरतः स्थापयामि तं प्रति उपब्रुवे कथयामि। किम् तदाह। हे अग्ने इह यज्ञे त्वं देवानासादयात् आसादय स्थापय। कीदृशमग्निं दूतं देवानां हव्यवाहं हविषां वोढारम् ॥ १७ ॥

स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः। अग्निर्धिया समृण्वति ॥ १६ ॥

अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ आ सादयादिह ॥ १७ ॥

अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः। गोजीरया रंहमाणः पुरन्ध्या ॥ १८ ॥

अवत्सारस्यार्षं दृष्टा पवमानदेवत्या पिपीलिकामध्या कृतिरनुष्टुप्। यस्या आद्यतृतीयौ पादौ द्वादशार्णौ द्वितीयोऽष्टार्णः सा पिपीलिकामध्या कृतिरनुष्टुप् आगतावष्टकश्च कृतिर्मध्ये चेदष्टकः पिपीलिकमध्येति वचनात्। पवमानस्तुतिः। हे पवमान त्वं सूर्यमजीजनः उत्पादितवानसि जनेर्णिजन्ताल्लुङ् शक्मना। शक्नं शक्म शक्लृ शक्तौ मनिन्प्रत्ययः शक्मना सामर्थ्येन पयः जलं विधारे

अहं सवितारमुपह्वये आह्वयामि महे पूजयामि च मह पूजायाम् 'देववीतये' देवानां तर्पणाय । कीदृशं सवितारं रातिं राति ददातीति रातिः नम् ऊतियूतीत्यादिना कर्तरि क्तिप्रत्ययान्तो निपातः । सत्पतिं सतां पतिं पालकम् । आसवम् आभिमुख्येन सौति कर्माण्यनुजानाति आसवस्तम् पचाद्यजन्तः ॥ १३ ॥

सवितुर्देवस्य मतिं बुद्धिं प्रति वयं धिया बुद्ध्या भगं धनं मनामहे याचामहे सवितुर्देवस्य बुद्धिरस्माकं दानतत्परा भव-

रातिꣳसत्पतिम्महेसवितारमुपह्वये । आसवन्देववीतये ॥ १३ ॥

देवस्यसवितुर्मतिमासवंविश्वदेव्यम् । धियाभगम्मनामहे ॥ १४ ॥

अग्निꣳस्तोमेनबोधयसमिधानोअमर्त्यम् । हव्यादेवेषुनोदधत् ॥ १५ ॥

त्वित्यर्थः । कीदृशं भगम् आसवम् आसौत्यनुजानाति येन आसवस्तम् धनेन सर्वं मासां दातुं शक्यत इत्यर्थः । विश्वदेव्यं देवेभ्यो हितम् धनेनैव देवतर्पणादित्यर्थः ॥ १४ ॥

तिस्रः स्विष्टकृति पुरोऽनुवाक्याः । अग्निदेवत्या गायत्र्यो यथाक्रमं सुतम्भरविश्वामित्रविश्वरूपदृष्टाः । हे अध्वर्यो त्वं स्तोमेन स्तुत्या अग्निं बोधय अवगतार्थं कुरु किं कुर्वन् समिधानः समिन्धे स समिधानः सन्दीपयन् कीदृशमग्निम् अमर्त्यं मरणधर्मरहितम् सोऽग्निर्बोधितः सन्नोऽस्माकं हव्या हवींषि देवेषु दधत् धारयतु यस्य सोऽधिकारोऽस्ति ॥ १५ ॥

ऋधातिविहृष्टा। अह सवितारमुपह्वये आह्वयामि। किमर्थम् ऊतये अवनाय। कीदृशं सवितारं हिरण्यपाणिं हिरण्मयो पाणी यस्य तम्। यतः स सविता चेत्ता चेतयिता सवज्ञः। देवता। पदं स्थानं ज्ञानिनाम् ॥ १० ॥

वयं सवितुः देवस्य सुमतिं शोभनां बुद्धिं प्रहवामहे प्रकर्षेण प्रार्थयामहे। कीदृशस्य सवितुः चेततः चेततीति चेतन् तस्य जानतः। कीदृशीं सुमतिं महीं महतीं सत्यराधसं सत्यमनश्वरं राधो धनं यस्यास्ताम् यद्वा सत्यं राधयति साधयति सा सत्यराधास्ताम् ॥ ११ ॥

हिरण्यपाणिमूतये सवितारमुपह्वये। सचेत्ता देवता पदम् ॥ १० ॥ [illegible]

देवस्य चेततो महीम्प्र सवितुर्हवामहे। सुमतिᳬ सत्यराधसम् ॥ ११ ॥ [illegible]

सुष्टुतिᳬ सुमतीवृधो रातिᳬ सवितुरीमहे। प्र देवाय मतीविदे ॥ १२ ॥ [illegible]

देवाय मतिविदे इति चतुर्थी षष्ठ्यर्थे। वयं सवितुर्देवस्य सुष्टुतिं शोभनां स्तुतिं रातिं दानं च प्र ईमहे प्रकर्षेण याचामहे छन्दसि परेऽपीति क्रियापदात्परः प्रशब्दः। कीदृशस्य सवितुः सुमतीवृधः शोभनां मतिं वर्धयति सुमतिवृत् तस्य संहितायामितदीर्घः। तथा मतीविदे सर्वेषां मतिं वेत्ति मतिवित् तस्य पूर्ववद्दीर्घः ॥ १२ ॥

का० दक्षिणाग्नौ जुहोति हिङ्काराय स्वाहेति प्रक्रमान्१ । एतदर्थमेवोद्धृते दक्षिणाग्नौ प्रतिमन्त्रं प्रक्रमसञ्ज्ञान् होमानेकोनपञ्चाशज्जुहोतीत्यर्थः ॥ अश्वस्यैकोनपञ्चाशच्चेष्टितानि व्यापाराः कण्डिकाद्वयेन । हिङ्करणं हिङ्कारस्तस्मै । हिङ्कृताय कृतं यद्धिङ्कृतं तस्मै । क्रन्दतीति क्रन्दन् । अव नीचैः क्रन्दतीत्यवक्रन्दः । प्रोथतीति प्रोथन् प्रोथृ पर्यापणे । प्रकृष्टः प्रोथो घोणा यस्य घोणा तु प्रोथमस्त्रियाम् । गन्धोऽस्यास्ति गन्धः । घ्रातमाघ्राणमस्यास्ति घ्रातः । निविशते निविष्टः । उपविशतीत्युपविष्टः । सम्यक्

स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जा-
ग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृताय स्वाहा सꣳहानाय स्वाहोपस्थिताय स्वाहाय-
नाय स्वाहा प्रायणाय स्वाहा ॥ ७ ॥

यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा

दितं लूनं खण्डनं यस्य स सन्दितः । वल्गतीति वल्गन् । आस्तेऽसावासीनः । शेतेऽसौ शयानः । स्वपितीति स्वपन् । जाग्रतीति जाग्रत् । कूजतीति कूजन् । प्रकर्षेण बुध्यते प्रबुद्धः । विजृम्भते विजृम्भमाणः । चृतौ दोषौ विशेषेण चर्त्तति विचृतः । सꣳहानाय सङ्कुचितशरीराय । उपतिष्ठते उपस्थितः । अयतेऽयनः । प्रकृष्टमयते प्रायणः तस्मै स्वाहा ॥ ७ ॥

१—२०,३,३ ।

भा० अग्निसमोपमानीयाग्नये स्वाहेति जुहोत्यनुवाकेन प्रतिमन्त्रं सहस्रं यावत्तमा। ततः स्थावराभ्योऽद्भ्यः सकाशादप्‌प्रभिप्रापय्यानीयाग्नये स्वाहेत्येकादशकाण्डात्मकेनानुवाकेन प्रतिमन्त्रं सकृद्गृहीत्वा जुह्वा स्तोकीयसञ्ज्ञा दशाज्याहुतीर्जुहोति यद्वानुवाकमावर्त्यावर्त्य सहस्रमाज्याहुतीर्जुहोतीति सूत्रार्थः। दश यजूंषि लिङ्गोक्तदेवतानि। अङ्गतीत्यग्निः। सुनोतीति सोमः। अपां जलानां मोदाय मोदयति हर्षयति मोदः। सूते सविता। वातीति वायुः। वेवेष्टि व्याप्नोति विष्णुः। इन्दतीन्द्रः। बृहतां वेदानां

१-३०,२,४।

अ॒ग्नये॒ स्वाहा॒ सोमा॑य॒ स्वाहा॑पां मोदा॑य॒ स्वाहा॑ सवि॒त्रे स्वाहा॑ वा॒यवे॒ स्वाहा॒ विष्ण॑वे॒ स्वाहेन्द्रा॑य॒ स्वाहा॒ बृह॒स्पत॑ये॒ स्वाहा॑

मि॒त्राय॒ स्वाहा॒ वरु॑णाय॒ स्वाहा॑ ॥ ६ ॥

हि॒ङ्का॒राय॒ स्वाहा॒ हिङ्कृ॑ताय॒ स्वाहा॒ क्रन्द॑ते॒ स्वाहा॑वक्र॒न्दाय॒ स्वाहा॒ प्रोथ॑ते॒ स्वाहा॑ प्रप्रो॒थाय॒ स्वाहा॑ ग॒न्धाय॒ स्वाहा॑ घ्रा॒ताय॑

पतिर्बृहस्पतिः। मेद्यति स्निह्यति मित्रः। वृणोति भक्तं भजते वरुणः। एताभिराहुतिभिरेतेभ्यो दश देवेभ्योऽन्नं ददाति। तथा च श्रुतिः एतावन्तो वै सर्वे देवास्तेभ्य एवैनं जुहोतीति[१] ॥ ६ ॥

१—१३,१,३,२।

प्रोक्षणेन प्रजापतेरिवाश्वे वीर्यं दधाति। तथाच श्रुतिः प्रजापतिर्वै देवानां वीर्यवत्तमो वीर्यमेवास्मिन्दधाति तस्मादश्वः पशूनां वीर्यवत्तम इति[१]। इन्द्राग्निभ्यां जुष्टं त्वां प्रोक्षामि अनेनेन्द्राग्न्योरिवाश्वे ओजो दधाति। तथाच श्रुतिः इन्द्राग्नी वै देवानामोजस्वितमावोज एवास्मिन्दधाति तस्मादश्वः पशूनामोजस्वितम इति[६]। वायवे जुष्टं प्रोक्षं त्वा प्रोक्षामि अनेन वायोरिवाश्वे वेगं दधाति। तथाच श्रुतिः वायुर्वै देवानामाशिष्ठो जवमेवास्मिन्दधाति तस्मादश्वः पशूनामाशिष्ठ इति(७) आशिष्ठो वेगवत्तरः। विश्वेभ्यो देवेभ्यो जुष्टं त्वां प्रोक्षामि अनेनाश्वे यशो दधाति। विश्वे वै देवा यशस्वितमा यश एवास्मिन्दधाति तस्मादश्वः पशूनां यशस्वितम इति(८) श्रुतेः। सर्वेभ्यो देवेभ्यो जुष्टं त्वां प्रोक्षामि अनेन सर्वा देवता अश्वे दधाति सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामीति सर्वा

**सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि। योऽअर्वन्तं जिघांसति तमभ्यमीति वरुणः। परो मर्तः परः श्वा ॥ ५ ॥**

एवास्मिन्देवता अश्वे अन्वायातयतीति(९) श्रुतेः॥ का० योऽअर्वन्तमिति वाचयति[१]। शूद्राद्वैश्यायां जातेन पुंसा अध्वर्युप्रेरितेन चतुरक्षे शुनि खादिरमुसलेन हते सति योऽअर्वन्तमित्यादि-वरुण-इत्यन्तं मन्त्रं यजमानं वाचयति॥ गायत्री पूर्वार्धेऽश्वस्तुतिः परेऽर्धे लिङ्गोक्तदेवता। यः अर्वन्तमश्वं जिघांसति हन्तुमिच्छति अर्वेणस्त्वसावनञ इति चन्तादेशः हन्तेः सन्नन्ताल्लट् वरुणः तमश्वं जिघांसन्तमभ्यमीति हिनस्ति अम हिंसायाम् एतस्य लटि तुरुस्तुशम्यम इति ईप्रत्ययः॥ का० वेतसकटेऽवधायाश्वं प्लावयति परो मर्त इति[२])। वेतसतरुकृतेन कटेन मृतं श्वानमश्वाधो जले तारयति॥ अश्वं जिघांसुर्मर्तो मनुष्यः परः पराभूतः अधस्पदं नीतः श्वा च परः पराकृतः श्वरूपेणाग्न्हत्येव पराकृत इत्यर्थः॥ ५।

१ १३,२,२,५। २—२०,२,६। २—२०,२,। २।

देवताद्वयस्य। हे अश्व यस्त्वमभिधा असि अभिधीयते स्तूयत इत्यभिधाः किञ्च भुवनं सर्वेषामाश्रयश्चासि यन्ता नियमनकर्ता चासि धर्ता जगद्धारयिता च। स एवंविधः त्वं स्वाहाकृतः स्वाहाकारेण हुतः सन् अग्निं गच्छ प्राप्नुहि कीदृशमग्निम् वैश्वानरं विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितम् सप्रथसं प्रथतेरसुन्प्रत्ययः प्रथनं प्रथो विस्तारस्तत्सहितम् यद्वा सर्वतस्तिर्यगूर्ध्वमधश्च प्रथते सप्रथाः तम् सर्वतःशब्दस्य सादेशः ॥ ३ ॥ १—१०,१,२७।

हे अश्व त्वा त्वां देवेभ्यः प्रजापतये च देवार्थं प्रजापत्यर्थं च स्वगा करोमीति शेषः स्वेनैव गच्छतीति स्वगा डाजन्तः विभक्तेर्डादेशो

**स्वगात्वादेवेभ्यःप्रजापतयेब्रह्मन्नश्वम्भन्त्स्यामिदेवेभ्यःप्रजापतयेतेनराध्यासम्। तम्बधानदेवेभ्यःप्रजापतयेतेनराध्नुहि ॥४॥**

**प्रजापतयेत्वाजुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वाजुष्टम्प्रोक्षामिवायवेत्वाजुष्टम्प्रोक्षामिविश्वेभ्यस्त्वादेवेभ्योजुष्टम्प्रोक्षामि**

वा स्वयंगामिनमित्यर्थः ॥ ब्रह्मन्नश्वम् ब्रह्मा देवता ब्रह्माणमामन्त्रयते हे ब्रह्मन् अश्वं भन्त्स्यामि बन्धनं करिष्यामि बध्नातेर्लृटि रूपि एकाचो बश इति भषत्वम्। किमर्थम् देवेभ्यः प्रजापतये च तेनाश्वबन्धेनाहं राध्यासं राध संसिद्धौ सिद्धिं कर्मसमाप्तिरूपां प्राप्नुयाम् आशीर्लिङ् ॥ ब्रह्मा प्रसौति तं बधान अध्वर्युदैवतं यजुः। हे अध्वर्यो यं बद्धुमिच्छसि तमश्वं बधान। किमर्थम् देवेभ्यः प्रजापतये च तेनाश्वबन्धनेन राध्नुहि सिद्धिं यज्ञसमाप्तिलक्षणां प्राप्नुहि राधेः स्वादित्वाल्लोटि श्नुप्रत्ययः ॥ ४ ॥

का० स्थावरा अपो गत्वा प्रजापतये त्वेति प्रोक्षत्यश्वं प्रतिमन्त्रम्। ततोऽध्वर्युः स्थावरास्तडागादिस्था अपो गत्वा ताभिरद्भिः पञ्चमन्त्रैः प्रतिमन्त्रमश्वं प्रोक्षति ॥ लिङ्गोक्तदेवतानि पञ्च यजूंषि। हे अश्व प्रजापतये जुष्टं त्वा त्वां प्रोक्षामि सिञ्चामि अनेन

भद्रवाच्यं तस्मै भद्रं ब्रूहीति प्रेषितोऽसीत्यर्थः । किञ्च सूक्ता सूक्तानि त्वं ब्रूहि इति सूक्तवाकाय सूक्तवचनाय सूक्तानि वक्तुं मानुषः होता च प्रेषितोऽसि ॥ ६१ ॥ १-२०,१,९।

श्रीमन्महीधरकृते वेददीपे मनोहरे । एकविंशोऽयमध्यायो याज्यादिप्रैषगान्तिमः ॥

श्रीविनायकाय नमः ॥ सर्वकामस्य राज्ञोऽश्वमेधः तस्य फाल्गुनशुक्लाष्टम्यामारम्भः । का० निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति१ । चतुःसुवर्णनिर्मित आभरणविशेषो निष्कः तं यजमानकण्ठे प्रतिबध्नन्नध्वर्युस्तेजोऽसीति मन्त्रं पाठयन्तं वाचयति तं च निष्कं

देवदानान्यदुग्धान्यस्माभ्यमश्वावचगुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥६१॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायामेकविंशोऽध्यायः ॥ २१ ॥

तेजोऽसि शुक्रममृतमायुष्पा आयुर्मे पाहि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ १ ॥

प्रातर्होमान्ते पूर्णाहुतिं कृत्वाध्वर्यवे दद्यादिति सूत्रार्थः ॥ चत्वारोऽध्याया अश्वमेधमन्त्रास्तेषां प्रजापतिर्ऋषिः । तेजोऽसीत्यस्य सौवर्णं निष्कं देवता । प्राजापत्यानुष्टुप् । हे निष्क तेजोऽसि आग्नेयत्वात् । शुक्रमग्नेर्वीर्यमसि अग्निर्ह वाऽपोऽभिदध्यावित्युपक्रम्य तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवदिति श्रुतेः । अमृतं च वह्नितापेऽनुच्छिद्यमानद्रवत्वाविकारत्वात् दानेनामृतत्वप्रदानाच्च हिरण्यदा अमृतत्वं भजन्त इति श्रुतेः । आयुष्पाः आयुः पातीति आयुष्पाः गोपयिता अतो याचे मे ममायुः पाहि रक्ष यज्ञसमाप्ति-

पश्चात्तन अवदानानि प्रत्यगृभीषत प्रत्यगृह्णन् पचतेर्लुङ्ग्रहियजिपर्वेपच्यमितमिनमिहर्यैभ्योऽतजिति अनप्रमा गा समीन इत्यक्तइति वचनाद्गृतेऽपि द्रष्टव्यः विभक्तेराकारः। पुनस्ते पुरोडाशैरवीवृधन्त ऐधन्त । किञ्च अश्विना सरस्वती इन्द्रश्च सुरासोमान् मपुः पीतवन्तः पातेर्लुङ् पिबादेशाभावश्छान्दसः ररसुर्यौ। सुराश्च सोमाश्च तान् सुरामयान् सोमान् वा ॥ ६० ॥

दैव्यो होता अग्निरुच्यते। हे ऋषे मन्त्राणां द्रष्टः हे आर्षेय यजमानार्थं वरियते इत्येवं सम्बोध्यते हे ऋषीणां नपात् पुत्राय यजमानः बहुभ्यः सङ्गतेभ्यः मिलितेभ्यो देवेभ्य इति हेतोरद्य त्वामिव मा अवृणीत सम्यग्वृतवान् । इति किम् एषोऽग्निमं मह्यं

त्वधन्तपुरोडाशैरग्नि॒ना सरस्वतीन्द्रः सुत्रामा॒ सुरासोमान् ॥ ६० ॥

त्वाम॒द्य ऋ॒ष आर्षेय ऋषीणान्नपाद्वृणीतायंयजमानो बहुभ्य आ सङ्गतेभ्य एष मे दे॒वेषु वसु वार्यायक्ष्यत इति ता या दे॒वा

देवेषु वारि वरीतुं योग्यं वारि वरणीयं वसु धनमायक्ष्यते आदास्यते यजतेर्दानार्थाल्लृट् मया देवेभ्यो दातुं ग्रहीष्यते इत्यर्थः। किञ्च हे देव अग्ने या यानि ता तानि दानानि देवा अदुः दत्तवन्तः तानि दानानि अस्मै यजमानाय आशास्व च इच्छ तानि यजमानाय दातव्यानीति इच्छेत्यर्थः। आगुरस्व च उद्यच्छ च गुरी उद्यमने तुदादिः दानायोद्यमं कुरु आकारौ चकारौ च भिन्नक्रमौ । हे होतः त्वमिषितः प्रेषितोऽसि प्रेरितोऽसि कश्चन तदाह भद्रवाच्याय वक्तुं योग्यं वाच्यं भद्रं शुभं च तत् वाच्यं च

का० अग्निमद्येति सूक्तवाकप्रैषः। अग्निमद्य होतारमित्यादिः सूक्ता सूक्तोऽन्तः कण्डिकात्रयात्मकः सूक्तवाकप्रैषो भवति॥ त्रिष्टुब्लिङ्गोक्तदेवतः प्रैषः। प्रथमा अतिः द्वितीया धृतिः तृतीया विकृतिः। अयं यजमानोऽद्य अग्निं होतारमवृणीत वृतवान् वृणोतेर्लङ्। किं कुर्वन् पक्तीः पक्तव्यानि हवींषि पचन्। सामान्येनोक्त्वा विशेषमाह पुरोडाशान् पचन् अश्विभ्यामश्विनोरर्थं छागं बध्नन् यूपे इति शेषः सरस्वत्यै मेषं बध्नन् इन्द्राय ऋषभं च बध्नन् तथा अश्विभ्यां सरस्वत्यै सुत्रामणे रक्षकाय इन्द्राय च सुरासोमान् सुन्वन् अग्निमवृणीत॥ ५९॥ १—१९,७,१०।

अग्निमद्य होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोडाशान्बध्नन्नश्विभ्याञ्छागꣳ सरस्वत्यै मेषमिन्द्राय

ऋषभꣳ सुन्वन्नश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान्॥ ५९॥

सूपस्था अद्य देवो वनस्पतिरभवदश्विभ्याञ्छागेन सरस्वत्यै मेषेणेन्द्राय ऋषभेणाक्षँस्तान्मेदस्तः प्रतिपचताग्रभीषतावी

अद्य वनस्पतिर्देवः छागेन कृत्वा अश्विभ्यां सूपस्था अभवत् सुष्ठु उपतिष्ठते सेवते सूपस्थाः छागेनाश्विनोः सेवां चकारेत्यर्थः मेषेण सरस्वत्यै सूपस्था अभवत् ऋषभेण इन्द्राय सूपस्था अभवत् वनस्पतिना छागमेषर्षभैरश्व्यादीनामुपस्थानं कृतम्। तत्कार्यं [illegible] तदाह अश्व्यादयो मेदस्तः मेदो वपामारभ्य तान् छागादीन् अक्षन् अभक्षयन्। पुनः पचता पच्यन्ते तानि पचता पचतानि

अत एव स्योनं सुखरूपम्। किञ्च अश्विसरस्वताः बर्हिषा सह राजानं दीप्यमानं मन्युं क्रोधमिन्द्रियं च हे इन्द्र त्वयि दधुः किमर्थम् इशायै ऐश्वर्याय ईशनमीशा तस्यै गुरोश्च हल इति स्त्र्यधिकारे ईशतेरप्रत्ययः स्त्रीत्वादाप्। वसु० उक्तम् ॥ ५७ ॥

शोभनमिष्टं यागं करोतीति स्विष्टकृत् अग्निर्देवो यथायथं यथास्वं यो यथा इष्टव्यस्तथा देवान् वक्ष्यमाणान् यक्षत् इष्टवान्। कान् देवानत आह होतारौ अयं चाग्निरसौ च मध्यमो वायुः होतृमैत्रावरुणौ वा इन्द्रम् अश्विना अश्विनौ च वाचा मन्त्रेण

देवो अग्निः स्विष्टकृद्देवान्यक्षद्यथायथꣳ होतारा विन्द्रमश्विना वाचा वाचꣳ सरस्वतीमग्निꣳ सोमꣳ स्विष्टकृत्स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिः स्विष्टा देवा आज्यपाः स्विष्टो अग्निरग्निना होता होत्रे स्विष्टकृद्यशो न दधदिन्द्रियमूर्जमपचितिꣳ स्वधां वसुवने वसुधेयस्य व्यन्तु यज ॥ ५८ ॥

वाचं च यक्षत् सरस्वतीमग्निं सोमं च। किञ्च स्विष्टकृत् शोभनयज्ञकारी सुत्रामा शोभनरक्षकः मनिन्प्रत्ययः इन्द्रः स्विष्टः सुष्ठु इष्टः सविता वरुणो भिषगिष्टः वनस्पतिर्देवश्च इष्टः आज्यपा देवाः प्रयाजानुयाजाः स्विष्टा अग्निरधिष्ठाता अग्निना भौमेन हविर्हारा सुष्ठु इष्टः। किञ्च होता दैव्यः स्विष्टकृत् होत्रे मानुषाय यशः इन्द्रियमूर्जमन्नमपचितिं पूजां स्वधां पित्र्यमन्नं दधत् ददातु नकारश्चार्थे। वसुवननाय वसुधनाय च देवा व्यन्तु हविरदन्तु मनुष्यहोतर्यज ॥ ५८ ॥

वनस्पतिर्देवो नोऽस्माकमोजः तेजः जूतिः जूतिं जवं वेगं भाम क्रोधमिन्द्रियाणि च दधत् दधातु यो वनस्पतिर्यज्ञः इन्द्राय मधु मधुरं फलं पच्यते पचति फलति इन्द्राय फलं ददाति नकारो चार्थौ। कीदृशो वनस्पतिः देवैर्हिरण्यपर्णः हिरण्यरूपाणि पर्णानि यस्य देवा यस्य हिरण्मयानि पर्णानीत्यर्थः। अश्विभ्यां सरस्वत्या च सुपिप्पलः शोभनं पिप्पलं फलं यस्य सः अश्विनौ सरस्वती च यस्य वनस्पतेः फलानीत्यर्थः। ऋषभः पूज्यः ऋषभशब्दः पूज्यवचनः। वसु० ॥ ५६ ॥

देवोदेवैर्वनस्पतिर्हिरण्यपर्णोऽअश्विभ्याᳬंसरस्वत्यासुपिप्पलऽइन्द्रायपच्यतेमधु। ओजोनजूतिर्ऋषभोनभामंवनस्पतिर्नोदधदिन्द्रियाणिवसु० ॥ ५६ ॥

देवम्बर्हिर्वारितीनामध्वरेस्तीर्णमश्विभ्यामूर्णम्रदाःसरस्वत्यास्योनमिन्द्रतेसदः। ईशायैमन्युᳬंराजानम्बर्हिषादधुरिन्द्रियंवसु० ॥ ५७ ॥

हे इन्द्र वारितीनां वारि जले इतिर्गतिर्यासां ता वारितयः तासां जलोद्भवानामोषधीनां सम्बन्धि बर्हिः ते तव सदः सदसि अध्वरे यज्ञे अश्विभ्यां सरस्वत्या च स्तीर्णमास्तृतं कीदृशं बर्हिः देवं दीप्यमानम् ऊर्णम्रदाः ऊर्णमिव म्रदीयः छान्दस ईयलोपः

देवानां देवा देवा यो होतारौ अनुयाजदेवौ ताभ्यां होतृभ्यां सह वषट्कारैश्च सह भिषजौ अश्विनौ सरस्वती च इन्द्रमिन्द्रे त्विषिं कान्तिं दधुः हृदये मतिमिन्द्रियं बुद्धीन्द्रियं च दधुः नयार्थः। वसु० उक्तम् ॥ ५३ ॥

यास्तिस्रो देव्यो भारती इडा सरस्वती तिस्रो देवीः विभक्तिव्यत्ययः ताभिस्तिसृभिः देवीभिः सह अश्विनौ सरस्वती इडा च इन्द्राय इन्द्रे नाभ्यां मध्ये च शूषं बलमिन्द्रियं च दधुः नयार्थः। वसु० व्याख्यातम् ॥ ५४ ॥

देवादेवानाम्भिषजाहोताराविन्द्रमश्विना। वषट्कारैः सरस्वतीत्विषिन्नहृदयेमतिꣳ होतृभ्यान्दधुरिन्द्रि० ॥ ५३॥

देवीस्तिस्रस्तिस्रोदेवीरश्विनेडासरस्वती। शूषन्नमध्येनाभ्यामिन्द्रायदधुरिन्द्रि० ॥ ५४ ॥

देवइन्द्रोनराशꣳसस्त्रिवरूथस्सरस्वत्याश्विभ्यामीयतेरथः। रेतोनरूपममृतञ्जनित्रमिन्द्रायत्वष्टादधदिन्द्रियाणिवसु० ॥ ५५ ॥

नरा अस्मिन्नासीनाः शंसन्तीति यास्कोक्तेः[१] नराशंसो देवोऽनुयाजरूपो यज्ञः रेतो वीर्यं रूपं सौन्दर्यममृतं जनित्रमुत्तमं जन्म इन्द्रियाणि च इन्द्राय दधत् दधातु नयार्थः। कीदृशो नराशंसः इन्द्रः इन्दतीतीन्द्रः ऐश्वर्यवान् इदि परमैश्वर्ये। त्रिवरूथः त्रीणि वरूथानि गृहाणि सदोहविर्धानाग्नीध्राणि यस्य सः। तथा त्वष्टा त्वचतिः करोतिकर्मा जगतः कर्ता यज्ञादेव जगदुत्पत्तेः। यस्य नराशंसस्य रथः सरस्वत्या अश्विभ्यां च ईयते नीयते उह्यते। वसु० व्याख्यातम् ॥ ५५ ॥

१—निरु० ८.६।

नक्तोषासाविति प्राप्ते छान्दस आदिपदलोपः। उषासा देवी नक्ता उषसौ अनुयाजदेव्यौ ताभ्यामुषाभ्यां नक्तोषोभ्यां सह अश्विनौ सुत्रामा शोभनरक्षणकर्त्री सरस्वती च इन्द्रे बलं दधुः आस्ये इन्द्रमुखे वाचमिन्द्रियं वागिन्द्रियं च दधुः नयार्थः। वस्वित्युक्तम् ॥५०॥

ये जोष्ट्री जोषयित्र्यौ सुखस्य सेवयित्र्यौ देवी देव्यौ अनुयाजदेव्यौ द्यावापृथिव्यौ अहोरात्रे वा सस्यं च समा चेति कात्थक्यः[१]। ताभ्यां जोष्ट्रीभ्यां सह सरस्वती अश्विना अश्विनौ च इन्द्रमवर्धयन् कथमवर्धयन् तत्राह इन्द्रे यशो दधुः तत्कर्णयोश्च श्रोत्रमिन्द्रियं दधुः। वसु० ॥ ५१ ॥

१—निरु० ८,४१।

देवीऽउषासावश्विनासुत्रामेन्द्रेसरस्वती। बलन्नवाचमास्यऽउषाभ्यान्दधुरिन्द्रियंवसुवनेवसुधेयस्यव्यन्तुयज ॥५०॥

देवीजोष्ट्रीसरस्वत्यश्विनेन्द्रमवर्धयन्। श्रोत्रन्नकर्णयोर्यशोजोष्ट्रीभ्यान्दधुरिन्द्रियंवसुवनेवसुधेयस्यव्यन्तुयज ॥ ५१॥

देवीऽऊर्जाहुतीदुघेसुदुघेन्द्रेसरस्वत्यश्विनाभिषजावतः। शुक्रन्नज्योतिस्तनयोराहुतीधत्तऽइन्द्रियंवसुवनेवसुधेयस्यव्यन्तुयज ॥ ५२ ॥

उत्तरार्धं आहुतीशब्दस्तृतीयार्थः। जोष्ट्र्योरेव देवताविकल्पः। ये देवी ऊर्जाहुती ऊर्जा रसवती आहुतिराह्वानं होमो वा ययोस्ते ऊर्जाहुती दुघे दुग्धस्ते दुघे कामपूरके सुदुघे सुदोहने ताभ्यामाहुतिभ्यां सह सरस्वती भिषजावश्विनौ च इन्द्रे इन्द्रमवतः अवन्ति रक्षन्ति वचनव्यत्ययः कथम् तदाह ज्योतिः तेज इन्द्रे धत्तः दधति स्तनयोः शुक्रमिन्द्रियं च धत्तः वचनव्यत्ययः नयार्थः। व्याख्यातमन्यत् ॥ ५२ ॥

का० अनुयाजप्रैषा देवं बर्हिरिति याजमाश्व । देवं बर्हिः सरस्वतीत्याद्या एकादश कण्डिकास्त्रिपशोरनुयाजानां प्रैषा याज्या भवन्तीत्यर्थः ॥ एकादशानुयाजप्रैषा अश्विसरस्वतीन्द्रदेवत्याः चतस्र आर्ष्यस्त्रिष्टुभः व्यवहितपदप्रायाः । शोभना देवा यस्य तत्सुदेवं यद्बर्हिः देवमनुयाजदेवता तेन बर्हिषा सह सरस्वती अश्विना अश्विनौ च इन्द्रे तेजो दधुः दधतु अक्ष्योः इन्द्रनेत्रयोः चक्षुः इन्द्रियं

प्रियाधामानियक्षदग्नेर्होतुःप्रियाधामानियक्षत्स्वम्महिमानमायजतामेज्याइषःकृणोतुसो

अध्वराजातवेदाजुषताꣳहविर्होतर्यज ॥४७॥

देवम्बर्हिस्सरस्वतीसुदेवमिन्द्रेअश्विना । तेजोनचक्षुरक्ष्योर्बर्हिषादधुरिन्द्रियंवसुवनेवसुधेयस्यव्यन्तुयज ॥ ४८॥

देवीर्द्वारोअश्विनाभिषजेन्द्रेसरस्वती। प्राणन्नवीर्यन्नसिद्वारोदधुरिन्द्रियंवसुवनेवसुधेयस्यव्यन्तुयज ॥ ४९ ॥

च दधुः नकारश्चार्थः । एवमग्रेऽपि । वसुवने वसुवननाय धनलाभाय वसुधेयस्य वसुनो धेयं वसुधेयं तस्य वसुनिधानाय च अश्विसरस्वतीन्द्रा व्यन्तु हविर्भक्षयन्तु । हे मनुष्यहोतः त्वमपि यज । सप्तमीषष्ठ्यौ चतुर्थ्यर्थे ॥ ४८ ॥ १---१९,७,८-९,

उत्तरार्धे द्वार इति प्रथमा तृतीयार्था । या द्वारो देवीः यज्ञगृहद्वारो देव्योऽनुयाजदेवाः ताभिर्द्वार्भिः सह भिषजा अश्विना वैद्यावश्विनौ सरस्वती च इन्द्रे वीर्यं बलं दधुः नसि इन्द्रस्य नासिकायां प्राणमिन्द्रियं प्राणेन्द्रियं च दधुः । वसु० व्याख्यातम् ॥ ४९ ॥

स्विष्टकृदग्निर्देवता। होता स्विष्टकृतमग्निं यक्षत् यजतु योऽग्निः स्विष्टकृत् अश्विनोः छागस्य हविषः सम्बन्धीनि प्रियाणि धामानि अयाट् अयाक्षीत् इष्टवान् अवदानानि यजति स्मेत्यर्थः। एवमग्रेऽपि। सरस्वत्या मेषस्य हविषः प्रियाणि धामानि अवदानानि अयाट् इन्द्रस्य ऋषभस्य हविषः प्रियाणि धामानि अयाट्. एताः प्रधानदेवताः। अग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामानि अयाट् एतावाज्यभागौ। सुष्ठु त्रायते सुत्राम्ण इन्द्रस्य प्रिया॰ सवितुः प्रिया॰ वरुणस्य प्रिया॰ एताः पशुपुरोडाशदेवताः।

**होतायक्षदग्निᳪस्विष्टकृतमयाडग्निरश्विनोश्छागस्यहविषःप्रियाधामान्ययाट्सरस्वत्यामेषस्यहविषःप्रियाधामान्ययाडिन्द्रस्यऋषभस्यहविषःप्रियाधामान्ययाडग्नेःप्रियाधामान्ययाट्सोमस्यप्रियाधामान्ययाडिन्द्रस्यसुत्राम्णःप्रियाधामान्ययाट्सवितुःप्रियाधामान्ययाड्वरुणस्यप्रियाधामान्ययाड्वनस्पतेःप्रियापाथाᳪस्ययाडदेवानामाज्यपाना**

वनस्पतेः प्रिया॰ एतत्प्रधानाङ्गम्। आज्यपानां देवानां प्रिया॰ एते प्रयाजानुयाजाः। होतुरग्नेः स्विष्टकृतः स्वस्यैव प्रियाणि धामानि यक्षत् इष्टवान्। स्वं महिमानं स्वां विभूतिं यक्षत्। किञ्च आ इष्याः समन्ता यष्टुं योग्या एष्याः यागार्हाः इषः इच्छन्ति इषः सकामाः प्रजाः आयजतां सम्यक् यजन्तु वचनव्यत्ययः प्रजा यागशीला यागयोग्याश्च भवन्त्वित्यर्थः। स जातवेदाः स्विष्टकृदग्निः अध्वरा अध्वराण्यग्नान्कृणोतु करोतु हविश्च जुषताम्। हे मनुष्यहोतः त्वं यज। विभक्तेराकारः॥ ४७॥

धामानि यत्र सोमस्य प्रियाणि धामानि एतावाज्यभागौ। यत्र सुत्राम्ण इन्द्रस्य प्रियाणि धामानि यत्र सवितुः प्रियाणि धामानि यत्र वरुणस्य प्रियाणि धामानि एते पशुपुरोडाशदेवाः। यत्र वनस्पतेः प्रियाणि पाथांसि अन्नानि। अथ यत्र आज्यपानां देवानां प्रयाजानुयाजानां प्रियाणि धामानि। यत्र होतुरग्नेः स्विष्टकृतः प्रियाणि धामानि। एतान् छागादीन् पशून् रभीयस इव कृत्वी रभन्ते ते रभ्वारः अत्यन्तं रभ्वारो रभीयांसः सरभसांश्च कृत्वा इवशब्दार्थः प्रस्तुत्येव प्रकर्षेण स्तुत्वा च उपस्तुत्येव उप समीपे स्तुत्वा

धामानियत्रेन्द्रस्यसुत्राम्णःप्रियाधामानियत्रसवितुःप्रियाधामानियत्रवरुणस्यप्रियाधामानियत्रवनस्पतेःप्रिया

पाथाᳬंसियत्रदेवानामाज्यपानाम्प्रियाधामानियत्राग्नेर्होतुःप्रियाधामानितत्रैतान्प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभी

यसइवकृत्वीकरदेवंदेवोवनस्पतिर्जुषताᳬंहविर्होतर्यज ॥ ४६ ॥

च द्वौ चार्थौ तत्र तेषु पूर्वोक्तेषु स्थानेषु वनस्पतिर्देव उपावस्रक्षत् उपावसृजतु स्थापयतु सृजेर्लुङि रूपं लेटि वा सिब्बहुलं लेटीति सिपमध्यये अडागमे च रूपम् वनस्पतिर्देव एवं करत् करोतु हविश्च जुषताम् हे मनुष्यहोतः त्वमपि यज ॥ ४६ ॥

लेटि वाडागमे रूपम्। अथ मध्यतो मेद इत्यादिव्याख्या पूर्ववत्। सा अङ्गानि वसत्। एवं सरस्वती हविर्जुषतां हमि त्यन्तं पूर्ववत् यत्कारदित्येकवचनानि अन्यदुक्तम्॥ ४४॥

होता इन्द्रं यक्षत् स इन्द्र ऋषभस्य हविष आवयत् भक्षयतु एवमिन्द्रो हविर्जुषतामित्यन्तं पूर्ववत्॥ ४५॥

का० उत्तमौ वनस्पतिस्विष्टकृतोः। अन्ते पठमानौ होता यक्षद्वनस्पतिमभि होता यक्षदग्निं स्विष्टकृतमिति क्रमेण वनस्पतियागे स्विष्टकृद्यागे च प्रैषौ॥ यूपो देवता। दैव्यो होता वनस्पतिं यूपमभियक्षत् आभियजतु हि यस्मात् वनस्पतिः

होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्ठयारशनयाधित। यत्राश्विनोश्छागस्यहविषःप्रियाधामानियत्रसर स्वत्यामेषस्यहविषःप्रियाधामानियत्रेन्द्रस्यऋषभस्यहविषःप्रियाधामानियत्राग्नेःप्रियाधामानियत्रसोमस्यप्रिया

रशनया रज्ज्वा कृत्वा अधित धृतवान् पशूनिति शेषः दधातेर्लुङि स्थाघ्वोरिच्चेतीकारः कीदृश्या रज्ज्वा पिष्टतमया पिष्टशब्दो रूपवाची अत्यन्तं पिष्टा सुरूपा पिष्टतमा तया। रभिष्ठया रभते पशूनियच्छतीति रब्धी तृच् ङीप् अत्यन्तं रब्धी रभिष्ठा तया तुश्छन्दसीति इष्ठनि तृचो लोपः समर्थयेत्यर्थः॥ इदानीं वनस्पतिः प्रार्थ्यते यत्र अश्विनोः सम्बन्धिनः छागस्य हविषः छागरूपस्य हविषः प्रिया प्रियाणि इष्टानि धामानि स्थानानि वर्तन्त इति शेषः। एवमग्रेऽपि। यत्र सरस्वत्या मेषस्य मेषरूपस्य हविषः प्रियाणि धामानि यत्र इन्द्रस्य ऋषभस्य हविषः प्रियाणि धामानि एतेषां पशुदेवानां स्थानानि। यत्राग्नेः प्रियाणि

१—१९,६,२

ग्रावे अजराणां नवानां रुचिजनकानाम् अन्यानि ग्रावेषूत्तरोत्तरमरुचिं जनयन्ति नेमानि। तथा यवसप्रथमानां यवसानामन्नानां मध्ये प्रथमानां मुख्यानाम् मांसत्वात्। एतद्वै परममन्नाद्यं यन्मांऽसमिति श्रुतेः। सुमत्क्षराणां सुमत् स्वयं क्षरन्ति तानि सुमत्क्षराणि तेषाम् सुमदिति स्वयमित्यस्य पर्यायः। शतरुद्रियाणाम् रुद्र इति स्तोतृनामसु पठितं[1] रुद्रस्य स्तोतुरिमा रौद्रयाः स्तुतयः शतमसंख्या रुद्रिया येषां तेषाम् बहुमन्त्रैः स्तुतानामित्यर्थः। अग्निष्वात्तानाम् अग्निना स्वात्तानामास्वादितानां पाककाले पूर्वमग्निना सुश्रुतानामित्यर्थः। पीवोपवसनानाम् पीवस् शब्दोऽसुन्नन्तः स्थूलवाची पीवसां स्थूलानामङ्गानामुप समीपे वसनं स्थितिर्येषां तानि पीवोपवसनानि तेषाम् स्थूलाङ्गसमीपस्थितानां सूक्ष्माणामित्यर्थः उपवसने पीव इति[2] प्रातिशाख्यसूत्रेण

**अजराणांय्यवसप्रथमानाᳪसुमत्क्षराणाᳪशतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतःश्रोणितःशिता मतउत्सादतोङ्गादङ्गादवत्तानाङ्करतएवाश्विनाजुषेताᳪहविर्होतर्यज॥ ४३ ॥**

उपवसने परे पीवसो विसर्गलोपः। किञ्च पार्श्वतः पार्श्वप्रदेशात् श्रोणितः कटिप्रदेशात् शितामतो बाहुप्रदेशात् उत्सादतः उत्सादनमुत्सादः छेदनप्रदेशः तस्मात्। एवमङ्गादङ्गात् एकपदम् नित्यवीप्सयोरिति द्वित्वम् प्रत्यङ्गात् अवत्तानामवदानधर्मेण गृहीतानामङ्गावयवानामश्विनौ घस्ताम् तान् भक्षयतामिति पूर्वेण सम्बन्धः। एव एवमश्विना अश्विनौ हविर्जुषेतां सेवेताम् भक्षितावदानौ तौ करतः कुरुतः तृप्तिमिति शेषः विकरणव्यत्ययः पुनर्वचनमादराय। हे मनुष्यहोतः त्वमपि यज। शितामशब्देन बाहुयकृतोर्निर्देशं स्युच्यन्ते ॥ ४३ ॥

१—निघ० ३,१६,१२। २—३,१,१२।

होता सरस्वतीं यक्षत या सरस्वती मेषस्य हविषः हविः आवयत् अभक्षयत् आङ्पूर्वस्य वेतेर्लङि रूपम् यद्वा भक्षयतु

चरिताः । मधुश्चुतः मधु श्चोतन्ति ते मधुस्राविणः । अश्विनौ सरस्वती सुत्रामा वृत्रघ्नः वृत्रासुरहन्ता इन्द्रश्च तान् सोमान् जुषन्तां सेवन्तां सोम्यं मधु पिबन्तु मदन्तु तृप्यन्तु व्यन्तु राजन्तां हविर्भक्षयन्तु वा । हे होतः त्वमपि यज ॥ ४२ ॥ १—१९,६,२४ ।

का० हविषामुत्तरे यथालिङ्गम्[1] । चतुर्थात् प्रैषादग्रे पठ्यमाना होता यक्षदश्विनौ छागस्य हविष इत्याद्यास्त्रयो यथालिङ्गमाश्विनादिहविर्यागानां प्रैषा इत्यर्थः ॥ दैव्यो होता अश्विनौ यक्षत् यजतु । ताविज्यमानावश्विनौ छागस्य हविषः छागसम्बन्धि

नैर्म्हृषस्वन्तोमदामासरेणपरिष्कृताःशुक्राःपयस्वन्तोऽमृताःप्रस्थितावोमधुश्चुतस्तानश्विनासरस्वतीन्द्रःसुत्रामा

: वृत्रहाजुषन्ताᳩंसोम्यम्मधुपिबन्तुमदन्तुव्यन्तुहोतर्यज ॥ ४२ ॥

होतायक्षदश्विनौछागस्यहविषआत्तामद्यमध्यतोमेदउद्भृतम्पुराद्वेषोभ्यःपुरापौरुषेय्यागृभोघस्तान्नूनङ्घासे

हविः आत्तामभक्षयताम् कर्मणि षष्ठी । किञ्च अद्य अस्मिन्दिने मध्यतः उदरमध्यादुद्भृतमुद्धृतं मेदो वपारूपं चात्ताम् हृग्रहोर्भश्छन्दसि कथमुद्भृतम् तत्राह द्वेषोभ्यः द्विषन्तीति द्वेषांसि द्विषेरसुन् प्रत्ययः यज्ञद्वेष्टॄणि असुररक्षांसि तेभ्यः उद्भृतम् यावत्तानि पराभवायागच्छन्ति ततः पुरैवोद्धृतमित्यर्थः तथा गृभः गृह्यते भक्षार्थमिति गृभ् तस्या गृभ इडायाः पुरा प्रथममुद्धृतम् वपायामिडाप्रयोजनाभावात् कीदृश्या गृभः पौरुषेय्याः पुरुषार्थमियं पौरुषेयी ऋत्विगर्था तस्याः ॥ तावश्विनौ नूनं निश्चितमङ्गानां घस्तामङ्गानि भक्षयताम् घस्लृ अदने विशेषणाद्विशेष्यस्याध्याहारः । कीदृशानामङ्गानाम् घासे अज्राणाम् एकपदम् घासे

यक्षदिन्द्रमृषभस्येति त्रयो वपात्रयस्य क्रमात् प्रैषा एककण्डिकायामिति सूत्रार्थः ॥ सप्त लिङ्गोक्तदेवताः तत्राद्यास्त्रयो वपानां प्रैषाः त्रयाणां प्राजापत्या पङ्क्तिश्छन्दः द्वितीयस्य द्व्यधिका प्रथमतृतीययोरेकाधिका । दैव्यौ होता अश्विनौ यक्षत् यजतु इज्यमानौ तावश्विनौ छागस्य वपाया मेदसः सम्बन्धि हविर्जुषेतां सेवेताम् मेदः स्निग्धभागः । हे होतर्यज ॥ होता सरस्वतीं यक्षत् सा मेषस्य वपाया मेदसो हविर्जुषताम् । हे होतः त्वं यज ॥ होता इन्द्रं यक्षत् स इन्द्रः ऋषभस्य वपाया मेदसो हविर्जुषताम् । हे मनुष्यहोतस्त्वमपि यज ॥ ४१ ॥

१—१८,६,२२ ।

होता यक्षदश्विनौ छागस्य वपाया मेदसो जुषेतां हविर्होतर्य्यज । होता यक्षत्सरस्वतीं मेषस्य वपाया मेदसो जुषताꣳ हविर्होतर्य्यज । होता यक्षदिन्द्रमृषभस्य वपाया मेदसो जुषताꣳ हविर्होतर्य्यज ॥ ४१ ॥

होता यक्षदश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणमिमे सोमाः सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः शष्पैर्न तोक्मभिर्ला-

का० ग्रहाणां चतुर्थः १ । होता यक्षदश्विनौ सरस्वतीमिन्द्रमिति चतुर्थो ग्रहाणां प्रैषः ॥ होता यक्षदश्विनौ सरस्वतीं सुष्ठु रक्षितारमिन्द्रञ्च यक्षत् यजतु । एवं होतारमुक्त्वाध्वर्यूनाह हे अध्वर्यवः इमे सोमाः वो युष्माकं युष्माभिः सुता अभिषुताः । कीदृशाः सोमाः छागैर्मेषैर्ऋषभैश्च सुरामाणः सुष्ठु रमयन्ति ते सुरामाणः रमणीयाः रमतेरनण्प्रत्ययः पशुभिः कृत्वा रमणीयाः नौ चार्थौ सुरावन्तः सुरामया वा । तथा शष्पैः तोक्मभिर्यवाङ्कुरैर्लाजैश्च महस्वन्तः तेजोयुताः । मदाः मदयन्ति तर्पयन्तीति मदाः । मासरेण पूर्वोक्तेन परिष्कृताः अलङ्कृताः सम्प्युपेभ्य इति सुट् । शुक्राः शोचिष्मन्तः । पयस्वन्तः पयसा युक्ताः । अमृताः अमृतकल्पाः । प्रस्थिताः होमाभिमुखं

होता अग्निं प्रयाजदेवमाहवनीयं वा यक्षत् यजतु। किञ्च आज्यस्य घृतस्य स्तोकानां विप्रुषां स्वाहा सुष्ठु आह शोभनं वदति ह्रचोऽतस्तिङ इति दीर्घः ब्रुवो रूपम् यजमान इति शेषः यजमानो घृतविन्दून् शोभनान्वदतीत्यर्थः कर्मणि षष्ठी। मेदसां वपासम्बन्धिनां पृथक् स्वाहा वपासम्बन्धिमेदांसि समीचीनानीति पृथग्वदति। अश्विभ्यामश्विनोरर्थं छागं शोभनमाह। सरस्वत्यै मेषं शोभनमाह। इन्द्राय इन्द्रियं वीर्यप्रदमृषभं सु आह कीदृशायेन्द्राय सिंहाय सिंहतुल्याय हिनस्तीति सिंहस्तस्मै शत्रूणामभिभवित्रे तथा सहसे बलात्मकाय। भेषजं हितकारिणमग्निञ्च सु आह नशार्थः इन्द्रियं वीर्यप्रदञ्च सोमं सु आह एतावग्नीषोमावाजरभागौ सु आहेत्यर्थः। सुष्ठु त्रायते सुत्रामा तं सुत्रामाणमिन्द्रं सवितारं भिषजां वैद्यानां

**रंवरुणम्भिषजाम्पतिꣳस्वाहावनस्पतिम्प्रियम्पाथोनभेषजꣳस्वाहादेवाआज्यपाजुषाणोअग्निर्भेषजम्पयःसोमः**

**परिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्यज ॥ ४० ॥**

पतिं वरुणञ्च सु आह पशुपुरोडाशदेवताः सु आहेत्यर्थः। प्रियमिष्टं पाथोऽन्नमन्नभूतं भेषजञ्च पशुदेवतानां वनस्पतिं प्रयाजदेवं सु आह नकारश्चार्थः। आजरपा देवा आजरपान्देवान् सु आह प्रयाजानुयाजा वै देवा आज्यपाः। स्वाहेति क्रियाया यजमानः कर्ता देवा ह वा जघुर्हन्त विजितमेवानु सर्वं यज्ञं सꣳस्थापयेत्युपक्रम्य तत उत्तमे प्रयाजे स्वाहाकारेणैव यज्ञꣳ समस्थापयन्नित्याहेति श्रुतेः समाप्तिवचनाः स्वाहाकाराः। भेषजमौषधभूतं जुषाणः सेवमानोऽग्निरश्विसरस्वतीन्द्राश्च दैव्येन होत्रेजामानाः पयआदीनि व्यन्तु। हे मनुष्यहोतः त्वमपि यज ॥ ४० ॥

का० होता यक्षदश्विनाविति त्रयो वपानां प्रैषा यथालिङ्गम्[1]। होता यक्षदश्विनौ छागस्य होता यक्षत्सरस्वतीम् होता

१—१९,६,२२।

नयोपसं नरेभ्यो हितं नर्यमपः कर्म यस्य स नर्यापाः तम । कीन यजतु तदाह रभसः सोऽश्वमो भिषग्वैद्यभूतो यो वृकः तेन प्रथमा तृतीयार्थे सुरायां वृकलोमानि क्षिप्यन्तेऽतो वृकेन यजतु सुरया च यजतु भेषजं यन्मासरं तेन च यजतु । एवञ्च यागे ओजस्तेजः जूतिर्वेगः इन्द्रियं वीर्यं श्रिया सह यमश्विन्द्रे भगवन्निति शेषः अश्वादयः पयआदीनि व्यन्तु हे होतः त्वमप्याज्यस्य यज ॥ ३८ ॥

**होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुम्भीमन्नमन्युꣳ राजानं व्याघ्रन्नमसाश्विना भामꣳ सरस्वती भिषगिन्द्राय दुह इन्द्रियम्पयः सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३९ ॥**

**होता यक्षदग्निꣳ स्वाहाज्यस्य स्तोकानाꣳ स्वाहा मेदसाम्पृथक् स्वाहा छागमश्विभ्याꣳ स्वाहा मेषꣳ सरस्वत्यै स्वाहऽऋषभमिन्द्राय सिꣳहाय सहस ऽइन्द्रियꣳ स्वाहाग्निन्न भेषजꣳ स्वाहा सोममिन्द्रियꣳ स्वाहेन्द्रꣳ सुत्रामाणꣳ सविता**

दैव्यो होता वनस्पतिं प्रयाजदेवं व्याघ्रं विशेषेणाजिघ्रतीति व्याघ्रः व्याघ्रमिव राजानं शतक्रतुमिन्द्रमश्विना अश्विनौ सरस्वती सरस्वतीश्च नमसा अन्नेन यक्षत् यजतु कीदृशं वनस्पतिं शमितारं पशूनां संस्कर्तारं यूपरूपेण भीमं भयङ्करं मन्युं क्रोधात्मानं भिषक् वैद्यरूपा या सरस्वती इन्द्राय भामं क्रोधमिन्द्रियं वीर्यञ्च दुहे दोग्धि । ते वनस्पत्यादयः दुह्यमानाः पयआदीनि पिबन्तु हे होतर्यज ॥ ३९ ॥

नौ घार्थौ दैव्यौ होता इडा भारती सरस्वती चेति तिस्रो देवीः प्रयाजदेवीः इन्द्रे इन्द्रमश्विना अश्विनौ च यक्षत् यजतु। [या सरस्वती वाचा त्रयीलक्षणया भेषजमौषधं हिरण्ययं द्योतमानं रूपं च महस्तेजश्च इन्द्रियं चेन्द्राय इन्द्रार्थं दुहे दुग्धे। कैः कृत्वा त्रयस्त्रिधातवः त्रिभिः पशुभिः तृतीयार्थे प्रथमा त्रयो धातवः प्रधानाङ्गोपसर्जनलक्षणाः प्रकारा येषां ते त्रिधातवः पशवः ते च त्रयः आश्विनो धूम्रः सारस्वतो मेषः ऐन्द्र ऋषभः। कीदृशाः पशवः अपसः अप इति कर्मनाम[1]

होतायक्षत्तिस्रोदेवीर्नभेषजन्त्रयस्त्रिधातवोऽपसोरूपमिन्द्रेहिरण्ययमश्विनेडानभारतीवाचासरस्वतीमहइन्द्रा

यदुहइन्द्रियम्पयःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्यज ॥ ३७ ॥

होतायक्षत्सुरेतसमृषभन्नर्यापसन्त्वष्टारमिन्द्रमश्विनाभिषजन्नसरस्वतीमोजोनजूतिरिन्द्रियंवृकोनरभसोभिष

ग्यशःसुरयाभेषजꣳश्रियानमासरम्पयःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्यज ॥ ३८ ॥

विनो लोपः अपस्विनः कर्मवन्तः। त्रिभिः पशुभिर्भेषजरूपेन्द्रियमहांसि इन्द्राय दुग्धे। तेऽश्वादयः पयआदीनि पिबन्तु हे होतः त्वमप्याज्यस्य यज घृतं देहि ॥ ३७ ॥

[1]—निघ० २,१,१।

नकारास्त्वर्थाः होता त्वष्टारं प्रयाजदेवमिन्द्रमश्विना अश्विनौ सरस्वतीं भिषजश्च यक्षत् यजतु कीदृशं त्वष्टारं सुरेतसं शोभनं रेतो वीर्यं हर्षलक्षणं यस्य स सुरेताः तम् यद्वा सुष्ठु रेतो यस्मात्तम् पुंसो रेतःकारणभूतम् ऋषभं वर्षितारम्

होता सुपेशसा सुरूपे उभे द्विवचनाद्राविश नक्तोषे प्रयाजदेवौ सरस्वत्या सहितौ अश्विनौ च यक्षत्। तौ चाश्विनौ नक्तं दिवा दिने च रजसा ज्योतिषा रजःशब्दो ज्योतिर्वचनः हृदा चित्तेन श्रिया च सह मासरं भेषजं मासररूपमौषधं श्येनः श्येनपत्रं त्विषिं कान्तिश्च इन्द्रे समञ्जाते संश्लेषयतः नकाराश्चार्थाः। ते पयआदीनि व्यन्तु हे होतः त्वं यज ॥ ३५ ॥

दैव्यो होता दैव्या होतारा दैव्यौ होतारौ अयं चाग्निरसौ च मध्यमः एतौ प्रयाजदेवौ भिषजौ वैद्यौ अश्विनौ इन्द्रश्च

होतायक्षत्सुपेशसोषेनक्तन्दिवाश्विनासमञ्जातेसरस्वत्यात्विषिमिन्द्रेनभेषजꣳश्येनोनरजसाहृदाश्रियानमासर

म्पयःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ ३५ ॥

होतायक्षद्दैव्याहोताराभिषजाश्विनेन्द्रन्नजागृविदिवानक्तन्नभेषजैःशूषꣳसरस्वतीभिषक्सोमेनदुहइन्द्रियम्पयः

सोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ ३६ ॥

यक्षत् यजतु नौ चार्थौ। भिषग्भूता सरस्वती भेषजैः सह शूषं बलमिन्द्रियं वीर्यं च सोमेन हत्वा दुहे दुग्धे दुहेर्लट् लोपस्त आत्मनेपदेष्विति तलोपः इन्द्रियार्थम् कीदृशौ सरस्वती दिवा नक्तमहोरात्रं जागृवि जागरणशीला स्वकार्यसिद्धाव-प्रमत्ता सुपां सुलुगिति सोर्लुक् तां च दैव्यो होता यजतु। अश्व्यादयः पयआदीनि व्यन्तु हे होतः त्वमपि यज ॥ ३६ ॥

मौषधं दुहे दुग्धे पूरयति। अश्वादयो दक्षिणा दीयन्ते। लोपस्त आत्मनेपदेष्विति तलोपः। ते पयआदीनि व्यन्तु होतर्यज॥३३॥

दैव्यौ होता दुरो द्वारः प्रयाजदेवीः इन्द्रः इन्द्रं सरस्वती सरस्वतीमश्विना अश्विनौ च यक्षत् यजतु नकारादार्थाः द्वारशब्दस्य सम्प्रसारणम् कीदृशीः द्वारः दिशः दिश इव सावकाशाः कवष्यः ससुषिराः अत एव व्यचस्वतीः व्यचो व्यचनं गमनं विद्यते यासु ताः गमनवत्यः। विशो दिशस्त्वा दुरो द्वार अश्विभ्यां सहिताः सत्यौ रोदसी द्यावापृथिव्यौ इन्द्राय

होता यक्षद्बर्हिरूर्णम्रदा भिषङ्नासत्या भिषजाश्विनाश्वा शिशुमती भिषग्धेनुः सरस्वती भिषग्दुह इन्द्राय भेषजम्पयः सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३३ ॥

होता यक्षद्दुरो दिशः कवष्यो न व्यचस्वतीरश्विभ्यान्न दुरो दिश इन्द्रो न रोदसी दुघे दुहे धेनुः सरस्वत्यश्विनेन्द्राय भेषजꣳ शुक्रन्न ज्योतिरिन्द्रियम्पयः सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३४ ॥

भेषजमौषधं दुहे दुग्धे कीदृश्यौ रोदसी दुघे दुहः कवषयेति हकारस्य घकारः। दुहे इत्यत्र तलोपश्च वचनव्यत्ययः दुहाते रोदसीभ्यां सकाशादिन्द्रायौषधं दुहते इत्यर्थः। अकथितं चेति द्विकर्मकत्वम्। सरस्वती च धेनुर्भूत्वा इन्द्राय शुक्र शुक्लं शुद्धं ज्योतिरिन्द्रियं वीर्यञ्च दुहे दुग्धे। अन्यद्व्याख्यातम्॥ ३४॥

चन्द्री चन्द्रं सुवर्णमस्यास्तीति चन्द्री सुवर्णमयः। रथस्य यागोऽश्विनोरेव आयुधं वाहनं वापि स्तुतौ यस्येह दृश्यत तमेव तत्स्तुतं विन्द्यात्तस्याम्ना बहुधा हि स इति। सरस्वतीरथयोः प्रथमा द्वितीयार्थे भिषजि षष्ठ्यर्थे ॥ तत्र सुरया सह नग्नहुं नग्नहुः किण्वः मेषः वपाः बहुत्वात्त्रिपशुसम्बन्धिन्यो वपा बदरैः उपवाकाभिर्यवैः तोक्मभिश्च व्रीहिभिः सहिता इन्द्रस्य वीर्यकरं भेषजं भवतु। अश्व्यादयः पय आदीनि पिबन्तु हे होतराज्यस्य यज देहि। कीदृशं नराशंसं पतिं पालकम्। नग्नहुः सुराकन्दः। नकारौ चार्थौ। द्वितीयो भेषजशब्द आर्षः ॥ २१ ॥

होता यक्षदिडेडित आजुह्वानः सरस्वतीमिन्द्रं बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय भेषजं यवैः कर्कन्धुभिर्मधु लाजैर्न मासरम्पयः सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥३२॥

दैव्यो होता इडा इडां प्रयाजदेवतां सरस्वतीमिन्द्रमश्विना अश्विनौ च यक्षत् यजतु किं कुर्वन् ऋषभेण गवा च धेन्वा च बलेन वर्धयन् इडादीन्समर्धयन्यजतु कीदृशो होता ईडितः ऋत्विग्भिः स्तुतः आजुह्वानः इडादीनाह्वयन्। तत्र यवैः लाजैश्च सहितं मधु मासरमोदनं निःस्रावं च इन्द्राय इन्द्रियं वीर्यकरं भेषजं भवति। अश्विसरस्वतीन्द्रा होत्रेज्यमानाः पयआदीनि पिबन्तु हे होतः त्वञ्च यज ॥ ३२ ॥

दैव्यो होता ऊर्णम्रदाः ऊर्णमिव म्रदीयः बर्हिः प्रयाजदेवं भिषजा भिषजौ वैद्यौ नासत्या न असत्यौ सत्यरूपौ अश्विना अश्विनौ सरस्वतो सरस्वतीञ्च यक्षत् यजतु। तत्र शिशुमती बालकोपेता अश्वा वडवा भिषक् धेनुः भिषक् च इन्द्राय भेषज

देव्येन होत्रेव्यमानाः सन्तः पयः परिस्रुता मदिरया सह सोमः सोमं घृतं मधु च व्यन्तु पिबन्तु सोम इति विभक्तिव्यत्ययः सर्वत्र हे होतर्मनुष्यहोतः त्वमपि आज्यस्य यज कर्मणि षष्ठी यजतिर्दानार्थः अश्व्यादिभ्य आज्यं देहीत्यर्थः ॥ २९ ॥

एकाधिका अत्यष्टिः। तनूनपादिति प्रथमा द्वितीयार्थे इन्द्रायेति चतुर्थी द्वितीयार्थे नकारश्चार्थः।- देव्यो होता तनूनपातं प्रयाजदेवं सरस्वतीमश्विनौ इन्द्रञ्च यजतु। तत्र यागे अविः अजः मेषश्च नञर्थे मधुमता रसवता यथा यज्ञमार्गेण भरन् आत्मानं

होता यक्षत्तनूनपात्सरस्वतीमविर्मेषो न भेषजम्पथा मधुमताभरन्नश्विनेन्द्राय वीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तोक्मभिः पयः सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्य्यज ॥ ३० ॥

होता यक्षन्नराशꣳसन्न नग्नहुम्पतिꣳसुरया भेषजम्मेषः सरस्वती भिषग्रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तोक्मभिः पयः सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्य्यज ॥ ३१ ॥

हरन् सन् बदरैर्बदरीफलैः उपवाकाभिरिन्द्रयवैः तोक्मभिरङ्कुरितव्रीहिभिर्यवैर्वा सहितो वीर्यं वीर्यकरं भेषजं भवति। अश्विसरस्वतीन्द्रा दव्येन होत्रेव्यमानाः पयआदीनि व्यन्तु हे होतस्त्वमपि आजस्य यज आज्यं देहि ॥ ३० ॥

देव्यो होता नराशंसं प्रयाजदेवं सरस्वती सरस्वतीं भिषक् भिषजौ अश्विनौ रथः रथश्च यक्षत् यजतु कीदृशो रथः

अमृता देवाः सत्येन सह क्षत्रं क्षत्त्राणं हविर्वयः शक्तिं च इन्द्रे दधुः दधतु कीदृशा अमृताः शारदेन ऋतुना त्रयस्त्रिंशेन स्तोमेन स्तुताः रैवतस्य योनिः रेवतीरिति रैवतेन पृष्ठेन स्तुता इत्यर्थः ॥ २८ ॥ ५-१९,६,१४ ।

का० होता यक्षत्समिधाग्निमिति प्रयाजप्रैषास्त्रिपशोः[१] । होता यक्षत्समिधाग्निमिडस्पद इत्यादयो द्वादश कण्डिकास्त्रिपशोः प्रयाजप्रैषाः स्युः ॥ द्वादशाप्रीणां प्रयाजयाज्यानां प्रैषा अश्विसरस्वतीन्द्रदेवत्याः आद्या अष्टिः । दैव्यो होता समिधा प्रयाज-

हेमन्तेनऋतुनादेवास्त्रिणवेमरुतस्तुताः । बलेनशक्करीःसहोहविरिन्द्रेवयोदधुः ॥ २७ ॥

शैशिरेणऋतुनादेवास्त्रयस्त्रिꣳशेऽमृतास्तुताः । सत्येनरेवतीःक्षत्रꣳहविरिन्द्रेवयोदधुः ॥ २८ ॥

होतायक्षत्समिधाग्निमिडस्पदेऽश्विनेन्द्रꣳसरस्वतीमजोधूम्रोनगोधूमैःकुवलैर्भेषजम्मधुशष्पैर्नतेजइन्द्रियम्पयःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्यज ॥ २९ ॥

देवतया सह अग्निमश्विना अश्विनौ इन्द्रं सरस्वतीं च इडः पदे गोपदे आहवनीये यक्षत् यजतु गोपदे स्थाप्यत इत्यभिप्रायेणेदं वचनम् । तत्र यागे अजो धूम्रो मेषश्च गोधूमैः कुवलैः बदरैः शष्पैः अङ्कुरितव्रीहिभिश्च सहितो भेषजमौषधं भवति नकारो चार्थौ इन्द्रायेति शेषः कीदृशं भेषजम् मधु मधुरं तेजः तेजःप्रदमिन्द्रियमिन्द्रियसामर्थ्यप्रदम् । किञ्च ते अश्विसरस्वतीन्द्रा

तेत्यर्थः। वसवो देवा इन्द्रे तेजसा सह हविर्वैपाख्यं वयः शक्तिं च दधुः दधतु स्थापयन्तु कीदृशा वसवः वसन्तेन ऋतुना त्रिवृता स्तोमेन रथन्तरेण पृष्ठेन च स्तुताः ॥ २३ ॥

रुद्रा देवा इन्द्रे यशसा सह बलं हविर्वयश्च दधुः कीदृशाः रुद्राः ग्रीष्मेण ऋतुना पञ्चदशः पञ्चदशेन स्तोमेन विभक्ति-व्यत्ययः बृहता पृष्ठेन च स्तुताः ॥ २४ ॥

आदित्या देवाः इन्द्रे विशा प्रजया ओजसा च सह हविर्वयश्चदधुः। कीदृशाः वर्षाभिर्ऋतुना सप्तदशेन स्तोमेन तृतीयार्थे

ग्रीष्मेणऋतुनादेवारुद्राःपञ्चदशेस्तुताः। बृहतायशसाबलꣳहविरिन्द्रेवयोदधुः ॥ २४ ॥

वर्षाभिर्ऋतुनादित्यास्तोमेसप्तदशेस्तुताः। वैरूपेणविशौजसाहविरिन्द्रेवयोदधुः॥ २५ ॥

शारदेनऋतुनादेवाएकविꣳशऋभवस्तुताः। वैराजेनश्रियाश्रियꣳहविरिन्द्रेवयोदधुः॥ २६ ॥

सप्तम्यौ वैरूपेण पृष्ठेन च स्तुताः ॥ २५ ॥

ऋभवः ऋभुसञ्ज्ञा देवाः इन्द्रे श्रियं हविर्वयश्च दधुः कीदृशाः शारदेन ऋतुना एकविंशेन स्तोमेन वैराजेन पृष्ठेन श्रिया लक्ष्म्या च स्तुताः। सप्तमी तृतीयार्थे ॥ २६ ॥

मरुतो देवाः इन्द्रे बलेन सहः इन्द्रियसामर्थ्यं हविर्वयश्च दधुः। कीदृशा मरुतः हेमन्तेन ऋतुना त्रिणवेन स्तोमेन स्तुताः शक्करीरिति शाक्करस्य योनिनिर्देशः शाक्करेण पृष्ठेन स्तुता इत्यर्थः ॥ २७ ॥

वनस्पतिः प्रयाजदेवः सविता सूर्यः ककुप्छन्दः वशा वन्ध्या गौः वेहत् गर्भघ्नी गौः एते पञ्च इहेन्द्रे इन्द्रिय वयश्च दधुः। कीदृशो वनस्पतिः नोऽस्माकं शमिता शमयति सुखयति शमिता शनिता मन्त्व इति छान्दसो णिचो लोपः। कीदृशः सविता सविता भगं प्रसुवन् धनं प्रेरयन् ददत् ॥ २१ ॥

शोभनं चत्रं चतत्राणं यस्य स सुचत्रः शोभनचतत्राता वरुणः स्वाहा नामैकदेशे नामग्रहणं स्वाहाकृतिभिः प्रयाजदेवैः सह

शमितानोवनस्पतिःसविताप्रसुवन्भगम्। ककुप्छन्दइहेन्द्रियंवशावेहद्वयोदधुः॥ २१ ॥

स्वाहायज्ञंवरुणःसुक्षत्रोभेषजङ्करत्। अतिच्छन्दाइन्द्रियम्बृहदृषभोगौर्वयोदधुः॥ २२ ॥

वसन्तेनऋतुनादेवावसवस्त्रिवृतास्तुताः। रथन्तरेणतेजसाहविरिन्द्रेवयोदधुः॥ २३ ॥

यज्ञं भेषजं यज्ञलक्षणमौषधमिन्द्राय करत्करोतु। किञ्च अतिच्छन्दाः छन्दः बृहत् महान् ऋषभः समर्थो गौः वरुणश्च स्वाहाकृतयोऽपि एते चत्वार इन्द्रियं वयश्च इन्द्रे दधुः दधतु ददतु ॥ २२ ॥

१—१९,७,२०।

का॰ याज्यापुरोऽनुवाक्याश्च वपापुरोडाशपशूनां वसन्तेन ऋतुनेति। चकाराद्धायोधसे पशाविव षड्चो यथाक्रमं वपादीनां याज्यानुवाक्याः वपायागे वसन्तेनेति पुरोऽनुवाक्या ग्रीष्मेणेति याज्या पशुपुरोडाशयागे वर्षाभिरिति पुरोऽनुवाक्या शारदेनेति याज्या हृदयादियागे हेमन्तेनेति पुरोऽनुवाक्या शैशिरेणेति याज्येति सूत्रार्थः॥ अनुष्टुभः षड्लिङ्गोक्तदेवताः वयोधा इन्द्रो देव-

का० वाजिनस्य शं नो वाजे-वाज इति[1]। पयस्यायां वाजिनयागोऽस्ति तत्र शं न इति पुरोऽनुवाक्या वाजे-वाज इति याज्या॥ व्याख्याते (९,१६;१८)॥ १०॥ ११॥

का० वायोधस आप्रियः समिद्धोऽअग्निः समिधेति[2]। वायोधसे पशौ समिद्धोऽअग्निरित्याद्या एकादश ऋच आप्रियः प्रयाजानां याज्या इति सूत्रार्थः॥ एकादश आप्रीदेवता अनुष्टुभः स्वस्त्यात्रेयदृष्टाः। अग्निः गायत्री छन्दो गौश्च एते त्रय इन्द्रे इन्द्रियं वीर्यं वयः सत्त्वमद्यमायुर्वा दधुः दधतु प्रयच्छन्तु। कीदृशोऽग्निः समिधा प्रयाजदेवतया समिद्धः दीप्तः सुसमिद्धश्च

वाजेवाजेऽवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः। अस्यमध्वःपिबतमादयध्वन्तृप्तायातपथिभिर्देवयानैः॥ ११॥

समिद्धोऽअग्निःसमिधासुसमिद्धोवरेण्यः। गायत्रीच्छन्दइन्द्रियन्त्र्यविर्गौर्वयोदधुः॥ १२॥

तनूनपाच्छुचिव्रतस्तनूपाश्चसरस्वती। उष्णिहाच्छन्दइन्द्रियन्दित्यवाड्गौर्वयोदधुः॥ १३॥

सम्यग्दीप्तः प्रयाजहुतेनेति शेषः वरेण्यः वरणीयः सम्भजनीयः। कीदृशो गौः त्र्यविः त्रयोऽवयोऽनुचरत्वेन यस्य स त्र्यविः यद्वा षण्मासावधिः कालोऽविः त्रयोऽवयो यस्य सार्धवत्सरो गौरित्यर्थः॥ १२॥

तनूनामपां नपात् पौत्रोऽग्निः तनूनां गवां नपात् घृतं वा प्रयाजदेवता सरस्वती उष्णिहा छन्दः हलन्तत्वाट्टाप् उष्णिक् छन्दः गौश्च एते चत्वार इन्द्रे इन्द्रियं वयश्च दधुः दधतु। कीदृशस्तनूनपात् शुचिव्रतः शुचि शुद्धं व्रतं कर्म यस्य सः। कीदृशी सरस्वती तनूपाः तनूं शरीरं पाति रक्षतीति। कीदृशो गौः दित्यवाट् दित्यं हविर्वहतीति॥ १३॥

१—१९,७,१७। २—१९,७,१९।

वरुणेति पुरोऽनुवाक्या प्र बाहवेति याज्या। मित्रावरुणदेवता गायत्री विश्वामित्रदृष्टा। हे मित्रावरुणा मित्रावरुणौ देवौ नोऽस्माकं गव्यूतिं यज्ञमार्गं घृतैर्युवामा उक्षतम् सर्वतः सिञ्चतम् यद्वा गवि पृथिव्यां यूतिमवनहेतुभूतं क्षेत्रं घृतैः घृतोदकैः सिञ्चतम्। किञ्च हे सुक्रतू शोभनः क्रतुः कर्म ययोस्तौ हे सुकर्माणौ मध्वा मधुना रजांसि लोकाना उक्षतम् अनित्यमागमशासनमिति नुमभावः ॥ ८ ॥

मित्रावरुणदेवत्या त्रिष्टुप् वसिष्ठदृष्टा। हे मित्रावरुणौ हे युवाना युवानौ तरुणौ छिन्नजरसौ नोऽस्माकं जीवसे चिरं

आ नो॑ मित्रावरुणा घृ॒तैर्गव्यू॑तिमुक्षतम्। मध्वा॒ रजा॑ᳬसि सुक्रतू ॥ ८ ॥

प्र बा॒हवा॑ सिसृतं जी॒वसे॑ न॒ आ नो॒ गव्यू॑तिमुक्षतं घृ॒तेन॑। आ मा॒ जने॑ श्रवयतं युवाना श्रु॒तं मे॑ मित्रावरुणा॒ हवे॒मा ॥ ९ ॥

शन्नो॑ भवन्तु वा॒जिनो॒ हवे॑षु दे॒वता॑ता मि॒तद्र॑वः स्व॒र्काः। ज॒म्भय॒न्तोऽहिं॒ वृक॒ᳬ रक्षा॑ᳬसि॒ सने॑म्य॒स्मद्यु॑यव॒न्नमी॑वाः ॥ १० ॥

जीवनाय बाहवा बाहू प्रसिसृतमन्तर्भूतण्यर्थः प्रसारयतं जीवनविघ्ननिवारणाय बाहुप्रसारणं कुरुतमित्यर्थः। किञ्च नोऽस्माकं गव्यूतिं क्षेत्रं घृतेन जलेन आ उक्षतं सिञ्चतम्। भवत्सिक्तक्षेत्रनिष्पन्नधान्यैः यज्विनं मा मां जने जनपदे युवामाश्रवयतम् आश्रावयतम् इत्यमदात् इत्यमयाक्षीदिति लोके मां कथयतमित्यर्थः वृद्ध्यभाव आर्षः किञ्च युवां मे मम इमा इमानि हवा हवानि आह्वानानि श्रुतं शृणुतम् श्रुत्वा पूर्वोक्तं कुरुतमित्यर्थः। शृणोतेः शपो लुक् ॥ ९ ॥

अदितिर्देवत्या त्रिष्टुप् गयप्लातदृष्टा। दैवीं देवसम्बन्धिनीं नावं यज्ञरूपां स्वस्तये कल्याणायाविनाशाय वयमारुहेम यज्ञं कृत्वा स्वर्गं गच्छेमेत्यर्थः। कीदृशीं नावं सुत्रामाणं सुष्ठु त्रायते रक्षति सुत्रामा ताम्। पृथिवीं विशालाम्। द्यां स्वर्गरूपां स्वर्गहेतुभूतामित्यर्थः। अनेहसमेह इति क्रोधनाम[1] नास्ति एहो यत्र क्रोधरहिताम्। यद्वा लुप्तोपमानम् पृथिवीमिव सुत्रामाणं पालयित्रीं द्यामिवानेहसमक्रोधाम्। सुशर्माणं साधुशरणभूताम्। अदितिमखण्डितामदीनां वा। सुप्रणीतिं सुष्ठु प्रणयतीति सुप्रणीतिः साधुप्रणेत्री। स्वरित्रां साधुकेन्दुवालाम् अरित्रशब्दः केन्दुवालवाचकः अरित्रं कैनिपातक इत्यभिधानात् प्रयाजानुयाजादयोऽरित्रस्थानीयाः। अनागसमनपराधाम्। अस्रवन्तीमच्छिद्रां निर्दोषामित्यर्थः। ईदृशीं नावमारुहेम संहितायां दीर्घः॥ ६॥

सुत्रामाणम्पृथिवीन्द्यामनेहसꣳसुशर्म्माणमदितिꣳसुप्रणीतिम्। दैवीन्नावꣳस्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये॥६॥

सुनावमारुहेयमस्रवन्तीमनागसम्। शतारित्राꣳस्वस्तये॥ ७॥

स्वर्गसम्बन्धिनीदेवत्या गायत्री। तद्धै सर्व एव यज्ञो नौः स्वर्ग्येति श्रुतेः स्वर्ग्या नौर्यज्ञ एव। सुनावं शोभनां नावं यज्ञरूपां स्वस्तयेऽविनाशाय संसारसागरोत्तरणायाहमारुहेयमारोहेयं यज्ञं कुर्यामित्यर्थः। कीदृशीमस्रवन्तीमच्छिद्राम्। अनागसं निरपराधां सर्वैर्दृष्टामित्यर्थः। शतारित्रां बहुकेन्दुवालाम् ऋग्यजुःसामभिरितार्थः। आर्तैः नावारोहणे वनियोगोऽस्या ऋचः॥ ७॥

[1]—निघ० २,१३,६। [2]—१९,७,१६।

का० आ नः प्र बाहवेति पयस्यायाः[2]। अवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतीति या पयस्या तस्या आ नो मित्रा

समीपतमश्च भव। अवतीत्यवमः अवतेरमप्रत्ययः यद्वा अवतीत्यवः पचाद्यच् अत्यन्तमवोऽवतमः तलोपश्छान्दसः; अत्यन्तमन्तिको नेदिष्ठः अन्तिकवाढयोर्नेदसाधाविति इष्ठे परे नेदादेशः। किञ्च रराणो हविर्ददत् सन् नोऽस्माकं वरुणमवयक्ष्व अवयज अवपूर्वाद्यजतेर्लोटि। शपो लुक् ततो मृडीकं सुखकरं हविः वीहि भक्षय वी कान्तिव्याप्तिक्षेपप्रजननखादनेषु। किञ्च नोऽस्माकं सुहवः स्वाह्वान एधि भव घ्वसोरेद्धावभ्यासलोपश्चेति एकारः ॥ ४ ॥

का० आदित्यस्य सुत्रामाणम् महीमूषु मातरमिति[1]। आदित्यं चरुं यक्ष्यमाणो निर्वपत्यादित्यमीजान इत्यादावन्ते

**सत्वन्नो॑अग्ने॒ऽव॒मो भ॑वो॒तीने॒दि॑ष्ठो अ॒स्या उ॒षसो॒ व्यु॑ष्टौ। अव॑यक्ष्व नो॒ वरु॑ण॒ꣳ रराणो वी॒हि मृ॑डी॒कꣳ सु॒हवो॑ न एधि ॥४॥**

**म॒हीमू॒षु मा॒तर॑ꣳ सुव्र॒ताना॑मृ॒तस्य॒ पत्नी॒मव॑से हुवेम। तु॒वि॒क्ष॒त्राम॒जर॑न्तीमुरू॒चीꣳ सु॒शर्मा॑ण॒मदि॑तिꣳ सु॒प्रणी॑तिम् ॥५॥**

चादित्यचरुकल्पस्तस्य सुत्रामाणमिति पुरोऽनुवाक्या महीमू ष्विति याज्या॥ अदितिदेवत्या त्रिष्टुप्। उ सु निपातौ पादपूरणौ संहितायामाद्यस्य दीर्घोऽन्त्यस्य षत्वम्। वयमवसे अवितुं रक्षितुमदितिं हुवेम आह्वयामः तुमर्थे असेप्रत्ययः। कीदृशीमदितिं महीं महतीम्। सुव्रतानां शोभनकर्मणां मातरं निर्मात्रीम्। व्रतमिति कर्मनाम[2]। ऋतस्य यज्ञस्य पत्नीं पालयित्रीम्। तुविक्षत्रां। तुवीति बहुनाम[3]। बहुक्षतात्त्राणशीलाम् अजरन्तीं न जीर्यति अजरन्ती तां जरारहिताम्। उरु अञ्चतीति उरूची बहुगमनशीलाम्। सुशर्माणं शोभनं शर्माश्रयः सुखं वा यस्यास्ताम्। सुप्रणीतिं शोभना प्रणीतिः प्रणयनं भजनं यस्यास्ताम्। अदितिरदीना देवमाता[4] ॥ ५ ॥

१–१९,७,१५। २—निघ० २,१,७। ३—निघ० ३,१,२। ४—निरु० ४,२२।

शुनःशेपदृष्टे। हे वरुण त्वं मे मम इमं हवमाह्वानं श्रुधि शृणु श्रुशृणुभ्यामिति हेर्धिः संहितायां दीर्घः। च पुनः अद्य दिने मृडयास्मान् सुखय यतोऽहं त्वामाचके कामये। आचक इति कान्तिकर्मा[1]। कीदृशोऽहम् अवस्युः अवनमवः पालनमवतेरसुन् तदिच्छति अवस्युः सुप आत्मनः क्यच् क्याच्छन्दसीति उप्रत्ययः आत्मनो रक्षणमिच्छन् त्वामिच्छामीत्यर्थः ॥ १ ॥

व्याख्याता (१८,४९) ॥ २ ॥

का० अग्नीवरुणयोस्त्वं नः स त्वं न इति[२]। अवभृथेष्टावेवाग्निवरुणयागे पुरोऽनुवाक्यायाज्ये ॥ अग्नि वरुणदेवत्ये त्रिष्टुभौ वाम-

तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः। अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः॥२॥

त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः। यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्॥३॥

देवदृष्टे। हे अग्ने त्वं नोऽस्मान् प्रति वरुणस्य देवस्य हेडः क्रोधमवयासिसीष्ठाः निवर्तय यसु उपक्षये अवपूर्वस्य णिजन्तस्याशीर्लिङि रूपम्। किञ्च विश्वा विश्वानि सर्वाणि द्वेषांसि दौर्भाग्यानि अस्मत् अस्मत्तः सकाशात् प्रमुमुग्धि प्रमुञ्च दूरीकुरु मुचेर्व्यत्ययेन शपः श्लुः। कीदृशस्त्वम् विद्वान् स्वाधिकारं जानन् यजिष्ठः अतिशयेन यष्टा यजिष्ठः तुरिष्ठेमेयःस्विति तृचो लोपः। वह्नितमः वहतीति वह्निः अत्यन्तं वह्निर्वह्नितमः हविषां वोढा। शोशुचानः अत्यन्तं शोचते दीप्यते शोशुचानः शोचतेर्यङ् यङन्ताच्छानच् प्रत्ययः ॥ ३ ॥

१—निघ० २,६,११। २—१९,७,१४।

हे अग्ने स त्वमस्या उषसो व्युष्टौ व्युष्टिकालेऽस्मिन्नहनि ऊती ऊत्या अवनेन नोऽस्माकमवमः रक्षकः नेदिष्ठोऽन्तिकतमः

नोऽस्माकं चनः अन्नं सोमरूपं हविः दधिष्व उदरे धारय त्वधि धारणे व्यत्ययेन शपो लुकि द्वित्वं श्लात्यादित्वात् अभ्यासस्यात्वं छान्दसम् । चन इत्यन्ननाम[1] ॥ ८९ ॥

अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् । अश्विना अश्विनौ मधु मधुरस्वादं सोमं पिबतां भक्षयताम् कीदृशौ अश्विनौ सरस्वत्या सजोषसा सजोषसौ जोषः प्रीतिः अस्तुन् समानं जोषः प्रीतिर्ययोस्तौ सरस्वत्या सह प्रीतिमन्तावित्यर्थः । किञ्च सुष्ठु त्रायते रक्षति

**अश्विनापिबताम्मधुसरस्वत्यासजोषसा । इन्द्रः सुत्रामावृत्रहाजुषन्ताᳪसोम्यम्मधु ॥ ९० ॥**

**॥ इतिमाध्यन्दिनीयायां वाजसनेयसंहितायां विंशोऽध्यायः ॥ २० ॥**

**इमम्मेवरुणश्रुधीहवमद्याचमृडय । त्वामवस्युराचके ॥ १ ॥**

सुत्रामा वृत्रं हतवान् वृत्रहा इदृश इन्द्रः अश्विनौ सरस्वती च मधु मधुरं सोम्यं सोममयं हविर्जुषन्ताम् सेवन्ताम् मये चेति सोमशब्दात् मयडर्थे यप्रत्ययः सोममयं सोम्यम् ॥ ९० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । सैत्रामण्यादिहौत्रान्तो विंशोऽध्यायो निरूपितः ॥ २० ॥

ओम् श्रीगणेशाय नमः ॥ प्रणम्य शिरसा देवं लक्ष्मीकान्तमुमापतिम् । एकविंशेऽधुनाध्याये वेददीपो वितन्यते ॥ का० इमं मे तत्त्वेत्येककपालस्य[2] । अवभृथेष्टौ वारुणस्यैककपालस्य पुरोडाशस्य द्वे पुरोऽनुवाक्यायाज्ये इत्यर्थः ॥ द्वे वरुणदेवत्ये गायत्रीत्रिष्टुभौ

१ – निरु० ६,१६ ।

२——१९,७,१२ ।

मधुच्छन्दोदृष्टा इन्द्रदेवत्यास्तिस्रो गायत्र्यः। चित्रा नानाविधा भानवो दीप्तयो यस्य स चित्रभानुः हे चित्रभानो इन्द्र, त्वमायाहि आगच्छ। किमिति इमे सोमाः सुताः अभिषुताः। कीदृशा इमे त्वायवः त्वां कामयन्ते त्वायवः सुप आत्मनः क्यच् क्याच्छन्दसीति उप्रत्ययः। तथा अण्वीभिः अण्वीत्यङ्गुलीनाम[1] अङ्गुलीभिः तना दशापवित्रेण च पूतासः पूताः शोधिताः तनशब्दो दशापवित्रवाची तृतीयैकवचनस्य पूर्वसवर्णः। शोधिताः सुताः सोमा इन्द्रोऽस्मान् पिबत्विति कामयन्तेऽतोऽत्रायाहीत्यर्थः ॥ ८७ ॥

१——निघ० २,५,२।

इन्द्रायाहि धियेषितो विप्रजूतः सुतावतः। उप ब्रह्माणि वाघतः ॥ ८८ ॥

इन्द्रायाहि तूतुजान उप ब्रह्माणि हरिवः। सुते दधिष्व नश्चनः ॥ ८९ ॥

हे इन्द्र धिया स्वबुद्ध्या इषितः प्रेरितः सन्नायाहि अनन्यप्रेरित आगच्छेत्यर्थः। कीदृशस्त्वं विप्रजूतः जु गतौ विप्रैर्मेधाविभिरनुगतः सेवितः। किमित्यागन्तव्यमिति चेत् सुतावतः छान्दसो दीर्घः सुतवतः सोममभिषुतवतो यजमानस्य ब्रह्माणि हवींषि उप हविषां समीपे वाघतः ऋत्विजो वर्तन्त इति शेषः। वाघत इति ऋत्विङ्नामसु पठितम्[2] ऋत्विजो हविरादाय स्थिता वर्तन्त इत्यायाहीत्यर्थः ॥ ८८ ॥

२——निघ० ३,१८,३। ३—निघ० २,१५,१९।

हरी अश्वौ विद्येते यस्य स हरिवान् मतुवसो रुः सम्बुद्धौ छन्दसीति रुत्वम् हे हरिवः अश्ववन् हे इन्द्र तूतुजानः त्वरमाणः सन् त्वं ब्रह्माणि हवींषि पउ हवींषि प्रति आयाहि। तूतुजान इति क्षिप्रनाम[3]। आगत्य सुते सोमेऽभिषुते सति

तत्प्रति गच्छति अस्मद्यज्ञं प्रत्यागच्छत्वित्यर्थः। कीदृशी सरस्वती पावका पावयित्री पवनं पावः शोधनम् घञ् पावं कायति कथयति पावका आतोऽनुपसर्गे कः। वाजेभिर्वाजैः अन्नैः वाजिनीवती वाजा अन्नानि विद्यन्ते यस्यां सा वाजिनी यज्ञक्रिया वाजिनी विद्यते यस्याः सा वाजिनीवती यज्ञक्रियाधिष्ठात्री। धियावसुः धिया कर्मणा वसु धनं यस्याः सा धियावसुः छान्दसस्तृतीयाया अलुक् ॥ ८४ ॥

सरस्वती यज्ञं दधे धारयति। कीदृशी सूनृतानां प्रियं सत्यं सूनृतं प्रियसत्यवचनानां [वेदत्रयीशब्दानां चोदयित्री प्रेरयित्री

चोदयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम्। यज्ञन्दधेसरस्वती ॥ ८५ ॥

महोअर्णःसरस्वतीप्रचेतयतिकेतुना। धियोविश्वाविराजति ॥ ८६ ॥

इन्द्रायाहिचित्रभानोसुताइमेत्वायवः। अण्वीभिस्तनापूतासः ॥ ८७ ॥

चुद प्रेरणे णिजन्तात्तृच् ततो ङीप्। सुमतीनां शोभनानां बुद्धीनां चेतन्ती चेतयन्ती प्रकटयन्ती सुमतिदात्रीत्यर्थः छन्दस्युभयथेति शपोऽप्यार्धधातुकत्वाण्णिचो लोपः ॥ ८५ ॥

सरस्वती केतुना कर्मणा प्रज्ञया वा महो महत् अर्णः उदकं प्रचेतयति प्रज्ञापयति प्रेरयति सर्वस्यां भूमौ वृष्टिं कारयतीत्यर्थः। किञ्च विश्वाः सर्वाः धियः सर्वप्राणिस्था बुद्धीः विराजति विराजयति दीपयति सर्वजन्तुबुद्धीः प्रकाशयति तां स्तुमः ॥ ८६ ॥

हे वृषण्वसू वृषा वृष्टिरेव वसु धनं ययोस्तौ यद्वा वृष्णा वृष्ट्या वासयतो लोकं स्थापयतस्तौ वृषण्वसू हे अश्विनौ दुःशंसो दुष्टमपवादं शंसति कथयति दुःशंसोऽपवदिता रिपुः शत्रुः मर्त्यः मनुष्यः परः असम्बद्धः अन्तरः सम्बद्धः स्वकीयोऽपि ईदृशो मर्त्यो यत् यमिन्द्रं न आदधर्षीत् न आधृष्णुयात् न पराभूयात्। स्वजनोऽस्वजनोऽपि रिपुः पिशुनोऽपि यमिन्द्रं पराभवितुं न शक्त इत्यर्थः। ञिधृषा प्रागल्भ्येऽस्माद्धातोर्यङ्लुगन्ताच्छतृप्रत्ययः ॥ ८२ ॥

नयत्परोनान्तरआदधर्षद्वृषण्वसू। दुःशꣳसोमर्त्योरिपुः ॥ ८२ ॥

तानआवोढमश्विनारयिम्पिशङ्गसन्दृशम्। धिष्ण्यावरिवोविदम् ॥ ८३ ॥

पावकानःसरस्वतीवाजेभिर्वाजिनीवती। यज्ञंवष्टुधियावसुः ॥ ८४ ॥

हे धिष्ण्या धिष्ण्यौ धिष्ण्याग्निरूपौ धातारौ वा हे अश्विना युवां नोऽस्माकं रयिं धनमावोढमावहतम् आनयतमित्यर्थः वहतेर्लुङि परस्मैपदे मध्यमद्विवचनम्। कीदृशं रयिं पिशङ्गसन्दृशं पिशङ्गं पीतं सम्यक् दृश्यते तत्पिशङ्गसन्दृशम् पीतवर्णं सुवर्णमित्यर्थः। तथा वरिवोविदं वरिवो धनं विन्दति प्राप्नोति वरिवोविदस्तम् विद्लृ लाभे इगुपधेति कः। यच्च धनं धनान्तरहेतुभूतं भवतीत्यर्थः ॥ ८३ ॥

मधुच्छन्दोदृष्टाः सरस्वतीदेवत्यास्तिस्रो गायत्र्यः। सरस्वती नोऽस्माकं यज्ञं वष्टु कामयतां वश कान्तौ यो यदिच्छति स

होतुः पुरस्तात्प्रतिगरार्थमुपवेशनमुक्तम् तदाह प्रतिगरिष्यत्यध्वर्यौ पुर उपविष्टे सत्यध्वर्यो शोंसावोऽमित्याह्वयाश्विना तेजसा चक्षुरित्येकाद्शर्चमनुवाकं शस्त्रं शंसति प्रथमान्त्ये ऋचौ त्रिःशंसनीये मध्यस्थानां त्रयाणां तृचानामादिष्वाहावः कार्य इति सूत्रार्थः ॥ अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् आद्यः पादोऽष्टार्णः द्वितीयो नवार्णः तृतीयः षडर्णः चतुर्थोऽष्टार्णः । अश्विनौ तेजसा सह चक्षुरिन्द्रियमिन्द्राय दधुः दधतुः ददतुः । सरस्वती प्राणेन सह वीर्यमिन्द्राय दधौ ददौ । इन्द्रः कल्पान्तरीणः वाचं बलेन च सह इन्द्रायैतत्कालीनाय इन्द्रियं सामर्थ्यं ददौ । एवमश्विसरस्वतीन्द्रा इन्द्राय तेजआदि दधुरित्यर्थः सर्वापेक्षया दधुरिति बहुवचनम् ॥ ८० ॥

गोमदूषुणासत्याश्वावद्यातमश्विना । वर्त्ती रुद्रानृपाय्यम् ॥ ८१ ॥

गृत्समदद्दष्टा अश्विदेवत्यास्तिस्रो गायत्र्यः आद्या पादनिवृद्गायत्री त्रयः सप्तकाः पादनिवृदिति वचनात् । उ सु निपातौ पादपूरणौ इकः सुञीति सुनिपाते परे उ इत्यस्य संहितायां दीर्घः सुञः इति सूत्रेण सु इत्यस्य षत्वम् पूर्वपदादिति नासत्यशब्दनकारस्य णत्वम् । हे नासत्या नासत्यौ हे अश्विना हे रुद्रा रुद्रौ शत्रूणां रोदयितारौ वर्त्तिः विभक्तिव्यत्ययः वर्त्या मार्गेण युवां नृपाय्यं यज्ञं प्रति यातं गच्छतम् नृभिः पीयते सोमो यस्मिन्स नृपाय्यः क्रतौ कुण्डपाय्यसञ्चाय्याविति अत्र कुण्डशब्द उपलक्षकः नृशब्देऽपि तृतीयान्ते उपपदे पिबतेर्धातोरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते । किं कृत्वा गोमत् गावो विद्यन्ते यस्मिन् गोमत् अश्वावत् अश्वा विद्यन्ते यस्य तदश्ववत् मन्त्रे सोमाश्वेत्यादिना अश्वशब्दस्य दीर्घः गोयुक्तमश्वयुक्तञ्च धनमादाय यज्ञं गच्छतमित्यर्थः ॥ ८१ ॥

अभ्यर्थं मनोवृधो यज्ञे कुरु इत्यर्थः। कीदृशायाग्नये कीलालये कीलालमन्नरसं पिबति कीलालपास्तस्मै। सोमपृष्ठाय सोमः पृष्ठे यस्य तस्मै यस्य पृष्ठे सोमाहुतयो हूयन्त इत्यर्थः। वेधसे विदधाति शुभं करोति वेधाः तस्मै शुभमतिकर्त्रे। तस्मै कस्मै यस्मिन्नग्नौ एते पशवः अवसृष्टासः अवसृष्टाः अवदायावदाय चतुरवत्तेन निक्षिप्ताः तथा आहुताः आदायादाय हुताः। के पशवः अश्वासः अश्वाः ऋषभासः ऋषभाः उक्षणः उक्षाणः सेचनसमर्था वृषाः वा षपूर्वस्य निगम इति उपधादीर्घाभावः। वशाः वन्ध्याः। मेषाः अजाः। यस्मिन्नेते पशवो हुतास्तस्मै मनःशुद्धिं कुर्विति होतुर्वाक्यम्॥ ७८॥

आहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः। वाजसनिꣳ रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम्॥ ७९॥

अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम्। वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम्॥ ८०॥

हे अग्ने ते तवास्ये हविराहावि हुतं सर्वतः जुहोतेः कर्मणि लुङ् सन्ततहोमे दृष्टान्तः स्रुचि घृतमिव यथा स्रुचि घृतं सर्वदा स्थितम् चम्वि चम्वामधिषवणचर्मणि सोमइव तव यथा सोमः सर्वदा स्थितस्तद्वन्नित्यं मया तवास्ये हविर्हुतम्। हे अग्ने सः त्वमस्मे अस्मासु एतानि वस्तूनि धेहि स्थापय। कानि वाजसनिं वाजस्य अन्नस्य सनिं भोगम्। रयिं धनं कीदृशं सुवीरं शोभना वीराः पुत्रा यत्र तं सुपुत्रयुक्तं धनमित्यर्थः॥ प्रशस्तं सर्वलोकस्तुतं बृहन्तं महान्तं यशसं यशश्च पुंस्त्वमार्षम् सर्वलोकप्रसिद्धं यशोदेहीत्यर्थः यशो वै सोमो राजेति श्रुतेः यशसं सोममितिवा॥ ७९॥

१—१९,७,१।

का॰ प्रतिप्रस्थात्युपविष्टेऽध्वर्यो शोꣳसावेत्याह्वयाश्विना तेजसेत्यनुवाकꣳशꣳसति। अयस्त्रिंशवसायहसादनानन्तरमध्वर्योः

ता तौ प्रसिद्धौ भिषजा भिषजौ वैद्यौ अश्विनौ सा प्रसिद्धा सरस्वती च स प्रसिद्धो त्वष्टा इन्द्रः कल्पान्तरप्रभवः इन्द्राय एतत्कल्पप्रभवाय इन्द्रियं वीर्यं दधुः यद्वा इन्द्रा एव दातृपात्ररूपेण बहुधा भवति देवानामचिन्त्यशक्तित्वात् । कीदृशौ भिषजौ सुकर्मणा सुकर्माणौ शोभनं कर्म ययोस्तौ । कीदृशी सरस्वती सुदुधा सुष्ठु दुग्धे सा सुदुघा साधुदोहना । कीदृशो त्वष्टा शतक्रतुः शतं क्रतवः कर्माणि यस्य बहुकर्मकर्ता ॥ ७६ ॥

पुत्रमिवपितराविश्विनोभेन्द्रावथुःकाव्यैर्दंᳰसनाभिः । यत्सुरामंव्यपिबःशचीभिःसरस्वतीत्वामघवन्नभिष्णक् ॥ ७७ ॥

यस्मिन्नश्वासऋषभासउक्षणोवशामेषाअवसृष्टासआहुताः । कीलालपेसोमपृष्ठायवेधसेहृदामतिञ्जनयचारुमग्नये ॥ ७८ ॥

का० ग्रहाणां युवᳰ सुरामं पुत्रमिवेति[१] । त्रयाणां पयोग्रहाणां सुराग्रहाणां च युवमिति पुरोऽनुवाक्या पुत्रमिवेति याज्येति सूत्रार्थः ॥ हे अश्विसरस्वतीन्द्रदेवत्ये ऽनुष्टुप्त्रिष्टुभौ । हे अश्विनौ हे सरस्वति युवं यूयं वचनव्यत्ययः नमुचावासुरे दैत्ये वर्तमानं सुरामं सुरामयं यज्ञं सचा सह विपिपाना विविधं पिबन्तः सन्तः कर्मस्विन्द्रमावत आ समन्ताद्रक्षत । पिपाना अत्र विकरणव्यत्ययः ॥ ७६ ॥

१——१९,६,२० । २——१९,६,२१

इयं व्याख्याता दशमेऽध्याये (१०,३४) ॥ ७७ ॥

का० पशुस्विष्टकृतो यस्मिन्नश्वासोऽहाव्यग्न इति[२] । पशोः सम्बन्धिनि स्विष्टकृद्यागे यस्मिन्नश्वास इति पुरोऽनुवाक्या अहाव्यग्न इति याज्या ॥ हे अग्निदेवत्ये जगतीत्रिष्टुभौ । हे अध्वर्यो तस्मै अग्नये हृदा सह मतिं बुद्धिं चारुं समीचीनं जनय

का० अश्विना गोभिरिति च हविषाम्[१]। अश्विना गोभिरिति तिस्रो हविषां याज्यानुवाक्याः चात्पूर्ववत् अश्विना ता नासत्या इत्याश्विनपशुयागे पुरोऽनुवाक्यायाज्ये ता नासत्या ता भिषजा इति सारस्वते ता भिषजा अश्विना इत्यैन्द्रे इति सूत्रार्थः ॥ अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः अश्विना सरस्वती च एतैः पदार्थैः इन्द्र यजमानं चावर्धयन्। कैस्तत्राह गोभि- र्गोप्रभृतिपशुभिः इन्द्रियम् विभक्तिव्यत्ययः इन्द्रियेण इन्द्रियपाटवेन अश्वेभिः अश्वैः दक्षिणारूपैः वीर्यं बलं वीर्येण मनःसामर्थ्येन बलेन शरीरदार्ढ्येन हविषा पशुपुरोडाशेन च। इन्द्रस्य वर्धनं तृप्तिः यजमानस्य वर्धनं धनपुत्रपश्वादिपुष्टिः ॥ ७३ ॥ १—१८,६,१८।

तानासत्यासुपेशसाहिरण्यवर्त्तनीनरा। सरस्वतीहविष्मतीन्द्रकर्म्मसुनोवत ॥ ७४ ॥

ताभिषजासुकर्म्मणासासुदुघासरस्वती। सवृत्रहाशतक्रतुरिन्द्रायदधुरिन्द्रियम् ॥ ७५ ॥

युवꣳसुराममश्विनानमुचावासुरेसचा। विपिपानाःसरस्वतीन्द्रङ्कर्म्मस्वावत ॥ ७६ ॥

ता तौ नासत्या नासत्यौ अश्विनौ सरस्वती च कर्मसु सौत्रामण्यादियागेषु नोऽस्मानवत अवन्तु रक्षन्तु पुरुषव्यत्ययः हे इन्द्र त्वमपि नोऽस्मान् कर्मसु अव वचनव्यत्ययः। कीदृशौ नासत्यौ हिरण्यवर्तनी हिरण्येनोपलक्षिता वर्तनिर्मार्गो ययोस्तौ यत्र पथि गच्छतस्तत्र सुवर्णमेव संपद्यत इत्यर्थः। सुपेशसा शोभनं पेशो रूपं ययोस्तौ सुन्दरौ। नरा नरौ नरगुणयुक्तौ नराकारौ च। कीदृशी सरस्वती हविष्मती हविर्विद्यते यस्याः सा ॥ ७४ ॥

सविता इत्यैन्द्रस्यानुवाक्यायाश्च सविता वरुणः क्षत्रम् इति सावित्रस्य ते वरुणः क्षत्रम् य इन्द्रे इति वारुणस्येति सूत्रार्थः ॥ प्रत्येकामिन्द्रसवितृवरुणदेवत्यास्तिस्रोऽनुष्टुभः । सविता वरुणो भग इति ये त्रयो देवाः इन्द्रे इन्द्रियं वीर्यं दधुः स्थापयामासुः । हविष्पतिः हविषां स्वामी सुत्रामा शोभनत्राणकर इन्द्रो यजमानाय कर्मणि चतुर्थी यजमानं सश्चत सेवताम् इष्टदानेन यजमानं सुखयत्वित्यर्थः षच सेवने लोडर्थे लङ् अडभाव आर्षः ॥ ७० ॥

सुत्रामा इन्द्रो नमुचेरसुरात्सकाशात् यद्वसु धनं बलमिन्द्रियं वीर्यं च आदत्त जग्राह सविता वरुणो भगश्च पशुपुरोडाश

सवितावरुणोदधद्यजमानायदाशुषे । आदत्तनमुचेर्वसुसुत्रामाबलमिन्द्रियम् ॥ ७१ ॥

वरुणः क्षत्रमिन्द्रियम्भगेनसवितात्रियम् । सुत्रामायशसाबलन्दधानायज्ञमाशत ॥ ७२ ॥

अश्विनागोभिरिन्द्रियमश्वेभिर्वीर्य्यम्बलम् । हविषेन्द्रꣳसरस्वतीयजमानमवर्द्धयन् ॥ ७३ ॥

मन्त्रदेवास्तत् नमुचेरानीतं वस्त्रादिकं यजमानाय दधत् दधातु ददत्वित्यर्थः कीदृशाय यजमानाय दाशुषे दाशति ददाति दाश्वान् तस्मै हवींषि दत्तवते दाश्वान्साह्वानित्यादिना क्वसन्तो निपातः ॥ ७१ ॥

वरुणः सविता सुत्रामा इन्द्रश्च यज्ञं सौत्रामणीमाशत भक्षितवन्तः व्याप्तवन्तो वा अश भोजने अशूङ् व्याप्तौ वा उभयो-र्विकरणव्यत्ययः । कीदृशास्ते क्षत्रं क्षतात्त्राणसामर्थ्यमिन्द्रियं वीर्यं भगेन भाग्येन सह श्रियं लक्ष्मीं यशसा सह बलं च दधानाः यजमाने स्थापयन्तः । तत्र वरुणः क्षत्रमिन्द्रियञ्च दधाति सविता भगं प्रियं सुत्रामा यशो बलं चेति विभागः ॥ ७२ ॥

मिति अनुवाक्या अश्विनेति याज्येति सूत्रार्थः ॥ अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः । अश्विना अश्विनौ सरस्वती च धिया बुद्ध्या कृत्वा नमुचेर्नमुचिसञ्ज्ञात् असुरात् दैत्यात् इन्द्रयेन्द्रार्थमेतानि वसूनि आजभ्रिरे आजह्रिरे । कानीत्यत आह हविः शुक्रं शुद्धममलिनं हविः इन्द्रियं वीर्यं मघं महनीयं वसु धनं च ॥ ६७ ॥

अश्विनौ सरस्वती च हविषा कृत्वा यमिन्द्रमवर्धयन् स इन्द्रो नमुचावासुरे सचा नमुचिना असुरेण सह मघं महनीयं

यमश्विनासरस्वतीहविषेन्द्रमवर्द्धयन् । सबिभेदवलम्मघन्नमुचावासुरेसचा ॥ ६८ ॥

तमिन्द्रम्पशवःसचाश्विनोभासरस्वती । दधानाअभ्यनूषतहविषायज्ञइन्द्रियैः ॥ ६९ ॥

यइन्द्रइन्द्रियन्दधुःसवितावरुणोभगः । ससुत्रामाहविष्पतिर्यजमानायसश्चत ॥ ७० ॥

वलं मेघं बिभेद विदारितवान् । सचेत्यव्ययं सहार्थे तद्योगे नमुचावासुरे इति तृतीयार्थे सप्तमी । वृणोतेर्बलं इति[1] यास्कः नमुचिं विदार्य वृष्टिं कारितवानित्यर्थः ॥ ६८ ॥

१—निरु० ६,२ ।

पशवः कर्माङ्गभूता गोमेषाजाः उभा अश्विना उभौ अश्विनौ सरस्वती च सचा सहभूताः सन्तः यज्ञे हविषा इन्द्रियैः वीर्यैश्च दधानाः पुष्णन्तः सन्तः तमिन्द्रमभ्यनूषत अवर्धयन् अस्तुवन्वा नू स्तवने ॥ ६९ ॥

का० य इन्द्र इति पुरोडाशानां पूर्ववत् य इन्द्र इति तिसृस्त्रयाणां पशुपुरोडाशानां याज्यानुवाक्याः पूर्ववत य इन्द्रे

वनस्पतिः प्रयाजदेवः शशमानः स्तुवन् सन् ऋतुथा ऋतौ-ऋतौ काले-काले परिस्रुता सुरया सह कीलालमन्नरसमिन्द्रः इन्द्राय इन्द्रार्थं दुहे दुग्धे सुपां सुलुगित्यादिना चतुर्थ्येकवचनस्य सुआदेशे इन्द्र इति लोपस्त आत्मनेपदेष्विति तलोपे दुहे इति रूपम् । किञ्च सरस्वती अश्विभ्यां सहिता धेनुर्भूत्वा इन्द्राय मधु दुहे दुग्धे ॥ ६५ ॥

हे अश्विना अश्विनौ मासरेण परिस्रुता सह गोभिर्न गोप्रभृतिपशुभिश्च सह नग्नार्थे सुतमभिषुतं सोमं मधु च इन्द्रे

ऋतुथेन्द्रोवनस्पतिःशशमानःपरिस्रुता । कीलालमश्विभ्याम्मधुदुहेधेनुःसरस्वती ॥ ६५ ॥

गोभिर्नसोममश्विनामासरेणपरिस्रुता । समधातꣳसरस्वत्यास्वाहेन्द्रेसुतम्मधु ॥ ६६ ॥

अश्विनाहविरिन्द्रियन्नमुचेर्धियासरस्वती । आशुक्रमासुराद्वसुमघमिन्द्रायजभ्रिरे ॥ ६७ ॥

युवां समधातमारोपयतम् सम्पूर्वाद्दधातेर्लुङि मध्यमद्विवचनम् हे स्वाहाकृतयः प्रयाजदेवाः यूयं सरस्वत्या सह इन्द्रे सुतं मधु समधातेति वचनव्यत्ययः ॥ ६६ ॥

का० अश्विना हविरिति तिस्रो वपानां याज्यानुवाक्याः प्रथमामनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या तृतीयामनूच्य प्रथमा याज्या । अश्विनेत्याद्यास्तिस्रस्तिसृणां वपानां क्रमाद्याज्यापुरोऽनुवाक्याः तत् प्रकारमाह आश्विनवपायागे अश्विनेति अनुवाक्या यमश्विनेति याज्या सारस्वतवपायागे यमश्विनेति अनुवाक्या तमिन्द्रमिति याज्या ऐन्द्रवपायागे तमिन्द्र-

हे अश्विना अश्विनौ दिवा दिवसे नोऽस्मान्युवां पातं रक्षतम् हे सरस्वति नक्तं रात्रौ त्वं नः पाहि रक्ष। हे दैव्या-होतारा दैव्यावश्विनौ होतारौ भिषजा भिषजौ अश्विनौ सुते सोमेऽभिषुते सति सचा सह एकीभूय युवमिन्द्रं पातं रक्षतम् सर्वत्र विभक्त्याकारः॥ ६२॥

तिस्रो देव्यः अश्विना अश्विनौ च परिस्रुता सुरया सह सोममिन्द्राय सुषुवुरभिषुतवन्तः। काः तिस्रः सरस्वती भारती

पातन्नोऽअश्विनादिवापाहिनक्तꣳसरस्वति। दैव्याहोताराभिषजापातमिन्द्रꣳसचासुते॥ ६२॥

तिस्रस्त्रेधासरस्वत्यश्विनाभारतीडा। तीव्रम्परिस्रुतासोममिन्द्रायसुषुवुर्मदम्॥ ६३॥

अश्विनाभेषजम्मधुभेषजन्नःसरस्वती। इन्द्रेत्वष्टायशःश्रियꣳरूपꣳरूपमधुःसुते॥ ६४॥

इडा च। कीदृश्यः त्रेधा स्थिता इति शेषः सरस्वती मध्यस्थाना भारती द्युस्थाना इडा पृथिवीस्थाना। कीदृशं सोमं तीव्रं पटुतरम् मदं मदजनकम्॥ ६३॥

अश्विना नोऽस्माकं सरस्वती त्वष्टा प्रयाजदेवता च सुते सोमेऽभिषुते सति इन्द्रे भूतानि वस्तूनि अधुः स्थापयामासुः दधातेर्लिङ् कानीत्यत आह भेषजमौषधं मधु मधुरूपं भेषजं च यशः कीर्त्तिं श्रियं लक्ष्मीं रूपं रूपं नानाविधं रूपं च निरुक्तौ सर्वाणीति रूपशब्दस्य द्वित्वम्॥ ६४॥

दधुः इडाभिः पशुभिः सह इषमन्नं सन्दधुः । पशवो वा इडेति[1] श्रुतिः । ऊर्जं दध्यादि रयिं धनञ्च सन्दधुः एतानि ददुरित्यर्थः ॥ ५८ ॥

अश्विना अश्विनौ परिस्रुता सुरया सह सुतमभिषुतं शुक्रं शुद्धममलिनं सोमं नमुचेः असुरात्सकाशात् आहरताम् सरस्वती च तमेव सोमं बर्हिषास्तरणार्थेन सह आभरत् आहरत् किमर्थमिन्द्राय पातवे इन्द्रस्य पानार्थं तुमर्थे तवेप्रत्ययः ॥ ५९ ॥

अस्मामृचि नयो नकाराश्चकारार्थाः । अश्विभ्यां सहिता सरस्वती इन्द्र न इन्द्रश्च उभे रोदसी द्यावापृथिव्यौ कामान्दुहे

अश्विनानमुचेःसुतꣳसोमꣳशुक्रम्परिस्रुता । सरस्वतीतमाभरद्बर्हिषेन्द्रायपातवे ॥ ५९ ॥

कवष्योनव्यचस्वतीरश्विभ्यान्नदुरोदिशः । इन्द्रोनरोदसीउभेदुहेकामान्त्सरस्वती ॥ ६० ॥

उषासानक्तमश्विनादिवेन्द्रꣳसायमिन्द्रियैः । सञ्जानानेसुपेशसासमञ्जातेसरस्वत्या ॥ ६१ ॥

दुग्धे द्विकर्मकः द्यावापृथिवीभ्यां सकाशात्कामान्दोग्धि दुरो दिशश्च सकाशात् दोग्धि अकथितं चेति द्वारां दिशां रोदसोश्च कर्मत्वम् कीदृश्यो द्वारः कवष्यः कुष निष्कर्षे कुषिताः सच्छिद्राः तथा व्यचस्वतीः व्यचनं व्यचोऽवकाशः तद्वत्यः ॥ ६० ॥

हे अश्विनौ उषासा रविप्रभा नक्तं रात्रिश्च सरस्वत्या सह दिवा दिवसे सायंकाले च इन्द्रमिन्द्रियैः वीर्यैः सह समञ्जाते संयोजयतः । कीदृश्यौ ते सञ्जानाने सञ्जानीतः ते सञ्जानाने एकमती सुपेशसा शोभनं पेशो रूपं ययोस्ते शुक्ला उषाः कृष्णा रात्रिः ॥ ६१ ॥

[1] १—५,८,१,१२ ।

प्रपूरणे लटि तङि प्रथमैकवचने टेरेत्वे लोपस्त आत्मनेपदेष्विति तलोपे दुहे इति रूपम्। कीदृशं सोमं शुक्रं शुक्लं शुभ्रम् इन्द्रियमिन्द्राय हितं बलकरम्। एतावता यज्ञसम्पत्तिरस्ति युवामागच्छतमिति भावः ॥ ५५ ॥

उभा अश्विना उभौ अश्विनौ सरस्वती मध्वा मधुना रजांसि लोकान् दुहन्ति पूरयन्ति पूर्वोक्तो दुहे इत्यस्य वचनव्यत्ययेनेहानुषङ्गः लोका रजांस्युच्यन्त इति[1] यास्कोक्तेः रजःशब्दोऽत्र लोकवाची। कीदृशावश्विनौ तनूपा तनूः शरीराणि पातस्तौ तनूपौ शरीराणां रक्षितारौ भिषजा भिषजौ वैद्यौ। क्व सति। सुते सोमेऽभिषुते सति पूरयन्तीत्यर्थः। किञ्च अश्वि-

तनूपाभिषजासुतेश्विनोभासरस्वती। मध्वारजाᳪसीन्द्रियमिन्द्रायपथिभिर्वहान् ॥ ५६ ॥

इन्द्रायेन्दुᳪसरस्वतीनराशᳪसेननग्नहुम्। अधातामश्विनामधुभेषजम्भिषजासुते ॥ ५७ ॥

आजुह्वानासरस्वतीन्द्रायेन्द्रियाणिवीर्यम्। इडाभिरश्विनाविषᳪसमूर्जᳪसᳪरयिन्दधुः ॥ ५८ ॥

सरस्वत्य इन्द्राय इन्द्रियं वीर्यं पथिभिर्यज्ञमार्गैः वहान्वहन्ति इतश्च लोपः परस्मैपदेष्विति इकारलोपे वहानिति रूपम् ॥ ५६ ॥

सरस्वती नराशंसेन यज्ञेन सह इन्द्राय इन्द्रार्थमिन्दुं सोमं नग्नहुं सुराकन्दं च पूर्वोक्तमधात् धृतवती किञ्च भिषजा अश्विना भिषजौ अश्विनौ सुते सोमेऽभिषुते सति मधु मधुरं भेषजमौषधमधातां धारितवन्तौ अधातामित्येव क्रिया वचनव्यत्ययेन पूर्वार्धे योज्या ॥ ५७ ॥

[1] — निरु० ४,१९।

आह्वयते आजुह्वाना अर्थादिन्द्रमाह्वयन्ती सरस्वती अश्विना चेन्द्राय इन्द्रियाणि चक्षुरादीनि सन्दधुः वीर्यं सामर्थ्यं च

अश्वैः आयाहि कीदृशैः मन्द्रैः गम्भीरनादैः मयूररोमभिः मयूरस्येव रोमाणि येषां ते मयूररोमाणस्तैः मयूरसमवर्णैः। स किञ्च केचित् दुष्टा आगच्छन्तं त्वा त्वां मा नियमन् नियच्छन्तु मा निबध्नन्तु तत्र दृष्टान्तः पाशिनो पाशहस्ता व्याधाः विं पक्षिण-मिव यथा पाशिनः पक्षिणं बध्नन्ति तथा त्वां मा बध्नन्तु अथ ये परिपन्थिनो भवेयुस्तानतीहि अतिक्रम्यागच्छ किमिव धन्व इव धन्व निरुदकदेशः यथा पान्थो मरुदेशमतिक्रम्य गच्छति तथागच्छ ॥ ५३ ॥

वसिष्ठदृष्टा इन्द्रदेवत्या त्रिष्टुप्। वसिष्ठाः वसिष्ठापत्यानि मुनयः अर्कैर्मन्त्रैः एव इत् एवमेव इन्द्रमभ्यर्चन्ति पूजयन्ति कीदृशमिन्द्रं वृषणं वर्षितारम् वज्रबाहुं वज्रं बाहौ यस्य तम् स इन्द्रः स्तुतः सन्वीरवत् वीरा विद्यन्ते यत्र तत् पुत्रयुक्तम्

एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः। स नः स्तुतो वीरवद्धातु गोमद्यूयम्पात स्वस्तिभिः सदा नः ॥ ५४ ॥

समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुतः। दुहे धेनुः सरस्वती सोमꣳ शुक्रमिहेन्द्रियम् ॥ ५५ ॥

गोमत् गावो विद्यन्ते यत्र तत् गोसंयुक्तं धनम् नोऽस्मभ्यं धातु दधातु विकरणव्यत्ययः। एवं पादत्रयेणेन्द्रं स्तुत्वा ऋत्विज आह हे ऋत्विजः यूयं स्वस्तिभिः अविनाशैः सदा सर्वदा नोऽस्मान् पात रक्षत ॥ ५४ ॥ १—१९,६,१५।

का० आप्रियश्च समिद्धो अग्निरश्विनेति[१]। समिद्ध इत्याद्या द्वादशानुष्टुभः चकारात्पिपशोः प्रयाजयाज्याः इति सूत्रार्थः ॥ विदर्भि दृष्टा अश्विसरस्वतीन्द्रदेवत्या आप्रीसञ्ज्ञा द्वादशानुष्टुभः। अश्विनावध्वर्यू देवानामिति तौ प्रति होता प्राह हे अश्विना अश्विनौ अग्निः समिद्धो दीप्तोऽस्ति हविर्दहनक्षमोऽस्ति घर्मः प्रवर्ग्यः तप्तोऽस्ति विराट् विविधं राजमानः सोमः सुतोऽभिषुतः। किञ्च धिनोति प्रीणाति धेनुः औणादिको नुप्रत्ययो धिवेः वलोपो गुणश्च प्रीणयित्री सरस्वती इह यज्ञे सोमं दुहे दुग्धे दुह

इन्द्रः अवोभिरवैः सुमृडीकः शोभनसुखकारी भवतु शोभनं मृडीकं सुखं यस्मात्स सुमृडीकः। कीदृश इन्द्रः सुत्रामा सुष्ठु त्रायते रक्षति सुत्रामा आतो मनिन्निति मनिन्। स्ववान् स्वं धनमस्यास्तीति स्ववान् आतोऽटि नित्यमिति अनुनासिकत्वम् दीर्घादटि समानपाद इति नस्य रुः। विश्ववेदाः विश्वं सर्वं वेदो धनं यस्य सः। स चेन्द्रो द्वेषः दौर्भाग्यं बाधतां निवर्तयतु अभयं च कृणोतु करोतु किञ्च इन्द्रप्रसादाद्वयं सुवीर्यस्य धनस्य पतयः स्वामिनः स्याम भवेम शोभनाश्च ते वीराश्च सुवीराः पुत्रादयः तेभ्यो हितं सुवीर्यं तस्य ॥ ५१ ॥

इन्द्रःसुत्रामास्ववा२ँ॥अवोभिःसुमृडीकोभवतुविश्ववेदाः। बाधतान्द्वेषोअभयङ्कृणोतुसुवीर्य्यस्यपतयःस्याम ॥५१॥

तस्यवयꣳसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम। ससुत्रामास्ववा२ँ॥इन्द्रोअस्मेआराच्चिद्द्वेषःसनुतर्युयोतु ॥५२॥

आमन्द्रैरिन्द्रहरिभिर्य्याहिमयूररोमभिः। मात्वाकेचिन्नियमन्विन्नपाशिनोतिधन्वेवता२ँ॥इहि ॥५३॥

वयं तस्येन्द्रस्य सुमतौ शोभनबुद्धौ स्याम भवेम भद्रे कल्याणरूपे सौमनसे सुमनसो भावे शोभनमनस्कत्वेऽपि स्याम इन्द्रोऽस्मासु सुमतिं मनश्च भद्रं करोत्वित्यर्थः। कीदृशस्येन्द्रस्य यज्ञियस्य यज्ञाय हितो यज्ञियस्तस्य यज्ञसम्पादिनः। सुत्रामा सुरक्षकः स्ववान्धनवान्स इन्द्रः अस्मे अस्मत्तः आराच्चित् दूरादपि वर्तमानं द्वेषो दौर्भाग्यं सनुतरन्तर्हितं कृत्वा युयोतु पृथक्करोतु विकरणव्यत्ययः। सनुतरिति निर्णीतान्तर्हितनाम[1] ॥ ५२ ॥ 

[1]—निघ०३,२५,३१।

विश्वामित्रदृष्टा बृहती तृतीयो द्वादशार्णोऽन्ये त्रयोऽष्टार्णाः आ मन्द्रैः एवेत् अनयोर्विनियोगाभावः। हे इन्द्र त्वं हरिभिः

रक्षणं करोतु म । कीदृश इन्द्रः अभिष्टिकृत् अभिष्टिमभिलाषं करोतीत्यभिष्टिकृत् मनोरथप्रदः । उग्रः उत्कृष्टः । ओजिष्ठेभिः तेजस्वितमैर्वीरैर्युक्त इति शेषः ओजो विद्यते येषां ते ओजस्विनः अत्यन्तमोजस्विन ओजिष्ठाः विन्मतोर्लुक् तैः । नृपतिः नृणां पालकः । वज्रबाहुः वज्रं बाहौ यस्य सः । तथा सङ्गे समत्सु सङ्गः समदिति द्वे संग्रामनामनी[१] सङ्गे एकस्मिन् संग्रामे समत्सु बहुष्वपि संग्रामेषु युगपदुत्थितेषु सत्सु पृतन्यून् शत्रून् तुर्वणिः तुर्व हिंसायां तुर्वतीति तुर्वणिः हन्ता पृतनामिच्छन्ति पृतन्यन्ति सुप आत्मनः क्यजिति क्यचि परे कव्यध्वरेति अलोपः ततः क्याच्छन्दसीति उप्रत्ययः संग्रामेच्छूनां हन्तेत्यर्थः ॥ ४८ ॥

अच्छाभेरर्थे । इन्द्रोऽर्वाचीनोऽभिमुखः सन् नोऽस्मानच्छ अस्मानभि आयातु कैः हरिभिरश्वैः किमर्थमवसे अवनमवः अस्मुन्

आ न॑ इन्द्रो॒ हरि॑भिर्य्या॒त्वच्छा॒र्वाची॒नोऽव॑से॒ राध॑से च । तिष्ठा॑ति व॒ज्री म॒घवा॑ विर॒प्शी॒मं य॒ज्ञमनु॑ नो॒ वाज॑सातौ ॥४९॥

त्रा॒तार॒मिन्द्र॑मवि॒तार॒मिन्द्र॒ꣳ हवे॑हवे सु॒हव॒ꣳ शूर॒मिन्द्र॑म् । ह्वया॑मि श॒क्रं पु॑रुहू॒तमिन्द्र॒ꣳ स्व॒स्ति नो॑ म॒घवा॑ धा॒त्विन्द्रः॑ ॥ ५० ॥

तस्मै रक्षणाय राधसे धनाय च आगत्य च वज्री इन्द्रो नोऽस्माकमिमं यज्ञमनु प्रति वाजसातौ अन्नसम्भजने निमित्ते तिष्ठाति तिष्ठतु लेट् । कीदृशः मघवा मघं धनमस्यास्तीति धनवान् । विरप्शी विविधं रपति लपति विरप्शी महान् ॥ ४९ ॥

गर्गदृष्टा । त्रातारं रक्षितारमिन्द्रम् अवितारं प्रीणयितारमिन्द्रम् हवे हवे आह्वाने आह्वाने यज्ञे वा सुहवं सुखेन ह्वयते आहूयत इति सुहवम् शूरम् शक्रम् शक्नोति शक्रस्तं समर्थम् पुरुहूतं पुरुभिर्बहुभिर्हूयते पुरुहूतस्तं बहुभिराहूतम् ईदृशमिन्द्रं ह्वयामि आह्वयामि । मघवा धनवानिन्द्र आहूतः सन्नोऽस्माकं स्वस्ति अविनाशं धातु दधातु करोतु विकरणव्यत्ययः । इन्द्रशब्दादुत्तरादरार्थाः ॥ ५० ॥

१—निघ० २,१७,१८—२२ ।

मात्। कीदृशाः स्वाहाकृतयः घृतप्रुषा घृतबिन्दुनापि मनसा मोदमानाः मोदन्ते ते मोदमानाः सन्तुष्टाः। अमृताः अमरणधर्माणः नास्ति मृतं मरणं येषां ते ॥ ४६ ॥

का० याज्यानुवाक्याश्च[1]। वपापुरोडाशपशुयागानां याज्यानुवाक्याः आयात्विन्द्र इति वपायाः पुरोऽनुवाक्या आ न इन्द्रो दूरादिति याज्या आ न इन्द्रो हरिभिरिति पशुपुरोडाशस्य पुरोऽनुवाक्या त्रातारमिन्द्रमिति याज्या इन्द्रः सुत्रामेति पशुयागे पुरोऽनुवाक्या तस्य वयमिति याज्येति सूत्रार्थः ॥ सप्त त्रिष्टुभ इन्द्रदेवत्याः। इन्द्रो नोऽस्मानवसे अवितुं रक्षितुमुप आयातु समीपमागच्छतु तुमर्थेऽवतेरसेन् प्रत्ययः। इहायातः सन्सधमात् अस्तु सह देवैः सार्धं मादयति तृप्यति सहमात् सहभोजन-

आयात्विन्द्रोवसउपनइहस्तुतःसधमादस्तुशूरः। वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् ॥४७॥

आनइन्द्रोदूरादानआसादभिष्टिकृदवसेयासदुग्रः। ओजिष्ठेभिर्नृपतिर्वज्रबाहुःसङ्गेसमत्सुतुर्वणिःपृतन्यून् ॥४८॥

कर्तास्तु मादयतेः क्विप्। कीदृश इन्द्रः शूरः विक्रान्तः स्तुतोऽस्माभिः। वावृधानः वर्धमानः। यस्येन्द्रस्य पूर्वीः तविषीः पूर्वाः तविष्यः पूर्वाणि कृतानि बलानि वृत्रवधादयः पराक्रमाः द्यौर्न स्वर्ग इव कथ्यन्ते स्वर्गो यथा स्तूयते तथा यस्येन्द्रस्य बलानि स्तूयन्ते तविषीति बलनाम तवतेर्वृद्धिकर्मण इति[2] यास्कः। यश्चेन्द्रः क्षत्रमस्मदीयं पुष्यात् पुष्यति लेटोऽडाटौ कीदृशं क्षत्रम् अभिभूति अभिभवनशीलं शूरम्। स इन्द्र आयात्विति सम्बन्धः ॥ ४७ ॥

१—१९,,६,१२। २—निरु० ९,२१। ३—निघ०२,९।

इन्द्रो नोऽस्माकं दूराद् दूरदेशात् द्युलोकादेरपि आयासत् आयातु यातेर्लेटोऽडाटाविति अटि कृते सिब्बहुलं लेटीति सिप् प्रत्ययः। आसान्निकटप्रदेशादपि आयासत् आसादित्यन्तिकनाम[3]। दूरात्समीपाच्चागच्छत्वित्यर्थः। किं कर्तुमवसे अवितुमस्माकं

इति प्रशस्यनाम[1] न विद्यते पाकः प्रशस्यो यस्मात्सोऽपाकः नञोऽस्त्यर्थानां बहुव्रीहिर्वाच्यो वोत्तरलोपश्चेति समासः । अचिष्टः अचनशीलः सर्वत्र गतः । वृषा वर्षिता वृषणमिन्द्रं यजन् पूजयन् । भूरिरेताः भूरि बहु रेतो वीर्यं यस्य सः सर्वजनक इत्यर्थः त्वष्टा त्वक्षतेः करोत्यर्थस्येति[2] यास्कोक्तेः । ईदृशस्त्वष्टा देवान् भोजयत्वित्यर्थः ॥ ४४ ॥

वनस्पतिर्यूपो देवो मधुना रसेन घृतेन च यज्ञं स्वदाति स्वदतु लेट् आस्वादयतु समनक्तु वा कीदृशो वनस्पतिः अवसृष्टो न आघ्नत इव पाशैः कृत्वा त्मन्या आत्मनि समञ्जन् अर्थात्पशुम् संयोजयन् आत्मन्शब्दस्य तृतीयाया यादेशः मन्त्रेष्वाङ्यादेरात्मन इति आलोपः तत्र दृष्टान्तः । शमिता न शमिता इव यथा शमिता पाशैः पशुमात्मनि संयोजयति ।

वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देवः । इन्द्रस्य हव्यैर्जठरं पृणानः स्वदाति यज्ञं मधुना घृतेन ॥ ४५ ॥

स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् । घृतप्रुषा मनसा मोदमानाः स्वाहा देवा अमृता मादयन्ताम् ॥ ४६ ॥

तथा हव्यैरिन्द्रस्य जठरमुदरं पृणानः पूरयन् पृणातेऽसौ पृणानः ॥ ४५ ॥

इन्द्रः स्वाहा देवाः नामैकदेशे नामग्रहणं स्वाहाकृतयो देवाश्च मादयन्तां तृप्यन्तु मद तृप्तौ चुरादिः । किमुद्दिश्य स्तोकानामिन्दुं प्रति स्तोका वपासम्बन्धिनो घृतबिन्दवः तत्सम्बन्धी य इन्दुः सोमः तं प्रति तमुद्दिश्य वपास्तोकेषु सोमत्वमारोप्यते वसास्तोकरूपं सोममुद्दिश्येन्द्रः स्वाहाकृतयश्च तृप्यन्तामित्यर्थः । कीदृश इन्द्रः शूरः शौर्यवान् वृषायमाणः वृषवदाचरति वृषायते वृषायतेऽसौ वृषायमाणः शत्रून् प्रति गर्जन्नित्यर्थः वृषभः वर्षिता तुराषाट् तूर्णं सहते शत्रूनभिभवति तुरा-

[1] — निघ० ३,८,८ ।   [2] — निरु० ८,१३ ।

पटार्थं ततं विस्तीर्णं तन्तुं सूत्रं रूपेण कश्चित्सर्जति। तथा सुरुक्मौ शोभनं रुक्मं रोचनं कान्तिर्ययोस्ते सुरुक्मौ ॥ ४१ ॥

अयं चाग्निरसौ च वायुर्यश्चासौ देवानामिमौ दैव्यौ होतारौ वाय्वग्नी प्राचीनं प्राच्यां दिशि वर्तमानं ज्योतिराहवनीयाख्यं मधुना मधुरेण हविषा कृत्वा वृधातः वर्धयतः वृधेर्लेटोऽडाटावित्याट् कीदृशौ होतारौ पुरुत्रा बहुधा मिमाना मिमानौ यज्ञं निर्मिमाणौ। मनुषः मानुषाद्धोतुः प्रथमा आद्यौ मनुषः इति प्रथमा पञ्चम्यर्थे। सुवाचा सुवाचौ शोभना वाक् ययोस्तौ यज्ञस्य मूर्धन् मूर्धनि प्रधानेऽङ्गे इन्द्रं दधाना स्थापयन्तौ सर्वत्र प्रथमाद्विवचनस्याकारः ॥ ४२ ॥

दैव्यामिमानामनुषःपुरुत्राहोताराविन्द्रम्प्रथमासुवाचा। मूर्द्धन्यज्ञस्यमधुनादधानाप्राचीनञ्ज्योतिर्हविषावृधातः॥४२

तिस्रोदेवीर्हविषावर्द्धमानाइन्द्रञ्जुषाणाजनयोनपत्नीः। अच्छिन्नन्तन्तुम्पयसासरस्वतीडादेवीभारतीविश्वतूर्त्तिः॥४२

त्वष्टादधच्छुष्ममिन्द्रायवृष्णेऽपाकोऽचिष्टुर्यशसेपुरूणि। वृषायजन्वृषणम्भूरिरेतामूर्द्धन्यज्ञस्यसमनक्तुदेवान् ॥ ४३ ॥

सरस्वती इडा भारती तिस्रो देव्यः पयसा हविषा कृत्वा तन्तुं यज्ञमच्छिन्नं छेदेन विघ्नेन रहितं कुर्वन्त्विति शेषः। वर्धमानाः पुष्टियुक्ताः। पत्नीः पत्न्यः साध्व्यो जनयो न जाया इव इन्द्रं जुषाणाः सेवमानाः। देवी, दीप्यमानाः विश्वस्मिन् सर्वत्र तूर्णं गच्छति विश्वतूर्तिः सर्वगामिनीति द्वे विशेषणे तिसृणाम् ॥ ४३ ॥

त्वष्टा यज्ञस्य मूर्धन् मूर्धनि शिरःस्थानीये आहवनीये देवान् समनक्तु भोजयतु अन्तर्भूतण्यर्थोऽनक्तिरत्र भोजनार्थः। कीदृशस्त्वष्टा सर्वो यजमाने वृष्णे सेक्त्रे इन्द्राय पुरूणि बहूनि शुष्मं बलं दधत् धारयन्। तथा अपाकः पाक

आज्यमिति घृतरूपस्तद्वान्वा। गोभिर्वपावान् पशुसम्बन्धिनीभिर्वपाभिर्वपायुक्तः मधुना मधुस्वादोपेतेन घृतेन समञ्जन् हवींषि भव-
वन् हिरण्यैः पञ्चावदानभृतैः चन्द्री चन्द्रं सुवर्णमस्यास्तीति चन्द्री ॥ ३७ ॥

एवंविध इन्द्र आयातु आगच्छतु कीदृशः देवैरीडितः पूजितः स्तुतः। हरिवान् हरी इन्द्राश्वौ यस्य स इति हरि-
वान्। अभिष्टिः अभि समन्तादिष्टिर्यागो यस्य इलोपश्छान्दसः यद्वा अभिष्टूयत इत्यभिष्टिः स्तौतेरौणादिको क्तिप्रत्ययः।
आजुह्वानः आहूयमान ऋत्विग्भिः हविषा निमित्तेन हविर्निमित्तं द्विजैराहूयमानः। शर्धमानः शर्ध इति बलनाम[1] अतिबलाय-
मानः। पुरं रिपुनगरं दारयति पुरन्दरः। गोत्रभित् गां भूमिं त्रायन्ते गोत्रा मेघाः तान्वृष्ट्यर्थं भिनत्ति गोत्रभित्

ई॒डि॒तो दे॒वैर्हरि॑वाँ२॥ अ॒भि॒ष्टिरा॒जुह्वा॑नो ह॒विषा॒ शर्द्ध॑मानः। पु॒र॒न्द॒रो गो॑त्र॒भिद्वज्र॑बाहु॒रा या॑तु य॒ज्ञमुप॑ नो जुषा॒णः ॥३८

जु॒षा॒णो ब॒र्हिर्हरि॑वान्न॒ इन्द्रः॒ प्रा॒चीन॑ꣳ सीदत्प्र॒दिशा॑ पृथि॒व्याः। उ॒रु॒प्रथाः॒ प्रथ॑मान॒ꣳ स्यो॒नमा॑दि॒त्यैर॒क्तं वसु॑भिः स॒जोषाः॑ ॥३९

गोत्राण् गिरीन्वा भिनत्ति। वज्रबाहुः वज्रधरः। नोऽस्माकं यज्ञमुपजुषाणः उपसेवमानः ॥ ३८ ॥

[1] निघ० २,९,७।

इन्द्रो नोऽस्माकं प्राचीनं प्राग्भवं प्रदेशं सीदत्सीदतु आस्ताम् इतश्च लोप इति इलोपः कीदृश इन्द्रः हरिवान् हरी
अश्वौ तद्युक्तः। पृथिव्याः प्रदिशा द्वितीयार्थे षष्ठी पृथिवीं देवयजनभूमिं प्रदिशन् उपदिशन् प्रदिशतीति प्रदिशन् सुपां सुलु-
गित्यादिना विभक्तेर्डादेशः। उरुप्रथाः प्रथनं प्रथः ख्यातिः उरु विस्तीर्णं प्रथो यस्य स उरुप्रथाः। सजोषाः जोषणं जोषः
असुन्प्रत्ययः जोषसा प्रीत्या सहितः सजोषाः सन्तुष्टः। बर्हिर्जुषाणः सेवमानः शानचि रूपो लुक् कीदृशं बर्हिः प्रथमानं प्रथते

शंसो वा इडः बर्हिः द्वारः उषासानक्ता दैव्यौ होतारौ तिस्रो देव्यः त्वष्टा वनस्पतिः स्वाहाकृतयः एता देवताः यथायोगमिन्द्रविशेषणत्वेन व्याख्येयाः अनुवाकेनानेनेन्द्रः स्तूयते। इन्द्रो वृत्रं मेघं दैत्यं वा जघान हतवान् दुरः द्वाराणि च विववार मेघस्य द्वाराणि स्रोतांसि विवृतान्यकरोत् दैत्यपक्षे तत्पुरद्वाराणि शून्यान्यकरोत् द्वारशब्दस्य सम्प्रसारणे दुर इति रूपम्। कीदृश इन्द्रः समिद्धः सन्दीप्तः उषसामनीके मुखे प्रातःकाले पुरोरुचा अग्रे प्रसरन्त्या दीप्त्या पूर्वकृत् पूर्वां दिशं करोतीति चारित्वाभावात् पूर्वस्याः कर्ता सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। त्रिभिर्देवैः त्रिंशता च त्रयस्त्रिंशद्देवैः सह वावृधानः वर्धमानः वृधेर्लिटः कानच्व्यत्ययेन शपः तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः संहितायाम्। वज्रबाहुः वज्रं बाहौ यस्य वज्रपाणिः ॥ ३६ ॥

नराशꣳसः प्रतिशूरो मिमानस्तनूनपात्प्रतियज्ञस्य धाम। गोभिर्वपावान्मधुना समञ्जन्हिरण्यैश्चन्द्री यजति प्रचेताः॥३७

एकस्यामृचि नराशंसतनूनपातौ। प्रचेताः प्रकृष्टं चेतो ज्ञानमस्य स प्रचेताः कर्मज्ञाता यजमानस्तमिन्द्रं प्रतियजति प्रत्यहं यजति। तं कम् च ईदृशः नराशं सः नरैर्ऋत्विग्भिरा समन्तात् शस्यते शस्त्रैः स्तूयते स नराशंसः यद्वा नरा अस्मिन्नासीनाः शंसन्तीति[1] यास्कोक्तेर्नराशंसो यज्ञः तद्रूपस्तदात्मा। यज्ञस्य धाम स्थानं प्रतिमिमानः मिमीते मिमानः प्रतिगणयन् यज्ञस्थानानि जानन्नित्यर्थः एवः प्रतिमिमान इत्यनेन सम्बध्यतेऽपरो यजतीत्यनेन। तथा शूरः शौर्यवान्। तनूनपात् तनोति विस्तारयति सृष्टिं तनूः प्रजापतिर्मरीचिस्तस्य नपात् पौत्रः कश्यपात्मज इत्यर्थः यद्वा तनूं शरीरं न पातयति रक्षति जाठराग्निरूपेणेति तनूनपात् अग्निस्तद्रूपः यद्वा तनोति भोगानिति तनूः गौस्तस्या नपात्पौत्रं घृतम् गोः पयो जायते पयस

१—निरु० ८,६।

का० शेषमृत्विजः प्राणभक्षं भक्षयन्ति[1] । समस्तग्रहहोमानन्तरं शेषमृत्विजः सर्वेऽवजिघ्रन्ति कण्डिकाद्वयेन ॥ ग्रहदेवत्ये द्वे अनुष्टुबुपरिष्टाद्बृहत्यौ । हे ग्रह त्वं मे प्राणपा असि प्राणान् पाति रक्षति प्राणपाः अपानपाः अपानस्य रक्षकोऽसि चक्षुषो पातीति चक्षुष्पाः मे मम श्रोत्रपाश्चासि श्रोत्रेन्द्रियं पाति । मे वाचो वागिन्द्रियस्य विश्वभेषजः विश्वं सर्वं भेषजमौषधं यस्मात्स वाचः औषधमुन्मार्गनिवृत्तिर्जपादौ प्रवृत्तिश्च तत्कर्ता । मनसो विलायकश्चासि विलाययति विषयेभ्यो निवर्त्यात्मनि स्थापयति विलायकः आत्मज्ञानप्रदोऽसीत्यर्थः यद्वा ली श्लेषणे विलाययति चक्षुरादिभिः सह श्लेषयति विलायकः सर्वेन्द्रियैः सह मनः संयोजयसीत्यर्थः ॥ ३४ ॥

अश्विनकृतस्यतेसरस्वतिकृतस्येन्द्रेणसुत्राम्णाकृतस्य । उपहूतउपहूतस्यभक्षयामि ॥ ३५ ॥

समिद्धइन्द्रउषसामनीकेपुरोरुचापूर्वकृद्वावृधानः । त्रिभिर्देवैस्त्रिꣳशतावज्रबाहुर्जघानवृत्रंविदुरोववार ॥ ३६ ॥

हे ग्रह उपहूत आहूतोऽहं ते तव त्वां भक्षयामि कर्मणि षष्ठी । कीदृशस्य ते अश्विनकृतस्य करोतिर्दर्शनार्थः अश्विनावेवाश्विनौ स्वार्थेऽण् वृद्ध्यभाव आर्षः अश्विनाभ्यां कृतो दृष्टस्तस्य । सरस्वत्या कृतः सरस्वतिकृतः सरस्वत्या दृष्टस्य ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति सरस्वतीशब्दस्य ह्रस्वः । सुष्ठु त्रायते रक्षति सुत्रामा तेनेन्द्रेण कृतस्य दृष्टस्य । उपहूतस्य ऋत्विग्भिः कृतोपहवस्य ॥ ३५ ॥

१——१९,५,९ । २——१९,६,१२ ।

आध्वर्यवं समाप्तम् इतः सौत्रामणिकं हौत्रमुच्यते ॥ का० समिद्ध इन्द्र इत्याप्रियः प्रथमस्य[2] । समिद्ध इत्याद्या एकादश ऋचः प्रथमस्यैन्द्रस्य पशोराप्रियः प्रयाजयाज्याः ॥ आङ्गिरसदृष्टा एकादशाप्रियः त्रिष्टुभः तासां क्रमादेता देवता इध्मः तनूनपान्नरा

का० ब्रह्मानुमन्त्रणमध्वर्यौ अद्रिभिरिति[१] । ब्रह्मा पयोऽनुमन्त्रयते ॥ ऐन्द्री गायत्री । हे अध्वर्यो त्वं सोमं पवित्रे कम्बलमध्ये
आनय सिञ्च । कीदृशमद्रिभिर्ग्रावभिः सुतमभिषुतम् । ततः पुनाहि पुनीहि गालय इत्वाभाव आर्षः । किमर्थं इन्द्राय पातवे
१——१९,२,११ । २——१९,४,२४ ।
इन्द्रस्य पानार्थम् तुमर्थे तवेप्रत्ययः ॥ ३१ ॥
का० त्रयस्त्रिꣳशं वसाग्रहं गृह्णाति यो भूतानामिति[२] । प्रागभिषेकात्सौत्रेन तन्त्रमिति षोडशग्रहिभिर्द्वात्रिंशद्ग्रहसाग्रहाः तेषां संस्रवैर्य-
जमानाभिषेकः कृतः ततोऽध्वर्युर्यो भूतानामिति सार्धकण्डिकात्मकेन मन्त्रेण त्रयस्त्रिंशं वसाग्रहमाग्रयणस्थाल्या गृह्णाति ॥ आत्मवादिनो

योभूतानामधिपतिर्य्यस्मिँल्लोकाऽअधिश्रिताः । यऽईशेमहतोमहाँस्तेनगृह्णामित्वामहम्मयिगृह्णामित्वामहम् ॥ ३२ ॥

उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णऽएषतेयोनिरश्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णे ॥ ३३

प्राणपामेऽअपानपाश्चक्षुष्पाःश्रोत्रपाश्चमे । वाचोमेविश्वभेषजोमनसोऽसिविलायकः ॥ ३४ ॥

ग्रहदेवत्या कौण्डिन्यदृष्टा पङ्क्तिः । यः परमात्मा भूतानां जरायुजादिभूतानां चतुर्विधानामधिपतिः अधिकं पालकः यस्मिन् आत्मनि
लोका भूरादयोऽधिश्रिताः आश्रिताः लोका यदाधारा इत्यर्थः । महान्सर्वोत्कृष्टो यः महतः महत्तत्त्वप्रमुखस्य तत्त्वगणस्य ईशे ईष्टे
नियन्ता वर्त्तते लोपस्त आत्मनेपदेष्विति तलोपे लटि तङि प्रथमैकवचने ईशे इति रूपम् अधीगर्थदयेशामिति कर्मणि षष्ठी ।
हे ग्रह अहं तेन परमात्मना कृत्वा त्वा त्वां गृह्णामि मयि परमात्मभावमापन्ने मयि विषये अहं त्वां गृह्णामि ॥ ३२ ॥
उपयाम० यजुः साम त्रिष्टुप् व्याख्यातम्(१०,३३)। एष ते यजुः प्राजापत्या बृहती सादने विनियोगः । ग्रहदेवते द्वे यजुषी ॥ ३३ ॥

स्थितः सुरया मत्तः इन्द्रः किंवः किंत्व इति वर्त्तते त्वं किम् कस्य त्वमित्याद्यन्यतिरस्कारकं वचो वदति। यां सुरां सिञ्चन्ति पात्रे ऋत्विजः परिषिञ्चन्ति पयआदिभिः उत्सिञ्चन्ति यद्वैः गोवालपवित्रैर्दशादिभिः पुनन्ति च ॥ २८ ॥

इन्द्रदेवत्या गायत्री विश्वामित्रदृष्टा स्मार्तं श्रवणाकर्मणि धानाहोमे विनियुक्ता प्रातःसवने पुरोडाशपुरोऽनुवाक्यापि। हे इन्द्र त्वं प्रातःकाले नोऽस्माकं पुरोडाशं जुषस्व कीदृशं धानावन्तं धाना विद्यन्ते यत्र तम् करम्भिणं करम्भोऽस्यास्ति अपूपवन्तमपूपाः सन्ति यत्र उक्थिनमुक्थं शस्त्रं यत्र स्तुतियुक्तम् ॥ २९ ॥

**धानावन्तङ्करम्भिणमपूपवन्तमुक्थिनम्। इन्द्रप्रातर्ज्जुषस्वनः ॥ २९ ॥**

**बृहदिन्द्रायगायतमरुतोवृत्रहन्तमम्। येनज्योतिरजनयन्नृतावृधोदेवन्देवायजागृवि ॥ ३० ॥**

**अध्वर्य्योअद्रिभिःसुतꣳसोमम्पवित्रआनय। पुनाहीन्द्रायपातवे ॥ ३१ ॥**

का० ऐन्द्र्यां बृहत्यां गायति[१]। अध्वर्युप्रेषितो ब्रह्मा इन्द्रदेवतायां बृहत्यां साम गायति॥ इन्द्रदेवत्या बृहती नृमेध पुरुषमेधदृष्टा। हे मरुतः ऋत्विजः इन्द्राय इन्द्रार्थं यूयं बृहत्साम गायत सामगानं कुरुत कीदृशं बृहत् वृत्रहन्तमम् वृत्रं पापं प्रति अतिशयेन हन्ति गच्छति वृत्रमसुरं नाशयति वा नाशयतीति तुम्। ऋतं यज्ञं वर्धयन्ति ऋतवृधः देवा ऋत्विजो वा येन सामगानेन देवाय इन्द्राय ज्योतिः तेजः अजनयन् उदपादयन् कीदृशं ज्योतिः देवं दीप्यमानम् जागृवि जागर्तीति जागृवि जागरणशीलमविनश्वरमित्यर्थः। सामगानेनेन्द्रस्तेजस्वी जात इत्यर्थः ॥ ३० ॥ १—१९,१,१।

पुण्यं पवित्रं लोकं प्रज्ञेषं जानीयाम् लोकमप्राप्तानां तल्लोकज्ञानं न भवतीति स्वर्लोकगमनं प्रार्थ्यते। तं कम् यत्र लोके ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिश्च सहावियोगेन चरतस्तिष्ठत इत्यर्थः कीदृशे ब्रह्मक्षत्रे सम्यञ्चौ लिङ्गव्यत्ययः समीची सम्यक् अञ्चतस्ते। यत्र चाग्निना सह देवाः संचरन्ति। सदा च विप्राः क्षत्रियाश्च यं गच्छन्ति तं देवलोकं प्राप्नुयामित्यर्थः ॥ २५ ॥

यत्र लोके इन्द्रश्च वायुश्च सम्यञ्चौ सह चरतः यत्र च सेदिः सदनं सेदिः आदृगमेति चात्किप्रत्ययः लिड्वत्वादेत्त्वाभ्यासलोपौ। अन्नाप्राप्तिजनितं दुःखं सेदिः स यत्र न विद्यते तं लोकं पुण्यं पवित्रं प्रज्ञेष प्रजानीयाम् जानातेः लिङ्बहुलं लेटीति सिपीटि च रूपम् ॥ २६ ॥

१—१८,२,६।

यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतः सह। तँल्लोकम्पुण्यम्प्रज्ञेषं यत्र सेदिर्न्न विद्यते ॥ २६ ॥

अँशुना ते अँशुः पृच्यताम्परुषा परुः। गन्धस्ते सोममवतु मदाय रसो अच्युतः ॥ २७ ॥

सिञ्चन्ति परि षिञ्चन्त्युत्सिञ्चन्ति पुनन्ति च। सुरायै बभ्र्वै मदे किन्त्वो वदति किन्त्वः ॥ २८ ॥

सुरादेवत्यानुष्टुप् सुरासंसर्जने विनियुक्ता तत्सूत्रं सौत्रामण्यारम्भे लिखितम्। हे सुरे ते तव अंशुः भागः सोमस्यांशुना भागेन सह पृच्यतां संयुज्यताम् तव परुः पर्व सोमस्य परुषा पर्वणा सह पृच्यताम्। तव गन्धः अच्युतः अनश्वरो रसश्च सोममवतु आश्लिष्यतु किमर्थं मदाय मत्ततायै सुरायुक्तः सोमः पीतो मदजनको भवति अत उभयोर्योगोऽस्तु ॥ २७ ॥

सुरादैवत्यैन्द्रदेवत्या वानुष्टुप् पूतसुरादाने विनियोग उक्तः। बभ्र्वै बभ्रुवर्णायै तस्यै सुरायै षष्ठ्यर्थे चतुर्थी सुराया मदे

का० एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति[1]। यजमानः एधोऽसीति मन्त्रेण समिधं गृहीत्वा समिदसीति मन्त्रेणाग्नौ दधाति॥ समिद्देवत्ये यजुषी। हे समित्त्वमेधः एधयति दीपयतीति एधः दीपिकासि वयं त्वत्प्रसादादेधिषीमहि धनादिभिर्वृद्धिं प्राप्नुयाम एधतेराशीर्लिङ्। हे समित् त्वं समिदसि समिन्धयति दीपयतीति समित् तेजोऽसि तव योगेनाग्नेर्ज्वलनात् अतो मयि विषये तेजो धेहि धारय॥ का० जुहोति समाववर्त्तीति[2]। यजमानः सकृद्गृहीतमाज्यं कण्डिकाशेषेण जुहोति॥ समाववर्त्ति आग्नेयी गायत्री वैश्वानरज्योतिरिति यजुः आग्नेयम्। पृथिवी समाववर्त्ति सम्यगावर्त्तते विकारपञ्चत्वेन हतैः प्रपः स्वं नश्यतीत्यर्थः उषाः दिवसोऽपि समाववर्त्ति सूर्यः समाववर्त्ति उ एवार्थे विश्वमिदं जगत्समाववर्त्ति।

**अभ्यादधामि समिधमग्ने व्रतपते त्वयि। व्रतञ्च श्रद्धाञ्चोपैमीन्धे त्वा दीक्षितो अहम्॥ २४॥**

**यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतः सह। तँल्लोकम्पुण्यम्प्रज्ञेषं यत्र देवाः सहाग्निना॥ २५॥**

अतोऽहं वैश्वानरज्योतिः भूयासम् विश्वेभ्यो नरेभ्यो हितो वैश्वानरः परमात्मा तद्रूपं ज्योतिर्ब्रह्मैव भूयासम्। विभून्महतोऽपि कामान् मनोरथान् व्याप्नुवे प्राप्नुयाम्। भूः स्वाहा भुवनं भूः सत्तामात्रं ब्रह्म तस्मै स्वाहा सुहुतमस्तु भूरित्यव्ययम्॥ २३॥

का० अभ्यादधामीति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति[3]। सौत्रामण्यादावादित्येष्टिं समाप्य त्रिपश्वन्तमाहवनीयदक्षिणाग्नी विहृत्याग्न्याधानं ब्रह्मवरणं च कृत्वाहवनीये यजमानस्तिस्रः समिधः प्रत्यृचमादधाति॥ अग्निदेवत्यास्तिस्रोऽनुष्टुभः आद्यन्तराग्निदृष्टाः। हे अग्ने व्रतपते व्रतस्य कर्मणः पालक अहं समिधं त्वयि अभ्यादधामि जुहोमि तेन समिदाधानेन दीक्षितः सन्नहं व्रतं कर्म श्रद्धां विश्वासं चोपैमि उपगच्छामि त्वा त्वामिन्धे दीपयामि॥ २४॥ १—१९,५,१९। २—१९,५,२०। ३—१९,५,२१।

का० सोमवदुत्क्रमणमागमनञ्च[1]। सोमवदिति उद्वयमिति मन्त्रेण जलान्निष्क्रमणम् अपाम सोमममृता अभूमेति जपतां सर्वेषां त्रिपशुदेशमागमनमिति सूत्रार्थः ॥ सूर्यदेवत्यानुष्टुप् प्रस्कण्वदृष्टा। वयं तमसः परि तमसः सकाशात् तमोबहुलादस्मा-ल्लोकात् उदगन्म उद्गता निर्गताः गमेर्लुङि अपि लुप्तं मस्य नः। कीदृशा वयम् उत्तरमुत्कृष्टतरं स्वः स्वर्गं पश्यन्तः ईक्ष-माणाः किञ्च देवत्रा देवलोके सूर्यं देवं पश्यन्तः सन्त उत्तमं ज्योतिर्ब्रह्मरूपमुदगन्म प्राप्ताः ॥ २१ ॥ १—१९,५,१०।

उद्वयन्तमसस्परि स्वः पश्यन्तऽउत्तरम्। देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम् ॥ २१ ॥

अपोऽअद्यान्वचारिषꣳरसेनसमसृक्ष्महि। पयस्वानग्नऽआगमन्तम्मासꣳसृजवर्च्चसाप्रजयाचधनेनच ॥ २२ ॥

एधोऽस्येधिषीमहिसमिदसितेजोऽसितेजोमयिधेहि। समाववर्त्तिपृथिवीसमुषाःसमुसूर्य्यः। समुविश्वमिदञ्जगत्।

वैश्वानरज्योतिर्भूयासंविभून्कामान्व्यश्नवैभूःस्वाहा ॥ २३ ॥

का० आहवनीयमुपतिष्ठतेऽपोअद्येति[2]। यजमान आहवनीयमुपतिष्ठते ॥ अग्निदेवत्या पङ्क्तिः। हे अग्ने तं मां वर्चसा ब्रह्मवर्चसेन प्रजया पुत्रादिकया धनेन सुवर्णादिकेन च त्वं संसृज संयोजय योऽहमद्य अपः अन्वचारिषम् अवभृथकर्मणा जल-मनुचरितवानस्मि प्राप्तोऽस्मि चरतेर्लुङ् यथाहं रसेन जलेन समसृक्ष्महि संसृष्टोऽस्मि सृजेर्लुङ् वचनव्यत्ययः यथाहं पयस्वान् उदकवान्सन् आगमम् आगतवानस्मि गमेर्लुङि पुषादीति च्लेरङ्। तं मां वर्चआदिभिर्योजय ॥ २२ ॥ १——१९,५,१८।

मिति ॥ का० सुमित्रिया न इत्यपोऽञ्जलिदानाय दुर्मित्रिया इति द्वेष्यं परिषिञ्चति द्वौ विक्रमा उदङ्गत्वा[1] । यजमानोऽवभृथप्रदेशात् द्वौ विक्रमौ उदीच्यां गत्वा सुमित्रिया इति जलाञ्जलिमादाय यस्यां दिशि रिपुस्तां प्रति सिञ्चतीति सूत्रार्थः ॥ सुमित्रिया नः । व्याख्यातम् (६,२२) ॥ १८ ॥ १९ ॥

का० अवभृथवत्स्नात्वा वासोऽपासनं द्रुपदादिवेति[1] । जलस्थावेव जायापती सौमिकावभृथवत्स्नात्वा कर्मकाले धृतं वासो-

**अवदेवैर्देवकृतमेनोयक्ष्यवमर्त्यैर्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहि ॥ १८ ॥**

**समुद्रे ते हृदयमप्स्वन्तः सन्त्वाविशन्त्वोषधीरुतापः । सुमित्रियान आप ओषधयः सन्तु दुर्मित्रियास्तस्मै**

**सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः ॥ १९ ॥**

**द्रुपदादिवमुमुचानः स्विन्नः स्नातो मलादिव । पूतम्पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ २० ॥**

ऽप्सु क्षिपतः ॥ अन्त्येवत्यानुष्टुप् । आपो जलानि एनसः पापात् मा मां शुन्धन्तु पुनन्तु पापात्पृथक्कुर्वन्तु । तत्र दृष्टान्तत्रयमाह द्रुपदादिवेति पलाशीद्रुद्रुमागमा इत्यभिधानोक्तेः द्रुस्तरुः तन्मयं पदं द्रुपदं पादुका तस्मात् मुमुचानः पृथग्भवन् यथा पादुकादोषैरसम्बद्धो भवति मुचेर्विकरणव्यत्ययेन शानचि जुहोत्यादित्वाद् द्वित्वे मुमुचान इति रूपम् । यथा च स्विन्नः स्वेदयुक्तः स्नातः सन्मलात्पृथग् भवति । आज्यमिव यथा पवित्रेण कम्बलमयेन पूतं गालितमाज्यं घृतं कीटेभ्यः पृथग्भवति । तथापो मां शुन्धन्तु ॥ २० ॥

१—१९,५,१५ । २—१९,५,१६ ।

यदि चेत् दिवा अहनि यदि नक्तं रात्रौ वयमेनांसि पापानि चकृम। वायुः तस्मादेनसः विश्वस्मादंहसश्च मां मुञ्चतु ॥ १५ ॥

यदि जाग्रत् सप्तम्या लुक् यदि जाग्रति जाग्रदवस्थायाम् यदि स्वप्ने स्वप्नावस्थायामेनांसि वयं चकृम सूर्यस्तस्मादेनसः विश्वादंहसश्च मां मुञ्चतु ॥ श्रुत्या त्वन्यथा व्याख्यातम्। जाग्रति मनुष्ये यत्पापं कृतं स्वप्ने पितृषु यत्पापं कृतम् तस्मान्मा मुञ्चतु। मनुष्या वै जागरितं पितरः सुप्तं मनुष्यकिल्बिषाच्चैवैनं पितृकिल्बिषाच्च मुञ्चतीति श्रुतेः[1] ॥ १६ ॥

लिङ्गोक्तदेवतं यजुः। ग्रामे अरण्ये वने सभायां पक्षपातादि यदेनः इन्द्रिये इन्द्रियविषये परापवादपरनारीदर्शनादि यत्

**यदि जाग्रद्यदि स्वप्नऽएनाᳬंसि चकृमा वयम्। सूर्य्यो मा तस्मादेनसो विश्वान्मुञ्चत्वᳬंहसः ॥ १६ ॥**

**यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यच्छूद्रे यदर्य्ये यदेनश्चकृमा वयं यदेकस्याधि धर्म्मणि तस्यावयजनमसि ॥ १७ ॥**

**यदापोऽअघ्न्याऽइति वरुणेति शपामहे ततो वरुण नो मुञ्च। अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः।**

देवविषये वा शूद्रे अर्ये वैश्ये अर्यः स्वामिवैश्ययोरिति निपातः यत्पापं वयं चकृमः। आवयोः पत्नीयजमानयोरेकस्य अधिधर्मणि कर्मणि अधिकर्मविषये यदेनो धर्मलोपलक्षणम्। तस्यैनसः पापस्यावयजनं नाशनं त्वमसि नाशकोऽसीत्यर्थः। कुम्भं प्रति वचनम्। अवपूर्वो यजिर्नाशनार्थः ॥ १७ ॥ १—१२,९,२,२। २—१९,५,१४। ३—३,४८;८,२५।

यदापः। व्याख्यातम् (६,२२)। पूर्ववन्मज्जनम्[2]। पूर्ववदिति अवभृथेत्यादि ओषधीस्तताप इत्यन्तेन सुराकुम्भस्य जले मज्जनम् ॥ अवभृथ। व्याख्यातम्[3] इयान्विशेषः अयक्षि अवायक्षि नाशितवानस्मि यजेर्लुङि तङि उत्तमैकवचने रूपम् पर्वत्र अयाक्षिषः,

का० प्रत्यक्षभक्षं यजमानो लोमानि प्रयतिरिति[1]। यजमानो ग्रहशेषं प्रत्यक्षमुपह्वपूर्वकं भक्षयति ॥ लोमत्वगादिदेवत्यानुष्टुप्। मम लोमानि प्रयतिः प्रयतनं प्रयतिः प्रयत्नो वर्तते तथोद्यामो यथा लोमस्वपि प्रयत्नः। मे मम त्वङ् आनतिः आगतिश्च आनमन्ति भूतानि यस्यां सा आनतिः आगच्छन्ति भूतानि यां प्रति सा आगतिः मदीयां त्वचं दृष्ट्वा भूतान्यागच्छन्ति नमन्ति चेत्यर्थः। मे मम मांसमुपनतिः उपनमन्ति भूतानि यत्र। ममास्थि वसु धनं धनरूपमेव। मे मज्जा आनतिः आनमन्ति भूतानि यत्र। उपलक्षणमेतत् मम सप्त धातवो जगद्वशीकरणसमर्था इत्यर्थः ॥ १३ ॥

लोमानि प्रयतिर्मम त्वङ्म आनतिरागतिः ॥ माᳫंसम्म उपनतिर्वस्वस्थि मज्जा म आनतिः ॥ १३ ॥

यद्देवा देवहेडनन्देवासश्चकृमा वयम् ॥ अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वᳫंहसः ॥ १४ ॥

यदि दिवा यदि नक्तमेनाᳫंसि चकृमा वयम्। वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वᳫंहसः ॥ १५ ॥

इत उत्तरमवभृथः ॥ का० मासरकुम्भं प्लावयति यद्देवा इति[2]। अवभृथेष्टिं कृत्वा यद्देवा इत्यादिना वरुण नो मुञ्चेत्यन्तेन सार्धकण्डिकाचतुष्कात्मकेन मन्त्रेण मासरकुम्भं जले तारयति ॥ अग्निवायुसूर्यदेवत्यास्तिस्रोऽनुष्टुभः कुष्माण्डीसञ्ज्ञाः। दीव्यन्ति देवाः दीप्यमाना हे देवासो देवा वयं यद्देवहेडनं देवानां हेडनमपराधं चकृम कृतवन्तः करोतेर्लिट् संहितायां छान्दसो दीर्घः। अग्निस्तस्मादेनसः पापात् मा मां मुञ्चतु पृथक्करोतु विश्वात् विश्वस्मात्सर्वस्मात् अंहसः विघ्नाच्च मुञ्चतु। ङसेः स्मादभाव आर्षः ॥ १४ ॥

१——१८,५,१० । २——१८,५,१२ ।

का० त्रया देवा इति अन्तान्ते जुहोति१। अन्तसमाप्तौ वषट्कृते त्रया इति कण्डिकाद्वयात्मकेन मन्त्रेण त्रयस्त्रिंशं वसाग्रह
जुहोति। त्र्यवसाना विश्वदेवदेवत्या पङ्क्तिः। एकादश देवा देवैः वक्ष्यमाणैः सह मा मामवन्तु रक्षन्तु। कीदृशाः त्रयो-
ऽयवा येषान्ते सङ्ख्याया अवयवे तयप् द्वित्रिभ्यां तयस्यायज्वेति अयजादेशः। एकादश त्रिगुणा इत्यर्थः ते च कतीति स्वयमेवाह
त्रयस्त्रिंशाः तिसृभिरधिका त्रिंशत् सङ्ख्या येषान्ते त्रयस्त्रिंशत्सङ्ख्या इत्यर्थः। सुराधसः शोभनं राधो येषान्ते राध इति धन-
नाम राध्नुवन्त्यनेनेति यास्कोक्तेः२। तथा बृहस्पतिपुरोहिताः बृहस्पतिः पुरोहितो येषान्ते। तथा सवितुः देवस्य सवे आज्ञायां
वर्तमानाः। देवाः दीप्यमानाः॥ ११॥

**प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूᳬषि सामभिः सामान्यृग्भिर्ऋचः पुरोनुवाक्याभिः पुरोनुवाक्या याज्याभिर्याज्या वषट्कारैर्वषट्कारा आहुतिभिराहुतयो मे कामान्त्समर्द्धयन्तु भूः स्वाहा॥ १२॥**

कथमवन्तु तत्राह। विश्वदेवदेवत्यमार्गोलिङ्गं यजुः प्रकृतिश्छन्दः। प्रथमा देवा द्वितीयैः सहिता मामवन्तु द्वितीयास्तृतीयैः
सहावन्तु तृतीयाः सत्येन सह सत्यं यज्ञेन सह यज्ञो यजुर्भिः सह यजूंषि सामभिः सह सामान्यृग्भिः सह ऋचः पुरो-
ऽनुवाक्याभिः सह पुरोऽनुवाक्या याज्याभिः सह याज्या वषट्कारैः सह वषट्कारा आहुतिभिः सह एवं त्रिप्रकारैरेकादश-
सङ्ख्यैर्देवैरुत्तरोत्तरं पालिता आहुतयो मे मम कामानभिलाषान् समर्धयन्तु पूरयन्तु भूः भुवनं भूः हुतमिदं स्वाहा सुहु-
तमस्तु॥ १२॥

१—का० १९,५,७ २—निरु० ४,३

भोक्तारौ भवतामित्यर्थः। पसः पसतेः स्पृशतिकर्मण इति यास्कोक्तेः पसो लिङ्गं भगः सौभाग्यं चास्तु भग ऐश्वर्यं सौभाग्यं सम्पत्तिः सर्वदा भोगासक्तमस्त्वित्यर्थः। जङ्घाभ्यां पद्भ्यां चाहं धर्मोऽस्मि उपलक्षणमेतत् सर्वाङ्गैर्धर्मरूपोऽस्मि धर्मरूपत्वादेव विशि प्रजायां राजा प्रतिष्ठितोऽस्मि धर्मप्रतिष्ठितो हि राजा भवति ॥ ९ ॥

का० कृष्णाजिनेऽवरोहति प्रति क्षत्र इति[1]। असन्दीतो यजमानः कृष्णाजिनेऽवतरति। विश्वदेवदेवत्यं यजुः अतिशक्वरी।

जङ्घाभ्याम्पद्भ्यान्धर्म्मोऽस्मिविशिराजाप्रतिष्ठितः ॥ ९ ॥

प्रतिक्षत्रेप्रतितिष्ठामिराष्ट्रे प्रत्यश्वेषुप्रतितिष्ठामिगोषु। प्रत्यङ्गेषुप्रतितिष्ठाम्यात्मन्प्रतिप्राणेषप्रति तिष्ठामिपुष्टे प्रतिद्यावापृथिव्योःप्रतितिष्ठामियज्ञे ॥ १० ॥

त्रयादेवाएकादशत्रयस्त्रिꣳशाःसुराधसः। बृहस्पतिपुरोहितादेवस्यसवितुःसवे। देवादेवैरवन्तुमा ॥ ११ ॥

अहं क्षत्रे प्रतितिष्ठामि क्षत्रियजातौ प्रतिष्ठायुक्तो भवामि। राष्ट्रे देशे अश्वेषु गोषु अङ्गेषु करपाद्याद्यवयवेषु आत्मन् आत्मनि चित्ते प्राणेषु पञ्चसु पुष्टे पुष्टौ समृद्धौ द्यावापृथिव्योः स्वर्गेहलोकयोः यज्ञे ज्योतिष्टोमादौ च प्रतितिष्ठामि। क्रियापदावृत्तिः फलातिशयद्योतनार्था। क्षत्रियदेशयोः प्रतिष्ठा वशीकरणम् गोऽश्वप्रतिष्ठा तत्प्राप्तिः प्राणाङ्गप्रतिष्ठा नीरोगत्वम् आत्मप्रतिष्ठा निराधित्वम् पुष्टप्रतिष्ठा धनसमृद्धिः द्यावापृथिव्योः प्रतिष्ठोभयलोककीर्तिः यज्ञे प्रतिष्ठा यज्ञकरणम् वश्यविश्वः पशुमान्निराधिव्याधिः श्रीमान्यज्ञकर्ता च भवेयमिति भावः ॥ १० ॥

[1] —१९,४,२३।

मोदाः आनन्दरूपाः सन्तु मोदन्ते ता मोदाः पचाद्यच्। अङ्गानि प्रमोदाः प्रकृष्टहर्षाः सन्तु। मे मम मित्रं सहः अस्तु सहते अभिभवति शत्रुमिति सहः रिपुनाशकमस्तु॥ ६ ॥

मे बाहू बलमस्तु बलवन्तौ स्तामित्यर्थः। इन्द्रियञ्च बलं स्वकार्यक्षममस्तु। मे हस्तौ कर्म चास्तु सत्कर्मकुशलौ सामर्थ्यवन्तौ च स्तामित्यर्थः। मम आत्मा अन्तरात्मा उरो हृदयञ्च क्षत्रं क्षतात् त्राणकरमस्तु॥ ७ ॥

जिह्वामेभद्रंवाङ्महोमनोमन्युःस्वराड्भामः। मोदाःप्रमोदाअङ्गुलीरङ्गानिमित्रम्मेसहः॥ ६ ॥

बाहूमेबलमिन्द्रियꣳहस्तौमेकर्म्मवीर्य्यम्। आत्माक्षत्रमुरोमम॥ ७ ॥

पृष्टीर्म्मेराष्ट्रमुदरमꣳसौग्रीवाश्चश्रोणी। ऊरूअरत्नीजानुनीविशोमेऽङ्गानिसर्वतः॥ ८ ॥

नाभिर्म्मेचित्तंविज्ञानम्पायुर्म्मेऽपचितिर्भसत्। आनन्दनन्दावाण्डौमेभगःसौभाग्यम्पसः।

मे मम पृष्टीः पृष्ठप्रदेशो राष्ट्रं देशो देशवत्सर्वाधारमस्तु। मे मम उदरमंसौ स्कन्धौ ग्रीवाः कण्ठदेशाः श्रोणी कटिदेशौ ऊरू सक्थिनी अरत्नी हस्तदेशौ जानुनी च सर्वतोऽन्यान्यङ्गानि च विशः प्रजाः सन्तु प्रजावत्पोष्याः सन्तु॥ ८ ॥

मे नाभिः चित्तं ज्ञानरूपमस्तु। पायुर्मे गुदेन्द्रियं विज्ञानं ज्ञानजनितसंस्काराधारमस्तु। भसत् स्त्रीप्रजननमपचितिः प्रजारूपमस्तु सुभगमस्तु यजमानपत्नीविषयमेतत्। मे आण्डौ वृषणौ आनन्दनन्दौ स्तामानन्देन सम्भोगजनितसुखेन नन्दतस्तौ तत्सुख-

वचनात् । हे यजमान त्वं कः प्रजापतिः असि अत्यन्तं कः कतमः श्रेष्ठः प्रजापतिरसि प्रजापतयो बहवः तत्रोत्तमोऽसि । कस्मै प्रजापतिपदप्राप्त्यै त्वामहमभिषिक्तवानिति शेषः काय प्रजापतिभावाय चाभिषिक्तवान् ॥ का० सुश्लोकेत्यालब्धो ह्वयति[1] । अध्वर्युणा स्पृष्टो यजमानः सुश्लोकादिसत्यराजान्तराख्याह्वयति ॥ हे सुश्लोक एहीति शेषः शोभनः श्लोकः कीर्तिर्यस्य । शोभनं मङ्गल मुदर्को यस्य स सुमङ्गलः हे सुमङ्गल त्वमेहि । हे सत्यराजन् एहि सत्योऽविनाशी राजा प्रभुर्यस्य सः ॥ ४ ॥

का० अङ्गानि चालभते यथालिङ्गं शिरो म इति प्रतिमन्त्रम्[2] । यजमानो यथालिङ्गमङ्गान्यालभते ॥ इन्द्रशरीरावयवदेवताकं पञ्चर्चं तत्र तृतीया गायत्री अन्त्या त्र्यवसाना महापङ्क्तिः तिस्रोऽनुष्टुभः । अभिषिक्तो यजमान इन्द्ररूप आत्मानं

कोऽसिकतमोऽसिकस्मैत्वाकायत्वा । सुश्लोकसुमङ्गलसत्यराजन् ॥ ४ ॥

शिरोमेश्रीर्यशोमुखन्त्विषिःकेशाश्चश्मश्रूणि । राजामेप्राणोऽअमृतꣳसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ ५ ॥

सर्वात्मकं पश्यन्नाह । मे मम शिरः श्रीः शोभास्तु दधते वा मे मुखं यशोऽस्तु केशाः श्मश्रूणि मुखलोमानि च त्विषि र्दीप्तिरस्तु । राजा दीप्यमानो मे मम प्राणो मुखवायुरमृतमस्तु । चक्षुरिन्द्रियं सम्राट् अस्तु सम्यक् राजते सम्राट् । श्रोत्रमिन्द्रियं विराट् विविधं राजमानमस्तु ॥ ५ ॥

१—१८,६,२० । २—१८,६,२१ ।

मे जिह्वा रसनेन्द्रियं भद्रं कल्याणरूपमस्तु । वाक् वागिन्द्रियं महः मह्यते पूज्यते महः पूज्यमानास्तु महतेरसुन् प्रत्ययः मनो मन्युः क्रोधरूपमस्तु क्रोधफलं ददातु । भामः क्रोधः स्वराट् स्वेनैव राजमानोऽस्तु न तु कुतश्चित्प्रतिहन्यतामित्यर्थः । तदुक्तम् । शक्तिरहितोऽपि कुप्यति मानं चोद्वहति सेवकजनोऽपि अर्थरहितोऽपि कामी जानाति विधिं विडम्बयितुमिति । अङ्गुलयो

यजुषी देव्यौ बृहत्यौ। हे रुक्म मृत्योः अकालमरणान्मां पाहि रक्ष। हे सौवर्ण रुक्म विद्योत् विद्युतः मां पाहि विद्योतत इति विद्योत् विच्प्रत्यये गुणः विद्युत्पातादृक्षेत्यर्थः ॥ २ ॥

का० सर्वसुरभ्युन्मृदितᳪ शेषैरभिषिञ्चत्या मुखादवस्रावयन्प्रतिदिशᳪ सर्वत्र सावित्रमश्विनोः सरस्वत्या इन्द्रस्येति प्रतिमन्त्रम्[१]। चैतसमावस्थापितैर्वसाग्रहशेषैः प्रतिदिशं स्थितोऽध्वर्युरा मुखादवस्रावयन्नासन्दीस्थं यजमानमभिषिञ्चति मन्त्रत्रयेण कीदृशम् सर्वैः सुरभिभिश्चन्दनकर्पूरकस्तूरीकेसरादिभिरुद्वर्तितम्। सावित्रं यजुर्देवस्य त्वेति सर्वत्र त्रिष्वपि मन्त्रेष्वन्वितिः। चतुर्थोऽभिषेक उत्तरे स्थितस्त्रिभिर्मन्त्रैर्महाव्याहृतिभिरिन्द्रस्येति तृतीयमन्त्रेण वा कुर्यादिति सूत्रार्थः॥ देवस्य त्वा। व्याख्यातम्॥

देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम्। अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येनवीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेऽभिषिञ्चामि ॥ ३ ॥

अश्विनोः। त्रीणि लिङ्गोक्तदेवतानि यांद्य प्राजापत्या बृहती हे ऋग्गायत्र्यौ। हे यजमान अश्विनोः भैषज्येन वैद्यकर्मणा त्वामभिषिञ्चामि भिषजः कर्म भैषज्यम् किमर्थं तेजसे कान्त्यै ब्रह्मवर्चसाय सर्वेनास्खलितवेदवेदाङ्गजनिता कीर्तिर्ब्रह्मवर्चसम्॥ सरस्वत्यै भैषज्येन षष्ठ्यर्थे चतुर्थी सरस्वत्या भिषक्कर्मणा च भवन्तं देवमभिषिञ्चामि किमर्थं वीर्यायान्नाद्याय वीर्यं सामर्थ्यम् अन्नाद्यमन्नभक्षणसामर्थ्यम् तस्मै॥ इन्द्रस्येन्द्रियेण इन्द्रियपाटवेन सामर्थ्येन च त्वामभिषिञ्चामि किमर्थं बलाय सामर्थ्याय श्रियै सर्वसमृध्यै यशसे कीर्त्यै ॥ ३ ॥

१——१९,४,१४। २——१९,४,१९।

का० यजमानमालभते कोऽसीति[१]। अध्वर्युर्यजमानं स्पृशति॥ प्राजापत्या गायत्री उष्णिग्गर्भा षट्सप्तकाद्योष्णिग्गर्भेति

स्वर्यप्रदः सोमश्च दुग्धः ॥ एवं ये: सरस्वत्यश्विभिरिन्द्राय नानाद्रव्येभ्यो नानारसानादायोपकारः कृतः तेभ्यः सोत्रामणीद्रष्टृभ्यो नमः ॥ ९५ ॥

१—१९,४,७। २—१९,४,८। ३—१२,८,३,९। ४—१९,४,९। ५—१९,३,१०-११।

श्रीमन्महीधरकृते वेददीपे मनोहरे। सुरादीन्द्राभिषिकान्तोऽध्यायो नवदशोऽगमत् ॥ १९ ॥

का० सोमासन्दीवदासन्दीं जानुमात्रपदीं वेद्योर्निदधाति क्षत्रस्य योनिरिति[१]। जानुप्रमाणपादामासन्दीं वेद्योर्मध्ये निदधाति सोमासन्दीवदिति मुञ्जरज्ज्वा व्युताम् आसन्द्या द्वौ पादौ दक्षिणवेदौ द्वावुत्तरवेदौ यथा तथेति सूत्रार्थः ॥ आसन्दीदेवताका द्विपदा गायत्री। हे आसन्दि त्वं क्षत्रस्य योनिरुत्पत्तिस्थानमसि। आसन्द्यामभिषिक्तो गुणधर्मानर्हति राजेति भावः। क्षत्रस्य

क्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि। मात्वाहिꣳसीन्मामाहिꣳसीः ॥ १ ॥

निषसादधृतव्रतोवरुणःपस्त्यास्वा। साम्राज्यायसुक्रतुः। मृत्योःपाहिविद्योत्पाहि ॥ २ ॥

नाभिर्नहनं बन्धनं चासि ॥ का० कृष्णाजिनमस्यामास्तृणाति मा त्वेति[२]। अस्यामासन्द्यां कृष्णाजिनं छादयेदित्यर्थः ॥ यजुः कृष्णाजिनदेवत्यम् प्राजापत्या गायत्री। यज्ञाध्यासेन कृष्णाजिनं प्रार्थ्यते। हे कृष्णाजिन आसन्दी त्वा त्वां मा हिंसीः त्वं च मा मां मा हिंसीः मा जहि। यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्चाहिंसायै इति[३] श्रुतेः ॥ १ ॥

का० तस्मिन्नास्ते यजमानो निषसादेति[४]। यजमानः कृष्णाजिने उपविशेत् ॥ व्याख्याता(१०,२७)॥ का० पादयो रुक्मा उपास्यति राजतꣳ सव्ये मृत्योरिति सौवर्णꣳ शिरस्यके विद्योदिति[५]। आसन्द्युपविष्टयजमानस्य पादयोरधो रुक्मौ मण्डलाकारौ भूषणविशेषौ न्यस्यति राजतं सव्ये मृत्योरितिमन्त्रेण सौवर्णं दक्षे विद्योदिति सौवर्णं रुक्मं शिरसीत्यके ऊचुरिति सूत्रार्थः ॥ रुक्मदेवत्ये

भिषजा भिषजौ अश्विना अश्विनौ आत्मन् आत्मनि अङ्गान्यवयवान् समधातां समयोजयताम् सरस्वती तत् तमात्मानमङ्गैः समधात्संदधे कीदृशा अश्वयादयः इन्द्रस्य रूपमायुश्च चन्द्रेणाह्लादकेन ज्योतिर्ज्योतिषा सहामृतमनश्वरं दधानाः सम्पादयन्तः कीदृशं रूपं शतमानं शतानामनेकेषां प्राणिनां मानं पूजा यस्मिन् तज्जगत्पूज्यमित्यर्थः ॥ ९३ ॥

सरस्वती अश्विभ्यां पत्नी अश्विनोः पत्नी भूत्वा योन्यामन्तर्योनिमध्ये गर्भमिन्द्रलक्षणं सुकृतं यथा तथा शोभनं कृतं बिभर्ति । अपां

सरस्वतीयोन्याङ्गर्भमन्तरश्विभ्याम्पत्नीसुकृतम्बिभर्त्ति । अपाᳪरसेनवरुणोनसाम्नेन्द्रᳪश्रियैजनयन्नप्सुराजा॥९४॥

तेजःपशूनाᳪहविरिन्द्रियावत्परिस्रुतापयसासारघम्मधु । अश्विभ्यान्दुग्धम्भिषजा

सरस्वत्यासुतासुताभ्याममृतःसोमइन्दुः ॥ ९५ ॥

॥ इति माध्यन्दिनिशाखायां वाजसनेयसंहितायां ऊनविंशोऽध्यायः समाप्तः ॥ १९ ॥

राजा अपामीश्वरो वरुणः अपां रसेन साम्ना उदकरसभूतेन साम्ना इन्द्रं श्रियै जनयन् सन् बिभर्तीत्यनुषङ्गः । नवार्थः ॥ ९४ ॥

भिषजा भिषग्भ्यामश्विभ्यां सरस्वत्या च इन्द्रियावत् इन्द्रियवत् वीर्यवत् पशूनां सम्बन्धि हविरादाय परिस्रुता पयसा च सह सारघं मधु चादाय इन्द्रार्थं तेजो दुग्धं स्रावितम् । सुतासुताभ्यां परिस्रुत्पयोभ्यां सकाशात् अमृतोऽमृतरूपः इन्दुरि

अविः सारस्वतो मेषश्च नसि इन्द्रस्य नासिकायां] वोर्यायावस्थितः। ग्रहाभ्यां सारस्वताभ्यां प्राणस्य प्राणवायोः पन्था मार्गोऽमृतः अनश्वरः क्रियते। सरस्वती उपवाकैर्यवाङ्कुरैः कृत्वा व्यानमिन्द्रस्य व्यानवायुं जजान जनयति। बर्हिर्बदरैः सह नस्यानि नासिकाभवानि लोमानि जजान ॥ ९० ॥

ऋषभः बलाय सामर्थ्यायेन्द्रस्य रूपं चक्रे। ग्रहाभ्यामैन्द्राभ्याममृतं भूतभविष्यद्वर्तमानशब्दग्राहि श्रोत्रं श्रोत्रेन्द्रियं कर्णाभ्यामिन्द्रस्य कर्णयोश्चक्रे कर्णशष्कुल्योः श्रोत्रेन्द्रियं स्थापितमित्यर्थः। यवा बर्हिश्च भ्रुवि भ्रुवोः केसराणि लोमान्यभवन् कर्कन्धु

इन्द्रस्य रूपमृषभो बलाय कर्णाभ्याᳪ श्रोत्रममृतं ग्रहाभ्याम्। यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघम्मुखात् ९१।

आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम। केशा न शीर्षन्यशसे श्रियै शिखा सिᳪहस्य लोम त्विषिरिन्द्रियाणि ॥९२॥

अङ्गान्यात्मन्भिषजा तदश्विनात्मानमङ्गैः समधात्सरस्वती। इन्द्रस्य रूपᳪ शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधानाः ॥९३॥

बदरं मुखात् सारघं मधु तत्तुल्यं लालाश्लेष्मादि जज्ञे सरघा मधुमक्षिका तत्सम्बन्धि सारघम् यथा मधु नानातरुभ्य आनीयते एवं लालादि सर्वाङ्गेभ्यो भवति इति लालादीनां मधुसाम्यम् ॥ ९१ ॥

आत्मन् आत्मनि शरीरे उपस्थे गुह्ये च यानि लोमानि तानि वृकस्य लोमानि लोमेति जातावेकवचनम्। मुखे यानि श्मश्रूणि तानि च व्याघ्रलोम। शीर्षन् शीर्ष्णि शिरसि च यशसे यशोऽर्थं ये केशाः या च श्रियै शोभायै शिखा या च त्विषिः कान्तिः यानि चेन्द्रियाणि तत्सर्वं सिंहस्य लोम ॥ ९२ ॥

कुम्भः सुराधानकुम्भः शचीभिः कर्मभिः सत्वा वनिष्ठुः स्थूलान्त्रं जनिता जनयति। यस्मिन् कुम्भे योन्यां कुम्भरूपे योनौ स्थाने अग्रे प्रथममन्तर्मध्ये गर्भः सुराख्य उषितः। शतधार उत्सः कूपतुल्यः कुम्भः त्र्यक्षः स्रष्टः प्राणैः शिश्नोऽभवत्। कुम्भी सुराधानी च पितृभ्यः स्वधां दुहे दुग्धे अन्नं पूरयति लोपस्त आत्मनेपदेष्विति तलोपः ॥ ८७ ॥

अस्येन्द्रस्य सत् सतः पात्रविशिषो मुखमभूत् सतशब्दस्यान्त्यलोपश्छान्दसः सतेन इत् सतेनैवास्य शिरोऽभूत्। पवित्रं जिह्वाभवत्। अश्विना अश्विनौ सरस्वती च आसन् आस्येऽभवन्। चप्यञ्च पायुरिन्द्रियमभूत्। वालो सुरागलनवस्त्रमस्येन्द्रस्य

मुखꣳसदस्य शिरऽइत्सतेन जिह्वा पवित्रमश्विनासन्त्सरस्वती। चप्यन्न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी ॥ ८८ ॥

अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन। पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्रमसितं वसाते ॥ ८९ ॥

अविर्न मेषो नसि वीर्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम्। सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान ॥ ९० ॥

भिषग्वैद्यो वस्तिर्गुदं शेपो लिङ्गं चाभूत् वालेन चयं जातम् कीदृशः शेपः हरसा वीर्येण तरस्वी वेगवान् ॥ ८८ ॥

अश्विभ्यामिन्द्रस्य चक्षुः क्रियते ग्रहाभ्यामश्विदेवत्याभ्यां चक्षुरेवामृतमनश्वरं क्रियते। शृतेन पक्वेन हविषा छागेन छागरूपेण पक्वहविषा तेजश्चक्षुःसम्बन्धि क्रियते। गोधूमैः पक्ष्माणि नेत्रलोमानि क्रियन्ते कुवलैर्बदरैः उतानि चक्षुर्निविष्टानि लोमानि क्रियन्ते। शुक्रं शुक्लमसितं कृष्णं च पेशः रूपं शुक्लकृष्णे नेत्रगते रूपे वसाते आच्छादयाते कुर्वीत इत्यर्थः प्रकृतत्वादश्विनौ कर्तारौ ॥ ८९ ॥

गतं सर्वं च सुरया कृत्वा मूत्रात् मूत्रं चाजनयन्त आमाशयगतमन्नमूवध्यम् पक्वाशयगतमन्नं सवत्रम्। कीदृशास्ते अमतिं बध्यमावं दुर्मतिं दुर्बुद्धिं च बाधमाना निवर्तयन्तः सद्बुद्धिं ददत इत्यर्थः ॥ ८४ ॥

सुष्ठु त्रायते रक्षति सुत्रामा इन्द्रः पुरोडाशदेवता इन्द्रस्य हृदयेन हृदयं जजान जनयति। सविता च पुरोडाशेनेन्द्रस्य सत्यं जजान। वरुणो भिषज्यन् इन्द्रस्य चिकित्सां कुर्वन् सन् यकृत् कालखण्डं क्लोमानं गलनाड़िकाञ्च जजान। वायव्यैः सौमिकोर्ध्वपात्रैः मतस्ने हृदयोभयपार्श्वस्थे अस्थिनी पित्तं न पित्तञ्च मिनाति निर्मिमीते सृजतीत्यर्थः सौमिकान्यौर्ध्वपात्राणि वायव्यसञ्ज्ञानि ॥ ८५ ॥

इन्द्रःसुत्रामाहृदयेनसत्यम्पुरोडाशेनसविताजजान।यकृत्क्लोमानंवरुणोभिषज्यन्मतस्नेवायव्यैर्नमिनातिपित्तम्।८५।

आन्त्राणिस्थालीर्मधुपिन्वमानागुदाःपात्राणिसुदुघानधेनुः। श्येनस्यपत्रन्नप्लीहाशचीभिरासन्दीनाभिरुदरन्नमाता ॥८६॥

कुम्भोवनिष्ठुर्जनिताशचीभिर्यस्मिन्नग्रेयोन्याङ्गर्भोअन्तः।प्लाशिर्व्यक्तःशतधारउत्सोदुहेनकुम्भीस्वधाम्पितृभ्यः॥८७॥

स्थालीः स्थाल्यः आन्त्राणि अभवन् कीदृश्यः स्थाल्यः मधु पिन्वमानाः मधु सिञ्चन्त्यः। पात्राणि गुदा गुदस्थानान्यभवन्। सुदुघा न धेनुः शोभनं दुग्धे सा सुदुघा दोग्ध्री च धेनुः आदित्येष्टेर्दक्षिणारूपा गुदा एवाभवत्। श्येनस्य पत्रञ्च प्लीहा हृदद-वामभागस्थः शिथिलमांसपिण्डः गुल्मसञ्ज्ञोऽभवत्। आसन्दी शचीभिर्नाभिरुदरं चाभवत् कीदृश्यासन्दी माता जननीस्थानीया यास-न्यामभिषिच्यते ऽतस्तत्रो जायतइव। नाशार्थाः ॥ ८६ ॥

रुद्रवत् वर्तनिर्मार्गो ययोस्तौ रुद्रवर्तनी रुग्णवर्तनी वा भिषजा भिषजौ वैद्यौ अश्विना अश्विनौ सरस्वती च तदन्तरं शरीरान्तर्वर्ति पेश इन्द्रस्य रूपम् वयति वयन्ति सम्बध्नन्ति वचनव्यत्ययः। तदेवाह मासरैः शष्पादिचूर्णचर्मनिःस्रावैः अस्थि सम्बध्नन्ति कारोतरेण शलनवासमा मज्जानं वयन्ति। कीदृशास्ते गवां त्वचि चर्मणि दधतः सुरां स्थापयन्तः ॥ ८२ ॥

नासत्याभ्यामश्विभ्यां सहिता सरस्वती वसु धनं दर्शतं दर्शनीयं वपुश्च वयति पटमिव सृजति इन्द्रस्येति शेषः कीदृशं वसु पेशलं पेश इति हिरण्यरूपयोर्नाम पेषं लाति गृह्णाति पेशलं हिरण्यवद्रूपवद्वा। मनसा विचार्येति शेषः। परिस्रुता परिस्रुतः

तदश्विना भिषजा रुद्रवर्त्तनी सरस्वती वयति पेशो अन्तरम्। अस्थि मज्जानं मासरैः कारोतरेण दधतो गवां त्वचि ॥ ८२ ॥

सरस्वती मनसा पेशलं वसु नासत्याभ्यां वयति दर्शतं वपुः। रसं परिस्रुता न रोहितं नग्नहुर्धीरस्तसरं न वेम ॥ ८३ ॥

पयसा शुक्रममृतं जनित्रꣳ सुरया मूत्राज्जनयन्त रेतः। अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातꣳ सब्वं तदारात् ॥ ८४ ॥

सुरायाः रोहितं लोहितं रसं न रसञ्च वयति इन्द्रवपुषो रञ्जनाय अत एव वेदेषु रोहितः इन्द्रः पठ्यते। अथ तदा नग्नहुः किण्वः सुराकन्दः पूर्वोक्तः तसरं वयनसाधनं वेम न वेमा च भवति तसरवेमानौ कुविन्दानां प्रसिद्धौ। कीदृशो नग्नहुः धीरः धियमीरयति प्रेरयतीति धीरः मादक इत्यर्थः विवक्षातः कारकाणि भवन्तीति वचनात् नग्नहोः कर्तृत्वं विवक्षितम् ॥ ८३ ॥

प्रकृतत्वादश्विनौ सरस्वती च पयसा दुग्धेन रेतो वीर्यं जनयन्त उदपादयन् अडभाव आर्षः इन्द्रस्येति शेषः। कीदृशं रेतः शुक्रं शुक्लम् अमृतमनश्वरं जनित्रं जनयतीति जनित्रं जननशीलम्। आरात् समीपे स्थित्वा तत्प्रसिद्धमूवध्यं वातं नाडी-

का० खुरेवसाग्रहान्द्वाविꣳशतं जुहोति सीसेनेति प्रत्यृचम्[1]। पञ्चपलो ग्रह इति परिशिष्टोक्तेः ऋषभखुराणां महत्त्वाच्चार्षभैः खुरैः पशूनां वसां गृहीत्वा सीसेनेति प्रतिमन्त्रं द्वाविंशत्पयोग्रहान् सुराग्रहान् जुहोति एकेन मन्त्रेण द्वयोर्होम इत्यर्थः॥ अश्वि-सरस्वतीन्द्रदेवत्याः षोडश जगत्यः। जगतीभिर्जुहोतीति[2] श्रुतिबलादक्षरन्यूनानामपि कासाञ्चिज्जगतीत्वमेव। दस्रादिभिर्यथा इन्द्रस्य भैषज्यं कृतं तदनेनानुवाकेन प्रतिपाद्यते। अश्विना अश्विनौ दस्रौ सविता सरस्वती वरुणश्च मनसा विचार्य यज्ञं सौत्रामणीं वयन्ति निष्पादयन्ति। केन सीसेन ऊर्णासूत्रेण च सीसेन शष्पक्रयणादूर्णया तोक्मक्रयणात् ताभ्यां यज्ञनिष्पादनमित्यर्थः। तत्र दृष्टान्तः सीसेन ऊर्णासूत्रेण च तन्त्रमिव यथा कश्चित्सीसेन धातुविशेषेण तन्त्रमङ्गदविशेषं वयति ऊर्णासूत्रेण

सीसेनतन्त्रम्मनसामनीषिणऊर्णासूत्रेणकवयोवयन्ति। अश्विनायज्ञꣳसवितासरस्वतीन्द्रस्यरूपंवरुणोभिषज्यन्॥८०॥

तदस्यरूपममृतꣳशचीभिस्तिस्रोदधुर्देवताःसꣳरराणाः। लोमानिशष्पैर्बहुधानतोक्मभिस्त्वगस्यमाꣳसमभवन्नलाजाः॥८१॥

च तन्त्रं पटं वयति तद्वत् तन्त्रं राष्ट्रे च सिद्धान्ते परच्छन्दाप्रधानयोः अङ्गदे कुटुम्बकृते तन्तुवाने परिच्छद इति कोशात्। कीदृशा अश्व्यादयः मनीषिणः मेधाविनः। कवयः क्रान्तदर्शनाः। इन्द्रस्य रूपं भिषज्यन् भिषज्यन्तः भिषज् रुग्जये कण्ड्वादित्वा-द्यक् ततः शतृप्रत्ययः वचनव्यत्ययः। इन्द्रभैषज्याय यज्ञं वयन्तीत्यर्थः॥ ८०॥

१——१९,४,२२। २——१२,८,३,१२।

तिस्रो देवताः अश्विसरस्वत्यः संरराणाः सम्यक् रममाणाः सत्यः अस्येन्द्रस्य तदमृतममरणधर्मि रूपं शचीभिः कर्मभिः सन्दधुः कर्माङ्गैः सन्धानं चक्रुः तदेवाह लोमानि इन्द्ररोमाणि शष्पैर्विरूढव्रीहिभिः सन्दधुः अस्येन्द्रस्य त्वक् त्वचं च तोक्मभिः विरूढयवैर्बहुधा सन्दधुः लाजा न लाजाश्चास्य मांसं समभवत्। अध्यायसमाप्तिपर्यन्तं नकाराः सर्वे चकारार्थाः॥ ८१॥

प्रजापतिः रूपे रूपवती मूर्तिमती सत्यानृते दृष्ट्वा व्याकरोत् व्याकरणं पृथक्त्वं कृतवान् इदं सत्यमिदमनृतमिति पृथगव स्थापयत्। तदेवाह। अनृते अश्रद्धां नास्तिक्यमदधात् अस्थापयत् अनृतस्याश्रद्धानिमित्तत्वात्। सत्ये श्रद्धामदधात् सत्यस्य श्रद्धानिमित्तत्वात् श्रद्धास्तिक्यबुद्धिः अनेन ऋतेनेत्युक्तम्॥ ७७ ॥

दृष्ट्वा रूपे व्याकरोत्सत्यानृते प्रजापतिः। अश्रद्धामनृतेऽदधाच्छ्रद्धाꣳ सत्ये प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥७७॥

वेदेन रूपे व्यपिबत्सुतासुतौ प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥७८॥

दृष्ट्वा परिस्रुतो रसꣳ शुक्रेण शुक्रं व्यपिबत्पयः सोमम्प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ७९ ॥

महाबृहती। प्रजापतिः सुतासुतौ सुतासुतयोः रूपे वेदेन ज्ञानेन त्रय्या विद्यया वा व्यपिबत् विविच्य पीतवान् सुतः सोमः असुतः पयः परिस्रुच्च। ऋतेनेत्युक्तम् ॥ ७८ ॥

अतिजगती। प्रजापतिः परिस्रुतः सुरायाः रसं दृष्ट्वा शुक्रेण शुद्धेन मन्त्रेण पयः सोमं च शुक्रं शुक्लं शुद्धं कृत्वा व्यपिबत् वियुज्य पीतवान्। ऋतेनेत्युक्तार्थम् ॥ ७९ ॥

इमः आदित्यः अन्नः सकाशात् छन्दसा वेदेन वेदरूपैः किरणैर्यथा सोमं व्यपिबत्पिबति सोमोदकाभ्यां रविः सोममेव पिबति। ऋतेनेत्युक्तम्। कीदृशो रविः शुचिषत् शुचि निर्मले गगने सीदतीति शुचिषत् ॥ ७४ ॥

अतिजगती द्वापञ्चाशदक्षरा। प्रजापतिः प्रथमशरीरी परिस्नुतोऽन्नात् सुरारूपादन्नात् रसं ब्रह्मणा गायत्रीलक्षणेन व्यपिबत् विविच्य पीतवान् क्षत्रञ्च व्यपिबत् वशीचकार क्षत्रियस्य पानं वशीकरणम् पयः सोमञ्च व्यपिबत् अनेन सत्येनेदं सत्यम् ॥७५॥

अन्नात्परिस्नुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस

इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ७५ ॥

रेतो मूत्रं विजहाति योनिम्प्रविशदिन्द्रियम्। गर्भो जरायुणावृत उल्वञ्जहाति जन्मना। ऋतेन सत्यमिन्द्रियं

विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ७६ ॥

अतिशक्वर्यौ द्वे षष्ट्यक्षरातिशक्वरी। इन्द्रियं पुम्प्रजननं शिश्नं योनिं स्त्रीप्रजननं प्रविशत् सत् रेतो वीर्यं विजहाति त्यजति योनिप्रदेशादन्यत्र मूत्रं विजहाति समानद्वारयोरपि रेतोमूत्रयोर्मूत्रस्थानादन्यत्र रेतोऽवतिष्ठते। जरायुणा गर्भवेष्टनेनावृतः गर्भः जन्मना कृत्वा उल्वं जरायु जहाति। भिन्नस्थानानामेकद्वाराणामाद्यमुदाहरणम् एकस्थानानामेकद्वाराणां द्वितीयम्। ऋतेनेति व्याख्यातम् ॥ ७६ ॥

का० सोमो राजेत्यनुवाकेन गृहानुपतिष्ठते युगपत्[1]। अष्टर्चेनानुवाकेन समानकालमेव पयोगृहान् सुराग्रहांश्चाध्वर्युरुपतिष्ठते यद्वा चतुर्भिः पयोगृहांश्चतुर्भिः सुरागृहान् गृहणानन्तरमेवोपस्थानम् मन्त्रपाठक्रमादत्रालेखीत्यर्थः। अश्विसरस्वतीन्द्रदृष्टा अष्टौ ऋचः आद्यास्तिस्रो महाबृहत्यः यस्याश्चत्वारःपादा अष्टकाः पञ्चमो द्वादशकः सा महाबृहती। सोमो राजा सुतोऽभिषुतः सन् अमृतममृतरूपो रसरूपो भवति स्थूलस्य सूक्ष्मतापादनममृतीभावः। यत ऋजीषेण ऋजीषं नीरसं सोमलताचूर्णम् तद्रूपेण मृत्युं स्थूलभावमजहात् जहाति। ऋतेन अनेन सत्येन एतत्सत्यम् ज्ञातम् यत् अन्धसोऽन्नस्य सोमस्य विपानं विविच्य पानं शुक्रं शुक्लं शुद्धमत एव इन्द्रियं वीर्यप्रदं भूयात् पयश्चेन्द्रस्येदृशं भवतु कीदृशम् इन्द्रियं वीर्यवत् अमृतमजरामरत्वप्रदं मधु मधुरञ्च। अपां

अद्भ्यः क्षीरं व्यपिबत्क्रुङ्ङाङ्गिरसो धिया। ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥७३॥

सोममद्भ्यो व्यपिबच्छन्दसा हꣳसः शुचिषत्। ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु॥७४॥

फेनेनेत्यस्य मन्त्रस्यास्याष्टर्चानुवाकस्य च श्रुत्या सम्बन्ध उक्तः। तस्य शीर्ष्णि छिन्ने लोहितमिश्रः सोमोऽतिष्ठत् तस्मादबीभत्सन्त तएतदन्धसो विपानमपश्यन्त्सोमो राजामृतꣳ सुत इति तेनैनꣳ स्वदयित्वात्मन्नदधतेति[2]। यथा एककारणानि वस्तूनि विविच्यमानानि दृश्यन्ते तथा च पृथग्भूतानि सम्सृष्टानि पुनर्विविच्यन्ते एवमयमपि लोहितमिश्रः सोमो विविक्तः सोम एवेति सर्वानुवाकार्थः ॥७२॥

आङ्गिरसः अङ्गानां रसः प्राणो यथा क्रुङ् हंसो भूत्वा धिया प्रज्ञया अद्भ्यः सकाशात्क्षीरं दुग्धमपिबत्पिबति संसृष्टाभ्यां क्षीरोदकाभ्यां क्षीरमेव हंसः पिबतीति जातिस्वभावः। अनेन सत्येनेदं सत्यं यदन्धसो विपानं शुक्रं भवतु अथेन्द्रस्य पयो वीर्यममृतं भवतु ॥ ७३ ॥

1 — १८,२,२४। 2 — १२,७,२,४।

पुराणाः ऋतं यज्ञमाशुषाणाः अश्नुवाना व्याप्नुवन्तः। एवम्भूताः पितरः यथा देवयानं पन्थानं प्राप्ताः तथा वयमपि अरुणीः अरुणवर्णाः सूर्यदीधितिमपव्रन् अपवृणुमः सूर्यरश्मीनपहृत्य देवयानमार्गं प्राप्नुम इत्यर्थः वृञ् वरणे विकरणव्यत्ययेन शपि लुप्ते लङि रूपम् अडभावः पुरुषव्यत्ययश्छान्दसः। कीदृशा वयमुक्थशासः यज्ञेषु उक्थानि शस्त्राणि शंसन्ति वदन्ति ते उक्थशसः क्विप् संहितायां दीर्घः। तथा क्षामा क्षामां भूमिं भिन्दन्तः वेदिचात्वालयूपावटोपरवादिखननैर्विदारयन्तः सर्वोपकरणैर्यज्ञं कुर्वन्त इत्यर्थः ॥ ६९ ॥

उशन्तस्त्वा नि धीमह्युशन्तः समि धीमहि। उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥ ७० ॥

अपां फेनेन नमुचेः शिर इन्द्रोदवर्त्तयः। विश्वा यदजयः स्पृधः ॥ ७१ ॥

सोमो राजामृतꣳ सुत ऋजीषेणाजहान्मृत्युम्। ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७२ ॥

अनुष्टुप्। हे अग्ने उशन्तः कामयमाना वयं तं त्वा निधीमहि स्थापयामः। कामयमाना एव वयं त्वां समिधीमहि सन्दीपयामः। त्वं च उशन् कामयमानः सन् उशतः कामयमानान् पितॄनावह आनय किं कर्तुं हविषे अत्तवे हविः अत्तुं भक्षयितुम् तुमर्थे तवेप्रत्ययः विभक्तिव्यत्ययः ॥ ७० ॥

ऐन्द्री गायत्री आग्रिमानुवाक्यानिदानभूता। हे इन्द्र यत् यदा त्वं विश्वाः स्पृधः सर्वान् सङ्ग्रामानजयो जितवानसि तदा अपां फेनेन जलडिण्डीरेण नमुचेरसुरस्य शिरः उदवर्तयः छिन्नवानसि उत्पूर्वो वृतिः छेदार्थः ॥ ७१ ॥

सङ्ख्यापरिमाणइत्यादिना सूत्रेण यत्तदेतेभ्यः परिमाणे वतुप् इति सूत्रेण यत्तद्भ्यामपि डतिरिति वार्त्तिकेन यत्शब्दात् डति प्रत्ययः डति चेति तस्य षट्सञ्ज्ञत्वात् षड्भ्यो लुगिति जसो लुक्। यद्वा यतीन् शुचीन् नित्यनैमित्तिकानुष्ठानैर्निष्पापान् ते तान् त्वं वेत्थ यति विभक्तिलोपः ते इत्यत्र व्यत्ययेन जस्। किञ्च स्वधाभिः पितृणामन्नैः सुकृतं शोभनं कृतं यज्ञं त्वं जुषस्व सेवस्व ॥ ६७ ॥

ये पितरः पूर्वासः पूर्वं ईयुः स्वर्गं जग्मुः ये च उपरासः उपराः उपरमन्ते विरमन्ति ते उपरा उपरतव्यापाराः कृतकृत्याः सन्त ईयुः परं ब्रह्म प्रापुः। ये च पार्थिवे रजसि पृथिव्यां भवं पार्थिवं रजो ज्योतिरग्निः तस्मिन्ना निषत्ताः आभिमुख्ये निषण्णाः

येचेहपितरोयेचनेहयाँश्चविद्मयाँ२॥उचनप्रविद्म। त्वंवेत्थयतितेजातवेदः स्वधाभिर्य्यज्ञꣳसुकृतञ्जुषस्व ॥ ६७ ॥

इदम्पितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः। येपार्थिवेरजस्यानिषत्तायेवानूनꣳसुवृजनासुविक्षु ॥ ६८ ॥

अधायथानःपितरःपरासःप्रत्नासोअग्नऋतमाशुषाणाः। शुचीदयन्दीधितिमुक्थशासःक्षामाभिन्दन्तोअरुणीरपव्रन् ॥ ६९ ॥

नसत्तनिषत्तेत्यादिना निष्ठायां निपातः। ये वा वा समुच्चयार्थः ये च नूनं निश्चितं विक्षु प्रजासु यजमानलक्षणासु निषण्णाः। कीदृशीषु विक्षु सुवृजनासु शोभनं वृजनं बलं यासां ताः सुवृजनास्तासु धर्मरूपबलयुक्तासु। अद्यास्मिन्दिने तेभ्यश्चतुर्विधेभ्यः स्वर्गब्रह्माग्नियजमानस्थेभ्यः इदं नमोऽन्नमस्तु ॥ ६८ ॥

हे अग्ने नोऽस्माकं पितरः अध अथानन्तरं देहयात्रोत्तरकालं यथा येन प्रकारेण शुचि सुपो लोपः इदेवार्थे शुचिं निर्मलं दीधितिं रश्मिमण्डलमेव अयन् प्राप्ताः अय गतौ लङ् अडभाव आर्षः। कीदृशाः पितरः परासः परा उत्कृष्टाः प्रत्नासः प्रत्नाः

श्रोतुं योग्यम्। श्रुदक्षिस्पृहिगृहिदयिभ्य आय्य इति शृणोतेराय्यप्रत्ययः। तथा युजं युज्यत इति युक् तम्। क्विप् चेति क्विप्प्रत्ययः योग्यम् ॥ ६४ ॥

यः कव्यवाहनोऽग्निः पितॄन्यक्षदिष्टवान्। लेटोऽडाटौ सिब्बहुलं लेटि इतो लोपः। कीदृशान् पितॄन् ऋतावृधः ऋतं सत्यं यज्ञं वा वर्धयन्ति ते ऋतवृधः संहितायां दीर्घः तान्। सोऽग्निरिदानीं देवेभ्यः पितृभ्यश्च हव्यानि हवींषि प्रवोचति प्रब्रवीतु इमानि देवेभ्य इमानि पितृभ्य इति वदत्वित्यर्थः। इत् उ निपातौ पादपूरणौ। आकारः समुच्चयार्थः। व्यत्ययेन वचेः अपि वच उमिति छान्दस उमागमः ॥ ६५ ॥

योऽअ॒ग्निः᳖क॑व्य॒वाह॑नः पि॒तॄन्यक्ष॑दृता॒वृधः॑। प्रेदु॑ ह॒व्यानि॑ वोचति दे॒वेभ्य॑श्च पि॒तृभ्य॒ऽआ ॥ ६५ ॥

त्वम॑ग्नऽईडि॒तः क॑व्यवाहना॒वाड्ढ॒व्यानि॑ सुर॒भीणि॑ कृ॒त्वी। प्रादाः᳖पि॒तृभ्यः॑ स्व॒धया॒ ते अ॑क्षन्न॒द्धि त्वं दे॑व प्र॒यता॑ ह॒वीᳬषि॑ ॥ ६६ ॥

चतस्रस्त्रिष्टुभः। हे कव्यवाहन हे अग्ने त्वं हव्यानि हवींषि सुरभीणि कृत्वी सुगन्धानि कृत्वा अवाट् वहसि स्म। वहेर्लुङि इडागमाभावे सिचो लोपे रूपमवाट्। स्नात्व्यादयश्चेति कृत्वीति निपातः। कीदृशस्त्वम् ईडितः स्तुतः देवैर्ऋत्विग्भिश्च। किञ्च हव्यानि ऊढ्वा स्वधया पितृमन्त्रेण पितृभ्यः त्वं प्रादाः दत्तवानसि ददातेर्लुङि रूपम्। ते च पितरः अक्षन् भक्षयन्ति स्म घस्लृ अदने इत्यस्य रूपम्। हे देव त्वमपि अद्धि हवींषि भक्षय अद भक्षणे लोट् कीदृशानि हवींषि प्रयता प्रयतानि शुद्धानि ॥ ६६ ॥

ये पितर इह लोके वर्तन्ते ये च इह लोके न सन्ति यांश्च पितॄन्वयं विद्म जानीमः उ पादपूरणः यांश्च पितॄन् वयं न प्रविद्म प्रकर्षेण जानीमः। हे जातवेदः ते पितरो यति यावन्तो वर्तन्ते तान् त्वं वेत्थ जानासि। या सङ्ख्या येषान्ते यति किमः

कुरुतेत्यर्थः। किं कृत्वा जान्वाच्य वामजानु पातयित्वा तथा दक्षिणतो निषद्य दक्षिणाभिमुखा उपविश्य स हि तेषां स्वभावः अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन्निति श्रुतेः। किञ्च हे पितरः केन चित् केनाप्यपराधेन नोऽस्मान् मा हिंसिष्ट हिंसां मा कुरुत हिनस्तेर्लुङ्। यत् यस्मात् पुरुषस्य भावः पुरुषता विभक्तिलोपः पुरुषभावेन चलचित्तत्वेन वो युष्माकमागोऽपराधं वयं कराम कुर्मः करोतेः अपि लङि रूपम् अडभावः। यद्यप्यपराधिनो वयं तथापि मास्मान्वधिष्टेत्यर्थः ॥६२॥

हे पितरो दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय यूयं रयिं धनं धत्त दत्त। कीदृशा यूयम् अरुणीनामरुणवर्णाना-मूर्णानामुपस्थे उपरिभागे आसीनासः आसीनाः उपविष्टाः याभिः कुतपाः क्रियन्ते ता ऊर्णा अरुणा भवन्ति कुतपं वासने

आसीनासोअरुणीनामुपस्थेरयिन्धत्तदाशुषेमर्त्याय। पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छततइहोर्जन्दधात ॥६३॥

यमग्नेकव्यवाहनत्वञ्चिन्मन्यसेरयिम्। तन्नोगीर्भिःश्रवाय्यन्देवत्रापनयायुजम् ॥६४॥

दद्यादिति स्मृतेः कुतपप्रियाः पितरः। यद्वा अरुणीनामरुणवर्णानां रश्मीनामुपस्थे उत्सङ्गे आसीना आदित्यलोकस्था इत्यर्थः। किञ्च हे पितरः पुत्रेभ्यो यजमानेभ्यः तस्य वस्वः वसुनो धनस्य प्रयच्छत दत्त कर्मणि षष्ठी यदभीष्टं धनं तद्दत्त। पितॄणां पुत्रा एव यजमानाः। ते यूयमिहास्मदीये यज्ञे ऊर्जं रसं दधात स्थापयत ॥६३॥

द्वे अनुष्टुभौ। कव्यं पितृभ्यो देयमन्नं वहतीति कव्यवाहनः कव्यपुरीषपुरीष्येषु ञ्युडिति ञ्युट्प्रत्ययः। हे कव्यवाहन हे अग्ने त्वं चित् त्वमपि यं रयिं हविर्लक्षणं धनं मन्यसे उत्तमं जानासि नोऽस्माकं तं रयिं देवत्रा देवेषु पनय देहि पनतिर्दानकर्मा देवमनुष्यपुरुषेत्यादिना सप्तम्यर्थे देवात् त्राप्रत्ययः। कीदृशं रयिं गीर्भिः वाग्भिः पुरोऽनुवाक्यायाज्यावषट्कारलक्षणाभिः श्रवाय्यं

आभ्यस्तयोरात इति आलोपाभावः। शं योः शमनं च रोगाणां यावनं च भयानामिति[1] यास्कः। रपो रिप्रमिति पापनामनी भवतः[2]॥ ५५॥

१—निरु० ४,२१। २—निरु० ४,२१।

अहं पितॄन् आ अवित्सि आभिमुख्येन वेद्मि विदितवान् विदेर्लुङि आत्मनेपदे उत्तमैकवचनरूपम्। कीदृशान् पितॄन् सुविदत्रान् सुष्ठु विशेषेण ददतीति सुविदत्राः तान् कल्याणदानान्। किञ्च वेवेष्टि विष्णुः तस्य विष्णोः व्यापनशीलस्य यज्ञस्य। यज्ञो वै विष्णुरिति[1] श्रुतेः। तस्य नपातं विक्रमणं च वेद्मि नास्ति पातो यत्र स नपातो देवयानपथः यत्र गतानां पातो नास्ति विविधं क्रमणं गमनागमनं यत्र स विक्रमणः पितृयानपथः यत्र गतानां पुनर्भोगान्ते पतनम्। यज्ञसम्बन्धिनौ देवयानौ

आहं पितॄन्त्सुविदत्राँ२ऽअवित्सि नपातं च विक्रमणं च विष्णोः। बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्तऽइहागमिष्ठाः॥ ५६

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु। तऽआगमन्तु तऽइह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान्॥ ५७॥

पितृयानौ पन्थानौ वेद्मीत्यर्थः उत्क्रामिनः पितॄंश्च। अतो ब्रवीमि ये बर्हिषदः पितरः स्वधया सवनीयलक्षणेनान्नेन सह सुतस्याभिषुतस्य सोमस्य पित्वः पानं भजन्त भजन्ते सेवन्ते लङ् अडभाव आर्षः ते इह यज्ञे आगमिष्ठाः आगच्छन्तु लोडर्थे लुङ् पुरुषवचनव्यत्ययः॥ ५६॥

१—१,१,२,१।

हे पितर इह यज्ञे आगमन्तु आगच्छन्तु व्यत्ययेन शपो लुक् ते श्रुवन्तु अस्मद्वचः शृण्वन्तु श्रुत्वा च अधिब्रुवन्तु पितृभिः पुत्राणां यद्वक्तव्यं तद्वदन्तु ते अस्मानवन्तु पालयन्तु। कीदृशाः पितरः प्रियेषु अभिरुचितेषु हविःषु उपहूताः सोम्यासः सोम्याः कीदृशेषु प्रियेषु बर्हिष्येषु बर्हिषि भवानि बर्हिष्याणि तेषु बर्हिषि सादितेषु तथा निधिषु निधिभूतेषु निधिवत्स्थापनीयेषु॥ ५७॥

उपलक्षणं वाताद्युपद्रवरहितः किञ्च वीरेभिर्वीरैः पुत्रैश्च सहितः सन्नोऽस्माकं मघवा धनवान् भव मघं धनमस्यास्तीति मघवा यो यस्य दाता स तदीयधनवानिति लोकप्रसिद्धिः । भवेत्यस्य संहितायां दीर्घः परिधीन् पर्येत्यत्र दीर्घादटि समानपाद इति नकारस्य रुः ॥ १३ ॥

हे सोम त्वं द्यावापृथिवी आततन्थ विस्तारितवान् तनु विस्तारे लिट् बभूथाततन्थेत्यादिना निपातः । किंभूतस्त्वं पितृभिः संविदानः संवित्त इति संविदानः ऐकमत्यं कुर्वाणः समो गम्यृच्छीत्यादिना आत्मनेपदित्वाच्छानच् । हे इन्दो तस्मै ते तुभ्यं वयं हविषा

त्वयाहिनःपितरःसोमपूर्वेकर्माणिचक्रुःपवमानधीराः । वन्वन्नवातःपरिधीँ१॥रपोर्णुवीरेभिरश्वैर्मघवाभवानः ॥ ५३ ॥

त्वꣳसोमपितृभिःसंविदानोनुद्यावापृथिवीआततन्थ । तस्मैतइन्दोहविषाविधेमवयꣳस्यामपतयोरयीणाम् ॥ ५४ ॥

बर्हिषदःपितरऊत्यर्वागिमावोहव्याचकृमाजुषध्वम् । तआगतावसाशन्तमेनाथानःशंयोररपोदधात ॥ ५५ ॥

विधेम हविर्दद्मः विभक्तिव्यत्ययः विधतिर्दानार्थः हविर्दानेन च वयं रयीणां धनानां पतयः स्याम भवेम ॥ १४ ॥

सोमवतां पितॄणां षडृचः समाप्ताः अतो बर्हिषदां पितॄणां तृचः । बर्हिषदः बर्हिषि दर्भे सीदन्तीति बर्हिषदः पृषोदरादित्वात्सलोपः हे बर्हिषदः पितरः ते यूयमूत्या अवनेन निमित्तेन अर्वागागत आगच्छत किमर्थमिति चेत् वो युष्माकमिमा इमानि हव्या हव्यानि वयं चकृम करोतेर्लिट् कृतवन्तः तानि यूयं जुषध्वं सेवध्वम् । अथानन्तरं शन्तमेन सुखयितृतमेनावसा अवनेन तर्पिताः सन्तो नोऽस्माकं शं सुखं रोगशमनं योः भयपृथक्करणम् अरपः पापाभावं च दधात धत्त स्थापयत तप्तनबिति तबादेशात्

वसिष्ठाः वसिष्ठस्य गोत्रापत्यानि। यमः तेभिः तैः पितृभिः संरराणः प्रीयमाणः सन् प्रतिकामं हवींषि अत्तु भक्षयतु रा दाने शानच् प्रत्ययः। कीदृशो यमः उशन् वष्टि कामयते इत्युशन् कामयमानः। कीदृशैः तैः उशद्भिः उशन्ति वे उशन्तः तैः कामयमानैः वश कान्तौ शतृप्रत्ययः ॥ ५१ ॥

त्वं मनीषा मनीषया स्वप्रज्ञया रजिष्ठमृजुतमं देवयानं पन्थां पन्थानमनु नेषि अनुनयसि प्रापयसि। मनीषा तृतीयैकवचने पूर्वसवर्णदीर्घः। अत्यन्तमृजुः रजिष्ठः अतिशायने तमबिष्ठनौ विभाषर्जोश्छन्दसीति ऋकारस्य र इष्ठादिषु। पन्थाम् पथस्त्रया-दीनि छन्दसीति सर्वनामस्थानेऽपि पदसञ्ज्ञायां नलोपः प्रातिपदिकान्तस्येति नलोपे सवर्णदीर्घे पन्थामिति रूपम्। अनुनेषि

येनःपूर्वेपितरःसोम्यासोनूहिरेसोमपीथंवसिष्ठाः। तेभिर्यमःसंरराणोहवींष्युशन्नुशद्भिःप्रतिकाममत्तु ॥ ५१ ॥

त्वंसोमप्रचिकितोमनीषात्वंरजिष्ठमनुनेषिपन्थाम्। तवप्रणीतीपितरोनइन्दोदेवेषुरत्नमभजन्तधीराः ॥ ५२ ॥

नयतेः अपि लुप्ते गुणे लटि रूपम्। कीदृशस्त्वम् प्रचिकितः कित ज्ञाने प्रकर्षेण चिकितः चेतनावान् विशिष्टचैतन्ययुतः। किञ्च हे इन्दो सोम नोऽस्माकं पितरः तव प्रणीती प्रणीत्या प्रणयनेनाध्यनुज्ञानेन देवेषु विषये रत्नं रमणीयं यज्ञफलमभजन्त सिषेविरे सोमयागेनैव स्वर्गार्थिः। कीदृशाः पितरः धीराः धीमन्तः यज्ञज्ञानवन्तः ॥ ५२ ॥

हे सोम हे पवमान शोधक नोऽस्माकं धीरा धीमन्तः पूर्वे पूर्वजाः पितरः हि यस्मात्कारणात् त्वया सह कर्माणि यज्ञादीनि चक्रुः अतः प्रार्थये त्वं परिधीनुपद्रवकारिणः अपोर्णुहि अपगमय ऊर्णुञ् आच्छादने लोट्। परिदधति सर्वत उपद्रवाय तिष्ठन्ति ते परिधयो यज्ञोपद्रावकाः। कीदृशस्त्वं वन्वन् वनुतरपि वन्वन् अस्मत्कर्माणि सम्भजमानः। तथावान्: बाधि वातो यथा वात

'का॰ सोमवतां बर्हिषदांमग्निष्वात्तानाञ्च'। उदीरतामित्यादित्रयोदशर्चोऽनुवाकः तत्र उदीरताम् अङ्गिरसः ये नः इति ऋक्त्रय-स्याग्निष्वात्तानित्यन्वयायाश्च विनियोगः कल्पकृतोक्तः त्वं सोमेति तृचं सोमवताम् बर्हिषद इति तृचं बर्हिषदाम् आयन्तु न इति तचमग्निष्वात्तानाम् पुनन्तु मेति नवऽर्चं वाचनामन्तरं त्वं सोमेत्यादि नवर्चं [illegible] यातीत्यन्तं नवर्चं प्रत्यृचमध्वर्युर्यजमानेन वाचयतीत्यर्थः ॥ त्रयोदश शङ्खदृष्टाः पितृदेवत्याः एकादशी अग्निष्वात्ताः पितरः [illegible] अन्या द्वादश त्रिष्टुभः। अवरे अस्मिन् लोकेऽवस्थिताः पितरः उदीरताम् ऊर्ध्वं क्रमन्ताम् ऊर्ध्वलोकं गच्छन्तु ईर [illegible] अदादिः लोट्। परासः पराः परस्मिन् लोके स्थिताः पितर उदीरतां तस्मादपि स्थानात् परं स्थानं गच्छन्तु। उन्मध्यमाः [illegible] मध्यमाः मध्यमाः पितरः उदीरताम्। कीदृशाः पितरः सोम्यासः सोमं सम्पादयन्ति ते सोम्याः। ये च असुं प्राणमीयुः [illegible]नो वातरूपं प्राप्तास्ते पितरो हवेषु आह्वानेषु

**अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः। तेषां वयं सु[illegible]ज्ञियानामपि भद्रे सौमनसे स्याम ॥ ५० ॥**

नोऽस्मानवन्तु रक्षन्तु। कीदृशाः अवृकाः नास्ति वृकः शत्रुर्येषान्ते उदासीनाः कृतघ्ना [illegible]वा स्वाध्यायनिष्ठा वा ॥ ४९ ॥

ये नोऽस्माकं पितरः तेषां सुमतौ शोभनबुद्धौ वयं स्याम भवेम अस्तेर्लिङ् तेऽस्मासु सुमतिं कुर्वन्त्वित्यर्थः तेषां भद्रे कल्याणकारिणि सौमनसे शोभनमनस्त्वेऽपि वयं स्याम सुमनसो भावः सौमनसम् अस्मासु कल्याणं मनः कुर्वन्त्वित्यर्थः। कीदृशानां तेषां यज्ञियानां यज्ञे हिता यज्ञिया यज्ञसम्पादिनः। कीदृशाः पितरः अङ्गिरसः अङ्गिरसो बह्वन्यपत्यानि अङ्गिरसः बहुत्वे तद्धितलोपः। नवा नूतना ग्वा गतिर्येषां ते नवग्वा नवनीया स्तोतव्या येषामिति वा। अथर्वाणः अथर्वणो मुनेर्बह्न्यपत्यानि। भृगवः भृगोरपत्यानि। सोम्यासः सोममर्हन्ति ये इति यः सोमसम्पादिनः ॥ ५० ॥

१-१९,३,२१।

नोऽस्माकं ये पूर्वे पितरः सोमपीथं सोमपानमनूहिरे अनुवहन्ति स्म देवान् प्रापितवन्तः कीदृशाः सोम्यासः सोमसम्पादिनः।

का० ग्रैवं यजमानो भक्षयतीदᳪ हविरिति[१]। उक्ताद्धितं ग्रैवं पयो यजमानो भक्षयतीत्यर्थः। यजमानाशीर्देवत्या चावसाना षष्ठिः एको व्यूहः। इदं पयोरूपं हविर्मे मम स्वस्तये अविनाशायास्तु। कीदृशं हविः प्रजननं प्रजनयतीति प्रजननं प्रजोत्पादकम्। दशवीरं दश वीराः प्राणा यत्र तत्, यत्र पीते दशानां प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयसञ्ज्ञानां प्राणानां स्वास्थ्यं भवतीत्यर्थः। प्राणा वै दश वीराः प्राणानेवात्मन्धत्त इति[११] श्रुतेः। तथा सर्वगणं सर्वे गणा अङ्गानि यस्मिंस्तत् यत्र पीतेऽङ्गानि स्वस्थानि स्युरित्यर्थः। अङ्गानि वै सर्वे गणा अङ्गान्येवात्मन्धत्त इति[१०] श्रुतेः। आत्मसनि आत्मानं सनोति सनति ददाति

इदᳪ हविः प्रजननम्मे अस्तु दशवीरᳪ सर्वगणᳪ स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि।

अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो अस्मासु धत्त ॥ ४८ ॥

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः। असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ ४९ ॥

सम्भजते वा षणु दाने तुदादिः षन सम्भक्तौ भ्वादिः। एवमग्रेऽपि। प्रजासनि पशुसनि। आत्मानमेव सनोति पशून् सनोतीत्यादि श्रुतेः[११]। लोकसनि लोकमैहिकं सनोति ऐहिकं सुखं ददातीत्यर्थः। लोकाय वै यजते तमेव जयतीति[२२] श्रुतेः। अभयसनि अभयं स्वर्गं सनोति। स्वर्गो वै लोकोऽभयं स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठतीति[२२] श्रुतेः। एवं हविः प्रार्थ्याग्निं प्रार्थयते अग्निर्मे मम प्रजां बहुलां प्रवृद्धां करोतु। एवमग्निमुक्त्वा ऋत्विज आह हे ऋत्विजः अस्मासु अन्नं ग्रैवादि पयो दुग्धं रेतो वीर्यवत्तां यूयं धत्त स्थापयत। तद्यदेवममेते याजयन्ति तानेतदाहैतन्मयि सर्वं धत्तेति[२९] श्रुतेः ॥ ४८ ॥ १—१८,१,२१।

शामात्। सोट्याः पितरः समानाः जातिरूपादिभिस्तुल्याः समनसः समानं मनो येषान्ते तुल्यमनस्काः समानस्य छन्दसीति समानस्य सादेशः। तेषां पितॄणां लोकः विभक्तिव्यत्ययः लोके स्वधा नमः स्वधाशब्दोपलक्षितं नमोऽन्नमस्तु यद्वा नमस्कारश्चास्तु। यज्ञस्तु देवेषु कल्पतां देवांस्तर्पयितुं समर्थो भवत्वित्यर्थः॥ ४५ ॥ १—१९,३,२४। २—१९,३,२२। ३—११,८,१,२१।

का० उत्तरे यज्ञोपवीत्युत्तरया[१]। उत्तरे उत्तरवेद्याहवनीये कृतसव्यो यजमान उत्तरयाग्निमया ऋचाज्यं जुहोतीत्यर्थः॥ यजमानाशीः स्त्रोदेवत्या। जीवन्तीति जीवास्तेषु जीवेषु प्राणिषु मध्ये ये समानाः समनसः समनस्काः मामका मदीया जीवाः प्राणिनः। सपिण्डाः ये मे ते मामकाः तवकममकावेकवचनइति अस्मदो ममकादेशः। अस्मिन् लोके भूलोके शतं समाः शतवर्षपर्यन्तं तेषां मामकानां

येसमानाःसमनसोजीवाजीवेषुमामकाः। तेषाᳪश्रीर्मयिकल्पतामस्मिँल्लोकेशतᳪसमाः ॥ ४६ ॥

द्वेसृतीऽअशृणवम्पितॄणामहन्देवानामुतमर्त्यानाम्। ताभ्यामिदंविश्वमेजत्समेतियदन्तरापितरम्मातरञ्च ॥ ४७ ॥

जीवानां श्रीर्मयि कल्पतां तांस्त्यक्त्वा मयि क्लृप्ता भवतु मामाश्रयतामित्यर्थः गोत्रिणो हि पापात्मानः सहजाः शत्रवोऽत एवं प्रार्थ्यते॥४६॥

का० अन्वारब्धेषु पयो जुहोति द्वे सृतीइति[१]। ऋत्विग्यजमानेषु कृतान्वारम्भेषु अध्वर्युः पयो जुहोतीत्यर्थः। देवयानपितृयानमार्गदेवत्या त्रिष्टुप्। मर्त्यानां मरणधर्मिणां प्राणिनां द्वे सृती द्वौ मार्गौ अहमशृणवं श्रुतवानस्मि श्रुतितः। स एष देवयानो वा पितयानो वा पन्था इति श्रुतेः। के द्वे सृती अत आह देवानां मार्ग एकः उतापि च पितॄणाम् देवमार्गः पितमार्गश्चेति। पितरं मातरम् द्यौः पिता पृथिवी माता। असौ वै पितेयं मातेति[२] श्रुतेः। पितरं मातरञ्च अन्तरा भूलोकद्युलोकयोर्मध्ये तत् एजत् कम्पमानं क्रियावत् विश्वं सर्वमिदं ताभ्यां सृतिभ्यां देवयानपितृयानाभ्यां समेति सङ्गच्छते ताभ्यां सृतिभ्यां सङ्गतमस्तु ॥ ४७ ॥

सवितृदेवत्या गायत्री। हे देव सवितरुभाभ्यां कृत्वा विश्वतः सर्वतो मां पुनीहि उभाभ्यां काभ्याम् पवित्रेण धजाविलोमनिर्मितेन सवेनाभ्यनुज्ञया च त्वदाज्ञया यज्ञसिद्धिरित्यर्थः॥ ४३॥

विश्वदेवदेवत्या त्रिष्टुप्। इयं प्रवल्हिका। यज्ञातामिधेया। ततः काञ्चिद्देवतामुद्दिश्य व्याख्यास्यामः दक्षिणाग्नेरुपरि शताबृषा कुम्भी चरति ताम् सौत्रामणीं वा वाचं वा उखां वा देवी द्योतमाना सुराकुम्भी आगता कीदृशी वैश्वदेवी विश्वेभ्यः सर्वेभ्यो हिता वैश्वदेवी विश्वेभ्यो देवेभ्य आगता वा पुनती पावनं कुर्वती। यस्यां कुम्भ्यामिमाः प्रत्यक्षतो दृश्यमानाः बह्वी बहुसङ्ख्याकाः तन्वः शरीर-

उभाभ्यान्देवसवितःपवित्रेणसवेनच। माम्पुनीहिविश्वतः॥ ४३॥

वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवी[illegible]। तयामदन्तःसधमादेषुवयꣳस्यामपतयोरयीणाम्॥४४॥

येसमानाःसमनसःपितरोयमराज्ये। तेषांल्लोकः[illegible]योयज्ञोदेवेषुकल्पताम्॥ ४५॥

प्राया धाराः वर्तन्ते कीदृश्यस्तन्वः वीतपृष्ठाः वीतमिष्टं पृष्ठं स्वरूपं यासान्ताः [illegible]मितशरीराः सुरैः काम्यन्ते। तया कुम्भ्या सधमादेषु यज्ञस्थानेषु मदन्तो मोदमानाः सन्तो वयं रयीणां धनानां पतयः स्याम भवेम [illegible] माद्यन्ति देवा येषु ते सधमादाः सध मादस्थयोश्छन्दसीति सहस्य सधादेशः॥ ४४॥

१——१९,२,२२।

का० ये समाना इति यजमानो जुहोति[1]। सकृद्गृहीतमाज्यं दक्षिणे[illegible] [illegible]चावीती दक्षिणामुखो यजमानो जुह्वा जुहोतीत्यर्थः॥ हे अनुष्टुभौ। आद्या पितृदेवत्या। यमराज्ये यमस्य राज्यं यस्मिन् तत्र यमलोके ये पितरो वर्तन्ते धर्मराजः पितृपतिरिति अभि-

अनुष्टुप् देवजनधीविश्वभूतवेदोदेवत्या। देवानां जना देवजनाः देवानुगामिनो जना मां पुनन्तु मनसा सह धियः बुद्धयः कर्माणि वा मां विश्वा विश्वानि सर्वाणि भूतानि मां पुनन्तु हे जातवेदः त्वमपि मां पुनीहि ॥ ३९ ॥

अग्निदेवत्या गायत्री। हे अग्ने हे देव शुक्रेण शुक्लेन शुद्धेन पवित्रेण मा मां पुनीहि। किम्भूतस्त्वम् दीद्यत अतिदीव्यतीति दीद्यत् दीप्यमानः दिवेर्यङ्लुगन्तं रूपम् किञ्च हे अग्ने क्रतून् अस्माकं यज्ञाननुलक्ष्य क्रत्वा क्रतुना कर्मणा त्वं पुनीहि यज्ञे मां पुनीहि यद्वा यज्ञान् पुनीहि सम्यक्कारयेत्यर्थः ॥ ४० ॥

पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत्। अग्नेक्रत्वाक्रतूँ२॥रनु ॥ ४० ॥

यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा। ब्रह्मतेनपुनातुमा ॥ ४१ ॥

पवमानःसोअद्यनःपवित्रेणविचर्षणिः। यःपोतासपुनातुमा ॥ ४२ ॥

आग्नेयी गायत्री तृतीयः पादो ब्रह्मदेवत्यः। हे अग्ने ते तव अर्चिषि ज्वालायामन्तरा मध्ये यत् ब्रह्म त्रयीरूपं परब्रह्मरूपं वा पवित्रं विततं विस्तृतं प्रसारितं तेन पवित्रेण मा मां भवान् पुनातु ॥ ४१ ॥

सोमदेवत्या गायत्री तृतीयः पादो वायुदेवत्यः। स पवमानः पवतेऽसौ पवमानः शोधकः सोमः अद्यास्मिन्दिने पवित्रेण नोऽस्मान् पुनातु कीदृशः सोमः विचर्षणिः विविधं चष्टे विचर्षणिः द्रष्टा कृताकृतज्ञः यद्वा विशिष्टाः चर्षणयो मनुष्याः ऋत्विजो यस्य सः। किञ्च यः पोता पुनाति पवते वा पोता वायुः स मा मां पुनातु ॥ ४२ ॥

न्नेहपरि स्रवन्त्यां सुरायां नवर्चं यजमानं वाचयेत् वालो गोऽश्ववालकृतं सुरागलनम् पवित्रमजाविलोमकृतं पयोगलनम् हिरण्यं शतमानमितम् प्रत्यृचं वाचनमिति सूत्रार्थः ।। द्वे पितृदेवत्ये ऽनुष्टुभौ । पितरो मा मां पुनन्तु शोधयन्तु केन पवित्रेण गोऽश्ववालकृतेन कीदृशेन] पवित्रेण शतायुषा शतं शतवर्षमितमायुर्यस्मात्तच्छतायुस्तेन येन पूतः शतायुर्भवतीत्यर्थः ।' पितामहाश्च मां पुनन्तु कीदृशाः पित्रादयः सोम्यासः सोम्याः सोमं सम्पादयन्ति सोम्याः । आदरार्थं पुनर्वचनम् पितामहाः प्रपितामहाश्च मां पुनन्तु

पुनन्तु मापितरः सोम्यासः पुनन्तु मापितामहाः पुनन्तु प्रपितामहाः पवित्रेणशतायुषा । पुनन्तु मापितामहाः

पुनन्तु प्रपितामहाः पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ ३७ ॥

अग्नआयूꣳषिपवसआसुवोर्जमिषञ्चनः । आरेबाधस्वदुच्छुनाम् ॥ ३८ ॥

पुनन्तु मादेवजनाः पुनन्तु मनसाधियः । पुनन्तु विश्वाभूतानिजातवेदः पुनीहिमा ॥ ३९ ॥

शतायुषा पवित्रेण । एवं पित्रादिभिः पूतोऽहं विश्वं सर्वमायुः व्यश्नवै व्याप्नवै प्राप्नुयाम् अशूङ् व्याप्तौ लोट् ॥३७ ॥

प्रजापतिदृष्टाग्निदेवत्या गायत्री । हे अग्ने त्वमायूꣳषि पवसे स्वत एवायुःप्रापकानि कर्माणि पावयसे चेष्टयसे अन्तर्भूतण्यन्तः । अत एव नोऽस्मदर्थमिषं व्रीह्यादिधान्यमूर्जं दध्यादि च आसुव ज्ञापय देहीत्यर्थः जीवनहेतुत्वात् । किञ्च आरे दूरेऽपि स्थितानां दुच्छुनाम् दुष्टाश्च ते श्वानश्च दुच्छानः तेषाम् कर्मणि षष्ठी दुष्टान् शुनः सारमेयप्रायान् दुर्जनान् बाधस्व नाशयसि दुर्जने जीवनाशक्तेः॥३८

का० अङ्गारेषु वा बहिष्परिधि दक्षिणतो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति प्रतिमन्त्रं सुराग्रहाणां भक्षणम् घ्राणम् अन्येन मूल्येन भूपालपानमिति[1]। पक्षपत्रमुक्तम् चतुर्थमाह दक्षाहवनीयस्याङ्गारेषु परिधेर्बहिर्दक्षिणदिक्स्थेषु होमशेषान् सुराग्रहान् पितृभ्य इति प्रतिमन्त्रं जुहोति तदेवाह उत्तरेऽङ्गारे आश्विनम् मध्यमे सारस्वतम् दक्षिणे ऐन्द्रं सुराग्रहं जुहोतीति सूत्रार्थः। अपसव्येन कर्म। सप्त यजूंषि पितृदेवत्यानि। पितृभ्यः स्वधासत्त्वकं नमोऽन्नमस्तु स्वधा वै पितृणामन्नमिति श्रुतेः यद्वा पितृभ्यः स्वधान्नमस्तु तेभ्यो नमो नमस्कारश्चास्तु कीदृशेभ्यः स्वधामन्नं प्रति यन्ति गच्छन्तीत्येवंशीलाः स्वधायिनस्तेभ्यः। इण् गताविति धातोः सुप्यजातौ णिनिस्ताच्छील्यइति णिनिप्रत्ययः पितृभ्य इति बहुवचनं पितृव्याद्यपेक्षं पूजार्थं वा। एवं पितामहेभ्यः

पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः।

अक्षन्पितरोऽमीमदन्तपितरोऽतीतृपन्तपितरः पितरः शुन्धध्वम्॥ ३६ ॥

प्रपितामहेभ्य इति मन्त्रौ व्याख्येयौ। का० अक्षन् पितर इति प्रक्षालनेनोपसिञ्चति[2]। सौरग्रहहोमपात्रक्षालनजलेन यथास्वमङ्गारान् सिञ्चति प्रतिमन्त्रम्॥ पितरः अक्षन् भक्षितवन्तः घस्लृ अदने लुङि रूपम्। पितरोऽमीमदन्त मद तृप्तौ तृप्ताः। अतीतृपन्त तर्पिता अस्माभिः पितरः यद्वास्मानतीतृपन्त तर्पयन्ति तृप्ताः सन्तोऽभीष्टदानेन। का० पितरः शुन्धध्वमिति जपति[3]। हे पितरः शुन्धध्वं शुद्धाः पाणिप्रक्षालनेन शुद्धा यूयं भवत॥ ३६ ॥ १—१९,३,१७। २—१९,३,१८। ३—१९,३,१९। ४—१९,३,२०।

का० कुम्भीमासज्य कुम्भवच्छतवितृण्णां वालपवित्रहिरण्यानन्तर्धाय नवर्चं वाचयति पुनन्तु मेति[4]। दक्षिणाहवनीयपार्श्वयोः स्तम्भद्वयोपरि दक्षिणाग्रं वंशं निधाय तत्रस्थे शिक्ये शतच्छिद्रां कुम्भीं निधाय कुम्भीतले वालादीनि निधाय तत्र सुराशेषं सिक्त्वा-

त्रय आहृत्याश्विनं पयोग्रहं क्रमेण द्विर्द्विर्भक्षयन्ति सकृन्मन्त्रः होत्रादयः सारस्वतं पयोग्रहमश्नन्ति यजमान ऐन्द्रं पयोग्रहमत्तीति सूत्रार्थः। नमुचिनेन्द्रस्य वीर्यं पीतम् तस्मिन् हते रुधिरमिश्रः सोमो जातस्तं देवाः पपुस्तदभिवादिन्येषा ऋक्। असुरस्यापत्यमासुरस्तस्मादसुरपुत्रान्नमुचेरधि सकाशाद्यं सोममाहरतामिति शेषः। अश्विनौ ह्येनं नमुचेरध्याहरतामिति(२) श्रुतेः। सरस्वती च यं सोममश्विभ्यामानीतमसुनोत् अभ्यषुणोत् किमर्थमिन्द्रियाय इन्द्रस्य वीर्याय भैषज्याय वा। तमश्व्याहृतं सरस्वतीसुतमिमं राजानमिह यज्ञेऽहं भक्षयामि। कीदृशं सोमं शुक्रं शुद्धं लोहितासंसृष्टमत एव मधुमन्तं रसवन्तमिन्दुमिन्दिं परमैश्वर्यं परमैश्वर्यप्रदम्॥ ३४॥

२—१२,७,१४।

यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय। इमन्तꣳ शुक्रम्मधुमन्तमिन्दुꣳ सोमꣳ राजानमिह भक्षयामि॥३४॥

यदत्र रिप्तꣳ रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः। अहन्तदस्य मनसा शिवेन सोमꣳ राजानमिह भक्षयामि॥ ३५।

का° यदत्रेति सौरान् भक्षयन्ति यथाभक्षितं प्राचीनावीतिनो दक्षिणतः। अध्वर्य्वादय आश्विनं होत्रादयः सारस्वतं यजमान ऐन्द्रं सुराग्रहं यदत्रेति मन्त्रेण विहाराद्दक्षिणे स्थिता प्राचीनावीतिनो भक्षयन्ति आघ्राणमन्येन मूल्येन भक्षणमित्यर्थः॥ रसोऽस्यास्मिन्निति रसी तस्य रसिनो रसवतः सुतस्याभिषुतस्य सोमस्य यत् सामान्ये नपुंसकत्वम् यो भागः अत्र सुरायां रिप्तं लिप्तं सोमसम्बन्धि यत्सुरायां लग्नं यच्च सुरालग्नं सोमांशं शचीभिः कर्मभिः शुद्धं कृत्वा इन्द्रः अपिबत्। सोमं राजानमिति द्वितीये षष्ठ्यर्थे अस्य विशेषणत्वात् अस्य सोमस्य राज्ञः तत् तं सुरानिर्गतं सोमं शिवेन शुद्धेन मनसा इह यज्ञेऽहं भक्षयामि सुरासकाशाच्छुद्धं कृत्वा भक्षयामि। तथाच श्रुतिः। अहं तदस्य मनसा शिवेनेत्यशिव इव वा एष भक्षो यत्सुरा ब्राह्मणस्य शिवमेवैनमेतत्कृत्वात्मन्धत्त इति(५)॥३५॥

यन्ति वा । किम्भूतं यज्ञम् बर्हिषदं बर्हिषि सीदन्तीति देवा यत्र स बर्हिषत्तम् । तथा सुरावन्तं सुरा विद्यते यत्र स सुरावान् तम् सुरावान्वाएष बर्हिषद्यज्ञो यत्सौत्रामणीति[१] श्रुतेः । सुवीरं शोभना वीरा यत्र शोभनर्त्विजम् । कीदृश्या महिषाः नमोभिरन्नै-र्नमस्कारैर्वा सह दिवि स्वर्गे वर्तमानासु देवतासु सोमं दधानाः धारयन्तः । तत्र यज्ञे इन्द्रं यजमानाः यजन्तः सन्तो वयं मदेम हृष्येम । किम्भूता वयं स्वर्काः शोभनोऽर्कोऽर्चनं मन्त्रा वा येषान्ते स्वर्काः यद्वा शोभनोऽर्कोऽन्नं येषान्ते स्वर्का इत्यर्को वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनमन्नाद्येन समर्धयन्तीति(२) श्रुतेः । अर्को देवो भवति यदेनमर्चन्ति अर्को मन्त्रो भवति यदेनेनार्चन्ति अर्कमन्नं भवत्यर्चन्ति भूतान्यर्को वृक्षो भवति संवृतः कटुकिम्नेति[२] यास्कः । महिषशब्दो यद्यपि महन्नामसु पठितस्तथाप्यत्र ऋत्विग्वाचकः महिषा नमोभिरित्यृत्विजो वै महिषा इति(२ श्रुतेः ॥ ३२ ॥ १ ——— १२,८,३,२ । २ —— निरु० ५,४ ।

सुरावन्तम्बर्हिषदᳯसुवीरं यज्ञᳯहिन्वन्तिमहिषानमोभिः । दधानाःसोमन्दिविदेवतासुमदेमेन्द्रंयजमानाःस्वर्काः ॥३२॥

यस्तेरसःसम्भृतओषधीषुसोमस्यशुष्मःसुरयासुतस्य । तेनजिन्वयजमानम्मदेनसरस्वतीमश्विनाविन्द्रमग्निम् ॥ ३३ ॥

का० पालाशैः सौरान्न मन्त्रयमाहुतिमानशर्दति श्रुतेर्यस्तइति[३] । प्रतिप्रस्थाता पालाशोलूखलैः सुराग्रहान्दक्षिणेऽग्नौ यजति मन्मयपात्रस्याहुतिं न व्याप्नोतीत्युक्तेरित्यर्थः । हे सुरे ओषधीषु वर्तमानो यस्ते तव रसः सम्भृत एकीकृतः अपाञ्च वाएष ओषधीनाञ्च रसो यत्सुरेति(४) श्रुतेः । सुरया सह सुतस्य सोमस्य च यः शुष्मः बलम् । मदयतीति मदस्तेन मदेन मदजनकेन तेन सुरारसेन सोमशुष्मेण च यजमानं सरस्वतीमश्विनौ इन्द्रमग्निं च जिन्व प्रीणीहि ॥ ३३ ॥ ३ ——— १९,३,९ । ४ —— १२,७,१०-१२ ।

का० अध्वर्युः प्रतिप्रस्थातारस्तोयमश्विनेत्याश्विनं भक्षयन्ति द्विर्द्विरावर्त्तᳯ होतब्रह्ममैत्रावरुणाः सारस्वतमाश्विनमतदैन्द्रं यजमानः[४] ।

इडाभिरिडामाप्नोति भक्षैर्भक्षानाप्नोति सूक्तवाकेन सूक्तवाकमाप्नोति आशीर्भिराशिष आप्नोति शम्युना होमविशेषेण शम्युमाप्नोति पत्नीसंयाजैः पत्नीसंयाजानाप्नोति समिष्टयजुषा समिष्टयजुराप्नोति संस्थया संस्थामाप्नोति इडादीनामुभयत्र सद्भावात् ॥ २९ ॥

इतोच्छिष्टभक्षश्चतूरात्रमग्निहोत्रं जुहोतीति व्रतेन दीक्षामाप्नोति दीक्षया दक्षिणामाप्नोति दक्षिणा विभक्तिलोपः दक्षिणया श्रद्धामाप्नोति श्रदिति[१] सत्यनाम श्रत् सत्यं धीयते यस्यां सा श्रद्धा आस्तिक्यबुद्धिः पुण्यवतां मनोविशेषः श्रद्धया सत्यं ज्ञानमनन्तं ब्रह्माप्यते प्राप्यते श्रद्धां विना ज्ञानाभावात् ॥ ३० ॥

इडाभिर्भक्षानाप्नोतिसूक्तवाकेनाशिषः । शंयुनापत्नीसंयाजान्त्समिष्टयजुषासंस्थाम् ॥ २९ ॥

व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् । दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ ३० ॥

एतावद्रूपंयज्ञस्ययद्देवैर्ब्रह्मणाकृतम् । तदेतत्सर्वमाप्नोतियज्ञेसौत्रामणीसुते ॥ ३१ ॥

यज्ञस्य सोमयज्ञस्य एतावत् एतत्परिमाणं रूपम् देवैर्ब्रह्मणा प्रजापतिना च यद्रूपं कृतं दृष्टम् । दर्शनकरणयोः को भेदः सुतप्रतिबुद्ध्यायो दर्शनं बुद्धिपूर्वं तु करणम् । सौत्रामणी सप्तम्येकवचनस्य पूर्वसवर्णदीर्घः सौत्रामणी सौत्रामण्यां यज्ञे सुते सुरा सोमेऽभिषुते सति तदेतत् सोमयागरूपं सर्वमाप्नोति ॥ ३१ ॥

१—निघ० ३,१०,२। २—१९,३,८।

का० सुरावन्तमिति जुहोति[२] । अध्वर्युस्त्रीनपि पयोग्रहान् सहैव जुहोतीत्यर्थः । एवं सौत्रामण्याः सोमसम्पत्तिमापाद्य प्रकृतमनुसरति । चतस्त्रस्तिष्टुभोऽश्विसरस्वतीन्द्रदेवत्याः । महिषा महान्तः ऋत्विजो यज्ञं सौत्रामणीसञ्ज्ञं छिन्दन्ति वर्धयन्ति प्राप०

ऋचामर्धानि अर्धऋचास्तैः अर्धर्चादयः पुंसि चेति पुंस्त्वम् ऋत्यक इति ऋकारस्य सन्ध्यभावः अवत्यैरर्द्धर्चैरुक्थानां शस्त्रविशेषाणां रूपमाप्यते प्राप्यते । पदैर्निविदो न्यूङ्खानाप्नोति । प्रणवैः ओङ्कारैः शस्त्राणां रूपमाप्यते । पयसा दुग्धेन सोम आप्यते । अर्धर्चादय उक्थादयो ध्येयाः ॥ २५ ॥

सवनसम्पत्तिमाह । अश्विभ्यां देवाभ्यां प्रातःसवनमाप्तं प्राप्तम् इन्द्रेण देवेन ऐन्द्रदैवत्यं माध्यन्दिनं सवनं प्राप्तम् सरस्वत्या देवतया कृत्वा वैश्वदेवं विश्वदेवदैवत्यं तृतीयं सवनं प्राप्तम् ॥ २६ ॥

अश्विभ्याम्प्रातःसवनमिन्द्रेणैन्द्रम्माध्यन्दिनम् । वैश्वदेवꣳसरस्वत्यातृतीयमाप्तꣳसवनम् ॥ २६ ॥

वायव्यैर्वायव्यान्याप्नोतिसतेनद्रोणकलशम् । कुम्भीभ्यामम्भृणौसुतेस्थालीभिःस्थालीराप्नोति ॥ २७ ॥

यजुर्भिराप्यन्तेग्रहाग्रहैःस्तोमाश्चविष्टुतीः । छन्दोभिरुक्थाशस्त्राणिसाम्नावभृथआप्यते ॥ २८ ॥

वायव्यानि सोमपात्राणि वायव्यैर्वायव्यानि पात्राणि आप्नोति । वैतसं पात्रं सतः तेन सतेन द्रोणकलशमाप्नोति । कुम्भी सुराधानी तद्द्वयमस्ति कुम्भीभ्यां शतच्छिद्राभ्यां सुराधानीभ्यामम्भृणौ पूतभृदाधवनीयौ सुते ऽभिषुते सोमे यौ स्तस्तावाप्नोति । स्थालीभिः कृत्वा स्थालीराप्नोति उभयत्र स्थालीसद्भावात् ॥ २७ ॥

यजुर्भिः यजूंषि आप्यन्ते गृहा गृहैराप्यन्ते स्तोमैः स्तोमा आप्यन्ते विष्टुतिभिर्विविधस्तुतिभिर्विष्टुतीर्विष्टुतय आप्यन्ते छन्दोभिरुक्थाशस्त्राणि उक्थानि शस्त्राणि चाप्यन्ते । साम्ना सामाप्यते । अवभृथेनावभृथ आप्यते ॥ २८ ॥

नन्वधस्तनमन्त्रे धानादीनां सोमरूपत्वमुक्तम् तेऽत्र कुत्र सन्तीति धानादिसोमहविषां सोमस्य च सम्पत्तिं सौत्रामणीद्रव्यैराह । कुवलं कोमलं बदरीफलं धानानां पूर्वोक्तानां रूपं ध्येयम् कुवलं बदरीफले मुक्ताफलोत्पलयोश्चेति कोशः । गोधूमाः परीवापस्य रूपम् बदरं सर्वं बदरीफलं सक्तूनां रूपम् उपवाकाः यवाः करम्भस्य रूपं ज्ञेयम् ॥ २२ ॥

यत् ये यवाः ते पयसो रूपम् कर्कन्धूनि स्थूलबदराणि दध्नो रूपम् वाजिनं सोमस्य रूपम् आमिक्षा पयस्या सौम्यस्य चरोः रूपं ज्ञेयम् ॥ २३ ॥

धानानाꣳरूपङ्कुवलम्परीवापस्यगोधूमाः । सक्तूनाꣳरूपम्बदरमुपवाकाःकरम्भस्य ॥ २२ ॥

पयसोरूपंयद्यवादध्नोरूपङ्कर्कन्धूनि । सोमस्यरूपंवाजिनꣳसौम्यस्यरूपमामिक्षा ॥ २३ ॥

आश्रावयेतिस्तोत्रियाःप्रत्याश्रावोअनुरूपः । यजेतिधाय्यारूपम्प्रगाथायेयजामहाः ॥ २४ ॥

अर्द्धऋचैरुक्थानाꣳरूपम्पदैराप्नोतिनिविदः । प्रणवैःशस्त्राणाꣳरूपम्पयसासोमआप्यते ॥ २५ ॥

यज्ञसम्पत्तिमाह आश्रावयेति शब्दः स्तोत्रियारूपो ज्ञेयः स्तोत्रे प्रथमस्तृचोऽनुवाकः स्तोत्रियाः । प्रत्याश्रावः अस्तु श्रौषडिति शब्दः अनुरूपः उत्तरस्तृचः तद्रूपः । यजेति शब्दो धाय्याया रूपम् निष्केवल्ये स्तोत्रियानुरूपयोरनन्तरं धाय्या शस्यते यजेति शब्दो ज्ञेयः । येयजामहाः ये यजामहइति शब्दः प्रगाथाः प्रगाथरूपत्वेन ध्येयाः ॥ २४ ॥

शालम्. विभाषा सेनासुरेत्यादिना क्लीबत्वम्. गार्हपत्यश्चेति वयमिन्द्राय यद्धविः क्रियते तेनाप्यते। सौत्रामण्यामिन्द्राय यद्धविस्तत्सौमिकसदःपत्नीशालगार्हपत्यरूपेण ध्येयमित्यर्थः ॥ १८ ॥

प्रैषेभिः प्रैषैः प्रैषानाप्नोति आप्रीभिः प्रयाजयाज्याभिर्यज्ञस्याप्रीराप्नोति। प्रयाजेभिरित्यादिवाक्यचतुष्टयस्योत्तरपदलोपश्छान्दसः प्रयाजेभिः प्रयाजैः प्रयाजानाप्नोति अनुयाजैरनुयाजानाप्नोति वषट्कारेभिर्वषट्कारैर्वषट्कारानाप्नोति आहुतिभिराहुतीराप्नोति। प्रैषादीनामुभयत्र सद्भावात् ॥ १९ ॥

प्रैषेभिःप्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य। प्रयाजेभिरनुयाजान्वषट्कारेभिराहुतीः ॥ १९ ॥

पशुभिःपशूनाप्नोतिपुरोडाशैर्हवीꣳष्या। छन्दोभिःसामिधेनीर्याज्याभिर्वषट्कारान् ॥ २० ॥

धानाःकरम्भःसक्तवःपरीवापःपयोदधि। सोमस्यरूपꣳहविषआमिक्षावाजिनम्मधु ॥ २१ ॥

पशुभिः कृत्वा पशूनाप्नोति पुरोडाशैः पुरोडाशानाप्नोति हविर्भिरन्यैर्हवींषि आप्नोति छन्दोभिश्छन्दांसि आप्नोति सामिधेनीभिः सामिधेनीराप्नोति याज्याभिर्याज्या आप्नोति वषट्कारैर्वषट्कारानाप्नोति। पश्वादीनामुभयत्र सद्भावात्। अत्राप्युत्तरार्धलोपः पूर्ववत् ॥ २० ॥

धानादयः सोमस्य रूपं ध्येयाः। धानाः भ्रष्टधान्यम्. करम्भः उदमन्थः सक्तवः प्रसिद्धाः। परीवापः हविष्पङ्क्तिः परिवापो जलस्थाने पर्युप्त्युपरिवारयोरिति कोशः। पयोदधनी प्रसिद्धे। एतानि सोमरूपम्। आमिक्षा पयस्या मधु मधुरं वाजिनं च हविषो रूपम्। उष्णे दुग्धे दधि क्षिप्ते घनभाग आमिक्षा शिष्टं वाजिनम् ॥ २१ ॥

तत्क्रीतस्य सोमस्य रूपं ज्ञातव्यम्। एकस्याः पयसापाकृतेनाश्विनेन परिषिञ्चति सारस्वतेन द्वयोः प्रातः ऐन्द्रेणोत्तमे तिसृणामिति[1] कात्यायनेन निर्दिष्टत्वादश्विभ्यां सरस्वत्या च दुग्धमिति निर्देशः ॥ १५ ॥

राज्ञः सोमस्यासन्दी राजासन्दी तस्यै चतुर्थी षष्ठ्यर्थे आसन्दी यजमानाभिषेकायासन्दी मञ्चिका राजासन्द्याः सोमासन्द्या रूपम् तत्त्वेन ध्येया। सुराधानी सुरा धीयते स्थाप्यते यस्यां सा सुराधानी कुम्भी वेद्यै वेद्याः सौमिक्या वेदेः रूपम्। अन्तरः वेदिद्वयमध्यभाग उत्तरवेद्या रूपम्। कारोतरः सुरापावनचालनी इन्द्रस्य यजमानस्य च भिषक् ज्ञेयः ॥ १६ ॥

आसन्दीरूपꣳराजासन्द्यैवेद्यैकुम्भीसुराधानी। अन्तरउत्तरवेद्यारूपङ्कारोतरोभिषक्॥ १६ ॥

वेद्यावेदिःसमाप्यतेबर्हिषाबर्हिरिन्द्रियम्। यूपेनयूपआप्यतेप्रणीतोअग्निरग्निना॥ १७ ॥

हविर्द्धानंयदश्विनाग्नीध्रंयत्सरस्वती। इन्द्रायैन्द्रꣳसदस्कृतम्पत्नीशालङ्गार्हपत्यः॥ १८ ॥

वेद्यात्र वर्तमानया वेदिः सौमिकी समाप्यते सम्यक् प्राप्यते तद्रूपा ध्येयेत्यर्थः। बर्हिषात्रत्येन बर्हिः सौमिकं समाप्यते। इन्द्रियं वीर्यं चेन्द्रियेणेति शेषः समाप्यते सामर्थ्यं फलदाने उभयोरप्यस्तीत्यर्थः। यूपेनात्रत्येन यूप आप्यते। अग्निनात्रत्येन प्रणीतोऽग्निः सौमिक आप्यते प्राप्यते ॥ १७ ॥

[1] —— १९,१,२३;२५;२७।

अत्र सौत्रामण्यां यत् अश्विना अश्विनौ देवते वर्तेते तेनाश्विसद्भावेन हविर्धानं सौमिकमाप्यत इत्यनुषङ्गः। अत्र यत्सरस्वती देवतास्ति तेन सरस्वतीसद्भावेन आग्नीध्रं सौमिकमाप्यते। सोमे ऐन्द्रमिन्द्रदेवत्यं सदः कृतमस्ति। ऐन्द्रं सदः पत्न्याः शाला पत्नी-

इदानीं सौत्रामण्याः सोमसम्पत्तिं निरूपयति। शष्पाणि नवप्ररूढव्रीहिरूपाणि पूर्वोक्तानि दीक्षायै षष्ठ्यर्थे चतुर्थी दीक्षाया दीक्षणीयेष्टे रूपम् शष्पाणि दीक्षणीयात्वेन ध्येयानि। एवमग्रेऽपि। तोक्मानि नवप्ररूढयवाः प्रायणीयस्य प्रायणीयेष्टे रूपम् ध्येयम्। सोमस्य क्रयस्य रूपं लाजाः सोमक्रयोऽस्ति सोमे अत्र लाजास्तस्य रूपम् लाजाः सोमक्रयरूपेण ध्येया इत्यर्थः सोमक्रयस्येति समासे युक्ते तदभावः सोमक्रयपदयोर्व्यत्ययो रूपपदेन व्यवधानं च छान्दसम्। मधु सोमांसवः सोमखण्डास्तद्रूपेण ध्येयम् यद्वा मधु मधुरस्वादा लाजा एव सोमांशवो ध्येयाः ॥ १३ ॥

किञ्च मासरमातिथ्यरूपमातिथ्येष्टेः स्वरूपं ध्येयम् व्रीहिश्यामाकौदनाचामयोः शष्पतोक्मलाजनग्नहुचूर्णैः संसर्गो मासरं

आतिथ्यरूपम्मासरम्महावीरस्यनग्नहुः। रूपमुपसदामेतत्तिस्रोरात्रीःसुरासुता ॥ १४ ॥

सोमस्यरूपङ्क्रीतस्यपरिस्रुत्परिषिच्यते। अश्विभ्यान्दुग्धम्भेषजमिन्द्रायैन्द्रꣳसरस्वत्या ॥ १५ ॥

पूर्वमुक्तम्। सर्जत्वगादिषड्विंशतिवस्तून्येकीकृतानि नग्नहुः पूर्वोक्तः स महावीरस्य घर्मस्य रूपं ध्येयम्। या तिस्रो रात्रीः कालाध्वनोरिति द्वितीया त्रिरात्रपर्यन्तं सुरा आसुता अभिषुता पूर्वोक्तं सर्वमेकपात्रे कृत्वा स्वाद्वीं त्वेति मन्त्रेण यद्रात्रं त्रिरात्रं स्थापनम् एतदुपसदामुपसत्संज्ञानामिष्टीनां रूपम् ॥ १४ ॥

यत् अश्विभ्यां सरस्वत्या च ऐन्द्रमिन्द्रदेवत्यमिन्द्राय भेषजमिन्द्रार्थं औषधं दुग्धं पयः अश्विभ्यामपाकरोमीति दुग्धेनैकगोः पयसा सरस्वत्या अपाकरोमीति दुग्धेन गोद्वयपयसा इन्द्रायापाकरोमीति दुग्धेन गोत्रयपयसा दिनत्रये परिस्रुत् सुरा यत् परिषिच्यते

सम्पृञ्चन्ति संयोजयन्तीति सम्पृचः स्वत एव संयोजका भवत अतो मा मां भद्रेण कल्याणेन सम्पृङ्क्त संसृजत कल्याणयुक्तं मां कुरुतेत्यर्थः। सम्पूर्वात्पृचेः क्विप्। पृचे रौधिकाल्लोट् सम्पृङ्क्त॥ का० विपृच स्थेति सौराणाम्[१]। यजमानं सौरग्रहान् सम्मृशतीत्यर्थः॥ हे सुराग्रहा यूयं विपृचः स्थ विपृञ्चन्तीति विपृचः वियोजका भवत अतो मा मां पाप्मना कल्मषेण विपृङ्क्त निष्पापं कुरुतेत्यर्थः॥ ११॥

१——१९,७,२९। २——१२,८,३,१।

देवा यज्ञमित्यादिकण्डिकाविंशतिर्ब्राह्मणरूपातो विनियोगाभावः। ब्राह्मणानुवाको विंशतिरनुष्टुभः सौत्रामण्याः सोमसाम्यप्रतिपादिकाः। अत्रेतिहासः। अनुपहूतसोमपानाद्भ्रष्टस्येन्द्रस्य वीर्यं नमुचिरसुरोऽपिबत् तत्र देवैरिन्द्रस्य भैषज्यं कृतम् तत्रा-

देवा य॒ज्ञम॑तन्वत भेष॒जं भि॒षजा॒श्विना॑। वा॒चा सर॑स्वती भि॒षगिन्द्रा॑येन्द्रि॒याणि॒ दध॑तः॥ १२॥

दी॒क्षायै॑ रू॒पꣳ शष्पा॑णि प्राय॒णीय॑स्य॒ तोक्मा॑नि। क्र॒यस्य॑ रू॒पꣳ सोम॑स्य ला॒जाः सो॑मा॒ꣳशवो॒ मधु॑॥ १३॥

श्विनौ सरस्वती च भिषजः सौत्रामणी त्वौषधम्। तथाच श्रुतिः। त्वष्टा हतपुत्रोऽभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्यार्च्छत्तस्य मुखात्प्राणेभ्यः श्रीयशसान्यूर्ध्वान्युदक्रामँस्तानि पशून्प्राविशंस्तस्मात्पशवो यशो यशो ह भवति य एवं विद्वान्त्सौत्रामण्याभिषिच्यते ततोऽस्मा एतमश्विनौ च सरस्वती च यज्ञꣳ समभरन्त्सौत्रामणी भैषज्याय तयैनमभ्यषिञ्चँस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानां भवति य एतयाभिषिच्यत इति[२]॥ देवा यज्ञं सौत्रामण्याख्यं भेषजमिन्द्रस्यौषधरूपमतन्वत विस्तारयामासुः तदा अश्विना अश्विनौ भिषजा भिषजौ वैद्यौ आस्तामिति शेषः। सरस्वती च वाचा तयोलक्षणया भिषगासीत्। कीदृशाः सरस्वत्यश्विनाः इन्द्राय इन्द्रियाणि वीर्याणि दधतः इन्द्राय सामर्थ्यं ददत इत्यर्थः॥ १२॥

श्येनपिच्छाभ्यां पावयतः दोधावादित्येकेन नाभेरूर्ध्वं प्रदक्षिणं द्वितीयेन सव्यं द्वाभ्यां यद्वोभाभ्यां नाभेरूर्ध्वमधश्च द्विरिति सूत्रार्थः। हैमवर्चिदृष्टा विषूचिकादेवत्यानुष्टुप्। व्याध्यधिष्ठात्री देवतास्ति सा प्रार्थ्यते। विषु सर्वत्र अञ्चति गच्छति विषूची सैव विषूचिका रोगविशेषः केऽण इति ङीपो ह्रस्वः या विषूचिका व्याघ्रं वृकमेनावुभौ द्वौ परिरक्षति पाति तथा श्येनं पतत्रिणं पक्षिणं सिंहं चोभौ रक्षति न हि तेषामन्नपरिणामजनितो दोषः सा विषूचिका इमं यजमानमंहसः व्याधिहेतुभूतात्पापात्पातु रक्षतु ॥ १० ॥

का० अग्निं प्रेक्षयति यदापिपेषेति[१]। अग्निं प्रेक्षस्वेति प्रैषेणाध्वर्युर्यजमानमग्निं दर्शयति स प्रेषित औत्तरवेदिकमग्निमीक्षते

याव्याघ्रं विषूचिकोभौ वृकञ्च रक्षति। श्येनम्पतत्रिणᳫँ सिᳫँहᳫँ सेमम्पात्वᳫँहसः ॥ १० ॥

यदापिपेष मातरम्पुत्रः प्रमुदितो धयन्। एतत्तदग्ने अनृणो भवाम्यहतौ पितरौ मया। सम्पृचस्थ

सम्माभद्रेणपृङ्क्तविपृचस्थविमापाप्मनापृङ्क्त ॥ ११ ॥

इत्यर्थः। अग्निदेवत्या बृहती। पुत्रोऽहं प्रमुदितः प्रहृष्टो धयन् स्तनपानं कुर्वन्सन् यत् मातरं जननीमापिपेष पिष्टवान् पद्भ्यां पीडितवान् पिषेर्लिट उत्तमैकवचनम् हे अग्ने तत् एतत् त्वत्समक्षमहमनृणो भवामि ऋणत्रयरहितोऽस्मि अत एव ब्रवीमि मया पितरौ मातापितरौ अहतौ न पीडितौ यः पुत्रः प्रत्युपकर्तुमशक्तः स एव पित्रोर्हन्तेति भावः ॥ का० पयोग्रहसम्मर्शनᳫँ सम्पृचस्थेति[२]। यजमानः सहैव पयोग्रहाणां स्पर्शं करोतीत्यर्थः ॥ पयोग्रहदेवत्यम्। यजुस्त्रिष्टुप्। हे पयोग्रहा यूयं सम्पृचः स्थ

१——१९,२,२१। २——१९,२,२८।

का० गोधूमकुवलचूर्णानि चावपति तेजोऽसीति[1] । आश्विनग्रहग्रहणानन्तरं सादनात्प्राक् दुग्धं दर्भैर्हणि प्रागग्रे पात्रोपरि कृत्वा गोधूमकुवलयोश्चूर्णानि सह्वैव पयसि क्षिपति कुवलं स्थूलं बदरीफलमित्यर्थः ॥ त्रीणि यजूंषि पयोदेवत्यानि आद्यं यजुर्बृहती । हे पयः त्वं तेजोऽसि अतो मयि तेजो धेहि स्थापय यो यदात्मकः स तत्र नियुज्यत इति न्यायात् ॥ का० उपवाकबदरचूर्णानि च वीर्यमसीति[2] । उपवाका इन्द्रयवाः बदरं सूक्ष्मबदरीफलम् तयोश्चूर्णानि सारस्वते पयोग्रहे निर्वपेदित्यर्थः । यजुःपङ्क्तिः । हे ग्रह त्वं वीर्यमसि अतो मयि वीर्यं सामर्थ्यं धेहि ॥ का० यवकर्कन्धुचूर्णानि च बलमसीति[3] । यवाः प्रसिद्धाः कर्कन्धुः अतिस्थूलं बदरम् तयोश्चूर्णान्यैन्द्रे पयोग्रहे क्षिपेदित्यर्थः ॥ यजुः पङ्क्तिः । हे ग्रह त्वं बलमयि अतो मति विषये बलं धेहि । का० सुराग्रहाञ्छ्री-

तेजो॑ऽसि॒ तेजो॒ मयि॑ धेहि वी॒र्य्य॑मसि वी॒र्य्य॑म्मयि॑ धेहि॒ बल॑मसि॒ बल॒म्मयि॑ धेह्योजो॒ऽस्योजो॒ मयि॑

धेहि म॒न्युर॑सि म॒न्युम्मयि॑ धेहि॒ सहो॑ऽसि॒ सहो॒ मयि॑ धेहि ॥ ९ ॥

णात्योजोऽसीति वृकव्याघ्रसिंहलोमभिः प्रतिमन्त्रं मिश्रैरेके यथासङ्ख्यम्[4] । वृकादीनां मिश्रैः केशैरोजोऽसीति प्रतिमन्त्रं सुराग्रहान्मिश्रयेत् ओजोऽसीत्याश्विनं मन्युरसीति सारस्वतं सहोऽसीत्यैन्द्रम् एके वृकादिकेशैर्यथासङ्ख्यं ग्रहं मिश्रयन्ति वृककेशैराश्विनं वैयाघ्रैः सारस्वतं सैंहैरैन्द्रमिति सूत्रार्थः । त्रीणि यजूंषि सुरादेवत्यानि हे सुरे त्वमोजः असि अतो मयि विषये ओजः कान्तिं धेहि स्थापय । त्वं मन्युर्मानसं प्रज्वलनं कोपोऽसि मयि मन्युं धेहि । सहोऽसि मयि सहो बलं धेहि ॥ ९ ॥

का० दीक्षावत्पावयतोऽन्तःपात्ये श्येनपक्षाभ्यां या व्याघ्रमिति[5] । अध्वर्युप्रतिप्रस्थातारौ सहैवान्तःपात्येऽवस्थितं प्राङ्मुखं यजमानं

१—१९,२,१६ । २—१९,२,१७ । ३—१९,२,१९ । ४—१९,२,२२–२३ । ५—१९,२,२६ ।

का० स्थालीभिः सौरावानाहि वामिति व्यत्यासम् १। नाना हीति मन्त्रेण मृन्मयस्थालीभिस्त्रीन् सुराग्रहान् गृह्णाति। व्यत्यासमितायमर्थः आदावाश्विनं पयोग्रहं गृहीत्वासाद्याश्विनसुराग्रहस्य ग्रहणासादने ततः सारस्वतौ पयोग्रहसुराग्रहौ तत ऐन्द्रौ पयःसुराग्रहौ। क्रमेण वा। उपयामयोनी अत्रापि पृथक् प्रथमे नाना हीति पठित्वोपयामगृहीतोऽस्याश्विनं तेज इति ग्रहणमेष ते योनिर्मोदाय त्वेति सादनम् द्वितीये नाना हीत्यन्ते उपयामगृहीतोऽसि सारस्वतं वीर्यमिति गृहणमेष ते योनिरानन्दाय त्वेति सादनम् तृतीये नानेत्यन्ते उपयामगृहीतोऽस्यैन्द्रं बलमिति गृहणमेष ते योनिर्महसे त्वेति सादनमिति सूत्रार्थः॥ सुरासोमदेवत्या जगती। हे सुरासोमौ हि यस्मात्कारणाद्वां युवयोः नाना पृथक् सदः स्थानं कृतम् सुरापयसोर्द्वे वेदौ भवतः। कीदृशं सदः देवहितं देवानां हितं पथ्यम् यद्वा देवैः हितं स्थापितम्। अतः कारणात् परमे उत्कृष्टे व्योमन् व्योम्नि

**उपयामगृहीतोस्याश्विनन्तेजः सारस्वतंवीर्य्यमैन्द्रम्बलम्। एषतेयोनिर्मोदायत्त्वानन्दायत्त्वामहसेत्त्वा ॥ ८ ॥**

व्योमवद्विशाले हवनस्थाने युवं मा संसृक्षाथां संसर्गं मा कुरुतम्। आहवनीये पयो हूयते दक्षिणाग्नौ सुरा हूयते अतो न संसर्गः। सृज विसर्गे लुङ्। एवं द्वौ प्रत्युक्त्वा सुरामाह हे सुरे त्वं सुरा असि कीदृशी शुष्मिणी शुष्मं बलमस्या अस्तीति बलवती ततस्त्वां पीत्वा मत्तो भवति। एष सोमः शान्तः अतः स्वां योनिं माविशन्ती प्रविशन्ती सती सोमं मा हिंसीः अनुदात्तो माशब्दः पादपूरणः ॥ ७ ॥

आश्विनं तेजः साक्षात्त्वमेव। सारस्वतं सरस्वतीसम्बन्धि वीर्यं सामर्थ्यं च त्वम्। ऐन्द्रमिन्द्रसम्बन्धि बलं च त्वमिति शेषः॥ सादयति। एष ते तव योनिः स्थानं मोदाय प्रमोदाय त्वा त्वां सादयामि। आनन्दाय हर्षाय त्वां सादयामि। महसे महत्त्वाय च सादयामि। प्रत्येकं मन्त्राः ॥ ८ ॥

१—१९,२,२०।

का० पयोग्रहान् गृह्णाति कुविदङ्गेति पृथगुपयामयोनी[१]। एवं सुरापयसी: पावनं कृत्वा कुविदङ्गेति मन्त्रेणैव त्रीन् पयोग्रहान् गृह्णाति मन्त्रपाठे उपयामगृहीतोऽसि एष ते योनिरिति द्वे यजुषी सकृत्पठिते त्रिषु ग्रहेषु पृथग्भवतः। ततश्चैते मन्त्राः। कुविदङ्गेत्यृचं पठित्वा उपयामगृहीतोऽस्यश्विभ्यां त्वा। ऋग्व्याख्याता(१०,३२)। हे पयोग्रह त्वमुपयामेन पात्रेण गृहीतोऽसि अश्विभ्यामर्थे त्वा त्वां गृह्णामि। सादयति एष ते योनिस्तेजसे त्वा एष ते तव योनिः स्थानम् योनिर्द्वयोरिति योनिशब्द उभयलिङ्गः तेजसे

कुविदङ्गयवमन्तोयवञ्चिद्यथादान्त्यनुपूर्वंवियूय। इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमउक्तिंयजन्ति। उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यैत्त्वेन्द्रायत्त्वासुत्राम्णएषतेयोनिस्तेजसेत्त्वावीर्य्यायत्त्वाबलायत्त्वा॥६॥

नानाहिवान्देवहितꣳसदस्कृतम्मासꣳसृक्षाथाम्परमेव्योमन्। सुरात्त्वमसिशुष्मिणीसोमएषमामाहिꣳसीःस्वांयोनिनिमाविशन्ती॥ ७॥

तेजोऽर्थं त्वां सादयामि॥ द्वितीये पयोग्रहे कुविदिति पठित्वा उपयामगृहीतोऽसि सरस्वत्यै त्वा सरस्वत्यर्थं त्वां गृह्णामि। सादयति एष ते योनिर्वीर्याय त्वा वीर्यार्थं त्वां सादयामि॥ तृतीयपयोग्रहे कुविदित्यन्ते उपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे सुष्ठु त्रायते रक्षतीति सुत्रामा तस्मै रक्षकायेन्द्राय त्वां गृह्णामि। सादयति एष ते योनिर्बलाय त्वा बलाय बलार्थं त्वां सादयामि। एतेषां क्रमादश्वत्थोदुम्बरन्यग्रोधपात्रैर्ग्रहणम्॥ ६॥

१——१९,२,१२—१३।

गत: सोमः वायोः पवित्रेण उदरान्तर्वर्त्तिना पूत: शुद्धः। कीदृशः इन्द्रस्य युज्यः सखा योगार्होऽगर्ह्यः सहायः। प्राचत्यूर्ध्वं गच्छति प्राङ्मुखतोऽतिद्रुतो निर्गतः सोमो वायोः पवित्रेण हृदयान्तर्वर्त्तिना पूत: य इन्द्रस्य युजः योग्यः सखा ॥ ३ ॥

अध्वर्युर्यजमानं प्रत्याचष्टे हे यजमान सूर्यस्य दुहिता पुत्री श्रद्धा ते तव परिस्रुतं सुरां सोमञ्च पुनाति शोधयति। श्रद्धा वै सूर्यस्य दुहितेति श्रुतिः। यद्वा लुप्तोपमानम् ते तव परिस्रुतं सोममिव पुनाति सोमवत्पवित्रां करोति। यद्वा सोमं सोमरूपापन्नां परिस्रुतं श्रद्धा पुनाति। केन वारेण वालेन रलयोरैक्यम् गोऽश्ववालवालेन। कीदृशेन वारेण शश्वता शाश्वतिकेन अनादिना। तथा तना तनेति धननाम[1] तनेन धनेन धनरूपेण धनोत्पत्तिनिमित्तभूतेनेत्यर्थः ॥ ४ ॥

पुनातिते परिस्रुतꣳ सोमꣳ सूर्य्यस्य दुहिता। वारेण शश्वता तना ॥ ४ ॥

ब्रह्मक्षत्रम्पवते तेज इन्द्रियꣳ सुरया सोमः सुत आसुतो मदाय। शुक्रेण देव देवताः पिपृग्धि रसेनान्नं यजमानाय धेहि ॥ ५ ॥

का० उत्तरस्यां पयो वैतसेऽजाविलोमपवित्रेण ब्रह्म क्षत्रमिति[2]। अजमेषलोमकृतपवित्रेण वेतसपात्रे उत्तरदिशि पयः पुनाति ब्रह्म क्षत्रमिति मन्त्रेणेतरार्थः। सुरासोमदेवता त्रिष्टुप् आद्यो द्वादशकः द्वितीयस्त्रयोदशार्णः अन्याविकादशार्णौ तेन त्र्यधिका। हे देव सोम शुक्रेण शुद्धेन वीर्येण त्वं देवताः अग्न्याद्याः पिपृग्धि प्रीणीहि। पुनः रसेन घृतादिना सहितमन्नं यजमानाय धेहि देहि। यतः सोमो भवान् सुतोऽभिषुतः सन् ब्रह्म ब्राह्मणं क्षत्रं क्षत्रियं तेजः कान्तिमिन्द्रियसामर्थ्यं पवते जनयति पवतिर्जननार्थः यस्मादेव सर्वोत्पत्तिः सोमे उपपद्यते आसुतः सुरया तीव्रीकृतः सन् भवान् मदाय च भवति ईदृशसामर्थ्ययुक्तस्त्वं देवान्यजमानं चाभीष्टेन प्रीणीहीतरार्थः ॥ ५ ॥

१—निघ० २,१०,१९। २—१९,२,२०।

स्पृष्ट्वा दोहितेन तयोर्दुग्धेन तेनैव मन्त्रेण सुरां सिञ्चति तोक्मचूर्णतृतीयांशप्रक्षेपश्च। तृतीयेऽह्नि रात्रौ इन्द्राय सुत्राम्णेऽपाकरोमीति तिस्रो गाः स्पृष्ट्वा ता दुग्ध्वैकीकृततत्पयसा सुरां सिञ्चति तेनैव मन्त्रेण तत्र लाजचूर्णतृतीयांशप्रक्षेपश्चेति सूत्रार्थः। भरद्वाजदृष्टा सोमदेवत्या बृहती। हे ऋत्विज इतो गोः सकाशाद्गृहीतेन दुग्धेनेति शेषः सुतमभिषुतं सोमं परिस्रुद्रूपं परिषिञ्चत यूयम् परि इतः सिञ्चतेतिपदेषु सत्सु ओकारमितः सिञ्चतो सोपध इति[1] सूत्रेण सविसर्गस्य तकारस्याकारस्य ओकारः अन्येषामपि दृश्यतइति सिञ्चतपदस्य संहितायां दीर्घः। तं कम् यः सोम उत्तमं हविः सर्वेषां हविषां श्रेष्ठम् यश्च नर्यः नरेभ्यो हितः सन् दधन्वान् यजमानं धारितवान् धन शब्दे क्वसुप्रत्ययः। अप्सु जलेषु अन्तर्मध्ये वर्तमानं यं सोममद्रिभिः ग्रावभिरध्वर्युः आसुषाव अभिषुतवान्। तं सोमं सुरारूपमापन्नं पयसा सिञ्चतेति सम्बन्धः॥ २॥

१——प्रति शा० ६,२,९। २——१८,१,०,९।

वायोः॑ पू॒तः प॒वित्रे॑ण प्र॒त्यङ्क्सोमो॒ अति॑द्रुतः। इन्द्र॑स्य॒ युज्यः॒ सखा॑। वायोः॑ पू॒तः प॒वित्रे॑ण प्राङ्क्सोमो॒ अति॑द्रुतः॥ इन्द्र॑स्य॒ युज्यः॒ सखा॑॥ ३॥

का० सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतमिति वायोः पूत इति सोमातिपूतस्य प्राङिति तद्वामिनः[२]। वायोः पूत इति कण्डिकायां[(४)] द्वे ऋचौ पुनाति तद्इति तृतीया तासां व्युत्क्रमेण विनियोगमाह पूतां सुरामादाय गोऽश्वकेशनिर्मितेन वालेन पवित्रेण सते पलाशपात्रे पुनाति पुनाति तद्इति मन्त्रेण सतं वारणमिति केचित् मुखेतरच्छिद्रसोमवामिनो यजमानस्य सौत्रामण्यां वायोः पूतः पवित्रेण प्रत्यङ्ङिति मन्त्रेण सते सुरां पुनाति मुखेन सोमवामिनस्तु वायोः पूतः पवित्रेण प्राङिति मन्त्रेण सते सुरां पुनातीत्यर्थः। ऋक्द्वयमाभूतिदृष्टं सोमदेवत्यं गायत्रम्। प्रत्यञ्चति अधो गच्छति प्रत्यङ् अधोमुखोऽतिद्रुतो गुदद्वारा

चूर्णसंसृष्टाचामयोर्मासरसञ्ज्ञा। ततः शष्पतोक्मलाजचूर्णानां द्वितीयं तृतीयांशं द्विधा कृत्वैकैकं भागमोदनयोः क्षिपेत् नग्नहुचूर्ण-द्वितीयार्धं द्वेधा कृत्वौदनयोः क्षिपेत् तत ओदनावेकपात्रे कृत्वा तत्राचामौ क्षिपेत् ततः स्वाद्वीं त्वा अंशुनेति मन्त्राभ्यां चूर्णमासरैः सहौदनयोराप्लावनेन संसर्गः कार्यः ततस्त्रिरात्रनिधानम् शष्पतोक्मलाजचूर्णतृतीयांशानां प्रतिदिनं सुरायां निवापार्थं रक्षणमिति सूत्रार्थः। स्वाद्वीं त्वा। सुरासोमदेवत्यानुष्टुप् सुरारूपः सोमो देवता। सौत्रामणीमन्त्राणां प्रजापत्यश्विसरस्वत्य ऋषयः। अथ मन्त्रार्थः। हे सुरे त्वा त्वां सोमेन संसृजामि संयोजयामि छन्दसि परेऽपीति समुपसर्गस्य क्रियापदात्परप्रयोगः। कीदृशीं त्वाम् स्वाद्वीम् मिष्टां मिष्टरसाम्। तीव्रां तीव्रशब्दः कटुवचनः कट्वीं शीघ्रमदजनिकामित्यर्थः। अमृताममृततुल्याम्। मधुमतीं मधुरस्वादोपेताम्। कीदृशेन सोमेन स्वादुना मृष्टेन तीव्रेण कटुरसेन अमृतेन सुधातुल्येन मधुमता मधुरस्वादेन॥ सोमोऽसि

परीतोषिञ्चतासुतꣳसोमोयउत्तमꣳहविः। दधन्वायोनर्य्योअप्स्वन्तरासुषावसोममद्रिभिः॥ २॥

चत्वारि यजूंषि। सुरादेवत्यानि। पूर्व एव विनियोगः। सोमोऽसि दैव्युष्णिक् अश्विभ्यां यजुर्गायत्री सरस्वत्यै यजुरुष्णिक् इन्द्राय यजुर्बृहती। हे सुरे त्वं सोमसंसर्गात्सोमः असि अतस्त्वां वदामि अश्विभ्यामर्थाय पच्यस्व विकरिणम पाको विपरिणामः सरस्वत्यै सरस्वत्यर्थं पच्यस्व इन्द्राय च पच्यस्व कीदृशायेन्द्राय सुत्राम्णे सुष्ठु त्रायते रक्षतीति सुत्रामा तस्मै त्रायतेराती मनिन्निति मनिन्॥१॥

का० एकस्या३ पयस्यायाः कृतेनाश्विनेन परिषिञ्चति परीतोषिञ्चतेति शष्पचूर्णानि चात्रपति सारस्वतेन द्वयोः प्रातस्तोक्मचूर्णानि चैन्द्रेणोत्तमे तिसृणां लाजचूर्णानि च१। सायंहोमान्तेऽश्विभ्यामपाकरोमीति करेण गां स्पृष्ट्वा एकां तां दुग्ध्वा तत्पयसाध्वर्युः सुरां सिञ्चति परीत इति मन्त्रेण। रक्षितं शष्पचूर्णानां तृतीयांशं सुराभाण्डे क्षिपेत्। द्वितीयेऽह्नि निशान्ते सरस्वत्याऽअपाकरोमीति गावी

कृपानाथं रमाकान्तं नत्वा नृहरिमीश्वरम् । एकोनविंशे त्वध्याये मन्त्रदीपमथो ब्रुवे ॥ अथ सौत्रामणीमन्त्रास्त्रिभिरध्यायैः । इन्द्रकामस्याग्निचितो मुखेतरच्छिद्रसोमवामिनो मुखेन सोमवामिनो राज्यच्युतनृपस्य पशुकामस्य च सौत्रामणीयागः । अन्तःपात्यस्थाने गोचर्मणि एतानि स्थापयेत् सोमसुराविक्रयिणः क्लीबाद्वा क्रीत्वा सीसेन शष्पं क्रीत्वा ऊर्णाभिस्तोक्मान् सूत्रेण लाजान् केनचिद्द्रव्येण नग्नहुम् विरूढा व्रीहयः शष्पम् विरूढा यवास्तोक्माः भृष्टव्रीहयो लाजाः मज्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीवंशावकाशहच्छत्राचित्रकेन्द्रवारुण्यश्वगन्धाधान्यकयवानीजीरकहयहरिद्राद्वयविरूढव्रीह्य एकीकृता नग्नहुः । शष्पतोक्मलाजनग्नहून् क्षिपद्वारेणाभिग्रहं नीत्वा संचूर्ण्य दर्शपौर्णमासधर्मेण व्रीहिश्यामाकयोश्चरू बहुजले पक्त्वा शृतालम्भनानन्तरं तयोश्चर्वोर्निःस्रावमुष्णं पृथक्

**स्वाद्वीन्त्वा स्वादुना तीव्रान्तीव्रेणामृताममृतेन मधुमतीम्मधुमता सृजामि सᳫँ सोमेन । सोमोस्यश्वि-**

**भ्याम्पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥ १ ॥**

पात्रयोरादाय शष्पादिचतुर्णां चूर्णैः संसृज्य स्थापयेत् इयं चूर्णामरूपं मासराख्यम् । का० ओदनौ चूर्णमासरैः सᳫँसृज्य स्वाद्वीं त्वाᳫँ शुनेति त्रिरात्रं निदधाति[१] । एवमाचामयोर्गुणसंसर्गे मासरत्वनिष्पादनानन्तरमोदनौ व्रीहिश्यामाकचरू चतुर्भिश्चूर्णैः संसृज्य स्वाद्वीं त्वेति मन्त्रेण अंशुनेति विंशाध्यायसप्तविंशया ऋचा चैकस्मिन् पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां संसृज्य त्रिरात्रं शालानैर्ऋतकोणे गर्तं कृत्वा तत्र स्थापयेत् । अयमर्थः । चरू उद्वास्य द्वयोः पृथगाचामग्रहणम् ततः शष्पतोक्मलाजचूर्णानां पृथक् त्रिधाकृतानां तृतीयांशं द्वेधा कृत्वाचामयोः क्षिपेत् ततो नग्नहुचूर्णं द्वेधा कृत्वैकमर्धं द्विधा विभज्याचामयोः क्षिपेत् । एव

१ —— १९,१,२२ ।

मज्मना मन्यते देवमहिमानं जानाति मन्म तेन मन्यतेर्मन्प्रत्ययः देवतायाथात्म्यज्ञानेनेत्यर्थः । यत एतादृशेन मनसा वयं हविः ररिम अतो हे अग्ने विप्रो मेधावी त्वं देवान्यक्षि यज महत्तेन हविषा देवांस्तर्पयेत्यर्थः यजतेर्बहुलं छन्दसीति शपि लुप्ते मध्यमैकवचने षत्वे ष्टुत्वे यक्षीति रूपम् । विप्रो अग्ने इत्यत्र प्रकृत्यान्तःपादमव्यपरे इति प्रकृतिभावः ॥ ७५ ॥

विश्वदेवदेवत्यानुष्टुप् । एते देवा नोऽस्माकं यज्ञं प्रावन्तु प्रकर्षेण रक्षन्तु अन्यूनातिरिक्तं कुर्वन्त्वित्यर्थः अन्यूनातिरेक एव कर्मणो रक्षणम् । शुभे इष्टे स्थाने स्वर्गे च यज्ञं स्थापयन्त्विति शेषः यद्वा शुभे स्थाने यज्ञं प्रावन्तु । एते के अग्निः । देव इति

धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः । सचेतसो विश्वे देवा यज्ञम्प्रावन्तु नः शुभे ॥ ७६ ॥

त्वं यविष्ठ दाशुषो नॄँ: पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥ ७७ ॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां अष्टादशोऽध्यायः ॥ १८ ॥

सर्वत्र सम्बन्धनीयम् । इन्द्रः । ब्रह्मा चतुर्मुखः । बृहस्पतिर्जीवः । विश्वेदेवाश्च । धामानि स्थानानि छादयति आच्छादयति धामच्छत् छादयतेः क्विपि ह्रस्व इति क्विपि णिलोपे धातोर्ह्रस्वः धाम्नां छदनं न्यूनानां पूरणमतिरिक्तानां समीकरणम् इदं सर्वेषां विशेषणम् । तथा सचेतसः चेतसा प्रज्ञया सहिताः सचेतसः समानं चेतो येषामिति वा । समानज्ञाना अग्न्यादयो मद्यज्ञं रक्षन्त्वित्यर्थः ॥ ७६ ॥

ऋष्यादि प्रागुक्तम् व्याख्याता च(१३,५२) ॥ ७७ ॥

॥ इति श्रीमहीधरकृते वेददीपेऽष्टादशः ईरितः । वसोर्धारादिकोऽध्यायस्त्वित्युपस्थानसाधकः ॥ १८ ॥

प्रजानां जीवनहेतुस्तापपाकप्रकाशैरुपकरोति। यश्च सहसा बलेनाध्वर्युणा मथ्यमानः सन् दृष्टः जनैः कोऽयं मथ्यत इति। सोऽयमग्निर्दिवा नक्तं रिषो वधात्पातु रिषतिर्हिंसाकर्मा मास्मादाशयत्वित्यर्थः ॥ ७३ ॥

भरद्वाजदृष्टाग्नेयी कामवती त्रिष्टुप्। हे अग्ने तव ऊती ऊत्या अवनेन पालनेन वयं तं काममभिलषमश्याम प्राप्नुयाम यमिच्छाम इत्यर्थः। अशूङ् व्याप्तौ विकरणव्यत्ययेन लोटि श्यन् प्रत्ययः। रयिर्धनमस्यास्तीति रयिवान् तत्सम्बुद्धौ हे रयिवः धनवन् सुवीरं रयिं वयमश्याम शोभना वीराः पुत्रा यत्र तं रयिं पुत्रसहितं धनं वयं प्राप्नुयाम। वाजयतिरर्चतिकर्मा[1] वाजयन्तो वह्निमर्चयन्तः सन्तो वयं वाजमन्नमभि अश्याम समन्तात्प्राप्नुयाम। हे अजर नास्ति जरा यस्य सोऽजरः हे जरारहित अजरमक्षीणं ते तव द्युम्नं यशो वयमश्याम सर्वदा यशस्विनो भवामेत्यर्थः ॥ ७४ ॥

[1] निघ० ३,१४,३५।

**अश्यामतङ्काममग्नेतवोतीअश्यामरयिꣳरयिवःसुवीरम्। अश्यामवाजमभिवाजयन्तोश्यामद्युम्नमजराजरन्ते ॥ ७४ ॥**

**वयन्तेअद्यररिमाहिकाममुत्तानहस्तानमसोपसद्य। यजिष्ठेनमनसायक्षिदेवानस्रेधतामन्मनाविप्रोअग्ने ॥ ७५ ॥**

उत्कीलदृष्टाग्नेयी त्रिष्टुप्। हे अग्ने हि यस्मात्कारणात्। वयं ते तुभ्यमद्यास्मिन्दिने कामं हविः ररिम दद्मः काम्यतऽइष्यत इति कामं हविः रा दाने लिट् अन्येषामपि दृश्यत इति ररिमेत्यस्य संहितायां दीर्घः। किं कृत्वा नमसा उपसद्य नमस्कारेणोपगम्य नमस्कृत्य निकटमागत्य हविर्दद्म इत्यर्थः। कीदृशा वयम् उत्ताना हस्ता येषान्ते अनद्धमुष्टिकाः त्यक्तकार्पण्या इत्यर्थः। ... मनसा उपलक्षिताः सावधाना इत्यर्थः। कीदृशेन मनसा यजिष्ठेन यजतीति यष्टृ अतिशयेन यष्टृ यजिष्ठं तेन तुरिष्ठेमेयः... तृचो लोपः यागतत्परेणेत्यर्थः। तथा अस्रेधता स्रिध गतौ स्रेधति अन्यत्र गच्छति स्रेधदस्रेधत् तेन अनन्यगतेनेत्यर्थः।

जयदृष्टा त्रिष्टुप् हे इन्द्र परस्याः परावतो दूरतराद्देशादाजगन्थ आयच्छ परावच्छब्दो दूरवचनः परस्या दूरदिशोऽपि परावत: दूरदेशादित्यर्थः लोडर्थे लिट्। आगत्य च शत्रून्विताढि विशेषेण ताडय। मृधः संग्रामांश्च विनुदस्व विशेषेण प्रेरय दूरीकुरु। किं कृत्वा पविं वज्रं संशाय तीक्ष्णीकृत्य शो तनूकरणे ल्यप्। कीदृशं पविं सृकम् सरति शत्रुशरीरे गच्छतीति सृकः तम्। तिग्ममुत्साहवन्तम् तिग्मं तेजतेरुत्साहकर्मण इति[1] यास्कः। क इव मृगो न मृग इव यथा मृगः सिंहो दूरादेत्य प्राणिनं हन्ति। कीदृशो भीमः भयङ्करः। कुचरः कुत्सितं चरति गच्छति कुचरः। गिरिष्ठाः गिरौ तिष्ठति गिरिष्ठाः पर्वताश्रयः। ताड़यति हिंसाकर्मा तस्य हौ परे छन्दस्युभयथेत्यार्धधातुकत्वे णिचोलोपः हुझल्भ्यो हेर्धिः ष्टुत्वम् ताढि ॥ ७१ ॥

वैश्वानरोनऊतयआप्रयातुपरावतः। अग्निर्नःसुष्टुतीरुप॥ ७२ ॥

पृष्टोदिविपृष्टोअग्निःपृथिव्याम्पृष्टोविश्वाओषधीराविवेश। वैश्वानरःसहसापृष्टोअग्निस्सनोदिवासरिषस्पातुनक्तम्। ॥ ७३ ॥

वैश्वानरदेवत्या गायत्री। वैश्वानरः अग्निर्नोऽस्माकं सुष्टुतीः शोभनाः स्तुतीरुप उपशृणोतु परावतो दूरदेशादा प्रयातु आगच्छतु। किमर्थं नोऽस्माकमूतये रक्षणाय अस्मान् रक्षितुमित्यर्थः ॥ ७२ ॥

वैश्वानरदेवत्या त्रिष्टुप् कुत्सदृष्टा वैश्वानरः सर्वनरेभ्यो हितोऽग्निर्दिवा दिवसे नोऽस्मान् पातु रक्षतु स च नक्तं रात्रौ नः पातु सर्वदास्मान् रक्षत्वित्यर्थः। स कः योऽग्निर्दिवि द्युलोके पृष्टः कोऽयमादित्यात्मना तपतीति मुमुक्षुभिः पृष्टः अन्तरिक्षे यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्मेति श्रुतेः। यश्चाग्निः पृथिव्यामन्तरिक्षलोके पृष्टः कोऽयं विद्युदात्मना स्थित इति जलार्थिभिः पृष्टः अन्तरिक्षनामसु पृथिवीति पठितम्[2]। यश्च विश्वा ओषधीः सर्वा व्रीह्याद्योषधीः आविवेश प्रविष्टः सन् पृष्टः कोऽयं

१——निरु० १०,६। २——निघ० १,३,९।

वृत्रस्य इत्यर्थः। कीदृशाय शवसे वार्त्रहत्याय वृत्रस्य दैत्यस्य हत्यायां हनने कुशलं वार्त्रहत्यं वृत्रघातसमर्थमित्यर्थः। च पुनः पृतनाषाह्याय पृतना शत्रुसेना सह्यतेऽभिभूयते येन तत्पृतनासाह्यं तस्मै शत्रुसेनापराभवसमर्थायेत्यर्थः॥ ६८॥

हे पुरुहूत पुरुभिर्बहुभिर्हूतोऽभिहूतः पुरुहूतः हे बहुभिराहूत हे इन्द्र त्वं सहदानुं शत्रुमहस्तं हस्तहीनं कृत्वा सम्पिणक् सम्पिड्ढि चूर्णय। सह इति बलनाम[1] सहो बलं ददाति सहदानुः पृषोदरादित्वात्सहःशब्दान्त्यलोपः नुप्रत्ययो ददातेः अयमसमर्थोऽस्मि त्वं तु समर्थ इति यः शत्रुं प्रेर्य बलं ददाति स सहदानुः यद्वा सह एकीभूय योद्धुमन्त्वं ददाति सहदानुः शत्रुः। कीदृशं क्षियन्तं क्षियति

सहदानुम्पुरुहूतक्षियन्तमहस्तमिन्द्रसम्पिणक्कुणारुम्। अभिवृत्रंवर्द्धमानम्पियारुमपादमिन्द्रतवसाजघन्थ॥ ६९॥

विनइन्द्रमृधोजहिनीचायच्छपृतन्यतः। योअस्माँ२॥अभिदासत्यधरङ्गमयातमः॥ ७०॥

मृगोनभीमःकुचरोगिरिष्ठाःपरावतआजगन्थापरस्याः। सृकंसंशायपविमिन्द्रतिग्मंविशत्रून्ताढिविमृधोनुदस्व॥ ७१॥

वसतीति क्षियन् तम् क्षि निवासगत्योः तुदादिः शतृप्रत्ययः निकटे वसन्तम् कुणारुं क्वणति दुर्वचो वदति कुणारुः तम् क्वण शब्दे औणादिक आरुप्रत्ययः धातोः सम्प्रसारणञ्च। पिष्लृ संचूर्णने लङि मध्यमैकवचनं रुधादित्वात् श्नम् संपूर्वः अडभावश्छान्दसः षस्य कुत्वमार्षम्। हे इन्द्र वृत्रं दैत्यमपादं पादहीनं कृत्वा तवसा बलेन त्वमभिजघन्थ जहि सम्यक् मारय छन्दसि लुङ्लङ्लिट इति लोडर्थे लिट्। कीदृशं वृत्रं वर्धमानं जगद्व्याप्नुवन्तम्। पियारुं सुराणां हन्तारं पियतिर्हिंसाकर्मा॥ ६९॥

शासद्दृष्टानुष्टुप्। व्याख्याता (८,४४)॥ ७०॥

१——निघ० २,९,१०।

ऋचः । आत्मदेवत्यं यजुः सप्तदशाक्षरम् । यत्नेऽस्य विनियोगो नास्ति । यजमानोऽनेनात्मनि वेदत्रयात्मकत्व सम्पादयति नाम नाम्नाहमृचोऽस्मि ऋग्वेदरूपोऽस्मि यजूंषि नामास्मि यजुर्वेदरूपोऽस्मि सामानि नामास्मि सामवेदो नाम्नास्मि । का० चित्रोऽसीति चित्यनाम कृत्वोपतिष्ठते येऽग्नय इति[1] । चित्यस्याग्नेः चित्रोऽसीति नाम विधाय तमुपतिष्ठते कर्मशेषं समाप्यैदमुपस्थानं कार्यं मुपस्थानानन्तरं समारोपविधानादिति सूत्रार्थः ॥ अग्निदेवत्यानुष्टुप् अस्यां पृथिव्यामधि अस्याः पृथिव्याः उपरि ये अग्नयो वर्त्तन्ते । कीदृशः पाञ्चजन्याः पञ्चजना मनुष्यास्तेभ्यो हिताः पाञ्चजन्याः यद्वा पञ्चजनाः समूहाः चितिरूपा येषां ते पञ्चजनास्त एव पाञ्चजन्याः स्वार्थे तद्धितः । हे चित्राग्ने तेषां पृथिवीस्थानाममीषां त्वमुत्तमो-

तेषामसित्वमुत्तमःप्रनोजीवातवेसुव ॥ ६७ ॥

वार्त्रहत्यायशवसेपृतनाषाह्यायच । इन्द्रत्वावर्त्तयामसि ॥ ६८ ॥

ऽसि श्रेष्ठोऽसि अतो नोऽस्मान् जीवातवे चिरजीवनाय प्रसुव प्रेरय चिरं जीवयेत्यर्थः जीवेरातुरिति आतुप्रत्ययः व्यवहिताश्चेति प्रेत्यस्य सुवेत्यनेन व्यवधानम् ॥ ६७ ॥

१——१८,६,२३ । २——१७,७,१ – २ ।

का० चितिं पुरीषवतीमुपतिष्ठते वार्त्रहत्यायेति सप्तभिरष्टाभिरेके दशभिर्वा[2] । मृत्पूरणानन्तरमेतां चितिमुपतिष्ठते सप्तभिरष्टाभिरेकेषां मते दशभिर्वेति सूत्रार्थः ॥ आग्नेय्यः सप्त ऋच इन्द्रदृष्टाः आद्ये द्वे वृत्रहेन्द्रदेवत्ये गायत्रीत्रिष्टुभौ त्रिशिरामित्रेणापि दृष्टे । हे इन्द्र वयं त्वा त्वामावर्तयामसि आवर्तयामः इदन्ता मसि उपतिष्ठामहे । किमर्थं शवसे बलाय त्वद्बल-

वैश्वकर्मणः विश्वकर्माग्निस्तत् तत्र स्वः स्वर्गे देवेषु मध्ये नोऽस्मान्दधत् दधातु स्थापयतु तत्र यत्र देशे मधोम धुनो घृतस्य च याश्चान्याः पयोदध्यादीनां धाराः प्रवाहा अनपेता न अपेता उपभुज्यमाना अप्यक्षीणा वर्त्तन्ते ॥ ६५ ॥

अग्न्यद्वैतवादिनी त्रिष्टुप् देवश्रवोदेववातदृष्टा यज्ञेऽविनियुक्ता। अग्निप्रकरणत्वाद्यजमान आत्मानमग्नित्वेन ध्यायति। जन्मना उत्पत्त्यैवायमग्निरस्मि अग्निरूपोऽस्मि। नाम विभक्तिलोपः नाम्ना हविः पुरोडाशादिकमप्यहमस्मि। कोदृशोऽहं जातं जातं विन्दत इति जातवेदाः उत्पन्नस्य सर्वस्य स्वामीत्यर्थः। अर्कः अर्चनीयो यज्ञोऽप्यहमेव। त्रिधातुः त्रयो धातव ऋग्यजुःसामलक्षणा यस्य।

यत्र धारा अनपेता मधोर्घृतस्य च याः। तदग्निर्वैश्वकर्म्मणः स्वर्देवेषु नो दधत ॥ ६५ ॥

अग्निरस्मि जन्मना जातवेदा घृतम्मे चक्षुरमृतम्म आसन्। अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ ६६ ॥

ऋचो नामास्मि यजूᳬषि नामास्मि सामानि नामास्मि। ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि।

रजसो विमानः रज उदकं तस्य निर्माता विमिमीत इति विमानः नन्द्यादित्वात्कर्तरि ल्युट्। अजस्रः न जसति क्षीयत इत्यजस्रः अनुपक्षीणः जसु उपक्षये नमिकम्पीत्यादिना रप्रत्ययः। घर्मः घृ क्षरणदीप्त्योः जिघर्त्ति घर्मः औणादिको मप्रत्ययः दीप्तः आदित्यरूपः क्षरणो मेघरूपो वा। एतादृशोऽग्निरहं यतस्ततो घृतं मे मम चक्षुर्नेत्रं घृतहोमिनं पश्यामीति भावः अमृतं हविर्मम आसन् आस्ये मुखे पद्दन् इत्यादिना आस्यशब्दस्यासन्नादेशः सप्तम्या लुक् मन्मुखे हविर्जुह्वतममृतं करोमीति भावः। एवमात्मन्यग्न्यद्वैतं सम्पाद्यम् ॥ ६६ ॥

उद्बुध्यस्व। त्रिष्टुप्॥ येन वहसि। अनुष्टुप्॥ एते द्वे व्याख्याते(१५,५४—५५) ॥ ६१ ॥ ६२ ॥

तिस्रोऽनुष्टुभः। अग्ने नोऽस्माकमिमं यज्ञं स्वः स्वर्गं नय। किं कर्तुम् देवेषु गन्तवे देवान् प्रति गन्तुं प्राप्तुम्. तुमर्थे तवे प्रत्ययः नित्वादाद्युदात्तः। कीदृशं प्रस्तरेण स्रुगाधारभूतेन दर्भमुष्टिना परिधिना परिधिभिस्त्रिभिर्बाहुमात्रैः काष्ठैः स्रुचा जुह्वादिकया वेद्या मितया वेदिभूम्या वा बर्हिषा दर्भपुलकेन ऋचा ऋगादिभिर्मन्त्रैश्चोपलक्षितमिति शेषः ॥ ६३ ॥

उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते सꣳसृजेथामयं च। अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥

येन वहसि सहस्रं येनाग्ने सर्ववेदसम्। तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ ६२ ॥

प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा। ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ ६३ ॥

यद्दत्तं यत्परादानं यत्पूर्तं याश्च दक्षिणाः। तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ॥ ६४ ॥

वैश्वकर्मणः विश्वकर्मा प्रजापतिस्तदीयः विश्वकर्मैव वैश्वकर्मणः स्वार्थे तद्धितो वा विश्वकर्मा अग्निः नोऽस्माकं तद्दानं स्वः स्वर्लोके देवेषु मध्ये दधत् दधातु प्रापयतु फलभोगायेत्यर्थः। तत्किम् यद्दत्तं भार्यापुत्रजामातृभगिनीतत्पत्यादिभ्यो दत्तम् यच्च परादानं परोपकाराय दयादिनान्धकृपणेभ्यो दत्तम् यच्च पूर्तं स्मृतिविहितं विप्रभोजनकूपारामादि याश्च दक्षिणाः यज्ञसम्बन्धिन्यः यज्ञे गते यज्ञाङ्गत्वाद्यजमानः स्वर्गत एव ॥ ६४ ॥

तिस्रस्त्रिष्टुभः। सह तिष्ठन्ति देवा यत्रेति सधस्थः स्वर्गः तं प्रार्थयते। हे सधस्थ एतं यजमानं त तव परिददामि। जातवेदा अग्निर्यं शेवधिं सुखनिधिमाहुतिपरिणामभूतमावहात् आवहति प्रापयति तं यज्ञफलभूतं च सुखनिधिं तव परिददामि। उभयं रक्षणार्थं तुभ्यं ददामीत्यर्थः॥ एवं यजमानं यज्ञं च स्वर्गे समर्प्य तत्स्थान्देवानर्थयते अन्विति हे देवा यज्ञपतिर्यजमानो वो युष्मानन्वागन्ता कर्मसमाप्तौ भवतः प्रत्यागमिष्यति लुट्। अत्रास्मिन् परमे व्योमन् उत्कृष्टे व्योम्नि आकाशे स्वर्गाख्ये आगतं तं यजमानं यूयं जानीत। स्मेति पादपूरणः। स्वर्गागतः स भवद्भिः सम्भावनीय इत्यर्थः॥ आवहात् वहतेर्लेट् इतश्च लोपः परस्मैपदेष्विति तिप इलोपः लेटोऽडाटाविति अडागमः। शेव इति सुखनाम[1]। शेवं धीयतेऽस्मिन्निति शेवधिः॥ ५९॥

**एतꣳसधस्थपरितेददामियमावहाच्छेवधिञ्जातवेदाः। अन्वागन्तायज्ञपतिर्वोअत्रतꣳस्मजानीतपरमेव्योमन् ॥५९॥**

**एतञ्जानाथपरमेव्योमन्देवाःसधस्थाविदरूपमस्य। यदागच्छात्पथिभिर्देवयानैरिष्टापूर्त्तेकृणवाथाविरस्मै ॥ ६० ॥**

सह तिष्ठन्ति सधस्थाः परमे व्योमन् उत्कृष्टे स्वर्गभूते व्योम्नि सह स्थिता हे देवाः एतं यजमानं जानाथ जानीत लेटो मध्यमबहुवचने आडागमे रूपम्। किञ्च अस्य यजमानस्य रूपं विद वित्त जानीत प्रत्यभिज्ञानाय वेत्तेर्विकरणव्यत्यये शः वचनव्यत्ययश्च। विदितरूपोऽयं यद्यदा देवयानैः पथिभिः स्वर्गमार्गैः आगच्छात् आगच्छति इलोपाडागमौ तदा इष्टापूर्त्ते श्रौतस्मार्तकर्मफले अस्मै यजमानायाविः कृणवाथ प्रकटीकुरुत दत्तेत्यर्थः। देवा यान्ति येषु ते देवयानाः करणाधिकरणयोश्चेति ल्युट्। उपभोगस्थानभेदाद्बहुत्वं पूजार्थं वा॥ इष्टं च पूर्तं च इष्टापूर्ते देवसम्बन्धिकर्मत्वाद्देवताद्वन्द्वे चेति पूर्वपदस्यानङ् आपर्तं चेति वा। कृणवाथ कृञ् कृतौ स्वादिः आडागमश्च॥ ६०॥

[1] —— निघ० ३,६,१७।

अग्निदेवत्या गायत्री गालवदृष्टा । अग्निर्नोऽस्माकमिष्टमभिलषितं पिपर्त्तु पूरयतु दृढात्वित्यर्थः नोऽस्मान् पालयत्विति वा । पॄ पालनपूरणयोः लोट् ह्वादित्वाद द्वित्वम् अर्तिपिपर्त्योश्चेति अभ्यासस्येत्वम् । कीदृशोऽग्निः इष्टः कृतयागः । हविः विभक्तिव्यत्ययः । हविषा आहुतः समन्तात्तर्पितः किञ्च इदं नमः हविः समिष्टयजुर्लक्षणं देवेभ्योऽर्थायास्तु । कीदृशं स्वगा स्वयं गमनशील विभक्तेराकारः ॥ ५७ ॥

१ —— १८,६,२२ ।

का० हृदयशूलान्ते स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ । साग्निचित्ये मैत्रावरुण्यनूबन्ध्यावश्यकी भवति तेन तस्या हृदयशूलसम्बन्धिसमिदाधानान्ते कृते यदाकूतादिति प्रत्यृचमष्टौ स्रुवाहुतीर्जुहोतीति सूत्रार्थः । अष्टावृच अग्निदेवत्या विश्वकर्म-

इष्टो॒ऽअ॒ग्निराहु॑तः पिपर्त्तु नऽइ॒ष्टꣳ ह॒विः । स्व॒गेदं दे॒वेभ्यो॒ नमः॑ ॥ ५७ ॥

यदाकू॑तात्स॒मसु॑स्रोद्धृ॒दो वा॒ मन॑सो वा॒ सम्भृ॑तं॒ चक्षु॑षो वा । तद॑नु॒ प्रेत॑ सु॒कृता॑मु लो॒कं यत्र॒ ऋष॑यो जग्मुः प्रथम॒जाः पु॑रा॒णाः ॥ ५८ ॥

दृष्टाः आद्या जगती त्रयः पादा एकादशार्णाः चतुर्थश्चतुर्दशार्णः । हे ऋत्विजो यूयं तदनु प्रेत प्रजापतिकृतं कर्मानुगच्छतानुसारत प्रजापतिशरीरादुत्पन्नं यत्कर्म वैदिकं तत्कुरुतेत्यर्थः । तत्र कर्मणि कृते सति सुकृतां पुण्यवतां लोके उ एवार्थे स्वर्गमेव प्रेतेत्यनुषङ्गः स्वर्गं गच्छत । प्रथमजाः पूर्वोत्पन्नाः पुराणाः पुरापि नवा अजरामरा ऋषयो यत्र लोके जग्मुः । तत्किं कर्म यत्प्रजापतेराकूता-दभिप्रायात् हृदो वा हृदय बुद्धेः मनसः सङ्कल्पात्मकात् चक्षुषः चक्षुरुपलक्षणम् चक्षुरादीन्द्रियेभ्यश्च समसुस्रोत् संस्रुतं प्रसृतम् ब्रह्मणा यत्सर्वात्मना सृष्टं कर्म तत्कृत्वा स्वर्लोकं गच्छतेत्यर्थः । कीदृशं कर्म सम्भृतं सम्भारैः पुष्टं पूर्णसामग्रीकम् । मनःप्रवर्तक आत्मनो धर्म आकूतम । समसुस्रोदिति स्रु गतावित्यस्माल्लङ् बहुलं छन्दसीति जुहोत्यादित्वात् श्लौ द्वित्वम् ॥ ५८ ॥

एवमष्टचत्वारिंशदर्णा महापङ्क्तिः। हे अग्ने स त्वं नोऽस्मान् वृष्ट्या कृत्वा अव रक्ष वृष्टिं कृत्वा पालयेत्यर्थः। किं कृत्वा दिवो द्युलोकात् पर्जन्यात् मेघात् अन्तरिक्षादाकाशात् पृथिव्याः भूमेः सकाशाद्दान्यत्र वा यत्र जलं ततः प्रदेशाज्जलमादायेति शेषः। यस्त्वं श्रितः इन्द्रियाणि सुषुम्णां नाड़ी माश्रितः सन् विश्वस्य मूर्धन् मूर्धनि शिरसि अधितिष्ठसि मूर्धन्शब्दात्सुपां सुलुगिति सप्तम्या लुक् सर्वेषां मूर्ध्नि उपरि रविरूपेण दीप्यसे इत्यर्थः। यस्य ते तव समुद्रे समुनत्त्यार्द्रीभवतीति समुद्रोऽन्तरिक्षं तव हृदयं मध्यभागः भुवि पादौ स्वर्लोके शिरोऽन्तरिक्षे मध्यभागः त्रिलोकव्यापीत्यर्थः। यस्य ते अप्सु जलेषु आयुः जीवनं जलाधीनं जीवनं तव जलादृचा जायन्ते ततोऽग्निरित्यग्नेर्जलाधीनजीवनत्वम्। किं बहुना हे अग्ने अपो जलानि दत्त देहि उदधिं भिनत्त भिन्द्धि। उदकानि दधाति धीयन्ते वात्रेत्युदधिर्मेघः तं विदारय मेघं भिन्द्धि जलं देहीत्यर्थः। पेषंवासवाहनधिषु चेति उदकस्योदादेशः। दत्त भिनत्तेत्युभयत्र व्यत्ययो बहुलमिति वचनव्यत्ययः॥ ५५ ॥

इ॒ष्टो य॒ज्ञो भृगु॑भिराशी॒र्दा वसु॑भिः। तस्य॑ न इ॒ष्टस्य॑ प्री॒तस्य॒ द्रवि॑णे॒हाग॑मेः॥ ५६ ॥

का० अध्वरसमिष्टयजुरन्त इष्टो यज्ञ इति प्रत्यृचमपरे[1]। समिन्द्र ण इत्यादिनवानामध्वरसमिष्टयजुषां(८,१५) होमान्ते इष्टो यज्ञः इष्टोऽग्निरिति द्वाभ्यामपरे आग्निके द्वे समिष्टयजुषी जुहोतीति सूत्रार्थः। यज्ञदेवत्या उष्णिग्गालवदृष्टा अष्टविंशत्यक्षरत्वात्। अध्वर्युर्द्रव्यं प्रत्याह। द्रविण द्रव्य तस्य यजमानस्य इह सदने त्वमागमेः आगच्छ आङ्पूर्वाद्गमेश्छत्वाभावे लिङि मध्यमैकवचने रूपम्। कीदृशस्य यजमानस्य नोऽस्माकमिष्टस्य वल्लभस्य प्रीतस्य अस्मासु स्निग्धस्य। तस्य कस्य यस्य यजमानस्य यज्ञो भृगुभिः भृगुगोत्रैर्ब्राह्मणैः वसुभिर्वस्वादिदेवैश्च इष्टः सम्पादितः। कीदृशो यज्ञः आशीर्दाः आशिषोऽभिलषितपदार्थान्ददातीत्याशीर्दाः क्विप्। विप्रैर्देवैर्यस्य यज्ञः कृतस्तस्य गृहे त्वं धन सर्वदा तिष्ठेत्यर्थः॥ ५६ ॥

[1]—१८,६,१८।

का० आग्निमारुतस्तोत्रस्य पुरस्ताद्विमोचनं परिधिसन्ध्योर्दिवो मूर्धेति प्रत्यृचम्[१] । यज्ञायज्ञियस्तोत्रप्रकरणात्प्राक् दिवो मूर्धेति ऋग्द्वयेन दक्षिणोत्तरयोः परिधिसन्ध्योरुपस्पृश्याग्निविमोचनं करोतीति सूत्रार्थः । आग्नेयी परोष्णिक् आद्यावष्टकौ तृतीयो द्वादशकः सा त्रिपादा परोष्णिक् अत्राद्यो दशकः द्वितीयः सप्तकः तृतीयो द्वादशकस्तेनैकाधिका । हे अग्ने यस्त्वमीदृशोऽसि तस्मै पथे मार्गाय स्वर्गमार्गरूपाय नमस्कारोऽस्तु अग्निमुखो हि देवयानपन्थाः श्रुतावुक्तः । कीदृशस्त्वम् दिवो मूर्धा स्वर्लोकस्योत्तमाङ्गस्थानीयः । पृथिव्या नाभिः मध्यस्थानीयः नह्यतेऽनया सा नाभिः नहति बध्नाति जीवनेनेति नाभिः नहो भश्चेति इञ् प्रत्ययो चिच्च

दिवो मूर्द्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुः शर्म्म सप्रथा नमस्पथे ॥ ५४ ॥

विश्वस्य मूर्द्धन्नधितिष्ठसि श्रितः समुद्रे ते हृदयमप्स्वायुरपो दत्तोदधिम्भिन्त । दिवस्पर्ज्जन्या

दन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्याव ॥ ५५ ॥

भान्तादेशः नित्त्वादाद्युदात्तः ञ्नित्यादि नित्यमित्युक्तेः पृथ्वी लोकानां जीवनमग्निर्निबन्धनमिति भावः । अपां जलानामोषधीनां वृक्षादीनाञ्च ऊर्क् रसः सारः । विश्वायुः विश्वं सर्वमायुर्यस्य सः बहुजीवनः यद्वा विश्वेषां सर्वेषां प्राणिनामायुर्जीवनम् तदधिजीवनत्वात्तेषामिति भावः । शर्म्म शरणभूतः सर्वेषाम् । सप्रथाः प्रथनं प्रथो विस्तारः प्रथसा सह वर्तमानः सप्रथाः तिर्यगूर्ध्वमधस्थानवच्छिन्नप्रभावः । ईदृशायाग्नये नमः ॥ ५४ ॥ १——१८,६,१०।

आग्नेयी महापङ्क्तिर्जगती आद्यो व्यूहेन षडक्षरः द्वितीयः सप्तकः तृतीयो दशकः चतुर्थोऽष्टकः पञ्चमो नवकः षष्ठो नवकः

वृध्नविष्टपोपरिष्टात् स्वीरुहाणाः स्वर्गं लोकमारोहन्तः सन्त उत्तमं नाकं दुःखरहितं श्रेष्ठं लोकं गमेमेत्यनुवर्तते। रोहतेश्च हुल छन्दसीति शपि लुप्ते शानचि रूपम् रुहाणा इति। नास्त्यकं दुःखं यत्र स नाकः ॥ ५१ ॥

हे अग्ने यौ ते तवेमौ पक्षौ उत्तरदक्षिणौ। कीदृशौ अजरौ नास्ति जरा ययोस्तौ सदा नवौ। पतत्रिणौ पतत्रं पतनं ययोरस्ति तौ उत्पतनशीलौ। याभ्यां रक्षांसि राक्षसान् त्वमपहंसि नाशयसि उ एवं ताभ्यां पक्षाभ्यां वयं सुकृतां पुण्यकृतामेव लोकं पतेम उत्पतेम। यत्र सुकृल्लोके प्रथमजाः प्रथमोत्पन्नाः पुराणाः पुरातना ऋषयो मुनयो जग्मुः ॥ ५२ ॥

इमौ॑ ते प॒क्षाव॒जरौ॑ पत॒त्रिणौ॒ याभ्या॒ꣳ रक्षा॒ꣳस्यप॒हꣳस्य॑ग्ने। ताभ्यां॑ पतेम सु॒कृता॑मु

लो॒कं यत्र॒ऋष॑यो ज॒ग्मुः प्र॑थम॒जाः पु॑रा॒णाः ॥ ५२ ॥

इन्दु॒र्दक्षः॑ श्ये॒न ऋ॒तावा॒ हिर॑ण्यपक्षः शकु॒नो भु॑र॒ण्युः। म॒हान्त्स॒धस्थे॑ ध्रु॒व आ निष॑त्तो॒ नम॑स्ते अस्तु॒ मा मा॑ हिꣳसीः ॥५३॥

हे अग्ने यस्त्वमेतादृशस्तस्मै ते तुभ्यं नमोऽस्तु त्वं मां मा हिंसीः हिंसां मा कुरु। कीदृशस्त्वम् इन्दुः इन्दति ईष्टे इन्दुः ईश्वरः इदि परमैश्वर्ये चन्द्रवदाह्लादको वा। दक्षः उत्साहवान् श्येनपक्षिवदाकाशचारित्वाच्छ्येनः यद्वा शंसनीयगतिः। ऋतावा ऋतं सत्यं यज्ञ उदकं वास्यास्ति ऋतवा संहितायां दीर्घः। हिरण्यपक्षः सुवर्णशकलैर्हिरण्यरूपौ पक्षौ यस्य। शकुनः पक्ष्याकारः। भुरण्युः बिभर्तीति भुरण्युः भृञ औणादिकः कन्युप्रत्ययः पोषकः। महान् प्रभावेण। ध्रुवः स्थिरः। सधस्थे ब्रह्मणा सह स्थाने आ निषत्तः समन्ताद्विषण्णः। सह तिष्ठन्ति यत्रेति सधस्थं सधमादस्थयोश्छन्दसीति सधादेशः। नसत्तेत्यादिना निष्ठायां निपातः ॥५३॥

दित्यमस्मिन्नग्नौ प्रतिष्ठापयतीति(१९) श्रुतेः। स्वरिव सूर्य इव योऽर्कोऽग्निस्तमादित्ये जुहोमि स्थापयामि। अयमग्निरर्कइम तदग्निम मुष्मिन्नादित्ये प्रतिष्ठापयतीति(२०) श्रुतेः। स्वरिव स्वर्देवः नकारो निश्चितार्थः स्वर्न देव एव यः शुक्र आदित्यस्तमादित्ये एव जुहोमि स्थापयामि। असौ वाऽआदित्यः शुक्रस्तं पुनरमुत्र दधातीति(२१) श्रुतेः। स्वः स्वर्गः स इव ज्योतिरग्निः स्वर्गप्रदत्वादग्नेः स्वर्गोपमानम् तमग्निमग्नावेव जुहोमि स्थापयामि। अयमग्निर्ज्योतिस्तं पुनरिह ददातीति(२२) श्रुतेः। एवमग्निं सूर्ये सूर्यमग्नौ सूर्ये च सूर्यमग्नावग्निं च सन्धाय किं बहुना तयोः संयोगं कृत्वा सूर्यमुत्तमं करोति स्वर्ण सूर्यः स्वाहेति। स्वः न सर्वदेवरूप इव यः सूर्यस्तं स्वाहा उत्तमं करोमि अव्ययानामनेकार्थत्वात्स्वाहाशब्द उत्तमार्थः सर्वे देवा भिन्ना भ्रान्त्या भासन्ते वस्तुतः सूर्य एव नानारूपोऽस्तीतीवशब्दार्थः। असौ वाऽआदित्यः सूर्योऽमुत्तदादित्यमस्य सर्वस्योत्तमं दधाति तस्मादेषोऽस्य सर्वस्योत्तम इति(२३) श्रुतेः।

**अ॒ग्निं यु॑नज्मि॒ शव॑सा घृ॒तेन॑ दि॒व्यꣳ सु॑प॒र्णं वय॑सा बृ॒हन्त॑म्। तेन॑ व॒यं ग॑मेम ब्र॒ध्नस्य॑ वि॒ष्टप॒ꣳ स्वो॒ रुहा॑णा॒ अधि॒ नाक॑मुत्त॒मम्॥५१**

एवं पञ्चाहुतिभिरग्न्यर्कयोरैक्यं विधाय सर्वदेवेष्वर्कस्योत्तमत्वं कृतमिति भावः॥ ५०॥ १—१८,९,१६। २—५,३,५,१७।

का० अग्नियोजनं प्रातरनुवाकमुपाकरिष्यन् परिधीनालभ्याग्नं यथापूर्वमग्निं युनज्मीति प्रत्यृचम्¹। अस्यार्थः। प्रातरनुवाकोपाकरणात्प्राक् यथापूर्वमित्युपधानक्रमेण ऋक्त्रयेण प्रत्येकं परिधीन् स्पृष्ट्वाग्नियोजनं करोतीति। अग्निदेवत्यास्तिस्रः द्वे त्रिष्टुभौ तृतीया पङ्क्तिः। शवसा बलेन घृतेनाज्येन चाहमग्निं युनज्मि संयोजयामि युजिर्योगे रुधादिभ्यः श्नम्। कीदृशमग्निम् दिव्यं दिवि भवो दिव्यस्तम्। सुपर्णं शोभनं पर्णं पतनं यस्य तं सुगमनम्। वयसा धूमेन बृहन्तं वह्निर्धूमेन महान् भवति। अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरिति² श्रुतेः। किञ्च तेन युक्तेनाग्निना ब्रध्नस्यादित्यस्य विष्टपं लोकं वयं गमेम गच्छेम। गमेराशीर्लिङि लिङ्याशिष्यङिति अङ्प्रत्यये उत्तमबहुवचने रूपम्। विगतस्तापो दुःखं यस्य स विष्टपो लोकः ततोऽधि उपरि

वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा। अत्र द्वौ तच्छब्दौ वर्तेते तत्रैकस्य यच्छब्दपरिणामः कार्यः। हे वरुण यजमानः हविर्भिः दत्तैः यद्धनपुत्रादिकमाशास्ते इच्छति यत्कामस्तुभ्यं हविर्ददाति तत् यजमानेष्टं त्वा त्वामहं यामि याचामि तत् त्वया यजमानाय दीयतामित्यर्थः। यामीति याच्ञाकर्मसु पठितः[1]। अथापि वर्णलोपो भवति तत्त्वायामीति यास्कोक्ते राकारलोपः कीदृशोऽहम् ब्रह्मणा त्रयीलक्षणेन वेदेन वन्दमानः त्वां स्तुवानः[2]। किञ्च हे उरुशंस शंसनं शंसः स्तुतिः शंसु स्तुतौ उरुर्महान् शंसः स्तुतिर्यस्य स उरुशंसः तत्सम्बुद्धौ हे बहुस्तुते इहास्मिन् स्थाने अहेडमानः हेडते क्रुध्यति हेडमानः न हेडमानोऽहेडमानः अक्रुध्यन् सन् त्वं बोधि बुध्यस्व त्वं मत्प्रार्थनां जानीहीत्यर्थः। हुझल्भ्यो हेर्धिः वा छन्दसीति हेरपित्त्वाद्गुणः धलोपश्छान्दसः। किञ्च नोऽस्माकमायुर्जीवनं

तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः। अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुप्रमोषीः ॥४९॥

स्वर्णघर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः स्वाहा स्वर्णज्योतिः स्वाहा स्वर्णसूर्यः स्वाहा ॥ ५० ॥

मा प्रमोषीः मा चोरय मुष स्तेये लुङ् न माङ्योगइति अडभावः पूर्णमायुश्च देहीत्यर्थः ॥४९॥

पञ्च यजूंष्यग्निदेवत्यानि। सूर्याहर्दैववाची स्वःशब्दः। न इवार्थे। अर्काश्वमेधसन्ततिसंज्ञाः पञ्चाहुतयः। तथाच श्रुतिः। अथार्काश्वमेधयोः सन्ततीर्जुहोतीति[2]। अस्यार्थः। अर्कोऽग्निः अश्वमेधो रविस्तयोः सन्ततयः सन्तन्वन्तीति संयोजयन्तीति सन्ततयस्ताः अग्न्यादित्यैक्यकारिका आहुतय इत्यर्थः। तथाच श्रुतिः। अग्निरर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानैवास्तां तौ देवा एताभिराहुतिभिः समतन्वन्त्समदधुरिति(१८)। तदनुसारेण व्याख्या यथा। न इवार्थे स्वः न स्वरिव अहरिव दिनकरत्वात्सूर्यस्याहरुपमानम् स्वरिव दिनमिव यो घर्मः आदित्यः तं स्वाहा अग्नौ जुहोमि तमग्नाविति शेषः पूरणीयः आदित्यमग्नौ स्थापयामि असौ वा आदित्यो घर्मोऽग तदा

१—निघ० ३,१९,२; २—९,४,३,१८।

श्वाबादिकं ददातीत्यार्द्रदानुः। शम्भूः शमैहिकं सुखं भावयति प्रापयतीति शम्भूः। मयोभूः मयः पारलौकिकं सुखं भावयतीति मयोभूः स्वर्लोकरूपोऽसि। असौ वै लोकः समुद्र इति[१] श्रुतेः। स मामभिवाहि ॥ मरुतां वातानामयं मारुतः। मरुतां शुक्रज्योतिःप्रभृतीनां गणः तन्निवासत्वात्। अन्तरिक्षलोको वै मारुत इति(६) श्रुतेः। शम्भूः मयोभूः त्वं मामभिवाहि पूर्ववत्। अव अवनं रक्षणं सौव्यतीत्यवस्यः षिवु तन्तुसन्ताने क्विप् छ्वोः शूडनुनासिके चेति ऊठि कृते यणादेशः। अयं वै लोकोऽवस्यूरिति(७) श्रुतेः। भूलोकरूपोऽसि दुवस्वान् दुवोऽन्नं हविर्लक्षणं विद्यते यस्य सः शम्भूरित्यादि पूर्ववत् ॥ ४५ ॥ १—९,४,२,५। २—१८,६,६।

**यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः। ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ॥ ४६ ॥**

**या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते ॥ ४७ ॥**

**रुचं नो धेहि ब्राह्मणेषु रुचꣳ राजसु नस्कृधि। रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥ ४८ ॥**

का० नव जुहोति यास्त इति प्रतिमन्त्रम्[२]। अस्यार्थः। पूर्वसंस्कृताज्यात्स्रुक्स्रुवकादादाय नवाहुतीर्जुहोति यास्ते अग्ने या वो देवाः रुचं नः तत् त्वा यामि एतास्तिस्रः स्वर्णेति कण्डिकायां पञ्चयजुर्भिः पञ्चेति नव। द्वे व्याख्याते(१३,२२—२३) ॥ ४६ ॥ ४७ ॥

अग्निदेवत्यानुष्टुप् प्रथमो नवकः हे अग्ने नोऽस्माकं ब्राह्मणेषु अस्मत्सम्बन्धिषु विप्रेषु रुचं दीप्तिं धेहि आरोपय। नोऽस्माकं राजसु क्षत्रियेषु रुचं कृधि कुरु श्रुशृणिवत्यादिना हेर्धित्वम् शपो लुक्। विश्येषु वैश्येषु शूद्रेषु चास्माकीनेषु रुचं कुरु। किञ्च मयि विषये रुचा सह रुचं धेहि अविच्छिन्नां रुचं धेहीत्यर्थः। यद्वा ब्राह्मणराजविट्शूद्रेषु या रुक् तां नोऽस्माकं धेहि देहि। शिष्टं पूर्ववत् ॥ ४८ ॥

सुखप्रदः याज्ञिकानां चन्द्रलोकाभिरक्तत्वात्। तथा च सूर्य्यरश्मिः सूर्य्यस्येव रश्मयः किरणा यस्य। सुषुम्ण इति सुयज्ञिय इत्येतत्सूर्य्यरश्मिरिति सूर्य्यस्येव हि चन्द्रमसो रश्मय इति(९) श्रुतेः। तस्मै चन्द्रमसे स्वाहा वाट्॥ तस्य चन्द्रमसः नक्षत्राणि नाम अप्सरसः कीदृश्यः भेकुरयः भां कान्तिं कुर्वन्तीति भेकुरयः पृषोदरादित्वात्साधुः। चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम भेकुरयो नामेति भाकुरयो ह नामैते भाः हि नक्षत्राणि कुर्व्वन्तीति(९) श्रुतेः। ताभ्यो नक्षत्राप्सरोभ्यः स्वाहा॥ ४०॥

यो वातो वायुर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् सुहुतमस्तु। कीदृशो वातः इषिरः इष गतौ

क्षत्रम्पातुतस्मै स्वाहावाट्ताभ्यः स्वाहा॥ ४०॥

इषिरोविश्वव्यचावातोगन्धर्वस्तस्यापोऽअप्सरसऽऊर्ज्जोनाम। सनइदम्ब्रह्मक्षत्रम्पातुतस्मै स्वाहावाट्ताभ्यः स्वाहा॥ ४१

दिवादिः इष्यति गच्छतीति इषिरः औणादिक इरप्रत्ययः शीघ्रगमनः। विश्वव्यचाः विश्वस्मिन् व्यचो गमनं यस्य स विश्वव्यचाः सर्वतोगमनः। इषिर इति क्षिप्र इत्येतद्विश्वव्यचा इत्येष हीदं सर्वं व्यचः करोतीति(१०) श्रुतेः॥ तस्यापो नामाप्सरसः वातो ह गन्धर्वोऽद्भिरप्सरोभिर्मिथुनेन सहोच्चक्रामेति(१०) श्रुतेः। कीदृश्यः ऊर्जः ऊर्जयन्ति जीवयन्ति धान्योत्पादनेनेत्यूर्जः। आपो वा ऊर्जोऽद्भ्यो ह्यूर्जायत इति(१०) श्रुतेः। ताभ्योऽद्भ्योऽप्सरोभ्यः स्वाहा॥ ४१॥

यो यज्ञो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्। कीदृशो यज्ञः भुज्युः भुनक्ति पालयति भूतानीति भुज्युः। यज्ञो हि सर्वाणि भूतानि भुनक्तीति(११) श्रुतेः। सुपर्णः शोभनं पर्णं पतनं स्वर्गगमनं यस्य सः यद्वा स्वग गतौ

भोग्याः। कीदृश्य ओषधयः मुदः मोदन्ते जना याभिस्ता मुदः ओषधयो वै मुदः ओषधीभिर्हीद७ं सर्वं मोदत इति(७) श्रुतेः। ओषधयोऽस्य भोग्याः। तथाच श्रुतिः। अग्निर्ह गन्धर्व ओषधीभिरप्सरोभिर्मिथुनेन सहोच्चक्रामेति(७)। ताभ्य ओषधीभ्यः स्वाहा सुहुतमस्तु॥ ३८॥

यः सूर्यो गन्धर्वः स नोऽस्माकमिदं ब्रह्म क्षत्रं च पातु। कीदृशः संहितः सन्धात्यहोरात्रे इति संहितः असौ वा आदित्यः स७ंहित एष ह्यहोरात्रे सन्धातीति(८) श्रुतेः। विश्वसामा विश्वानि सर्वाणि सामानि प्रतिपादकत्वेन यस्य स

स७ंहितोविश्वसामासूर्य्यौगन्धर्वस्तस्यमरीचयोप्सरसऽआयुवोनाम। सनऽइदम्ब्रह्म

क्षत्रम्पातुतस्मैस्वाहावाट्ताभ्यःस्वाहा॥ ३९॥

सुषुम्णःसूर्य्यरश्मिश्चन्द्रमागन्धर्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयोनाम। सनऽइदम्ब्रह्म

विश्वसामा सर्वसामरूपो वा। विश्वसामेत्येष ह्येव सर्व७ं सामेति(८) श्रुतेः। यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानीति च। तस्मै सूर्याय स्वाहा वाट्॥ तस्य सूर्यस्य मरीचयो नामाप्सरसः तेजस्सरणशीलाः सूर्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्मिथुनेन सहोच्चक्रामेति(८) श्रुतेः। कीदृश्यो मरीचयः आयुवः आ समन्तात्युवन्ति मिश्रीभवन्त्यायुवः। आयुवाना इव हि मरीचयः प्लवन्त इति(८) श्रुतेः। ताभ्यो मरीचिभ्यः स्वाहा॥ ३९॥

यश्चन्द्रमा गन्धर्वः स नोऽस्माकमिदं ब्रह्म क्षत्रं च पातु। कीदृशः सुषुम्णः शोभनं सुम्नं सुखं यस्मात् सुयज्ञियः यज्ञद्वारा

गृहीतं गृहीत्वा विभज्य द्वादशांशं कृत्वा ऋताषाडित्यादिद्वादशमन्त्रैः प्रतिस्वाहाकारं राष्ट्रभृत्सञ्ज्ञा आहुतीर्जुहोति व्यतिषक्तेषु द्वादशमन्त्रेषु पूर्वो मन्त्रः स्वाहा वाडित्यन्तः उत्तरस्ताभ्यः स्वाहेत्यन्तः तत्रो मन्त्रे यानि पुंलिङ्गानि स न इदं ब्रह्मेत्यादीनि तानि व्यवहितपठितान्यप्यपकृष्य पठित्वा पूर्वो मन्त्रः सम्पाद्यः यानि च स्त्रीलिङ्गानि तस्यौषधयोऽप्सरस इत्यादीनि तान्यु-त्कृष्योत्तरो मन्त्रः सम्पाद्य इत्यर्थः । द्वादश यजूंषि गन्धर्वाप्सरोदेवत्यानि । तत्रायं विभागः । ऋताषाडृतधामाग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाडिति वाडन्तः पूर्वः पूर्वो मन्त्रः तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहेति स्वाहान्त उत्तर उत्तरो मन्त्रः पूर्वो गन्धर्वदेवत्यः । उत्तरोऽप्सरोदेवत्यः एवं पञ्चकण्डिकास्वप्यग्रे मन्त्रविभागो ज्ञेयः । तथा च श्रुतिः । पुꣳसे पूर्वस्मै जुहोत्यथ स्त्रीभ्यः पुमाꣳसं वद्वीर्येणादधात्येकस्मादिव पुꣳसे जुहोति बह्वीभ्य इव स्त्रीभ्यस्तस्मादप्येकस्य पुꣳसो बह्व्यो जाया

**ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ३८**

भवन्त्युभाभ्यां वाट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः पुमाꣳसमेव तद्वीर्येणादधातीति(१) ॥ तथा चैवमृताषाट् संहितः सुषुम्णः इषिरः भुज्युः प्रजापतिरिति षण्णां पूर्वमन्त्राणामृताषाडित्यादिनामका गन्धर्वा देवताः तस्यौषधयः तस्य मरीचयः तस्य नक्षत्राणि तस्यापः तस्य दक्षिणाः तस्य ऋक्सामानीति षण्णामुत्तरमन्त्राणामोषध्यादिनामका अप्सरसो देवताः ॥ अथ मन्त्रार्थः । योऽग्निर्गन्धर्वः स नोऽस्माकमिदं ब्रह्म ब्राह्मणजातिमिदं क्षत्रं क्षत्रजातिं च पातु रक्षतु । कीदृशो गन्धर्वः ऋताषाट् ऋतं सत्यं सहत इति ऋतषाट् सत्यं सहते असत्ये कुपितो भवतीत्यर्थः सहेः साडः स इति षत्वम् पूर्वपदस्य छान्दसो दीर्घः । तथा ऋतधामा ऋतं सत्यमविनश्वरं धाम स्थानं यस्य स ऋतधामा । य ईदृशोऽग्निः तस्मै अग्नये गन्धर्वाय स्वाहा वाट् वषट्कारेण सुहुतमस्त्वित्येको मन्त्रः ॥ तस्याग्नेर्गन्धर्वस्यौषधयो व्रीह्याद्या नाम नाम्ना अप्सरसः स्त्रीत्वेन

ओषधीषु च पयो धाः। दिवि स्वर्गे च पयो धाः। अन्तरिक्षे च पयो धाः। किञ्च मह्यं मदर्थं प्रदिशः दिशो विदिशश्च पयस्वतीः पयस्वत्यो रसयुताः सन्तु आहुतिपरिणामेन पृथिव्यादयो ममाभीष्टदा भवन्त्वित्यर्थः ॥ ३६ ॥ १—१८,५,६-९।

का० स्रुवं प्रास्य परिश्रित्स्पृक् कृष्णाजिनमास्तीर्य पुच्छादुत्तरꣳ शेषेऽपः कृत्वाभिषेकसामर्थ्यात् क्षीरोदके वा वाजपेयिकानीति श्रुतेस्तत्राभिषिच्यते ब्रह्मवर्चसकाममित्यन्वारब्धो देवस्य त्वेति[२]। अस्यार्थः। कर्मापवर्गे औदुम्बरं चतुष्कोणं स्रुवमाहवनीये प्रक्षिप्याग्निपुच्छादुत्तरदिशि परिश्रित्सु लग्नं प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तत्र स्थितो ब्रह्मवर्चसकामो यजमानश्चयनकर्तान्वारब्धोऽध्वर्युणा सर्वौषधशेषेणाभिषिच्यते। किं कृत्वा सर्वौषधशेषेऽपो जलानि कृत्वा अभिषेकस्यैव द्रव्यसाध्यत्वात् अयं पूर्वपक्षः।

**पयः पृथिव्याम्पयऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ३६ ॥**

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ३७ ॥**

सिद्धान्तमाह क्षीरोदके वेति वा पूर्वपक्षनिरासे शेषे जलसेको न यतस्तत्र क्षीरोदके विद्येते वाजपेयिकानीति[१] श्रुतेः। अत्र वाजपेयसम्बन्धीनि वाजप्रसवीयानि श्रूयन्ते तान्युदकक्षीरे स्त एव औदुम्बरे पात्रेऽप आसिच्य पयश्चेत्युक्तेः[२] अतस्तस्मिन् मिश्रेणैवाभिषेको न जलसेक इत्यर्थः। देवस्य त्वा। व्याख्यातम्। सरस्वत्यै लिङ्गोक्तदेवतं यजुः। सरस्वत्यै षष्ठ्यर्थे चतुर्थी सरस्वती सम्बन्धिन्या वाचो वाण्या यन्तुर्नियन्तुः प्रजापतेः यन्त्रेण नियमेन अग्नेश्च साम्राज्येन चक्रवर्तित्वेन हे यजमान त्वामभिषिञ्चामि मत्कृताभिषेकेण वाक्सिद्धिरैश्वर्यं साम्राज्यं च तव सम्पद्यन्तामित्यर्थः ॥ ३७ ॥ २—९,३,४,७। ३— का० १८,५,१६।

का० द्वादशगृहीतं त्रिशाहं जुहोत्यृताषाडिति प्रतिस्वाहाकारꣳ राष्ट्रभृतो वषट्कारान्तः पूर्वः पूर्वो मन्त्रः। आज्याद् द्वादश-

अद्यास्मिन्दिने वाजोऽन्नमन्नाधिष्ठात्री देवता नोऽस्मान् प्रसुवाति प्रेरयतु अनुजानातु दानार्थमिति शेषः अन्नदानेच्छास्माकं भवत्वित्यर्थः। वाजः ऋतुभिः कालैः सह देवान् कल्पयाति यथास्थानं कल्पयतु लेटोऽडाटौ यस्मिन् काले यो देवो यष्टव्यस्तं तत्र यजत्वित्यर्थः। हि चकारार्थः वाजश्च मा मां सर्ववीरं सर्वे वीराः पुत्रपौत्रादयो यस्य स सर्ववीरस्तादृशं जजान जनयतु छन्दसि लुङ्लङ्लिटः पुत्रादियुतं मां करोत्वित्यर्थः। ततो वाजपतिः सन्नावः सन्नहं विश्वा आशा सर्वा दिशो वशीकुर्यामित्यर्थः ॥ ३३ ॥

वाजोऽन्नं नोऽस्माकं पुरस्तादस्तु उतापि च नोऽस्माकं मध्यतो गृहमध्ये च वाजोऽस्तु। नोऽस्माकं वाजो हविषा कृत्वा देवान् वर्धयाति वर्धयतु पुष्णातु। हि चार्थे। वाजो मां सर्ववीरं पुत्रादियुतं चकार करोतु। वाजपतिरन्नपालकः सन्नहं विश्वा आशाः सर्वा

**वाजः पुरस्तादुत मध्यतो नो वाजो देवान्हविषा वर्द्धयाति। वाजो हि मा सर्ववीरञ्चकार सर्वा आशा वाजपतिर्भवेयम्॥३४॥**

**सम्मा सृजामि पयसा पृथिव्याः सम्मा सृजाम्यद्भिरोषधीभिः। सोऽहं वाजꣳ सनेयमग्ने॥ ३५ ॥**

दिशो भवेयम् दिग्रूपता व्यापकता प्रार्थ्यते यद्वा विश्वा आशा भवेयं प्राप्नुयाम् वशीकुर्यामित्यर्थः। भू प्राप्तौ ॥ ३४ ॥

हे विराजौ। दशकास्त्रयो विराडेकादशका वेत्युक्तेरेकादशाक्षरत्रिपादा विराट् तृतीयो व्यूहेन दशकस्तेनैकोना सोऽहमिति तच्छब्दश्रवणाद्यदोऽध्याहारः हे अग्ने योऽहं पृथिव्याः पयसा पृथिवीसम्बन्धिरसेन मामात्मानं संसृजामि संयोजयामि। अद्भिरोषधीभिश्च मां संसृष्टपयोऽवौषधिशरीरः सन्वाजमन्नं सनेयं सम्भजेयम्। यद्वा व्यत्ययेनास्मच्छब्दस्य युष्मदादेशः। हे अग्ने योऽहं त्वं पृथिव्याः पयसाद्भिरोषधीभिश्च त्वां संसृजामि होमेन सोऽहं वाजं सनेयम् ॥ ३५ ॥

हे अग्ने त्वं पृथिव्यां पयो रसं धाः धेहि स्थापय दधातेर्लङि मध्यमैकवचने रूपम् ॥ बहुलं छन्दस्यमाङ्योगेऽपीति अडभावः।

विश्वे अन्ये च सर्वे गणदेवता वसवो रुद्रा आदित्याश्च ऊती ऊत्या पूर्वसवर्णः अनेन तर्पणेन निमित्तेनागमन्तु हृत्यश्च माग- च्छन्त्वित्यर्थः। विश्वे देवा च गणदेवता नोऽस्माकमवसान्नेन हविषा निमित्तेन हविर्ग्रहणायागमन्तु तदागमनेन च विश्वे सर्वेऽग्नयः गार्हपत्यादयः समिद्धाः सम्यग्दीप्ता भवन्तु तदर्थं होमेनेत्यर्थः। तेषां देवानां तुष्ट्या विश्वं सर्वं द्रविणं धनं गोभूहिरण्यादि वाजोऽन्नं चास्मेऽस्माकमस्तु विभक्तेः शे-आदेशः ॥ ३१ ॥

तिस्रोऽन्नदेवत्याः तत्राद्यानुष्टुप् द्वे त्रिष्टुभौ। नोऽस्माकं वाजोऽन्नं सप्त प्रदिशः भूरादिलोकत्रयं प्राच्यादिदिक्चतुष्कम्

विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः। विश्वे नो देवा अवसागमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥ ३१ ॥

वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः। वाजो नो विश्वैर्देवैर्धनसाताविहावतु ॥ ३२ ॥

वाजो नो अद्य प्रसुवाति दानं वाजो देवाँ२ ॥ ऋतुभिः कल्पयाति। वाजो हि मा सर्ववीरं जजान विश्वा आशा वाजपतिर्जयेयम् ॥ ३३ ॥

परावतः दूरस्थाश्चतस्रश्च महर्जनतपःसत्याख्याश्चापूरयन्त्विति शेषः वाशब्दश्चार्थः यद्वा अस्माकं वाजोऽन्नं सप्त प्रदिशश्चतस्रो महराद्याश्चावतु प्रीणातु प्रशब्देन प्रकृष्टं लोकत्रयं दिशः प्राच्याद्याः परावच्छब्दो दूरार्थः महरादयो हि लोकत्रयमतीत्य वर्तन्ते अस्मद्दत्तान्नेन सप्त लोका दिक्चतुष्कञ्च तृप्यन्त्वित्यर्थः। किञ्च धनसातौ षन् सम्भक्तौ क्तिनन्तो निपातः धनस्य सातौ सम्भजनकाले प्राप्ते वाजोऽन्नं नोऽस्मान्विश्वैर्देवैः सहावतु पालयतु इहास्मिन् लोके यज्ञे वा यदास्माकं धनेच्छा जायते तदास्माकं देवतर्पण- क्षमं बह्वन्नमस्त्विति वाक्यार्थः ॥ ३२ ॥

वा कल्पताम्। यज्ञो यज्ञेनैव क्लृप्तो भवतु नाहं यज्ञक्लृप्तौ समर्थः। यज्ञेन यज्ञमयजन्त देवा इति[1] श्रुतेः। किञ्च स्तोमयजुऋक्‌सामबृहद्रथन्तराणि च यज्ञेन क्लृप्तानि भवन्त्वित्यनुषङ्गः। स्तोमस्त्रिवृत्पञ्चदशादिः यजुरनियतपादो मन्त्रः ऋक् नियतपादा साम गीतिप्रधानम्, बृहद्रथन्तरे तद्विशेषौ॥ वसोर्धारयैवमग्निमभिषिच्यात्मानं यजमानः प्रशंसति वयं यजमाना देवा भूत्वा स्वः स्वर्गमगन्म गतवन्तः गमेर्लुङि मन्त्रेऽपि मस्य नत्वे रूपम्। गत्वा चामृता अमरणधर्मिणोऽभूम भूताः भवतेर्लुङि रूपम्, ततः प्रजापतेर्हिरण्यगर्भस्य प्रजा अभूमेति फलवचनम्। अनेन वसोर्धारायाः सर्वकामप्राप्तिहेतुत्वमुक्तम्। वेट्स्वाहेति वसोर्धाराहोमार्थो मन्त्रः वेडिति वषट्कारः[१] वषट्कारो हैष परोऽक्षं यद्वेट्कारो वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति(१४) श्रुतेः॥ ॥ इति वसोर्धाराहोममन्त्राः समाप्ताः॥ २९॥

वाजस्यनुप्रसवेमातरम्महीमदितिन्नामवचसाकरामहे। यस्यामिदंविश्वम्भुवनमाविवेश तस्यान्नोदेवस्सविताधर्म्मसाविषत्॥ ३०॥

का० वप्रावत्सम्भृत्य चमसवत्स्रुवेण वाजप्रसवीयानि वाजस्येममिति आग्निकानि च वाजस्य न्विति[२]। देवयजनवत्सर्वौषधमौदुम्बरे चमसे सम्भृत्य तस्मात्सर्वौषधाच्चमसवत्स्रुवेणेत्यौदुम्बरेण चतुष्कोणपुष्करेण स्रुवेण वाजस्येमं प्रसव इति सप्तमन्त्रैः[३] सप्त वाजपेयसम्बन्धीनि वाजप्रसवीयानि हुत्वा वाजस्य नु प्रसवे इत्यादिसप्तमन्त्रैः प्रतिमन्त्रमाग्निकानि सप्त वाजप्रसवीयानि तस्मादेव सर्वौषधात्तेनैव स्रुवेण जुहोतीति सूत्रार्थः॥ व्याख्याता(९,५)॥ ३०॥ १—१३ अ० १६ क०। २—१८,५,४,५। ३—९,२३—३०।

तृप्तोधानाकद्दृष्टा वैश्वदेवो त्रिष्टुप्। अद्यास्मिन्दिने विश्वे सर्वे मरुतः सप्तकगणा आगमन्तु आगच्छन्तु छत्वाभावे रूपम्।

मित्रस्य सख्युर्यजमानस्य यन्ता नियामकोऽसि षष्ठ्यर्थे चतुर्थी मित्रायेति। कीदृशस्त्वं यमनो यमयतीति यमनः अग्निष्टोमादिकर्मसु सर्वान्नियमयन्। अत ऊर्जे विशिष्टान्नरसाय त्वा त्वामभिषिञ्चामीति शेषः। तथा वृष्ट्यै वर्षणाय त्वामभिषिञ्चामि। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति स्मृतेः। ततः प्रजानामाधिपत्याय प्रजास्वामित्वाय त्वाभिषिञ्चामि वसोर्धारया। तथाच श्रुतिः। प्रजानामाधिपत्यायेत्यन्नं वा ऊर्गन्नं वृष्टिरन्नं नैवैनमेतत्प्रीणाति यद्वेवाहेयं ते राण्मित्राय यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्यायेतीदं ते राज्यमभिषिक्तोऽसीत्येतन्मित्रस्य त्वं यन्तासीति(११—११) ॥ २८ ॥

**यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां ज्योतिर्यज्ञेन कल्पताᳬ स्वर्यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां**

**यज्ञो यज्ञेन कल्पताम्। स्तोमश्च यजुश्च ऋक् च साम च बृहच्च रथन्तरञ्च। स्वर्देवा अगन्मामृता अभूम**

**प्रजापतेः प्रजा अभूम वेट् स्वाहा ॥ २९ ॥**

कल्पहोमः कल्पतामिति लिङ्गात्। अथ कल्पान् जुहोतीति(१२) श्रुतेः। यज्ञेन निमित्तेनायुर्जीवनकालः कल्पतां साध्यतां प्राप्यताम्। प्राणचक्षुःश्रोत्रवाङ्मनांसि मम यज्ञेन क्लृप्तानि भवन्तु। आत्मा देहः आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति स्मृतेः। ब्रह्मा वेदो यज्ञेन कल्पताम्। ज्योतिः स्वयम्प्रकाशः परमात्मा यज्ञेन साध्यताम् पुण्यकर्मानुष्ठानं परमात्मज्ञाने कारणम्। ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति[१] श्रुतेः। कर्मणैव हि संसिद्धिमास्थिता जनकादय इति[२] स्मृतेश्च। स्वः स्वर्गः। पृष्ठं स्तोत्रं स्वर्गस्थानं

१—— १४, ९, २, ३४ २——भ० गी० ३, २०

रूपाय तापकरत्वाद्भाद्रपदस्याहर्पतित्वम्। मुग्धायाह्नं तुषारादिना मोहरूपाय दिवसाय तुषारबाहुल्यान्मुग्धमह आश्विनः। अमुग्धाय वैनंशिनाय विनश्यतीति विनंशी मस्जिनशोर्झलीति बाहुलकादझल्यपि नशेर्नुमागमः विनंश्येव वैनंशिनः स्वार्थे अण् अल्पघटिकावत्त्वेन विनाशशीलाय कार्त्तिकाय स्नाननियमादिना पापनाशकत्वादमुग्धाय मोहनिवर्तकाय कार्त्तिकाय। अविनंशिने आन्त्यायनाय न विनश्यतीत्यविनंशी तस्मै विनाशरहिताय अन्ते सर्वेषां नाशे भवमन्त्यं तदयनं चेत्यन्त्यायनं तत्र भव आन्त्यायनस्तस्मै सर्वनाशेऽप्यवशिष्टायात एवाविनंशिने विष्णुरूपाय मार्गशीर्षाय। मासानां मार्गशीर्षोऽस्मीति[1] स्मृतेः।

वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा। इयन्ते राण्मित्राय यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानान्त्वाधिपत्याय ॥ २८ ॥

आयुर्यज्ञेन कल्पताम्प्राणो यज्ञेन कल्पताञ्चक्षुर्यज्ञेन कल्पताꣳश्रोत्रं यज्ञेन कल्पतां वाग्यज्ञेन कल्पताम्मनो:

आन्त्याय भौवनाय भुवनानामयं भौवनः अन्ते स्वरूपे भव आन्त्यस्तस्मै लोकस्वरूपपुष्टिकरत्वात्तत्रभवत्वम् जाठराग्नेर्दीप्तिकरत्वेन पुष्टिकरत्वं पौषस्य। भुवनस्य भूतजातस्य पतये पालकाय माघाय स्नानादिना पुण्यजनकत्वेन पालकत्वं माघस्य। अधिपतये अधिकपालकाय फाल्गुनाय वर्षान्तत्वात्। प्रजापतये एवं द्वादशमासाधिष्ठात्रे प्रजापतिनामकाय देवाय। स्वाहेति होमार्थं सर्वत्र॥ हे अग्ने इयं ते तव राट् इदं राज्यं यत्र-यत्र यागाः क्रियन्ते तत्तवैव राज्यम्। किञ्च हे अग्ने त्वं

१—— भ० गी० १०,३५।

सार्धसंवत्सरो वृषः तादृशी गौस्त्र्यावी। द्विसंवत्सरो वृषो दित्यवाट् तादृशी गौर्दित्यौही। पञ्चावयो यस्य स पञ्चाविः सार्ध-द्विसंवत्सरो वृषः तादृशी गौः पञ्चावी। वत्सो वत्सरः त्रयो वत्सा यस्य स त्रिवत्सः त्रिवर्षो वृषः तादृशी गौस्त्रिवत्सा। तुर्यं वर्षं वहतीति तुर्यवाट् सार्धत्रिवर्षो वृषः तादृशी गौस्तुर्यौही। एते यज्ञेन कल्पन्ताम् ॥ २६ ॥

पष्ठं वर्षचतुष्कं वहतीति पष्ठवाट् चतुर्वर्षो वृषः तादृशी गौः पष्ठौही। उक्षा सेचनक्षमो वृषः। वशा वन्ध्या गौः। अतियुवा वृष ऋषभः। वेहद्गर्भघातिनी गौः। अनः शकटं वहतीत्यनड्वान् शकटवहनक्षमो वृषः। वहेः क्विपि सम्प्रसारणमनसो डकारः चतुरनडुहोरामुदात्त इति आमागमः। धेनुर्नवप्रसूता गौः एते मम यज्ञेन निमित्तेन कल्पन्तां स्वस्वव्यापारसमर्था

पष्ठवाट्च मे पष्ठौही च म उक्षा च मे वशा च मऽऋषभश्च मे वेहच्च मेऽनड्वाँश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम् ॥ २७ ॥

वाजाय स्वाहा प्रसवाय स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्पतये स्वाहाऽह्ने मुग्धाय स्वाहा मुग्धाय

भवन्तु यद्वा एते यज्ञेन मम कल्पन्तां मह्यमुपभोगक्षमा भवन्त्वित्यर्थः। एवं पूर्वत्र ॥ २७ ॥

अथ नामग्राहहोमः। तथाच श्रुतिः। अथ नामग्राहं जुहोति वाजाय स्वाहेत्येतद्वै देवाः सर्वान् कामानाप्त्वाथैतमेव प्रत्यक्ष-मप्रीणंस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षं प्रीणातीति(८)। वाजोऽन्नं तस्मै स्वाहेति होममन्त्रः वाजादीनि चैत्रादि-मासानां नामानि तन्नाम गृहीत्वा होतव्यमित्यर्थः। अन्नप्राचुर्याच्चैत्रोऽन्नरूपः। प्रसवायानुज्ञारूपाय जलक्रीडादौ अभ्यनुज्ञादाना-त्प्रसवो वैशाखः। अपिजाय अप्सु जायत इत्यपिजः सप्तम्या अलुक् जलक्रीडारतत्वादपिजो ज्येष्ठः। क्रतवे यागरूपाय चातु-र्मास्यादियागप्राचुर्यात् क्रतुराषाढः। वसवे वासयति वसुः चातुर्मास्ये यात्रानिषेधाद्वसुः श्रावणः। अहर्पतये दिनस्वामिने सूर्य-

रत्वेन स्थितान्युग्मान्स्तोमानष्टाचत्वारिंशत्पर्यन्तान् जुहुयादित्यर्थः। तत्फलं स्वर्गप्राप्तिः एतद्वै छन्दांᳶस्यन्वद्व्यातयामा वा अयुक्स्तोमा युग्मभिर्वयᳶस्तोमैः स्वर्गं लोकमयामेति तथैतद्यजमानो युग्मभिः स्तोमैः स्वर्गं लोकमेतीति(५) श्रुतेः। पूर्वपूर्वमुत्तरेण सम्बध्नाति वृक्षारोहणवत्। तथाच श्रुतिः। पूर्वंपूर्वमुत्तरेणोत्तरेण संयुनक्ति यथा वृक्षं रोहन्नुत्तरामुत्तराᳶ शाखाᳶ समालम्भᳶ

चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे विᳶशतिश्च मे विᳶशतिश्च मे चतुर्विᳶशतिश्च मे

चतुर्विᳶशतिश्च मेऽष्टाविᳶशतिश्च मेऽष्टाविᳶशतिश्च मे द्वात्रिᳶशच्च मे द्वात्रिᳶशच्च मे षट्त्रिᳶशच्च मे षट्त्रिᳶशच्च मे

चत्वारिᳶशच्च मे चत्वारिᳶशच्च मे चतुश्चत्वारिᳶशच्च मे चतुश्चत्वारिᳶशच्च मेऽष्टाचत्वारिᳶशच्च मे यज्ञेन कल्पन्ताम् ॥२५॥

त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट्

च मे तुर्यौही च मे यज्ञेन कल्पन्ताम् ॥ २६ ॥

रोहेत्तादृक्तदिति(६)। अष्टौका सङ्ख्या सङ्ख्येयनिष्ठा। एते यज्ञेन कल्पन्ताम्॥ २५॥

कण्डिकाद्वयं वयोहोमे विनियुक्तम्। तथाच श्रुतिः। अथ वयाᳶसि जुहोति त्र्यविश्च मइति पशवो वै वयाᳶसि पशुभिरेवैनमेतदन्नेन प्रीणात्यथो पशुभिरेवैनमेतदन्ने नाभिषिञ्चतीति(७)। त्र्यविः षण्मासात्मकः कालः त्रयोऽवयो यस्य स त्र्यविः

व्रतं नियमः। ऋतवो वसन्तादयः। तपः कृच्छ्रं चान्द्रायणादि। संवत्सरः प्रभवादिः। अहश्च रात्रिश्चाहोरात्रे दिननिशे। ऊरू चाष्ठीवन्तौ जानुनी च ऊर्वष्ठीवे अचतुरविचतुरेति निपातः। बृहद्रथन्तरे एतन्नामके सामनी। एतानि कल्पन्ताम् ॥ २३ ॥

अयुग्मस्तोमहोमार्था मन्त्राः। अथायुजस्तोमान् जुहोतीति(२) श्रुतेः। एकामादाय द्वितीयां विहाय तृतीयामादाय चतुर्थीं

एकाचमेतिस्रश्चमेतिस्रश्चमेपञ्चचमेपञ्चचमेसप्तचमेसप्तचमे नवचमे नवचमएकादशचमएकादशचमेत्रयोदशचमेत्रयो दशचमेपञ्चदशचमेपञ्चदशचमेसप्तदशचमेसप्तदशचमेनवदशचमेनवदशचमएकविꣳशतिश्चमएकविꣳशतिश्चमेत्रयो विꣳशतिश्चमेत्रयोविꣳशतिश्चमेपञ्चविꣳशतिश्चमेपञ्चविꣳशतिश्चमेसप्तविꣳशतिश्चमेसप्तविꣳशतिश्चमेनवविꣳ शतिश्चमेनवविꣳशतिश्चमएकत्रिꣳशच्चमएकत्रिꣳशच्चमेत्रयस्त्रिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥ २४ ॥

विहाय परित्यक्तसमसङ्ख्याकेनात्तविषमसङ्ख्याकेन मन्त्रेणायुग्मान् स्तोमाञ्जुहुयादित्यर्थः। आदरातिशयद्योतनार्था सर्वत्र पुनरुक्तिः। अयुग्मस्तोमहोमैः सर्वकामावाप्तिः। तथाच श्रुतिः। एतद्वै देवाः सर्वान् कामानाप्त्वायुग्भिः स्तोमैः स्वर्गं लोकमायंस्तथैवैतद्यजमानः सर्वान् कामानाप्त्वायुग्भिः स्तोमैः स्वर्गं लोकमेतीत्यादि(३) ॥ २४ ॥

एकैकवृद्धिकया युग्मस्तोमान् जुहोति अथ युग्मतो जुहोति(४) चतस्रश्च मइति। प्रथमं चतस्र इत्येतां सङ्ख्यामादाय चतुरुत्त-

विशेषौ। स्वगाकारः शंयुवाकः तेन यथास्वं देवतानां हविरङ्गीकारात्। प्रसिद्धमन्यत्। एते मम यज्ञेन निष्पन्नेन कल्पन्ताम्॥ २१॥

कण्डिकाद्वयेन यज्ञक्रतुहोमः। यथैतान्यज्ञक्रतून् जुहोत्यग्निश्च मइति[1] श्रुतेः। अग्निः चीयमानो वाऽग्निरग्निष्टोमो वा। घर्मः

**स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च मऽआधवनीयश्च मे वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम्॥ २१॥**

**अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम्॥ २२॥**

**व्रतं च म ऋतवश्च मे तपश्च मे संवत्सरश्च मेऽहोरात्रेऽऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम्॥ २३॥**

प्रवर्ग्यः। इन्द्रायार्कवते पुरोडाशमिति विहितो यागोऽर्कः। सौर्यं चरुमिति विहितः सूर्यः। प्राणो गवामयनम्। अश्वमेधः प्रसिद्धः। पृथिव्यदितिर्दितिर्द्यौर्देवताविशेषाः। अङ्गुलयः विराट्पुरुषावयवाः। शक्वरयः गावः। दिशः प्राच्याद्याः। एते यज्ञेन कल्पन्ताम्॥ २२॥

1 — ८,२,६,१।

अथ ग्रहान् जुहोति[1] कण्डिकाद्वये ग्रहहोममन्त्राः। अंश्वादयः सोमग्रहविशेषाः सोमप्रकरणे प्रसिद्धाः। अदाभ्यस्यैव गृह्यमाणत्व-दशायां पृथक्कृतस्य ग्रहणे रश्मिशब्देन निर्देशः रश्मीनां तद्ग्रहणे साधनत्वात् अप्सो रूपे सूर्यस्य रश्मिषु इति मन्त्रलिङ्गात्(८,४८)। अधिपतिशब्देन निग्राह्यो विवक्षितः तस्य ज्येष्ठत्वादाधिपत्यम् ज्येष्ठो वा एष ग्रहाणामिति श्रुतेः। प्रतिप्रस्थानशब्देन निग्राह्यो विवक्षितः द्विदेवत्यैः सह पाठात्। अन्ये प्रसिद्धाः॥ १९॥

अꣳशुश्च मे रश्मिश्च मे दाभ्यश्च मे धिपतिश्च म उपाꣳशुश्च मे न्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म

आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम्॥ १९॥

आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे

सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम्॥ २०॥

आद्यो वैश्वदेवः प्रातःसवनगतः महावैश्वदेवस्तु तृतीयसवनगतः। ध्रुवाख्यस्यैव गृहस्य अवनयदशायां वैश्वानरसूक्तपाठात्तद्दशापन्नो ध्रुवो वैश्वानरशब्देनोच्यते। मरुत्वतीया इति बहुवचनं त्रित्वात् मरुत्वतीयो महामरुत्वतीयः क्षुल्लकमरुत्वतीयश्चेति। अभिषेचनीये सारस्वतीनामपां ग्रहणमेव सारस्वतो ग्रहः सारस्वतं ग्रहं गृह्णातीति तत्राम्नानात्॥ २०॥

स्रुचो जुह्वादयः। चमसानि ग्रहपात्राणि। वायव्यानि पात्रविशेषाः। अधिषवणे काष्ठफलके। पूतभृदाधवनीयौ सोमपात्र-

[1] १—१,३,१,१०।

अथार्धेन्द्राणि जुहोति। अर्धस्येन्द्रदेवत्यत्वादर्धस्य नानादेवत्यत्वात्। अग्निसोमसवितृसरस्वतीपूषबृहस्पतयः प्रसिद्धाः तैः समानभागत्वादिन्द्र एकैकया सह पठ्यते। यास्कोक्ता इन्द्रशब्दस्य नानार्थाः कार्याः एवमग्रेऽपि कण्डिकाद्वये। एते कल्पन्ताम्॥ १६॥

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पति

श्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १६ ॥

मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे धाता च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा

इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १७ ॥

पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे समाश्च म इन्द्रश्च मे नक्षत्राणि च म

इन्द्रश्च मे दिशश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १८ ॥

मित्रवरुणधातृत्वष्टृमरुद्विश्वे देवाः प्रसिद्धाः। प्रत्येकमिन्द्रः। एते कल्पन्ताम्॥ १७॥ १—९,१,२,९।

पृथिव्यन्तरिक्षदिवस्त्रिलोकम्। समा वर्षाधिष्ठात्र्यो देवताः। नक्षत्राणि अश्विन्यादीनि। दिशः प्रागाद्याः। एते कल्पन्ताम्॥ १८॥

मन्दर हिमाचलादयः। सिकताः शर्कराः। वनस्पतयः पुष्पं विना फलवन्तः पनसोदुम्बरादयः। हिरण्यं सुवर्णं रजतं वा द्रविणाकुप्ययोस्त्वेत्यभिधानात्। अयो लोहम्। श्यामं ताम्रलोहं कांस्यं रजतं कनकं वा। लोहं कालायसे सर्वतैजसे जोङ्गकेऽपि चेत्यभिधानात्। सीसं प्रसिद्धम्। त्रपु रङ्गम्। एते कार्यविशेषेषु मे कल्पन्ताम्॥ १३॥

अग्निः पृथिवीस्थो वह्निः। आपोऽन्तरिक्षस्थानि जलानि। वीरुधः गुल्माः। ओषधयः फलपाकान्ताः। कृष्टपच्याः कृष्टे पच्यन्त इति कृष्टपच्याः राजसूयसूर्येत्यादिना क्यबन्तो निपातः भूमिकर्षणबीजवापादिकर्मभिर्निष्पाद्या ओषधयः। तद्विपरीता

अ॒ग्निश्च॑ म॒ आप॑श्च मे वी॒रुध॑श्च म॒ ओष॑धयश्च मे कृष्टप॒च्याश्च॑ मे कृष्टप॒च्याश्च॑ मे ग्रा॒म्याश्च॑ मे प॒शव॑ आर॒ण्याश्च॑ मे वि॒त्तञ्च॑ मे

वित्ति॑श्च मे भू॒तञ्च॑ मे भू॒ति॑श्च मे य॒ज्ञेन॑ कल्पन्ताम्॥ १४॥

वसु॑ च मे वस॒तिश्च॑ मे कर्म॑ च मे श॒क्तिश्च॑ मे॒ऽर्थश्च॑ म॒ एम॑श्च म इ॒त्या च॑ मे॒ गति॑श्च मे य॒ज्ञेन॑ कल्पन्ताम्॥ १५॥

अकृष्टपच्याः स्वयमेवोत्पद्यमाना नीवारगवेधुकादयः। ग्राम्याः ग्रामे भवाः पशवः गोऽश्वमहिषाजाविगर्दभोष्ट्रादयः। आरण्याः अरण्ये भवाः पशवः हस्तिसिंहशरभमृगगवयमर्कटादयः। वित्तं पूर्वलब्धम्। वित्तिः भाविलाभः। भूतं जातपुत्रादिकम्। भूतिरैश्वर्यं स्वार्जितम्। एतानि यज्ञेन मम सम्पद्यन्ताम्॥ १४॥

वसु धनं गवादिकम्। वसतिर्वासस्थानं गृहम्। कर्माग्निहोत्रादि। शक्तिस्तदनुष्ठानसामर्थ्यम्। अर्थोऽभिलषितः पदार्थः। एमः ईयन्ते इत्येमः एतेर्मप्रत्ययः प्रापव्योऽर्थः। इत्या भावि क्यप् अयनमिष्टप्राप्त्युपायः गतिरिष्टप्राप्तिः। एते कल्पन्ताम्॥ १५॥

मृदुरोरधिकरणे इति गमेर्डः सुखगम्यो देशः। सुपथ्यं शोभनं हितम्। ऋद्धं समृद्धं यज्ञफलम्। ऋद्धिः यज्ञादिसमृद्धिः। क्लृप्तं कार्यक्षेमं इत्यादि। क्लृप्तिः स्वकार्यसामर्थ्यम्। मतिः पदार्थमात्रनिश्चयः। सुमतिः दुर्घटकार्यादिषु निश्चयः। एते यज्ञेन कल्पन्ताम् ॥११॥

व्रीहियवमाषतिलमुद्गगोधूममसूराः प्रसिद्धाः। खल्वाः चणकाः लङ्काश्च। प्रियङ्गवः कङ्गवः प्रसिद्धाः। अणवश्चीनकाः। श्यामा-

मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् ॥ ११ ॥

व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मे णवश्च मे श्यामाकाश्च मे

नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ॥ १२ ॥

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मे यश्च मे श्यामञ्च मे

लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥ १३ ॥

कास्तृणधान्यानि ग्राम्याणि कोद्रवत्वेन प्रसिद्धानि। नीवारास्तृणधान्यान्यारण्यानि। एते धान्यविशेषा मे यज्ञेन कल्पन्ताम् ॥ १२ ॥

अश्मा पाषाणः। मृत्तिका प्रशस्ता मृत् मृदस्तिकन्। गिरयः क्षुद्रपर्वताः गोवर्धनार्बुदरैवतिकादयः। पर्वताः महान्तो

ऊर्क् अन्नम्। सूनृता प्रिया सत्या वाक्। पयः दुग्धम्। रसः सवत्यः सारः। घृतमाज्यम्। मधु क्षौद्रम्। समाना ग्धिर्भोजनं सग्धिः अदेः क्तिनि घस्लादेशः घसिभसोर्हलीति घस उपधालोपे कृते झलो झलीति सलोपे कृते झषस्तथोर्धोऽधः जश्त्वं सग्धिः बन्धुभिः सह भोजनमित्यर्थः। सपीतिः बन्धुभिः सह पानम्। कृषिः तत्कृतधान्यसिद्धिः। वृष्टिः धान्यनिष्पादिकानुकूला। जेतुर्भावो जैत्रम् जयसामर्थ्यम्। उद्भिदो भाव औद्भिद्यम् चूतादितरोरुत्पत्तिः। एते यज्ञेन कल्पन्ताम् ॥ ८ ॥

श्चमे जैत्रञ्चमऔद्भिद्यञ्चमे यज्ञेनकल्पन्ताम् ॥ ९ ॥

रयिश्चमेरायश्चमेपुष्टञ्चमेपुष्टिश्चमेविभुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्चमे

कुयवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयज्ञेनकल्पन्ताम् ॥ १० ॥

वित्तञ्चमेवेद्यञ्चमेभूतञ्चमेभविष्यच्चमेसुगञ्चमेसुपथ्यञ्चमऋद्धञ्चमऋद्धिश्चमेक्लृप्तञ्चमेक्लृप्तिश्चमे

रयिः सुवर्णम्। रायो मुक्तादिमणयः। पुष्टं धनपोषः। पुष्टिः शरीरपोषकः। विभु व्याप्तिसामर्थ्यम्। प्रभु ऐश्वर्यम्। पूर्णं धनपुत्रादिबाहुल्यम्। अत्यन्तं पूर्णं पूर्णतरं गजतुरगादिबाहुल्यम्। कुयवं कुत्सितधान्यमपि। अक्षितं क्षयहीनं धान्यादि। अन्नमोदनादि क्षुत् भुक्तान्नपरिपाकः। एते कल्पन्ताम् ॥ १० ॥

विदॢ लाभे पूर्वलब्धं वित्तम्। वेद्यं लब्धव्यम्। भूतं पूर्वसिद्धं क्षेत्रादि। भविष्यत् सम्पत्स्यमानं क्षेत्रादि। सुखेन गम्यते यत्र तत्सुगम्

विश्वं सर्वानुकूल्यम्। महः पूजा। संविद्दृगास्त्रादिज्ञानम्। ज्ञातुर्भावो ज्ञात्रम् विज्ञानसामर्थ्यम्। सूः पुत्रादिप्रेरणसामर्थ्यम्। प्रसूः पुत्रोत्पत्त्यादिसामर्थ्यम्। सीरं हलादि कृषिकृतधान्यनिष्पत्तिः। लयः कृषिप्रतिबन्धनिवृत्तिः ॥ ७ ॥

शमैहिकं सुखम्। मयः आमुष्मिकं सुखम्। प्रियं प्रीत्युत्पादकं वस्तु। अनुकाम्यत इत्यनुकामः अनुकूलयत्नसाध्यः पदार्थः।

यन्ता च मे धर्त्ता च मे क्षेमश्च मे धृतिश्च मे विश्वञ्च मे महश्च मे संविच्च मे ज्ञात्रञ्च मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च मे यज्ञेन कल्पन्ताम् ॥ ७ ॥

शञ्च मे मयश्च मे प्रियञ्च मे ऽनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणञ्च मे भद्रञ्च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ॥ ८ ॥

ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टि

कामः विषयभोगजनितं सुखम्। सुमनसो भावः सौमनसः मनःस्वास्थ्यकरो वस्तुवर्गः। भगः सौभाग्यम्। द्रविणं धनम्। भद्रमैहिकं कल्याणम्। श्रेयः पारलौकिकम्। वसतीति वसु अतिशयेन वसु वसीयः तुरिष्ठेमेयःस्विति तृचो लोपः निवासयोग्यो वसुमान् गृहादिः। यशः कीर्त्तिः। एते कल्पन्ताम् ॥ ८ ॥

क्रीडा अक्षद्यूतादिः। मोदः क्रीडादर्शनजो हर्षः। जातं पुत्रोत्पन्नमपत्यम्। जनिष्यमाणं भविष्यदपत्यम्। सूक्तमृक्समूहः। सुकृतमृक्पाठजन्यं शुभादृष्टम्। एते कल्पन्ताम् ॥ ५ ॥

ऋतं यज्ञादिकर्म। अमृतं तत्फलभूतं स्वर्गादि। यक्ष्मणोऽभावोऽयक्ष्मं धातुक्षयादिरोगाभावः। अनामयत् आमयति पीड-

सत्यञ्च मे श्रद्धा च मे जगच्च मे धनञ्च मे विश्वञ्च मे महश्च मे क्रीडा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च

मे सूक्तञ्च मे सुकृतञ्च मे यज्ञेन कल्पन्ताम् ॥ ५ ॥

ऋतञ्च मे ऽमृतञ्च मे ऽयक्ष्मञ्च मे नामयच्च मे जीवातुश्च मे दीर्घायुत्वञ्च मे ऽनमित्रञ्च मे ऽभयञ्च मे सुखञ्च मे श

यनञ्च मे सूषाश्च मे सुदिनञ्च मे यज्ञेन कल्पन्ताम् ॥ ६ ॥

यतीत्यामयत् न आमयत् अनामयत् सामान्यव्याध्यादिराहित्यम् जीवयतीति जीवातुः व्याधिनाशकमौषधम्। दीर्घायुषो भावो दीर्घायुत्वं बहुकालमायुः पृषोदरादित्वात्सलोपः आयुरदन्तो वा। अमित्राणामभावोऽनमित्रं शत्रुराहित्यम्। भयाभावोऽभयं भीतिराहित्यम्। सुखमानन्दः। शयनं संस्कृता शय्या। सूषाः शोभन उषाः स्नानसन्ध्यादियुक्तः प्रातःकालः। सुदिनं यज्ञदानाध्ययनादियुक्तं सर्वं दिनम्। एते मे यज्ञेन सिध्यन्तु ॥ ६ ॥

यन्ताश्वादेर्नियन्ता। धर्ता पोषकः पित्रादिः। क्षेमः विद्यमानधनस्य रक्षणशक्तिः। धृतिः धैर्यमापत्स्वपि स्थिरचित्तत्वम्।

सुखम्। वर्म कवचम्। अङ्गानि हस्ताद्यवयवाः। अस्थीनि शरीरगतानि। परूंषि अङ्गुल्यादिपर्वाणि। शरीराणि पूर्वोक्ताः शरीरावयवाः। आयुर्जीवनम्। जरा वार्धकान्तमायुः। एते यज्ञेन सम्पद्यन्ताम् ॥ ३ ॥

ज्येष्ठस्य भावो ज्यैष्ठ्यं प्रशस्तत्वम्। अधिपतेर्भाव आधिपत्यम् स्वामित्वम्। मन्युः मानसः कोपः। भामोऽधिक्षेपादिलिङ्गको बाह्यः कोपः। न मीयत इत्यमः अपरिमेयत्वमन्यैरियत्तया परिच्छेत्तुमशक्यत्वम्। अम्भः शीतमधुरं जलम्। जेमा

**ओजश्च मे सहश्च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे परूंषि च मे शरीराणि च म आयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् ॥ ३ ॥**

**ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥ ४ ॥**

जयस्य भावो जयसामर्थ्यम्। महतो भावो महिमा महत्त्वं सम्पत्त्यादिना। उरोर्भावो वरिमा प्रजादिविशालता। पृथोर्भावः प्रथिमा गृहक्षेत्रादिविस्तारः। वृद्धस्य भावो वर्षिमा दीर्घजीवित्वम्। दीर्घस्य भावो द्राघिमा अविच्छिन्नवंशत्वम्। वृद्धं प्रभूतमन्नधनादि। वृद्धिः विद्यादिगुणैरुत्कर्षः। एते मे कल्पन्ताम् ॥ ४ ॥

सत्यं यथार्थभाषित्वम्। श्रद्धा परलोकविश्वासः। जगत् जङ्गमं गवादि। धनं कनकादि विश्वं स्थावरम्। महो दीप्तिः।

कामास्त्वत्र त्रयः। एतच्च महृत्यस्त्रां षट् कामास्तु दश अहोरात्रे जवंशीवे बृहद्रथन्तरे च महृत्येकं यजुः षट्कामाः। एका च महृत्यस्त्रां त्रयस्त्रिंशत्। चतस्रश्च मे अत्र त्रयोविंशतिः। त्र्यविश्च मे ऽत्रैकादश। पष्ठवाट् च मे इत्यत्र नव। वाजाय स्वाहेति अत्र चतुर्दश। आयुर्यज्ञेनेति अत्रैकविंशतिः कल्पन्तामन्तानि स्तोमश्चेति षट् स्वर्देवाः प्रजापतेः वेट्स्वाहा। एवमेकाधिका चतुःशती। अथ यजुषामर्थाः। वाजोऽन्नम् चशब्दाः समुच्चयार्थाः। प्रसवोऽन्नदानाभ्यनुज्ञा दीयतां भुज्यतामिति। प्रयतिः शुद्धिः। प्रसितिः बन्धनं मन्नविषयौत्सुक्यम्। धीतिः ध्यानम् ध्यै चिन्तायां छान्दसं सम्प्रसारणम्। क्रतुः सङ्कल्पो यज्ञो वा। स्वरः साधुशब्दः। श्लोकः पद्यबन्धः स्तुतिर्वा। श्रवः वेदमन्त्राः श्रवणसामर्थ्यं वा। श्रुतिः ब्राह्मणं श्रवणसामर्थ्यं वा। ज्योतिः प्रकाशः।

प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तञ्च म आधीतञ्च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे

दक्षश्च मे बलञ्च मे यज्ञेन कल्पन्ताम् ॥ २ ॥

स्वः स्वर्गः। एते मे मम यज्ञेन कल्पन्ताम्। कल्पन्तामिति कण्डिकान्तस्य समुदायापेक्षया बहुत्वम्। मे पदानामावृत्तिः प्रत्येकं प्रार्थ्यर्था। एवं सर्वत्र ॥ १ ॥

प्राणः ऊर्ध्वसञ्चारी शरीरवायुः। अपानः अधोवृत्तिर्वायुः। व्यानः सर्वशरीरचरः। असुः प्रवृत्तिमान्वायुः। चित्तं मानसः सङ्कल्पः। आधीतं बाह्यविषयज्ञानम्। वाक् वागिन्द्रियम्। मनः प्रसिद्धम्। चक्षुरिन्द्रियम्। श्रोत्रं श्रवणेन्द्रियम्। दक्षः ज्ञानेन्द्रियकौशलम्। बलं कर्मेन्द्रियकौशलम्। एतानि यज्ञेन मे कल्पन्ताम् ॥ २ ॥

ओजः बलहेतुरष्टमो धातुः। सहः शारीरं बलं सपत्नाभिभवितृत्वं वा। आत्मा परमात्मा। तनूः रम्यं वपुः। शर्म

पञ्चगृहीतं सन्ततं यजमानोऽरण्येऽनूच्येऽग्निप्राप्ते वाजश्च मइत्यष्टानुवाकेन[1] । अस्यार्थः । ततो यजमान आज्यं संस्कृत्यार्थपरिमाणया महत्यौदुम्बर्या स्रुचा महता स्रुवेण पञ्चवारं गृहीतमाज्यमरण्येनूच्ये पुरोडाशे तदुपरि सन्ततमविच्छिन्नधारं यथा तथा वसोर्धारासञ्ज्ञामाहुतिं जुहोति । घृतेऽग्निप्राप्ते सति वाजश्चेत्यादिहोममन्त्रारम्भः कार्योऽष्टाभिरनुवाकैर्वाजश्चेत्यादिवेट्स्वाहान्तैरेकोनत्रिंशत्कण्डिकात्मकैः । वाजश्च मे । चकाराः समुच्चयार्थाः । यज्ञेनानेन मया कृतेन वाजादयः पदार्थाः कल्पन्तां क्लृप्ताः सम्पन्ना भवन्तु स यज्ञो वाजादीनां दातास्मभ्यं भवत्वित्यर्थः । अथो इदञ्च मे देहीदञ्च मइति[2] श्रुतेः । यद्वा वाजादयः पदार्था मे मम यज्ञेन कल्पन्तां विभक्तिव्यत्ययः यज्ञेऽग्निं तर्पयन्तु अभिषिञ्चन्तु वा अनेन च त्वा प्रीणाम्यनेन च त्वाभिषिञ्चामीत्यादिश्रुतिः द्वौ द्वौ कामावनुपचयाय संयुञ्ज्यात्रवकारेण कन्याकुमाराविव । तथाच श्रुतिः द्वौ द्वौ कामावभिरूपौ संयुनक्त्यव्यवच्छेदाय यथा व्योकसौ संयुञ्ज्यादिति[(१)] ।

वाजश्चमेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमेस्वरश्चमेश्लोकश्चमेश्रवश्चमेश्रुतिश्चमे

ज्योतिश्चमेस्वश्चमेयज्ञेनकल्पन्ताम् ॥ १ ॥

अथ पदार्था व्याख्यायन्ते । वाजश्चेत्यादियजुषां देवा ऋषयः । अग्निर्देवता । छन्दांसि पिङ्गलोक्तान्यक्षरसङ्ख्यया ज्ञेयानि । एतैर्यजुर्भिर्यजमानोऽग्नेः कामान्याचते वाजो मेऽस्त्वित्यादि । तत्रैकाधिकानि चतुःशतं यजूंषि कामास्तु पञ्चदशोत्तरं शतम् । तद्यथा । वाजश्चेत्याद्यासु ज्यैष्ठ्यञ्च मे वसु च मे इति कण्डिकाद्वयवर्जितासु एकोनविंशतिकण्डिकासु त्रयोदश त्रयोदश यजूंषि सन्ति ज्यैष्ठ्यञ्च मइत्यस्यां पञ्चदश वसु च मइत्यस्यां नव । अग्निश्च मे घर्मश्च मइत्यस्यां द्वादश कामास्तु त्रयोदश अङ्गुलयः शक्वर्यो दिशश्च मइत्येकं यजुः

१ —— १८,५,१ ।

२ —— ९,३,२,५ ।

ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगदाहुतिपरिणामभूतं मन्यमानो मुनिराह। हे अग्ने विश्वं भुवनं सर्वं भूतजातन्ते तव धामन् धाम्नि विभूतावधिश्रितम् आश्रितं त्वन्महिमोत्थमित्यर्थः। यच्चान्तः समुद्रे समुद्रमध्ये तथा हृदि हृन्मध्ये तथा अन्तरायुषि आयुर्मध्ये ब्रह्मणो जीवनपर्यन्तं यद्भूतजातं तदपि ते धामनि स्थितं धामन्निति विभक्तिलोपः। अतोऽहं प्रार्थये मधुमन्तं रसवन्तं तमूर्मिं घृतकल्लोलं ते त्वदीयं वयमश्याम भक्षयामो व्याप्नुयामो वा तं कम् अपामनीके मुखे वर्तमानो य ऊर्मिः समिथे पणिभिः सह युद्धे आभृतः आहृत आनीतः त्रिधा हितं पणिभिर्गुह्यमानमिति(९२) उक्तत्वात्। अश्यामेति अश्नातेरश्नुतेर्वा विकरणव्यत्ययेन श्यनि प्रत्यये लोटि रूपम् हविः परिणामिनो रसस्य वयं भोक्तारो भवेमेति भावः देवत्वं प्राप्नुयामेति वक्रोक्त्या प्रार्थ्यते। यद्वास्या ऋचो-

**धामन्ते विश्वम्भुवनमधिश्रितमन्तः समुद्रे हृद्यन्तरायुषि। अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तन्तऊर्म्मिम्॥ ९९॥**

**॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां सप्तदशोऽध्यायः समाप्तः॥ १७॥**

ऽर्थान्तरमुच्यते। हे अग्ने इदं विश्वं भुवनं तव धाम्नि अधिश्रितं तत्ते धाम क्व क्वेति तदुच्यते अन्तः समुद्रे अन्तरिक्षमध्ये सूर्यरूपेण। समुद्र इत्यन्तरिक्षनाम[1]। हृदि अन्तः सर्वप्राणिनां हृदये जठराग्निरूपेण आयुषि अन्ने सर्वप्राण्याहारत्वेन अपामनीके उदकानां सङ्घाते वैद्युताग्निरूपेण समिथे सङ्ग्रामे शौर्याग्निरूपेण एवं सर्वेषु स्थानेषु आभृतः स्थापितो यस्तव धामरूप ऊर्मिः घृतरूप उदकरूपो वा तं तव रसं मधुमन्तं माधुर्योपेतं वयमश्याम प्राप्नुयाम सर्वरसभोक्तारः स्यामेति भावः॥ ९९॥

1—निघ० १,३,१५।

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। सैकादिजपपर्यन्तोऽध्यायः सप्तदशोऽगमत्॥ १७॥

सप्तदशेऽध्याये चित्यारोहणादिमन्त्रा उक्ताः इदानीमष्टादशेऽध्याये वसोर्धारादिमन्त्रा उच्यन्ते। का० वसोर्धारां जुहोत्यौदुम्बर्या

ता घृतधारा हर्यति प्राप्नोति हर्य क्लमे गतौ हर्यतिः प्रेप्साकर्मा वा ता धारा प्रेप्सति कामयते नास्य अवहरणशक्तिपरिहरणमस्तीति भावः ॥ ९६ ॥

घृतस्य धाराः तत्तत्र अभिपवन्ते अभिगच्छन्ति पव गतौ। तत्र कुत्र यत्र स्थाने सोमः लताविशेषः। सूयते अभिषूयते यत्र च यज्ञः सौत्रामण्याख्यः क्रियते तत्र गच्छन्तीर्घृतस्य धारा अभिचाकशीमि पश्यामि। तत्र गमने दृष्टान्तः कन्या वहतुमिव वहति परिणयति वहतुर्भर्ता यथा वहतुं पतिमेतवै प्राप्तुं कन्या अभिप्रयन्ते इण् गतौ तुमर्थे तवैप्रत्ययः। कीदृश्यः कन्याः अञ्जि भगमञ्जाना व्यक्तं योग्यं कुर्वाणाः अज्यते व्यक्तीक्रियते स्त्रीपुंव्यक्तिर्येन तत् तदञ्जानाः कन्या यथा पतिं गच्छन्ति तथा यज्ञं घृतधारा गच्छन्ति ता यज्ञसहिता घृतधाराः पश्यामीत्यर्थः ॥ ९७ ॥

**कन्याऽइव वहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि। यत्र सोमः सूयते यत्र यज्ञो घृतस्य धाराऽअभि तत्पवन्ते ॥ ९७ ॥**

**अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ ९८ ॥**

हे देवा यूयं सुष्टुतिं शोभनां स्तुतिमाजिं यज्ञञ्च अभ्यर्षत अभ्यागच्छत अजाते प्राप्यते स्वर्गो येन स आजिर्यज्ञः। कीदृशमाजिं गव्यं गव्यं घृतं विद्यते यस्मिन् स गव्यस्तम् घृतयुतम् अर्शआदित्वादच् प्रत्ययः। आगत्य चास्मासु भद्रा भद्राणि कल्याणानि द्रविणानि धनानि धत्त स्थापयत दत्त वा डुधाञ् धारणपोषणयोः दाने चेति वचनात्। किञ्च नोऽस्माकमिमं यज्ञं सौत्रामणीं देवता देवतासु देवलोके नयत प्रापयत देवताशब्दात्सुपां सुलुगिति विभक्तिलोपः किञ्च याश्चैना घृतस्य धारा मधुमत् रसवद्यथा तथा पवन्ते प्रसरन्ति ता अपि देवतासु नयत यज्ञे यज्ञद्रव्ये स्वर्गं गते यजमानो गच्छत्येवेत्यर्थः ॥ ९८ ॥

घृतस्य धाराः पतयन्ति स्तु[illegible]त्पतन्ति पत ऐश्वर्ये गतौ च चुरादिरदन्तः। कीदृश्यो धाराः यह्वाः महतः। यह्व इति महन्नामसु पठितम्[१]। तत्र दृष्टान्तद्वयम् प्राध्वने सिन्धोर्वातप्रमिय इव प्रगतोऽध्वनः प्राध्वनः विषमप्रदेशः वातेन प्रमीयन्ते नश्यन्ति वातप्रमियस्तरङ्गाः मीङ् हिंसायां दिवादिः अस्मात्क्विप् यथा सिन्धोर्नद्याः वातप्रमियः तरङ्गाः प्राध्वने विषमप्रदेशे पतन्ति तद्वत्। कीदृशा वातप्रमियः शूघनासः। शु इति क्षिप्रनाम[२]। हन्तेर्गत्यर्थस्य घन मिति रूपं शु क्षिप्रं घनं गमनं येषान्ते शुघनाः शीघ्रगमनाः आज्जसेरसुक्। अन्यो दृष्टान्तः वाजी न न इवार्थे वाजीव यथा वाजी अश्वः पतति। कीदृशो वाजी अरुषः रुष क्रोधे रोषति क्रुध्यति रुषः इगुपधेति कप्रत्ययः न रुषः अरोषणः जातयादिभिरुत्कृष्ट इत्यर्थः। तथा काष्ठाः आज्यन्ताम् सङ्ग्रामप्रदेशान् भिन्दन्विदारयन्

सिन्धोरिवप्राध्वनेशूघनासोवातप्रमियःपतयन्तियह्वाः।घृतस्यधाराअरुषोनवाजीकाष्ठाभिन्दन्नूर्मिभिःपिन्वमानः।६५।

अभिप्रवन्तसमनेवयोषाःकल्याण्यःस्मयमानासोअग्निम्। घृतस्यधाराःसमिधोनसन्तताजुषाणोहर्यतिजातवेदाः।६६

ऊर्मिभिः काष्ठाभेदनोत्थश्रमस्वेदोदकैः पिन्वमानः भूमिं सिञ्चन् पिवि सेचने शानच् इदित्वान्नुम् स वाजी यथा पतित्वाश्राम्यत्याति एवं पतन्तीर्घृतधारा अग्निरश्नातीत्यर्थः।

१—निघ० ३,३,१३। २—निघ० २,१५,१५।

घृतस्य धाराः अग्निमभिप्रवन्त प्रुङ्गतौ अग्निं प्रतिगच्छन्ति लङ् अडभाव आर्षः। तत्र दृष्टान्तः योषा इव यथा योषाः स्त्रियः पतिं प्रतिप्रवन्ते। कीदृश्यो योषाः समना समानं मनो यासां ताः समनसः विभक्तेर्डादेशः कल्याण्यः रूपयौवनसम्पन्नाः स्मयमानाः ईषद्धसन्त्यः ष्मिङ् ईषद्धसने। ता धारा अग्निं नसन्त हरन्ति नस हरणे लङ् अडभाव आर्षः नसतिराप्नोतिकर्मा वा अग्निं व्याप्नुवन्ति। कीदृश्यो धाराः समिधः समिन्धते दीपयन्त्यग्निमिति समिधः। किञ्च जातवेदाः जातप्रज्ञानोऽग्निर्जुषाणः प्रीतियुक्तः सन्

निघण्टुव्याकरणशिक्षाच्छन्दोभिः पावनैः पूतात्। कीदृश्यो वाचः शतव्रजाः शतं व्रजं व्रजा गतयो यासां ताः बहुगतयः बह्वर्थ इत्यर्थः। याश्च अर्षन्त्यो रिपुणा कुतार्किकप्रत्यक्षमनुणा न अवचक्षे न अवचक्ष्यन्ते पुरुषवचनव्यत्ययः नापवदितुं खण्डयितुं शक्यन्ते ता घृतस्य धारा इवाभिचाकशीमि लुप्तोपमानम् अहं पश्यामि। आसां वाचां मध्ये यो हिरण्ययो हिरण्मयो दीप्यमानो वेतसोऽग्निः तं चाभिचाकशीमि अग्निर्हि वाचामधिष्ठात्री देवता। यद्वा घृतधारा एवोच्यन्ते या एता हृद्यात्समुद्रात् घृतधारा अर्षन्ति गच्छन्ति हृदयेन सङ्कल्प्य यजनाद्धृदयादुत्पतिरुच्यते। शतव्रजा नानागतयः याश्च रिपुणा नावचक्षे यज्ञपरिपन्थिना द्रष्टुं न शक्यन्ते ता घृतधाराः पश्यामि। यश्चायं हिरण्ययो वेतसोऽग्निराहवनीय आसां धाराणां मध्ये स्थितस्तञ्च पश्यामि द्रव्यदेवतांश्च याथात्म्येनाहं पश्यामीत्यर्थः ॥ ८३ ॥

**एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे। घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम्॥८३॥**

**सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥८४॥**

या धेनाः वाचः सरितो न सरित इव नद्य इवानवच्छिन्नप्रवाहाः सम्यक् स्रवन्ति। धेना इति वाङ्नामसु पठितम्[1]। कीदृश्यो धेनाः अन्तः हृदा मनसा पूयमानाः शरीरान्तर्व्यवस्थितेन हृदा पावनस्थानीयेन मनसा च पूयमानाः शब्ददोषेभ्यो विविच्यमानाः। ता अग्निमेव स्तुवन्तीति शेषः। ये च एते घृतस्य ऊर्मयः कल्लोलाः अर्षन्ति स्रुक्परिभ्रष्टाः गच्छन्ति ऋष गतौ तेऽप्यग्निं तर्पयन्तीति शेषः तत्र दृष्टान्तः क्षिपणोः क्षिपति हिनस्ति क्षिपणुर्व्याधः क्षिपणोरीषमाणाःपलायमाना मृगा इव। व्याधाद्भीता मृगा इव ये घृतोर्मयो गच्छन्ति तेऽग्निं तर्पयन्तीत्यर्थः। श्रुतिर्द्रव्यं चारुन्यर्थमेवेति भावः ॥ ८४ ॥

[1] —निघ १,११,३९।

शति मनुष्यान् व्याप्य तिष्ठति । यस्य वृषभस्य यज्ञस्य चत्वारि शृंङ्गा शृङ्गाणि ब्रह्मोद्गातृहोत्रध्वर्युलक्षणानि त्रयः पादाः ऋग्यजुःसामरूपाः द्वे शीर्षे शिरसी हविर्धानप्रवर्ग्याख्ये शिर एवास्य हविर्धानं ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्य इति श्रुतेः । अस्य वृषभस्य सप्त हस्तासः सप्त होतारो हस्ताः हस्ता इव व्याप्रियन्ते सप्त छन्दांसि वा हस्ताः । यश्च त्रिधा त्रिप्रकारैर्बद्धः प्रातःसवनमाध्यन्दिनसवनतृतीयसवनैर्बद्धः ॥ यद्वा चत्वारो वेदाः शृङ्गाणि त्रयः पादाः सवनानि द्वे शीर्षे प्रायणीयोदयनीये सप्त हस्तासः छन्दांसि त्रिधा बद्धः मन्त्रब्राह्मणकल्पैर्बद्धः ॥ शब्दग्रामो वा व्याख्येयः चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपाताः त्रयः पादाः प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः त्रयः काला वा द्वे शीर्षे कार्य्यताव्यङ्ग्यते सप्त हस्ताः विभक्तिरूपाः त्रिधा बद्धः एकवचनद्विवचनबहुवचनैर्बद्धः । वृषभइवायमन्यशास्त्राणि अधः कृत्वा रोरवीति सोऽयं महान् देवो मर्त्यानाविवेश आविशति प्रतिपादयति मनुष्येष्विति मनुष्याधिकारत्वाच्छास्त्रस्येति न्यायात् ॥ ९१ ॥

त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् । इन्द्रएकꣳसूर्य्यएकञ्जजानवेनादेकꣳस्वधयानिष्टतक्षुः॥९२॥

त्रिधा त्रिप्रकारेषु लोकेषु हितं स्थापितं घृतं यज्ञपरिणामभूतं पणिभिरसुरैर्गुह्यमानं गुप्यमानं सत् देवासो गवि अन्वविन्दन् धेनौ आनुपूर्व्याल्लब्धवन्तः । तस्य एकं भागमिन्द्रो जजान जनयति ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशत इत्यादिश्रुतिरिन्द्रस्य जनकत्वं दर्शयति । सूर्य एकं भागं जजान जनी प्रादुर्भावे लिट् परस्मैपदमार्षम् तत ते उत्क्रामतस्ते दिवमाविशत इत्यादिश्रुतिः सूर्यस्य घृतभागजनकत्वं दर्शयति । वेनाद्यज्ञसाधनभूतादग्नेः एकं स्वधया अन्नेन वेताहुतिलक्षणेन निष्टतक्षुः निष्कर्षितवन्तो द्विजातयः यस्ततः पुत्रो जायते स लोकप्रत्युत्थायीत्येतदुक्तं भवति ॥ ९२ ॥

एता वाच अर्षन्ति उद्गच्छन्ति कस्मात् हृद्यात्समुद्रात् अशोदकप्लुतात् देवतायाथात्म्यचिन्तनसन्तानरूपात्समुद्रात् निगमनिरुक्त-

नामाख्यातोपसर्गनिपातरूप उपमोत्प्रेक्षारूपकाद्यलङ्काररूप मधुमान् रसवान्वाक्यार्थगुणैर्युक्त उदारत् मुखादुद्गात् स एव उपांशुना सवनेन क्रियमाणः सन्नमृतत्वमाप्नोत् तदेतद्यजुरुपांशुस्वनिरुक्तमिति श्रुतेः अतोऽग्निचिद्भिः स ऊर्मिः प्रकाशनीयः। घृतस्य गुह्यं नाम यदस्ति तदपि देवानां जिह्वोत्थाननिमित्तं किं पुनर्होमः अथास्य घृतकीर्तावेवाग्निर्वैश्वानरो मुखादुज्ज्वालेति[1] श्रुतेः। अमृतस्य नाभिः नहनं यजमानानाममृतत्वप्रापकं घृतं यजनेनेत्यर्थः। अतोऽग्निचिद्भिरिज्यते स्तूयते च घृतमिति भावः ॥ ८९ ॥

१ ——— १,५,१,१२ ।

यतो घृतनामोच्चारणमपि देवानां प्रियमतो वयं घृतस्य नाम प्रब्रवाम अस्मिन् यज्ञे घृतनाम स्तुमः। नमोभिरन्नैः धार-

**वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञे धारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोऽवमीद्गौरएतत् ॥ ९० ॥**

**चत्वारिशृङ्गात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य। त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ ॥ आविवेश ।९१।**

याम यज्ञमिति शेषः किञ्च ब्रह्मा ऋत्विक् शस्यमानं स्तूयमानमेतद्घृतनाम उपशृणवत् उपशृणोतु लेटोऽडाटाविति अडागमः। यथा गौरः गौरवर्णः शुद्धो यज्ञः एतत् घृतयज्ञफलरूपमवमीदुद्गिरति यज्ञपरिणामाभिप्रायम्। कीदृशो गौरः चतुःशृङ्गः चत्वार ऋत्विजः शृङ्गभूता यस्य सः ॥ ९० ॥

यज्ञपुरुषदेवत्य ऋषभो मन्त्रः। चतुःशृङ्गोऽवमीदित्युक्त्वा चतुःशृङ्गं यज्ञं वृषभरूपेण प्रतिपादयितुमाह। यो वृषभः कामानां वर्षिता रोरवीति च शब्दं यङ्लुगन्तम् अत्यर्थं शब्दं करोति सोऽयं महो देवः महति पूजयति मह्यते वा जनैरिति महो महान् देवः ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनामुपजीव्यो ज्ञानकर्मसमुच्चयकारिणां विदुषां शरीरभूतो मर्त्यान् मनुष्यानाविवेश आवि-

यतोऽस्याग्नेर्घृतं योनिरुत्पत्तिस्थानम्। अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्बमासीदिति श्रुतेः। गर्भाधारोदकमुल्बम्। योऽग्निर्घृते श्रितः घृतमाश्रितः। अस्याग्नेर्घृतमेव धाम स्थानं तेजस्करं। वा उ अवधारणे। अतो हे अध्वर्यो अनुष्वधं स्वधामन्नमुपलक्ष्य तमग्निमावह पूर्वमन्नमुपकल्प्य पश्चादाह्वय आहूय च मादयस्व तर्पय तर्पयित्वा चैवं ब्रूहि हे वृषभ कामानामभिवर्षुक स्वाहाकृत स्वाहाकारेण हुतं हव्यं त्वं वक्षि वह देवान् प्रापय वहतेः अपि लुप्ते ढत्वकत्वादौ कृते वक्षीति रूपम्। यद्वा यं प्रत्यहं निमिचे यस्य घृतं योनिर्यो घृते श्रितः यस्य च घृतं धाम स त्वमनुष्वधं देवानावह मादय हव्यं च वक्षि इत्यग्निं प्रत्येवोक्तिः यतो वह्नेः कर्मद्वयं देवानामावाहनं हविर्वहनञ्च॥ ८८॥

वामदेवदृष्टा। अन्नात्माध्यासेन घृतं स्तूयते प्राणाध्यासेन चाग्निः। समुद्रात् घृतमयात् मधुमान् रसवानूर्मिः कल्लोल

समु॒द्रादू॒र्मिर्मधु॑माँ॒॥ उदा॑र॒दुपां॒॑शुना॒सम॑मृत॒त्वमा॑नट्। घृ॒तस्य॒नाम॒गुह्यं॒यदस्ति॒जिह्वा॑दे॒वाना॑म॒मृत॑स्य॒नाभिः॑ ।८९।

उदारत् उदगच्छत्। ऋ गतौ चेरङ् ऋदृशोऽङि गुणः अक्षीणत्वाद्घृतस्य समुद्रेणोपमानम्। अन्नदेवताभिप्रायं वा सा ह्यक्षीणैव। उद्गत्य च स ऊर्मिः अंशुना प्राणेन जगत्प्राणभूतेनाग्निना सं सङ्गत्यैकीभूय अमृतत्वममरणधर्मित्वमुपानट् उपव्याप्नोतु नश अदर्शने लुङि मन्त्रे घसेत्यादिना च्लेर्लुक् हलङ्याब्भिति तिपो लोपः विश्राङ्उपसर्गाभ्यां व्याप्त्यर्थः। प्राणाग्नं च एकीभूयामृतत्वं प्राप्नुत इत्यर्थः। तस्य घृतस्य गुह्यमविज्ञातं नामाविदद्भिरज्ञेयं श्रुतिमन्त्रपठितं यदस्ति तत्कथ्यत इति शेषः। किं तदाह देवानां जिह्वा अत्यभिलाषाद्देवानां जिह्वोत्थाननिमित्तम् अग्नेर्जिह्वासीत्युक्तेः। यदा वा एतदग्नौ जुह्वत्यथाग्निर्जिह्वा इवोत्तिष्ठन्तीति श्रुतेः। यच्च सर्वप्रकाशं नाम तदप्युच्यते अमृतस्य नाभिः अमरणधर्मस्य नहनं बन्धनम्। यो हि घृतमश्नाति स दीर्घायुर्भवति॥ यद्वा ऋगर्धेन मन्त्रः स्तूयते अर्धेन घृतम्। समुद्रात् आग्निकाद्यजुःसमुद्रादस्माद्यज्ञात् य ऊर्मिः अब्दसङ्घातो

पाख्यानम् । दैवीर्विशो मरुतः यथा इन्द्रमनुवर्त्मानः इन्द्रमनुसृत्य वर्तमाना अभवन् उपमानमेतत् दैवीर्मानुषीश्च देवसम्बन्धिन्यो मनुष्यसम्बन्धिन्यश्च विशः एवमिन्द्रवत् इमं यजमानमनुवर्त्मानः अनुसृत्य वर्त्तमाना भवन्त्विति प्रार्थना ॥ ८६ ॥

का० इमꣳस्तनमिति वाचयति वा[1] । इमं स्तनमिति मन्त्रगणमध्यायसमाप्तिपर्यन्तं यजमानेनाध्वर्युर्वाचयति स्वयं जपति वेत्यर्थः । त्रयोदशर्चं आग्नेयस्त्रिष्टुप्छन्दस्कोऽनुवाको यज्ञस्तुतिर्वसोर्धाराभिवादिनो घृतस्तुतिर्वा । हे अग्ने सरिरस्य लोकस्य मध्ये वर्तमानः त्वमिमं स्रुग्लक्षणं स्तनं स्रुचः पतन्तीं घृतधारां वा त्वं धय पिब धेट् पाने लोट् । इमे वै लोकाः सरिरमिति[2] श्रुतेः । सरिरशब्देन लोका उच्यन्ते । वसोर्धारा स्रुचा हूयते सा स्रुगत्र रूपककल्पनया स्तन उच्यते कीदृशं स्तनम् ऊर्जस्वन्तमूर्जो रसोऽस्यास्ति

**इमꣳस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्ने सरिरस्यमद्ध्ये । उत्सञ्जुषस्वमधुमन्तमर्वन्त्समुद्रियꣳसदनमाविशस्व ॥ ८७ ॥**

**घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम । अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ ८८ ॥**

ऊर्जस्वान् तम् विशिष्टरसवन्तम् । तथा अपां प्रपीनम् अप्शब्देन लक्षणया घृतमुच्यते अद्भिः घृतैः प्रपीनं पूर्णं तृतीयार्थानां करणे षष्ठीति तृतीयार्थे अपामिति षष्ठी । प्रप्याय्यते पूर्यते प्रपीनम् ओप्यायी वृद्धौ प्यायः पीति च । हे अर्वन् इयर्तीति अर्वा सर्वतो गन्तः उत्सम् उत्स्यन्दनं स्रुग्लक्षणं कूपं जुषस्व सेवस्व कीदृशमुत्सम् मधुमन्तं मधुस्वादेन घृतेन युक्तं किञ्च समुद्रियं समुद्रसम्बन्धि चयनयागसम्बन्धि सदनं गृहमाविशस्व तृप्तः सन्यज्ञगृहं सेवस्व त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतꣳ साम्नां महदुक्थमृचामित्य-भिप्रायः । समुद्रशब्दः समुद्राभ्राद्घ इति घप्रत्ययः तस्येयादेशः ॥ ८७ ॥

१—१८,४,२६ । २—७,५,२,३४ ।

गृत्समददृष्टा । अहं घृतं मिमिक्षे सेक्तुमिच्छामि अग्निमुखे मेढुमिच्छति मिमिक्षते मिह सेचने सनन्ताल्लट् उत्तमैकवचनम् ।

गायत्री उष्णिग्वा षड्विंशत्यक्षरत्वादिविकल्पः । आद्याः पञ्च चातुर्मास्यदेवताः । स्वं स्वकीयं तवो बलं यस्य स स्वतवान् स्वाधीनबलयुक्तः । प्रकर्षेण घसति अत्ति प्रघासी पुरोडाशभक्षणशीलः । सन्तपनः सूर्यस्तत्सम्बन्धी सान्तपनः । गृहमेधोऽस्यास्तीति गृहमेधी गृहधर्मवान् । क्रीडितुं शीलमस्य क्रीडी मदा क्रीडनशीलः । शक्नोतीति शाकी शक्तः । उज्जयतीति उज्जेषी उत्कृष्टजयनशीलः । एते मरुतो यूयमत्र यज्ञे पततेति पूर्वेणान्वयः ॥ ८५ ॥ १—१८, ३५ ।

विमुखमन्त्रोऽपि प्रसङ्गाद्व्याख्यायते । उग्र उत्कृष्टः । बिभेत्यस्मादसौ भीमः भीमादयोऽपादाने इति निपातः । ध्वान्तयति शत्रू-

स्वतवाँश्चप्रघासीचसान्तपनश्चगृहमेधीच । क्रीडीचशाकीचोज्जेषी ॥ ८५ ।

इन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन् । एवमिमंयजमान

न्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभवन्तु ॥ ८६ ॥

नन्धीकरोति ध्वान्तः ध्वान्तशब्दात्तत्करोतीति णिजन्तात्पचाद्यच् । धुनयति कम्पयति शत्रूनिति धुनिः । सहतेऽभिभवते शत्रूनिति सासह्वान् सहेः क्वसुः अभ्यासदीर्घः । अभियुनक्ति अभियुग्वा अन्येभ्योऽपि दृश्यन्त इति इति अभिपूर्वाद्युजेः क्वनिप् भक्तानां सुखयोक्ता । विक्षिपति प्रेरयति शत्रूनिति विक्षिपः शत्रु-क्षेप्ता । चकाराः समुच्चयार्थाः । स्वाहा एतेभ्यो मरुद्भ्यः सुहुताः पुरोडाशाः सन्तु । का० इन्द्रं दैवीरिति जपति[१] । कर्मापवर्गान्ते यजुर्जपतीत्यर्थः । मरुद्देवत्यं यजुः शक्वरी षट्पञ्चाशदक्षरत्वात् । दैवीः दैव्यः देवानामिमा देवसम्बन्धिन्यो विशः प्रजाः मरुतो मरुद्रूपा इन्द्रमनुवर्त्मानोऽभवन् अनु पश्चाद्वर्त्म वर्तनं यासां ताः इन्द्रानुगामिन्योऽभवन्निति स्वरू

हे गायत्री। इमं पुरोडाशं गृहीत्वा पश्यतीति ईदृङ्। अन्यमपि पुरोडाशं पश्यतीति अन्यादृङ्। समानं पश्यतीति सदृङ्। तन्तं प्रति समानं पश्यतीति प्रतिसदृङ्। मितो मानं प्राप्तः यद्वा उत्तमाधममध्यमैस्तुल्यो मितः। सम्यक् एकीभावेन मितो मानं प्राप्तः सम्मितः। सह बिभर्तीति सभराः॥ ८१॥

ऋतः सत्यरूपः। सति वस्तुनि भवः सत्यः। ध्रुवः स्थिरः। धरुणः धारकः। धारयतीति धर्ता। विशेषेण धारयतीति विधर्ता। विविधं धारयतीति विधारयः॥ ८॥

उष्णिक्। ऋतं यज्ञं जयतीति ऋतजित्। सत्यं यातातथ्यं जयतीति सत्यजित्। सेनां शत्रुसैन्यं जयतीति सेनजित् ऋस्

ऋतश्चसत्यश्चध्रुवश्चधरुणश्च। धर्त्ताचविधर्त्ताचविधारयः॥ ८२॥

ऋतजिच्चसत्यजिच्चसेनजिच्चसुषेणश्च। अन्तिमित्रश्चदूरेअमित्रश्चगणः॥ ८३॥

ईदृक्षासएतादृक्षासऊषुणः सदृक्षासःप्रतिसदृक्षासएतन। मितासश्चसम्मितासोनोअद्यसभरसोमरुतोयज्ञेअस्मिन्। ॥ ८४॥

आर्षः। शोभना सेना यस्य सुषेणः। अन्ति समीपे मित्राणि यस्य सः अन्तिमित्रः। दूरे अमित्राः शत्रवो यस्य स दूरेअमित्रः प्रकृत्यान्तःपादमिति सन्ध्यभावः हलदन्तात्सप्तम्या इति विभक्त्यलोपः। गणयति सर्वमिति गणः॥८३॥

हे मरुतो यूयमेते कीदृशाः ईदृक्षासः इदंदर्शनाः। एतादृक्षासः एतद्दर्शनाः। उ सु नः एतत्पदत्रयं पादपूर्तये। सदृक्षासः समानदर्शनाः। प्रतिसदृक्षासः प्रत्येकं समानदर्शनाः। मितासः मिताः प्रमाणतः। सम्मितासः सङ्गत्य मिताः। सभरसः समानमलङ्कारादिकं बिभ्रति ते सभरसः भरसा आदरेण सह वर्तमाना इति वा। बहुवचनमादरार्थम्॥ ८४॥

यद्वा धामानि स्थानानि आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजाहिताग्नीध्रीयाणि सोमयागे वह्निधारकाणि सन्ति किञ्च अग्ने सप्त होत्राः होत्रादय ऋत्विजः सप्तधा सप्तप्रकारैरग्निष्टोमादिसप्तसंस्थाभिः त्वा त्वां यजन्ति होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाग्नीध्रोऽच्छावाकश्चेति सप्त होत्राः अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रश्चाप्तोर्यामो वाजपेयश्चेति सप्त संस्थाः प्रकाराः। हे अग्ने स त्वं सप्त योनीः चितीः घृतेनापृणस्व सप्त योनीरिति चितीरेतदाह सप्तचितिकोऽग्निरिति च श्रुतेः। स्वाहा सुहुतमस्तु यद्वा यज्ञो वै स्वाहाकार इति श्रुतेः। स्वाहा यज्ञरूपः त्वं सप्त योनीर्घृतेनापृणस्व पृण प्रीतौ तुदादिः॥ ७९॥ १—१८,४,२२-२४।

का० वैश्वानरेण प्रचर्य सर्वहुतेन हस्तेन मारुतान् जुहोतीत्युपविश्य वैश्वानरे वा वैश्वानरं पृथु कृत्वा शुक्रज्योतिरिति प्रतिमन्त्रम्

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्च। शुक्रश्च ऋतपाश्चात्यꣳहाः॥ ८०॥

ईदृङ् चान्यादृङ् च सदृङ् च प्रतिसदृङ् च। मितश्च सम्मितश्च सभराः॥ ८१॥

विमुखेनारण्येऽनूच्यम्। वैश्वानरपुरोडाशेन यागं कृत्वोपविश्याहवनीये हस्तेन मारुतान् पुरोडाशान् सर्वहुतान् जुहोति शुक्रज्योतिरित्येकैकमन्त्रेणैकैकम्। यद्वा वैश्वानरपुरोडाशस्योपर्येव मारुतान् जुहोति किं कृत्वा प्रथनकाले वैश्वानरं पुरोडाशं विस्तीर्णं कृत्वा। अरण्येऽनूच्यं सप्तमं पुरोडाशं विमुखेनोग्रश्च भीमश्चेति वक्ष्यमाणमन्त्रेण जुहोतीत्यर्थः। षट् मरुद्देवत्याः आद्या उष्णिक् एकैकस्यामृचि सप्त सप्त मरुतः। शुक्रज्योतिरित्याद्या एकोनपञ्चाशन्मरुतो यूयमत्रास्मिन्नोऽस्माकं यज्ञे एतन एत आगच्छत इति पञ्चमर्चि अन्वयः तमनर्विशादिना तस्य तनादेशः। तन्नामानि व्याख्यायन्ते शुक्रं शुद्धं शुक्रस्येव वा ज्योतिस्तेजो यस्य स शुक्रज्योतिः। चित्रं दर्शनीयं ज्योतिर्यस्य स चित्रज्योतिः। सत्यं ब्रह्मलक्षणं ज्योतिर्यस्य स सत्यज्योतिः। ज्योतिस्तेजोऽस्यास्तीति ज्योतिष्मान्। शोचति दीप्यत इति शुक्रः। ऋतं सत्यं यज्ञं वा पातीति ऋतपाः। अंहः पापमतीत्य वर्तत इत्यत्यंहाः। चकाराः समुच्चयार्थाः॥८०॥

आगमन् आगच्छेयुः पुषादीत्यादिना गमेर्लुङि च्लेरङ्। कीदृशा देवाः वीतिहोत्राः। होत्रा इति यज्ञनाम[1] वीतिरभिलाषो होत्रा येषां ते वीतिहोत्राः कामितयज्ञाः। ऋतावृधः ऋतं सत्यं यज्ञं वा वर्धयन्ति ते ऋतवृधः संहितायां दीर्घः। किञ्च विश्वाहा विश्वानि च तान्यहानि च विश्वाहा सर्वेष्वहःसु अदब्धमनुपहतं स्वादु हविः विश्वकर्मणे प्रजापतये जुहोमि। कीदृशाय विश्वकर्मणे भूमनो भूम्नो महतो विश्वस्य जगतः पत्ये स्वामिने भूमन इत्यत्रोपधालोपाभाव आर्षः ॥ ७८ ॥

का० पूर्णाहुतिश्च सप्त तद्दृति[2]। स्रुचा पूर्णाहुतिश्च जुहोति घृतपूर्णया स्रुचा आहुतिः पूर्णाहुतिरितार्थः ॥ सप्तर्षिदृष्टा आग्नेयी

**चित्तिञ्जुहोमिमनसाघृतेनयथादेवाऽइहागमन्वीतिहोत्राऋतावृधः। पत्येविश्वस्यभूमनोजुहोमिविश्व**

**कर्म्मणेविश्वाहादाभ्यꣳहविः ॥७८॥**

**सप्ततेऽअग्नेसमिधस्सप्तजिह्वास्सप्तऋषयस्सप्तधामप्रियाणि। सप्तहोत्रास्सप्तधात्वायजन्तिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥७९॥**

द्व्यधिका त्रिष्टुप्। हे अग्ने ते तव सप्त समिधः समिन्धनाः प्राणाः शीर्षण्याः सन्ति। प्राणा वै समिधः प्राणा ह्येतꣳ समिन्धतइति[2] श्रुतेः। किञ्च तव सप्त जिह्वाः सन्ति ज्वालारूपाः सप्त जिह्वाः हिरण्याङ्गणाद्या आगमोक्ताः यद्वा आथर्वणिकोक्ताः काली कराली च मनोजवा च विलोहिता चापि सधूम्रवर्णा स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वा[4] इति। तथा सप्त ऋषयः मरीच्यादयस्तव द्रष्टारः सन्ति। तथा सप्त प्रियाणि धाम धामानि छन्दांसि गायत्र्यादीनि तव सन्ति। छन्दाꣳसि वा अस्य सप्त धाम प्रियाणीति[(३४)] श्रुतेः।

१—निघ० ३,१७,८। २—१८,४,९। ३—९,२,३,४४। ४—मु० उ० १,२।

स्तोमैर्वयं विधेम परिचरेम। अन्तरिक्षं वा अश्वरं सधस्थमिति श्रुतेः। हे अग्ने यस्माद्योनेः इष्टकाचितिरूपात्स्थानात् त्वमुदारिथ उद्गतोऽसि ऋ गतौ लिट् संहितायां दीर्घः तं योनिमहं यजे पूजयामि। ततः समिद्धे सम्यक् प्रज्वलिते त्वे त्वयि हवींषि प्रजुहुरे प्रजुहुविरे प्रजुह्वति ऋत्विजः इरयो रे इति इरेप्रत्ययस्य रे आदेशः। एष वा अस्य स्वो योनिरिति श्रुतेः। एष चित्योऽग्निः ॥ ७५ ॥

वसिष्ठदृष्टाग्निदेवत्या विराडनुष्टुप् दशकास्त्रयो विराडित्युक्तेः। हे यविष्ठ अतियुवा यविष्ठः अतिशायने तमबिष्ठनौ स्थूलदूरयुवेत्यादिना वलोपे पूर्वगुणः हे युवतम हे अग्ने त्वं नोऽस्माकं पुरोऽग्ने दीदिहि दीप्यस्व दीव्यतेर्विकरणव्यत्ययेन जुहोत्यादित्वाच्छपः श्लौ द्वित्वम् तुजादीनामिति पूर्वदीर्घः। किम्भूतस्त्वम् अजस्रयानुपक्षीणया सूर्म्या समित्काष्ठेन प्रेद्धः प्रकर्षेण दीप्तः

प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ। त्वाᳫं शश्वन्त उप यन्ति वाजाः ॥ ७६ ॥

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रᳫं हृदिस्पृशम्। ऋध्यामा त ओहैः ॥ ७७ ॥

सूर्मीशब्दः काष्ठवाचकः यद्वा लोहमयी ज्वलन्ती स्थूणा सूर्मी अजस्रया सूर्म्या सूर्मीसमानया ज्वालया दीदिहि। सूर्मीशब्दो ज्वालोपलक्षकः। हे अग्ने यतः शश्वन्तो निरन्तरभाविनो वाजाः अन्नानि हवींषि त्वामुपयन्ति प्राप्नुवन्ति अतो दीप्यस्वेत्यर्थः ॥ ७६ ॥

का० स्रुवाहुती जुहोत्यग्ने तमद्येति प्रत्यृचम्[1]। समिध आधायाग्ने तमिति ऋग्द्वयेन स्रुवेण द्वे घृताहुती तत्राग्नौ जुहोतीत्यर्थः। व्याख्याता(१५,४४) ॥ ७७ ॥

१—१८,४,८।

विश्वकर्मदेवत्यातिजगती। मनसा घृतेन च सह चित्तिमृत्विग्यजमानानां चित्तं जुहोमि अग्नेः सत्त्वं करोमि अग्नितत्त्वपरिज्ञानार्थं चिन्तनं सन्तानं करोमीत्यर्थः। सङ्कल्पविकल्पात्मकं मनः निश्चयात्मकं चित्तम्। तथा जुहोमि यथा इह यज्ञे देवा

दिशि साधुया साधु समीचीनं विभक्तयोदेशः स्वं योनिं स्थानमासीद अधितिष्ठ। हे विश्वे देवाः यूयं यजमानश्च अस्मिन् पुरोवर्तिनि अध्युत्तरस्मिन् अधिकमुत्कृष्टे सधस्थे अग्निना सह स्थातुं योग्यस्थाने सीदत यज्ञाख्ये स्वर्गे उपविशत। द्यौर्वाऽउत्तरꣳ सधस्थमिति श्रुतेः[1] ॥ ७३ ॥

१—८,२,३,३५।

का० समिदाधानꣳ शमिमयीवैकङ्कत्यौदुम्बर्यस्तꣳ सवितुरिति प्रत्यृचम्। अग्निनिधानानन्तरमध्वर्युस्तत्राग्नौ समिधमादधाति तां सवितुरिति शमीमयीं विधेमेति वैकङ्कतीं प्रेद्धोऽअग्न इत्यौदुम्बरीमित्यर्थः। कण्वदृष्टा सावित्री त्रिष्टुप्। वरेण्यस्य वरणीयस्य सवितुः सम्बन्धिनीं तां सुमतिं शोभनबुद्धिमहमावृणे आभिमुख्येन वृणोमि स्वीकरोमि। कीदृशीं सुमतिं चित्रां चायनीयां स्थापे-

ताꣳ सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम्। यामस्य कण्वो अदुहत्प्रपीनाꣳ सहस्रधारां पयसा महीङ्गाम्

विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे। यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीꣳषि जुहुरे समिद्धे ॥ ७५ ॥

क्षितबहुविधफलदानसमर्थाम्। विश्वजन्यां सर्वजनेभ्यो हितां यद्वा विश्वं जन्यमुत्पाद्यं यस्याः सा विश्वजन्या ताम् जगदुत्पादनसमर्थाम्। तां कां कण्वो मुनिरस्य सवितुर्यां सुमतिमेव गां धेनुमदुहत् अनुग्रहकारिणीं बुद्धिं दुग्धवान् कीदृशीं प्रपीनां प्रकर्षेण पीनां पयसा पूरिताम् सहस्रधारां सहस्रं धारा यस्यास्ताम् सहस्रक्षीरधारायुक्ताम् यद्वा बहुनः कुटुम्बस्य धारयित्रीम्। पयसा दुग्धेन महीं महतीं बहुदुग्धामित्यर्थः सर्वसिद्धिदात्रीम्। रवेर्मतिर्या कण्वेन दुग्धा तामहं वृणे इति सर्वार्थः ॥ ७४ ॥

गृत्समददृष्टा विश्वानराग्निदेवत्या त्रिष्टुप्। हे अग्ने परमे जन्मन् परमे जन्मनि दिवि आदित्यात्मना स्थिताय ते तुभ्यं वयं विधेम हविर्दद्मः। द्यौर्वाऽअस्य परमं जन्मेति(१९) श्रुतेः। अवरे सधस्थे दिवोऽवाचीने सहस्थानेऽन्तरिक्षे स्थिताय विद्युद्रूपाय ते स्तोमैः

श्रुतिः हिरण्मयकलेवरोऽयं एष सहस्राक्ष इति[1] । हे शतमूर्धन्, शतं मूर्धानो यस्य । यद्दः शतशीर्षा रुद्रोऽसृज्यतेति(११) श्रुतेः । यस्य तव शतं प्राणाः सहस्रं व्यानाः शतसहस्रशब्दावपरिमितवचनौ । यश्च त्वं साहस्रस्य सहस्रपरिमितस्य रायः धनस्य ईशिषे प्रभुर्भवसि सहस्रादण् प्रत्ययः । तस्मै तादृशाय ते तुभ्यं वयं वाजाय विधेम वाजमन्नं हवीरूपं दद्मः वाजमिति विभक्तिव्यत्ययः । विधतिर्दानकर्मा । स्वाहा एतद्धविः सुहुतमस्तु ॥ ७१ ॥

का० तस्यामग्निं निदधाति सुपर्णोऽसीति वषट्कारेण[2] । स्वयमातृण्णायां सुपर्णोऽसीति ऋग्द्वयेन वषट्कारेण चाग्निं स्थापयतीत्यर्थः ॥

**अग्ने सहस्राक्ष शतमूर्द्धञ्छतन्ते प्राणाः सहस्रं व्यानाः । त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा ॥७१॥**

**सुपर्णोऽसि गरुत्मान्पृष्ठे पृथिव्याः सीद । भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृꣳह ॥७२॥**

**आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वं योनिमासीद साधुया । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥७३॥**

अग्निदेवत्या पङ्क्तिः । हे अग्ने त्वं सुपर्णोऽसि सुपर्णपक्ष्याकारो गरुड़समानोऽसि । गरुत्मान् गरुत् गरणं गलनं भक्षणमस्यास्तीति गरुत्मान्, अशनायावानित्यर्थः । अतः पृथिव्याः पृष्ठे उपरि सीद उपविश । भासा स्वप्रकाशेन अन्तरिक्षमापृण सर्वतः पूरय । ज्योतिषा स्वसामर्थ्येन दिवं द्युलोकमुत्तभान ऊर्ध्वं स्तम्भितं कुरु स्तम्भेर्लोटि श्नः शानज्झाविति श्नाप्रत्ययस्य शानजादेशः । तथा तेजसा स्वेन दिश उद्दृंह उत्कर्षेण दृढ़ीकुरु दीपय वा ॥ ७२ ॥

[1] —— ८,१,३,२१ । [2] —— १८,१,४ ।

आग्नेयी त्रिष्टुप् । हे अग्ने त्वमाजुह्वानः आहूयमानः सन् सुप्रतीकः शोभनं प्रतीकं मुखं यस्य सुमुखः सन्, पुरस्तात् पूर्वस्यां

मानाः सुविद्वांसः सुष्ठु कर्मप्रकारं जानन्तः विश्वतोधारं जगद्धारणहेतुं यज्ञं वितन्वन्ति विशेषेण कुर्वन्ति ते यजमाना द्यामन्तरिक्षमारोहन्ति तथा रोदसी द्यावाभूमी आरोहन्ति ततः स्वर्यन्तः स्वर्गस्थमादित्यमण्डलं प्राप्नुवन्तोऽन्यत्किमपि स्थानं नापेक्षन्ते ॥ ६८ ॥

आग्नेयी त्रिष्टुप् हे अग्ने त्वं देवयतां देवानिच्छतां यजमानानां प्रथमः प्रेहि पुरतः प्रकर्षेण गच्छ देवानिच्छन्ति देवयन्ति देवयन्तीति देवयन्तः तेषाम् सुप आत्मनः क्यजिति क्यजन्ताच्छतृप्रत्ययः क्यचि चेतीत्वे प्राप्ते न छन्दस्यपुत्रस्येति तदभावः। कथं मयाग्रतो गन्तव्यं तत्राह यतस्त्वं देवानामुतापि च मर्त्यानां मनुष्याणां चक्षुःस्थानीयः। लोकेऽपि गच्छतः पुरुषस्य दृष्टिः पुरतो याति। किञ्च यष्टुमिच्छन्ति इयक्षमाणाः अभ्यासे यलोपश्छान्दसः इयक्षमाणा यष्टुमिच्छन्तो यजमानाः स्वस्ति यथा तथा अविनाशेन स्वः

अग्नेप्रेहिप्रथमोदेवयताञ्चक्षुर्देवानामुतमर्त्यानाम्। इयक्षमाणाभृगुभिःसजोषाःस्वर्यन्तुयजमानाःस्वस्ति ॥६९॥

नक्तोषासासमनसाविरूपेधापयेतेशिशुमेकꣳसमीची। द्यावाक्षामारुक्मोअन्तर्विभातिदेवाअग्निन्धारयन्द्रविणोदाः ।७०।

स्वर्गं यन्तु प्राप्नुवन्तु। कीदृशाः भृगुभिः भृगुगोत्रविप्रैः सजोषाः समानो जोषः प्रीतिर्येषान्ते। भृगुग्रहणमनूचानब्राह्मणोपलक्षणम-उत्तमविप्रैः प्रीतिमन्तः ॥ ६९ ॥

का० स्वयमातृण्णामध्यग्निं धारयंश्छुक्लवत्सापयसाभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिञ्चन्नक्तोषासेति[1]। अध्वर्युः स्वयमातृण्णेष्टकोपरि समीपे प्रतिप्रस्थात्रा तमग्निं धारयन् कृष्णवर्णायाः श्वेतवत्सायाः गोर्दुग्धेन दोहनेन मृन्मयदोहनपात्रेण जुहूस्थानीयेन स्वयमातृण्णां सिञ्चन्निधनस्थेऽग्नौ जुहोति नक्तोषासेत्यृचा अनयेत्यर्थः॥ व्याख्याता द्वादशे(१२,२) ॥ ७० ॥ १—१८,४,२।

आग्नेयी विराट्पङ्क्तिः दशाक्षरचतुःपादा। हे अग्ने सहस्राक्ष सहस्रमक्षीणि यस्य तत्सम्बुद्धिः हिरण्मयकलान्येव नेत्राणि। तथाच

आशा दिशो दीद्यानः दीपयन् प्रकाशयन्सन् त्वं विभाहि विशेषेण दीप्यस्व । ततो नोऽस्माकं द्विपदे पुत्रादिकाय चतुष्पदे गवादि-
काय ऊर्जमन्नं धेहि सम्पादय ॥ ६६ ॥

आग्नेयी पिपीलिकमध्या बृहती आद्यन्ततीयौ चयोदशार्णौ द्वितीयोऽष्टकः सा पिपीलिकमध्या बृहती त्रयोदशिनोर्मध्येऽष्टकः
पिपीलिकमध्येति वचनात् अत्राद्यस्त्रयोदशः द्वितीयो नवकः तृतीयश्चतुर्दशक इति षट्त्रिंशदक्षरत्वाद्बृहती त्रिपादणिष्ठमध्या पिपी-
लिकमध्येति वचनात्पिपीलिकमधा च । यजमान आह अहं पृथिव्या उत् उन्नतः सन् अन्तरिक्षमारुहमारूढोऽस्मि । तस्मादन्त-
रिक्षादुन्नतो दिवमारुहं द्युलोकमारूढोऽस्मि । दिवो द्युलोकस्य यो नाको दुःखरहितः प्रदेशः तस्य पृष्ठादुपरिभागात्स्वः ज्योतिः
स्वर्गलोकस्थं ज्योतिरादित्यमण्डलमहमगां गतोऽस्मि प्राप्स्यामीत्यर्थः इणो गा लुङीति गादेशः ॥ ६७ ॥

**पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् । दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम् ॥ ६७॥**

**स्वर्यन्तो नापेक्षन्त आद्याᳬरोहन्ति रोदसी । यज्ञं ये विश्वतोधारᳬसुविद्वाᳬसो वितेनिरे ॥ ६८ ॥**

आग्नेयी अनुष्टुप् सुष्ठु विदन्ति जानन्ति ते सुविद्वांसः ज्ञानकर्मसमुच्चयकारिणः ये सुविद्वांसो यज्ञं वितेनिरे वितन्वन्ति अनु
तिष्ठन्ति । कीदृशं यज्ञं विश्वतोधारं विश्वतो धारा यस्य तम् आहुतिदक्षिणान्नानि यज्ञस्य धाराः वैश्वानरकृतपूर्णाहुतिवसो-
र्धारावाजप्रसवीयानि वा यज्ञस्य धाराः यद्वा विश्वस्य जगतो धारयितारम् । ते यज्ञकर्तारः स्वः स्वर्गं यन्तो गच्छन्तो
नापेक्षन्ते पुत्रपश्वाद्यपेक्षां न कुर्वते कृतकृत्यत्वात् । द्यां स्वर्गं चारोहन्ति कीदृशीं द्यां रोदसी रुणद्धि जरामृत्युशोकादीन् सा
रोदसी ताम् धस्य दादेशश्छान्दसः पूर्वसवर्णदीर्घः दिवो विशेषणं न तु द्यावापृथिव्योरभिधानं दिव इत्युपादानात् । यद्वा ये यज-

ऽवृधन् वर्धयन्तु। अध अथानन्तरं मे मम सपत्नान् शत्रून्विषूचीनान्विष्वगञ्चनान्नानागतीन् कृत्वा इन्द्राग्नी द्वौ व्यस्यतविनाशयेताम-पुनरागमनाय क्षिपतामित्यर्थः ॥ ६४ ॥

का० क्रमध्वमग्निनेति चित्यमारोहन्ति। ते ऋत्विजः क्रमध्वमिति पञ्चभिर्मन्त्रैर्यथेन चित्याग्निमारोहन्तीत्यर्थः ॥ आग्नेय्यनु-ष्टुप। हे ऋत्विग्यजमाना यूयमग्निना चित्येन कृत्वा नाकं स्वर्गलोकं क्रमध्वमाक्रमत स्वर्गो वै लोको नाक इति श्रुतेः। किम्भूता यूयम् उखायां संस्कृतमुख्यमग्निं हस्तेषु बिभ्रतः धारयन्तः। यद्वा उख्यमग्निं हस्तेषु बिभ्रतः सन्तोऽग्निनानेकचित्याग्निना सह

उद्ग्राभञ्चनिग्राभञ्चब्रह्मदेवाअवीवृधन्। अधासपत्नानिन्द्राग्नीमेविषूचीनान्व्यस्यताम् ॥ ६५ ॥

क्रमध्वमग्निनानाकमुख्यꣳहस्तेषुबिभ्रतः। दिवस्पृष्ठꣳस्वर्गत्वामिश्रादेवेभिराध्वम् ॥ ६५ ॥

प्राचीमनुप्रदिशम्प्रेहिविद्वानग्नेरग्नेपुरोअग्निर्भवेह। विश्वाआशादीद्यानोविभाह्यूर्जन्नोधेहिद्विपदेचतुष्पदे ॥६६॥

क्रमध्वम् चित्युपरि पादान् कुरुत आरोहध्वमित्यर्थः। ततो दिवोऽन्तरिक्षस्य पृष्ठं स्वः स्वर्गं गत्वा देवेभिर्देवैः मिश्राः संयुताः सन्तः आध्वं तिष्ठत आस उपवेशने लोट् मध्यमबहुवचनं शपो लोपः धि चेति सलोपः ॥ ६५ ॥ १—९,२,३,२४।

आग्नेयी त्रिष्टुप् हे अग्ने इदानीमानीत उख्य वह्ने प्राचीं प्रदिशं प्रागाख्यां प्रकृष्टां दिशमनु लक्षीकृत्य त्वं प्रेहि प्रकर्षेण गच्छ। कीदृशस्त्वम् विद्वान् स्वाधिकारं जानानः। गत्वा च हे अग्ने इहास्मिन् प्रदेशे अग्नेः इष्टकानिष्पादितस्य चितिरूपस्याग्नेः पुरोऽग्निर्भव पुरः अग्रे अङ्गति गच्छतीति पुरोऽग्निः पुरोगन्ता मुख्यो भव प्रकृत्यान्तःपादमव्यपरइति सन्ध्यभावः। किञ्च विश्वाः सर्वाः

प्रलयरूपकोटिद्वयं विषक्रमे पाति रचेति च परमेश्वररूपेण। कीदृशोऽश्मा उच्चा सेक्ता यागद्वारेण फलाभिवर्षक इत्यर्थः। समुद्रः बहुफलप्रदत्वात्समुद्रसदृश इत्यर्थः। अरुणः पूर्वमन्त्रे सूर्यसाम्यात्सूर्यसदृशः। सुपर्णः स्वर्गं प्रत्यागमनहेतुत्वात्पक्षिसदृशः ॥ ६० ॥

का० निधायैनमतिक्रामन्तीन्द्रं विश्वा इति[१]। एनं पृश्न्यश्मानं क्वचिद् गुप्ते देशे स्थापयित्वा सर्वे चयनं प्रति गच्छन्ति इन्द्रं विश्वा इत्याद्यृक्चतुष्टयेनेत्यर्थः ॥ व्याख्याता(१२,५६) ॥ ६१ ॥

१——१८,३,२१।

त्रिष्टुतिदृष्टा यज्ञदेवत्यानुष्टुप्। देवानाह्वयतीति देवहूः देवानामाह्वाता यज्ञो देवाञावक्षत् आवहतु चकारः समुच्चये यजतु च। सुम्नं सुखं धनपुत्रकलत्राद्युत्यमाह्वयति सुम्नहूः सुखकरो यज्ञो देवानावक्षत् आवहतु। अग्निर्देवः देवानावक्षत् आवहतु यक्षत् यजतु

देवहूर्य्यज्ञऽआचवक्षत्सुम्नहूर्य्यज्ञऽआचवक्षत्। यक्षदग्निर्देवोदेवाँ२॥ऽआचवक्षत् ॥ ६२ ॥

वाजस्यमाप्रसवऽउद्ग्राभेणोदग्रभीत्। अधासपत्नानिन्द्रोमेनिग्राभेणाधराँ२॥ऽअकः॥ ६३ ॥

च। वक्षत् यक्षत् वहतेर्यजेश्च सिब्बहुलं लेटीति सिप्प्रत्ययो लेटोऽडाटावित्यडागमः इतश्चलोप इति तिप इकारलोपः ॥ ६२ ॥

इन्द्रदेवत्यानुष्टुप् वाजस्यान्नस्य प्रसवः प्रसूतिः उत्पत्तिः अनुज्ञा वा उद्ग्राभेण ह्रग्रहोर्भश्छन्दसि उद्ग्राभेण उद्ग्रहणेन ऊर्ध्वं विगृह्य दीयतइत्युद्ग्रहणं दानं तेन मा मामुदग्रभीत् उदग्रहीत् उद्गृह्णातु। अध अथ निग्राभेण नीचैर्ग्रहणेन नीचैर्हस्तं कृत्वा भिक्षादिः प्रार्थते याचिष्णुतया अन्नाभावेन वा इन्द्रो मे मम सपत्नान् शत्रून् अधरानधमान् तिरस्कृतान् अकः करोतु मां दातारं करोतु शत्रून् भिक्षून् करोत्वित्यर्थः। करोतेर्लङि बहुलं छन्दसीति शपि लुप्ते गुणे तिपि लुप्ते अक इति रूपम् ॥ ६३ ॥

इन्द्राग्निदेवत्यानुष्टुप्. देवा उद्ग्राभमुद्ग्राहमस्मद्विषयमुत्कर्षं निग्राभं निग्राहं शत्रुविषयमपकर्षं ब्रह्म त्रयीलक्षणं यज्ञविषयमवी-

लोकमपरममुं लोकं च अन्तरा मध्ये स्थितानां जनानां केतुं चित्तं चाभिचष्टे सर्वजनाभिप्रायज्ञ इत्यर्थः। यद्वा विश्वाचीर्विश्वव्यापिनीर्दिशोऽभिचष्टे सर्वतः प्रकाशयति। तथा घृताचीर्घृतप्राप्तिहेतभूता धेनूश्चाभिचष्टे। तथान्तरा ब्रह्माण्डमध्ये पूर्वमपरं च केतुमुदयास्तमयमध्यवर्तिनं बोधमभिचष्टे ॥ ५९ ॥

अप्रतिरथदृष्टादित्यदेवत्या त्रिष्टुप्। य आदित्यः पूर्वस्य पूर्वदिशि स्थितस्य पितुर्द्युलोकस्य योनिं स्थानमाविवेश आविशति द्यौः पितेत्युक्तेः पितुशब्देन द्युलोकः उदयसमये द्युलोकाज्जायमान उपलभ्यते सूर्य इति द्युलोकपूर्वभागः सूर्यस्य पितृभूत उच्यते। किम्भूतो यः उक्षा वृष्टिद्वारा सेक्ता। समुद्रः समुनत्ति क्लेदयति समुद्रः उदयकालेऽवश्यायपतनेन क्लेदनकर्ता।

उ॒क्षा स॑मु॒द्रो अ॑रु॒णः सु॑प॒र्णः पूर्व॑स्य॒ योनि॒म्पि॒तुरा वि॑वेश। मध्ये॑ दि॒वो निहि॑तः॒ पृश्नि॒रश्मा॒ वि च॑क्रमे॒ रज॑सस्पा॒त्यन्तौ॑ ॥६०॥

इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑। र॒थीत॑मꣳ र॒थीनां॒ वाजा॑ना॒ꣳ सत्प॑ति॒म्पति॑म् ॥ ६१ ॥

अरुणः उदयकाले अरुणवर्णः। सुपर्णः शोभनं पर्णं पतनं गमनं यस्य स सुपर्णः। यश्च दिवो मध्ये निहितोऽवस्थितः। पृश्निर्विचित्रवर्णः नानारश्मिसङ्कुलः अश्मा अश्नुते व्याप्नोति नभ इत्यश्मा व्यापकः। एवंविधः सन्विचक्रमे विक्रमते नभः। यश्च विक्रममाणो रजसः रञ्जनस्य लोकत्रयस्य अन्तौ वचनव्यत्ययः अन्तान् पर्यन्तान् पाति रक्षति। यो ह्यन्तान् पाति स मध्यं पात्येवेत्यर्थः॥ अथाग्निपक्षे व्याख्यानम्। अयं पृश्निर्विचित्रवर्णोऽश्मा पाषाणः पितुः कर्मपालकस्य पूर्वस्य पूर्वदिग्वर्तिन आहवनीयस्य योनिं कारणभूतमाग्नीध्रमाविवेश प्रविष्टवान् यदा हवनीयमुद्धपेदाग्नीध्रादुद्धरेदित्याहवनीययोनित्वमाग्नीध्रस्याम्नातमन्यत्र। अयमश्मा दिवो मध्ये आग्नीध्रस्थानीयस्यान्तरिक्षस्य मध्ये निहितः स्थापितः सन् रजसो रञ्जनीयस्य जगतः अन्तौ उत्पत्ति-

हरति दारिद्र्यमिति हरि हिरण्मयम् हिरण्यवर्णाः केशाः केशस्थानीया ज्वाला यस्य सः। सविता सौति सविता प्राणिनां तत्तद्व्यापारेषु प्रेरकः। तस्य दृशस्याग्नेः प्रसवे आज्ञायां पूषा पोषकः सूर्यः याति उदयास्तमयनद्वारेणाटति कीदृशः पूषा विद्वान् स्वाधिकारमहोरात्रिप्रवर्तनात्मकं जानन्। विश्वा विश्वानि भुवनानि भूतजातानि सम्पश्यन् सर्वान् लोकान् सम्यगवलोकयन्। गोपाः गोपायतीति गोपाः रक्षकः धर्मस्य ॥ ५८ ॥

१—१८, २, १९।

का० आग्नीध्रदेशाद्दक्षिणं पृश्न्या सहितं पृश्न्यश्मानमुपदधाति विमान इति॥। अध्वर्युराग्नीध्रगृहाद्दक्षिणदिशि पृश्न्या संलग्नं पृश्निं तनुं दृक्तं चित्रवर्णं वा पाषाणं विमान इति ऋग्द्वयेनोपदध्यादित्यर्थः॥ विश्वावसुदृष्टा आदित्यदेवत्या त्रिष्टुप् आदित्यात्मनाश्मा स्तूयते। एषोऽश्मादित्यरूपेण दिवोऽन्तरिक्षस्य मध्ये आस्ते तिष्ठति। असौ वा आदित्योऽश्मा पृश्निरमुमेवैतदादित्यमुपदधातीति(१९) श्रुतेः। आहवनीयो द्युलोकः गार्हपत्यो भूलोकः तयोर्मध्ये आग्नीध्रमन्तरिक्षस्थानीयं तत्र स्थितत्वाद्दिवो मध्ये आस्ते। तथाच श्रुतिः। अन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय एतं तदिमौ लोकावन्तरेण दधाति तस्मादेष इमौ लोकावन्तरेण तपति॥ आग्नीध्रवेलायामन्तरिक्षं वा आग्नीध्रमेतं तदन्तरिक्षे दधातीति॥ कीदृश एषः विमानः विविधं मिमीत इति विमानः जगन्निर्माणसमर्थः। तथा रोदसी द्यावापृथिव्यौ अन्तरिक्षमापप्रिवान् तेजसा सर्वतः पूरितवान् प्रा पूरणे क्वसु प्रत्ययः। स तथा स्तूयमान आदित्यरूपोऽश्मा विश्वाचीः वेदीः घृताचीः स्रुचश्चाभिचष्टे पश्यति यज्ञकर्तृननुष्ठातुं कर्म पश्यतीत्यर्थः। विश्वं हविरञ्चितं स्थापितं यस्यामिति विश्वाची वेदिः घृतमञ्चितं यस्यामिति घृताची स्रुक्। तथाच श्रुतिः। स विश्वाचीरभिचष्टे घृताचीरिति स्रुचश्चैतद्वेदीश्चाहेति। तथा पूर्वमिमं

विमान एष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षम्। स विश्वाचीरभिचष्टे घृताचीरन्तरा पूर्वमपरं च केतुम्। ५९

माना ऋत्विजो देवेभ्योऽर्थाय अध्वर्यन्तः सन्तः अस्थुः अध्वरं कर्तुमिच्छन्तस्तिष्ठन्ति अध्वरमिच्छति अध्वर्यति सुप आत्मनः क्यच् कव्यध्वरपृतनस्यर्चि लोप इति अध्वरान्तलोपः ॥ ५६ ॥

हविर्यज्ञदेवत्या बृहती। यज्ञो यत्र यस्मिन् काले हव्यं होतुं योग्यं हविः एति प्राप्नोति ततो यज्ञादुत्थिता वाका वाक्यानि ऋग्यजुःसामलक्षणानि आशिषो ऽभीष्टार्थशंसनानि च नोऽस्मान् जुषन्ताम् सेवन्तां यज्ञफलान्यस्माननालिङ्गन्त्वित्यर्थः। कीदृशं हविः वीतं देवानामिष्टम्। इष्टꣳ स्विष्टमित्येतदिति(११) श्रुतेः। तथा शमिता सुपां सु इति तृतीयैकवचनस्य सु आदेशः शमित्रा यजध्यै यष्टुं शमितं संस्कृतम् तुमर्थे से इत्यादिना यजेस्तुमर्थे अध्यैप्रत्ययः कीदृशो यज्ञः तुरीयः चतुर्थः आदौ

**वीतꣳहविःशमितꣳशमितायजध्यैतुरीयोयज्ञोयत्रहव्यमेति। ततोवाकाआशिषोनोजुषन्ताम्॥ ५७ ॥**

**सूर्य्यरश्मिर्हरिकेशःपुरस्तात्सविताज्योतिरुदयाꣳ२॥अजस्रम्। तस्यपूषाप्रसवेयातिविद्वान्त्सम्पश्यन्विश्वाभुवनानिगोपाः॥५८**

यजुर्जपः ततो होत्रा ऋचां पठनम् ब्रह्मणोऽप्रतिरथजपः एवञ्च तुरीयो होमः। तथाच श्रुतिः। अध्वर्युः पुरस्ताद्यजूꣳषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष एव तुरीयो यज्ञ इति। यद्वा आदावध्वर्युणाश्रावणम् तत आग्नीध्रेण प्रत्याश्रावणम् यजेति ततोऽध्वर्योः प्रैषः ततो होतुर्वषट्कारः इति यज्ञश्चतुर्धा कल्प्यते ॥ ५७ ॥

अग्निदेवत्या त्रिष्टुप्। ज्योतिर्ज्योतीरूपोऽग्निः अजस्रं निरन्तरं प्रत्यहं पुरस्तात्पूर्वस्यां दिशि आहवनीयरूपेण होमार्थमुदयान् उद्गच्छति उत्पूर्वस्य यातेर्लङि प्रथमबहुवचने नो रु-आदेशाभावे रूपम् वचनव्यत्ययः छन्दसि लुङ्लङ्लिट इति लङ्। कीदृशोऽग्निः सूर्यरश्मिः सूर्यस्येव रश्मयः किरणा यस्य सः यद्वा सूर्यश्चासौ रश्मिश्च सूर्यरूपस्तद्रश्मिरूपश्चेत्यर्थः। हरिकेशः

प्रवर्ग्यं परिगृह्य परितः परीशासाभ्यामादायायजन्त यजन्ते। यदा च ऊर्जा हविर्लक्षणेनान्नेनायजन्त यजन्ते। यदो गृहणात्तच्छन्दोऽध्याहारः तदा अग्नौ समिद्धे सति दीप्यमाने सति उकथपत्रः यज्ञो गृभीतः गृहीतः धारितः।, गृभीत इति धारित इत्येतदिति श्रुतेः। उकथानि शस्त्राणि पत्रं वाहनं यस्य स उकथपत्रः शस्त्रैरेव यज्ञो वाह्यते। कीदृश उकथपत्रः ईड्यः ईडितुं योग्यः स्तुत्यः। अधिमामहानः महति पूजयति देवानिति मामहानः महतेर्विकरणव्यत्ययेन जुहोत्यादिभ्यः श्लुः श्लाविति द्वित्वम् तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः यद्वा अधिको मामहानो यजमानो यत्र यज्ञे। यजमानो वै मामहान इति श्रुतेः॥ ५५॥

१—८,१,२,९।

**समिद्धेअग्नावधिमामहानउकथपत्रईड्योगृभीतः। तप्तंघर्मंपरिगृह्यायजन्तोर्जायद्यज्ञमयजन्तदेवाः॥ ५५॥**

**दैव्यायधर्त्रेजोष्ट्रेदेवश्रीःश्रीमनाःशतपयाः। परिगृह्यदेवायज्ञमायन्देवादेवेभ्योअध्वर्यन्तोअस्थुः॥५६॥**

बृहती पङ्क्तिर्वाष्टविंशदक्षरत्वात्। अग्निदेवत्या। एवंविधाय अग्नये यज्ञो भवतीति शेषः। कीदृशाय दैव्याय देवानां हितो दैव्यस्तस्मै। धरतीति धर्ता तस्मै यागद्वारा जगतो धारयित्रे। जोषते जोष्टा सेविता तस्मै अस्मदीयस्तुतिहविषः सेवित्रे कीदृशो यज्ञः देवश्रीः देवान् श्रयति हविर्दानेन सेवते देवश्रीः। श्रीमनाः श्रयते सेवते इन्द्रादीन् श्रीर्यजमानस्तस्मिन्मनोऽनुग्रहरूपं यस्य स श्रीमनाः यद्वा श्रीर्मनसि यस्य यद्वा भक्तेभ्यः श्रियं दातुं मनो यस्य। शतपयाः शतसङ्ख्याकानि पयःप्रभृतीनि हवींषि यस्य सः। देवा ऋत्विज ईदृशं यज्ञाग्निं परिगृह्य यज्ञं प्रति आयन् प्राप्नुवन्ति। किञ्च देवा दीप्य-

वयमृत्विजो यस्य यजमानस्य गृहे हविः कुर्मः पुरोडाशप्रधानं कर्म कुर्मः हे अग्ने तं यजमानं त्वं वर्धय। देवास्तस्मै तं यजमानमधिब्रुवन् अधिकं ब्रुवन्तु सर्वेभ्योऽधिकोऽयमिति। अयं यजमानश्च ब्रह्मणो वैदिककर्मणः पतिः पालको भवतु। यद्वा देवा अयं ब्रह्मणस्पतिरग्निश्च इममधिब्रुवन्। तस्मै द्वितीयार्थे चतुर्थी॥ ५२॥

का० चितिमात्रायामुदग्ध्योदु त्वेति[१]। होत्रा प्रथमायामृचि त्रिः पठितायां सत्यां प्रतिप्रस्थाता उदु त्वेति मन्त्रेण प्रदीप्तमिध्मं शालाद्वार्यादूर्ध्वमुत्पाटयतीत्यर्थः॥ व्याख्याता (१२,३१)॥

का० चित्यं प्रतिगच्छन्ति पञ्च दिश इति[२]। ततो ब्रह्महोत्रध्वर्युप्रतिप्रस्थातृयजमानाः पञ्च दिश इत्याद्यृक्पञ्चकेन चित्यं प्रति

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः। स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुः॥ ५३॥

पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः। रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात्॥ ५४॥

गच्छन्ति। सर्वेषां मन्त्रपाठ इति कर्कः अध्वर्योरेवेति हरिस्वामिन इत्यर्थः॥ यज्ञाग्निसाधनवादिन्यः पञ्च ऋचः आर्षी द्वे त्रिष्टुभौ प्रथमा दिग्देवत्या। पञ्च दिशः प्राचीदक्षिणाप्रतीच्युदीचीमध्यारूपा देवीः देव्यो यज्ञमस्मदीयमवन्तु। कीदृश्यो दिशः दैवीः देव्यः देवानामिन्द्रयमवरुणसोमब्रह्मणां सम्बन्धिन्यो देव्यः। तथा अमतिमस्मदीयप्रज्ञामान्द्यं दुर्मतिं दुष्टां मतिं पापविषयां बुद्धिमपबाधमानाः विनाशयन्त्यः। तथा रायस्पोषे धनपुष्टौ यज्ञपतिं यजमानमाभजन्तीः आभजन्त्यः भागिनं कुर्वन्त्यः किञ्च यज्ञोऽस्मदीयो रायो धनस्य पोषे पुष्टौ अधि अस्थात् अधिकं तिष्ठतु समृद्धोऽस्तु॥ ५४॥

१——१८,३,१८। २——१८,३,१८।

आग्नेयी। दीव्यन्ति व्यवहरन्ति ब्रह्मत्वहौत्राध्वर्यवादिकर्मभिः प्रचरन्तीति देवा ऋत्विजो यत् यदा तप्तं घर्मं ज्वलितं

वरुणः ते तव शर्म उरोः पृथोरपि वरीयः उरुतरः प्रथीयः कृणोतु अत्यन्तमुरु वरीयः ईयसुनि प्रयस्फेत्यादिना उरोर्वरादेशः। किञ्च देवाः जयन्तं विजयं प्राप्नुवन्तं त्वा त्वामनुमदन्तु अनुकूला भूत्वा हृष्यन्तु उत्साहयन्तु वा॥ ४९॥

का० श्रोदुम्बरीर्घृतोषितास्तिस्र उदेनमित्यादधाति प्रत्यृचम्। अशुष्का उदुम्बरतरुत्था रात्रौ घृते स्थिताः प्रादेशमात्रीस्तिस्रः समिध ऋत्क्रमेण स्वाहाकारेण जुहोति ततोऽग्निप्रणयनमित्यर्थः॥ तिस्रोऽनुष्टुभः प्रथमाग्निदेवत्या द्वितीयेन्द्रदेवत्या तृतीया लिङ्गोक्तदेवता। हे घृतेनाहुत आज्येन सर्वतो हूयमान हे अग्ने एनं यजमानमुत्तरां नय अतिशयेन उत् उत्तराम् तरबन्तादाम्प्रत्ययः।

उदेनमुत्तरान्नयाग्ने घृतेनाहुत रायस्पोषेण सꣳसृज प्रजया च बहुङ्कृधि॥ ५०॥

इन्द्रेमम्प्रतरान्नय सजातानामसद्वशी। समेनं वर्चसा सृज देवानाम्भागदा असत्॥ ५१॥

यस्य कुर्मो गृहे हविस्तमग्ने वर्द्धया त्वम्। तस्मै देवा अधिब्रुवन्नयञ्च ब्रह्मणस्पतिः॥ ५२॥

उत्कृष्टतमैश्वर्यं प्रापय ऐश्वर्यमेवाह रायस्पोषेण धनसमृद्ध्या संसृज संयोजय प्रजया सन्तत्या पुत्रपौत्रादिकया च बहुं कृधि भूयांसं कुरु बहुकुटुम्बं कुर्वित्यर्थः॥ ५०॥

हे इन्द्र परमैश्वर्ययुक्त इमं यजमानं प्रतरां नय अतिप्रकर्षः प्रतराम् प्रकृष्टमैश्वर्यं प्रापय। तदेव दर्शयति सजातानां समानजातीयानां वशी असत् वशयति वशी नियमनसमर्थो भवतु। किञ्च एनं यजमानं वर्चसा संसृज तेजस्विनं कुरु। अयं यजमानो देवानां भागदा असत् भागं ददाति भागदाः यज्ञेषु देवानां भागप्रदाता भवतु॥ ५१॥ १—१८,३,१४।

न जानन् परस्परं न जानीयुस्तथा गूहत। कीदृशेन तमसा अपव्रतेन अपगतं व्रतं कर्म यस्मात्तेन येन व्याप्तानां कर्म नश्यति तादृशेन तमसा गूहतेत्यर्थः ॥ ४७ ॥

इन्द्रबृहस्पत्यदितिदेवत्या पङ्क्तिरष्टाचरपञ्चपादा। यत्र यस्मिन् युद्धे वाणाः शत्रुप्रयुक्ताः सम्पतन्ति इतश्चेतश्च सम्भूय पतन्ति। तत्र दृष्टान्तः कुमारा विशिखा इव विगता शिखा येषां ते विशिखाः शिखारहिता मुण्डितमुण्डा विकीर्णकवचा वा अतिबालाश्चपलाः सन्तो यथा इतस्ततो गच्छन्ति तद्वत्। तत् तत्र युद्धे इन्द्रः नोऽस्मभ्यं शर्म विजयोत्थं सुखं यच्छतु ददातु। कीदृश इन्द्रो बृहस्पतिः बृहतां मन्त्राणां पतिः पालकः विजयोचितमन्त्रज्ञः। अदितिः नास्ति दितिः खण्डनं यस्य अखण्डितशक्तिः। विश्वाहाः विश्वान्

**यत्रबाणाःसम्पतन्तिकुमाराविशिखाइव। तन्नइन्द्रोबृहस्पतिरदितिःशर्मयच्छतुविश्वाहाशर्मयच्छतु ॥ ४८ ॥**

**मर्माणितेवर्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम्। उरोर्वरीयोवरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥४९॥**

सर्वान् शत्रून् आ समन्ताद्धन्तीति विश्वाहा स शर्म यच्छतु इति पुनरुक्तिरादरार्था। यद्वा तत्र इन्द्रः बृहस्पतिरिन्द्रगुरुः अदितिरिन्द्रमाता च विश्वाहा सर्वाण्यहानि सर्वदा शर्म यच्छतु विश्वानि च तान्यहानि च विश्वाहा विभक्तेराकारः अत्यन्तसंयोगे द्वितीया ॥ ४८ ॥

का० मर्माणि तद्दति कवचं प्रयच्छति। महाव्रते याग्येऽध्वर्युः क्षत्रियाय सन्नाहं परिधानाय प्रयच्छतीत्यर्थः। सोमवरुणदेवत्या त्रिष्टुप्। हे यजमान ते तव मर्माणि जीवस्थानानि वर्मणा कवचेनाहं छादयामि आवृणोमि। राजा विप्रादीनामधिपः सोमोऽमृतेन नास्ति मृतं मरणं येन तेन मरणनिवारकेणामृतेन वर्मणा त्वा त्वामनुवस्तामन्वाच्छादयतु वस आच्छादनेऽदादिः लोट्। तथा

इत ऋक्चतुष्टयस्य विनीयोग: कात्यातते नोक्त:। इयमिषुदेवत्यानुष्टुप्। हिंसिका शरमयी हेतिः शरव्या ब्रह्मणा मन्त्रेण संशिता तीक्ष्णीकृता ब्रह्मसंशिता तादृशि हे शरव्ये त्वमवसृष्टास्माभिर्मुक्ता सती परापत सहसा परसैन्ये पतिता भव। पतित्वा चामित्रान् शत्रून् गच्छ प्राप्नुहि प्राप्य च प्रपद्यस्व शत्रुशरीरेषु प्रविश प्रविश्य चामीषां शत्रूणां मध्ये कञ्चन पुरुषं मा उच्छिषः अवशिष्टं मा कुरु सर्वानपि जहीत्यर्थः शिषल् विशेषणे पुषादीत्यादिना लुङि रूपम् ॥ ४५ ॥

योद्धृदेवत्यानुष्टुप् योद्धॄन् स्तौति हे नरोऽस्मदीया योद्धारो यूयं प्रेत परसैन्यं प्रति प्रकर्षेण गच्छत ततो जयत विजयं प्राप्नुत

अवसृष्टा परापत शरव्ये ब्रह्मसᳪंशिते। गच्छामित्रान् प्रपद्यस्व मामीषाङ्कञ्चनोच्छिषः ॥ ४५ ॥

प्रेता जयता नर इन्द्रो वः शर्म्म यच्छतु। उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ ४६ ॥

असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्द्धमाना। तां गूहत तमसापव्रतेन यथामी अन्यो अन्यन्न जानन् ॥ ४७ ॥

द्व्यचोऽतस्तिङ इति प्रेतेत्यत्र दीर्घः अन्येषामपि दृश्यत इति जयतेत्यत्र दीर्घः। इन्द्रो वो युष्मभ्यं शर्म जयोत्थं सुखं यच्छतु ददातु दाण् दाने पाघ्रेत्यादिना यच्छादेशः। किञ्च यथा यूयमनाधृष्या असथ केनाप्यतिरस्कार्या भवथ। तथा वो युष्माकं बाहवो भुजदण्डा उग्रा उद्गूर्णायुधाः सन्तु। असथेत्यत्र लेटोऽडाटाविति अडागमः ॥ ४६ ॥

मरुद्देवत्या त्रिष्टुप् हे मरुतो या प्रसिद्धा असौ परेषां शत्रूणां सेना नोऽस्मानभि आ एति अभ्यागच्छति। कीदृशी ओजसा बलेन स्पर्धमाना स्पर्धां कुर्वाणा तां सेनां तमसा अन्धकारेण यूयं गूहत संवृतां कुरुत। तथा गूहत यथा अमी सैनिका अन्योऽन्यं

हे मघवन्धनवन्निन्द्र आयुधानि उद्धर्षय उद्धृतहर्षाणि कुरु मामकानां मदीयानां सत्वनां प्राणिनां मनांसि च उद्धर्षय हर्षयुक्तानि कुरु। हे वृत्रहन् वैरिघातिन् वाजिनामश्वानां वाजिनानि शीघ्रगमनानि उद्धर्षय उत्कृष्टानि कुरु। किंच जयतां विजयमानानां रथानां घोषाः शब्दा उद्यन्तु उद्गच्छन्तु रथाः सशब्दाः प्रसरन्तु ॥ ४२ ॥

ध्वजेषु समृतेषु ऋ गतौ सङ्गतेषु शत्रुध्वजैः संयुक्तेषु सत्सु इन्द्रः अस्माकं या इषवोऽस्मदीयैः प्रयुक्तास्ता जयन्तु परसैन्यानि घ्नन्तु। अस्माकं ये वीराः शूरास्ते उत्तरे परकीयभटेभ्य उत्कृष्टा भवन्तु उ अपि च हे देवा हवेषु अस्मान् यूयमवत रक्षत अन्येषामपि दृश्यत इति ॥ ४३ ॥

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वस्माँ२ ॥ उ देवा अवता हवेषु ॥ ४३ ॥

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि । अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ ४४ ॥

अप्वा देवता सा व्याधिर्भयं वा यस्मादेतया विद्धोऽपवीयते तस्मादप्वा अपपूर्वाद्वातेरन्तर्भूतण्यर्थात् अन्येभ्योऽपि दृश्यत इति उप्रत्ययः अपशब्दान्त्याकारलोपश्छान्दसः ततष्टाप् अपवाति अपगमयति सुखं प्राणांश्चेत्यप्वा। ऐन्द्रोऽभिरूपा द्वादश भवन्तीति[1] श्रुतेरियमप्यैन्द्रसेनासम्बन्धिनी। हे अप्वे अमीषां शत्रूणां चित्तं चित्तानि प्रतिलोभयन्ती मोहयन्ती अङ्गानि शत्रुगात्राणि गृह्णाना, ततः परेहि अङ्गान्यादाय परागच्छ पुनरस्मान् रिपून् ग्रहीतुमभि शत्रुसङ्घं प्रेहि प्रगच्छ तेषां हृत्सु हृदयानि शोकैर्धनपुत्रनाशादिनिमित्तैर्निर्दह विभक्तिव्यत्ययः। किंच अमित्राः शत्रवोऽन्धेन तमसा गाढान्धकारेण सचन्तां सङ्गच्छन्तां षच् सम्बन्धे लोट् ॥ ॥ द्वादशैन्द्राः समाप्ताः ॥ ४४ ॥

१— ८,२,२,६।

गोत्राणि असुरकुलानि मेघवृन्दानि वा अभिगाहमानः सर्वतो विलोडयन् । अदयः दयारहितः । वीरः विक्रान्तः । शतमन्युः शतमसङ्ख्यो मन्युः क्रोधो यस्य शतयज्ञो वा । दुश्च्यवनः अप्रच्याव्यः । पृतनां सङ्ग्रामं सहते अभिभवतीति पृतनाषाट् । अयुध्यः योद्धुमशक्यः नास्ति युध्यः प्रतियोधास्येति वा ॥ ३९ ॥

इन्द्रः बृहस्पतिः आसां देवसेनानां नेता प्रणेता भवत्विति शेषः । यज्ञः यज्ञपुरुषो विष्णुर्दक्षिणा दक्षिणत एतु गच्छतु दक्षिणादाच्प्रत्ययः सोमः पुरोऽग्रे एतु । मरुतो गणदेवा अग्रं सेनाग्रभागं यन्तु गच्छन्तु । कीदृशीनां देवसेनानाम् अभिभञ्जतीनां भङ्गो आमर्दने यत्र मर्दयन्तीनाम् । तथा जयन्तीनां विजयमानानाम् ॥ ४० ॥

इन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् ॥४०॥

इन्द्रस्य वृष्णो वरुणस्य राज्ञऽआदित्यानाम्मरुताᳪं शर्द्धऽउग्रम् । महामनसाम्भुवनच्यवानाङ्घोषो देवानाञ्जयतामुदस्थात् ॥४१॥

उद्धर्षय मघवन्नायुधान्युत्सत्वनाम्मामकानाम्मनाᳪंसि । उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतां यन्तु घोषाः ॥४२॥

वृष्णः कामवर्षितुरिन्द्रस्य राज्ञो वरुणस्यादित्यानां द्वादशानां मरुतां चैषां देवानामुग्रमुत्कृष्टं शर्धो बलं गजतुरगरथपत्त्यात्मकसैन्यं घोषो जितं जितमिति शब्दश्च उदस्थात् उत्थितः । जितं जितमिति वदद्इन्द्रादिससैन्यमुत्थितमित्यर्थः । कीदृशानां देवानां महामनसां महन्मनो येषान्ते महामनसस्तेषाम् युद्धे स्थिरचित्तानाम् । तथा भुवनच्यवानां भुवनं लोकं च्यावयन्ति ते भुवनच्यवाः तेषां भुवनच्यावनसमर्थानाम् । जयतां विजयमानानाम् ॥ ४१ ॥

ञातो युक् चिण्कृतोः यद्वा बलेन कृत्वा विज्ञायते करणे घञ्। स्थविरः पुरातनः सर्वानुशासकः। प्रवीरः प्रकृष्टो वीरः शूरः। सहस्वान् सहो बलमस्यास्तीति सहस्वान्। वाजोऽस्यास्तीति वाजी अन्नवान्। सहमानः शत्रूनभिभवन्। उग्रः युद्धेषु क्रूरः। अभिवीरः अभितो वीराः शूराः यस्य सः। अभिसत्वा अभितः सत्वानः परिचारकाः प्राणिनो यस्य सोऽभिसत्वा। सहसो बलाज्जातः सहोजाः न त्वन्यस्माज्जात इहग्बलः स्यात्। गां स्तुतिगिरं वेत्ति गोवित् ॥ ३७ ॥

हे सजाताः समानं जातं जन्म येषां ते समानजन्मानः सखायो देवा इममिन्द्रमनु वीरयध्वम् शूर वीर विक्रान्तौ अदन्तचुरादिः

बलविज्ञायस्थविरःप्रवीरस्सहस्वान्वाजीसहमानउग्रः। अभिवीरोअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित्॥३७

गोत्रभिदङ्गोविदंवज्रबाहुञ्जयन्तमज्मप्रमृणन्तमोजसा। इमꣳसजाताअनुवीरयध्वमिन्द्रꣳसखायोअनुसꣳरभध्वम्॥

अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिन्द्रः। दुश्च्यवनःपृतनाषाडयुध्योस्माकꣳसेनाअवतुप्रयुत्सु ॥ ३९॥

वीरकर्म कुर्वाणमनुगम्य वीरकर्मणा प्रोत्साहत। अनु संरभध्वम् संरम्भं वेगं कुर्वाणमनु संरम्भं कुरुत। कीदृशमिन्द्रम् गोत्रभिदं गोत्रमसुरकुलं भिनत्ति गोत्रभित्तम् यद्वा गा अपः त्रायते गोत्रो मेघः तस्य भेत्तारम्। गोविदम् गां वाचं वेत्तीति गोवित् तम् पण्डितम्। वज्रबाहुं वज्रं बाहौ यस्य तम् अज्म सङ्ग्रामं जयन्तम्। अज्मेति युद्धनाम[1]। अजतेर्गत्यर्थस्य। ओजसा बलेन प्रमृणन्तं शत्रून् हिंसन्तम् मृणातिर्हिंसाकर्मा ॥ ३८ ॥

[1] —— निघ० २,१७,४३।

इन्द्रः युत्सु युद्धेषु अस्माकं सेनाः प्रावतु प्रकर्षेण रक्षतु छन्दसि परेऽपीति उपसर्गस्य क्रियापदात्परयोगः। कीदृश इन्द्रः

स इन्द्रोऽस्मानवत्विति शेषः। संस्रष्टा सृजेस्तृचाविति तृच्प्रत्ययः युद्धाय संसर्गकर्ता । वशी वशयति रिपूनिति वशी यद्वा कान्तः जनप्रियः स्वतन्त्रो वा निगृहीतारिषड्वर्गो वा ईश्वरो वा । गणेन रिपुसमूहेनापि सह युधः युध्यतेऽसौ युधः युद्धकर्ता इगुपधज्ञेति कप्रत्ययः । संसृष्टजित् संसृष्टान् युद्धाय सङ्गतान् रिपून् जयति संसृष्टजित्। सोमपाः सोमं पिबतीति यजमानानां यागेषु सोमपानकर्ता । बाहुशर्धी बाह्वोः शर्धो बलमस्यास्ति बाहुशर्धी बाहुबलोपेतः संयोगितनिरपेक्ष इत्यर्थः । शर्ध इति बलनाम[1] उग्रधन्वा उग्रमुत्कृष्टं धनुर्यस्य सः धनुषश्चेत्यनङादेशः प्रतिहिताभिरस्ता स्वेन धनुषा प्रेरिताभिरिषुभिरस्ता क्षेप्ता असु क्षेपणे तृन् आद्युदात्तत्वात् अस्यतीत्येवंशीलः रिपुनाशयितेत्यर्थः सशब्दावृत्तिः पादपूरणार्था ॥ ३५ ॥

स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन । संसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥३५

बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥३६

बृहस्पतिरिन्द्रः वाग्वै बृहती तस्या एष पतिः व्याकरणकर्तृत्वादिन्द्रस्य वाक्पतित्वमिन्द्रस्य पुरोहितत्वेन वा बृहस्पतिरिव स्तूयते । हे बृहस्पते त्वं रथेन परिदीय सर्वतो गच्छ दीयतिर्गत्यर्थः गत्वा चास्माकं रथानामस्मदीयस्यन्दनानामविता रक्षक एधि भव । कीदृशस्त्वम् रक्षोहा रक्षांसि हन्तीति रक्षोहा क्विप् रक्षसां हन्ता। अमित्रान् शत्रूनपबाधमानः पीडयन् । सेनाः परकीयाः प्रभञ्जन् प्रकर्षेण भग्नाः कुर्वन्। युधा युद्धेन प्रमृणो जयन् मृणातिर्हिंसाकर्मा तस्य क्विपि द्वितीयाबहुवचनम् प्रमृणो हिंसकान् जयन् पराभवन् ॥ ३६ ॥

१ —— निघ० २.९,७।

हे इन्द्र त्वं जैत्रं जयनशीलं रथमातिष्ठ आरोह । कीदृशस्त्वं बलविज्ञायः बलं परकीयं विशेषेण जानाति बलविज्ञायः कर्मण्यण्

माने व्यप्राप्रतिरथसूक्तस्य द्वादश ऋचो जपन्ध्चिगतोऽनुगच्छतीति सूत्रार्थः॥ अप्रतिरथदृष्टा इन्द्रदेवत्या द्वादश त्रिष्टुभः। इन्द्रः शतं सेनाः शतसङ्ख्याकाः शत्रुसेनाः साकं सहैव एकप्रयत्नेनैवाजयत जयति। कीदृश इन्द्रः आशुः अश्नुते व्याप्नोति आशुः शीघ्रगामी उण् प्रत्ययः। शिशानः शो तनूकरणे बहुलं छन्दसीति जुहोत्यादित्वाच्छानचि द्वित्वम्। श्यति वज्रं तीक्ष्णीकरोति शिशानः। वृषभो न वृषभ-इव भीमः भयङ्करः। घनाघनः शत्रूणामतिशयेन घातकः हन हननेति यङ्लुग्वा वा वृष्टिकर्तृ मेघ-रूपो वा कर्मकाण्डो घनाघन इत्यभिधानात् चर्षणीनां मनुष्याणां क्षोभणः क्षोभयतीति क्षोभणः क्षोभहेतुः चालकः। संक्रन्दनः सम्यक् क्रन्दनं परभयहेतुर्ध्वनिर्यस्य यद्वा समाह्वाता शत्रूणाम्। अनिमिषः नास्ति निमेषो यस्य सः देवत्वात् यद्वा

आ॒शुः शिशा॑नो वृष॒भो न भी॒मो घ॑नाघ॒नः क्षोभ॑णश्चर्षणी॒नाम्। स॒ङ्क्रन्द॑नोऽनिमि॒ष ए॑कवी॒रः श॒तꣳ सेना॑ अजयत्सा॒कमिन्द्रः॑॥ ३३॥

स॒ङ्क्रन्द॑नेनानिमि॒षेण॑ जि॒ष्णुना॑ युत्का॒रेण॑ दुश्च्यव॒नेन॑ धृ॒ष्णुना॑। तदिन्द्रे॑ण जयत॒ तत्स॑हध्वं॒ युधो॑ नर॒ इषु॑हस्तेन॒ वृष्णा॑॥ ३४॥

कदाचिदपि निमेषं न करोति अत्यन्तसावधान इत्यर्थः। एकवीरः एकश्चासौ वीरश्च अन्यनिरपेक्षं शत्रूनेक एव जेतुं समर्थः॥ ३३॥

युध्यन्ते ते युधः क्विप् पादादावामन्त्रितस्येति आद्युदात्तः हे युधो नरो योद्धारो मनुष्या इन्द्रेण कृत्वा युयं तत्परबलं जयत वशीकुरुत वशीकृत्य च तत्सहध्वम् अभिभवत विनाशयतेत्यर्थः। कीदृशेनेन्द्रेण संक्रन्दनेन शब्दकारिणा। अनिमिषेण एकचित्तेन। जिष्णुना जयनशीलेन। युत्कारेण युधं करोतीति युत्कारस्तेन कर्मण्यण् युद्धकारिणा। दुश्च्यवनेन दुःखेन च्यावयितुं शक्यः दुश्च्यवनस्तेन अजय्येन। धृष्णुना प्रगल्भेन भीतिरहितेन इषुहस्तेन इषवो हस्ते यस्य तेन वाणाद्यायुधोपेतेन वृष्णा वर्षतीति वृषा तेन कामानां वर्षुकेण॥ ३४॥

मसन् दृष्टेः बाधकत्वात् नाप्यत्यन्तं सन् काष्ठाश्मादिवद्बोधयितुमशक्यत्वात् एवमज्ञानमपि नात्यन्तमसत् ईश्वरतत्त्वावरकत्वात् नापि सत् बोधमात्रनिवर्त्यत्वात् ईदृशेनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः। न केवलं नीहारेण जल्प्या च प्रावृताः जल्पनं जल्पिस्तया देहोऽहं मरोऽहं ममेदं गृहं क्षेत्रमित्याद्यनृतजल्पनेन व्याप्ताश्च। किञ्च असुतृपः असुषु असून्वा तृप्यन्ति असुतृपः केनापि प्रकारेण प्राणान् भृत्वा तावतैव तृप्यन्ति न तु परमेश्वरत्वं विचारयितुं प्रवर्तन्ते। न केवलमैहिकभोगेन तृप्तिः किन्तु उक्थशासः परलोकभोगान् सम्पादयितुं यज्ञेषु उक्थानि शंसन्ति उक्थशासः शस्त्रस्तोतारः शसेः क्विप्यनिदितामिति नलोपः संहितायां दीर्घः ऐहिकामुष्मिकभोगप्रवृत्तानामज्ञानमिथ्याज्ञानपराधीनानां भवतां नास्ति तत्त्वज्ञानमित्यर्थः ॥ २१ ॥

विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः। तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥ ३२ ॥

ब्रह्माण्डमध्यगतानामुत्पत्तिरुच्यते। ब्रह्माण्डमध्ये प्रथमं विश्वकर्मा देवतिर्यगादिजगद्भेदकर्ता सत्यलोकवासी चतुर्मुखो देवः अजनिष्ट आदित्यान्तरपुरुषरूपेण जातः। आत् इत् अनन्तरमेव तदपेक्षया द्वितीयो गन्धर्वः अभवत् उत्पन्नः गां वाचं पृथिवीं वा धरति गन्धर्वोऽग्निः गानाद्वा गन्धर्वः अथो एवाहुरग्निरेवास्यै पृथिव्यै पृष्ठे सर्वः कृत्स्नो मन्यमानोऽगायदित्यादिश्रुतेः। पिता पालयिता ओषधीनां जनिता उत्पादकः पर्जन्यः। पूर्वोक्तद्वयापेक्षया तृतीयोऽभवत् स पर्जन्य उत्पन्नः सन्नपामाहुतिपरिणामभूतानां गर्भं व्यदधात् धारयति करोति वा। कीदृशं गर्भं पुरुत्रा पुरून् बहून् त्रायते रक्षति पुरुत्राः बहूनां रक्षकम् विभक्तेराकारः बहुप्रकारं वा ॥ ॥ वैश्वकर्मणहोमः समाप्तः ॥ ३२ ॥

१————११,१,९-१०।

का०। आहवनीये प्रणीयमानेऽप्रतिरथस्य द्वादश ब्रुवन्नग्नौ सर्वत्रैके[1]। अग्नौ चयने इध्ममादीप्याहवनीये चित्यां प्रति नीय-

लोप दध्रे इति रूपम्। पूर्वे देवाः प्रथमोत्पन्ना देवाः वसिष्ठादयो यत्र गर्भे समपश्यन्त ददृशुः जगदिति शेषः। यदा स्वलोऽप्ययं जगदाधारो गर्भरूपो न ज्ञायते तदात्यन्तसूक्ष्मं तत्त्वं न ज्ञायत इति किम् वक्तव्यमिति भावः॥ २९॥

प्रत्युत्तरमाह। आपः प्रथमं तमित् तमेव गर्भं दध्रे दधिरे यत्र कारणभूते गर्भे विश्वे सर्वे देवाः समगच्छन्त सङ्गताः सम्भूय वर्तन्ते। ननु तस्य गर्भस्य को वाधारस्तत्राह। अजस्य जन्मरहितस्य परमेश्वरस्य नाभावधि नाभिस्थानीयस्य स्वरूपमध्ये एकमविभक्तमनन्यभूतं किञ्चिद्बीजं गर्भरूपमर्पितं स्थापितं यस्मिन्बीजे विश्वानि सर्वाणि भुवनानि भूतजातानि तस्थुः स्थितानि तद्बीजमर्पितम्। तथाच स्मृतिः। अपएव ससर्जादौ तासु बीजमथार्पयत्। तदण्डमभवद्धैमं सूर्यकोटिसमप्रभमिति[1]। स एव सर्वाश्रयो न तु तस्याप्यन्य आश्रय इति भावः॥ ३०॥

[1]—मनु० १,८,९।

तमिद्गर्भम्प्रथमन्दध्रआपोयत्रदेवाःसमगच्छन्तविश्वे। अजस्यनाभावध्येकमर्पितंयस्मिन्विश्वानिभुवनानितस्थुः॥ ३०॥

नतंविदाथयइमाजजानान्यद्युष्माकमन्तरम्बभूव। नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरन्ति॥३१॥

इदानीमुपदिशति। यो विश्वकर्मा इमा इमानि भूतजातानि जजान उत्पादितवान् तं विश्वकर्माणं हे जीवा यूयं न विदाथ न जानीथ लेटोऽडाटाविति आडागमः। ननु देवदत्तोऽहं यज्ञदत्तोऽहमिति वयमात्मानं जानीम इति चेत् न न ह्यहम्प्रत्ययगम्यं जैवं रूपं परमेश्वरतत्त्वम्. किन्तु युष्माकमहम्प्रत्ययगम्यानां जीवानामन्तरमभ्यन्तरं वास्तवस्वरूपमन्यत् अहम्प्रत्ययादतिरिक्तं सर्वविदानं वेद्यमीश्वरतत्त्वं बभूव भवति विद्यते। जीवरूपवत्तदपि कुतो न विद्म इति चेत् भवन्त ईदृग्भाः चरन्ति प्रवर्तन्तेऽतो न जानीथ। कीदृशाः नीहारेण प्रावृताः नीहारवदस्पष्टेनाज्ञानेनावृतत्वान्न जानीथ यथा नीहारो नात्यन्त

ददुः द्रविणं भोगजातं वा। यजतिर्दानार्थः। कथं ददुः न भूना न भूम्ना न बाहुल्येन मन्त्रोपमृच्छान्दसः किन्तु मुख्या वा मिववर्षित्वेनेत्यर्थः। कीदृशाः जरितारः स्तोतारः। ते के ये ऋषयः इमानि भूतानि समक्तखन् खादेः करोतेर्लङ् ये वसिष्ठादयो तानि सृजन्ति त एव उदकदानेन जीवयन्तीत्यर्थः। कीदृशाः असूर्ते असुभिः समदयावयवैर्लिङ्गशरीरैरीरिता असूर्ताः असुपूर्वस्य ईर गतावित्यस्य छान्दस इडभावो निष्ठायाम् ईकारस्य पूर्वसवर्णदीर्घः जस एकारः। तथा रजसि अन्तरिक्षलोके निषत्ते निषत्ताः निषण्णाः स्थिताः जस एकारः। लोका रजांस्युच्यन्त इति[1] यास्कः। कीदृशे रजसि सूर्ते सुष्ठु ईरिते प्रेरिते विस्तीर्णे सुपूर्वस्य ईरधातोर्निष्ठायां पूर्ववत्। नसत्तनिषत्तेत्यादिना निपातः॥ २८॥

**तऽआयजन्तद्रविणꣳसमस्माऽऋषयःपूर्वेजरितारोनभूना। असूर्त्ते सूर्त्तेरजसिनिषत्तेयेभूतानिसमकृण्वन्निमानि॥२८॥**

**परोदिवापरऽएनापृथिव्यापरोदेवेभिरसुरैर्य्यदस्ति। कꣳस्विद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाःसमपश्यन्तपूर्वे॥ २९॥**

प्रश्नोत्तररूपा मन्त्राः। ब्रह्मविषयप्रश्नः। विभक्तिव्यत्ययबाहुल्यमत्र मन्त्रे। यत् अस्ति इदीति शेषः यदीश्वरतत्त्वं कृत्स्नेऽपि लोके अस्ति तत् दिवा परः द्युलोकादपि दूरे तिष्ठति दिवो दुर्ज्ञेयत्वात्। परसशब्दः सान्तो दूरवाची। एना पृथिव्या अस्याः पृथिव्याः परः पृथिव्या अपि दूरे। देवेभिरसुरैः देवेभ्योऽसुरेभ्यश्च परो दूरे दूरत्वं विलक्षणत्वम् सर्वजगद्विलक्षणत्वाद्ब्रह्मास्त्वविसुखेन आयत इत्यर्थः। किञ्च स्विदिति वितर्के आपः प्रथमं कं गर्भं दध्रे दधिरे अधारयन् धाञो लिटि तक्ति प्रथमबहुवचनस्य लिटस्तझयोरेशिरेजिति इरेचि कृते तस्य इरयो रे इति रे-आदेशे तस्य स्थानिवत्त्वादातो लोप इति चेत्या-

[1]—निरु० ४,१९।

इषा अन्नेन आहुतिरसभूतेन सह सम्मदन्ति सम्मोदन्ते सम्यक् मोदयुक्तानि पुष्टानि भवन्ति ते विश्वकर्मलोके इष्टभोगान् प्राप्नुवन्तीत्यर्थः। तेषां केषाम् विश्वकर्मा येषां संदृक् सम्यक् पश्यतीति संदृक् सम्यग् द्रष्टा विश्वकर्मद्रष्टाः सुखिनो भवन्त्वित्यर्थः। कीदृशो विश्वकर्मा विमनाः विशिष्टं मनो यस्य स तथा विभूतमनाः सर्वकर्मेत्र इत्यर्थः। आत् अपि च विहायाः नभोवद्व्यापकः यद्वा विशेषेण जहाति त्यजति विहायाः संहर्ता। धाता धारयिता पोष्टा स्थितिकर्ता। विधाता उत्पादकः। उत अपि परमः सर्वेभ्य उत्कृष्टः विभक्तोराकारः। एवंविधो विश्वकर्मा येषां द्रष्टा ते मुच्यन्ते भक्तानेव पश्यति तस्माद्भक्तिः कार्येत्यर्थः॥ २६॥

यो विश्वकर्मा नोऽस्माकं पिता पालकः जनिता जनयिता उत्पादकः जनिता मन्त्रे इति निपातः। यो विधाता विशे-

**विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक्। तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन्पर एकमाहुः॥२६॥**

**यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा। यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या॥२७॥**

षेण धारकः सेतुः यश्च विश्वा विश्वानि सर्वाणि धामानि स्थानानि भुवनानि भूतजातानि च वेद जानाति। यश्च एकोऽद्वितीय एव सन् देवानां बहूनां नामधाः नामानि दधाति करोतीति नामधाः नाम च पितैव करोति। तस्मादन्या अन्यानि भुवना भुवनानि भूतजातानि संप्रश्नं सम्यक् प्रश्नो यस्यां क्रियायां यथा तथा तं विश्वकर्माणं यन्ति गच्छन्ति प्रलयकाले एकत्वं प्राप्नुवन्ति। यद्वा संप्रश्नं सम्यक् पृष्टुं स्वाधिकारप्रश्नं कर्तुं भुवनानि यं यन्ति स एव स्वाधिकारेषु नियुङ्क्त इति भावः॥ २७॥

ते पूर्वं ऋषयो विश्वकर्मस्रष्टा वसिष्ठाद्या अस्मै भूतग्रामाय द्रविणं धनं जललक्षणं समायजन्त सम्यक् आभिमुख्येन

च द्यौ भूलोकाश्रितानि भूतानि स्वयं यजस्व मदनुग्रहाय। किञ्च त्वत्प्रसादादन्येऽभितः स्थिताः सपत्नाः शत्रवो मुह्यन्तु मोहं प्राप्नुवन्तु किञ्च इह यज्ञे मघवा इन्द्रोऽस्माकं सूरिः पण्डित आत्मज्ञानोपदेशकोऽस्तु ॥ २२ ॥ द्वे ऋचौ व्याख्याते ॥२३॥२४॥

का० चक्षुषः पितेत्यरमनुवाकेन। अष्टचैन षोडशगृहीतस्यापरमर्धं जुहोतीत्यर्थः ॥ यदा इत यदैव पूर्वं वसिष्ठादयो मुनयः अन्ताः विभक्तिव्यत्ययः अन्तान् द्यावाभूम्योरन्तप्रदेशानदृहन्त दृढीकृतवन्तः दृंहते रूपम्। आत् इत् आत् अनन्तरवाची इदेवार्थे अनन्तरमेव द्यावाभूमिदार्ढ्यानन्तरमेव द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां पृथू अभूताम्। तदा द्यावापृथिवीप्रथनानन्तरं

वाचस्पतिं विश्वकर्म्माणमूतये मनोजुवं वाजे अद्या हुवेम। स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्म्मा ॥२३॥

विश्वकर्म्मन् हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम्। तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥२४॥

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने। यदेदन्ता अददृहन्त पूर्व आदिद् द्यावापृथिवी अप्रथेताम् ॥ २५ ॥

चक्षुषः पिता चक्षुरादीन्द्रियाणां पालको विश्वकर्मा मनसा धीरः सन् हि निश्चितमेने एते द्यावापृथिव्यौ प्रति घृतमुदकमजनदजनयत् छन्दस्युभयथेति आर्धधातुकत्वाच्छपि णिचो लोपः रोदस्योर्वृष्टिं कृतवत् इत्यर्थः। किं कुर्वन् नम्नमाने नममाने द्यावापृथिव्यौ स्तम्भयन्निति शेषः जगदनुग्रहाय रोदसी स्तम्भयन्नित्यर्थः। नमतेः शानचि नुगागमश्छान्दसः ॥ २५ ॥ १०—१८, २, १२।

यत्र यस्मिन् लोके सप्तऋषीन् सप्त च ते ऋषयश्च सप्तऋषयः ऋत्यक इति सन्ध्यभावः तान्परः विभक्तिः सुः परेण विश्वकर्मणा सह एकमाहुः एकीभूतान् बुधा वदन्ति। यत्र लोके सप्तर्षयो विश्वकर्मणा सहैकत्वं प्राप्ताः तत्र लोके तेषां पुंसामिष्टानि वस्तूनि

निर्माणमिच्छन् कश्चित् वने कश्चिद् वृक्षं छित्वा तक्षणादिना स्तम्भादिकं करोति इह तथास्तीत्यर्थः । किञ्च हे मनीषिणः विद्वांसः मनसा पर्यालोच्य तत् इत् उ तदपि यूयं पृच्छत तत्किम् भुवनानि धारयन् सन् विश्वकर्मा यदध्यतिष्ठत् यत्स्थानमधिष्ठितवान् तदपि पृच्छत । कुम्भकारादिर्दण्डादिकमधिष्ठाय घटादि करोति तदधिष्ठानमपि पृच्छत ऊर्णनाभिवदयमात्मारम्भण इति भावः ॥ २० ॥

हे विश्वकर्मन् हे स्वधावः स्वधान्नमस्यास्तीति स्वधावान् तस्य सम्बुद्धौ हे स्वधावः मतुवसो रुः सम्बुद्धौ छन्दसीति रुः हे हविर्भिर्वर्धमान ते तव यानि परमाणि उत्कृष्टानि धामानि या यानि अवमा अवमानि कनीयांसि धामानि उतापि च

यातेधामानिपरमाणियावमायामध्यमाविश्वकर्म्मन्नुतेमा । शिक्षासखिभ्योहविषिस्वधावःस्वयंयजस्वतन्वंवृधानः ॥२१॥

विश्वकर्म्मन्हविषावावृधानःस्वयंयजस्वपृथिवीमुतद्याम् । मुह्यन्त्वन्येअभितःसपत्नाइहास्माकम्मघवासूरिरस्तु॥२२॥

या यानि मध्यमा धामानि इमा इमानि पूर्वोक्तानि त्रिविधानि धामानि सखिभ्यो यजमानेभ्यः शिक्ष देहि द्व्यचोऽतस्तिङ इति संहितायां शिक्षपदस्य दीर्घः । क उपकार इति चेत् हविषि यजमानसम्बन्धिन्युपस्थिते सति तन्वं स्वशरीरं वृधानः वर्धयन् सन् स्वयं यजस्व । वयं यजाम इति कथं वक्तुं शक्याम मनुष्यः कस्त्वां यष्टुं समर्थोऽत एवं ब्रवीमि स्वयं यजस्व । वर्धतेः शानचि व्यत्ययेन शपो लुक् वृधानः । तन्वमित्यत्र वा छन्दसीति पूर्वरूपाभावे यणादेशः ॥ २१ ॥

हे विश्वकर्मन् हविषा महत्त्वेन वावृधानः वर्धमानो जातहर्षः सन् मम यज्ञे पृथिवीं पृथिव्याश्रितानि भूतानि उतापि

किमासीदित्यर्थः। था हेतौ च छन्दसीति किमः था प्रत्ययः दण्डचक्रसलिलसूत्रादिभिर्घटादयो निष्पाद्यन्ते तत्स्थानीयं किमासीत्। यतो यस्मिन् काले विश्वकर्मा भूमिं द्यां स्वर्गं च जनयन् सन् महिना महिम्ना स्वसामर्थ्येन वि और्णोत् सृष्टे द्यावापृथिवी आच्छादितवान् ऊर्णु आच्छादने लङ् उपसर्गव्यवधानमार्षम् व्यवहिताश्चेति वचनात्। कीदृशः विश्वचक्षाः विश्वं चष्टे स विश्वचक्षाः सर्वद्रष्टा अतीतानागतवर्तमानकालानां युगपद् द्रष्टा अनन्यशक्तिरित्यर्थः॥ १८॥

उत्तरमाह। एकोऽसहायो देवः विश्वकर्मा द्यावाभूमी जनयन् सन् बाहुभ्यां बाहुस्थानीयाभ्यां धर्माधर्माभ्यां सन्धमति धमतिर्गत्यर्थः सङ्गच्छते संयोगं प्राप्नोति पतत्रैः पतनशीलैः अनित्यैः पञ्चभूतैश्च सङ्गच्छते धर्माधर्मरूपैर्निमित्तैः पञ्चभूतरूपैरुपादानैश्च

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः॥१९**

**कि᳐ स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन्॥२०**

साधनान्तरं विनैव सर्वं सृजतीत्यर्थः यद्वा धर्माधर्माभ्यां भूतैश्च सन्धमति सङ्गमयति जीवान् पिजन्तत्वं ज्ञेयम्। कीदृशः विश्वतश्चक्षुः विश्वतः सर्वतश्चक्षूंषि यस्य सः। विश्वतोमुखः विश्वतो मुखानि यस्य। विश्वतोबाहुः विश्वतो बाहवो भुजा यस्य। उतापि च विश्वतः पादा यस्य सः पादस्य लोपोऽहस्त्यादिभ्यः इति पादस्यान्त्यलोपः। परमेश्वरस्य सर्वप्राण्यात्मकत्वाद्यस्य यस्य प्राणिनो ये चक्षुरादयस्ते तदुपाधिकस्य परमेश्वरस्यैवेति सर्वत्र चक्षुरादयः सम्पद्यन्त इत्यर्थः॥ १९॥

पुनरपि प्रश्नः। स्विदिति वितर्के तद्वनं किमास बभूव उ अपि च स वृक्षः आस यतो वनाद्वृक्षाच्च विश्वकर्मा द्यावापृथिवी निष्टतक्षुः निस्तताक्ष निस्तक्ष्यालङ्कृतवान् वचनव्यत्ययः न हि तादृशं वनं वृक्षो वा सम्भवति। लोके हि रथादि-

विष्टभः। प्रजाः संहरन्तं सृजन्तं विश्वकर्माणं पश्यन्नृषिः कथयति। यो विश्वकर्मा इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि जुह्वत् संहरन्सन् न्यसीदत् निषण्णः स्वयं स्थितवान्। कीदृशः ऋषिः अतीन्द्रियद्रष्टा सर्वज्ञः। होता संहाररूपस्य होमस्य कर्ता। नोऽस्माकं प्राणिनां पिता जनकः प्रलयकाले सर्वलोकान्संहृत्य यः परमेश्वरः स्वयमेक एवासीदित्यर्थः। तथा चोपनिषदः। आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत् सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्याद्याः। स तादृशः परमेश्वरः आशिषाभिलाषेण बहुः स्यां प्रजायेयेत्येवंरूपेण पुनःसिसृक्षारूपेण द्रविणमिच्छमानः जगद्रूपं धनमपेक्षमाणः अवरानभिव्यक्तोपाधीनाविवेश जीवरूपेण प्रविष्टः। कीदृशः प्रथमच्छत् प्रथममेकमद्वितीयं स्वरूपं छादयतीति प्रथमच्छत् छादयतेः

किꣳ स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत्। यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महि

नाविश्वचक्षाः॥ १८॥

क्विपि कृत्स्नः उत्कृष्टं रूपमावृण्वन् सन् प्रविष्टः। इच्छमान इतीषेरात्मनेपदमार्षम् सोऽकामयत बहुः स्यां प्रजायेय स तपोऽतप्यत स तपस्तप्त्वा इदꣳ सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशदित्यादि श्रुतेः॥ १७॥

अथेश्वरो यथा जगत्सृजति तत्प्रश्नोत्तराभ्यामाह। लोके हि घटादि चिकीर्षुः कुलालो गृहादिकं स्थानमधिष्ठाय मृद्रूपेणारम्भकद्रव्येण च चक्रादुपकरणैर्घटादि निष्पादयति ईश्वरस्य तदाक्षिप्यते। स्विदिति वितर्के द्यावाभूमी सृजतो विश्वकर्मणोऽधिष्ठानं किमासीत् अधितिष्ठत्यस्मिन्नित्यधिष्ठानं निवासस्थानम् अचेतना निरधिष्ठाना किमपि न कुर्वन्ति। स्विदिति वितर्के आरम्भणं कतमत् किमासीत् आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणं मृदिव घटानाम्। कथा क्रिया च किम्प्रकारासीत् निमित्तकारणमपि

का० प्राणदा इत्यवरोहति[1]। प्रोक्षणानन्तरमग्नेरवतरतीत्यर्थः। अग्निदेवत्या बृहती पङ्क्तिर्वा अष्टत्रिंशदक्षरत्वाद्विकल्पः। हे अग्ने ते तव हेतयो ज्वाला अस्मदन्यान् तपन्तु त्वं चास्माकं पावकः शिवश्च भव। कीदृशस्त्वं प्राणदाः प्राणान्यजमानाय ददातीति प्राणदाः अपानं ददातीत्यपानदाः व्यानं सर्वशरीरसञ्चारिवायुं ददातीति व्यानदाः वर्चो बलं ददातीति वर्चोदाः वरिवो धनं ददातीति वरिवोदाः ॥ १५ ॥

का० पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा[2]। शालायामागत्य पञ्चगृहीतमाज्यं शालाद्वार्येऽग्नौ जुहोति ॥ आग्नेयी गायत्री

प्राणदाऽअपानदाव्यानदावर्च्चोदावरिवोदाः। अन्याँस्तेऽअस्मत्तपन्तु हेतयःपावकोऽअस्मभ्यँ शिवोभव ॥ १५ ॥

अग्निस्तिग्मेनशोचिषायासद्विश्वन्न्यत्रिणम्। अग्निर्नोवनतेरयिम् ॥ १६ ॥

यऽइमाविश्वाभुवनानिजुह्वदृषिर्होतान्यसीदत्पितानः। सऽआशिषाद्द्रविणमिच्छमानःप्रथमच्छदवराँ२॥ऽआविवेश॥१७

भरद्वाजदृष्टा। अग्निः विश्वं सर्वमत्रिणं राक्षसं नियासत् नितरां क्षीणं करोतु यास उपक्षये लेट् इतश्च लोपः परस्मैपदेष्विति इकारलोपः अत्रमदनं भक्षणमस्यास्तीत्यत्री भक्षकस्तम्। केन तिग्मेन शोचिषा तीक्ष्णेन तेजसा तिग्मं तेजतेरुत्साहकर्मण इति[3] यास्कः। किञ्च अग्निर्नोऽस्मभ्यं रयिं धनं वनते ददातु वनतिर्दानार्थः ॥ १६ ॥ १—१८,३,८। २—१७,२,१२। ३—निरु० १०,६।

का० षोडशगृहीतार्धमनुवाकशेषेण। पञ्चगृहीतहोमानन्तरं षोडशगृहीतमाज्यं जुह्वां कृत्वा तस्यार्धमनुवाकशेषेण शालाद्वार्ये एव जुहोति। अनुवाकशेषश्च य इमा विश्वेत्यारभ्य विहव्यो यथासदित्यन्तोऽष्टर्चं इत्यर्थः ॥ भुवनपुत्रविश्वकर्मदेवत्याः षोडश

का० समासिक्तान् कुम्भैः प्रोक्षति सपरिश्रित्कं वाग्येन च ये देवा इति[1]। पात्र्यां सिक्तान्दधिमधुघृतान् कुम्भैः परिश्रित्सहितं सपक्षपुच्छमग्निं मध्ये वहिश्च प्रोक्षति ऋग्द्वयेनेत्यर्थः। जगत्यौ प्राणदेवत्ये। ते प्राणरूपा देवा अस्मिन्यज्ञे चयनलक्षणे मधुनो घृतस्य अर्थाद्दध्नश्च हविषो मधुघृतदधिरूपस्य हविषा भागं स्वयं पिबन्तु स्वाहाकारसमर्पणेन विना स्वयमेव स्वीकुर्वन्त्वित्यर्थः। कीदृशास्ते अहुतादः अहुतमदन्ति ते अहुतादः अन्ये देवा अग्निहुतामाहुतिमदन्ति प्राणास्तु साक्षादन्नमदन्ति अत एवाहुतादः। ते के संवत्सरीणं भागमुपासते संवत्सरेण निर्वृत्तः संवत्सरीणः संपरिपूर्वात् ख चेति संपूर्वाद्वत्सरान्निर्वृत्तार्थे खप्रत्ययः संवत्सरं हि भूत्वाग्निश्चीयते इत्यभिप्रायः। कीदृशाः यज्ञियानां यज्ञार्हाणां देवानां मध्ये यज्ञियाः यज्ञयोग्याः देवाः दीप्यमानाः। द्विविधा देवाः हविर्भुज इन्द्रवरुणादयः शरीरनिर्वाहकाः प्राणापानादयश्च दीव्यन्तीति व्युत्पत्त्या उभयेऽप्येते यज्ञियाः तत्रेन्द्रादयो यज्ञे पूज्यत्वाद्यज्ञियाः प्राणादयस्तु यज्ञेन पूजकत्वाद्यज्ञियाः॥ १३॥

येदेवादेवेष्वधिदेवत्वमायन्येब्रह्मणःपुरएतारोअस्य। येभ्योनऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्याअधिस्नुषु॥१४॥

ये देवाः प्राणा देवेष्विन्द्रादिषु अधिष्ठातृत्वेन देवत्वमायन् प्राप्ताः इन्द्रादीनामपि प्राणा देवाः। ये अस्य ब्रह्मणः जीवस्य पुरएतारः पुरोऽग्रे यन्तीति पुरएतारः इण् गतावित्यस्मात् ण्वुल्तृचाविति तृच् प्रत्ययः। प्राणा हि प्राणिनां पुरःसराः अयमग्निर्ब्रह्म तस्यैते पुरएतार इति[1] श्रुतेः। प्राणैर्विना चीयमानोऽग्निर्निर्वोढुं न शक्यते। किञ्च येभ्य ऋते यान् प्राणान्विना किञ्चन धाम किमपि शरीरं न पवते पवङ् गतौ न चेष्टते। इत्थम्भूता ये प्राणा देवास्ते पुनः क्वासते तत्राह न त इति ते प्राणरूपा देवा न दिवः षष्ठी सप्तम्यर्थे दिवि स्वर्गे न सन्ति पृथिव्याः पृथिव्यां भूमावपि न नैव। ते दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिंस्ते इति[2] श्रुतेः। यद्वा दिवः प्रदेशेषु न पृथिव्याः प्रदेशेषु न। किं तर्हि स्नुषु अधि स्नु प्रस्रवणे स्नुवन्ति स्रवन्ति स्नूनि स्रोतांसि चक्षुरादीनि प्राणायतनानि तेषु अधिश्रित्य वर्तन्ते तेषूपलभ्यन्ते तेषां स विशिष्टः प्रदेशः॥ १४॥

१—— ९,२,१,१५। २—— ९,२,१,१५।

ते तव शोचिषे शोचनहेतवे तेजसे नमोऽस्तु । कीदृशाय शोचिषे हरसे हरति सर्वरसानिति हरः तस्मै हरतेरसुन् प्रत्ययः । ते तव अर्चिषे पदार्थप्रकाशकाय तेजसे नमोऽस्तु । अन्यदुक्तम् ॥ ११ ॥

का० स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिवद्धिरण्यादर्शनं च नृषदे वेडिति प्रतिमन्त्रम्[१] । आतृद्य, स्वयमातृण्णायां पञ्चगृहीतं जुहोति पञ्चमन्त्रैः नाभिवदिति दक्षिणांसश्रोणिद्वयोत्तरांसमध्येषु तत्र हिरण्यं पश्यन्नित्यस्ति यद्वत् नेत्यर्थः ॥ पञ्चाग्नेयानि यजूंषि दैवी बृहती दैव्यः पङ्क्तयः अन्त्या दैवी बृहती । नृषु मनुष्येषु जठराग्निरूपेण तिष्ठतीति नृषत्प्राणस्तस्मै वेट् हविर्दत्तम् वेट् शब्दः स्वाहाकारार्थः । प्रत्यक्षं वै तद्यत्स्वाहाकारः प्रत्यक्षꣳ सोत्तरवेदिर्वेट्कारेणेमां परोक्षं वै तद्यद्वट्कार इति[२]

नृषदे वेडप्सुषदे वेड्बर्हिषदे वेड्वनसदे वेट् स्वर्विदे वेट् ॥ १२ ॥

येदेवादेवानांयज्ञियायज्ञियानाꣳसंवत्सरीणमुपभागमासते । अहुतादोहविषोयज्ञेअस्मिन्त्स्वयम्पिबन्तु मधुनोघृतस्य ॥ १३ ॥

श्रुतेः । तथा नृषदे वेडिति । प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमेतत्प्रीणातीति(८)। अप्सु उदकेषु औवरूपेण । सीदतीत्यप्सुषत् । योऽप्स्वग्निस्तमेतत्प्रीणातीति(८) श्रुतेः । बर्हिषि यज्ञे आहवनीयादिरूपेण सीदतीति बर्हिषत् बर्हिःषु ओषधीषु तिष्ठतीति वा तस्मै वेडस्तु । बर्हिषदे वेडिति य ओषधिष्वग्निस्तमेतत् प्रीणातीति(८) श्रुतेः ॥ वनं वृक्षसमूहस्तत्र दावाग्निरूपेण सीदतीति वनसत्तस्मै वेट् । वनसदे वेडिति यो वनस्पतिष्वग्निस्तमे० । स्वः स्वर्गं आदित्यरूपेण विद्यते स्वर्वित् विद्यतिः सीदत्यर्थः यद्वा स्वरादित्यं विन्दते स्वर्वित्तस्मै वषडस्तु ॥ १२ ॥

१—१८,२,६ । २—९,२,१,७ । ३—१८,२,७ ।

जगती भरद्वाजदृष्टा । योऽग्निः क्षामन् क्षामणि पृथिव्यां रुरुचे रोचते शोभते । कया कृपा कृप् सामर्थ्ये कल्पनं कृप् क्विप् तया कल्पनया सामर्थ्येन दीप्त्या वा । क्षामेति पृथिवीनाम[1] । किम्भूतया कृपा पावकया पावयतीति पावका तया पावयित्र्या । चितयन्त्या चेतयन्त्या यद्वा चितं करोति चितयन्ती तया इष्टचयकारिण्या । रोचने दृष्टान्तः उषसो न भानुना न इवार्थे यथा उषसः कालाः भानुना स्वप्रकाशेन रोचन्ते तद्वत् । किञ्च यश्चाग्निः घृणिः । घृणिरिति दीप्तिनाम[2] । सुपां सुलुगिति विभक्तेः शे-आदेशः घृणिना दीप्त्या आ समन्तात् नु निश्चितं रुरुचे इत्यनुषङ्गः नकारश्चार्थः । किं कुर्वन् एतशस्य एतीत्येतशः गमनकुशलस्याश्वस्य यामन् यामनि नियामके रणे युद्धे तूर्वन् तुर्वि हिंसायां परबलानि हिंसन् न इवार्थे शत्रून् हिंसन्निव

**पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच उषसो न भानुना । तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥ १० ॥**

**नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ ११ ॥**

रोचते यद्वा यामन्शब्दः कर्मवाचकः नु अनर्थकम् यामनि कर्मणि तूर्वन् त्वरमाण इव एतशस्याश्वस्य रणे रमणीये पदे आहितोऽध्वर्युणा । तथा ततृषाणः तृष्यतीति ततृषाणः ञितृषा पिपासायाम् बहुलं छन्दसीति कादित्वाच्छानचि क्षुदित्वे पूर्णाहुतिं पिपासुः । अजरः जरारहितः । स ईदृशोऽग्निस्तं क्षमाम इत्यर्थः ॥ १० ॥

का० उभयमादाय चित्यारोहणं नमस्त इति[3] । हिरण्यशकलसहितं स्रुक्स्थमाज्यम् दधिमधुघृतकुशमुष्टियुता पात्री एतद्द्वयमादायाध्वर्युश्चित्याग्निमारोहति ब्रह्मयजमानौ तु अग्नेर्दक्षिणत उपविशत इत्यर्थः ॥ आग्नेयी बृहती लोपमुद्रादृष्टा । हे अग्ने

१—निघ० १,१,६ । २—निघ० १,१७,११ । ३—१८,२,५ ।

उत्तरांसाद्दक्षिणांसं कर्षति। आग्नेयी बृहती। इदं चित्याग्निस्थानं मण्डूकवत्कावेतसलक्षणं वा अपां न्ययनम् नितरामीयते प्राप्यते येन तन्न्ययनम् उदकप्राप्तिसाधनम् यागद्वारा ह्यापः प्राप्यन्ते अपां बाहुल्यात्समुद्रस्य निवेशनम् निविशन्त्यस्मिन्निति निवेशनं गृहस्थानीयम् तद्रूप हे अग्ने ते तव हेतयो ज्वाला अस्मत्सकाशादन्यान् अस्मद्विरोधिनः पुरुषान् तपन्तु क्लेशयन्तु अस्मभ्यमस्मदर्थं पावकः शोधकः शिवः शान्तश्च भव ॥ ७ ॥

का० पक्षपुच्छानि चाभ्यात्ममग्नेपावक रोचिषेतिः। पक्षपुच्छानिप्रान्तादारभ्याभ्यात्ममात्मसम्मुखं सन्धिपर्यन्तं कर्षति प्रत्यक्षमग्ने इति दक्षिणं पक्षं स न इति पुच्छं पावकयेत्युत्तरं पक्षमित्यर्थः ॥ आग्नेयी गायत्री वसूयुदृष्टा। हे अग्ने हे पावक शोधक

अग्ने पावकरोचिषामन्द्रयादेवजिह्वयः। आदेवान्वक्षियक्षिच॥ ८ ॥

सनःपावकदीदिवोग्ने देवाँ२॥ऽइहावह। उपयज्ञꣳहविश्चनः ॥ ९ ॥

हे देव रोचिषा रोचनेन ज्वालासमूहेनाहवनीयात्मना स्थित इति शेषः। मन्द्रया मदनीयया जिह्वया होतृवाग्रूपेणावस्थित इति शेषः। देवानावक्षि आवह यक्षि यज च ह्यावग्नेरधिकारो होत्रमाहवनीयरूपेण हविर्ग्रहणं चात एव स्तूयते। वहतियजिभ्यां लोण्मध्यमैकवचने अपि लुप्ते ढत्वषत्वादिके कृते वक्षि यक्षीति रूपम् ॥ ८ ॥

१—१८,२,११।

गायत्र्याग्नेयी मेधातिथिदृष्टा हे पावक पावयितः हे दीदिवः दिदेवेति दीदिवान् तत्सम्बुद्धौ हे दीदिवः दीप्तिमन् दिवु क्रीडादिषु क्वसुप्रत्ययः द्वित्वम् तुजादीनामिति अभ्यासदीर्घः लोपो व्यवंलीति वलोपः। हे अग्ने देवानिह नोऽस्माकं यज्ञे आवह आनय यज्ञमुप यज्ञसमीपे नोऽस्माकं हविश्च देवानावह प्रापय ॥ ९ ॥

दक्षिणश्रोण्यादुत्तरश्रोण्यन्तं कर्षति। हिमस्य शैत्यस्य जरायुवदुत्पत्तिस्थानीयेन शैवालेन हे अग्ने त्वा त्वां परिव्ययामसि संवरणं कुर्मः त्वमस्मभ्यं पावकः शिवश्चेत्युक्तम् ॥ ५ ॥

उत्तरश्रोणेरुत्तरांसपर्यन्तं कर्षति। जगती त्रिष्टुब्वा चतुश्चत्वारिंशदक्षरत्वात्त्रिष्टुबेव नदीषु आ सा इममिति व्यूहृचयेन द्व्यूना जगती भवति। हे अग्ने ज्मन् ज्मा पृथिवी सप्तम्या लुक् ज्मनि पृथिव्यामुपावतर आगच्छ। तथा वेतसे वञ्जुल-शाखायामुपावतर नदीषु आ आङुपसर्गः अध्यर्थः नदीष्वधि अवकासु उपावतर नदीशब्देन लक्षणयावका उच्यन्ते तत्प्रभवत्वात्।

हिमस्यत्वाजरायुणाग्नेपरिव्ययामसि। पावकोऽअस्मभ्यꣳशिवोभव ॥ ५ ॥

उपज्मन्नुपवेतसेवतरनदीष्वा। अग्नेपित्तमपामसिमण्डूकिताभिरागहिसेमन्नोयज्ञम्पावकवर्णꣳशिवङ्कृधि ॥ ६ ॥

अपामिदंन्ययनꣳसमुद्रस्यनिवेशनम्। अन्याँस्तेऽअस्मत्तपन्तुहेतयःपावकोऽअस्मभ्यꣳशिवोभव ॥ ७ ॥

मण्डूक्यवकावेतसशाखाः कर्षणार्थं येषां बद्धाः सन्ति तदयं मन्त्रो वदति। कस्मात्त्वमेवमस्माभिः प्रार्थ्यसे इत्यत आह हे अग्ने त्वमपां पित्तं तेजोऽसि यो यस्यावयवः स तं न हिनस्ति तद्धर्मा च भवति। एवमग्निं सम्बोध्य मण्डूकीमाह हे मण्डूकि मण्डूको भेकस्तस्य स्त्री मण्डूकी तत्सम्बुद्धौ हे मण्डूकि ताभिः पूर्वोक्ताभिरद्भिः सह आगहि आगच्छ अपि लोपे अलोपः। यासामग्निः पित्तं यत्र त्वमुत्पन्ना या त्वमग्नेः शान्त्यै इतस्ततो नीयसे सा त्वमिमं यज्ञमस्माभिः क्रियमाणं चयनलक्षणं पावकवर्णमग्निसमानतेजसं शिवं फलप्रदत्वेन शान्तं च कृधि कुरु ॥ ६ ॥

एतद्धेनुभवनं कुत्रार्थ्यते तदाह अमुत्र अन्यजन्मनि तथान्यस्मिन् लोके स्वर्गे सर्वत्र इष्टदाः सन्त्वित्यर्थः। यद्यपि नियतसङ्ख्येष्टकास्तीयन्ते तथापि मन्त्रसामर्थ्याद्वर्धमाना एकादिपरार्धान्तसङ्ख्या भवन्तीति भावः॥ २॥

बृहती पङ्क्तिर्वा षट्त्रिंशदक्षरत्वाद्विकल्पः। अग्निदेवत्या इष्टकादेवत्या वा। हे इष्टका या यूयमेवंविधाः स्थ भवथ ता मे धेनवः सन्त्विति पूर्वेण सम्बन्धः। कीदृश्यः ऋतवः वसन्तादिरूपाः। ऋतावृधः ऋतं सत्यं यज्ञं वा वर्धयन्ति ऋतवृधः संहितायां पूर्वपददीर्घः। ऋतुष्ठाः ऋतुषु वसन्तादिषु तिष्ठन्ति तान्। स्थ-शब्दस्य पुनर्वचनमादरार्थम्। घृतश्चुतः श्चुतिर् क्षरणे घृतं श्चोतन्ति ता घृतश्चुतः घृतस्राविण्यः। मधुश्चुतः मधु श्चोतन्ति ता मधुस्राविण्यः। नामेति प्रसिद्धौ। विराजः विशेषेण

**ऋतवस्थऋतावृधऋतुष्ठास्थऋतावृधः। घृतश्चुतोमधुश्चुतोविराजोनामकामदुघाअक्षीयमाणाः॥ ३।**

**समुद्रस्यत्वावकयाग्नेपरिव्ययामसि। पावकोअस्मभ्यꣳशिवोभव॥ ४॥**

राजन्ते दीप्यन्ते ता विराजः दृश्यलोकस्पृणाभिप्रायमेतत्। कामदुघाः शत्काम्यं तस्य दोग्ध्र्यः पूरयित्र्यः दुहः कब्घश्चेति कप्। अक्षीयमाणाः न क्षीयन्ते ताः क्षयरहिताः॥ ३॥ १—१८,२,१०।

का० मण्डूकावकावेतसशाखा वेणौ बद्ध्वावकर्षति मन्त्राष्टवत्समुद्रस्य त्वेति प्रत्यृचम्[1]। मण्डूकशैवालवेतसतरुशाखा वंशे बद्ध्वा तं हस्तेनादायाग्निचितेः प्रत्यृचं कर्षति तेनेत्यर्थः॥ आदाया दक्षिणश्रोणेरारभ्य दक्षिणांसं यावत् कर्षति॥ द्वे गायत्र्यावग्निदेवत्ये अन्त्यो दृशकः। हे अग्ने समुद्रस्य समुन्दति क्लिन्नं करोति समुद्रो जलं तस्यावकया शैवालेन त्वा त्वां परिव्ययामसि परितो वेष्टयामः इदन्तो मसि उपरिभागे सर्वत्र विकर्षाम इत्यर्थः। त्वं चास्मभ्यं पावकः शोधकः शिवः शान्तश्च भव॥ ४॥

का॰ अनपेक्षमेत्योदङ् प्राङ् तिष्ठन्नात्मन उपरि प्रापणान्तं जपतीमा म इति[1]। कुम्भनिरसनानन्तरमपश्यन्नेत्य दक्षिण-वेदिश्रोणिसमीपे ईशानाभिमुखस्तिष्ठन्नात्मन उपरि हस्तौ प्रसार्य यावत् स्प्रष्टुं शक्नोति तावत् स्पृष्ट्वेमा म इति कण्डिकाद्वयं स्वरेण जपतीत्यर्थः ॥ विकृतिरग्निदेवत्या। हे अग्ने या इष्टकाः पञ्चसु चितिषूपहिताः इमा इष्टकाः मे मह्यं मदर्थं धेनवोऽभिमतफल-दोग्ध्र्यः सन्तु त्वत्प्रसादात् अस्मिन् लोके इति शेषः। तासां सङ्ख्यामाह एकेत्यादि अत्रैकादिपरार्धपर्यन्तैः शब्दैरुत्तरोत्तरं दशदशगुणिता सङ्ख्योच्यते। एका एकत्वसङ्ख्याविशिष्टा सा दशगुणिता दशसङ्ख्यामापद्यते सा दशगुणिता शतं भवति पूर्वसङ्ख्या-सहितोत्तरसङ्ख्याग्रहणमाधिक्याय शतं दशगुणितं सहस्रं भवति सहस्रं दशगुणितमयुतं भवति अयुतं दशगुणितं नियुतं

इमा मे अग्न इष्टका धेनवः सन्त्वेका च दश च दश च शतञ्च शतञ्च सहस्रञ्च सहस्रञ्चायुतञ्च नियुतञ्च नियुतञ्च

प्रयुतञ्चार्बुदञ्च न्यर्बुदञ्च समुद्रश्च मध्यञ्चान्तश्च परार्द्धश्चैता मे अग्न इष्टका धेनवस्सन्त्वमुत्रामुष्मिँल्लोके ॥ २ ॥

भवति नियुतं लक्षम् नियुतं दशगुणितं प्रयुतं भवति प्रयुतं लक्षदशकं प्रयुतग्रहणं कोटेरुपलक्षकम् प्रयुतं दशगुणं कोटिः कोटिर्दशगुणा अर्बुदम् अर्बुदं दशगुणं न्यर्बुदम् न्यर्बुदशब्देनाब्जसङ्ख्या ज्ञेया एतेषां ग्रहणमब्जसमुद्रान्तर्वर्तिनीनां खर्व-निखर्व-महापद्म-शङ्कु-सञ्ज्ञानां सङ्ख्यानामुपलक्षकम् तेनाब्जं दशगुणं खर्वं खर्वं दशगुणं निखर्वं निखर्वं दशगुणं महापद्मं महा-पद्मं दशगुणं शङ्कुः शङ्कुर्दशगुणः समुद्रः समुद्रः दशगुणो मध्यं मध्यं दशगुणमन्तः अन्तः दशगुणः परार्धः। चकारा इतरेतरसमुच्चयार्थाः। एवमेकाद्यष्टादशसङ्ख्यासञ्ज्ञासम्मिता इष्टका एता हे अग्ने मे धेनवः सन्त्विति पूर्वोक्तस्य निगमनम्।

१—१८,२,९।

अश्मनि पाषाणे पर्वते विन्ध्यहिमवदादौ शिश्रियाणां श्रयतीति शिश्रियाणा ताम्. श्रयतेः शानचि जुहोत्यादित्वाद् द्वित्वम्। तथा ऊर्जं सारभूतां बलहेतुम्। यद्वा पर्वाणि विद्यन्ते यस्मिन् स पर्वतः पर्वमरुद्भ्यां तन् प्रत्ययः अश्नातीत्यश्मा अन्येभ्योऽपि दृश्यत इति अश्नातेर्मनिन् अश्मनवति पर्ववति मेघे ऊर्जं जलं शिश्रियाणामाश्रितां वृष्टिसम्पाद्यामित्यर्थः। तथा अद्भ्यः जलेभ्य ओषधिभ्यो यवादिभ्यो वनस्पतिभ्योऽश्वत्थादिभ्यः सकाशादधि सम्भृतमधिकं सम्पादितं गोद्वारेण पयो दुग्धं च शिश्रियाणाम्. गौरपः पीत्वौषधिवनस्पतीन् भक्षयित्वा पयो दोग्धि। तां द्विरूपां मेघोत्थजलरूपां गोसमुत्थां पयोरूपां चेषमूर्जं दत्तेत्यर्थः। मरुतो वै वर्षस्येशत इति[1] श्रुतेः॥ का० अश्मंस्ते क्षुदित्यद्रौ कुम्भं कृत्वा मयि त ऊर्गित्यादायैवं द्विरपरम्[2]। सेकान्तेऽश्मनि कुम्भ-

**अश्मन्नूर्जम्पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पतिभ्यो अधि सम्भृतम्पयः। तान्न इषमूर्जन्धत्त मरुतः सꣳरराणाः॥**

**अश्मꣳस्ते क्षुन्मयि त ऊर्ग्यन्द्विष्मस्तन्ते शुगृच्छतु॥ १॥**

मश्मंस्ते क्षुदिति निधाय मयि त इति पुनरादाय पुनर्द्विवारं परिषिञ्चेदित्यर्थः॥ अश्मा देवता दैवी बृहती। अश्नातीत्यश्मा। हे अश्मन् सर्वभक्षक अग्ने ते तव क्षुत् क्षुधा अस्तु बहुहविषां भोज्यत्वात्॥ का० कुम्भमादत्ते[3]। आशीर्देवता दैवी बृहती हे अश्मन् ते तव ऊर्क् सारभागो मयि अस्त्विति शेषः॥ का० कुम्भं द्विः कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन्दक्षिणस्यां निरस्यति यं द्विष्म इति[4]। तं पाषाणं कुम्भे कृत्वा दक्षिणवेदिश्रोणौ पूर्वमुखस्तिष्ठन्दक्षिणस्यां दिशि साश्मानं घटं निरस्यतीत्यर्थः॥ यजुर्बृहती शुक् देवता। हे अग्ने ते तव शुक् शोकस्तं नरमृच्छतु गच्छतु तं कं वयं यं नरं द्विष्मः अस्मद्द्वेषविषयं तव शोको गच्छतु॥१॥

१—९,१,२,५। २—१८,२,२। ३—१८,२,३। ४—१८,२,४।

ये अन्तरिक्षे रुद्रा वर्तन्ते तेभ्यो रुद्रेभ्यो नमोऽस्तु। येषां रुद्राणां वात इषवः वायुरायुधस्थानीयः कुवातेनान्नं विनाश्य वातरोगमुत्पाद्य जनान् घ्नन्ति। तेभ्योऽन्तरिक्षस्थेभ्यो वातेषुभ्यो रुद्रेभ्यो नमोऽस्तु, शिष्टं व्याख्यातम् ॥ ६५ ॥ १—९,१,१,२२।

ये पृथिव्यां रुद्रा वर्तन्ते तेषामन्नमिषवः अन्नमदनीयं वस्तु आयुधम् अयथान्नभक्षणे कदन्नभक्षणे चौर्ये वा प्रवर्त्य रोगमुत्पाद्य जनान् घ्नन्ति तेभ्यः पृथिवीस्थेभ्योऽन्नायुधेभ्यो रुद्रेभ्यो नमोऽस्तु। तेऽस्मानवन्त्वित्यादि पूर्ववत् ॥ एते प्रत्यवरोहमन्त्राः। अथ प्रत्यवरोहान् जुहोतीति व्यवहाराय सम्प्राकरणम् ॥ ६६ ॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। शतरुद्रियहोमोऽयं षोडशोऽध्याय ईरितः ॥१६

नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः। तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः। तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ ६६ ॥

॥ इति माध्यन्दिनीयायां वाजसनेयिसंहितायां षोडशोऽध्यायः ॥ ० ॥ १६ ॥

षोडशेऽध्याये शतरुद्रियहोम उक्तः सप्तदशे चित्यपरिषेकादिमन्त्रा उच्यन्ते ॥ का० चित्यं परिषिञ्चत्यश्मो दक्षिणे निकक्षेऽद्रिं कृत्वाश्मन्नूर्जमित्यद्रेरधि। पक्षस्यापरसन्धिः कक्षस्तस्य समीपं निकक्षं दक्षिणपक्षापरसन्धिसमीप आत्मभागेऽश्मानं निधायोदकुम्भमादायाद्रेरारभ्य सपक्षपुच्छमग्निं प्रदक्षिणं जलधारया समन्तादग्नौ सिञ्चतीत्यर्थः। यजुर्मरुद्देवत्यम् आर्षी त्रिष्टुप्। हे मरुतः तां प्रसिद्धामिषमन्नमूर्जं रसं च नोऽस्मभ्यं धत्त दत्त यूयम्। किम्भूता यूयं संरराणाः सम्यक् रान्ति ददति ते संरराणाः सम्यन्दातारः। रा दाने बहुलं छन्दसीति जुहोत्यादिभ्यः श्लुः, हिलं च आनचि परे। कीदृशीमिषमूर्जम् अश्मन्

दिवि द्युलोके ये रुद्राः वर्तन्ते येषां च रुद्राणां वर्षं वृष्टिरेव इषवः बाणाः आयुधस्थानीया वृष्टिः अतिवृष्ट्यादीतिभिः प्राणिनो घ्नन्ति तेभ्यो रुद्रेभ्यो नमो नमस्कारोऽस्तु ॥ तेभ्यो रुद्रेभ्यो दशसङ्ख्याकाः प्राचीः प्रागभिमुखा अङ्गुलीः कुर्वे इति शेषः प्राङ्मुखाञ्जलिकरणे प्राच्यो दशाङ्गुलयो भवन्ति। दक्षिणाः दक्षिणाभिमुखाः दशाङ्गुलीः कुर्वे। प्रतीचीः प्रत्यङ्मुखाः दशाङ्गुलीः कुर्वे। उदीचीरुदङ्मुखाः दशाङ्गुलीः कुर्वे। ऊर्ध्वाः उपरि दशाङ्गुलीः कुर्वे। अञ्जलिं बद्ध्वा सर्वदिक्षु नमस्करोमीत्यर्थः ॥ तेभ्यो रुद्रेभ्यो नमोऽस्तु अञ्जलिपूर्वं

नमोस्तुरुद्रेभ्योयेदिवियेषांवर्षमिषवः। तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः। तेभ्योनमो

अस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥

नमोस्तुरुद्रेभ्योयेन्तरिक्षेयेषांवातइषवः। तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः। तेभ्योनमो

अस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६५ ॥

नतिरस्तु। दश वा अञ्जलेरङ्गुलयो दिशि दिश्येवैभ्य एतदञ्जलिं करोतीति[1] श्रुतेः। ते रुद्रा नोऽस्मानवन्तु रक्षन्तु ते रुद्रा नोऽस्मान् मृडयन्तु सुखयन्तु। किञ्च ते रुद्रा यं पुरुषं द्विषन्तीति शेषः वयञ्च द्विष्मो यस्य द्वेषं कुर्मः च पुनर्यो नरो नोऽस्मान्द्वेष्टि तं पुरुषमेषां पूर्वोक्तानां रुद्राणां जम्भे दंष्ट्राकराले मुखे दध्मः स्थापयामः अस्मद्द्विषमस्मद्द्वेष्यञ्च नरं रुद्राः पूर्वोक्ता भक्षयन्त्वित्यर्थः अस्मांश्चावन्तु च ॥ ६४ ॥

१ —— ९,१,१,३९।

तस्या इदमैलमन्नं तद्विभ्रति ते ऐलभृतः तएव परोक्षवृत्त्या ऐलबृदा उच्यन्ते अन्नैर्जन्तूनां पोषका इत्यर्थः। आयुयुधः आयुषा जीवनेन युध्यन्ति ते यावज्जीवयुद्धकराः यद्वा आयुर्जीवनं पणीकृत्य युध्यन्ते ते आयुयुधः ॥ ६० ॥

ये रुद्रास्तीर्थानि प्रयागकाश्यादीनि प्रचरन्ति गच्छन्ति। कीदृशाः सृकाहस्ताः सृकेत्यायुधनाम सृका आयुधानि हस्ते येषां ते। निषङ्गिणः निषङ्गाः खड्गा विद्यन्ते येषां ते सृकाहस्तत्वेऽपि निषङ्गित्वोक्तिः खड्गप्राधान्याय ॥ ६१ ॥

ये रुद्रा अन्नेषु भुज्यमानेषु स्थिताः सन्तो जनान्विविध्यन्ति विशेषेण ताडयन्ति धातुवैषम्यं कृत्वा रोगानुत्पादयन्तीत्यर्थः। तथा

येतीर्थानिप्रचरन्तिसृकाहस्तानिषङ्गिणः। तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६१ ।

येन्नेषुविविध्यन्तिपात्रेषुपिबतोजनान्। तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६२ ॥

यएतावन्तश्चभूयाꣳसश्चदिशोरुद्रावितस्थिरे। तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६३ ॥

पात्रेषु पात्रस्थक्षीरोदकादिषु स्थिताः सन्तः पिबतो क्षीरादिपानं कुर्वतो जनान्विविध्यन्ति अन्नोदकभोक्तारो व्याधिभिः पीडनीया इति तेषामधिकार इति भावः। तेषामिति पूर्ववत् ॥ ६२ ॥

ये रुद्राः एतावन्तः एतत्प्रमाणं येषां ते अतिशयेन बहवो भूयांसः उक्तेभ्योऽतिबहवश्च ये रुद्रा दिशो दश वितस्थिरे आश्रिताः दश दिशो व्याप्य स्थिताः तेषां धनूंषि अवतन्म इति पूर्ववत् ॥ ६३ ॥

कण्डिकात्रयात्मिकानि त्रीणि यजूंषि प्रत्यवरोहसञ्ज्ञानि धृतिच्छन्दस्कानि बहुरुद्रदेवत्यानि। त्रिलोकस्था रुद्रा उच्यन्ते।

पातालस्था रुद्रा उच्यन्ते । अधोभागे ये शर्वा रुद्राः क्षमाचराः क्षमायां भुवो ऽधोभागे चरन्ति गच्छन्ति ते क्षमाचराः पाताले वर्तमानाः तेषामित्युक्तम् नीलग्रीवाः शितिकण्ठा इतिपूर्ववद्विशेषणे ॥ ५७ ॥

ये रुद्रा वृक्षेषु अश्वत्थादिषु स्थिताः । कीदृशाः शष्पिञ्जराः शष्पं बालतृणं तद्वत्पिञ्जरा हरितवर्णाः । नीलग्रीवा नीला ग्रीवा येषां ते कण्ठे नीलवर्णाः । तथा केचन विलोहिताः विशेषेण रक्तवर्णाः यद्वा विगतं लोहितं रुधिरं येषां ते लोहितपदं मांसादीनामुपलक्षणम् विगतलोहितादिधातवः तेजोमयशरीरा इत्यर्थः । तेषामित्याद्युक्तम् ॥ ५८ ॥

येवृक्षेषुशष्पिञ्जरानीलग्रीवाविलोहिताः । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५८ ॥

येभूतानामधिपतयोविशिखासःकपर्दिनः । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५९ ॥

येपथाम्पथिरक्षसऐलबृदाआयर्युधः । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६० ॥

ये ईदृशा रुद्रास्तेषां धन्वानीति पूर्ववत् । कीदृशाः भूतानां देवविशेषाणामधिपतयः अन्तर्हितशरीराः सन्तो मनुष्योपद्रवकरा भूतास्तेषां पालकाः तत्र केचिद्विशिखासः विगता शिखा येषां ते शिखाशब्दः केशोपलक्षकः मुण्डितमुण्डा इत्यर्थः । अन्ये कपर्दिनः जटाजूटयुताः ॥ ५९ ॥

ये चेदृशा रुद्रास्तेषामित्युक्तम् । कीदृशाः पथां लौकिकवैदिकमार्गाणामधिपतय इति पूर्वर्चोऽनुषङ्गः । तथा पथिरक्षसः पथो मार्गास्तानेवान्यानपि रक्षन्ति पालयन्ति ते पथिरक्षसः । ऐलबृदाः इलानामन्नानां समूह ऐलमन्नसमूहः यद्वा इला पृथ्वी

बहुरुद्रदेवत्या दशानुष्टुभोऽवतानसञ्ज्ञाः । भूमिस्था रुद्रा उच्यन्ते । असङ्ख्याता असङ्ख्यातानि सहस्राणि अमिता ये रुद्रा भूम्यामधि भूमेरुपरि स्थिताः तेषां रुद्राणां धन्वानि धनूंषि सहस्रयोजने योजनानि यस्मिंस्तादृशे पथि सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि अवतन्मः अवतारयामः अपज्यानि कृत्वास्मत्तो दूरं क्षिपाम इत्यर्थः ॥ ५४ ॥

अन्तरिक्षस्था रुद्रा उच्यन्ते अस्मिन्नन्तरिक्षे अधिश्रित्य ये भवा रुद्राः स्थिताः तेषां धन्वान्यवतन्मसीति पूर्ववत् । कीदृशेऽन्तरिक्षे

असङ्ख्याता सहस्राणि ये रुद्रा अधि भूम्याम् । तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५४ ॥

अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५५ ॥

नीलग्रीवाः शितिकण्ठा दिवᳬ रुद्रा उपश्रिताः । तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५६ ॥

नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः । तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५७ ॥

महति विशाले । अर्णवे अर्णांसि जलानि विद्यन्ते यत्र तदर्णवम् मेघाधारत्वात् । अर्णसो लोपश्चेति वप्रत्ययोऽन्तलोपश्च ॥ ५५ ॥

द्युस्था रुद्रा उच्यन्ते ये रुद्रा दिवं द्युलोकमुपश्रिताः स्वर्गस्थास्तेषामिति पूर्ववत् । कीदृशाः नीलग्रीवाः नीला श्यामा ग्रीवा येषां ते । शितिः श्वेतः कण्ठो येषां ते । विषग्रासातिशयात्कण्ठभागः कृष्णः कियान् श्वेत इत्यर्थः ॥ ५६ ॥

शिवतमः। हे मीढुष्टम अतिशयेन कामसेक्तः हे शिवतम अत्यन्तं कल्याणकर्तः। नोऽस्मान्प्रति शिवः शान्तः सुमना हृष्टचित्तश्च भव। किञ्च परमे दूरस्थेऽत्युन्नते वा वृक्षे वटादौ आयुधं त्रिशूलादिकं निधाय संस्थाप्य कृत्तिं चर्म वसानः परिदधानः सन् आचर आगच्छ तपश्चरेति वा। आगच्छन्नपि पिनाकं धनुर्बिभ्रत् धारयन्सन् आगहि आगच्छ। ज्याशरहीनं धनुर्मात्रं शोभार्थं धारयन्नागच्छेत्यर्थः॥५१

हे अनुष्टुभौ। विविधं किरिं घातायुपद्रवं द्रावयति नाशयति विकिरिद्रः हे विकिरिद्र हे विलोहित विगतं लोहितं कल्मषं यस्मात्स विलोहितः हे शुद्धस्वरूप भगवः भगवन् ते तुभ्यं नमोऽस्तु। हे रुद्र ते तव याः सहस्रं हेतयोऽसङ्ख्यान्यायुधानि ता हेतयोऽस्मदन्यमस्मद्व्यतिरिक्तं निवपन्तु घ्नन्तु॥ ५२॥

मीढुष्टमशिवतमशिवोनःसुमनाभव। परमेवृक्षआयुधन्निधायकृत्तिंवसानआचरपिनाकम्बिभ्रदागहि॥ ५१॥

विकिरिद्रविलोहितनमस्तेअस्तुभगवः। यास्तेसहस्रꣳहेतयोन्यमस्मन्निवपन्तुताः॥ ५२॥

सहस्राणिसहस्रशोबाह्वोस्तवहेतयः। तासामीशानोभगवःपराचीनामुखाकृधि॥ ५३॥

हे भगवः भगवन् षड्गुणैश्वर्यसम्पन्न तव बाह्वोर्हस्तयोः याः सहस्राणि सहस्रशः हेतयः सन्ति तासां हेतीनां मुखा मुखानि पराङ्मुखानि पराचीना अस्मत्तः पराङ्मुखानि त्वं कृधि कुरु करोतेः अपि लुप्ते शुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिः। कीदृशस्त्वम् ईशानः ईष्टइतीशानः जगन्नाथः। सहस्राणि सहस्रसङ्ख्यानि धनुः खड्गः शूलं वर्मेत्यादिभेदेन सहस्रसङ्ख्यात्वम् सहस्रं सहस्रमिति सहस्रशः सङ्ख्यैकवचनाच्च वीप्सायामिति शस्प्रत्ययः धनुरादीनां प्रत्येकं सहस्रसङ्ख्यात्वमित्यर्थः॥ ५३॥

सप्तमी वा द्विपदचतुष्पदविषये यथा येन प्रकारेण शं सुखमसत् भवति अस्मिन् ग्रामे अस्मिन्वासस्थाने विश्वं सर्वं प्राणिजातं पुष्टं सम्यक्मनातुरं निरुपद्रवं स्वस्थं च यथा असत् स्यात् तथा मतिं रुद्रे समर्पयाम इत्यर्थः ॥ ४८ ॥

अनुष्टुप्। हे रुद्र या ते तव इष्टशी तनूः शरीरं तया तन्वा नोऽस्मान्जीवसे जीवितुं मृड सुखय। कीदृशी शिवा शान्ता अघोरा। विश्वाहा विश्वानि च तान्यहानि च विश्वाहा कालाध्वनोरत्यन्तसंयोगइति द्वितीया तस्या आकारः सर्वेष्वहःसु सर्वदा शिवा कल्याणकारिणी भेषजी औषधरूपा संसारव्याधिनिवर्तिका। रुतस्य शारीरव्याधेः शिवा समीचीना भेषजी निवर्तिकौषधिः॥ ४९ ॥

त्रिष्टुप्। रुद्रस्य शिवस्य हेतिरायुधं नोस्मान्परिवृणक्तु परितो वर्जयतु अस्मान्मा हन्त्वित्यर्थः। त्वेषस्य क्रुद्धस्य अघायोः

याते रुद्रशिवातनूःशिवाविश्वाहाभेषजी। शिवारुतस्यभेषजीतयानोमृडजीवसे ॥ ४९ ॥

परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः। अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृड ॥ ५० ॥

द्रोग्धुर्दुर्मतिर्दुष्टामतिर्द्रोहबुद्धिरस्मान्परिवृणक्तु। त्विषति क्रोधेन ज्वलति त्वेषस्तस्य पचाद्यच्। अघं पापं परस्येच्छति अघायुः सुप आत्मनः क्यजित्यत्र परेच्छायामपि वाच्यमिति क्यच् क्याचि चेतीत्वे प्राप्ते अश्वाघस्यादिति आकारः क्याच्छन्दसीति उप्रत्ययः। मेहति सिञ्चतीति मीढ्वान् हे मीढ्वः कामाभिवर्षुक स्थिरा स्थिराणि दृढानि धनूंषि त्वमवतनुष्व अवतारय ज्यारहितानि कुरु। किमर्थं मघवद्भ्यः। मघमिति धननाम। मघं हविर्लक्षणं धनं विद्यते येषां ते मघवन्तो यजमानास्तदर्थः यजमानानां भयनिवृत्तये इत्यर्थः। किञ्च तोकाय पुत्राय तनयाय पौत्राय च मृड पुत्रं पौत्रञ्च सुखय। कर्मणि चतुर्थी ॥ ५० ॥

इयमेकोना यवमध्या त्रिष्टुप् तृतीय एकादशार्णः चत्वारोऽन्येऽष्टार्णाः पञ्चपादा। अतिशयेन मीढ्वान्मीढुष्टमः। अत्यन्तं शिवः

स्रिवन्ति हिंसन्ति पापमिति विस्रिधत्कास्तेभ्योऽग्न्यादिभ्यो नमः। आ समन्तान्निर्हता निर्गताः सर्गादौ लोकेभ्य इत्यानिर्हतास्तेभ्यो नमः। हन्तिर्गत्यर्थः। तेभ्यस्तमेभ्यस्त्वोषि ज्योती॰ष्यजायन्ताग्निर्योऽयं पवते सूर्य इति श्रुतेः॥ ४६॥

सप्त ऋचं एकरुद्रदेवत्याः। आद्योपरिष्टाद्बृहती समाष्टादशद्वादशार्णपादा। हे द्रापे द्रा कुत्सायां द्रापयति कुत्सितां गतिं पापिनः प्रापयतीति द्रापिः। हे अन्धसः सोमस्य पते पालक। अन्धसस्पतइति सोमस्य पतइत्येतदिति(२४) श्रुतेः। हे दरिद्र निष्परिग्रह अद्वितीयत्वादिति भावः। हे नीललोहित कण्ठे नीलोऽन्यत्र लोहितः हे शिव नोऽस्माकमासां प्रजानां पुत्रादीनामेषां पशूनां गवादीनां त्वं मा भेः भयं मा कुरु बहुलं छन्दसीति शपो लुक्। मा रोक् रुजो भङ्गे प्रजापशूनां भङ्गं मा कार्षीः कर्मणि षष्ठी। च

द्रापेऽअन्धसस्पतेदरिद्रनीललोहित। आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनःकिञ्चनाममत्॥ ४७॥

इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः। यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम्॥ ४८॥

पुनर्नोऽस्माकं किञ्चन किमपि द्विपदचतुष्पदादिकं मो मा आममत् रुग्णं मा कार्षीत् यद्वा रुग्णं मास्तु। अम रोगे लुङि धातोरमागम आर्षः॥ ४७॥

१—निघ० २,७,५;३,३,६।

कुत्सदृष्टा जगती। वयमिमा अस्मदीया मतीः बुद्धीः रुद्राय शङ्कराय प्रभरामहे प्रहरामहे समर्पयामो रुद्रं स्मराम इत्यर्थः। स्तुतिभिः। कीदृशाय तवसे महते बलवते वा उभयत्र तवःशब्दः पठितः१ कपर्दिने जटिलाय। क्षयद्वीराय क्षयन्तो निवसन्तो वीराः शूरा यत्र स क्षयद्वीरः तस्मै शूरायेत्यर्थः। क्षयन्तो नश्यन्तो वीरा रिपवो यस्मादिति वा द्विपदे पुत्रादये चतुष्पदे गवादिपशवे

देशस्तत्र भवो लोप्यः त० । लोपः संहारो वा ॥ उलपा वल्वजादितृणविशेषास्तत्र भव उलप्यः त० । उलपस्तु गुल्मिनीतृणभेदयोः ॥ उर्व्यां भूमौ भव उर्व्यः त० दीर्घ आर्षः । ऊर्वो वडवानलो वा ॥ शोभन ऊर्वः कल्पानलस्तत्र भवः सूर्व्यः त० ॥ ४५ ॥ १—८,१,१,२३ ।

तरूणां पत्ररूपाय नमः ॥ शद्लृ शातने शदनं शदः शातनम् यद्वा पर्णानि शीर्यन्ते शात्यन्ते पक्कानि पतन्ति यत्र स पर्णशदः पतितपर्णस्थितिदेशस्तद्रूपाय नमः ॥ गुरी उद्यमे तुदादिभ्यः शः उद्गुरते उद्यमं करोति उद्गुरमाणं उद्यमी त० ॥ अभि हन्ति शत्रू-नित्यभिघ्नन् त० ॥ आ समन्तात्खिद्यते दैन्यं करोत्यभक्तानामित्याखिदन् त० ॥ प्रकर्षेण खेदयति पापिन इति प्रखिदन् त० ॥ इषून्बाणान्कुर्वन्ति ते इषुकृतस्तेभ्यो रुद्रेभ्यो नमः ॥ धनूंषि चापानि कुर्वन्ति ते धनुष्कृतः तेभ्यो वो युष्मभ्यं नमः युष्मदादेश-

**नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च नम आखिदते च प्रखिदते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो**

**नमो वः किरिकेभ्यो देवाना हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ॥ ४६ ॥**

योगात् प्रत्यक्षा एते रुद्राः ॥ तिस्रोऽशीतयो रुद्राणां समाप्ताः । एवं चत्वारिंशदधिकशतत्रयमन्त्रैः रुद्रस्य सर्वात्मत्वमुक्तम् ॥ अथ रुद्रेषु प्रधानभूतानामग्निवायुसूर्याणां सम्बन्धीनि चत्वारि यजूंष्युच्यन्ते । चतुर्णामादौ नमःशब्दाश्चत्वार्येव यजूंषि आद्यं चतुर्दशाक्षरं त्रीणि समाक्षराणि तानि व्याहृतिसञ्ज्ञानि ॥ नमो व इति । देवानां हृदयेभ्यो रुद्राणां हृदयवत्प्रधानभूतेभ्योऽग्निवायुसूर्येभ्यो वो युष्मभ्यं नमः । देवानां हृदयेभ्य इत्यग्निर्वायुरादित्य एतानि ह तानि देवानाᳬ हृदयानीति[१] श्रुतेः । हृदयानीव हृदयानि यथाङ्गानां प्रधानमेवमेते रुद्राणां प्रधाना इत्यर्थः । कीदृशेभ्यस्तेभ्यः । किरिकेभ्यो वृष्ट्यादिद्वारा जगत्कुर्वन्ति किरिकास्तेभ्यः एते हीदᳬ सर्वं कुर्वन्तीति(१२) श्रुतेः ॥ विचिन्वन्ति पृथक् कुर्वन्ति धर्मिष्ठं पापिष्ठं चेति विचिन्वत्कास्तेभ्योऽग्न्यादिभ्यो नमः ॥ विविधं

प्रदेशे स किंशिलः तद्रूपाय नमः ॥ क्षियन्ति निवसन्त्यापो यत्र स क्षयणः स्थिरजलप्रदेशः त० ॥ कपर्दो जटाजूटोऽस्यास्तीति कपर्दी त० ॥ पुरोऽग्रे तिष्ठति पुलस्तिः । थस्य तत्वं छान्दसं रस्य लत्वं च यद्वा पूर्षु शरीरेषु अस्तिः सत्ता यस्य स पुलस्तिः सर्वान्तर्यामी त० ॥ इरिणमूषरं वितृणदेशस्तत्र भव इरिण्यः त० ॥ प्रकृष्टः पन्थाः प्रपथो बहुसेवितो मार्गस्तत्र भवः प्रपथ्यः त० ॥ ४३ ॥

व्रजे गोसमूहे भवो व्रज्यः तस्मै । गोष्ठाध्वनिवहा व्रजाः ॥ गावस्तिष्ठन्ति यत्रेति तद्गोष्ठं तत्र भवो गोष्ठ्यस्तस्मै ॥ तल्पं शय्या

नमः सिकत्याय च प्रवाह्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नम इरिण्याय च प्रपथ्याय च ॥४३॥

नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च ॥४४॥

नमः शुष्क्याय च हरित्याय च नमः पाꣳसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्व्याय च ॥ ४५ ॥

तत्र भवस्तल्प्यस्तस्मै ॥ गेहे गृहे भवो गेह्यस्तस्मै ॥ हृदये भवो हृदय्यो जीवस्तस्मै । निवेष्प आवर्तो नीहारजलं वा तत्र भवो निवेष्प्यः त० ॥ कुत्सितमटन्ति गच्छन्ति जना यत्र स काटो दुर्गारण्यदेशः काटः कूपो वा तत्र भवः काट्यः त० ॥ गह्वरे विषमे गिरिगुहादौ गभीरे जले वा तिष्ठति गह्वरेष्ठः त० । गह्वरं बिलदम्भयोः ॥ ४४ ॥

शुष्के काष्ठादौ भवः शुष्क्यः त० ॥ हरिते आर्द्रे काष्ठादौ भवः हरित्यः त० ॥ पांसुषु धूलिषु भवः पांसव्यः त० । ओर्गुणः ॥ रजसि गुणे परागे वा भवो रजस्यः त० । रजो रेणुपरागयोः स्त्रीपुष्पे गुणभेदे च ॥ लुप्यते नश्यति गमनादि यत्रेति लोपोऽगम्यप्र-

तस्मै । तुरिष्ठेमेयःस्विति हचो लोपः प्रलये सर्वं हन्तीत्यर्थः ॥ हरयो हरिताः केशाः पत्ररूपा येषां तेभ्यो वृक्षेभ्यः कल्पतरुरूपेभ्यो नमः ॥ तारयति संसारमिति तारः त० ॥ ४० ॥

शं सुखं भवत्यस्मादिति शम्भवः यद्वा शं सुखरूपश्चासौ भवः संसाररूपश्च मुक्तिरूपो भवरूपश्च त० ॥ मयः सुखं भवत्यस्मान्मयोभवः संसारसुखप्रदः त० ॥ शं लौकिकसुखं करोति शङ्करः त० ॥ मयो मोक्षसुखं करोति मयस्करः त० । स्रक्चन्दनादिरूपेण लौकिकसुखकारित्वम् शास्त्रादिरूपेण ज्ञानप्रदत्वान्मोक्षसुखकारित्वमित्यर्थः । एताभ्यां पदाभ्यां साक्षात्सुखकारित्वम् पूर्वपदाभ्यां तद्द्वारा कारयितृत्वमिति विवेकः ॥ शिवः कल्याणरूपो निष्पापः त० ॥ शिवतरोऽत्यन्तं शिवो भक्तानपि निष्पापान् करोति त० ॥ अस्यां कण्डिकायां षड् यजूंषि पूर्वस्यां दशोक्तिः ॥ ४१ ॥

नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ४१ ॥

नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च ॥ ४२ ॥

पारे संसाराब्धेः परतीरे जीवन्मुक्तरूपेण भवः पार्यः त० ॥ अवारे अर्वाक्तीरे संसारमध्ये संसारित्वेन भवोऽवार्यः त० । पारावारे परार्वाची तीरे पात्रं यदन्तरमिति कोषः ॥ प्रकर्षेण मन्त्रजपादिना पापतरणहेतुः प्रतरणः त० ॥ उत्कृष्टेन तत्त्वज्ञानेन संसारोत्तरणहेतुरुत्तरणः त० ॥ तीर्थे प्रयागादौ भवः तीर्थ्यः त० ॥ कूले तटे भवः कूल्यः त० ॥ शष्पं बालतृणं गङ्गातीरोत्पन्नं कुशाङ्कुरादि तत्र भवः शष्प्यः त० ॥ फेने डिण्डिरे भवः फेन्यः त० ॥ ४२ ॥

सिकतासु भवः सिकत्यः त० ॥ प्रवाहे स्रोतसि भवः प्रवाह्यः त० ॥ कुत्सिताः क्षुद्राः शिलाः शर्कराकूपाः पाषाणा यत्र

७३

कूपे भवः कूप्यः त० ॥ अवटो गर्तस्तत्र भवोऽवट्यः त० ॥ इन्धो दीप्तौ विशेषेण इध्रं वीध्रं निर्मलं शरदभ्रं तत्र भवो वीध्र्यः यद्वा विगत इध्रो दीप्तिर्यस्मात्स वीध्रो घनागमः तत्र भवाय नमः ॥ आतपे भव आतप्यः त० ॥ मेघे भवो मेघ्यः त० ॥ विद्युति भवो विद्युत्यः त० ॥ वर्षं वृष्टिः तां भवो वर्ष्यः त० ॥ अवर्षे वृष्टिप्रतिबन्धे भवोऽवर्ष्यः त० ॥ ३८ ॥

वाते भवो वात्यः त० ॥ रिष्यन्ते नश्यन्ति भूतान्यत्रेति रेष्मा प्रलयकालः । अन्येभ्योऽपि दृश्यन्त इति मनिन् । तत्र भवो रेष्म्यः प्रलयेऽपि विद्यमानायेत्यर्थः ॥ वास्तुनि गृहभुवि भवो वास्तव्यः त० वेश्मभूर्वास्तु र्स्त्रियाम् ॥ वास्तु गृहभुवं पाति वास्तुपः त० ॥

**नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च ॥ ३९ ॥**

**नमः शङ्गवे च पशुपतये च नम उग्राय च भीमाय च नमोऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ॥ ४० ॥**

उमया सहितः सोमः त० ॥ रुत् दुःखं द्रावयति रुद्रो दुःखनाशकः त० ॥ ताम्रो रक्तवर्णः उदयाद्रविरूपेण त० ॥ अरुण ईषद्रक्त उदयोत्तरकालीनार्करूपेण ॥ ३९ ॥

शं सुखं गमयति प्रापयति शङ्गुः शं सुखरूपा गावो वाचो वेदरूपा यस्येति वा त० ॥ पशूनां प्राणिनां पतिः पालकः त० ॥ उग्र उद्गूर्णायुधः शत्रून् हन्तुं त० ॥ भीमः शत्रुभयोत्पादकः ॥ अग्रे पुरो वर्त्तमानो हन्तीत्यग्रेवधः त० ॥ दूरे वर्त्तमानो हन्तीति दूरेवधः त० ॥ हन्तीति हन्ता त० । लोके यो हन्ति तद्रूपेण रुद्र एव हन्तीत्यर्थः ॥ अतिशयेन हन्ता हनीयान्

त० ॥ दुन्दुभौ भेर्यां भवो दुन्दुभ्यस्त० । दुन्दुभिस्तु भेर्यां दितिसुते विषे ॥ आहन्यते ताड्यतेऽनेनेत्याहननं वाद्यसाधनं दण्डादि तत्र भव आहनन्यः त० ॥ ३५ ॥

धृष्णोतीत्येवंशीलो धृष्णुः प्रगल्भः तस्मै नमः ॥ प्रमृशति विचारयति प्रमृशः पण्डितस्त० । इगुपधेति कः ॥ निषङ्गिणे खड्गयुताय नमः ॥ इषुधिमते तूणयुताय नमः ॥ तीक्ष्णा असह्या इषवो बाणा यस्य सः तीक्ष्णेषुः त० ॥ 'अन्यान्यायुधान्यपि सन्ति आयुधी त० ॥ शोभनमायुधं त्रिशूलं यस्य स स्वायुधः त० ॥ शोभनं धनुः पिनाकं यस्य स सुधन्वा त० ॥ ३६ ॥

नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च ॥ ३६ ॥

नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥ ३७ ॥

नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च ॥ ३८ ॥

स्रुतिः क्षुद्रः प्रवाहः क्षुद्रमार्गो वा तत्र भवः स्रुत्यः त० ॥ पन्था रथाश्वादियोग्यो मार्गस्तत्र भवः पथ्यः त० ॥ कुत्सितमटति जनो यत्रेति काटो विषममार्गः तत्र भवः काट्यः त० । काटः कुल्याप्रदेशो वा ॥ नीचैः पतन्त्यापो यत्रेति नीपो गिर्यधोभागः । ऋक्पूरब्धूःपथामिति अप्रत्ययः द्व्यन्तरुपसर्गेभ्योऽप ईदिति अपशब्दस्येकारः तत्र भवो नीप्यः त० ॥ कुल्या कृत्रिमा सरित्तत्र भवः कुल्यः कुलेषु देहेषु वान्तर्यामिरूपेण भवः कुल्यः त० । कुलं देहेऽन्वये गणे ॥ सरसि भवः सरस्यः त० ॥ नद्यां भवो नादेयः तस्मै नदीजलरूपाय नमः ॥ वेशन्तो ऽल्पसरः तत्र भवो वैशन्तः त० ॥ ३७ ॥

प्रतिसर्यः तस्मै नमः ॥ आहुः प्रतिसरं हस्तसूत्रे माल्यस्य मण्डने । व्रणशुद्धौ चमूपृष्ठे नियोज्यारक्षकं कर्णे मन्त्रभेदेऽपीति विश्वः ॥ यमे भवो याम्यः पापिनां नरकार्त्तिदाता तस्मै नमः ॥ क्षेमे कुशले भवः क्षेम्य स्तस्मै नमः ॥ श्लोका वैदिकमन्त्रा यशो वा तत्र भवः श्लोक्यः त० ॥ अवसानं समाप्तिर्वेदान्तो वा तत्र भवोऽवसान्यः त० ॥ उर्वरा सर्वसस्याढ्या भूः तत्र धान्यरूपेण भव उर्वर्यः त० ॥ खलो धान्यविवेचनदेशः तत्र भवः खल्यः त० । खलः कल्के भुवि धने क्रूरे कर्णे जयेऽधमे इत्युक्तिः ॥ ३३ ॥

वने वृक्षादिरूपेण भवो वन्यस्तस्मै नमः । वनं वृक्षौघो जलं वा । वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने ॥ कक्षं तृणं

**नमो॒वन्या॑यच॒कक्ष्या॑यच॒नमः॑श्र॒वाय॑चप्रतिश्र॒वाय॑च॒नम॑आ॒शुषे॑णायचा॒शुर॑थायच॒नमः॒शूरा॑यचावभे॒दिने॑च ॥ ३४ ॥**

**नमो॑बि॒ल्मिने॑चकव॒चिने॑च॒नमो॑व॒र्म्मिणे॑चवरू॒थिने॑च॒नमः॑श्रु॒ताय॑चश्रुतसे॒नाय॑च॒नमो॑दुन्दु॒भ्याय॑चाहन॒न्याय॑च ॥ ३५ ॥**

कक्षे वा तत्र भवः कक्ष्यस्तस्मै नमः । कक्षो वीरुधि दोर्मूले कच्छे शुष्कवने तृणे ॥ श्रूयतइति श्रवः शब्दस्तद्रूपाय नमः ॥ प्रतिश्रवः प्रतिशब्दस्तद्रूपाय नमः ॥ आशुः शीघ्रा सेना यस्य स आशुषेणः तस्मै नमः ॥ आशु शीघ्रो रथो यस्यासावाशुरथस्तस्मै नमः ॥ शूराय युद्धधीराय नमः ॥ अवभिनत्ति रिपूनीचैर्विदारयतीत्यवभेदी तस्मै नमः ॥ ३४ ॥

बिल्मं शिरस्त्राणमस्यास्ति बिल्मी तस्मै नमः ॥ पटस्यूतं कर्पासगर्भं देहरक्षकं कवचं तदस्यास्तीति कवची तस्मै नमः ॥ लोहमयं शरीररक्षकं वर्म तदस्यास्तीति वर्मी तस्मै नमः ॥ गजोपरिस्थो गजाकारः कोष्ठो वरूथः रथगुप्तिर्वा सोऽस्यास्ति वरूथी तस्मै नमः । वरूथं तु तनुत्राणे रथगोपनवेश्मनोः ॥ श्रुताय प्रसिद्धाय नमः ॥ श्रुता प्रसिद्धा सेना यस्य स श्रुतसेनः

जलम्, यद्वा अव नीचैर्गतादौ स्वनोऽवस्वनस्तत्र भवाय ॥ नद्यां भवो नादेयस्तस्मै नमः। नद्यादिभ्यो ढक्। द्वीपे जलान्तर्वर्ति-निर्जलभूमौ भवो द्वीप्यस्तस्मै नमः ॥ ३१ ॥

वयोऽवस्थाविशेषाभिधायकाः षट् नमस्काराः ॥ अत्यन्तं प्रशस्यो ज्येष्ठस्तस्मै नमः। ज्य चेति प्रशस्यशब्दस्येष्ठनि ज्यादेशः। अत्यन्तं युवाल्पो वा कनिष्ठस्तस्मै नमः। युवाल्पयोः कनन्यतरस्यामिति कनादेशः ॥ पूर्वं जगदादौ हिरण्यगर्भरूपेणोत्पन्नः पूर्वजस्तस्मै नमः ॥ अपरस्मिन् काले प्रलये कालाग्निरूपेण जातोऽपरजस्तस्मै नमः ॥ मध्ये सृष्टिसंहारान्तर्देवतिर्यगादिरूपेण

**नमऽआशवेचाजिरायचनमःशीघ्र्यायचशीभ्यायचनमऊर्म्यायचावस्वन्यायचनमोनादेयायचद्वीप्यायच ॥ ३१ ॥**

**नमोज्येष्ठायचकनिष्ठायचनमःपूर्वजायचापरजायचनमोमध्यमायचापगल्भायचनमोजघन्यायचबुध्न्यायच ॥ ३२ ॥**

**नमस्सोभ्यायचप्रतिसर्य्यायचनमोयाम्यायचक्षेम्यायचनमःश्लोक्यायचावसान्यायचनमउर्वर्य्यायचखल्यायच ॥ ३३ ॥**

भवो मध्यमस्तस्मै नमः मध्यात्मः ॥ गल्भ धार्ष्ट्ये गल्भनं गल्भो धार्ष्ट्यम् अपगतो गल्भो यस्मात्सोऽपगल्भोऽप्रगल्भोऽव्युत्पन्नेन्द्रियस्तद्रूपाय नमः। एकगर्भान्तरितोऽपगल्भो वा ॥ जघनं गवादीनां पश्चाद्भागस्तत्र भवो जघन्यस्तस्मै नमः ॥ बुध्ने वृक्षादि-मूले भवो बुध्न्यस्तस्मै नमः ॥ ३२ ॥

सोभं गन्धर्वनगरं तत्र भवः सोभ्यः यद्वा उभाभ्यां पुण्यपापाभ्यां सहितः सोभो मनुष्यलोकः। पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकमित्याथर्वणश्रुतेः[1] तत्र भवः सोभ्यस्तस्मै नमः ॥ प्रतिसरो विवाहोचितं हस्तसूत्रमभिचारो वा तत्र भवः

१——प्र० उ० २,१।

शतं धनूंषि यस्य शतधन्वा धनुषश्चेत्यनङ् तस्मै बहुधनुर्धारिणे नमः ॥ गिरौ कैलाशे शेतेऽसौ गिरिशयस्तस्मै नमः ॥ शिपिविष्टाय विष्णुरूपाय विष्णुः शिपिविष्ट इति श्रुतेः यद्वा शिपिषु पशुषु विष्टः प्रविष्टः पशवो वै शिपिरिति श्रुतेः सर्वप्राणिष्वन्तर्यामितया स्थित इत्यर्थः यद्वा यज्ञो वै शिपिः यज्ञेऽधिदेवतात्वेन प्रविष्टः शिपिरादित्यो वा मण्डलाधिष्ठातेत्यर्थः तस्मै नमः । शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवतीति[१] यास्कोक्तेः ॥ अतिशयेन मीढ्वान् मेघरूपेण सेक्ता मीढुष्टमः तस्मै नमः ॥ इषवो बाणाः सन्त्यस्येतीषुमान् तस्मै नमः ॥ २९ ॥

रूपतो नमस्काराः । ह्रस्वोऽल्पशरीरस्तस्मै नमः ॥ वामनः सङ्कुचितावयवस्तस्मै नमः ॥ बृहन् प्रौढाङ्गस्तस्मै नमः ॥ वर्षी-

**नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥ २९ ॥**

**नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च ॥ ३० ॥**

यानतिशयेन वृद्धः प्रशस्यस्येत्यादिना वर्षादेशः तस्मै नमः ॥ वृद्धो वयसाधिकः तस्मै नमः ॥ वर्धन्ते विद्याविनयादिगुणैस्ते वृधः पण्डिताः क्विप् तैः सह वर्तत इति सवृत् तस्मै नमः ॥ जगतामग्रे भवोऽग्र्यस्तस्मै नमः । अग्राद्यत् ॥ सर्वत्र मुख्यः प्रथमस्तस्मै नमः ॥ ३० ॥

[१] — निरु० ५, ८.

अश्नुते जगद्व्याप्नोतीत्याशुस्तस्मै नमः ॥ अजति गच्छतीत्यजिरो गतिशीलस्तस्मै नमः ॥ शीघ्रे वेगवद्वस्तुनि भवः शीघ्र्यः । तत्र भव इति यत्सर्वत्र ॥ शीभृ कत्थने शीभते कत्थते इति शीभ आत्मश्लाघी पचाद्यच् तत्र भवः शीभ्यः शीभो जलप्रवाहो वा शीभः क्षिप्रो वा तत्र भवाय नमः ॥ ऊर्मिषु कल्लोलेषु भव ऊर्म्यः तस्मै नमः ॥ अवगतः स्वनो यस्मात्तदवस्वनं स्थिर-

मृगान् कामयन्ते वै मृगयवः। इदंयुरिदं कामयमान इति[1] यास्कोक्तेः सुप आत्मनः क्यजिति क्यच् क्यचिचेति प्राप्तस्यत्वस्य न छन्दस्यपुत्रस्येति निषेधः। मृगयवो लुब्धकास्तेभ्यो वो नमः ॥ २७ ॥

श्वानः कुक्कुरास्तद्रूपेभ्यो नमः॥ शुनां पतयः श्वपतयः श्वपालकास्तेभ्यो वो युष्मभ्यं नमः। श्वपतयः किरातवेषस्य रुद्रस्यानुचराः॥ नम इषुमद्भ्योधन्वायिभ्य इत्यारभ्य(२२) ये वः शब्दास्ते पूजावाचका वा न युष्मदादेशाः॥ इत्युभयतोनमस्कारमन्त्राः समाप्ताः॥ अथ नमस्कारोपक्रमा नाम मन्त्रा उच्यन्ते॥ भवन्त्युत्पद्यन्ते जन्तवोऽस्मादिति भवस्तस्मै नमः॥ रुतं दुःखं द्रावयति

नमस्तक्षभ्योरथकारेभ्यश्चवोनमोनमः कुलालेभ्यः कर्मारेभ्यश्चवोनमोनमोनिषादेभ्यः पुञ्जिष्ठेभ्यश्चवोनमोनमः

श्वनिभ्योमृगयुभ्यश्चवोनमः ॥ २७ ॥

नमः श्वभ्यः श्वपतिभ्यश्चवोनमोनमोभवायचरुद्रायचनमः शर्वायचपशुपतयेचनमोनीलग्रीवायचशितिकण्ठायच ॥ २८॥

नाशयति रुद्रस्तस्मै नमः॥ शृणाति हिनस्ति पापमिति शर्वस्तस्मै नमः॥ पशून् अज्ञान् पाति रक्षतीति पशुपतिस्तस्मै नमः॥ विषभक्षणेन नीला नीलवर्णा ग्रीवा कण्ठैकदेशो यस्य स नीलग्रीवस्तस्मै नमः॥ शितिः श्वेतः कण्ठो नीलातिरिक्तभागो यस्य शितिकण्ठस्तस्मै नमः। शिती धवलमेचकौ॥ २८ ॥

१——निरु० ६,३१।

कपर्दी जटाजटोऽस्यास्तीति कपर्दी तस्मै नमः॥ पाशुपतादिवेषेण॥ चकाराः सर्वे समुच्चयार्था ज्ञेयाः। व्युप्ताः मुण्डिता केशा यस्य स व्युप्तकेशस्तस्मै नमः। यत्यादिरूपेण मुण्डितत्वम्॥ सहस्रमक्षीणि यस्य सहस्राक्षस्तस्मै इन्द्ररूपाय नमः॥

श्वानुचरा भूतविशेषा गणास्तेभ्यो नमः ॥ गणानां पालका गणपतयस्तेभ्यो वो नमः ॥ व्राता नानाजातीयानां सङ्घास्तेभ्यो नमः ॥ व्रातपालका व्रातपतयस्तेभ्यो वो नमः ॥ गृध्यन्ति वाञ्छन्ति गृत्सा विषयलम्पटाः गृत्सा मेधाविनो वा तेभ्यो नमः ॥ गृत्सपतयस्तत्पालकास्तेभ्यो वो नमः ॥ विकृतं रूपं येषां ते विरूपा नग्नमुण्डजटिलादयस्तेभ्यो नमः ॥ विश्वं सर्वं नानाविधं रूपं येषां ते विश्वरूपास्तुरङ्गवदनहयग्रीवादयस्तेभ्यो वो नमः ॥ २५ ॥

सेनारूपेभ्यो नमः ॥ सेनां नयन्ति ते सेनान्यः सेनापतयस्तद्रूपेभ्यो वो नमः । ह्रस्वश्छान्दसः ॥ रथाः सन्ति येषां ते रथिनः तेभ्यो नमः ॥ नास्ति रथो येषां ते अरथास्तेभ्यो वो नमः ॥ क्षि निवासगत्योः तुदादिः क्षियन्ति निवसन्ति रथेष्विति क्षत्तारः

नमःसेनाभ्यःसेनानिभ्यश्चवोनमोनमोरथिभ्योअरथेभ्यश्चवोनमोनमःक्षत्तृभ्यःसंग्रहीतृभ्यश्चवोनमोनमो

महद्भ्योअर्भकेभ्यश्चवोनमः ॥ २६ ॥

यद्वा क्षिप् प्रेरणे क्षिपन्ति प्रेरयन्ति सारथीनिति क्षत्तारः रथाधिष्ठातारः नप्तृनेष्टृत्वष्टृक्षत्तृपोतृमातृजामातृपितृदुहितृ इत्यौणादिकसूत्रेण तृच्प्रत्ययान्तो निपातः तेभ्यो नमः ॥ संगृह्णन्त्यश्वानिति संग्रहीतारः सारथयः ण्वुल्तृचाविति तृच् । तेभ्यो नमः ॥ महान्तो जातिविद्यादिभिरुत्कृष्टास्तेभ्यो नमः ॥ अर्भकाः प्रमाणादिभिरल्पाः तेभ्यो नमः ॥ २६ ॥

तक्षाणः शिल्पजातयस्तेभ्यो नमः ॥ रथं कुर्वन्तीति रथकाराः सूत्रधारविशेषास्तेभ्यो वो नमः ॥ कुलालाः कुम्भकारास्तेभ्यो नमः ॥ कर्मारा लोहकारास्तेभ्यो वो नमोऽस्तु ॥ निषादा गिरिचरा मांसाशिनो भिल्लास्तेभ्यो नमः ॥ पुञ्जिष्ठाः पक्षिपुञ्जघातकाः पुल्कसादयस्तेभ्यो वो नमः ॥ शुनो नयन्ति ते श्वन्यः श्वकण्ठबद्धरज्जुधारकाः श्वगणिनः नयतेर्डिश्च आर्षः तेभ्यो नमः ॥

लक्ष्ये प्रवेशो वेधः ॥ स्वपन्ति ते स्वपन्तः स्वप्नावस्थामनुभवन्तस्तेभ्यो नमः ॥ जाग्रति ते जाग्रतः जाग्रदवस्थावन्तस्तेभ्यो वो नमः ॥ शेरते ते शयानाः सुषुप्त्यवस्थावन्तस्तेभ्यो नमः ॥ आसते ते आसीना उपविशन्तस्तेभ्यश्च वो नमः ॥ तिष्ठन्ति गतिनिवृत्तास्तेभ्यो नमः ॥ धावन्ति ते धावन्तो वेगवद्गतयस्तेभ्यो नमः ॥ २३ ॥

अथ जातसञ्ज्ञा रुद्रा रुद्रलोके सन्ति ते कथ्यन्ते रुद्राद्वैतप्रतिपादनाय। अत एव[७] हैतानि रुद्राणां जातानीति[१] श्रुतेः। सभारूपेभ्यो

**नमस्सभाभ्यस्सभापतिभ्यश्चवोनमोनमोश्वेभ्योश्वपतिभ्यश्चवोनमोनमआव्याधिनीभ्योविविध्यन्तीभ्यश्चवो**

**नमोनमउगणाभ्यस्तृंहतीभ्यश्चवोनमः ॥ २४ ॥**

**नमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमो**

**नमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमः ॥ २५ ॥**

रुद्रेभ्यो नमः सभादिषु रुद्रदृष्टिः कर्तव्येति तात्पर्यम् ॥ सभायाः पतिभ्यो वो नमः ॥ अश्वास्तुरगास्तेभ्यो नमः ॥ अश्वानां पतिभ्यो वो नमः ॥ आ समन्ताद्विध्यन्तीत्याव्याधिन्यो देव्यः सेना वा ताभ्यो नमः ॥ विशेषेण विध्यन्ति विविध्यन्त्यस्ताभ्यो वो नमः ॥ उत्कृष्टा गणा भृत्यसमूहा यासां ता उगणाः उपसर्गान्त्यलोपः पृषोदरादित्वात् ब्राह्म्याद्या मातरस्ताभ्यो नमः ॥ तृंहन्ति घ्नन्ति तृंहत्यः तृहि हिंसायां हन्तुं समर्था दुर्गाद्यस्ताभ्यो वो नमः ॥ २४ ॥

१——९,१,१,१९ ।

उष्णीषं शिरोवेष्टनमस्यास्तीत्युष्णीषी उष्णीषेण शिरः प्रावृत्य ग्रामेऽपहर्तुं प्रवृत्तः गिरौ चरति गिरिचरः अध्वन्यानां वस्त्राद्यपहर्तुं पर्वतादिविषमस्थानचारी तदुभयरूपाय रुद्राय नमः ॥ कुं भूमिं क्षेत्रगृहादिरूपां लुञ्चन्ति हरन्ति कुलुञ्चाः कुत्सितं लुञ्चन्ति वा तेषां पालकाय नमः ॥ इषवो विद्यन्ते येषां ते इषुमन्तः जनान्भीषयितुं बाणधारिणस्तेभ्यो नमः ॥ धन्वना धनुषा सह यन्ति

नमऽउष्णीषिणेगिरिचरायकुलुञ्चानाम्पतयेनमोनमऽइषुमद्भ्योधन्वायिभ्यश्चवोनमोनमऽआतन्वानेभ्यःप्रति

दधानेभ्यश्चवोनमोनमऽआयच्छद्भ्योस्यद्भ्यश्चवोनमः ॥ २२ ॥

नमोविसृजद्भ्योविध्यद्भ्यश्चवोनमोनमःस्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमःशयानेभ्यऽआसीनेभ्यश्चवोनमोनमस्ति

ष्ठद्भ्योधावद्भ्यश्चवोनमः ॥ २३ ॥

गच्छन्ति धन्वायिनः हे रुद्रा धनुर्धारिभ्यो वो युष्मभ्यं नमः । चकारो मन्त्रभेदज्ञापनार्थः एवमग्रेऽपि । आतन्वन्त्यारोपयन्ति ज्यां धनुषीत्यातन्वानास्तद्रूपेभ्यो नमः । प्रतिदधते सन्दधते बाणं धनुषीति सन्दधानास्तेभ्यो वो युष्मभ्यं नमः ॥ आयच्छन्त्याकर्षन्ति धनूंषि ते आयच्छन्तः तेभ्यो नमः ॥ अस्यन्ति क्षिपन्ति बाणानित्यस्यन्तस्तेभ्यो नमः । असु क्षेपणे दिवादिः ॥ २२ ॥

विसृजन्ति विमुञ्चन्ति बाणानरिष्विति विसृजन्तः तेभ्यो नमः ॥ विध्यन्ति ताडयन्ति शत्रूनिति विध्यन्तस्तेभ्यो वो नमः मुक्तस्य बाणस्य

भावः कृत्स्नायतता तया धावते सर्वलाभप्रापकत्वेन धावते यत्र गच्छति तत्र सर्वेष्टं लाभं प्राप्नोतीत्यर्थः॥ सत्वन्शब्दः प्राणि-वाची सत्वानः सात्विकाः शरणागताः प्राणिनस्तेषां पालकाय नमः॥ सहतेऽरीनभिभवतीति सहमानः नितरां विध्यति हन्ति शत्रूनिति निव्याधी तस्मै नमः॥ आ समन्ताद्विध्यन्तीत्याव्याधिन्यः शूरसेनास्तासां पालकाय नमः॥ निषङ्गः खड्गः सोऽस्यास्तीति निषङ्गी ककुभो महान् तस्मै रुद्राय नमः। ककुभ इति महन्नामसु पठितम्[1]॥ स्तेना गुप्तचोरास्तेषां पालकाय नमः अपहारबुध्या निरन्तरं चरतीति निचेरुः परित आपणवाटिकादौ हरणेच्छया चरतीति परिचरः तस्मै नमः॥ अरण्यानां वनानां पतये नमः॥ रुद्रो लीलया चोरादिरूपं धत्ते यद्वा रुद्रस्य जगदात्मकत्वाच्चोरादयो रुद्रा एव ध्येयाः यद्वा स्तेनादिशरीरे जीवेश्वररूपेण रुद्रो द्विधा तिष्ठति तत्र जीवरूपं स्तेनादिशब्दवाच्यं तदीश्वररुद्ररूपं लक्षयति यथा शाखाग्रं चन्द्रस्य लक्षकम् किं बहुना मुख्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुक्ताः॥ २०॥

वञ्चति प्रतारयति वञ्चन् परि सर्वतो वञ्चति परिवञ्चन् तस्मै नमः। स्वामिन आप्तो भूत्वा व्यवहारे कुत्रचित्तदीयं धनमपह्नुते तद्वञ्चनम् सर्वव्यवहारे धनापह्नवः परिवञ्चनम्॥ गुप्तचोरा द्विविधाः। रात्रौ गृहे खातादिना द्रव्यहर्तारः। स्तेया एवाहर्निशमज्ञाता हर्तारश्च। पूर्वे स्तेनाः उत्तरे स्तायवः तेषां पतये नमः॥ निषङ्गः खड्गो बाणो वा सोऽस्यास्तीति निषङ्गी इषुधिर्बाणधारोऽस्यास्तीतीषुधिमान् तदुभयरूपाय नमः॥ तस्कराः प्रकटचोरास्तेषां पतये नमः॥ सृक इति वज्रनाम[2]। सृकेन वज्रेण सह यन्ति गच्छन्तीत्येवंशीलाः सृकायिणः अतएव शत्रून् हन्तुमिच्छन्ति जिघांसन्तीति जिघांसन्तः हन्तेः सन्नन्ताच्छतृप्रत्ययः तेभ्यो रुद्रेभ्यो नमः॥ क्षेत्रादिषु धान्यापहर्तारो मुष्णन्तस्तेषां पालकाय नमः॥ असयः खड्गाः सन्ति येषां तेऽसिमन्तः नक्तं रात्रौ चरन्ति ते नक्तंचरन्तः खड्गं धृत्वा रात्रौ वीथीनिर्गतप्राणिघातकास्तेभ्यो रुद्रेभ्यो नमः॥ विकृन्तन्ति छिन्दन्ति ते विकृन्ताः छित्वापहरन्तस्तेषां पतये नमः॥ २१॥

१—निघ० ३,३,१९।

२—निघ० २,२०,९।

शाय रुद्राय नमः ॥ पथीनां मार्गाणां पालकाय नमः पथिशब्दो मार्गवाची उत्तरदक्षिणद्वतीया मार्गाः श्रुतावुक्ताः ॥ हरिकेशाय नीलवर्णकेशाय जरारहितायोपवीतिने मङ्गलार्थयज्ञोपवीतधारिणे रुद्राय नमः ॥ पुष्टानां गुणपूर्णानां नराणां पतये स्वामिने नमः ॥ १७ ॥

बभ्लुशः कपिलवर्णः यद्वा बिभर्त्ति रुद्रमिति बभ्लुर्वृषभस्तस्मिन् शेते स बभ्लुशः । विध्यति शत्रूनिति व्याधी तस्मै रुद्राय नमः ॥ अन्नानां पालकाय नमः ॥ भवस्य संसारस्य हेतेः आयुधाय संसारनिवर्त्तकाय रुद्राय नमः ॥ जगतां पालकाय रुद्राय नमः ॥ आततेन विस्तृतेन धनुषा सह एति गच्छति आततायी उद्यतायुधस्तस्मै रुद्राय नमः ॥ क्षेत्राणां देहानां पालकाय नमः ॥ न हन्तीत्यहन्तिस्तस्मै अहन्त्ये सूताय सारथये तद्रूपाय रुद्राय नमः । सारथिनं हन्ति ॥ वनानां पालकाय नमः ॥ १८ ॥

रोहितो लोहितवर्णः स्थपतिर्गृहादिकर्ता विश्वकर्मरूपेण तस्मै नमः ॥ वृक्षाणां पालकाय नमः ॥ भुवं तनोतीति भुवन्ति भूमण्डलविस्तारकः । वरिवो धनं करोतीति वरिवस्कृत् स एव वारिवस्कृतः स्वार्थेऽण् स्थानभोग्यकराय नमः ॥ ओषधीनां ग्राम्यारण्यानां पालकाय नमः ॥ आलोचनकुशलो मन्त्री वणिगेव वाणिजः व्यापारकर्ता तद्रूपाय नमः ॥ वनगता गुल्मवीरुधादयः कक्षास्तेषां पालकाय नमः ॥ उच्चैर्घोषो ध्वनिर्यस्य स उच्चैर्घोषः आक्रन्दयति रोदयतीत्याक्रन्दयन् युद्धे महाशब्दाय रिपुरोदकाय नमः ॥ पत्तीनां सेनाविशेषाणां पदातीनां वा पालकाय नमः । एको रथो गजश्चाश्वास्त्रयः पञ्च पदातयः । एष सेनाविशेषोऽयं पत्तिरित्यभिधीयत इति[1] व्यासोक्तेः ॥ १९ ॥

कृत्स्नं समग्रमायतं विस्तृतम् अर्थाद्धनुः यस्य स कृत्स्नायतस्तस्य भावः कृत्स्नायतता तया आकर्णपूर्णधनुष्ट्वेन धावते युद्धे शीघ्रं गच्छते रुद्राय नमः शीघ्रगतौ सरतेर्धावादेशः तलोपश्छान्दसः यद्वा कृत्स्नः सर्व आयो लाभो यस्य स कृत्स्नायस्तस्य

[1]—म०भा० १,२८९।

हे रुद्र नोऽस्माकं तोके पुत्रे तनये पौत्रे मा रीरिषः मा हिंसीः न आयुषि जीवने मा हिंसीः नो गोषु धेनुषु मा रीरिषः नोऽश्वेषु तुरगेषु मा रीरिषः विभक्तिव्यत्ययो वा तोकं तनयमायुर्गा अश्वान्मा हिंसीः। भाम क्रोधे। भामिनः क्रोधयुतानपि नोऽस्माकं वीरान् भृत्यान्मा वधीः। क उपकार इति चेत् हविष्मन्तः हविर्युक्ताः सदमित् सदैव त्वां वयं हवामहे याग्यामाह्वयाम त्वदेकशरणा वयमिति भावः ॥ १६ ॥

नमो हिरण्यबाहव इत्युत्तरं द्वावि इति[१७] ऋक्पर्यन्तं सर्वाणि यजूंषि। तत्र नमो हिरण्यबाहव इत्यादीनां धनुष्कृद्भ्यश्च वो नम इत्यन्तानां[४६] चत्वारिंशदधिकद्विशतसङ्ख्याकानां यजुषां तावन्तो रुद्रा देवताः नमो वः किरिकेभ्य इत्यादिचतुर्णां[४६] अग्निवायुसूर्या देवताः रुद्राणां प्रधानभूताः॥ छन्दांसि तु। चतुरक्षरं दैवी बृहती पञ्चाक्षरं दैवी पङ्क्तिः षडक्षरं यजुर्गायत्री सप्ताक्षरं यजुरुष्णिक् अष्टाक्षरं यजुरनुष्टुप् नवाक्षरं यजुर्बृहती दशाक्षरं यजुःपङ्क्तिः एकादशाक्षरं यजुस्त्रिष्टुप् द्वादशाक्षरं यजुर्जगती चतुर्दशाक्षरं साम्नीष्णिगेकमेव किरिकेभ्य इति। एतान्येवात्र छन्दांसि॥ तद्रुद्रमध्ये केचनोभयतोनमस्काराः। पदद्वयात्पूर्वमेव पदोच्चारणात्पश्चाच्च नमःपदं येषां ते उभयतोनमस्काराः हिरण्यबाहव इत्यादि श्वपतिभ्यश्च नम[२८] इत्यन्ताः। ततोऽन्यतरतोनमस्कारा अन्यतरत आदावेव यजुर्द्वयस्य नमस्कारो येषां ते नमो भवायेत्यादि[२८] प्रखिदते चेत्यन्ताः[३६] इषुमद्भ्य इत्यादि[२२] श्वपतिभ्यश्च इत्यन्ताः[२८] प्रत्यञ्चः व इति युष्मच्छब्दयोगात्। इषुकृद्भ्य इति[४६] उभयतोनमस्काराः शान्ततमाः अन्यतरतोनमस्कारा घोरतराः॥ तेषां मन्त्राणामर्थ उच्यते एकैकस्यां कण्डिकायामष्टावष्टौ रुद्राः। हिरण्यमाभरणरूपं बाह्वोर्यस्य स हिरण्यबाहुः स चासौ सेनां नयतीति सेनानीः तस्मै रुद्राय नमः॥ दिशां पतये पालकाय रुद्राय नमः॥ हरयो हरितवर्णाः केशाः पर्णरूपा येषां ते हरिकेशास्तेभ्यो वृक्षेभ्यो वृक्षरूपरुद्रेभ्यो नमः॥ पशूनां जीवानां पतये पालकाय रुद्राय नमः॥ शष्पिञ्जराय शष्पं बाल-तृणं तद्वत्पिञ्जराय पीतरक्तवर्णाय टिलोपश्छान्दसः। त्विषिर्दीप्तिरस्यास्ति त्विषिमान् संहितायां त्विषिशब्दस्य दीर्घः। इह-

नमो रोहिताय स्थपतये वृक्षाणाम्पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमो नमो मन्त्रिणे वाणिजाय कक-
क्षाणाम्पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमः ॥ १९ ॥

नमः कृत्स्नायतया धावते सत्त्वनाम्पतये नमो नमः सहमानाय निव्याधिन आव्याधिनीनाम्पतये नमो नमो निषङ्गिणे ककु-
भाय स्तेनानाम्पतये नमो नमो निचेरवे परिचरायारण्यानाम्पतये नमः ॥ २० ॥

नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणाम्पतये नमो नमः सृकायिभ्यो जिघां-
सद्भ्यो मुष्णताम्पतये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः ॥ २१ ॥

मानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः। मानोवीरान्रुद्रभामिनो

वधीर्हविष्मन्तस्सदमित्त्वाहवामहे ॥ १६ ॥

नमोहिरण्यबाहवेसेनान्येदिशाञ्चपतयेनमोनमोवृक्षेभ्योहरिकेशेभ्यःपशूनाम्पतयेनमोनमःशष्पिञ्जरायत्विषीमते

पथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमः ॥ १७ ॥

नमोबभ्लुशायव्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्यैजगताम्पतयेनमोनमोरुद्रायाततायिनेक्षेत्राणाम्पतये

नमोनमःसूतायाहन्त्यैवनानाम्पतयेनमः ॥ १८ ॥

गृह्णाणीत्यर्थः । किं कृत्वा धनुरवतत्य अपज्याकं कृत्वा शल्यानां मुखा मुखानि बाणफलाग्राणि निशीर्य शीर्णानि कृत्वा शॄ हिंसायाम् समासेऽनञ्पूर्वे क्त्वो ल्यप् ऋत इद्धातोः ॥ १३ ॥

हे रुद्र ते तवायुधाय नमोऽस्तु बाणाय नतिरस्तु । कीदृशाय अनातताय धनुष्यनारोपिताय । धृष्णवे धर्षणशीलाय । धृषेः क्नुप्रत्ययः । रिपून् हन्तुं प्रगल्भाय । उतापि च ते तवोभाभ्यां बाहुभ्यां नमः । तव धन्वने धनुषेऽपि नमोऽस्तु तस्यापि विशेषणम् अनातताय अवतारितमौर्वीकाय ॥ १४ ॥

नमस्तआयुधायानाततायधृष्णवे । उभाभ्यामुततेनमोबाहुभ्यान्तवधन्वने ॥ १४ ॥

मानोमहान्तमुतमानोअर्भकम्मानउक्षन्तमुतमानउक्षितम् ।

मानोवधीःपितरम्मोतमातरम्मानःप्रियास्तन्वोरुद्ररीरिषः ॥ १५ ॥

हे रुद्र नोऽस्माकं महान्तं वृद्धं गुरुपितृव्यादिकं मा वधीः मा हिंसीः उतापि नोऽस्माकमर्भकं बालं मा वधीः नोऽस्माकमुक्षन्तं सिञ्चन्तं तरुणं मा वधीः उतापि नोऽस्माकमुक्षितं सिक्तं गर्भस्थं च मा वधीः नः पितरं जनकं मा वधीः उतापि नो मातरं जननीं मा वधीः महान्तमित्यनेन सिक्तयोर्मातापित्रोः पुनरादानमादरार्थम् । नोऽस्माकं प्रियाः वल्लभाः तन्वः तनूः शरीराणि पुत्रपौत्ररूपाणि मा रीरिषः मा हिंसीः रिषतिर्हिंसाकर्मा ॥ १५ ॥

इषवः ता अनेशन् नश्यन्तु णश अदर्शने नशेरत एत्वम् अडि वेत्येत्वम् पुषादित्वाच्च्लेरङ्। अस्य रुद्रस्य निषङ्गधिः निषज्यतइति
निषङ्गः खड्गः स धीयतेऽस्मिन्निति निषङ्गधिः कोशः स आभुः रिक्तः खड्गरहितोऽस्तु। रुद्र अस्मान्प्रति न्यस्तसर्वशस्त्रोऽस्त्वित्यर्थः ॥१०॥
अतिशयेन मीढ्वान्मीढुष्टमः तसौ मत्वर्थे इति भसंज्ञायां वसोः सम्प्रसारणम् षत्वष्टुत्वे हे मीढुष्टम सेक्तृतम ववर्षुक ते तव
हस्ते या धनुः हेतिः धनूरूपमायुधं बभूव अस्ति एकं ते पदं पादपूरणाय। तया धनूरूपया हेत्या विश्वतः सर्वतोऽस्मान्परिभुज
परिपालय भुजेर्विकरणव्यत्यये शपत्ययः। कीदृश्या तया अयक्ष्मया नास्ति यक्ष्मा रोगो यस्यास्तया निरुपद्रवया दृढया अनुपद्रव-
कारिण्या वा ॥ ११ ॥

**यातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः। तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ ११ ॥**

**परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः। अथोयइषुधिस्तवारेअस्मन्निधेहितम् ॥ १२ ॥**

**अवतत्यधनुष्ट्वꣳसहस्राक्षशतेषुधे। निशीर्य्यशल्यानांमुखाशिवोनःसुमनाभव ॥ १३ ॥**

हे रुद्र ते तव धन्वनो हेतिः धनुःसम्बन्धि आयुधं विश्वतः सर्वतोऽस्मान्परिवृणक्तु त्यजतु मा हन्त्वित्यर्थः। वृजी वर्जने रुधादि-
त्वात् श्नम्। अथो अपि च यस्तव इषुधिस्तमस्मत्सकाशात् आरे दूरे निधेहि अस्मत्तो दूरे स्थापय ॥ १२ ॥
सहस्रमक्षीणि यस्य शतमिषुधयो यस्य हे सहस्राक्ष हे शतेषुधे त्वं नोऽस्मान्प्रति शिवः शान्तः सुमनाः शोभनचित्तश्च भव अनु-

ग्रीवा कण्ठो यस्य अस्तमये नीलकण्ठइव लक्ष्यः। विलोहितः विशेषेण रक्तः। स रुद्रो दृष्टः सन्नोऽस्मान्मृडयाति सुखयतु असौ मण्डलवर्त्ती रुद्रएव तपतीति प्रातः सुखं करोत्वित्यर्थः ॥ ७ ॥

नीलग्रीवाय नीलकण्ठाय रुद्राय नमोऽस्तु नमस्कारो भवतु। कीदृशाय सहस्राक्षाय सहस्रमक्षीणि यस्य इन्द्रस्वरूपिणे। मीढुषे मीढ्वान् तस्मै मिहिं सेचने दाश्वान्साह्वान्मीढ्वांश्चेति क्वसन्तो निपातः सेक्त्रे वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः तरुणाय वा। अथो अपि चास्य रुद्रस्य ये सत्वानः प्राणिनो भृत्यास्तेभ्योऽहं नमो नमस्कारमकरं करोमि कृञ् लतौ शप् लङि उत्तमैकवचनम् ॥ ८ ॥

नमोस्तुनीलग्रीवायसहस्राक्षायमीढुषे। अथोयेअस्यसत्वानोहन्तेभ्योकरन्नमः ॥ ८ ॥

प्रमुञ्चधन्वनस्त्वमुभयोरार्त्न्योर्ज्याम्। याश्चतेहस्तइषवःपराताभगवोवप ॥ ९ ॥

विज्यन्धनुःकपर्द्दिनोविशल्योवाणवाँ२॥उत। अनेशन्नस्ययाइषवआभुरस्यनिषङ्गधिः ॥ १० ॥

हे भगवः भगं षड्विधमैश्वर्यमस्यास्तीति भगवान्। मतुवसो रुः सम्बुद्धौ छन्दसीति रुत्वम्। ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेत्युक्तेः। हे भगवन्धन्वनः धनुष उभयोरार्त्न्योः द्वयोः कोट्योः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च दूरीकुरु याश्च ते तव हस्ते इषवः वाणाः ता इषूः परावप पराक्षिप ॥ ९ ॥

कपर्दी जटाजूटोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुः विज्यं मौर्वीरहितमस्तु विगता ज्या यस्य तत्। उतापि वाणवान् वाणा अस्मिन्सन्तीति वाणवान् इषुधिः विशल्यो विफलोऽस्तु वाणाग्रगतो लोहभागः शल्यम् इषुधिर्निरग्रवाणोऽस्तु। अस्य रुद्रस्य या

प्रत्यक्षमाह हे रुद्र सर्वाः यातुधान्यः यातुधानीः राक्षसीः त्वं परासुव पराक्षिप अस्मभ्यो दूरीकुरु । किं कुर्वन् सर्वान् सर्वानहीन् सर्पव्याघ्रादीञ्जम्भयन् विनाशयन् । कीदृशीर्यातुधान्यः अधराचीः अधरेऽधोदेशेऽञ्चन्ति ता अधराच्यः ताः अधोऽधोगमनशीलाः । चो समुच्चये सर्पनाशराक्षसीक्षेपौ सहैव कुर्वित्यर्थः ॥ ५ ॥

आदित्यरूपेणात्र रुद्रः स्तूयते । योऽसौ प्रत्यक्षो रुद्रो रविरूपः च पुनर्ये रुद्रा एनमभितो दिक्षु प्राच्यादिषु श्रिताः किरणरूपेण सहस्रशोऽसङ्ख्याः एषां हेडः क्रोधमस्मदपराधजं वयमेव ईमहे निवारयामः भक्त्या निराकुर्मः । हेड इति क्रोधनाम[1] । अभिसर्व-

अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् । अहीꣳश्चसर्वाञ्जम्भयन्त्सर्वाश्चयातुधान्योधराचीःपरासुव ॥ ५॥

असौयस्ताम्रोअरुणउतबभ्रुःसुमङ्गलः । येचैनꣳरुद्राअभितोदिक्षुश्रितास्सहस्रशोवैषाꣳहेडईमहे ॥ ६ ॥

असौयोवसर्पतिनीलग्रीवोविलोहितः । उतैनङ्गोपाअदृश्रन्नदृश्रन्नुदहार्य्यःसदृष्टोमृडयातिनः ॥ ७ ॥

तस्मोरिति द्वितीया । कीदृशोऽसौ ताम्रः उदयेऽत्यन्तं रक्तः । अरुणः रक्तोऽस्तकाले । उतापि च बभ्रुः पिङ्गलवर्णोऽन्यदा । सुमङ्गलः शोभनानि मङ्गलानि यस्य मङ्गलरूपः रव्युदये सर्वमङ्गलप्रवर्तनात् ॥ ६ ॥

योऽसावादित्यरूपोऽवसर्पति उदयास्तमयौ कुर्वन्निरन्तरं गच्छति । एनं गोपा उत गोपाला अपि वेदोक्तसंस्कारहीनाः अदृश्रन्पश्यन्ति । उदहार्यः उदकं हरन्ति ता उदहार्यः मन्थौदनेत्यादिना उदकस्योदादेशः जलहारिण्यो योषितोऽप्येनमदृश्रन् पश्यन्ति । आगोपालाङ्गनादिप्रसिद्ध इत्यर्थः । दृशेर्लुङि इरितो वेति च्लेरङ् रुगागमश्छान्दसः । कीदृशः नीलग्रीवः विषधारणेन नीला

१—निघ० १,१३,१ ।

तनोति विस्तारयति गिरिशन्तः गिरि वाचि स्थितः शं तनोतीति वा गिरौ मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा गिरौ शेते गिरिशः शमति गच्छति जानातीत्यन्तः सर्वज्ञः शम गतौ भजने शब्दे कर्तरि क्तः गिरिशश्चासावन्तश्च गिरिशन्तस्तत्सम्बुद्धिः शकन्ध्वादित्वात्पररूपम्। कीदृश्या तन्वा शन्तमया सुखतमया ॥ २ ॥

हे गिरिशन्त त्वं यामिषुं बाणं हस्ते बिभर्षि धारयसि किं कर्त्तुम् अस्तवे असु क्षेपणे तुमर्थे तवेप्रत्ययः असितुं शत्रून् क्षेप्तुमित्यर्थः। हे गिरित्र गिरौ कैलाशे स्थितो भूतानि त्रायतइति गिरित्रः तामिषुं शिवां कल्याणकारिणीं कुरु। किञ्च पुरुषं पुत्रपौत्रादिकं जगत् जङ्गममन्यदपि गवाश्वादिकं मा हिंसीः मा वधीः ॥ ३ ॥

यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे। शिवाङ्गिरित्रताङ्कुरुमाहिᳬसीःपुरुषञ्जगत्॥ ३॥

शिवेनवचसात्वागिरिशाच्छावदामसि। यथानस्सर्वमिज्जगदयक्ष्मᳬसुमनाअसत्॥ ४॥

गिरौ कैलाशे शेते गिरिशः हे गिरिश शिवेन वचसा मङ्गलेन स्तुतिरूपेण वचनेन त्वा अच्छ त्वां प्राप्तुं वयं वदामसि वदामः प्रार्थयामहे। अच्छाभेराप्तुमिति शाकपूणिः[1]। संहितायां निपातस्य चेति दीर्घः। इदन्तो मसि। किं वदाम इत्यत आह नोऽस्माकं सर्वमित् सर्वमेव जगत् जङ्गमं नराः पश्वादि यथा येन प्रकारेण अयक्ष्मं नीरोगं सुमनाः शोभनमनस्कं च असत् भवति तथा कुर्विति शेषः। सुमनःशब्दे पुंस्त्वमार्षं जगद्विशेषणत्वात्। असदित्यत्र लेटोऽडाटावित्यट् इलोपः ॥ ४ ॥

1—निरु० ५,२८।

रुद्रो मामध्यवोचत् अधिवक्तु मां सर्वाधिकं वदतु तेनोक्ते मम सर्वाधिक्यं भवत्वेवेत्यर्थः। कीदृशः अधिवक्ता अधिकवदनशीलः प्रथमः सर्वेषां मुख्यः पूज्यत्वात्। दैव्यः देवेभ्यो हितः। भिषक् रोगनाशकः स्मरणेनैव रोगनाशाद्भिषक्त्वम्। एवं परोक्षमुक्त्वा

उत्तरपश्चपश्चिमकोणे याः परिस्थितो जङ्घामात्रादयः पूर्वं निखातास्तासु होमः। तत्र विधिः। जर्तिलैरारण्यतिलैर्मिश्रान् गवेधुकासक्तून्नर्कपत्रेण जुहोति। किं कुर्वन्। अर्ककाष्ठेन सन्ततं चारयन् परिस्थित्सु पातयन् अर्कपत्रं दक्षकरेणादायार्ककाष्ठं वामेनादाय तेन पातनीयम्। सक्तुस्थाने अजादुग्धमिति केचित्। उदङ्मुखो नमस्तइत्यध्यायेन। तत्रानुवाकत्रयान्ते ऽर्भकेभ्यश्च वो नम इत्यत्र[२६] जानुमात्रे परिस्थिति स्वाहाकारो विधेयः। पञ्चानुवाकान्ते सुधन्वने चेत्यत्र[२६] नाभिमात्रे परिस्थिति स्वाहाकारः। नमोऽस्तु रुद्रेभ्य इति[६४] मत्यवरोहमन्त्राः तेभ्य प्राक् मुखमात्रपरिस्थिति स्वाहाकारः। नमोऽस्त्विति कण्डिकात्रयेण प्रतिलोमं होमः येदिवीति[६४] मुखमात्रे। येऽन्तरिक्षमिति[६५] नाभिमात्रे। येपृथिव्यामिति[६६] जानुमात्रे। इति सूत्रार्थः॥ नमस्ते। षोडशऽर्चोनुवाकः एकरुद्रदैवत्यः आद्या गायत्री तिस्रोऽनुष्टुभः तिस्रः पङ्क्तयः सप्तानुष्टुभः द्वे जगत्यौ। अध्यायस्य परमेष्ठिदेवप्रजापतय ऋषयः मानइति द्वयोः[१५-१६]

यातेरुद्रशिवातनूरघोरापापकाशिनी। तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि॥ २॥

कुत्सोऽपि ऋषिः॥ हे रुद्र रुत् दुःखं द्रावयति रुद्रः यद्वा रु गतौ ये गत्यर्थास्ते ज्ञानार्थाः रवणं रुत् ज्ञानं राति ददाति रुद्रः ज्ञानम् भावे क्विप् तुगागमः रुत् ज्ञानप्रदः यद्वा पापिनो नरान्दुःखभोगेन रोदयति रुद्रः। हे रुद्र ते तव मन्यवे क्रोधाय नमः नमो नमस्कारोऽस्तु उतो अपि च ते तवेषवे बाणाय नमः उतापि च ते तव बाहुभ्यां नमः। तव क्रोधबाणहस्ता अस्मद्रिपुष्वेव प्रसरन्तु नास्मास्वित्यर्थः॥ २॥

१——निघ० ३,११,८।

हे रुद्र या ते तवेदृशी तनूः शरीरं हे गिरिशन्त तया तन्वा नोऽस्मानभिचाकशीहि अभिपश्य। चाकशीतिः पश्यतिकर्मा[१]। कीदृशी तनूः शिवा शान्ता मङ्गलरूपा। यतोऽघोरा अविषमा सौम्या अतएवापापकाशिनी पापमसुखं काशयति प्रकाशयति पापकाशिनी न पापकाशिनी अपापकाशिनी या पुण्यफलमेव ददाति न पापफलमित्यर्थः। गिरौ कैलासे स्थितः शं सुखं प्राणिनां

भूते । कीदृशीं त्वां रश्मिवतीं किरणयुतामतएव भास्वतीं शोभमानां । तां काम् या त्वं द्यां द्युलोकमाभासि प्रकाशयसि पृथिवीमाभासि उरु विस्तीर्णमन्तरिक्षं चाभासि । रश्मिपदस्य संहितायां दीर्घः ॥ ६३ ॥ ॥ व्याख्यातम्[1] ॥

का० तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रम्[2] । इष्टकाचितं सपक्षपुच्छमग्निं पश्चादुत्तरपूर्वदक्षिणपश्चिमेषु शतद्वयं द्वयं सोदकस्तिष्ठन् प्रकिरतीत्यर्थः ॥ पञ्चाग्नेयानि यजूंषि । हे अग्ने सहस्रस्येष्टकानां प्रमा प्रमाणं त्वमसि । सहस्रस्य प्रतिमा प्रतिनिधिरसि । सहस्रस्योन्मानं तुलासि । साहस्रः सहस्रार्होऽसि । सहस्रायानन्तफलाय त्वा त्वां प्रोक्षामि ॥ ६५ ॥ श्रीमन्महीधरकृते वेददीपे मनोरमे । अस्मिन् पञ्चदशाध्याये कथिता पञ्चमी चितिः ॥ १५ ॥

**सहस्रस्यप्रमासिसहस्रस्यप्रतिमासिसहस्रस्योन्मासिसाहस्रोसिसहस्रायत्वा ॥ ६५ ॥**

**॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां पञ्चदशोऽध्यायः समाप्तः ॥ १५ ॥**

**नमस्तेरुद्रमन्यवउतोतइषवेनमः । बाहुभ्यामुततेनमः ॥ १ ॥**

पञ्चदशे अध्याये चयनमन्त्रान् समाप्य षोडशे शतरुद्रियाख्यहोममन्त्रा उच्यन्ते ॥ का० शतरुद्रियहोम उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन् सक्तूं जर्तिलमिश्रान् गवेधुकासक्तून्वाजाक्षीरमेके तिष्ठन्नुदङ्मुखस्त्विद्यध्यायेन चानुवाकान्ते स्वाहाकारो जानुमात्रे पश्चान्ते च नाभिमात्रे प्राक् च प्रत्यवरोहेभ्यो मुखमात्रे प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम्[3] ॥ अस्यार्थः । हिरण्यशकलैरग्निप्रोक्षणानन्तरं शतरुद्रियसञ्ज्ञो होमः । तस्याहवनीये प्राप्तावपवादमाह ।

१——१४,१२;१५,५८ । २——१७,१२,२१ । ३——१८,१,१०५ ।

तम्[१] । यद्वास्य शोचिर्ज्वालामनुलक्ष्य वातो वाति । अधेति निपातोऽथार्थः । अथ वातेनाग्नौ ज्वलिते सति ते एतस्याग्नेः व्रजनं व्रजत्यनेति व्रजनं गमनस्थानं कृष्णमस्ति श्यामं भवति कृष्णवर्त्मा हुताशन इत्युक्तेः । स्मेति निपातः पादपूरणः । अस्य त्या ते इति पदमेतस्येति व्याख्यातं परोक्षत्वान्मन्त्रस्य । अथैतस्य व्रजनं कृष्णं भवतीति[२] श्रुतेः । अविर्थान्त्यत्तिकर्मसु पठितम्[३] ॥ ६२ ॥

का० आयोष्ट्वेति स्वयमातृण्णाम्[४] । आयोरिति कण्डिकाद्वयेन विकर्णीदक्षिणां स्वयमातृण्णामुपदधातीत्यर्थः ॥ आयोः परमेष्ठीति

आयोष्ट्वासदनेसादयाम्यवतश्छायायाꣳसमुद्रस्यहृदये। रश्मीवतीम्भास्वतीमायाद्याम्भास्यापृथिवीमोर्वन्तरिक्षम् ।६३

परमेष्ठीत्वासादयतुदिवस्पृष्ठेव्यचस्वतीम्प्रथस्वतीन्दिवंयच्छदिवन्दृꣳहदिवम्माहिꣳसीः। विश्वस्मैप्राणायापानाय

व्यानायोदानायप्रतिष्ठायैचरित्राय। सूर्य्यस्त्वाभिपातुमह्यास्वस्त्याच्छर्दिषाशन्तमेनतया

देवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६४ ॥

द्वे यजुषी स्वयमातृण्णादेवत्ये आद्यं ब्राह्म्युष्णिक् द्वितीयमाकृतिश्छन्दः । हे स्वयमातृण्णे आयोः आदित्यस्य सदने स्थाने तां त्वा त्वां सादयामि स्थापयामि । एति निरन्तरं गच्छतीत्यायुरादित्यः । कीदृशस्यायोः अवतः जगत्पालयितुः दीप्यमानस्य वा । तथा समुद्रस्य समुनत्तीति समुद्रस्तस्य आदित्यो वृष्ट्या जगदार्द्रीकुर्वन् समुद्र उच्यते । किम्भूते सदने छायायामाश्रयभूते हृदये प्रधान-

१—निघ० १,१७,६ । २—८,७,३,१२ । ३—निघ० २,८,३ । ४—१७,१२,२५ ।

का० दक्षिणांᳬसात्प्रत्यगरत्निमात्रादधि लोकम्पृणाः पूर्ववत्[१] । आत्मनो दक्षिणादाग्नेयकोणादपरस्यां दिश्यरत्निमात्रादधि पश्चाल्लोकद्वयं परित्यज्य तृतीयलोकादारभ्य प्रथमचितिवल्लोकम्पृणा उपदधातीति सूत्रार्थः ॥ तिस्रोऽपि द्वादशे व्याख्याता(१२,५४-५६) ॥ ५९ ॥

का० प्रच्छाद्य पुरीषेण विकर्णीस्वयमातृण्णे शर्करे सᳬसृष्टे छिद्रे प्रोथदश्व इत्युत्तरां विकर्णीम्[२] । पञ्चमीं चितिं पुरीषेण पूर्ववत्प्रच्छाद्य शर्करामय्यौ परस्परसंलग्ने सच्छिद्रे विकर्णीस्वयमातृण्णासञ्ज्ञे द्वे इष्टके उपधेये । तयोर्मध्ये उत्तरदिश्यनूकरेखामध्ये प्रोथदश्व इति विकर्णीष्टकामुपदधातीति सूत्रार्थः ॥ वसिष्ठदृष्टाग्नेयी त्रिष्टुप् । मथ्यमानोऽग्निः कथ्यते । यदा यस्मिन्काले

ताऽअस्य सूददोहसः सोमᳬश्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥ ६० ॥

इन्द्रं विश्वाऽअवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमᳬरथीनां वाजानाᳬसत्पतिम्पतिम् ॥ ६१ ॥

प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात् । आदस्य वातोऽअनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥ ६२ ॥

महः महतः संवरणात् संव्रियतेऽस्मिन्नग्निरिति संवरणमरणिकाष्ठं तस्मात् व्यस्थात् वितिष्ठते प्रकाशो भवति तदा प्रोथत् प्रोथयति शब्दायते प्रोथतिः शब्दार्थः इतश्च लोपः परस्मैपदेष्विति तिप इकारलोपः । तत्र दृष्टान्तः अश्वो न । न इवार्थे अश्व इव यथा यवसे अविष्यन् यवसं घासं भक्षयिष्यन्नश्वः प्रोथति । आत् अस्य अनन्तरं वह्निज्वलनशब्दानन्तरं वातो वायुरस्याग्नेरनु वाति अग्निमनुलक्ष्य प्रसरति वाय्वग्न्योः सख्यादिति भावः । कीदृशो वायुः शोचिः शोचयति ज्वलयति शोचिः । अग्नेः सन्दीपनः शोचिरिति ज्वलन्नामसु पठि-

१——१७,१२,२३ । २——१७,१२,२५ ॥

एवं पुनश्चित्युपधानमुक्त्वा पञ्चमचितिशेषभूतेष्टकोपधाने मन्त्रा उच्यन्ते ॥ का० ऋतव्ये तपश्च तपस्यश्चेति[1] । ऋतव्ये द्वे पद्येष्टके उपदधाति ॥ ऋतुदेवत्यं यजुः उत्कृतिच्छन्दः तपो माघः तपस्यः फाल्गुनः शैशिरौ ऋतू शिशिरर्तोरवयवौ । शिष्टं व्याख्यातम्[2] ॥५७॥

पृथङ्मम ज्यैष्ठ्याय सव्रताः । येऽअग्नयः समनसोऽन्तरा द्यावापृथिवीऽइमे । शैशिरावृतूऽअभिकल्पमानाऽइन्द्र-

मिव देवाऽअभिसंविशन्तु तया देवतयाङ्गिरस्वद् ध्रुवे सीदतम् ॥ ५७ ॥

परमेष्ठी त्वा सादयतु दिवस्पृष्ठे ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ।

सूर्यस्तेऽधिपतिस्तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ ५८ ॥

लोकम्पृण च्छिद्रम्पृणाथो सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् ॥ ५९ ॥

का० विश्वज्योतिषं परमेष्ठी त्वेति[3] । यजमानकृतां पद्यां विश्वज्योतिषं तृतीयोपहिताया विश्वज्योतिष उपर्युपदधातीति सूत्रार्थः ॥ सूर्यदेवत्यं यजुः शक्वरीच्छन्दः । परमेष्ठी त्वां दिवः पृष्ठे उपरि सादयतु । सूर्यस्ते तवाधिपतिः पालक इति विशेषः अन्यद्व्याख्या-तम् (१४,१४) ॥ ५८ ॥

१—१७,१२,२१ । २—१३,२५ । ३—१७,१२,२२ ।

इष्टापूर्ते श्रौतस्मार्ते कर्मणी संसृजेथां यजमानेन सह संसृष्टे भवतां त्वत्प्रसादात् अयं च यजमान इष्टापूर्ताभ्यां संसृज्यताम् पुरुषव्यत्ययः। किञ्च हे विश्वेदेवा यूयम् कृतेष्टापूर्तौ निष्पापो यजमानश्च सधस्थे देवैः सहस्थितियोग्ये अस्मिन्नुत्तरस्मिन् सर्वोत्कृष्टे रविलोके द्युलोके सीदत तिष्ठत अधि अधिकं चिरं तिष्ठतेत्यर्थः। द्यौर्वा उत्तरं सधस्थमिति(१२) श्रुतेः। विश्वेदेवैः सालोक्यं यजमानस्य प्रार्थ्यत इति भावः ॥ ५४ ॥

१—२,१४;१२,५२।

उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजेथामयञ्च। अस्मिन्त्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत॥५४

येनवहसिसहस्रंयेनाग्नेसर्ववेदसम्। तेनेमंयज्ञन्नोनयस्वर्देवेषुगन्तवे ॥ ५५ ॥

अयन्तेयोनिर्ऋत्वियोयतोजातोअरोचथाः। तञ्जानन्नग्नआरोहाथानोवर्द्धयारयिम् ॥ ५६ ॥

तपश्चतपस्यश्चशैशिरावृतूअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापओषधयःकल्पन्तामग्नयः

हे अग्ने येन सामर्थ्येन सहस्रं सहस्रदक्षिणाकं यज्ञं त्वं वहसि प्रापयसि येन च सर्ववेदसं सर्वं वेदो धनं दक्षिणा यत्र तं सर्वस्वदक्षिणाकं यज्ञं वहसि तेन सामर्थ्येन नोऽस्माकमिमं यज्ञं देवेषु गन्तवे देवान् प्रति गन्तुं स्वः स्वर्गं नय प्रापय। तुमर्थे गमेः तवेप्रत्ययः। यज्ञे स्वर्गं गतेऽस्माकमपि तत्र गमनं स्यात्। सोऽस्यैष देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति प्रैति(१२) दक्षिणामन्वारभ्य यजमान इति श्रुतेः। अतो यज्ञस्य स्वर्गमनं प्रार्थ्यते ॥५५॥ ॥ इति व्याख्याता:[१] ॥२६॥

अयमग्निर्द्योततां दीप्यतां दिव्यानि धाम धामानि स्थानानि उप प्रयाहि उपप्रयातु च स्वर्गं लोकं गच्छतु पुरुषव्यत्ययः । उपप्रयाहि दिव्यानि धामेत्युपप्रयाहि स्वर्गं लोकमित्येतदिति श्रुतेः[२१] । कीदृशोऽग्निः वीरतमः अतिशयेन वीरः शूरः वयोधाः वयोऽन्नं हविर्लक्षणं दधातीति वयोधाः । सहस्रियः इष्टकानां सहस्रेण सम्मितः सहस्रेण सम्मितो घ इति घप्रत्ययः । अप्रयुच्छन् कर्मस्व-प्रमाद्यन् सरिरस्य मध्ये लोकत्रयान्तर्विभ्राजमानः दीप्यमानः । इमे वै लोकाः सरिरमिति[२१] श्रुतेः ॥ ५२ ॥

मन्त्रदृगृषीनाह । हे ऋषय एनमग्निं यूयं सम्प्रच्यवध्वमग्निं प्रत्यागच्छत उप सम्प्रयात च आगत्य सम्यक् प्राप्नुत । सम्प्रच्यवध्वमुप सम्प्रयातेत्यमूनेतदृषीनाह । सजेनं प्रच्यवध्वमुप चैनꣳ सम्प्रयातेति[२२] श्रुतेः । एवमृषीनुक्त्वाग्निमाह हे अग्ने देवयानान् पथ

अयमग्निर्वीरतमोवयोधास्सहस्रियोद्योततामप्रयुच्छन् । विभ्राजमानस्सरिरस्यमध्यउपप्रयाहिदिव्यानिधाम ॥ ५२ ॥

सम्प्रच्यवध्वमुपसम्प्रयाताग्नेपथोदेवयानान्कृणुध्वम् । पुनःकृण्वानापितरायुवानान्वाताꣳसीत्त्वयितन्तुमेतम् ॥ ५३ ॥

कृणुध्वं कुरु वचनव्यत्ययः । देवा यायन्ति प्राप्यन्ते यैस्ते देवयानास्तान् करणाधिकरणयोश्चेति ल्युट् देवलोकप्राप्तिहेतून्मार्गान्कुर्वित्यर्थः । हे अग्ने यत ऋषय एतं तन्तुं यज्ञं त्वयि अन्वातांसीत् अतानिषुः अनुक्रमेण विस्तारितवन्तः वचनव्यत्ययः । कीदृशा ऋषयः पुनः भूयः पितरा वाङ्मनमे युवाना तरुणौ अयातयामावन्योऽन्यसङ्गतौ कृण्वानाः कुर्वाणाः । स्वादेः कृञ् शानच् । विभक्त्याकारः । संयताभ्यां वाङ्मनसाभ्यामेव यज्ञसाधनात् ते संयते कुर्वाणाः जितेन्द्रिया इत्यर्थः । पुनः कुर्वाणाः पितरा युवानेति वाक्चैव मनश्च पितरा युवानेति[२२] श्रुतेः ॥ ५३ ॥

१—८,६,३,११ ।

हे अग्ने त्वमुद्बुध्यस्व उद्बुद्धो भव सावधानो भव । एनं यजमानं प्रतिजागृहि प्रतिदिनं यजमानं जागरूकं सावधानं कुरु । तत

तस्मिन् तपसि सति नाके स्वर्गलोकनिमित्तमग्निमहं निदधे

स्वीकुर्वाणाः। मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तप इत्युक्तेः। स्तीर्णबर्हिषमाहुर्वदन्ति स्तीर्णमाच्छादितं बर्हिर्येन तम् बर्हिर्यज्ञसाधनोपलक्षकम्

स्थापयामि। मनवः मननप्रधाना विद्वांसो यमग्निं स्तीर्णबर्हिषमाहुर्वदन्ति स्तीर्णमाच्छादितं बर्हिर्येन तम् बर्हिर्यज्ञसाधनोपलक्षकम्

१——८,६,३,१८।

स्थापयामि। मनवः मननप्रधाना विद्वांसो यमग्निं ... विद्वांसस्ते मनव इति[१] श्रुतेः॥ ४९ ॥

यज्ञसाधनसंहितमित्यर्थः। ये विद्वांसस्ते मनव इति[१] श्रुतेः॥ ४९ ॥ सुवर्णादिद्रव्यैश्च सह

हे देवाः दीप्यमाना ऋत्विजः पत्नीभिः कलत्रैः सह पुत्रैरुत पुत्रैरपि सह भ्रातृभिर्वा भ्रातृभिश्च हिरण्यैः सुवर्णादिद्रव्यैश्च सह तमग्निमनुगच्छेम वयमनुसरेम सेवेमेत्यर्थः। कीदृशे वयम् तृतीये भूमिमारभ्य त्रिसङ्ख्यापूरके दिवः पृष्ठे रविमण्डले नाकं दुःखहीनं स्थानमधिरुरुक्षमाणा अधिकं सुखस्थानं स्वीकुर्वन्तः। कीदृशे दिवः पृष्ठे सुकृतस्य लोके शुभकर्मणः फलभूते रोचने दीप्यमाने। एतद्वै तृतीयं पृष्ठꣳ रोचनं दिवो यत्रैष एतत्तपतीति[१९] श्रुतेः॥ ५० ॥

तम्पत्नीभिरनुगच्छेमदेवाःपुत्रैर्भ्रातृभिरुतवाहिरण्यैः। नाकङ्गृभ्णानाःसुकृतस्यलोकेतृतीयेपृष्ठेअधिरोचनेदिवः॥५०

आवाचोमध्यमरुहद्भुरण्युरयमग्निःसत्पतिश्चेकितानः। पृष्ठेपृथिव्यानिहितोदविद्युतदधस्पदङ्कृणुतांयेपृतन्यवः॥ ५१

अयमग्निः वाचो मध्यं चयनस्थानमारुहत् चयनोपर्यारूढः। एतद्ध वाचो मध्यं यत्रैष एतच्चीयत इति[२०] श्रुतेः। सोऽयमग्निः ये पृतन्यवः युद्धेच्छवः पाप्मानस्तानधस्पदं कृणुतां पादयोरधः करोतु पादयोरधोऽधस्पदम् कस्कादित्वात्सः पृतनां सेनां युद्धं वा इच्छन्ति पृतन्यन्ति सुप आत्मनः क्यच् कव्यध्वरेत्यादिना पृतनाया आल्लोपः ततः क्याच्छन्दसीति उप्रत्ययः। अधस्पदं कुरुताꣳ सर्वान् पाप्मन इति[२०] श्रुतेः। कीदृशोऽग्निः भुरण्युः जगद्भर्ता। भुरण्युरिति भर्तेत्येतदिति[२०] श्रुतेः। सत्पतिः सतां पालकः। चेकितानः चेतयमानः। पृथिव्याः पृष्ठे भूम्युपरि निहितः स्थापितः। दविद्युतदत्यन्तं द्योतमानः दाधर्तीत्यादिना यङ्लुकि शत्रन्तो निपातः॥ ५१ ॥

ककुभामच्चैः सहातिष्ठति ॥ यो देवः दानादिगुणयुक्तोऽग्निरूर्ध्वयोन्नतया देवाच्या देवान् प्रत्यञ्चति गच्छति देवाची तया देवान् प्रति गतया कृपा कृप्यतइति कृप् तया कृपमया समर्थया शोचिषा ज्वालया घृतस्य विभ्राष्टिं विभ्रंशं पातमनुवष्टि अन्विच्छति । शोचिःशब्दस्य स्त्रीत्वमार्षम् । किम्भूतस्य घृतस्य आजुह्वानस्य समन्ताद्धूयमानस्य सर्पिषः सर्पतीति सर्पिस्तस्य अग्न्यङ्गेषु प्रसरणशीलस्य । य एतादृशः तमग्निं जानामि । कीदृशं होतारं देवानामाह्वातारम् दास्वन्तं दासृ दाने दातारम् वसुं वासयितारम् सहसो बलस्य सूनुं पुत्रम् बलेन मथ्यमानत्वात् जातवेदसमुत्पन्नप्रज्ञम् न इवार्थे जातवेदसं जातसर्वशास्त्रज्ञानं विप्रं ब्राह्मणमिव स्थितम् ॥ ४७ ॥

अग्नेत्वन्नोअन्तमउतत्राताशिवोभवावरूथ्यः । वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमꣳरयिन्दाः । तन्त्वा

शोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ॥ ४८ ॥

येनऋषयस्तपसासत्रमायन्निन्धानाअग्निꣳस्वराभरन्तः । तस्मिन्नहन्निदधेनाकेअग्निंयमाहुर्मनवस्तीर्णबर्हिषम् ॥ ४९

का० अग्ने त्वमित्यनूकान्तेऽपरे द्विपदाः[1] । अग्ने त्वम् वसुरग्निः तन्त्वा इति तिसृभिरपरेऽनूकान्ते द्विपदेष्टका उपदधातीत्यर्थः ॥ तिस्रो द्विपदा आग्नेय्यः ॥ व्याख्याताः[2] ॥ ४८ ॥

१—१७,१२,१७ । २—३,२५-२६ । ३—१७,१२,१९ ।

का० पुनश्चितिं चोपरि तद्वयेन ऋषय इति प्रत्यृचम्[3] । मध्योपहितस्याष्टेष्टकस्य गार्हपत्यस्योपरि गार्हपत्यवदेव पुनश्चितिमुपदधाति येनेत्यष्टर्चेन प्रत्यृचमित्यर्थः ॥ आग्नेय्योऽष्टौ षट् त्रिष्टुभः द्वे अनुष्टुभौ । ऋषयः मुनयो येन तपसा चित्तैकाग्र्येण सत्रं यज्ञमायन्नागताः यज्ञं कर्तुमुद्यता इत्यर्थः । कीदृशाः अग्निमिन्धानाः दीपयन्तः । तथा स्वः स्वर्गलोकमाभरन्तः आहरन्तः

सारथिर्यथा रथस्य निर्वाहं करोति तथा यज्ञनिर्वाहको भवेत्यर्थः। कीदृशस्य क्रतोः भद्रस्य कल्याणरूपस्य। दक्षस्य समृद्धस्य स्वफलदानसमर्थस्येति वा। साधोः साध्यते निष्पाद्यतइति साधुस्तस्यातिशययुक्तस्येत्यर्थः। ऋतस्य अमोघफलस्य। बृहतः महतो प्रौढस्य ॥ ४५ ॥

हे अग्ने विश्वेभिः विश्वैः सर्वैरनीकैःमुखैः कृत्वा नोऽस्मान् प्रति अर्वाङ् अभिमुखो भव। अवरं समीपदेशमञ्चतीत्यर्वाङ्। अनुग्रहाणेत्यर्थः। कीदृशः एभिरस्मत्पठितैरर्कैः रर्चनीयैर्मन्त्रैः कृत्वा सुमनाः शोभनमनस्कः। प्रसन्नः सन्नस्मत्सम्मुखो भवेत्यर्थः। तत्र दृष्टान्तः स्वः न ज्योतिः स्वःशब्देन सूर्यः न इवार्थे यथा स्वरादित्यरूपं ज्योतिः अर्कैः स्तुतमुदयादारभ्य सर्वप्राणिसम्मुखं भवति। दयचोऽतस्तिङ इति भवेत्यस्य दीर्घः ॥ ४६ ॥

१—१७,१२,१६। २—१५,३८—४०।

एभिर्नोऽअर्कैर्भवानोऽअर्वाङ्स्वर्णज्योतिः। अग्ने विश्वेभिःसुमनाऽअनीकैः ॥ ४६ ॥

अग्निꣳहोतारम्मन्येदास्वन्तंवसुꣳसूनुꣳसहसोजातवेदसंविप्रन्नजातवेदसम्। यऽऊर्ध्वयास्वध्वरोदेवोदेवाच्याकृपा। घृतस्यविभ्राष्टिमनुवष्टिशोचिषाजुह्वानस्यसर्पिषः ॥ ४७ ॥

का० पुरीषवत्याः पूर्वामतिच्छन्दसं प्राचौ पुरीषसहिते भद्रा रातिर्वृत्रतूर्यऽवस्थिराग्निꣳहोतारमिति[१]। अग्नेः पुरीषमसीति पुरीषशब्दवता मन्त्रेणोपहिता पञ्चम्यसपत्ना पुरीषवती (१५,३) तस्याः पूर्वामतिच्छन्दसमिष्टकामुपदधाति भद्रा रातिः वृत्रतूर्ये अवस्थिरेति ककुभा[१] चतुश्चतुरक्षरसहितयाग्निꣳहोतारमित्यृचा। पुरीषवत्यातिच्छन्दइष्टके प्राग्लक्षणे पुरीषयुक्ते च भवतः अनयोरन्तः पुरीषावापः कार्य इति सूत्रार्थः ॥ अतिच्छन्दाः अवसानत्रिकोपेताः। छन्दांसि गायत्र्यादीनि समातिक्रान्तातिच्छन्दाः। चतुःषष्ठ्यक्षरत्वादष्टिः।

श्रोणीषे आश्रयसि सेवसे श्रीञ् पाके क्रत्वादि: अत्राश्रयार्थः। उतो अपि च हे शवसः पते बलस्याधिपते उक्थेषु शास्त्रवत्सु यज्ञेषु नोऽस्मानानुपूर्व्या: उत्कर्षेण पूरय धनैरिति शेषः। स्तोतृभ्य इषमन्नमाहर ॥ ४३ ॥ १——१०,१२,१५।

का० उत्तरे पदपङ्क्तौ रग्ने तमिति१। उत्तरानुक्रान्ते तिस्रः पदपङ्क्तौष्टका अग्ने तमिति तिसृभिरुपदधातीति सूत्रार्थः। तिस्रः पदपङ्क्तयः। यस्याः पञ्चाक्षराश्चत्वारः पादा एकः षडर्णः सा पदपङ्क्तिः। यद्वा त्रयः पञ्चार्णाश्चतुर्थश्चतुरर्णः पञ्चमः षडर्ण इति। पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्कोवा पदपङ्क्तिरित्युक्तेः। तत्राद्यायाश्चतुर्थश्चतुष्कः। हे अग्ने ते तव तत्क्रतुं तावकम्प्रसिद्धं यज्ञं अद्यास्मिन् दिने वयं ऋध्याम समर्धयाम। समृद्धङ्करवामेत्यर्थः। आशिषि लोट्। संहितायां दीर्घः। कैः स्तोमैः

अग्ने तमद्याश्वन्न स्तोमैः क्रतुन्न भद्रꣳ हृदिस्पृशम्। ऋध्यामा त ओहैः॥ ४४ ॥

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः॥ रथीर्ऋतस्य बृहतो बभूथ ॥ ४५ ॥

स्तुतिभिः सामसमूहैः। कीदृशैः स्तोमैः। ओहैः। वहेद्रूपं वहति फलं प्रापयन्तीत्योहाः तैः वहन्ति प्रतिपादयन्ति त्वत्कर्मरूपनामानीति वा। तत्रैको दृष्टान्तः। अश्वं न स्तोमैः। न इवार्थे। यथा स्तोमैः स्तुतिभिरश्वमाश्वमेधिकं विप्राः समर्धयन्ति। द्वितीयो दृष्टान्तः। क्रतुन्न हृदिस्पृशम् हृदि स्पृशति हृदिस्पृक्। हलदन्तादित्यलुक्। अतिप्रियं चिरम्मनसि स्थितं भद्रं कल्याणं क्रतुं सङ्कल्पं यथा समर्धयन्ति। क्रतुर्यज्ञः सङ्कल्पश्चेति दृष्टान्तदार्ष्टान्तिकयोरस्य सम्बन्धः। चिराभिलषितं यथा सन्तः सम्पादयन्तीत्यर्थः ॥ ४४ ॥

अधेत्यर्थेऽधेत्यव्ययम्। निपातस्य चेति संहितायां दीर्घः। हि पादपूरणः। हे अग्ने अथ समनन्तरमेव क्रतोः अस्मद्यज्ञस्य रथीः सारथिरिव बभूथ भव बभूथाततन्थेत्यादिना इडभावः। रथोऽस्यास्तीति रथीः सारथीरथादीरन्नीरचावित्यस्यर्थे ईरच् प्रत्ययः।

नित्यास: नित्या: शाश्वताः सर्वकालभाविनो वाजिनो बलवन्तो अश्वाः सैन्धवाश्वाभिप्रायेण पुनर्वचनम् यं हृष्टास्तं यन्ति । यमुपास्य गवाश्वादिकं लभ्यते इत्यर्थः ताहृश हे अग्ने स्तोतृभ्यः स्तुतिकारिभ्यो यजमानेभ्य इषमन्नमाभर आहर देहि ॥ ४१ ॥

योऽग्निर्वसुर्वासयिता स अग्निः विभक्तिव्यत्ययः, तमग्निं गृणे स्तौमि गृ शब्दे क्यादिः लटि तङुत्तमैकवचनम् क्यादित्वाद्ध्रस्वः यद्वा सोऽग्निः गृणे स्तूयतेऽस्माभिः कर्तृप्रत्ययस्य कर्मत्वं विधेयम् । धेनवो यमग्निं समायन्ति समागच्छन्ति । अर्वन्तोऽश्वा यं समायन्ति कीदृशा अर्वन्तः रघुद्रुवः रलयोरैक्यम् लघु क्षिप्रमरं द्रुतम् लघु शीघ्रं द्रुवन्ति गच्छन्ति लघुद्रुवः द्रु वधगत्योः स्वादिः क्यादिश्च क्विप् । सूरयः विद्वांसो योग्या ऋत्विजो यं समायन्ति यदुपासकं सर्वे भजन्ते इत्यर्थः । कीदृशाः

**सो अ॒ग्निर्यो वसु॑र्गृ॒णे सं यमा॒यन्ति॑ धे॒नवः॑ । सम॑र्वन्तो रघु॒द्रुवः॒ सꣳसु॑जा॒तासः॑ सू॒रय॒ इष॑ꣳ स्तो॒तृभ्य॒ आ भ॑र ॥ ४२ ॥**

**उ॒भे सु॑श्चन्द्र स॒र्पिषो॒ दर्वी॑ श्रीणीष आ॒सनि॑ । उ॒तो न॒ उत्पु॑पूर्या उ॒क्थेषु॑ शवसस्पत॒ इष॑ꣳ स्तो॒तृभ्य॒ आ भ॑र ॥ ४३ ॥**

सूरयः सुजातासः शोभनं जातं जन्म येषां ते सुजातासः सुजाताः आज्जसेरिति असुक् ताहृश हे अग्ने, त्वं स्तोतृभ्य इषमन्नमाभर ॥ ४२ ॥

१—निघ० १,१,२ ।

चन्द्रे सु शकारेणेति संहितायां चन्द्रे परे सुशब्दस्य शागमः हे सुचन्द्र चन्द्रमिति हिरण्यनाम[1] शोभनं चन्द्रः हिरण्यं यस्मात् यद्वा शोभनश्चन्द्रः इव चन्द्रो धनदाता शोभने चन्द्रे धनप्राप्तिर्भवतीति ज्योतिःशास्त्रे उक्तम् । यद्वा शोभनं चन्द्यत्याह्लादयति सुचन्द्रः हे सुचन्द्र आसनि आस्ये मुखे सर्पिषः पानायेति शेषः घृतस्य पानाय उभे दर्वी दर्व्याकारौ हस्तौ

उतापि च प्रशस्तय: कीर्तयो भद्रा सुखदायिन्य: सन्तु ॥ अथ द्वितीया। हे अग्ने येन मनसा समत्सु संग्रामेषु त्वं ससह: अभिभवसि षवून् षह मर्षणे छन्दस्यभिभवे च लङ् द्वित्वाडभावौ छान्दसौ संहितायामभ्यासदीर्घ:। तन्मन: द्रवतूर्ये पापनाशाय भद्रं कल्याणं कुरुष्व तूर्यतिर्वधकर्मा। द्रव: पापम् पाप्मा वै द्रव इति श्रुते:। किञ्च भूरि बहु शर्धतां बलं कुर्वतां सम्बन्धिनी स्थिरा स्थिराणि धनूंषि अवतनुहि अवतारय ज्यारहितानि कुरु। शर्ध इति बलनाम[1] शर्धं बलं कुर्वन्ति शर्धन्ति सुपः क्विप् ततः शतृप्रत्ययः शर्धन्तीति शर्धन्तस्तेषाम्। किञ्च ते तवाभिष्टिभिर्भोगैर्वयं वनेम सम्भजेम भोग्यानि वसूनि वेमहि। वनेमायेनेति पदयो: संहितायां दीर्घ: ॥ ३८ ॥ ३९ ॥ ४० ॥

१—निघ० २,९,७। २—१०,१२,१४।

भद्राउतप्रशस्तयोभद्रम्मन:कृणुष्वद्वतूर्ये। येनासमत्सुसासह: ॥ ३९ ॥

येनासमत्सुसासहोवस्थिरातनुहिभूरिशर्द्धताम्। वनेमातेअभिष्टिभि: ॥ ४० ॥

अग्निन्तम्मन्येयोवसुरस्तंयंयन्तिधेनव:। अस्तमर्वन्तआशवोस्तन्नित्यासोवाजिनइषꣳस्तोतृभ्यआभर ॥ ४१ ॥

का० अनूकान्ते दक्षिणे पङ्क्तीरग्निन्तमिति[2]। दक्षिणेऽनूकान्ते तिस्रः पङ्क्तिसञ्ज्ञा इष्टका अग्निन्तमिति तिसृभिरुपदधातीति सूत्रार्थः॥ तिस्रः पङ्क्तयः यस्य द्वौ पादावष्टकौ द्वौ द्वादशकौ सा पङ्क्तिः। यो वसुः तापपाकप्रकाशैरुपकुर्वन् धनुरूपो वसुरित्युच्यते वसूनां वासयिता वा यः तमग्निं मन्ये जानामि। धेनवो गावो यमग्निमुद्दिश्य तं शाला अस्तं गृहं यन्ति गच्छन्ति दोहकालोऽस्माकं होमार्थं प्राप्त इति। आशवः शीघ्रगामिनोऽर्वन्तोऽश्वा यं दृष्ट्वा अस्तं यजमानगृहं यन्ति गच्छन्ति।

हे राजन्दीप्यमान हे तिग्मजम्भ तिग्मा तीक्ष्णा जम्भा दंष्ट्रा यस्य यद्वा तिग्मइति वज्रनाम[1] हे वज्रदंष्ट्र अग्ने वस्तोः अहःसम्बन्धिन उतापि उषसः उषःकालसम्बन्धिनो रक्षसो रक्षांसि राक्षसान् स त्वं प्रतिदह प्रत्येकं भस्मीकुरु लिङ्गव्यत्ययेन रक्षःशब्दस्य पुंस्त्वम् छन्दसि परेऽपीति प्रत्युपसर्गस्य क्रियापदात्परत्वम्। कीदृशस्त्वम् त्मना उप आत्मनापि स्वभावतोऽपि क्षपः क्षपयतीति क्षपः क्षप क्षेपे चुरादिः पचाद्यच् स्वभावतो रक्षसां क्षपयिता। मन्त्रेष्वाङ्यादेरात्मन इति आत्मन आकारलोपस्तृतीयैकवचने ॥ ३७॥

१—२,२०,१२। २—१७,१८,११।

का० भद्रो न इति ककुभस्ताभ्यः[2]। बृहतीभ्यः पुरस्तात्तिस्रः ककुबिष्टका भद्रो न इत्यृत्र्येणोपदधातीति सूत्रार्थः ॥ प्रगाथः

क्षपोराजन्नुतत्मनाग्नेवस्तोरुतोषसः। सतिग्मजम्भरक्षसोदहप्रति॥ ३७॥

भद्रोनोअग्निराहुतोभद्रारातिःसुभगभद्रोअध्वरः। भद्राउतप्रशस्तयः ॥ ३८ ॥

ककुप्सतोबृहतीभ्यां तिस्रः ककुभः पादावृत्त्या कृताः आवृत्तस्य नार्थान्तरम्। भद्रो नोऽग्निरा० प्रशस्तय इति ककुप् मध्यः पादो द्वादशक आद्यतृतीयावष्टकाविति तल्लक्षणम्। भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टिभिरिति सतोबृहती आद्यतृतीयौ द्वादशकौ द्वितीयतुर्यावष्टकाविति तल्लक्षणम् ॥ तत्र ककुब् व्याख्यायते। यजमानस्त्वित्थमग्निं सम्बोध्य प्रार्थयते। हे सुभग शोभनभग शोभनं भगमैश्वर्यं यस्य। ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेत्युक्तेः। हे षड्विधैश्वर्ययुक्त आहुतः ऋत्विग्भिराहुतोऽग्निर्नोऽस्माकं भद्रः भन्दनीयः कल्याणो भवत्विति शेषः। किञ्च रातिः त्वदीयं दानं भद्रास्तु कल्याणकार्यस्तु। अध्वरः यज्ञो भद्रः श्रेयस्कार्यस्तु।

क्षणं चास्ति तत्राग्निर्गच्छतीत्यर्थः। सुब्रह्मा ब्रह्मपदं सर्वर्त्विगुपलक्षणं शोभनो ब्रह्मा ऋत्विग्यत्र शुभर्त्विग्युक्तः। सुशमी शमीति कर्मनाम[1]। शोभनानि कर्माणि यत्रेति सुशमी शोभनकर्मवान्। अग्निराहुतो रथेऽश्वान्नियुज्य यज्ञे हविर्भोक्तुमाश्वागच्छतीति सर्वार्थः॥ ३२॥ ३३॥ ३४॥

का० अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति[2]। गायत्रीभ्योऽपरास्तिस्र उष्णिक्सञ्ज्ञा इष्टका अग्न इति ऋक्त्रयेणोपदधातीति सूत्रार्थः॥ तिस्र उष्णिहः। हे अग्ने हे सहसो यहो बलस्य पुत्र। सह इति बलनाम[3]। यहुरिति पुत्रनाम[4] मन्थनाज्जायमानत्वाद्बलस्य पुत्रत्वम् सहसूनुरित्युक्तं च। हे जातवेदः उत्पन्नज्ञान अस्मे अस्मभ्यं महि महत् श्रवः धनं धेहि देहि। कीदृशस्त्वं गोमतः

अग्नेवाजस्यगोमतईशानस्सहसोयहो। अस्मेधेहिजातवेदोमहिश्रवः॥ ३५॥

सइधानोवसुष्कविरग्निरीडेन्योगिरा। रेवदस्मभ्यम्पुर्वणीकदीदिहि॥ ३६॥

धेनुयुक्तस्य वाजस्यान्नस्येशानः ईश्वरः अत एव धनं गाश्च देहीत्यर्थः॥ ३५॥

हे पुर्वणीक पुरु बहु अनीकं मुखं यस्य तत्सम्बुद्धिः सर्वदाहकत्वात्। यतो ह्येव कुतश्चाग्नावभ्यादधाति तत एव प्रदहतीति श्रुतेः। हे बहुमुखाग्ने अस्मभ्यमस्मदर्थं रेवत् रयिमत् धनवद्यथा तथा स त्वं दीदिहि दीप्यस्व। दिवेः शपः श्लुः द्वित्वम् तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः लोपो व्योर्वलीति वलोपः। रयिर्विद्यते यत्र कर्मणि रेवत् रयेर्मताविति सम्प्रसारणम्। तथा त्वया हविर्ग्राह्यं यथास्माकं धनाप्तिर्भवतीत्यर्थः। स पूर्वोक्तः कीदृशस्त्वमिधानः दीप्यमानः। वसुः निवासहेतुः कविः क्रान्तदर्शी। अग्निः अग्रे नयतीत्यग्रणीः प्रथमं यज्ञप्रवर्तक इत्यर्थः। गिरा त्रयीलक्षणया वाचा ईडेन्यः ईडितुं योग्यः स्तुत्यः औणादिक एन्यः॥ ३६॥

१—निघ० २,१,२२। २—१७,१२,१३।
३—निघ० २,९,१७। ४—निघ० २,२,११।

दुद्रवत् स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानामिति ॥ तत्र बृहत्यास्तृतीयं पादं द्विरावर्त्य सतोबृहत्याः पूर्वार्धेन सह द्वितीया बृहती कृता सतोबृहत्या द्वितीयपादं द्विरावर्त्य तस्या एवोत्तरार्धेन सह तृतीया बृहती कृता एवं तिस्रो बृहत्यः संहितायां पठिताः तत्रावर्तितपादानामर्थान्तराभावाद् द्वे ऋचौ व्याख्यायेते ॥ एना वः । विभक्तेराकारः । हे ऋत्विग्यजमाना वो युष्माकं सम्बन्धिना एना एनेन नमसान्नेन हविर्लक्षणेनाग्निमहमाहुवे आह्वयामि । वो युष्माकमेनमग्निं नमसाहुव इति वा । कीदृशमग्निमूर्जो नपातमपां पौत्रम् प्रियं यजमानानां प्रीतिहेतुम् चेतिष्ठमतिशयेन चेतयितारम् तुरिष्ठेमेयःस्विति इष्ठनि परे तृचो लोपः । अरतिमलमतिं पर्याप्तमतिं यद्वा रतिरुपरमस्तद्रहितम् सदोद्यमयुतमित्यर्थः । स्वध्वरं शोभना अध्वरा यज्ञा यस्य

विश्वस्यदूतममृतंविश्वस्यदूतममृतम् । सयोजतेअरुषाविश्वभोजसासदुद्रवत्स्वाहुतः ॥ ३३ ॥

सदुद्रवत्स्वाहुतस्सदुद्रवत्स्वाहुतः । सुब्रह्मायज्ञःसुशमीवसूनान्देवꣳराधोजनानाम् ॥ ३४ ॥

तम् । विश्वस्य दूतं सर्वस्य यजमानजनस्य सर्वस्य जगतो वा दूतवत्कार्यकारिणम् सर्वस्य हि गृहे दाहपाकादिकार्यकरत्वात् । अमृतं मरणरहितम् ॥ अथ सतोबृहती व्याख्यायते । स योजते । यमग्निमाह्वयामि सोऽग्निः अरुषा अरुषौ रोषरहितौ साधू विश्वभोजसा विश्वं भुङ्क्ते तौ विश्वभोजसौ सर्वस्य भोक्तारौ द्वितीयाद्विवचनस्थाने आकारः भुजेरसुन् एवंविधावश्वौ रथे योजते युनक्ति विशेषणाभ्यां विशेष्यमश्वपदं रथपदं चाध्याहार्यम् । स एवाग्निः रथारूढः सन् स्वाहुतः शोभनप्रकारेणाहुतः सन् दुद्रवत् द्रवति गच्छति द्रु गतौ णिश्रिद्रुस्रुभ्य इति लुङि चङ् द्वित्वम् अडभावगुणाभावावार्षौ । कुत्र गच्छतीत्यत आह सुब्रह्मेति वसूनामिति वसुशब्दो रुद्रादित्ययोरुपलक्षकः वसूनां रुद्राणामादित्यानां सवनत्रयदेवानां यत्र यज्ञः यत्र च जनानां यजमानानां देवं दीप्यमानं राधो धनं हविर्ल-

सङ्गमयति । यौतेर्विकरणपदव्यत्ययः । अर्य्यः स्वामिवैश्ययोरिति निपातः । इडः इडायाः गोः पृथिव्या वा पदे स्थाने उत्तर-
वेद्यां समिध्यसे कर्मार्थं दीप्यसे स इद्धस्त्वं नोऽस्मभ्यं वसूनि धनानि आभर आहर देहीत्यर्थः हरतेर्भकारः ॥ ३० ॥
चित्रं नानाविधं श्रवो धनं कीर्तिर्वा यस्य स चित्रश्रवाः अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमस्तत्सम्बुद्धिः । हे पुरुप्रिय
पुरूणां बहूनां यजमानानां प्रियः यद्वा पुरवः प्रिया यस्य पुरु बहु हविः प्रियं यस्येति वा हे पुरुप्रिय हे अग्ने विक्षु
जनासु ऋत्विग्यजमानाः त्वां हवन्ते आह्वयन्ति । ह्वेञ् आह्वाने ह्वः सम्प्रसारणमिति अपि सम्प्रसारणं गुणश्च । किं कर्तुम् ।

सꣳसमिद्युवसेवृषन्नग्नेविश्वान्यर्य्यआ । इडस्पदेसमिध्यसेसनोवसून्याभर ॥ ३० ॥

त्वाञ्चित्रश्रवस्तमहवन्तेविक्षुजन्तवः । शोचिष्केशम्पुरुप्रियाग्नेहव्यायवोढवे ॥ ३१ ॥

एनावोअग्निन्नमसोर्जोनपातमाहुवे । प्रियञ्चेतिष्ठमरतिꣳस्वध्वरंविश्वस्यदूतममृतम् ॥ ३२ ॥

हव्याय वोढवे । विभक्तिव्यत्ययः । हव्यं वोढुं प्राप्तुम् । तुमर्थे सेसेनिति तुमर्थे तवेप्रत्ययः ॥ ३१ ॥ १ ———— १०,१२,१० ।
काः अषाढावेलायाः पुरस्ताद्बृहतीरेना व इति[1] । अषाढावेलायाः पुरस्तात्तिस्रो बृहतीष्टका एना व इति तिसृभिरुप-
दधातीत्यर्थः । तिस्रो बृहत्यः प्रगाथः ऋग्द्वयग्रन्थनेन ऋक्त्रयसम्पादनं प्रगाथः तत्र बृहतीसतोबृहतीभ्यां तिस्रो बृहत्यः कृताः
यस्यास्तृतीयो द्वादशाक्षरोऽन्ये त्रयोऽष्टाक्षराः सा बृहती एना वोऽग्निं नमसोर्जो नपातमाहुवे । प्रियं चेतिष्ठमरतिꣳ स्वध्वरं
विश्वस्य दूतममृतमिति ॥ यस्याः प्रथमद्वितीयौ द्वादशाक्षरौ द्वितीयतुर्यावष्टाक्षरौ सा सतोबृहती स योजते अरुषा विश्वभोजसा स

अग्ने पुनर्नष्टं त्वां वने वने शिश्रियाणं नानावनस्पतिषु श्रितमङ्गिरसोऽन्वविन्दन्। नित्यवीप्सयोरिति वनेपदस्य द्वित्वम्। अथ तः शानचि बहुलं छन्दसीति शपः श्लुः द्वित्वं च। यं त्वामङ्गिरसोऽलभन्त स त्वं जायसेऽधुनाप्यरणिभ्य उत्पद्यसे। कीदृशः। महत्सहः महता बहुना सहसा बलेन मथ्यमानः। महत्सहःशब्दाभ्यां तृतीयालोपः। मथ्यमानो जायस इत्यर्थः। हे अङ्गिरः अग्ने अत एव सहसो बलस्य पुत्रं त्वामाहुः वदन्ति मुनयः बलेन मन्थनाज्जायमानत्वाद्बलपुत्रं वदन्तीत्यर्थः ॥ २८ ॥

अपरास्ताभ्योऽनुष्टुभः सखायः समिति[1]। जगतीभ्योऽपरास्तिस्रोऽनुष्टुप्छन्दस्का इष्टकाः प्राङ्मुख उपदधाति सखाय इत्यृक्त्रयेणेति सूत्रार्थः ॥ तिस्रोऽनुष्टुभः। ऋत्विजः प्रति यजमानो ब्रूते हे सखायः ऋत्विजः सम्यञ्चं समीचीनमिषं हविर्लक्षणमन्नं समी-

त्वामग्नेअङ्गिरसोगुहाहितमन्वविन्दञ्छिश्रियाणंवनेवने। सजायसेमथ्यमानस्सहोमहत्त्वामाहुस्सहसस्पुत्रमङ्गिरः॥२८

सखायस्संवस्सम्यञ्चमिषꣳस्तोमञ्चाग्नये। वर्षिष्ठायक्षितीनामूर्जोनप्त्रेसहस्वते॥२९॥

चीनं स्तोमं चाग्नये वः यूयं सम्पादय अन्यर्थं हविः कुरुत त्रिवृत्पञ्चदशादिस्तोमं च वदतेत्यर्थः। व्यत्ययेन प्रथमास्थाने द्वितीयाबहुवचनं कृत्वा वसादेशे व इति। समित्युपसर्गस्यापि चित इति क्रियाशेषोऽध्याहर्तव्यः। कीदृशायाग्नये क्षितीनां मनुष्याणां वर्षिष्ठाय श्रेष्ठाय वृद्धतमाय। प्रियस्थिरेत्यादिना वृद्धस्य वर्षादेश इष्ठनि। क्षियन्ति निवसन्ति भूमाविति क्षितयो नराः कर्तरि क्तिन्। सर्वपूज्यायेत्यर्थः। तथा ऊर्जो जलस्य नप्त्रे पौत्राय। अद्भ्यो वनस्पतयो जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः। तथा सहस्वते बलवते सहो बलमस्यास्तीति ॥ २९ ॥

[1] — १७,१२,९।

हे वृषन् वर्षितः सेक्तः हे अग्ने अर्यः स्वामी त्वं विश्वानि सर्वाणि फलानि आ समन्तात्संयुवसे संयोषि यजमानेन

दित्यम् सन्ध्यावन्दनसूर्योपस्थानादिषु विप्रयुक्ताः उरवी बह्वी व्यचाः स्तुतयो गतयो वा यस्येति तमिवेत्युपमेचा। स्तोमः सूर्येणोपमीयते। गवियुधिभ्यां स्थिर इति षत्वम् ॥ २५ ॥

का० जगतीस्र पश्चादयमिहेति[1]। तिसृभिः पश्चाद्रेतःसिग्वेलायां तिस्रो जगतीसञ्ज्ञेष्टका दक्षिणामुख उपदधातीति सूत्रार्थः॥ तिस्रो जगत्य आग्नेय्यः। आद्या व्याख्याता(३,१५) ॥ २६ ॥

योऽग्निर्भरतेभ्यः ऋत्विग्भ्यः सकाशादजनिष्ट जातः तैर्मथितत्वात्तेभ्यो जात इत्युच्यते। भरता इति ऋत्विङ्नामसु पठितम्[2]। किमर्थं जातः। नव्यसे नवीयसे नवतराय सुविताय सुताय प्रसूताय कर्मणे यागाय सूतेरिडागम आर्षः अभिनवं नवीयस्तस्मै ईलोप

अ॒यमि॒ह प्र॑थ॒मो धा॑यि धा॒तृभि॒र्होता॒ यजि॑ष्ठो अध्व॒रेष्वीड्यः॑। यमप्न॑वानो॒ भृग॑वो विरुरु॒चुर्वने॑षु चि॒त्रं वि॒भ्वं॑ वि॒शेवि॑शे॥२६॥

जन॑स्य गो॒पा अ॑जनिष्ट॒ जागृ॑विर॒ग्निः सु॒दक्षः॑ सुवि॒ताय॒ नव्य॑से। घृ॒तप्र॑तीको बृह॒ता दि॑वि॒स्पृशा॑ द्यु॒मद्वि भा॑ति भर॒तेभ्यः॒ शुचिः॑ ॥ २७ ॥

आर्षः। सोऽग्निर्दिविस्पृशा द्युलोकस्पर्शिना बृहता ज्वालासमूहेन द्युमत्कान्तिमद्यथा तथा विभाति विविधं दीप्यते। कीदृशोऽग्निः। जनस्य यजमानस्य गोपाः। गोपायति रक्षतीति गोपाः क्विप् लोपो व्योर्वलि यलोपः। जागृविः जागरणशीलः कर्मणि सावधानः। सुदक्षः शोभनो दक्ष उत्साहो यस्य अतिकुशलो वा। घृतप्रतीकः घृतं प्रतीके मुखे यस्य। शुचिः शुद्धः बहूनि हवींषि भक्षयन्नपि उच्छिष्टो न स्यात् शोधको वा ॥२७॥

१—१७,१२,८। २—निघ० ३,१८,१।

हे अग्ने अङ्गिरसः अङ्गिरोवंशोद्भवा ऋषयस्त्वामन्वविन्दन् लेभिरे अन्विष्य प्रापुरित्यर्थः। किम्भूतं त्वां। गुहा गुहायां निगूढे प्रदेशे हितं स्थितमप्सु प्रविष्टमित्यर्थः। अग्निर्देवेभ्य उदक्रामत्सोऽप आविशदित्यादिश्रुतेः। सुपां सुलुगिति गुहाशब्दात्सप्तमीलोपः। हे

अच्छाभेराप्तुमिति[1] शाकपूणिः। दृष्टान्तमाह। यह्व इति महन्नाम[2]। यह्वाः महान्तो जातपक्षाः पक्षिणो वयां वृक्षशाखां प्रोज्जिहानाः प्रोद्गच्छन्तो नाकमाकाशं प्रति प्रसरन्ति तद्वत्॥ ऋचोऽर्थान्तरं वा। जनानामृत्विजां सम्बन्धिन्या समिधाग्निरबोधि प्रतिबोधितः प्रज्वलितः आयतीमुषसं प्रातःकालं प्रति धेनुं यथा प्रतिबोधयन्ति उत्थापयन्ति। तस्य भानवः प्रोज्जिहाना नाकमभि प्रसिस्रते। दृष्टान्तः। वयां पक्षिणां मध्ये यह्वाः महान्तः पक्षिणो यथा प्रोद्गच्छन्तः प्रसरन्ति। विः पक्षी तस्यामि छान्दसे गुणे वयामिति रूपम्। एकः प्रशब्दः उज्जिहाना इत्यत्र सम्बध्यते द्वितीयः सिस्रते इत्यत्र। सृ गतौ ह्लादिः लट्। ओहाङ् गतौ शानच् जिहानाः। उषासमिति संहितायां दीर्घः॥ २४॥

अबो॑ध्य॒ग्निः स॒मिधा॒ जना॑नां॒ प्रति॑ धे॒नुमि॑वाय॒तीमु॒षास॑म्। य॒ह्वा इ॑व॒ प्र व॒यामु॒ज्जिहा॑नाः॒ प्र भा॒नवः॑ सिस्रते॒ नाक॒मच्छ॑ ॥२४॥

अवो॑चाम क॒वये॒ मेध्या॑य॒ वचो॑ व॒न्दारु॑ वृष॒भाय॒ वृष्णे॑। गवि॑ष्ठिरो॒ नम॑सा॒ स्तोम॑म॒ग्नौ दि॒वी॑व रु॒क्ममु॑रु॒व्यञ्च॑मश्रेत् ॥ २५ ॥

उद्गातारो वदन्ति। वयं कवये क्रान्तदर्शिनेऽग्नये वचोऽवोचाम स्तुतिरूपं वाक्यमुक्तवन्तः। कीदृशाय कवये। मेध्याय मेधे यज्ञे योग्याय। वृषभाय श्रेष्ठाय कामानां वर्षयित्रे। वृष्णे सेक्त्रे यूने परिणामरहिताय। कीदृशं वचः वन्दारु वन्दनशीलं स्तुतितत्परम्। शृवन्द्योरारुः। इदानीं गविष्ठिरः गवि वाचि स्थिरोऽप्रच्याव्यो होता नमसान्नेन युतं स्तोमं स्तुतिमग्नौ आहवनीये अश्रेत्। अन्तर्भूतण्यर्थः श्रयतिः लङ्र्थे छन्दसि लुङ्लङ्लिट इति वचनात् बहुलं छन्दसीति शपो लुक् गुणः। होताग्नौ स्तोममापयिष्यति आसञ्जयिष्यति याज्यानुवाक्याभिरन्नमग्निसम्बद्धं करिष्यतीत्यर्थः। तत्र दृष्टान्तः। दिवीव रुक्ममुरुव्यञ्चं दिवि द्युलोके रुक्मं रोचमानमा-

१——निरु० ५,२८।    २——निघ० ३,३,१२।

उपदधाति तासां मध्यमा पद्यानुके तामभितो द्वे अर्धपद्ये अत्र पूर्वदिश्यनूकान्ते तिस्रो गायत्रीरग्निर्मूर्धेति प्रत्यृचम् एवं वक्ष्यमाणा अपीति सूत्रार्थः ॥ तिस्र ऋचोऽग्निदेवत्या गायत्राः । आद्या व्याख्याता(३,१२) ॥२०॥

अयमग्निरीदृशस्तं स्तुम इति शेषः । कीदृशः सहस्रं सङ्ख्यास्यास्तीति सहस्री तस्य । शतिनः शतसङ्ख्यावतो वाजस्यान्नस्य पतिः स्वामी अनेकान्नप्रद इत्यर्थः । तथा रयीणां धनानां मूर्धा शिरोवदुत्तमः अग्निर्हि सर्वधनानां प्रधानधनं दृष्टादृष्टसाधनत्वात् कविः क्रान्तदर्शनः ॥ २१ ॥ ॥ व्याख्यातैकादशे द्वात्रिंशत्तमकण्डिकायाम् ॥ २२ ॥

अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्द्धा कवी रयीणाम् ॥ २१ ॥

त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ॥ मूर्ध्नो विश्वस्य वाघतः ॥ २२ ॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्द्धानन्दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥२३॥

का० पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्येति[1] । पूर्वदिशि रेतःसिग्वेलायां त्रिष्टुप्सञ्ज्ञा इष्टका उपदधाति तृचेन तिस्रः त्रिष्टुप्छन्दस्काभिर्ऋग्भिरुपधेया इष्टकास्त्रिष्टुभः एवमग्रेऽपि । प्रथमा व्याख्याता त्रयोदशेऽध्याये(१३,१५) ॥ २३ ॥ १—१७,१२,७ ।

जनानां ज्ञानश्रद्धाद्विजतर्पणसत्यादिसम्पन्नानामग्निहोत्रिणां समिधा समिन्धनेनाग्निः प्रत्यबोधि प्रतिबुध्यते कर्मणि स्वमधिकारं जानातीत्यर्थः । दीपजनेत्यादिना लुङि कर्तरि चिण् । तत्र दृष्टान्तः । आयतीमागच्छन्तीं धेनुं यथा वत्सः प्रतिबुध्यते यथा चोषसमागच्छन्तीं प्रति मनुष्याः प्रतिबुध्यन्ते ॥ दीप्तस्य तस्याग्नेर्भानवो रश्मयो नाकमच्छ स्वर्गमभितः प्रसिस्रते प्रसरन्ति ।

श्रुतेः ॥ विश्वाची घृताची चाप्सरसौ ते च दिग्योपदिशे । विश्वं सर्वं प्रत्यञ्चतीति विश्वाची सर्वसाधारणत्वात् । घृतमञ्चति भुङ्क्ते घृताची घृतं ह्यप्सरसामन्नम् । घृतस्य स्तोकं सकृदक्क आश्नामीत्युर्वशीवचनात् ॥ आपोऽपां समूहो हेतिः तस्य समूह इत्यण् वातः वायुः प्रहेतिः ॥ तेभ्य इत्याद्युक्तम् ॥ १८ ॥

अथ मध्ये । उपरि ऊर्द्ध्वदेशेऽयमर्वाग्वसुः पर्जन्यः उपर्युपरिष्टादिति निपात ऊर्द्ध्वप्रदेश इत्यर्थः अर्वागधोमुखं यद्वसु धनं जलरूपं यस्मात्सोऽर्वाग्वसुः अधो जलं प्रजाभ्यो ददातीत्यर्थः । तथा च श्रुतिः पर्जन्यो वा उपरि तद्यत्तमाहोपरीत्युपरि हि पर्जन्योऽथ यद-

**अयमुपर्य्यर्वाग्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानीग्रामण्यौउर्वशीचपूर्वचित्तिश्चाप्सरसाववस्फूर्जन्हेति**

**र्विद्युत्प्रहेतिस्तेभ्योनमोअस्तुतेनोवन्तुतेनोम्मृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः॥ १९ ॥**

**अग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याअयम् ॥ अपाᳬरेताᳬसिजिन्वति ॥ २० ॥**

र्वाग्वसुरित्याहातो ह्यर्वाग्वसु वृष्टिरन्नं प्रजाभ्यः प्रदीयतइति[१] ॥ तस्य पर्जन्यस्य सेनां जयतीति सेनजित् शोभना सेना यस्येति सुषेणः पूर्वपदादिति षत्वम् ततो णत्वम् तौ सेनानीग्रामण्यौ तौ हैमन्तिकावृतू हैमन्तिकौ तावृतू इति[२०] श्रुतेः ॥ उरुः पृथुः कामो वशो यस्याः सोर्वशी । रूपातिशयात् पूर्वमेव पुंसां चित्तमुपैतीति पूर्वचित्तिः । एते दिगुपदिग्रूपे अप्सरसौ ॥ स्फूर्जा वज्रनिर्घोषे अवस्फूर्जतीत्यवस्फूर्जन् भयहेतुशब्दं कुर्वन् हेतिः । विद्युच्चपला प्रहेतिः ॥ शिष्टं व्याख्यातम् ॥ १९ ॥ १—८,९,१,२० । २—१७,१२,५ ।

का० छन्दस्यास्तिस्रोऽनूकान्तेषु पुरस्ताद्गायत्रीरग्निर्मूर्धेति प्रत्यृचम्[२] । वक्ष्यमाणा गायत्र्याद्याश्छन्दस्या एकैकस्मिन् स्थाने तिस्र

उदेत्यथेदꣳ सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्तीति(१८) श्रुतेः ॥ तस्यादित्यस्य रथे स्थितः प्रोत इव स्थिरो रथप्रोतः सेनानीः । असमोऽन्यै रथैरतुल्यो रथो यस्य सोऽसमरथो नाम ग्रामणीः तौ च वार्षिकावृतू । वार्षिकौ तावृतू इति श्रुतेः ॥ प्रम्लोचति नरं प्रत्यात्मानं दर्शयतीति प्रम्लोचन्ती ॥ अनु वारं वारं म्लोचन्तीत्यनुम्लोचन्तीत्यप्सरसौ ॥ व्याघ्राः प्रसिद्धाः यस्य हेतिः सर्पाः प्रहेतिर्यस्य तद्रूपाणि ॥ उक्तमन्यत् ॥ १७ ॥

**अयम्पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिः सर्पाः**

**प्रहेतिस्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥१७॥**

**अयमुत्तरात्संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः**

**प्रहेतिस्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥१८॥**

अथोत्तरतः । उत्तरस्मिन्नित्युत्तरात् उत्तराधरेत्यादिना आत्प्रत्ययः अयमुत्तरतः संयद्वसुः यज्ञः सम्यक् यन्ति गच्छन्ति वसुने धनाय यं प्रति जनाः स संयद्वसुः यज्ञं गतेभ्यो हि दानमावश्यकम् यज्ञस्योत्तरोपचारत्वादुत्तरात् । तथा च श्रुतिः । यज्ञो वा उत्तरात्त द्यत्तमाहोत्तरादित्युत्तरतउपचारो हि यज्ञोऽथ यत्संयद्वसुरित्याह यज्ञꣳ हि संयन्तीतीदं वस्विति(१९) ॥ तीक्ष्णोऽन्तरिक्षे क्षिपति पक्षाविति तार्क्ष्यः अरिष्टानुपहिंसिता नेमिरायुधं यस्य सोऽरिष्टनेमिः एतन्नामकौ सेनानीग्रामण्यौ तौ शारदावृतू । शारदौ तावृतू इति

चाप्सरसौ ये च हेतिप्रहेती तेभ्यः सर्वेभ्यः सर्वदा नमो नमस्कारोऽस्तु ते सर्वे नोऽस्मान् मृडयन्तु सुखयन्तु ते नोऽस्मानवन्तु रक्षन्तु यं नरं वयं द्विष्मः यस्यानिष्टं चिन्तयामः यश्च नरो नोऽस्मान् द्वेष्टि अस्मास्वप्रीतिं करोति तं नरमेषां पूर्वोक्तानां जम्भे दंष्ट्राकराले मुखे वयं दध्मः प्रक्षिपामः जभि नाशने जम्भयति नाशयति जम्भा दंष्ट्रा यस्मिन्नस्तीति जम्भं मुखम् ॥ १५ ॥

अथ दक्षिणतः। दक्षिणस्यां दिशीति दक्षिणा दक्षिणादाजिति सप्तम्यन्ताद्दक्षिणशब्दादाच् प्रत्ययः दक्षिणा दक्षिणतः अयं विश्वकर्मा विश्वं सर्वं कर्म यस्य विश्वं करोतीति वा विश्वकर्मा वायुः। अयं वै वायुर्विश्वकर्मा योऽयं पवत एष हीदꣳ सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वातीति(१७) श्रुतेः॥ तस्य वायोः रथस्वनः सेनानीः रथे स्थितः स्वनति शूरशब्दं करोतीति

अयन्दक्षिणाविश्वकर्म्मातस्यरथस्वनश्चरथेचित्रश्चसेनानीग्रामण्यौमेनकाचसहजन्याचाप्सरसौयातु

धानाहेतीरक्षाꣳसिप्रहेतिस्तेभ्योनमोअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः॥१६॥

रथस्वनः। रथे स्थितः चित्र आश्चर्यकारी रथेचित्रो ग्रामणीः हलदन्तादिति सप्तम्या अलुक् तौ ग्रैष्मावृतू ग्रैष्मौ तावृतू इति श्रुतेः॥ मानयन्त्येनां मेनका। जनैः सर्वैः सह स्थिता सहजन्या। अप्सरसौ हि सर्वसाधारणएते अप्सरसौ॥ यातुधाना रक्षसामवान्तरजातिभेदो बोध्यः हेतिप्रहेती अप्यायुधविशेषौ। क्रूरा यातुधानास्तीक्ष्णहेतिरूपाः अतिक्रूराणि रक्षांसि तितीक्ष्णप्रहेतिस्वरूपाणि॥ हे दृष्टके यस्य वायोरिदं सर्वं त्वं तद्रूपासि॥ व्याख्यातमन्यत्॥ १६॥

अथ पश्चात्। अवरस्मिन् प्रदेशे इत्यर्थे पश्चादिति सूत्रेण निपातः। पश्चात्पश्चिमदेशेऽयं विश्वव्यचाः आदित्यः विश्वं सर्वमुदयेन विचति प्रकाशयति व्याप्नोति वा विश्वव्यचाः अस्तन् पश्चिमायां स्पष्टं दृश्यत इति पश्चात्। असौ वा आदित्यो विश्वव्यचा। यदा ह्येवैष

पञ्च यजूंषि लिङ्गोक्तदेवत्यानि। योऽयं पुरोऽग्निः इष्टकारूपः पुरस्तादुपधीयमानत्वात् पुरोऽग्निः। अग्निर्वै पुरस्तद्यत्तमाह पुर इति प्राञ्च ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्तीति[1] श्रुतेः। कीदृशः। हरिकेशः हरयो हरितवर्णाः कनकवर्णाः केशाः केशसमा ज्वाला यस्य हरिः पिङ्गे हरिद्वर्णे इत्यभिधानात्। सूर्यरश्मिः सूर्यस्येव रश्मयः किरणा यस्य। सूर्यस्येव ह्यग्ने रश्मय इति श्रुतेः॥ तस्याग्ने रथगृत्सः रथौजाः च सेनानीग्रामण्यौ रथे गृत्सो मेधावी कुशलो रथगृत्सः गृत्सो मेधावी गृणातेः स्तुतिकर्मण इति[2] यास्कोक्तेः। सेनां नयतीति सेनानीः। चौ समुच्चयार्थौ। रथे ओजस्तेजो यस्य स रथौजाः रथयुद्धकुशल इत्यर्थः। स ग्रामं नयतीति ग्रामणीः। एतन्नामकौ सेनानीग्रामण्यौ परिचारकौ तौ च वासन्तिकावृतू इत्यर्थः। वासन्तिकौ तावृतू इति श्रुतेः॥ तथा पुञ्जिकस्थला क्रतुस्थला चेत्यप्सरसो दिगुपदिग्रूपे यस्य

**अयम्पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥१५॥**

परिचारिके। पुञ्जिकस्य पुञ्जीकृतस्य रूपलावण्यसौभाग्यादिगुणसमूहस्य स्थलाधारभूता पुञ्जिकस्थला। क्रतूनां सङ्कल्पानां रूपादिज्ञानानां स्थला स्थानभूता क्रतुस्थला। पुञ्जिकस्य क्रतूनां च स्थलं यस्यामिति बहुव्रीहिर्वा। पुञ्जिकस्थला च क्रतुस्थला चाप्सरसाविति दिक् चोपदिशा चेति ह स्माह मातिर्थ्यिरिति श्रुतेः॥ दङ्क्ष्णवो दंशनशीलाः पशवः व्याघ्रादयो हेतिरायुधं वज्रः॥ पौरुषेयः पुरुषसम्बन्धी वधः हननं वधः प्रहेतिः प्रकृष्टमायुधम् यस्मिन्नस्त्रे मुक्ते रावणसेनेव परस्परं रिपवो घ्नन्ति स पौरुषेयो वधः। यदन्योऽन्यं घ्नन्ति स पौरुषेयो वधः प्रहेतिरिति श्रुतेः॥ यस्याग्नेरियं सामग्री हे इष्टके[3] त्वं तदग्निस्वरूपासीत्यर्थः। योऽयमग्निर्यौ च तस्य सेनानीग्रामण्यौ ये

१ —— ८,६,१,१६। २ —— निरु० ९,५। ३ —— 'अग्ने' — इति क० पु० पाठः।

अथ मध्ये। हे इष्टके अधिकं पालयित्री बृहती प्रौढ़ोर्ध्वा दिगसि। त्रिणवत्रयस्त्रिंशौ स्तोमौ त्वां पृथिव्यां श्रयताम्। वैश्वदेवाग्निमारुते शस्त्रे अचलनाय स्तभ्नीताम्। शाक्वररैवते सामनी चान्तरिक्षे स्थित्यै त्वां स्तभ्नीताम्। द्विवचने विशेषः। तत्सवितुर्वृणीमहे इत्यादि[१] वैश्वदेवं शस्त्रम्। वैश्वानराय पृथुपाजसे इत्यादिकमाग्निमारुतं शस्त्रम्[२] उक्तमन्यत् ॥ १४ ॥

मुक्थमव्यथायै स्तभ्नातु वैराजꣳ साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च सादयन्तु ॥ १३ ॥

अधिपत्न्यसि बृहती दिग्विश्वे ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्त्ता त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नीताꣳ शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च सादयन्तु ॥ १४ ॥

का० पुरीषमोप्योपर्ययं पुर इति पञ्चचूडाः प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम्[३] ॥ नाकसत्सु तूष्णीं चात्वालमृदं प्रक्षिप्य नाकसदामुपरि सर्वदिक्षु यथालिङ्गं लिङ्गानतिक्रमेण यल्लिङ्गको मन्त्रस्तद्दिशि तन्मन्त्रेण पञ्चचूडासञ्ज्ञकाः पञ्चेष्टका उपदधातीति सूत्रार्थः ॥

१—ऋ० वे० ५,६,१०,१ । २—ऋ० वे० ३,१,१३,१ । ३—१७,५०,२-३ ।

अथ दक्षिणतः। चतसृषु कण्डिकासु देवाः हेतीनां प्रतिधर्तारः स्तोमाः उक्थानि सामानि चान्यानि समानमन्यत्। वायुरग्रेगा इति[1] प्रउगं शस्त्रम्॥ ११ ॥

१——२७ अ० ३१ क०।

मुक्थमव्यथायै स्तभ्नातु बृहत्साम प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च सादयन्तु ॥ ११ ॥

सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयो वरुणो हेतीनाम्प्रतिधर्त्ता सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तभ्नातु वैरूपꣳ साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च सादयन्तु ॥ १२ ॥

स्वराडस्युदीची दिङ्मरुतस्ते देवा अधिपतयः सोमो हेतीनाम्प्रतिधर्त्तैकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु निष्केवल्य

अथ पश्चात्। सम्यग्राजते सम्राट्। आ त्वा रथं यथोतये इति[2] मरुत्वतीयं शस्त्रम्॥ १२ ॥

२——ऋ० वे० ८,७,६,१।

अथोत्तरतः। स्वं नैव राजते स्वराट्। अभि त्वा शूर नोनुम इत्यादिकं[3] निष्केवल्यं शस्त्रम्॥ १३ ॥

३——ऋ० वे० ७,२,११,२२।

ऽधिकं पालयितार:। अग्निर्हेतीनामुपद्रवकारिणीनां परायुधानां प्रतिधर्ता निराकर्ता। किञ्च त्रिवृत् स्तोमः त्वा त्वां पृथिव्यां श्रयतु स्थापयतु[१]। आज्यमाज्यनामकमुक्थं शस्त्रं प्र वो देवायाग्नये इत्यादिकम्[२] अव्यथायै न व्यथा अव्यथा तस्यै चलनाभावाय त्वां स्तभ्नातु दृढीकरोतु। रथन्तरं साम अन्तरिक्षे लोके प्रतिष्ठित्यै प्रतिष्ठानाय त्वां स्तभ्नातु। प्रथमजाः प्रथमोत्पन्ना ऋषयः प्राणा देवेषु द्युलोकमध्ये दिवः आकाशस्य मात्रया परिमाणेन वरिम्णा उरुत्वेन त्वां प्रथन्तु प्रथयन्तु। छन्दस्युभयथेति शप आर्धधातुकत्वा-त्सिलोपः। प्राणा वा ऋषयः प्रथमजा इति[३] श्रुतेः आकाशस्य यादृशं विशालत्वं तादृग्विशालां त्वां कुर्वन्त्वित्यर्थः। विधर्ता इष्टकानिष्पा-

**व्यथायै स्तभ्नातु रथन्तरꣳ साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता**

**चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च सादयन्तु ॥ १० ॥**

**विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनाम्प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु प्रउग**

दयिता च पुनरयमधिपतिरिष्टकापालकश्च त्वां प्रथयताम्, यद्वा विधर्ता विशेषेण धारयिता वागभिमानी देवः अयमधिपतिः प्रधानभूतो देवो मनोऽभिमानी तौ च त्वां प्रथयताम्। विधर्ता चायमधिपतिश्चेति वाक् च तौ मनश्च तौ हीदम् सर्वं विधारयत इति श्रुतेः। किं च ते सर्वे यथोक्ता वस्वादयः संविदानाः ऐकमत्येनावस्थिताः सन्तो नाकस्य पृष्ठे न अकं दुःखं नाकं सुखं तस्य पृष्ठे स्वरूपे सुखरूपे स्वर्गे लोके यजमानम् इष्टके चकारात्त्वां च सादयन्तु स्थापयन्तु ॥ स्तोमाः सामानि च राजसूयप्रकरणे दशमेऽध्याये प्राचीमारोहेत्यादि-कण्डिकासु व्याख्यातानि[४] ॥ १० ॥

१—'उत्थापयतु'—इतिसु० पाठः। २—ऐत० ब्रा० २,४०। ३—८,६,१,५। ४—१०अ०१०—१४क०।

कथिद्वृष्टिबीजरूपेण त्रिगुणत्वाच्चित्रा वर्तते इति त्रिवृदन्नं तद्रूपां त्वां त्रिवृते उपदधामि ॥ प्रवृणोति भूतानीति प्रवृदन्नं यतस्त्वं प्रवृदसि अतः प्रवृतेऽर्थाय त्वामुपदधामि ॥ विशेषेण वर्त्तते भूतेषु इति विवृदन्नं । त्वं विवृदसि विवृतेऽर्थाय त्वामुप० ॥ सह वर्त्तते सवृदसि ॥ सवृतेऽन्नाय त्वामुपद० ॥ आक्रामति पराभवति क्षुधामित्याक्रमोऽन्नं त्वमाक्रमोऽसि आक्रमाय त्वामुप० ॥ देहे सङ्क्रामतीति सङ्क्रमोऽन्नं त्वं सङ्क्रमोऽसि सङ्क्रमाय त्वामुप० ॥ मन्त्रान्तात्पत्यं बीजरूपेण परिणम्योत्क्रामतीत्युत्क्रमोऽन्नं त्वं तद्रूपासि उत्क्रमाय त्वामुप० ॥ उत्कृष्टा क्रान्तिर्गमनं यस्येत्युत्क्रान्तिरन्नम् हे इष्टके त्वमुत्क्रान्तिरसि उत्क्रान्त्यै अर्थाय त्वामुप-

**त्रिवृदसि त्रिवृते त्वा प्रवृदसि प्रवृते त्वा विवृदसि विवृते त्वा सवृदसि सवृते त्वाक्रमोऽस्याक्रमाय त्वा सङ्क्रमोऽसि सङ्क्रमाय त्वोत्क्रमोऽस्युत्क्रमाय त्वोत्क्रान्तिरस्युत्क्रान्त्यै त्वाधिपतिनोर्जोर्जं जिन्व ॥ ९ ॥**

**राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्त्ता त्रिवृत्त्वा स्तोमः पृथिव्या ँ श्रयत्वाज्यमुक्थम**

दधामि ॥ अथ तृतीयो व्याख्याभेदः । अधिकं पातीत्यधिपतिः अधिकपालकेन ऊर्जा अन्नरसेन ऊर्जमन्नरसं जिन्व तर्पय ॥ एवं मन्त्रेष्व-भिधेयानुसारेण व्युत्पत्तिः कार्या ॥ ९ ॥ १—१७,१२,१ ।

का० नाकसदोऽनूकेषु पूर्ववर्जमृतव्याविलायामाश्विनीवद्राज्ञ्यसीति प्रतिमन्त्रम्[१] । पूर्वानूके स्थानाभावात् पूर्वानूकवर्जं विदिक्ष्वनू-केषु ऋतव्यवेलायामनूकोपरि राज्ञीत्यादिपञ्चकण्डिकाभिराश्विनीवन्नाकसत्संज्ञेष्टका उपदधातीति सूत्रार्थः ॥ पुरस्तादुपदधाति । राज्ञ्यसि । पञ्च यजूंषि लिङ्गोक्तदेवतानि । हे इष्टके राज्ञी राजमाना प्राची पूर्वा दिक् त्वमसि । वसवोऽष्टौ देवास्ते तत्राधिपतयो

सर्वैः काम्यतइत्युशिगन्नम् तेन वसुभ्योऽर्थायोपहिता वसून् जिन्व ॥ प्रकेतेन प्रकर्षेण कं सुखं मीयतेऽनेनेति प्रकेतमन्नं तेनादित्येभ्योऽर्थायोपहितादित्यान् जिन्व ॥ ६ ॥

तन्तुना तन्यते विस्तार्यत इति तन्तुरन्नं तेन । रायस्पोषेण धनपुष्ट्यै उपहिता रायस्पोषं जिन्व ॥ संसर्पेण सम्यक् सर्पति प्रसरति देहे इति संसर्पोऽन्नम् तेन श्रुताय शास्त्रायोपहिता श्रुतं जिन्व ॥ इडान्नम् इडैवैडम् स्वार्थेऽण् तेनौषधीभिः ओषध्यर्थमुपहिता ओषधीर्जिन्व॥ उत्तमेन उन्नतं तमो यस्मात् यद्वोत्तमेनोत्कृष्टान्नेन तनूभिः शरीरार्थमुपहिता तनूः शरीराणि जिन्व ॥ वयोधसा

तन्तुनारायस्पोषेणरायस्पोषञ्जिन्वसꣳसर्पेणश्रुतायश्रुतञ्जिन्वैडेनौषधीभिरोषधीर्जिन्वोत्तमेनतनूभिस्तनूर्जिन्व

वयोधसाधीतेनाधीतञ्जिन्वाभिजितातेजसातेजोजिन्व ॥ ७ ॥

प्रतिपदसिप्रतिपदेत्वानुपदस्यनुपदेत्वासम्पदसिसम्पदेत्वातेजोसितेजसेत्वा ॥ ८ ॥

वयो दधाति पुष्णाति वयोधा अन्नं तेनाधीतेनाध्ययनायोपहिताधीतं जिन्व ॥ अभि सर्वतो जीयते येनेत्यभिजित्सर्वजयहेतुरन्नं तेन तेजसा तेजोऽर्थमुपहिता तेजो जिन्व ॥ ७ ॥

अदोऽस्यमुष्मै त्वेति व्याख्यातमन्त्रानाह । प्रतिपद्यते जीवनमनेनेति प्रतिपदन्नम् हे इष्टके त्वं प्रतिपदन्नरूपासि प्रतिपदेऽन्नाय त्वामुपदधामीति शेषः । एवं सर्वत्र ॥ प्रतिदिनमनुपद्यतेऽनुपदन्नमसि अनुपदेऽन्नाय त्वामुपदधामि ॥ हे इष्टके त्वं सम्पदन्नमसि सम्पदेऽर्थाय त्वामुपदधामि ॥ तेजसः कारणत्वात्तेजोऽन्नम् तेजसे त्वा मुपदधामि ॥ ८ ॥

का० सर्वतोऽषाढ़ाविलायाᳩ स्तोमभागा रश्मिना सत्यायेति प्रतिमन्त्रं पञ्चदश दक्षिणेनानूकम्[१] । अषाढ़ाविलायां सर्वदिक्षु स्तोमभागासञ्ज्ञा इष्टका उपदधाति रश्मिनेत्याद्यैकोनत्रिंशन्मन्त्रैः तन्मध्ये पञ्चदश प्रागनूकं दक्षिणेन अर्थाच्चतुर्दश प्रागनूकमुत्तरेणोपधेया इति सूत्रार्थः ॥ एकोनत्रिंशद्यजूंषीष्टकादैवत्यानि । इमे मन्त्राः श्रुत्या त्रिधा व्याख्याताः कण्डिकाद्वयपर्यन्तममुनोपहिता सत्यदो जिन्वेति प्रथमः अदोऽस्यमुष्मै त्वामुपदधामीति द्वितीयः अधिपतिनोर्जोर्जं जिन्वेति तृतीयः प्रकारः। तथा च श्रुतिः । अमुनादो जिन्वादोऽस्यमुष्मै त्वाधिपतिनोर्जोर्जं जिन्वेति त्रेधा विहिता स्त्रेधा विहितᳩ ह्यन्नमिति ॥ अथ वाक्यार्थः । हे इष्टके त्वं रश्मिनाम्नेन सत्यायोपहिता सती सत्यं सत्यवचोजिन्व तर्पय तेजोवृद्धिप्रदत्वादन्नं रश्मिरन्नमिति श्रुतेः ॥ प्रकर्षेण देहे इतिर्गतिर्यस्येति प्रेतिरन्नम्

**पृथिव्यापृथिवीञ्जिन्व विष्टम्भेन वृष्ट्या वृष्टिञ्जिन्व प्रवयाह्नाहर्जिन्वानुया रात्र्या रात्रीञ्जिन्वोशिजा वसुभ्यो वसूञ्जिन्व प्रकेतेनादित्येभ्य आदित्याञ्जिन्व ॥ ६ ॥**

तेन । धर्मणा विभक्तिव्यत्ययः धर्मणे धर्मायोपहिता सती धर्मं जिन्व प्रीणय प्रेतिरन्नमिति श्रुतेः । सर्वमन्त्रेषु द्वितीयं पदं चतुर्थ्यन्तं कार्य्यम् ॥ अन्वेति देहमनुगच्छतीत्यन्वितिरन्नम् तया दिवा दिवेऽर्थायोपहिता सती दिवं द्युलोकं जिन्व । अन्वितिरन्नमिति श्रुतेः ॥ सन्धिना सम्यग्बलादिकं धीयतेऽस्मिन्निति सन्धिरन्नं तेन अन्तरिक्षेण अन्तरिक्षार्थमुपहितान्तरिक्षं जिन्व ॥ प्रतिधीयतेऽस्मिन्निति प्रतिधिरन्नं तेन पृथिव्यै उपहिता सती पृथिवीं जिन्व ॥ विष्टम्भेन देहं विष्टभ्नातीति विष्टम्भोऽन्नं तेन वृष्ट्यै उपहिता वृष्टिं जिन्व ॥ प्रवया प्रकर्षेण वाति देहं गच्छतीति प्रवान्नम् तेनाह्नाह्ने उपहिताहर्दिनं जिन्व ॥ अनुया देहान्तर्गतद्वासप्ततिनाड़ीभिरनुयाति आप्नोति देहमित्यनुयान्नं तया । तृतीयैकवचने आतोधातोरित्यालोपः । रात्र्यै उपहिता रात्रीं जिन्व ॥ उशिजा वश कान्तौ उश्यते

१—१७,११,९-१० ।

रथन्तरम् रथैः तीर्यते गम्यते यत्रेति रथन्तरं भूमण्डलम्। अयं वै लोको रथन्तरं छन्द इति श्रुतेः॥ निकायः नितरां कायति शब्दं करोति वृक्षादीनुन्मूलयन्निति निकायो वायुः कै शब्दे। वायुर्वै निकायश्छन्द इति श्रुतेः॥ विवधः विविधं बध्यन्ते हन्यन्ते पापफलानि भोक्ष्यन्ते भूतप्रेतादिरूपेण प्राणिनो यत्रेति विवधोऽन्तरिक्षम्। अन्तरिक्षं वै विवधश्छन्द इति श्रुतेः॥ गिरः गीर्यते भक्ष्यतइति गिरोऽन्नम्। अन्नं वै गिर इति श्रुतेः॥ भ्रजः भ्राजते दीप्यतइति भ्रजोऽग्निः। अग्निर्वै भ्रजश्छन्द इति श्रुतेः। संस्तुप् अनुष्टुप् सम्यक् स्तभ्यते रुध्यते वशीक्रियते अनु निरन्तरं स्तुभ्यतेऽनया सा संस्तुप् अनुष्टप् वाक्। वागेव सᳫस्तुपछन्दो वागनुष्टुपछन्द इति श्रुतेः॥ एव: वरिवःइति पदद्वयं व्याख्यातम्॥ वयः बाल्यादिवयोहेतुभूतमन्नम्। अन्नं वै वयश्छन्द इति श्रुतेः॥ वयस्कृत् वयांसि बाल्यादीनि करोतीति वयस्कृत् जठराग्निः अग्निर्वै वयस्कृच्छन्द इति श्रुतेः॥ विष्पर्धाः विविधं स्पर्धन्ते ऐश्वर्याधिक्यदर्शनेन जना यत्रेति विष्पर्धाः

रश्मिनासत्यायसत्यञ्जिन्वप्रेतिनाधर्म्मणाधर्म्मञ्जिन्वान्वित्यादिवञ्जिन्वसन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्वप्रतिधिना

स्वर्गः। स्पर्ध सङ्घर्षे असुन्। असौ वै लोको विष्पर्धाश्छन्द इति श्रुतेः॥ विशालम् विविधं शालन्ते शोभन्ते जना यत्रेति विशालं भूतलम्। अयं वै लोको विशालं छन्द इति श्रुतेः॥ छदिः छाद्यतेऽर्करश्मिभिरिति छदिरन्तरिक्षम्। अन्तरिक्षं वै छदिश्छन्द इति श्रुतेः॥ दूरोहणम् दुःखेन रोढुमारोहणं कर्त्तुं शक्यं निष्कामज्योतिष्टोमादियज्ञप्रयासजातज्ञानसाध्यत्वादिति दुरोहणं रविः। असौ वा आदित्यो दूरोहणं छन्द इति श्रुतेः॥ तन्द्रम् तन्द्रि सौदे मोहे तन्द्रति सीदति स्थानसङ्कोचेनेति तन्द्रं श्रेणी। पङ्क्तिर्वै तन्द्रं छन्द इति श्रुतेः॥ अङ्काङ्कम् अङ्क स्थले अङ्कानि गर्त्तपाषाणादिचिह्नानि यत्रेत्यङ्काङ्कं जलम्। आपो वा अङ्काङ्कं छन्द इति श्रुतेः॥ अवेष्टकानां भूलोकादिरूपेण स्तुतिरिति भावः॥ ५॥

उदानः। उदानो वै त्रिककुप् छन्द इति श्रुतेः। काव्यम् कवेः परमात्मन इदं काव्यं वेदत्रयीरूपः शब्दः। त्रयी विद्या काव्यं छन्द इति श्रुतेः॥ अङ्कुपम् अङ्क कुटिलगतौ अङ्केन कुटिलगत्या आप्नोतीत्यङ्कुपमुदकम्। आपो वा अङ्कुपं छन्द इति श्रुतेः॥ अक्षरपङ्क्तिः न क्षरतीत्यक्षरा नाशरहिता पङ्क्तिरावलिर्यस्याः साक्षरपङ्क्तिर्द्यौः। असौ वै लोकोऽक्षरपङ्क्तिश्छन्द इति श्रुतेः॥ पदपङ्क्तिः पदानां चरणन्यासानां पङ्क्तयो यस्मिन् सा पदपङ्क्तिर्भूर्लोकः। अयं वै लोकः पदपङ्क्तिश्छन्द इति श्रुतेः॥ विष्टारपङ्क्तिः विस्तारा विस्तारिता प्रसारिता वस्तूनां पङ्क्तयो यत्रेति विष्टारपङ्क्तिर्दिक्। दिशो वै विष्टारपङ्क्तिश्छन्द इति श्रुतेः॥ क्षुरोभ्रजः क्षुर विलेखनखन-

आच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो

भ्रजश्छन्दः सᳪंस्तुप्छन्दोऽनुष्टुप्छन्द एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्धाश्छन्दो

विशालञ्छन्दश्छदिश्छन्दो दूरोहणञ्छन्दस्तन्द्रञ्छन्दो अङ्काङ्कञ्छन्दः ॥ ५ ॥

नयोः क्षुरति विलिखति व्याप्नोति सर्वमिति क्षुरः तीव्रः भ्राजते दीप्यत इति भ्रजः क्षुरश्छन्दसः क्षुरोभ्रज आदित्यः। असौ वा आदित्यः क्षुरोभ्रजश्छन्द इति श्रुतेः॥ ४ ॥

आच्छत् आच्छादयति शरीरमित्याच्छदन्नम्। प्रच्छत् प्रच्छादयतीति प्रच्छदन्नम्। अन्नं वा आच्छच्छन्दोऽन्नं प्रच्छच्छन्द इति श्रुतेः॥ संयत् संयच्छति व्यापारान्निवर्त्तयति जन्तूनिति संयत् रात्रिः। रात्रिर्वै संयच्छन्द इति(५) श्रुतेः॥ वियत् विशेषेण यच्छन्ति गच्छन्ति व्यापारायेतस्ततो जना यत्रेति वियद्दिनम्। अहर्वै वियच्छन्द इति श्रुतेः॥ बृहत् विस्तीर्णं स्वः। असौ वै लोको बृहच्छन्द इति श्रुतेः॥

अयं वै लोक एवश्छन्द इति (८, ४, २, ३) श्रुतेः ॥ वरिवः प्रभामण्डलेन व्रियतआव्रियतइति वरिवोऽन्तरिक्षं तदेव छन्दः । अन्तरिक्षं वै वरिवश्छन्द इति श्रुतेः ॥ शम्भूः शं सुखं भवत्यस्मादिति शम्भुः द्युलोकः । द्यौर्वै शम्भूश्छन्द इति श्रुतेः ॥ परितो भवति व्याप्य वर्तत इति परिभूर्दिग्वाचकः शब्दः । दिशो वै परिभूश्छन्द इति श्रुतेः ॥ आच्छत् आच्छादयति स्वरसेन सर्वं शरीरमित्याच्छत् अन्नम् । अन्नं वा आच्छच्छन्द इति श्रुतेः ॥ मनः प्रथमसृष्टं प्रजापत्यात्मकं यन्मनः तदेव छन्दः तद्रूपासि । असौ प्रजापतिर्वै मनश्छन्द इति श्रुतेः ॥ व्यचः व्यचतिर्व्याप्तिकर्मा विचति व्याप्नोति सर्वं जगदिति व्यचः आदित्यः । असौ वा आदित्यो व्यचश्छन्द इति श्रुतेः ॥ सिन्धुः । स्यन्दति नाडीभिः शरीरं व्याप्नोति सिन्धुः प्राणवायुः । प्राणो वै सिन्धुश्छन्द इति श्रुतेः ॥

एवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्द आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः सरिरश्छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्यश्छन्दो अङ्कुपश्छन्दो ऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरो भ्रजश्छन्दः ॥ ४ ॥

समुद्रम् समुद्रमन्त्यस्मादिति कल्पसमूहा इति समुद्रं मनः यद्वा समुद्रसाम्याद्गाम्भीर्येण समुद्रं मनः । मनो वै समुद्रश्छन्द इति(४) श्रुतेः ॥ सरिरं सलिलं रलयोरैक्यं सरति वदनगह्वरान्निर्गच्छतीति सरिरं वाक् । वाग्वै सरिरं छन्द इति श्रुतेः ॥ ककुप् कं सुखं शरीरे स्कुभ्नाति धारयतीति ककुप् कं सुखं कोपयति दीपयतीति वा कुप दीप्तौ चुरादिः क्विप् पूर्ववत् पक्षे सलोपश्छान्दसः ककुप् प्राणः । प्राणो वै ककुप्छन्द इति श्रुतेः ॥ त्रिककुप् त्रेधा कं पीतमुदकं स्कुभ्नातीति त्रिककुप्

दधिकाः स्याम भवेम। नोऽस्माकं सपत्नान् प्रणुद पुनरुक्तिरादरार्था। शोभनं मनो यस्य स सुमनाः असुमनाः सुमना भवति सुमनस्यमानः भृशादिभ्य इति क्यङ् ततः शानच्॥ २॥

अथ दक्षिणतः। इष्टकादेवत्यं यजुः। पञ्चदशकलस्य भर्ता य आदित्यरूपः स्तोमः षोडशावृत्त्युपेतो वा यः स्तोमः यच्च ओजो बलरूपं द्रविणं धनम् हे इष्टके त्वं तदुभयरूपासि तां त्वामुपदधामि। अथोत्तरतः। इष्टकादेवत्यं यजुः। चतुश्चत्वारिंशदावृत्त्या सम्पन्नो यः स्तोमस्त्रिष्टुब्रूपो वा यच्च बलरूपं धनम् तदुभयरूपां त्वामुपदधामि॥ अथ मध्ये पञ्चमी। त्रिष्टुप्। प्सा भक्षणे न प्साति भक्षयति विनाशयतीत्यप्सो रक्षको नाम योऽग्निस्तस्याग्नेयन्तृरूपस्य पञ्चदशकलस्य पुरीषमसि पूरयित्री भवसि

**षोडशीस्तोमऽओजोद्रविणञ्चतुश्चत्वारिꣳशस्तोमोवर्चोद्रविणम्। अग्नेःपुरीषमस्यप्सोनामतान्त्वाविश्वे**

**अभिगृणन्तुदेवाः। स्तोमपृष्ठाघृतवतीहसीदप्रजावदस्मेद्रविणायजस्व॥ ३॥**

हे इष्टके या त्वं तां त्वां विश्वे देवा अभिगृणन्तु स्तुवन्तु स्तोमैः पृष्ठैश्च युता हूयमानघृतयुता च सती सा त्वमिह चतुर्थ्यां चितौ सीद उपविश अस्मे अस्मासु प्रजावत्पुत्रयुतं द्रविणा द्रविणं धनं यजस्व देहि॥ ३॥ १—१०,११,५। २—८,५,०,३।

का० विराजो दश दश प्रतिदिशं पुरस्तात्प्रथममेवञ्छन्द इति प्रतिमन्त्रम्। प्रतिदिशं दशदश विराट्संज्ञा इष्टका उपदधाति चत्वारिंशत्सङ्ख्या एवेति सूत्रार्थः॥ चत्वारिंशदार्षाणि इष्टकादेवत्यानि। एति गच्छति सर्वो जन्तुसमूहो अस्मिन्नित्येवः पृथिवीलोकः स एव छन्दोरूपेण स्थितत्वात् छादकत्वाद्वा छन्दः हे इष्टके त्वं तद्रूपासि तां त्वामुपदधामि। एवमुत्तरमन्त्रेषु व्याख्या श्रुत्युक्ता ज्ञेया। अयं वै लोक एवञ्छन्द इति श्रुतेः। वरिव प्रभामण्डलेन व्रियतआव्रियतइति वरिवोऽन्तरिक्षं तदेव छन्दः। अन्तरिक्षं

चतुर्दशेऽध्याये द्वितीयतृतीयचतुर्थचितिमन्त्रानुक्त्वा पञ्चदशे पञ्चमचितिमन्त्रा वाच्याः। का० पञ्चम्यामन्त्येष्वाश्विनीवदसपत्ना अग्ने जातानिति प्रतिमन्त्रम्[१]। पञ्चम्यां चितावाश्विनीवत् असपत्नासञ्ज्ञा इष्टकाः अन्तेषूपदधाति अग्ने जातान् सहसा जातान् षोडशी चतुश्चत्वारिंशः अग्नेः पुरीषम् इति पञ्चमन्त्रैः प्रत्येकमिति सूत्रार्थः॥ पञ्चमचितिमन्त्राणां परमेष्ठी ऋषिः। तत्र द्वे अग्निदेवत्ये त्रिष्टुभौ। हे अग्ने जातान् पूर्वमुत्पन्नान्नोऽस्माकं सपत्नान् शत्रून् त्वं प्रणुद प्रकर्षेण नाशय। किञ्च हे जातवेदः जातप्रज्ञान अजातानुत्पन्नांश्च शत्रून् प्रतिनुद निवर्तय उत्पत्तिप्रतिबन्धं कुर्वित्यर्थः। उपसर्गव्यवधानमार्षम्। किञ्च नोऽस्माकमधिब्रूहि अधिवद उपदिश यज्ञसम्बन्धिनीमितिकर्त्तव्यतामिति शेषः। किं कुर्वन् अहेडन् अक्रुध्यन् सुमनाः शोभनमनस्कः सन्नुप-

अग्ने॒ जाता॒न्प्रणु॑दा नः स॒पत्ना॒न्प्रत्यजा॑तान्नुद जातवेदः। अधि॑ नो ब्रूहि सु॒मना॒ अहे॑डँस्तव॑ स्याम॒ शर्म॑ꣳस्त्रि॒वरू॑थ उ॒द्भौ॥१

सह॑सा जा॒ता॒न्प्रणु॑दा नः स॒पत्ना॒न्प्रत्यजा॑ताञ्जातवेदो नुदस्व। अधि॑ नो ब्रूहि सुमन॒स्यमा॑नो व॒यꣳ स्या॑म॒ प्रणु॑दा नः स॒पत्ना॑न्॥२

दिशेत्यर्थः। किञ्च अग्ने तव त्वत्सम्बन्धिनि त्रिवरूथे वरूथं गृहं त्रयाणां वरूथानां समाहारे यज्ञगृहत्रये सदोहविर्धानाग्नीध्ररूपे वयं स्याम भवेम सदा यज्ञान्कुर्म इत्यर्थः। कीदृशे त्रिवरूथे शर्मन् शर्मणि सुखाश्रये। तथा उद्भौ द्विपदचतुष्पद्धनधान्यादिभिरुद्भवति समृध्यत इत्युद्भूः तस्मिन् भवतेर्डिप्रत्ययः॥ अनेन मन्त्रेण पुरस्तादिष्टकामुपदधाति॥ १॥

अथ पश्चादुपदधाति। सहसा बलेन जातानुत्पन्नान्नोऽस्माकं सपत्नान् प्रणुद नाशय। हे जातवेदः अजातान् उत्पत्स्यमानानपि प्रतिनुदस्व। आत्मनेपदमार्षम्। किञ्च सुमनस्यमानोऽस्मासु शुभचित्तः सन्नस्मानधिब्रूहि शत्रुभ्योऽधिकान् वद। वयमपि त्वत्प्रसादा-

१—१०,११,१-३।

प्रजापालकः सर्वेषां भूतानामधिपतिः स्वाम्यासीत्। दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा द्वे प्रतिष्ठे आत्मा त्रयस्त्रिꣳश इति(१९) श्रुतेः॥ अत्र यायेष्टका येन मन्त्रेणोपधेया सासा तत्तन्मन्त्रोक्तदेवतारूपेण ध्यातव्येत्यर्थः॥ का० उत्तराꣳसादधि लोकम्पृणाः पूर्ववत्[१]।

नवविꣳशत्यास्तुवतवनस्पतयोऽसृज्यन्तसोमोऽधिपतिरासीदेकत्रिꣳशतास्तुवतप्रजाऽअसृज्यन्तयवाश्चायवाश्चाधिपतय

आसंस्त्रयस्त्रिꣳशतास्तुवतभूतान्यशाम्यन्प्रजापतिःपरमेष्ठ्यधिपतिरासील्लोकम्पृणच्छिद्रम्पृणाथोसीदध्रुवात्वम्।

इन्द्राग्नीत्वाबृहस्पतिरस्मिन्योनावसीषदन्। ताऽअस्यसूददोहसःसोमꣳश्रीणन्तिपृश्नयः।

जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः। इन्द्रंविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः।

रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पतिम्॥ ३१॥

॥ इतिमाध्यन्दिनिशाखायांवाजसनेयसंहितायां चतुर्दशोऽध्यायः समाप्तः॥१४॥

उत्तराꣳसादारभ्य प्रथमचितिवल्लोकम्पृणा उपदधातीति सूत्रार्थः॥ ततः पुरीषनिर्वापः सप्तर्चोपस्थानं च बोध्यम्। तन्मन्त्रप्रतीकानि लोकम्पृणा ता अस्य इन्द्रं विश्वा इति तास्तिस्रोऽपि व्याख्याताः॥ ३१॥

१–१७,१०,१९।

इति चतुर्थी चितिः पूर्णा॥ ॥ इति श्रीमन्महीधरकृते वेददीपे मनोहरे। वेद चन्द्रमितोऽध्यायो वर्ण्ढिविचितयिति॥ १४॥

पुमानित्यमरः। वरुणस्तेषामधिपतिरासीत्। दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविꣳश इति(१३) श्रुतेः॥ त्रयोविंशत्या विंशतिः करपादाङ्गुलयः पादावात्मा चेति तैः स्तुते क्षुद्राः पशवोऽजादयः सृष्टाः तेषां पूषा स्वाम्यभूत्। दश हस्त्या अङ्गुलयो दश पाद्या द्वे प्रतिष्ठे आत्मा त्रयोविꣳश इति(१४) श्रुतेः॥ पञ्चविंशत्या विंशतिः करपादाङ्गुलयः करौ पादावात्मेति तैरस्तुवत तदारण्या वनस्थाः पशवः कृष्णमृगादयः सृष्टास्तेषां वायुः स्वाम्यभूत्। दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गान्यात्मा पञ्चविꣳश इति(१५) श्रुतेः॥ सप्तविंशत्या करपादाङ्गुलयः द्वौ भुजावूरू चात्मेति तैरस्तुवत ततो द्यावापृथिवी द्युभूलोकौ व्यैतां विशेषेणागच्छतामित्यर्थः। विपूर्वादिण् गताविति धातोर्लङि प्रथमद्विवचनम्। वसवोऽष्टौ रुद्रा एकादश आदित्या द्वादशानुव्यायन् अन्वगच्छन् अनुगताः तएव स्वामिनोऽभूवन् दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि द्वे प्रतिष्ठे आत्मा सप्तविꣳश इति(१६) श्रुतेः॥ ३०॥

**पतिरासीत्त्रयोविꣳशत्यास्तुवत क्षुद्राः पशवोसृज्यन्त पूषाधिपतिरासीत्पञ्चविꣳशत्यास्तुवतारण्याः पशवोसृज्यन्त वायुरधिपतिरासीत्सप्तविꣳशत्यास्तुवत द्यावापृथिवी व्यैतां वसवो रुद्रा आदित्या अनुव्यायंस्तएवाधिपतयआसन्॥ ३०॥**

नवविंशत्या करपादाङ्गुलयो नव छिद्ररूपाः प्राणास्तैरस्तुवत ततो वनस्पतयोऽश्वत्थवटाद्याः सृष्टाः तेषां स्वामी सोमोऽभूत्। दश हस्त्या अङ्गुलयो दश पाद्या नव प्राणा इति(१७) श्रुतेः॥ एकत्रिंशता करपादाङ्गुलयः दशेन्द्रियाणि आत्मेति तैरस्तौत् ततः प्रजाः सृष्टाः यवाः पूर्वपक्षा अयवाः अपरपक्षास्तासां प्रजानां स्वामिनोऽभूवन् दश हस्त्या अङ्गुलयो दश पाद्या दश प्राणा आत्मैकत्रिꣳश इति(१८) श्रुतेः। पूर्वपक्षापरपक्षा एवात्राधिपतय आसन्निति च॥ त्रयस्त्रिंशता अङ्गुलयः इन्द्रियाणि पादौ आत्मेति तैरस्तुवत स्तौति स्म प्रजापतिर्देवैः सह। ततो भूतानि अशाम्यन् सर्वे प्राणिनः शान्ताः सुखिनोऽभवन्। परमे सत्यलोके तिष्ठतीति परमेष्ठाः प्रजापतिः

दश प्राणा आत्मैकादशस्तैरस्तुवत। ऋतवः वसन्ताद्याः सृष्टाः आर्तवाः ऋतुपालका देवविशेषाः स्वामिनोऽभुवन् दश प्राणा आत्मैकादश इति[८] श्रुतेः॥ त्रयोदशभिः दश प्राणाः द्वौ पादौ एक आत्मेति तैरस्तौत् ततो मासाः चैत्रादयः सृष्टाः मासाभिमान्ययनद्वयात्मकः संवत्सरः तेषामधिपतिरासीत्। दश प्राणा द्वे प्रतिष्ठे आत्मा त्रयोदश इति[९] श्रुतेः॥ पञ्चदशभिः दश हस्ताङ्गुलयः करौ बाहू नाभेरूर्ध्वभागश्च तैरस्तुवत ततः क्षत्रं क्षत्रियजातिः सृष्टा इन्द्रः ऐश्वर्यशाली तदभिमानी देवः स्वाम्यभूत्। दश हस्त्या अङ्गुलयश्चत्वारि दोर्बाहवाणि यदूर्ध्वं नाभेस्तत्पञ्चदशमिति[१०] श्रुतेः॥ सप्तदशभिः दश पादाङ्गुलयः ऊरू जानुनी पादौ नाभेरधोभागश्चेति तैरस्तौत्

**भिरस्तुवतमासाअसृज्यन्तसंवत्सरोधिपतिरासीत्पञ्चदशभिरस्तुवतक्षत्रमसृज्यतेन्द्रोधिपतिरासीत्सप्तदश**

**भिरस्तुवतग्राम्याःपशवोसृज्यन्तबृहस्पतिरधिपतिरासीत् ॥ २९ ॥**

**नवदशभिरस्तुवतशूद्रार्य्यावसृज्येतामहोरात्रेअधिपत्नीआस्तामेकविंशत्यास्तुवतैकशफाःपशवोसृज्यन्तवरुणोधि**

तदा ग्राम्याः पशवः गवादयः सृष्टाः बृहस्पतिस्तेषां स्वाम्यभूत्। दश पाद्या अङ्गुलयश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तदशमिति[११] श्रुतेः ॥ २९ ॥

नवदशभिः दश हस्ताङ्गुलयः ऊर्ध्वाधःस्थच्छिद्ररूपा नव प्राणास्तैरस्तौत्। ततः शूद्रार्यौ शूद्रवैश्यावसृज्येतां सृष्टौ। अर्यः स्वामिवैश्ययोः। अहोरात्रे तयोः स्वामित्विनास्ताम्। दश हस्त्या अङ्गुलयो नव प्राणा इति[१२] श्रुतेः॥ एकविंशत्या विंशतिः करपादाङ्गुलयः आत्मा चेति एकविंशत्यास्तौत्। ततः एकशफाः पशवोऽश्वादयः सृष्टाः एकं शफं खुरः प्रतिपादं येषां ते एकशफाः। शफं क्लीबे खुरः

त्मानं स्तुत्वेमाः प्रजा जनयामीति देवा ऊचुः केन स्तोष्यामः सञ्चे मया युष्माभिश्चेति तथेत्युक्त्वा प्राणैः प्रजापतिना चास्तुवतेति। तथा च श्रुतिः तद्वै प्रजापतिः सर्वाणि भूतानि पाप्मनो मृत्योर्मुक्त्वाकामयत प्रजाः सृजेय प्रजायेयेति(१) स प्राणानब्रवीदुष्माभिः सहेमाः प्रजाः प्रजनयानीति ते वै केन स्तोष्यामहइति मया चैव युष्माभिश्चेति तथेति ते प्राणैश्चैव प्रजापतिना चास्तुवतेति(२)॥ प्रजापतिरेकया वाचा सहात्मानमस्तुवत स्तुतवान् वचनव्यत्ययः। वाग्वाएका वाचैव तदस्तुवतेति(३) श्रुतेः। प्रजा अधीयन्त उद्पाद्यन्त प्रजापत्यर्थमस्थाप्यन्तेति वा। सृष्टानां प्रजानां प्रजापतिरेवाधिपतिरासीत्स्वाम्यभूत्। एवं षोडश मन्त्रा व्याख्येयाः॥ तिसृभिः प्राणोदानव्यानैरस्तौत् ब्रह्म ब्राह्मणजातिः सृष्टा ब्रह्मणस्पतिर्ब्राह्मणजातेः स्वाम्यभूत्। त्रयो वै प्राणाः प्राणोदानव्यानास्तैरिति[४] श्रुतेः॥

वतभूतान्यसृज्यन्तभूतानाम्पतिरधिपतिरासीत्सप्तभिरस्तुवतसप्तऋषयोऽसृज्यन्तधाताधिपतिरासीत् ॥२८॥

नवभिरस्तुवतपितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवतऋतवोऽसृज्यन्तार्त्तवाअधिपतयआसंस्त्रयोदश

पञ्चभिः प्राणैरस्तुवत पञ्च भूतानि सृष्टानि भूतानां पतिर्देवस्तेषां स्वाम्यभूत् य एवेमे मनःपञ्चमाः प्राणास्तैरेव तदस्तुवतेति[५] श्रुतेः॥ सप्तभिः श्रोत्रचक्षुर्नासावाग्रूपैः सप्तशीर्षण्यप्राणैरस्तुवत ततः सप्तऋषयो सृष्टाः धाता जगत्स्रष्टाद्यो देवः स्वाम्यभूत्। य एवेमे सप्त शीर्षन्प्राणास्तैरेवेति[६] श्रुतेः ॥२८॥

नवभिः सप्त शिरःप्राणा द्वावध इति नवप्राणैः प्रजापतिरस्तौत् ततः पितरः अग्निष्वात्तादयः सृष्टाः अदितिः अखण्डिता प्रजापतिशक्तिः सृष्टानां पितॄणामधिपत्नी स्वामित्वेनाधिकं पालयित्र्यासीत् नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तैरिति[७] श्रुतेः॥ एकादशभिः

भागोऽसि त्वयि विश्वेषां देवानामाधिपत्यं त्रयस्त्रिंशेन स्तोमेन त्वया भूतं प्राणिमात्रमनुक्तं स्पृतं पाप्मनो मृत्योः रक्षितम् तथा यजमानोऽपि सर्वभूतानि मृत्योः स्पृणोति। ऋभुभ्यो भागं कृत्वा विश्वेभ्यो देवेभ्य आधिपत्यमकरोदिति(१२) श्रुतेः॥ २६॥

का० ऋतव्ये सहश्च सहस्यश्चेति[१]। अनूकमभितो द्वे पश्चे उपदधाति[१]॥ ऋतुदेवत्यं यजुः। सहो मार्गशीर्षः सहस्यः पौषः एतौ हैमन्तिकौ हेमन्तावयवौ। शिष्टं पूर्वतुल्यम्॥ २७॥

सहश्चसहस्यश्चहैमन्तिकावृतूअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापओषधयःकल्पन्तामग्नयः

पृथङ्ममज्यैष्ठ्यायसव्रताः। येअग्नयःसमनसोन्तराद्यावापृथिवीइमे। हैमन्तिकावृतूअभिकल्पमाना

इन्द्रमिवदेवाअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम्॥ २७॥

एकयास्तुवतप्रजाअधीयन्तप्रजापतिरधिपतिरासीत्तिसृभिरस्तुवतब्रह्मासृज्यतब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तु

का० रेतःसिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेनानूकमृष्टीरेकयास्तुवतेति प्रतिमन्त्रम्[२]। सर्वासु दिक्षु रेतःसिग्वेलायां सृष्टि संज्ञाः सप्तदशेष्टका उपदधाति तन्मध्ये प्रागनूकं दक्षिणेन नव अर्थादष्टावुत्तरेणेति सूत्रार्थः॥ सप्तदश यजूंषि सृष्टीष्टकादेवत्यानि। अत्र निदानम् प्रजापतिर्भूतानि मृत्योरेवं मुक्त्वा प्रजाः सृजेय प्रजायेयेति विचिन्त्य प्राणाधिष्ठातृदेवानिन्द्रादीनूचे युष्माभिः सह परमा-

१——१७,१०,१७। २——१७,१०,१८।

षट् प्रतिमञ्चं वसूनां भाग इति[१]। चतुर्दशभ्योऽपराः षण्मन्त्रैः षट् पदा उपदध्यादिति मन्त्रार्थः ॥ इष्टके त्वं वसूनां भागोऽसि त्वयि रुद्राणामाधिपत्यं त्वया चतुर्विंशेन स्तोमेन प्रजानां चतुष्पात् गवाश्वादिकं स्पृतं पापान्मुक्तिम् । वसुभ्यो भागं कृत्वा रुद्रेभ्य आधिपत्यमकरोदिति(७) श्रुतेः ॥ आदित्यानां या त्वं भागोऽसि त्वयि मरुतामाधिपत्यं त्वया पञ्चविंशेन स्तोमेन प्रजानां गर्भाः मृत्योः रचिताः । आदित्येभ्यो भागं कृत्वा मरुद्भ्य आधिपत्यमकरोदिति(८) श्रुतेः। त्वमदित्यै अदित्या भूमेर्भागोऽसिपूष्ण आधिपत्यं त्वयि त्वया त्रिणवेन स्तोमेन प्रजानामोजः बलमष्टमो धातुर्वा स्पृतम् इयं वाअदितिरस्यै भागं कृत्वा पूष्ण आधिपत्य०(९)॥ त्वं देवस्य सवितुर्भागोऽसि

बृहस्पतेराधिपत्यꣳसमीचीर्दिशस्स्पृतास्चतुष्टोमस्तोमः ॥ २५ ॥

यवानाम्भागोस्ययवानामाधिपत्यम्प्रजास्स्पृताश्चतुश्चत्वारिꣳशस्तोमऋभूणाम्भागोसिविश्वेषान्देवानामाधिपत्य

म्भूतꣳस्स्पृतन्त्रयस्त्रिꣳशस्तोमः ॥ २६ ॥

त्वयि बृहस्पतेराधिपत्यं त्वया चतुष्टोमेन स्तोमेन समीचीः समीच्यः सम्यगच्छन्ति जना यासु ता दिशः स्पृताः । देवाय सवित्रे भागं कृत्वा बृहस्पतयआधिप०(१०)॥ २५ ॥

यवानां पूर्वपक्षाणां त्वं भागोऽसि अयवानामपरपक्षाणां त्वय्याधिपत्यं चतुश्चत्वारिंशेन स्तोमेन त्वया प्रजाः स्पृताः रक्षिताः । पूर्वपक्षा वै यवा अपरपक्षा अयवास्ते हीदꣳ सर्वं युवते चायुवते च पूर्वपक्षेभ्यो भागं कृत्वापरपक्षेभ्य आधिप०(११)। ऋभूणां देवविशेषाणां त्वं

१——१७,१०,१९ ।

त्वमग्ने भागो विभागोऽसि यस्यां च त्वयि दीक्षाख्या वाच आधिपत्यं स्वामित्वं यया च त्वया त्रिवृत्स्तोमः विभक्तिव्यत्ययः त्रिवृता स्तोमेन ब्रह्म ब्राह्मण्यं स्पृतं पाप्मनो मृत्योरपनीतं रक्षितं यस्यां त्वयि त्रिवृत्स्तोम इति वा तां त्वामुपदधामीति शेषः। एवं सर्वत्र व्याख्येयम्। स्पृ प्रीतिरक्षाप्राणनेषु स्वादिः। वाग्वै दीक्षेति[1] श्रुतेः॥ का० उत्तरामुत्तरयोरिन्द्रस्य भाग इति[2]। उदगनूकान्तविहितयोर्दक्षिणोत्तरयोः पक्षयोर्मध्ये उत्तरामुपदधाति दक्षिणा तूपहितेति सूत्रार्थः॥ हे इष्टके त्वमिन्द्रस्य भागोऽसि यस्यां त्वयि विष्णोराधिपत्यं पञ्चदशेन क्षत्रं क्षत्रजातिः स्पृतं मृत्योर्मोचितम् इन्द्राय भागं कृत्वा विष्णव आधिपत्यमकरोदिति(४) श्रुतेः॥ का० उत्तरां दक्षिणयोर्नृचक्षसां भाग इति[3]। दक्षिणानूकान्तविहितयोर्दक्षिणोत्तरयोः पक्षयोरुत्तरां निदधाति दक्षिणोपहिता॥ नॄन् शुभाशुभकर्तॄन्

वसूनाम्भागोसिरुद्राणामाधिपत्यञ्चतुष्पात्स्पृतञ्चतुर्विꣳश स्तोम आदित्यानाम्भागोसिमरुतामाधिपत्यङ्गर्भास्स्पृताः

पञ्चविꣳश स्तोमोदित्यैभागोसिपूष्णआधिपत्यमोजस्पृतन्त्रिणवस्तोमोदेवस्यसवितुर्भागोसि

चक्षते जानन्ति ते नृचक्षसो देवास्तेषां भागोऽसि त्वयि धातुराधिपत्यं त्वया सप्तदशस्तोमेन जनित्रं वैश्यजातिः स्पृतम्। देवा वै नृचक्षसो देवेभ्यो भागं कृत्वा धात्र आधिपत्यमकरोदिद्धि जनित्रमिति(५) श्रुतेः॥ का० उत्तरामपरयोर्मित्रस्य भाग इति[4]। अपरानूकान्तविहितयोर्दक्षिणोत्तरयोर्जङ्घामात्रयोर्मध्ये उत्तरां जङ्घामात्रीं दक्षिणामुख उपदधाति दक्षिणा तूपहितेति सूत्रार्थः॥ हे इष्टके त्वं मित्रस्य प्राणस्य भागोऽसि त्वयि वरुणस्यापानस्याधिपत्यं यया त्वयैकविंशेन स्तोमेन दिवः सम्बन्धिनी वृष्टिर्वातश्च स्पृतस्तां सादयामि। प्राणो वै मित्रोऽपानो वरुणः प्राणाय भागं कृत्वापानायाधिपत्यमकरोदिति(६) श्रुतेः॥ २४॥

१——८,४,२,३। २——१७,१०,१५। ३——१७,१०,१३। ४——१७,१०,१२।

का० दक्षिणां पूर्वयोरग्नेर्भाग इति१ । पूर्वानूकान्ते विहितयोर्जेष्ठामावगोर्मध्ये दक्षिणामुपदधात्युदङ्मुखः उत्तरा पूर्वमुपहिता ॥ दश यजूंषि चतुर्भिर्मृत्युमोक्षिन्युपधानं षड्भिः षट्पदाोपधानं दशेष्टकाः स्पृतसञ्ज्ञाश्च । तत्रार्थवादः श्रुत्युक्तः । उत्पन्नेन स्रष्टादौ प्रजापतिना सर्वाणि भूतानि स्रष्टुं गर्भे कृतानि गर्भस्थान्येव भूतानि पाप्मा मृत्युरगृह्णात् ततः प्रजापतिर्देवानुवाच युष्माभिः सहाहमिमानि भूतानि पापरूपान्मृत्योर्मोचयामीति देवैरुक्तं तत्रास्माकं को लाभः प्रजापतिनोक्तं वृणुत तैः कैश्चिदुक्तमस्माकं भागोस्तु अन्यैरुक्तमस्माकमाधिपत्यमस्त्विति तथेत्युक्त्वैकेभ्यो भागमपरेभ्य आधिपत्यं दत्वा तैः सह भूतानि मृत्योरस्पृणोत्ततः स्पृत इष्टका इति । तथा

अग्नेर्भागोसिदीक्षाया आधिपत्यम्ब्रह्मस्पृतन्त्रिवृत्स्तोमइन्द्रस्यभागोसिविष्णोराधिपत्यङ्क्षत्रꣳस्पृतम्पञ्चदश

स्तोमोनृचक्षसाम्भागोसिधातुराधिपत्याञ्जनित्रꣳस्पृतꣳ सप्तदश स्तोमोमित्रस्यभागोसिवरुणस्याधिपत्य

न्दिवोवृष्टिर्वातस्पृतएकविꣳशस्तोमः ॥ २४ ॥

च श्रुतिः । अथ स्पृत उपदधात्येतद्वै प्रजापतिरेतस्मिन्नात्मनः प्रतिहिते सर्वाणि भूतानि गर्भ्यभवन्तान्यस्य गर्भएव सन्ति पाप्मा मृत्युरगृह्णात् स देवानब्रवीद्युष्माभिः सहेमानि सर्वाणि भूतानि पाप्मनो मृत्योः स्पृणवानीति किं नस्ततो भविष्यतीति वृणीध्वमित्यब्रवीत्तं. भागो नोऽस्त्वित्येकेऽब्रुवन्नाधिपत्यं नोऽस्त्वित्येके स भागमेकेभ्यः कृत्वाधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्योरस्पृणोद्यदस्पृणोत्तस्मात्स्पृतस्तथैवैतद्यजमानो भागमेकेभ्यः कृत्वाधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्योः स्पृणोतीति ॥ अथ मन्त्रार्थः । हे इष्टके या

१ —१७,१०,१२ ।

ब्रध्नः सूर्यः। असौ वा आदित्यो ब्रध्न इति श्रुतेः। विष्टपं निवासस्थानं भुवनं विष्टपं लोक इति कोशात् ब्रध्नस्य विष्टपं स्वाराज्यं स्वतन्त्रत्वं तद्रूप स्तत्प्रदो यश्चतुस्त्रिंश स्तोमस्तद्रूपासि। यद्वा संवत्सरो ब्रध्नस्य विष्टपं रविणैव कालनिर्माणत्वात् चतुर्विंशतिपक्षसमर्त्वहोरात्र-संवत्सरात्मकत्वाच्चतुस्त्रिंशः। य एव चतुस्त्रिंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव ब्रध्नस्य विष्टपं चतुस्त्रिंशस्तस्य चतुर्विंशति-रर्धमासाः सप्तर्तवो द्वे अहोरात्रे संवत्सर एव ब्रध्नस्य विष्टपं चतुस्त्रिंशस्तद्यत्तमाह ब्रध्नस्य विष्टपमिति स्वाराज्यं वै ब्रध्नस्य विष्टपं तदेतद्रूप०(२३)॥ नाकः स्वर्गप्रदः षट्त्रिंशः स्तोमोऽसि संवत्सरो वा नाकः काम्यतइति कं सुखं न क मकं दुःखं तन्नास्ति यत्र स नाकः षट्त्रिंशः पञ्चमासात्मकत्वात्। य एव षट्त्रिंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव नाकः षट्त्रिंशस्तस्य चतुर्विंशतिरर्धमासा द्वादश मासास्तद्यत्तमाह नाक इति न हि तत्र गताय कस्मै च नाकं भवत्यथो संवत्सरो वाव नाकः संवत्सरः स्वर्गो लोकस्तदेव तद्रूप०(२४)॥ विवर्त्यन्ते आवर्त्यन्ते सामानि यत्रेति विवर्तः अष्टाचत्वारिंशः स्तोमस्तद्रूपासि यद्वा विविधं वर्तन्ते भूतानि यत्रेति विवर्तः संवत्सरः अधिमासत्वेन षड्विंशतिः पक्षाः सप्तर्तवः त्रयोदश मासाः द्वे अहोरात्रे इत्यष्टाचत्वारिंशः। य एवाष्टाचत्वारिंश स्तोमस्तं तदुप-दधात्यथो संवत्सरो वाव विवर्तोऽष्टाचत्वारिंशस्तस्य षड्विंशतिरर्धमासास्त्रयोदश मासाः सप्तर्तवो द्वे अहोरात्रे तद्यत्तमाह विवर्त इति संवत्सराद्धि सर्वाणि भूतानि विवर्तन्ते तदेतद्रूप०(२५)॥ धर्त्रं धारकश्चतुरुत्तरस्तोमश्चतुष्टोमः मध्यपदलोपी समासः त्रिवृत्पञ्चदशसप्त-दशैकविंशानां समूहस्तद्रूपासि। वायुर्वा धर्त्रं जगदाधारत्वात् चतुर्दिग्भिः स्तूयमानत्वाच्चतुष्टोमः। य एव चतुष्टोमस्तं तदुपदधाति तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं प्रतिष्ठा चतुष्टोमोऽथो वायुर्वाव धर्त्रं चतुष्टोमः स आभिश्चतसृभिर्दिग्भिः स्तुते वायुर्वै सर्वेषां भूतानां प्रतिष्ठा तदेतद्रूपमुपदधातीति(२६) श्रुतेः॥ आदावन्ते च वायुप्रधानेन वायुना सर्वभूतानि वशीकरोतीति भावः। तदुक्तं श्रुत्या स वै वायुमेव प्रथममुपदधाति वायुमुत्तमं वायुनैव तदेतानि सर्वाणि भूतान्युभयतः परिगृह्णातीति(२६)॥ एतैरष्टादशमन्त्रैः स्तोमवद्भिः स्तोमरूपत्वं नीता अष्टादशेष्टका उपधेया इत्यर्थः॥ २३॥

वयवः तद्रूपासि। य एव त्रयोविꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव सम्भरणस्त्रयोविꣳशस्तस्य त्रयोदश म सा: सप्तर्तवो द्वे अहोरात्रे संवत्सर एव सम्भरणस्त्रयोविꣳशस्तद्यत्तमाह सम्भरण इति संवत्सरो हि सर्वाणि भूतानि सम्भृतस्तदेव तद्रूप०(१७)॥ योनि: प्रजोत्पादकश्चतुर्विंशः स्तोमोऽसि यद्वा योनिः सर्वस्थानभूतः संवत्सरश्चतुर्विंशतिपक्षात्मकस्तद्रूपासि। य एव चतुर्विꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव योनिश्चतुर्विꣳशस्तस्य चतुर्विꣳशतिरर्धमासास्तद्यत्तमाह योनिरिति संवत्सरो हि सर्वेषां भूतानां योनिस्तदेव तद्रूप०(१८)॥ गर्भाः व्यत्ययेन बहुत्वं सामगर्भः पञ्चविंश स्तोमोऽसि यद्वा गर्भः संवत्सरो भूतोत्पादकत्वाच्चतुर्विंशतिः पक्षा एकः संवत्सर इति अधिकमासो भूत्वा ऋतुषु गर्भो भवतीति वा गर्भः। य एव पञ्चविꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव गर्भाः पञ्चविꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः संवत्सर एव गर्भाः पञ्चविꣳशस्तद्यत्तमाह गर्भा इति संवत्सरो ह त्रयोदशो मासो गर्भो भूत्वर्त्तून् प्रविशति तदेव तद्रूप०(१९)॥ ओजः मतुब्लोपः ओजस्वी तेजस्वी वज्रो वा ओजः तद्रूपस्त्रिणवः स्तोमोऽसि यद्वा ओजः संवत्सरश्चतुर्विंशतिपक्षाहोरात्रसंवत्सरात्मकत्वात्त्रिणवः त्रिगुणा नव यत्र। य एव त्रिणव स्तोमस्तं तदुपदधाति तद्यत्तमाहौज इति वज्रो वाओजो वज्रस्त्रिणवोऽथो संवत्सरो वाओजस्त्रिणवस्तस्य चतुर्विꣳशतिरर्धमासा द्वे अहोरात्रे संवत्सर एवौजस्त्रिणवस्तद्यत्तमाहौजइति संवत्सरो हि सर्वेषां भूतानामोजस्वितमस्तदेव तद्रूप०(२०)॥ क्रतुर्यज्ञोपयोगी एकत्रिंशः स्तोमोऽसि यद्वा संवत्सर एव करोतीति क्रतुः पक्षतुसंवत्सरात्मकत्वादेकत्रिंशः। य एवैकत्रिꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव क्रतुरेकत्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः षडृतवः संवत्सर एव क्रतुरेकत्रिꣳशस्तद्यत्तमाह क्रतुरिति संवत्सरो हि सर्वाणि भूतानि करोतीति(२१) श्रुतेः॥ प्रतिष्ठा स्थितिहेतुस्त्रयस्त्रिꣳशः स्तोमोऽसि यद्वा संवत्सरः प्रतिष्ठा संवत्सरे सर्वस्य प्रतिष्ठितत्वात्पक्षर्त्वहोरात्रसंवत्सरात्मकत्वात्त्रयस्त्रिंशः। य एव त्रयस्त्रिꣳशः स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव प्रतिष्ठा त्रयस्त्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः षडृतवो द्वे अहोरात्रे संवत्सर एव प्रतिष्ठा त्रयस्त्रिꣳशस्तद्यत्तमाह प्रतिष्ठेति संवत्सरो हि सर्वेषां भूतानां प्रतिष्ठा तदेतद्रूप०(२२)॥

पश्चात्तस्मात् तदेव रूपमुपदधातीति[1] श्रुतेः ॥ का० चतुर्दश प्रतिमन्त्रं प्रतूर्त्तिरष्टादश इति[2] । चतस्र उपधाय चतुर्दशार्धपदा उदक्ष्व उपदधाति चतुर्दशमन्त्रैरिति सूत्रार्थः ॥ अतः परं संवत्सररूपाण्युपदधाति । प्रकृष्टा तूर्त्तिस्त्वरा यस्य स प्रतूर्त्तिः अष्टादशः स्तोमः यद्वा संवत्सरः प्रतूर्त्तिरष्टादशावयवः मासाः पञ्च द्वादश मासाः पञ्चर्तवः संवत्सरश्चेत्यवयवाः । य एवाष्टादशस्तोमस्तं तदुपदधात्यथो संवत्सरो वाव प्रतूर्त्तिरष्टादशस्तस्य द्वादश मासाः पञ्चर्तवः संवत्सर एव प्रतूर्त्तिरष्टादशस्तद्यत्तमाह प्रतूर्त्तिरिति संवत्सरो हि सर्वाणि भूतानि प्रतिरति तदेव तद्रूपमुपदधातीति(१३) श्रुतेः ॥ तपोरूपो नवदशः स्तोमः यद्वा संवत्सरस्तपः शीतोष्णवर्षैस्तपतीति स नवदशः द्वादश मासाः षडृतवः संवत्सर इति तद्रूपासि । य एव नवदश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव तपो नवदशस्तस्य द्वादश मासाः षडृतवः संवत्सर एव तपो नवदशस्तद्यत्तमाह तप इति संवत्सरो हि सर्वाणि भूतानि तपति तदेव तद्रूपमुपद०(१४)॥ अभिवर्त्यन्ते आवर्त्यन्त इत्यभीवर्त्तः समावृत्तिरूपः सविंशः स्तोमः यद्वा अभिवर्त्तयत्यावर्त्तयति सर्वाणि भूतानीत्यभीवर्त्तः संवत्सरः । उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः । द्वादशमाससप्तर्तुसंवत्सररूपविंशतिसङ्ख्यया सहितः सविंशः । य एव सविꣳश स्तोमस्तं तदुपदधातीत्यथो संवत्सरो वाऽभीवर्त्तः सविꣳशस्तस्य द्वादश मासाः सप्तर्तवः संवत्सर एवाभीवर्त्तः सविꣳशस्तद्यत्तमाहाभीवर्त्त इति संवत्सरो हि सर्वाणि भूतान्यभिवर्त्तते तदेतद्रूप०(१५)॥ वर्चः बलविशेषप्रदो द्वाविꣳशः स्तोमः यद्वा वर्चः संवत्सरः वर्चस्वितमः द्वादश मासाः सप्तर्तवः द्वे अहोरात्रे संवत्सरश्चेति द्वाविंशतिसङ्ख्योपेतत्वाद् द्वाविंशः तद्रूपासि । य एव द्वाविꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव वर्चो द्वाविꣳशस्तस्य द्वादश मासाः सप्तर्त्तवो द्वे अहोरात्रे संवत्सर एव वर्चो द्वाविꣳशस्तद्यत्तमाह वर्च इति संवत्सरो हि सर्वेषां भूतानां वर्चस्वितमस्तदेतद्रूप०(१६)॥ सम्विभर्त्ति सम्भरणः सम्यक् पोषकस्त्रयोविंशः स्तोमस्त्वमसि यद्वा सम्भरत्युत्पादयति संहरति विनाशयति वा सम्भरणः संवत्सरः त्रयोदश मासाः सप्तर्तवो द्वे अहोरात्रे एकः संवत्सर इति त्रयोविंशा-

१—८,१,१,१२ । २—१७,१०,११ ।

धाति तद्यत्तमाहाशुरित्येष हि स्तोमानामाशिष्ठोऽथो वायुर्वा आशुस्त्रिवृत्स एषु त्रिषु लोकेषु वर्तते तद्यत्तमाहाशुरित्येष हि सर्वेषां भूतानामाशिष्ठो वायुर्हं भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधातीति ॥ का० दक्षिणां दक्षिणयोर्भान्तः पञ्चदश इति[1]। दक्षिणानूकान्तविहितयोर्दक्षिणोत्तरपद्ययोर्मध्ये भान्त इति मन्त्रेण दक्षिणां पद्यां प्रत्यङ्मुख उपदधातीति सूत्रार्थः ॥ भान्तः वज्ररूपो यः पञ्चदशः स्तोमः यद्वा भान्तः चन्द्रः पञ्चदशाहानि पूर्यमाणत्वात्पञ्चदशाहं चीयमाणत्वात्पञ्चदशः । भा कान्तिरेवान्तः स्वरूपं यस्य तद्रूपासि । य एव पञ्चदश स्तोमस्तं तदुपदधाति तद्यत्तमाह भान्त इति वज्रो वै भान्तो वज्रः पञ्चदशोऽथो चन्द्रमा वै भान्तः पञ्चदशः सः पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते तद्यत्तमाह भान्त इति भाति हि चन्द्रमाश्चन्द्रमा ह भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधातीति[2] श्रुतेः । का० दक्षिणामुत्तरयोर्व्योमा सप्तदश इति[3] । उत्तरानूकान्तविहितयोर्दक्षिणोत्तरपद्ययोर्मध्ये दक्षिणां पद्यां व्योमेति प्रत्यङ्मुख उपदधातीति सूत्रार्थः ॥ विविधमवतीति व्योमा प्रजापतिः सप्तदशः स्तोमः । संवत्सरो वा व्योमा सप्तदशः द्वादशमासपञ्चर्तुरूपसप्तदशावयवत्वात् तद्रूपासि । य एव सप्तदश स्तोमस्तं तदुपदधाति तद्यत्तमाह व्योमेति प्रजापतिर्वै व्योमा प्रजापतिः सप्तदशोऽथो संवत्सरो वा व्योमा सप्तदशस्तस्य द्वादश मासाः पञ्चर्तवस्तद्यत्तमाह व्योमेति व्योमा हि संवत्सरः संवत्सरो ह भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधातीति[4] श्रुतेः ॥ का० दक्षिणामपरयोर्धरुण एकविꣳश इति[5] । अपरानूकान्तविहितयोर्दक्षिणोत्तरयोर्मध्ये दक्षिणां जघ्नामावीं धरुण इति दक्षिणामुख उपदधातीति सूत्रार्थः ॥ धरुणो धारकः प्रतिष्ठाभूत एकविंशः स्तोमः यद्वा धरुण आदित्यः स एकविंशावयवत्वादेकविंशः द्वादश मासाः पञ्चर्तवः त्रयो लोका आदित्य इत्यवयवास्तद्रूपासि । य एवैकविꣳश स्तोमस्तं तदुपदधाति तद्यत्तमाह धरुण इति प्रतिष्ठा वै धरुणः प्रतिष्ठैकविꣳशोऽथोऽसौ वा आदित्यो धरुण एकविꣳशस्तस्य द्वादश मासाः पञ्चर्तव इमे लोका असावेवादित्यो धरुण एकविꣳशस्तद्यत्तमाह धरुण इति यदा ह्येवैषोऽस्तमेत्यथेदꣳ सर्वं ध्रियतआदित्यो ह भूत्वा

१—१७,१०,९। २—८,४,१,१०। ३—१७,१०,१०। ४—८,४,१,११॥ ५—१७,१०,८। ६—१७,१०,८।

पोषाय धनपुष्टै त्वामु० । इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वेति चतस्रश्चतुष्पादाः पशव इति श्रुतेश्चतसृणां पशुसंस्तवः ॥ का० उत्तरश्रोणेरधि लोकम्पृणाः पूर्ववत्[1] । उत्तरश्रोणेरारभ्य प्रथमचितिवदेव लोकम्पृणा उपदधाति । ततः पुरीषनिर्वापोपस्थाने ॥ २२

॥ इति तृतीया चितिः ॥

का० उत्तरां पूर्वयोराशुस्त्रिवृदिति[2] । पूर्वानूकान्तविहितयोर्दक्षिणोत्तरयोर्मध्ये उत्तरां जङ्घामात्रीमुदङ्मुख उपदधातीति सूत्रार्थः ॥ अस्यां कण्डिकायामष्टादश यजूंषि चतुर्णां मृत्युमोहिन्युपधाने विनियोगः प्रतूर्तिरित्यादीनां चतुर्दशार्धपद्योपधाने विनियोगः

आशुस्त्रिवृद्भान्तःपञ्चदशोव्योमासप्तदशोधरुणएकविꣳशःप्रतूर्त्तिरष्टादशस्तपोनवदशोऽभीवर्त्तःसविꣳशोवर्चोद्वाविꣳशः

सम्भरणस्त्रयोविꣳशोयोनिश्चतुर्विꣳशोगर्भाःपञ्चविꣳशओजस्त्रिणवःक्रतुरेकत्रिꣳशःप्रतिष्ठात्रयस्त्रिꣳशोब्रध्नस्यविष्ट

पञ्चतुस्त्रिꣳशोनाकःषट्त्रिꣳशोविवर्त्तोऽष्टाचत्वारिꣳशोधर्त्रञ्चतुष्टोमः ॥ २३ ॥

हे इष्टके त्वं त्रिवृत्स्तोमरूपासि साम्नामावृत्तिविशेषाः स्तोमाः तेषां विशेषणान्याशुरित्यादीनि । कीदृशस्त्रिवृत् आशुः । अशू व्याप्तौ अश्नुते व्याप्नोति सर्वान् स्तोमानित्याशुः । तद्रूपां त्वामुपदधामीति सर्वत्र शेषः । स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा उ वै ब्रह्म ब्रह्मैवैतदुपदधातीति[3] श्रुतेः । यद्वा आशुः वायुः त्रिवृत् त्रिषु लोकेषु वर्ततइति त्रिवृत् क्विप् । सर्वभूतव्यापकत्वादाशुर्वायुस्तद्रूपासि । एवं श्रुत्यनुसारेण सर्वत्र व्याख्यायते । तथा च श्रुतिः । स पुरस्तादुपदधात्याशुस्त्रिवृदिति य एव त्रिवृत्स्तोमस्तमुपद-

१—१७,९,१५ । २—१७,१०,१ । ३—८,४,१,३ ।

चासि। हे इष्टक त्वं ध्रुवा स्थिरा धरुणा धारणहेतुश्चासि। हे इष्टके त्वं धर्त्री धारणं कुर्वती धरुणो भूमिरूपा चासि। एवमिष्टकाचयस्य त्रिलोकरूपत्वम्। तदुक्तं श्रुत्या मूर्द्धासि राडितीमं लोकमरोहन् ध्रुवासि धरुणेत्यन्तरिक्षलोकं धर्त्र्यसि धरणी त्यमुं लोकमिति[1] ॥ आयुषे त्वा आयुर्वृद्ध्यर्थं त्वामुपदधामि। वर्चसे कान्त्यर्थं त्वामुपदधामि। कृष्यै सस्यनिष्पत्तये त्वामु०। क्षेमाय सम्पादितधनरक्षणाय त्वामु०। इष्टकाचतुष्टयस्य पशुसंस्तवः आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वेति चत्वारश्चतुष्पादाः पशव इति श्रुतिः ॥ १२

यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्री। इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा ॥ लोकम्पृण छिद्रम्पृणाथो सीद ध्रुवा त्वम्।

इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्। ताऽअस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः।

जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः। इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः।

रथीतमꣳ रथीनां वाजानाꣳ सत्पतिम्पतिम् ॥ २२ ॥

हे इष्टके त्वं यन्त्री नियमोपेता राट् राजमाना चासि। तथा यन्त्री स्वयमपि सती यमनी सर्वेषां नियमकारिण्यसि। ध्रुवा स्थिरा सती धरित्री भूमिरूपा चासि। तिसृणां त्रिलोकसंस्तवः यन्त्री राडियमुं लोकमरोहन् यन्त्र्यसि यमनीत्यन्तरिक्षलोकं ध्रुवासि धरित्रीतीमं लोकमिति[2] श्रुतेः ॥ हे इष्टके इषेऽन्नाय त्वामुपदधामि। ऊर्जे बलाय त्वामु०। रय्यै धनाय त्वामु०।

१——८,३,४,८। २——८,३,४,१०।

का० वालखिल्याः सप्त पुरस्तात्प्राणभृन्तो वापरा द्वादशभ्योऽपरास्तु मूर्द्धासि राडिति प्रतिमन्त्रम्[1]। प्रागुक्तदशप्राणभृद्भ्यः पूर्वा अपरा वा सप्त वालखिल्यासञ्ज्ञा इष्टका उपदधाति मूर्द्धासीत्यादिसप्तमन्त्रैः। तुर्विशेषे। अपराः सप्त वालखिल्यास्तु द्वादशच्छन्दस्याभ्योऽपरा एवोपधेयाः यन्त्रीति सप्तमन्त्रैः। वालमात्रेणापि खिला अभिन्ना इति वालखिल्याः-प्राणास्ते च चतुर्दश सप्त पुरो हस्तौ बाहू शिरो ग्रीवा नाभेरूर्ध्वभागश्चेति ऊरू जानुनी पादौ नाभेरधोभागश्चेति सप्त पश्चादधोभागे एतेष्वङ्गेषु प्राणानां विद्यमानत्वात्तानेवोपदधाति। तथा च श्रुतिः। प्राणा वै वालखिल्याः प्राणानेवैतदुपदधाति ता यद्वालखिल्या नाम यद्वाऽउर्वरयोरसम्भिन्नं

अग्निर्देवतावातोदेवतासूर्य्योदेवताचन्द्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवताविश्वे

देवादेवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणोदेवता ॥ २० ॥

मूर्द्धासिराड्ध्रुवासिधरुणाधर्त्र्यसिधरणी। आयुषेत्वावर्चसेत्वाकृष्यैत्वाक्षेमायत्वा ॥ २१ ॥

भवति खिल इति वै तद्वाचक्षते वालमात्रादु हेमे प्राणा असम्भिन्नास्ते यद्वालमात्रादसम्भिन्नास्तस्माद्वालखिल्याः[1] ॥ सप्त वाइमे पुरस्तात्प्राणाश्चत्वारि दोर्बाहवाणि शिरो ग्रीवा यदूर्ध्वं नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राणाः[4] ॥ सप्त वाइमे पश्चात्प्राणाश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राणा एते वै सप्त पश्चात्प्राणास्तानस्मिन्नेतद्दधातीति[5] ॥ इति सूत्रार्थः ॥ मूर्द्धासि अनुष्टप यन्त्री परोष्णिक्। ऋग्द्वये चतुर्दश यजूंषि वालखिल्यदेवत्यानि। हे इष्टके त्वं मूर्द्धा मूर्द्धवदुत्तमा राट् राजमाना

१——१७,८,१०-१३।

लोके प्रतिमित इवेति श्रुतेः ॥ अस्त्रीवयः अस्यते क्षिप्यतइत्यस्त्रि अस्त्रि पतनशीलं वयोऽन्नं यस्मात्तदस्त्रिवयः दीर्घश्छान्दसः अस्त्रीवयः लोकत्रयरूपं॰ छादनाच्छन्दस्तद्रूपासि । यदेषु लोकेष्वन्नं तदस्त्रीवयोऽथो यदेभ्यो लोकेभ्योऽन्न॰ स्रवति तदस्त्रीवय इति. श्रुतेः ॥ इतः सृष्टान्येव छन्दांसि पङ्क्त्यादीन्यष्टौ अथो निरुक्तान्येव छन्दा॰स्युपदधातीति श्रुतेः ॥ इष्टके त्वं पङ्क्त्युष्णिग्बृहत्यनुष्टुब्विराड्गायत्रीत्रिष्टुब्जगतीच्छन्दोरूपासीत्यर्थः ॥ १८ ॥

माच्छन्दः प्रमाच्छन्दः प्रतिमाच्छन्दोऽअस्त्रीवयश्छन्दः पङ्क्तिश्छन्दऽउष्णिक्छन्दो बृहतीच्छन्दोऽनुष्टुप्छन्दो विराट्छन्दो गायत्रीच्छन्दस्त्रिष्टुप्छन्दो जगतीच्छन्दः ॥ १८ ॥

पृथिवीच्छन्दोऽन्तरिक्षञ्छन्दो द्यौश्छन्दः समाश्छन्दो नक्षत्राणिच्छन्दो वाक्छन्दो मनश्छन्दः कृषिश्छन्दो हिरण्यञ्छन्दो गौश्छन्दोऽजाच्छन्दोऽश्वश्छन्दः ॥ १९ ॥

पृथिव्यादिदेवत्यानि यानि छन्दांसि तद्रूपासि । समाः संवत्सराः । स्पष्टमन्यत् । यान्येतद्देवत्यानि छन्दा॰सि तान्येवैतदुपदधातीति[1] श्रुतेः ॥ १९ ॥

इष्टके त्वमग्न्यादिदेवतारूपासि तामुपदधामीति सर्वत्र शेषः । अग्न्यादीनां देवतात्वं प्रसिद्धम् । अग्निर्देवता वातो देवतेत्येता वै देवताश्छन्दा॰सि तान्येवैतदुपदधातीति[2] श्रुतेः ॥ २० ॥

१,२ —— ८,३,३,६ ।

का० इषश्चोर्जश्चेत्यपरे[1] । अपरे ऋतव्ये पूर्वयोरुपरि दधाति । ऋतव्यमुक्त्वेतियजुः । इषः आश्विनः ऊर्जः कार्त्तिकः शरदृतवयवौ । शिष्टं प्रोक्तम् (१३,२५) ॥ १६ ॥

का० पूर्वार्धे प्राणभृतो दशायुर्मइति प्रतिमन्त्रम्[2] । आत्मनः पूर्वभागे प्राणभृत्सञ्ज्ञा दशेष्टका उपदधातीति सूत्रार्थः ॥ दश यजूंषि लिङ्गोक्तदेवत्यानि । हे इष्टके मे ममायुः त्वं पाहि रक्ष एवं प्राणमपानं व्यानं चक्षुः श्रोत्रं मे रक्ष मे वाचं पिन्व सिञ्च कामैः पूरय मे मनो जिन्व प्रीणय ममात्मानं जीवं पाहि मह्यं ज्योतिस्तेजो यच्छ ॥ १७ ॥

शारदावृतूअभिकल्पमानाइन्द्रमिवदेवाअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ १६ ॥

आयुर्मेपाहिप्राणम्मेपाह्यपानम्मेपाहिव्यानम्मेपाहिचक्षुर्मेपाहिश्रोत्रम्मेपाहिवाचम्मेपिन्वमनोमेजिन्वात्मानम्मेपाहिज्योतिर्मेयच्छ ॥ १७ ॥

का० छन्दस्या द्वादशद्वादशाप्ययेषु मा च्छन्द इति[3] । अप्ययेषु पक्षपुच्छात्मसन्धिषु त्रिषु द्वादशद्वादश छन्दस्यासञ्ज्ञा इष्टका उपदधातीति सूत्रार्थः । षट्त्रिंशद्यजूंषि लिङ्गोक्तदेवत्यानि । मीयतइति मा मितश्छादनाच्छन्दोऽयं लोकः हे इष्टके त्वं तद्रूपासि । अयं वै लोको मायं लोको मित इवेति[4] श्रुतेः ॥ अस्माल्लोकात्प्रमीयतइति प्रमान्तरिक्षलोकरूपासि । अन्तरिक्षलोको वै प्रमान्तरिक्षलोको ह्यस्माल्लोकात्प्रमित इवेति श्रुतेः ॥ प्रतिमा द्यौः सा ह्यन्तरिक्षे प्रतिमिता । असौ वै लोकः प्रतिमैष ह्यन्तरिक्ष-

१ — १७,६,५ । २ — १७,६,६ । ३ — १७,६,८ । ४ — ८,३,३,५ ।

का॰ विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्याः[१]। प्रथमोपहिताया विश्वज्योतिष उपरि विश्वज्योतिषमिष्टकामुपदधाति ॥ वायुदेवत्यं धवाटीच्छन्दस्कं यजुः। हे इष्टके ज्योतिष्मतीं वायुरूपां त्वां विश्वकर्मान्तरिक्षस्य पृष्ठे त्वां सादयतु। अन्तरिक्षस्य पृष्ठे ह्ययं ज्योतिष्मान्वायुरिति[२] श्रुतेः। किञ्च सर्वप्राणादिलाभाय त्वं सर्वं ज्योतिर्यच्छ प्रयच्छ। वायुः तवाधिपतिः तया देवतया ध्रुवा सती सीद अङ्गिरस्वत् ध्रुवा सीद । तद्वत् ॥ १४ ॥

नभश्च नभस्यश्च वार्षिकावृतू अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः

कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः। ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे।

वार्षिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ १५ ॥

इषश्चोर्जश्च शारदावृतू अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः

कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः। ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे।

का॰ ऋतव्ये नभश्च नभस्यश्चेति[१]। पूर्वर्तव्ययोरुपरि द्वे ऋतव्ये उपदधाति ॥ ऋतुदेवत्यमुत्कृतिच्छन्दस्कं यजुः। नभः श्रावणः नभस्यः भाद्रपदः। शेषं व्याख्यातम्[४] ॥ १५ ॥

१—१७,९,२। २—८,३,१,२। ३—१०,९,४। ४—१३ मं० २५ कं०।

लोकदार्ढ्यं सति भवतीति नभोनियमनादि प्रार्थ्यत इति भावः। किञ्च मह्या महत्या स्वस्त्या योगक्षेमसम्पत्त्या शन्तमेनातिशुभकारिणा छर्दिषा तेजोविशेषेण च सह त्वा वायुः त्वा त्वामभिपातु सर्वतो रक्षतु। तवाधिष्ठात्री या देवता तया देवतयानुगृहीता ध्रुवा स्थिरा सती सीदोपविश अङ्गिरस्वत् अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिता तद्वत्॥ १२॥

का० अनूकेषु पञ्च दिश्या वैश्वदेवीवद्राज्ञ्यसीति प्रतिमन्त्रम्[1]। वैश्वदेवीवदिति प्रतिदिशं रेतःसिग्वेलायामनूकेषु पञ्च दिश्यासञ्ज्ञका इष्टका उपदधाति पञ्चमीं दक्षिणायोत्तरेणेति सूत्रार्थः॥ दिक्शब्दोपेतत्वान्मन्त्राणां दिश्या इष्टकाः। दिग्देवत्यानि पञ्च

राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिक्॥ १३॥

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम्। विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ।

वायुष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद॥ १४॥

यजूंषि। हे इष्टके त्वं राज्ञी राजमाना सती प्राची दिक् पूर्वा दिग्भवसि गायत्रीरूपासि॥ विराट् विविधं राजमाना दक्षिणा दिक् असि त्रिष्टुब्रूपासि॥ सम्राट् सम्यग्राजमाना प्रतीची दिक् जगत्यसि॥ स्वराट् परनिरपेक्षं स्वयमेव राजमाना सती उदीची दिगनुष्टुबसि॥ अधिकं पातीत्यधिपत्नी बृहती प्रौढोर्ध्वा दिक् पङ्क्तिरसि॥ दिक्छन्दोरूपां तां त्वां सादयामीति सर्वत्र शेषः। छन्दांसि ह वै दिशो गायत्री वै प्राची दिक् त्रिष्टुब्दक्षिणा जगती प्रतीच्यनुष्टुबुदीची पङ्क्तिरूर्ध्वेति[2] श्रुतेः॥ १३॥

१—१७,८,२६। २—८,३,१,१४।

यायां चितावात्मनो मध्ये स्वयमातृण्णामुपदधाति ॥ अनुष्टुप् पूर्वार्धर्चं इन्द्राग्निदेवत्यः उत्तरः स्वयमातृण्णादेवतः । हे इन्द्राग्नी युवं युवामव्यथमानामचलन्तीं भङ्गरहितामिष्टकां स्वयमातृण्णाख्यां दृढीकुरुतम् । एवमिन्द्राग्नी प्रत्युक्त्वा इष्टकामाह । हे स्वयमातृण्णे पृष्ठेन स्वोपरिभागेन द्यावापृथिवी अन्तरिक्षं च त्वं विबाधसे अभिभवसि लोकत्रयमत्येषि ॥ ११ ॥

वायुदेवत्यं विकृतिच्छन्दस्कं यजुः स्वयमातृण्णोपधाने एव विनियुक्तम् । हे स्वयमातृण्णे विश्वकर्मा प्रजापतिरन्तरिक्षस्य पृष्ठे

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधसे ॥ ११ ॥

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीमन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं माहिꣳसीः ।

विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन

तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ १२ ॥

उपरि त्वा त्वां सादयतु स्थापयतु । किंभूतां त्वां व्यचस्वतीमभिव्यक्तियुक्तां प्रथस्वतीं प्रथनं प्रथो विस्तारस्तद्युक्ताम् । हे इष्टके त्वमन्तरिक्षं यच्छ गन्धर्वाप्सरोगणादिधारकतया नियमय । अन्तरिक्षं दृंह परोपद्रवाभावेन दृढीकुरु । तदन्तरिक्षं मा हिंसीः । किमर्थं विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय प्रतिष्ठायै स्वगृहस्थित्यै चरित्राय शास्त्रीयाचरणाय । प्राणिनामेतत्सर्वं

इति पङ्क्तिश्छ भूत्वानड्वाह उच्च०(९)॥ धेनुः नवप्रसूता सवत्सा गौः जगतीच्छन्दो भूत्वोत्क्रान्तां धेनुं वयसाग्रहीत्। धेनुं वयसाप्नोज्जगती-च्छन्द इति जगती ह भूत्वा धेनव उच्च०(१०)॥ षण्मासात्मकः कालोऽविः तिस्रोऽवयोऽस्य त्र्यविः अष्टादशमासः पशुः त्रिष्टुप् छन्दो भूत्वोत्क्रान्तं त्र्यविं पशुं वयसाग्रहीत्। त्र्यविं वयसाप्नोत्त्रिष्टुप् छन्द इति त्रिष्टुब्भभूत्वात्र्यवय उच्च०(११)॥ दोऽवखण्डने क्तिन्प्रत्ययः दितिं खण्डन-मर्हति दित्यं धान्यं वहति दित्यवाट् यद्वा द्विवर्षः पशुर्दित्यवाट् विराट्छन्दो भूत्वोत्क्रान्तं दित्यवाहं पशुं वयसाग्रहीत्। दित्यवाहं वयसाप्नोद्विराट् छन्द इति विराड् भूत्वा दित्यवाह उच्च०(१२)॥ पञ्चाविः पञ्चावयो यस्य सः सार्धद्विवर्षः पशुः गायत्री भूत्वोत्क्रान्तं पञ्चाविं पशुमग्रहीत्। पञ्चाविं वयसाप्नोद्गायत्री छन्द इति गायत्री ह भूत्वा पञ्चावय उच्च०(१३)॥ त्रिवत्सः त्रयो वत्साः वत्सराः यस्य सः त्रिवत्सः पशुः

जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः। इन्द्रंविश्वाअवीवृधन्त्समुद्रव्यचसङ्गिरः।

रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पतिम् ॥ १० ॥

उष्णिक् छन्दो भूत्वोत्क्रान्तं त्रिवत्सं जग्राह। त्रिवत्सं वयसाप्नोदुष्णिक् छन्द इत्युष्णिग्घ भूत्वा त्रिवत्सा उच्च०(१४) तुर्यवाट् तुर्यं चतुर्थं वर्षं वहतीति चतुर्वर्षः पशुः अनुष्टुप् छन्दो भूत्वोत्क्रान्तं तुर्यवाहं पशुं प्रजापतिर्वयसाग्रहीत्। तुर्यवाहं वयसाप्नोदनुष्टुप् छन्द इत्यनुष्टुब् भूत्वा तुर्यवाह उच्चक्रमुरिति(१५) श्रुतिः॥ एवं श्रुत्यनुसारेण मन्त्रा व्याख्याताः॥ का० दक्षिणश्रोणेरधि लोकम्पृणः पूर्व-वत्[१]। दक्षिणश्रोणिमारभ्य लोकम्पृणा उपदधाति[२] पुरीषनिर्वापः समस्तोपस्थानं चेति सूत्रार्थः॥ इति द्वितीया चितिः सम्पूर्णा ॥१०॥

अथ तृतीया चितिः। इन्द्राग्नी विश्वकर्मा च तन्मन्त्राणामृषिः। का० तृतीयायाꣳ स्वयमातृण्णामैन्द्राग्नी इति मध्ये[३]। तृती-

१——१७,८,२४। २——१२,५४-५५-५६। ३——१७,८,२५।

व्याघ्रं पशुं वयसाग्रहीत्। व्याघ्रं वयसाप्नोदनाधृष्टं छन्द इति विराड्वाअनाधृष्टं छन्दोऽन्नं वै विराडन्नमनाधृष्टं विराड्भूत्वा व्याघ्र। उच्च०(४) ॥ छादयतीति छदिरतिच्छन्दाः छन्दो भूत्वोत्क्रान्तं सिंहं पशुं वयसाग्रहीत्। सिꣳहं वयसाप्नोच्छदिश्छन्द इत्यतिच्छन्दा वै छदिश्छन्दः सा हि सर्वाणि छन्दाꣳसि छादयत्यतिच्छन्दा ह भूत्वा सिꣳहा उच्च०(५) ॥ अथातो निरुक्तानेव पशून्निरुक्तानि छन्दाꣳस्युपदधातीति(५) श्रुतेः स्पष्टानि छन्दांसि दर्शोच्यन्ते। पष्ठे पृष्ठभागे वहतीति पष्ठवाट् पञ्चवर्षः पशुः बृहतीच्छन्दो भूत्वोत्क्रान्तं पष्ठवाहं पशुं वयसाग्रहीत्। पष्ठवाहं वयसाप्नोद्बृहतीच्छन्द इति बृहती ह भूत्वा पष्ठवाह उच्च०(६) ॥ उक्षा सेचनसमर्थः पशुः आद्यन्ता-

अनड्वान्वयः पङ्क्तिश्छन्दो धेनुर्वयो जगती छन्दस्त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्यवाड्वयो विराट्छन्दः पञ्चाविर्वयो गायत्री

छन्दस्त्रिवत्सो वय उष्णिक्छन्दस्तुर्यवाड्वयोऽनुष्टुप्छन्दः ॥ लोकम्पृण छिद्रम्पृणाथो सीद ध्रुवा त्वम्।

इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्। ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः।

वष्टाक्षरौ पादौ मध्यमो द्वादशाक्षरः सा ककुप् ककुप् छन्दो भूत्वोत्क्रान्तमुक्षाणं पशुं वयसाग्रहीत्। उक्षाणं वयसाप्नोत्ककुप् छन्द इति ककुब्भूत्वोक्षाण उच्च०(७) ॥ ऋषभः सेचनसमर्थोऽनड्वान्। द्वादशाक्षरत्रिपादा सतोबृहती सा भूत्वोत्क्रान्तमृषभं वयसाग्रहीत्। ऋषभं वयसाप्नोत्सतोबृहतीच्छन्द इति सतोबृहती भूत्वर्षभा उच्च०(८) ॥ ९ ॥

अनः शकटं वहतीत्यनड्वान्बलीवर्दः पङ्क्तिश्छन्दो भूत्वोत्क्रान्तमनड्वाहं पशुं वयसाग्रहीत्। अनड्वाहं वयसाप्नोत्पङ्क्तिश्छन्द

पतिश्छन्द इति प्रजापतिरेव छन्दोऽभवदिति[1] श्रुतेः ॥ चतात्त्रायतइति चत्रं तादृशं वयः शरीरावस्था प्रजापतिरभवत् मयं सुखं ददातीति मयन्दमनिरुक्तं छन्दोऽभवत्। चत्रं वय इति प्रजापतिर्वै चत्रꣳ स वयोऽभवन्मयन्दं छन्द इति। यद्वा अनिरुक्तं तन्मयन्दमनिरुक्तो वै प्रजापतिः प्रजापतिरेव छन्दोऽभवदिति[2] श्रुतेः ॥ अधिपतिः अधिकं पालकः विष्टभ्नोति जगत्स्तम्भयतीति विष्टम्भः ईदृशः प्रजापतिः वयस्तत्पशुवयोऽवस्थावान् छन्दश्चाभवत्। प्रजापतिर्वै विष्टम्भः स वयोऽभवदधिपतिश्छन्द इति प्रजापतिर्वाअधिपतिः प्रजापतिरेव छन्दोभवदिति(१२)श्रुतेः॥ परमे पदे तिष्ठतीति परमेष्ठी विश्वकर्मा सर्वस्रष्टा प्रजापतिर्वयश्छन्दश्चाभवत्। प्रजापतिर्वै विश्वकर्मा स वयोऽभवत्परमेष्ठी छन्द इत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी छन्दोऽभवदिति(१३) श्रुतेः ॥ एवं प्रतिमन्त्रं द्वौ-द्वाववयवावित्यष्टावयवः प्रजापतिर्गायत्रीरूपः परिकल्पितः तथाचाष्टसङ्ख्योपेतत्वात्सर्वच्छन्दःप्रकृतिभूतं गायत्रीच्छन्दो भूत्वा वयसा तृतीयाया लुक् वयोऽवस्थया वक्ष्यमाणान् पञ्चदश पशून्प्रजापतिरगृह्णात्। तानि वा एतानि चत्वारि वयाꣳसि चत्वारि छन्दाꣳसि तदष्टावष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान् पशून्वयसाप्नोदिति(१४)श्रुतेः॥ वस्त अजः। द्वितीयैकवचनस्य सुपां सुलुगिति सु-आदेशः। वय इति तृतीयालुक्। विवलं विविधं वरमुत्कृष्टं छन्दः एकपदाख्यं छन्दो भूत्वोत्क्रान्तं वस्तं पशुं वयसा तत्तद्वयोऽवस्थया जग्राह। एवमुत्तरमन्त्रेष्वपि विभक्तिपरिणामं कृत्वा तत्तच्छन्दोरूपमास्थाय प्रजापतिस्तत्तद्वयसा तं-तं पशुं गृहीतवानिति योज्यम् विशेषस्तु वक्ष्यते। वस्तो वय इति वस्तं वयसाप्नोद्विवलं छन्द इत्येकपदा विवलं छन्द एकपदा ह भूत्वाजा उच्चक्रमुरिति[3] श्रुतेः॥ विशालं द्विपदा गायत्रीरूपं छन्दो भूत्वा वृष्णिं सेचनसमर्थं मेषं वयसा जग्राह। वृष्णिं वयसाप्नोद्विशालं छन्दः इति। द्विपदाह वै विशालं छन्दो द्विपदा भूत्वा वय उच्चक्रमुरिति(२) श्रुतेः॥ तन्द्रं पङ्क्तिच्छन्दो भूत्वोत्क्रान्तं पुरुषं पशुं वयसाप्नोत्। पुरुषं वयसाप्नोत्तन्द्रं छन्द इति पङ्क्तिर्वै तन्द्रं छन्दः पङ्क्तिर्हि भूत्वा पुरुषा उच्चक्रमुरिति(३) श्रुतेः ॥ अनाधृष्टं विराट्छन्दो भूत्वोत्क्रान्तं

१—८,२,३,१०। २—८,२,३,११। ३—८,२,४,१।

दधाति ॥ अब्दैवत्यानि पञ्च यजूंषि । हे इष्टके त्वमपो जलानि पिन्व सिञ्च पिन्वतिः सेचनार्थः । ओषधीर्जिन्व प्रीणय जिन्वतिः प्रीतिकर्मा । द्विपान्मनुष्यशरीरमव रक्ष । चतुष्पात्पशुशरीरं पाहि पालय । दिवो द्युलोकाद्वृष्टिमेरय आ समन्तात् प्रवर्तय ॥ ८ ॥

का० वयस्याः पञ्च पञ्चानूकान्तेषु मूर्द्धा वय इति प्रतिमन्त्रं चतस्रः पुरस्तात्[१] । दक्षिणोत्तरपश्चिमेष्वनूकान्तेषु पञ्च-पञ्च पूर्वं तु चतस्रो वयस्यासञ्ज्ञका इष्टका उपदधात्येकोनविंशतिमन्त्रैरित्यर्थः ॥ एकोनविंशतिर्यजूंषि लिङ्गोक्तदेवतानि । वयःशब्दोपेतमन्त्राभिधेया इष्टकाः । अत्र श्रुत्युक्तं निदानम् । पुरा सृष्टवतः प्रजापतेर्व्याकुलात् सकाशात् सृष्टाः पशवश्छन्दोरूपमास्थाय निरगच्छन् ततः

मूर्द्धा वयः प्रजापतिश्छन्दः क्षत्रं वयो मयन्दं छन्दो विष्टम्भो वयोऽधिपतिश्छन्दो विश्वकर्मा वयः परमेष्ठी छन्दो वस्तो वयो विवलं छन्दो वृष्णिर्वयो विशालं छन्दः पुरुषो वयस्तन्द्रं छन्दो व्याघ्रो वयोऽनाधृष्टं छन्दः सिंहो वयश्छदिश्छन्दः पष्ठवाड्वयो बृहती छन्द उक्षा वयः ककुप्छन्द ऋषभो वयः सतोबृहती छन्दः ॥ ९ ॥

प्रजापतिरपि गायत्र्यादिच्छन्दोरूपं स्वीकृत्य पशुसम्बन्धिन्या तत्तद्वयोऽवस्थया तान् पशूनाप्नोत् तदभिधायका मन्त्राः । प्रजापतेर्विस्रस्तात्पशव उदक्रामंश्छन्दाᳪंसि भूत्वा तान् गायत्री छन्दो भूत्वा वयसाप्नोदिति[२] श्रुतेः । तत्रादौ चतुर्भिर्मन्त्रैः प्रजापतेरष्टावयवात्मकं गायत्रीरूपं परिकल्प्यते । मूर्द्धा प्रधानः प्रजापतिश्छन्दो गायत्रीरूपो भूत्वा वयः विभक्तिव्यत्ययः वयसा कृत्वा पशूनाप्नोदिति शेषः । तद्रूपां त्वामिष्टके उपदधामीति सर्वत्र शेषः । अनेन मन्त्रेण प्रजापतेर्द्वाववयवौ कल्पितौ । प्रजापतिर्वै मूर्द्धा स वयोऽभवत् प्रजा-

१—१७,८,२२ । २—८,२,३,९ ।

आपस्ताभिः। आपो वै विधा अद्भिर्हीदꣳ सर्वं विहितमिति[1] श्रुतेः। अपएव ससर्जादाविति[2] स्मृतेश्च। तथा देवैरिन्द्रादिभिश्च सजूः। तथा वयो बाल्यादि नह्यन्ति बध्नन्ति ते वयोनाधाः प्राणा देवा दीप्यमानास्तैश्च सजूः। प्राणा वै वयोनाधाः प्राणैर्हीदꣳ सर्वं वयुनं नद्धमिति श्रुतेः। यद्वा वयोनाधैर्देवैश्छन्दोभिः सजूः। अथो छन्दाꣳसि वै देवा वयोनाधाश्छन्दोभिर्हीदꣳ सर्वं वयुनं नद्धमिति श्रुतेः। एवमुत्तरमन्त्रेष्वपि। यद्वा ऋतुदेवप्राणान् जनयित्वा तैः सजूः सयुग्भूत्वा प्रजापतिर्यथा त्वामुपहितवानेवमहमप्यग्नये त्वामुपदधामीति शेषः। अश्विनौ चेह त्वां सादयताम्, तद्दतून् प्राजनयदृतुभिर्वै सयुग्भूत्वेति श्रुतेः॥ उत्तरचतुर्मन्त्रेषु वसुभिः रुद्रैः आदित्यैर्विश्वैर्देवैः सजूरिति विशेषः। शेषं पूर्वतुल्यम् ॥ ७ ॥

प्राणम्मे पाह्यपानम्मे पाहि व्यानम्मे पाहि चक्षुर्म्मऽउर्व्या विभाहि श्रोत्रम्मे श्लोकय ॥

अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरय ॥ ८ ॥

का० प्राणभृतः प्राणं मइति[3]। पञ्चयजुर्भिः प्राणभृत्सञ्ज्ञका इष्टकाः पूर्वादिषूपदधाति ॥ पञ्च वायुदेवत्यानि यजूंषि। प्राणो वै वायुर्वायुमेवास्मिन्नेतद्दधातीति[4] श्रुतेः॥ हे इष्टके त्वं मे मम प्राणं प्राणरूपं वायुं पाहि पालय। एवमपानं मम पाहि। व्यानं वायुञ्च मे मम पाहि। उर्व्या विस्तीर्णया दृष्ट्या मे चक्षुर्विभाहि विशेषेण प्रकाशय दर्शनसमर्थं कुर्वित्यर्थः। मम श्रोत्रं कर्णेन्द्रियं श्लोकय सङ्घाते शक्तं कुरु। श्लोक सङ्घाते बहुशब्दग्रहणसमर्थं कुर्वित्यर्थः॥ का० अपः पिन्वेत्यपस्याः[5]। पञ्चमन्त्रैरपस्यासञ्ज्ञा इष्टका उप-

१—८,२,२,८। २—मनुः १,८। ३—१७,८,२०। ४—८,२,३,२। ५—१७,८,२१।

का॰ वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम्[१] । पञ्चमन्त्रैः पञ्च वैश्वदेवीसंज्ञा इष्टकाः पूर्वादिषूपदधातीत्यर्थः ॥ विश्वदेवदृष्टानि विश्वदेवदेवत्यानि पञ्च यजूंषि । हे इष्टके देवानामध्वर्यू अश्विना अश्विनौ तां त्वा त्वामिह स्थाने द्वितीयचितौ सादयताम् । किमर्थं वैश्वानराय विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितायाग्नयेऽग्निप्रत्ययं अग्नये त्वेति त्वाशब्दो या इति प्रथमार्थे प्रातिपदिकसुपोर्व्यत्ययः तां कां

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजू रुद्रैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ ७ ॥

या त्वमृतुभिः सजूः जोषणं जुट् प्रीतिः जुषी प्रीतिसेवनयोः सम्पदादित्वाद्भावे क्विप् समाना जूः प्रीतिर्यस्याः सा सजूः समानस्य छन्दस्यमूर्द्धेति समानस्य सादेशः वसन्तादिभिर्या त्वं प्रीतिमती । तथाविधाभिः या त्वं सजूः असि विदधति सृजन्ति जगदिति विधा

१ —— १७,८,१६ ।

हे इष्टके अदित्याः प्रथमचितिरूपायाः पृथिव्याः पृष्ठे उपरि त्वा त्वां सादयामि स्थापयामि। किम्भूतां त्वां अन्तरिक्षस्य भुवर्लोकस्य धर्त्रीं धारयित्रीम्। दिशां पूर्वादीनां विष्टम्भनीं संस्तम्भनकर्त्रीं भुवनानां भूतजातानामधिपत्नीं स्वामिनीम्। किञ्च त्वमपां द्रप्सो रस ऊर्मिरसि रसरूपः कल्लोलस्त्वमसि। विश्वकर्मा प्रजापतिस्ते तव ऋषिः द्रष्टा॥ तं त्वामश्विनौ सादयतामित्युक्तम्॥५॥

आदित्यास्त्वापृष्ठेसादयाम्यन्तरिक्षस्यधर्त्रीं विष्टम्भनीन्दिशामधिपत्नीम्भुवनानाम्।

ऊर्मिर्द्रप्सो अपामसिविश्वकर्म्मातऋषिरश्विनाध्वर्यूसादयतामिहत्वा॥ ५ ॥

शुक्रश्चशुचिश्चग्रैष्मावृतूअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापओषधयःकल्पन्तामग्नयःपृथक्मम

ज्यैष्ठ्यायसव्रताः। येअग्नयःसमनसोन्तराद्यावापृथिवीइमेग्रैष्मावृतूअभिकल्पमानाइन्द्रमिवदेवाअभिसं

विशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम्॥ ६॥

का० शुक्रश्च शुचिश्चेत्यृतव्ये पूर्वयोरुपरि। प्रथमचित्युपहितयोर्ऋतव्ययोरुपरि द्वे ऋतव्ये पद्ये प्राग्लक्षणे अनूकमभित उदङ्मुख उपदधाति शुक्रश्च शुचिश्चेति प्रत्येकमुपधाय। ग्रैष्मावृतू इति मन्त्रशेषो द्वे अप्यालभ्य पठ्य इति सूत्रार्थः। उत्कृतिच्छन्दः। शुक्रो ज्येष्ठमासः शुचिराषाढ़ः तौ ग्रैष्मावृतू ग्रीष्मसम्बन्धिनौ ऋत्ववयवौ। अन्यद्व्याख्यातम्॥ ६॥ १——१०,८,१६।

कीदृशी . दक्षपिता दक्षं वीर्यं पातीति वीर्यस्य पालयित्री । किमर्थं स्थातव्यं तत्राह रणाय रमणीयाय बृहते सुम्ने सुम्नाय सुखाय सप्तमी चतुर्थ्यर्थे । देवानाᳪं सुम्नाय महते रणायेति[1] श्रुतेः । देवाः सुखिनो भवन्त्विति तिष्ठेत्यर्थः । किञ्च आ समन्ताद्भावेन सुशेवा शोभनं शेवं सुखं यस्यास्तादृशी सर्वदा सुखयित्री एधि भव घ्वसोरेद्धाविति एकारः । तत्र दृष्टान्तः पिता सूनवइव यथा पिता जनकः सूनवे पुत्राय सुशेवः सुखयिता भवति तद्वत् । किञ्च स्वावेशा सुखेनाविशति स्वावेशा प्रथमा तृतीयार्थे स्वावेशया सुखप्रवेशवत्या तन्वा शरीरेण संविशस्व अवस्थानं कुरु । स्वावेशेनात्मना संविशस्वेति श्रुतेः । अश्विनेत्युक्तम् ॥ ३ ॥

हे इष्टके त्वं पृथिव्याः प्रथमचितेः पुरीषं पूरकं वस्त्वसि । पृथिवी वै प्रथमा चितिस्तस्या एतत्पुरीषमिव यद्द्वितीयेति[2] श्रुतेः ।

पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वेऽअभिगृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद

प्रजावदस्मे द्रविणा यजस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥ ४ ॥

पृणाति पूरयति पुरीषम् । पॄपॄभ्यां किदिति पृणातेरीषन् प्रत्ययः किच्च कित्त्वादुदोष्ठ्यपूर्वस्येति उत्वादेशो रपरत्वं च नित्त्वादाद्युदात्तः । अपः सनोति ददातीत्यप्सो नामापां कारणीभूतो रसश्च त्वमसि । तां तादृशीं प्रथमचितिपूरिकां जलदरसभूतां त्वा त्वां विश्वे सर्वे देवा अभिगृणन्तु सर्वतः स्तुवन्तु । किञ्च स्तोमपृष्ठाः स्तोमास्त्रिवृदादयः पृष्ठानि रथन्तरादीनि पठ्यमानानि यस्यां सा तादृशी स्तोमपृष्ठवती । घृतवती होष्यमाणाज्ययुता सतीह द्वितीयचितौ सीद तिष्ठ । ततः प्रजावत्पुत्रपौत्रादिप्रजायुक्तं द्रविणा द्रविणं धनमस्मे अस्मभ्यमायजस्व समन्ताद्देहि यजतिरिह दानार्थः । अस्मे इति सुपां सुलुगिति विभक्तेः शेआदेशः ॥ व्याख्यातमन्यत् ॥ ४ ॥

१ — ८,२,१,६ । २ — ८,२,१,७ ।

सदनेइति श्रुतेः। कीदृशी त्वं कुलायिनी कुलायो नीड़मस्त्यस्याम् कुलायो नीड़ं गृहमस्या अस्तीति गृहाकारा। रेतःसिक्वेलायामिष्टकोपचिता सा गृहाकारा भवति। कुलायमिव वै द्वितीया चितिरिति[१] श्रुतेः। अत्र सादृश्यार्थे इनिः। तथा घृतवती होष्यमाणाज्ययुता वसोर्धारा ह्यत्र होष्यन्ते। पुरन्धिः पुरं बहु इष्टकाजातं दधातीति पुरु बहुधा धीयते स्थाप्यतइति वा। किञ्च रुद्रा वसवश्चोपलक्षणं सर्वे देवाः त्वा त्वामभिगृणन्तु स्तुवन्तु। किञ्च सौभगाय ऐश्वर्याय इमा इमानि ब्रह्म ब्रह्माणि मन्त्रान्पीपिहि आप्या-

कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः।

अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यू सादयतामिह त्वा ॥ २ ॥

स्वैर्दक्षैर्दक्षपितेह सीद देवानाᳬं सुम्ने बृहते रणाय। पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा

संविशस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥ ३ ॥

यस्व मन्त्रान् प्राप्नुहि अस्मन्मन्त्रोपहिता सौभाग्याय भवेति भावः। इमेति सुप आकारः। ब्रह्मेति सुपो लोपः। पि गतौ तुदादिः बहुलं छन्दसीति श्नपः श्लुः श्लाविति द्वित्वं तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः॥ अश्विनेत्यादि पूर्ववत् ॥२॥ [१—८,२,१,५।]

हे इष्टके त्वमिह द्वितीयायां चितौ सीद तिष्ठ स्वैर्दक्षैः वीर्यैः सामर्थ्यैः सह दक्षशब्दोऽत्र वीर्यार्थः। स्वेन वीर्येणेह सीदेति श्रुतेः।

त्रयोदशेऽध्याये प्रथमा चितिरुक्ता सा भूलोकरूपा। अयं वै लोकः प्रथमा चितिरिति[1] श्रुतेः। चतुर्दशेऽध्याये द्वितीयादिचिति-चयं वक्ष्यते भूमेरूर्ध्वमन्तरिक्षादर्वाग्भागो द्वितीया चितिः। एतां द्वितीयां चितिमपश्यन्यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तेषामेष लोकः इति श्रुतेः। देवैरश्विनौ प्रार्थितौ युवां भिषजौ ततो द्वितीयां चितिमुपधत्तमिति ताभ्यामुक्तं चित्युपधाने किमावयोः फलमिति देवैरुक्तं युवां चित्युपधाने देवानामध्वर्यू भविष्यथ इति ततस्ताभ्यां द्वितीया चितिरुपहितेति श्रुत्या तेऽश्विनावध्वर्यू इत्यादिकयोक्तम्। तत्रादौ पञ्चाश्विन्य इष्टकाः॥ द्वितीयचितिमन्त्रा देवदेवत्याः॥ का० आश्विनीर्ध्रुवक्षितिरिति प्रतिमन्त्रम्। पञ्च-कण्डिकाभिराश्विनीसंज्ञा इष्टका रेतःसिग्वेलायामुपदधाति प्रतीकं नित्ये इति सूत्रार्थः। पञ्चाश्विनीदेवत्याः प्रथमा विराट् चतस्र १५ ष्टुभो यजुरन्ताः। अश्विनाध्वर्यू इत्यादि यजुः। आदित्यास्तृषो त्रिष्टुबेकाधिका पादानियमात्। हे इष्टके यतस्त्वं ध्रुवा

**ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया। उख्यस्य केतुम्प्रथमञ्जुषाणाश्विनाध्वर्यू सादयतामिह त्वा ॥१॥**

स्थिरासि अतो ध्रुवं स्थिरं योनिं स्थानं रेतःसिग्वेलालक्षणमासीद अधितिष्ठ। कीदृग्यं साधुया साधु श्रेष्ठं सुपां सुलुगित्यमो यादेशः। कीदृशी त्वं ध्रुवक्षितिः ध्रुवा स्थिरा क्षितिर्निवासो यस्याः सा। ध्रुवा अचला योनिः कारणं यस्याः सा। तथा उख्य-स्याग्नेः प्रथममाद्यं केतुं स्थानं प्रथमचितिरूपं जुषाणा सेवमाना। अथ वाऽग्निरुख्यस्यैष प्रथमः केतुर्यत्प्रथमा चितिस्तां जुषाणेति[2] श्रुतेः। इतः परं यजुः किञ्च अश्विना देवानामध्वर्यू इह रेतःसिग्वेलायां हे इष्टके त्वा त्वां सादयतामुपधत्ताम्। केचिदिदं यजु-श्चतुर्थपादेन परिकल्प्य त्रिष्टुभं वदन्ति॥ १॥

१——८,२,१,१। २——१९,८,१५। ३——८,२,१,४।

हे इष्टके पृथिव्याः सदने प्रथमचितिरूपे स्थाने स्योने सुखरूपे त्वं सीद तिष्ठ। पृथिवी वै प्रथमा चितिस्तस्यै शिवे स्योने सीद

वाचं गृह्णामि एभिर्दृशमन्त्रैर्वाचमेव गृह्णाति । सकृत्सादयत्येकां तद्वाचं करोतीति श्रुतेः ॥ अथ पञ्चकण्डिकासु प्राणमनश्चक्षुःश्रोत्रवाचां प्रजाभ्यो गृहणमित्यस्यार्थद्वयम् । प्रजाभ्य इति चतुर्थीपक्षे प्रजार्थं प्राणादीनां गृहणं पञ्चाग्रदिष्टकास्थापने प्रजानां यजमानापत्यपश्वादीनां प्राणादयः पुष्टा भवन्त्वित्यर्थः । प्रजाभ्य इति पञ्चमीपक्षे प्रजाभ्यो नानालोकेभ्यः सकाशात् प्राणादीन्गृह्णामि मद्वशगान् कारोमीति प्राणभृतामुपधानेन सर्वाः प्रजा मद्वशगा भवन्त्वित्यर्थः ॥ का° लोकम्पृणा दक्षिणाꣳसादध्या मध्यात्[1] । श्चामनो

श्रीयन्तिरश्मयः । जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः । इन्द्रंविश्वाअवीवृधन्त्समुद्रव्यचसङ्गिरः ।

रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पतिम् ॥ ५८ ॥

॥ इतिमाध्यन्दिनीयायां वाजसनेयसंहितायां त्रयोदशोऽध्यायः समाप्तः ॥१३॥

दक्षिणकोणादारभ्या मध्यात् अधि स्वयमातृण्णापर्यन्तं लोकम्पृणा उपदधाति तासां लोकं पृणेत्यभिमन्त्रणम् । ता अस्येति सूददोहःसञ्ज्ञमन्त्रेणाधिवदनम् स्पृष्ट्वा पठनमिति सूत्रार्थः ॥ का° मध्ये पुरीषं निवपति पूर्ववत्[2] । स्वयमातृण्णोपरीन्द्रं विश्वेति मन्त्रेण मतान्तेपः ॥ तिस्रः ऋचः प्रतीकोक्ताः पूर्वमुक्तत्वात्[3] ॥ ५८ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे । पुष्कराद्यादिचित्यन्तो रामेन्द्वध्याय ईरितः ॥ १३ ॥

१——१७,६,५ । २——१७,६,६ । ३——१२अ०५४·५५·५६ क० ।

दशमन्त्रैः पञ्चमं दशकं रेतःसिग्भ्यामुत्तरां प्रथमां कृत्वा प्रादक्षिण्येनोपधेयम्। उपर्युपरिष्टादिति निपातः उपरि ऊर्द्ध्वदेश-स्थश्चन्द्र इयं मतिः वाक् मन्यते ज्ञायते यया सा मतिः वागेव चन्द्रो भूत्वोपरि यस्तिष्ठति तद्रूपां सा०। चन्द्रमा वाउपरि तद्यत्त माहोपरीत्युपरि हि चन्द्रमा अथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदꣳ सर्वं मनुते वाग्घ चन्द्रमा भूत्वोपरिष्टात्तस्थौ तदेव तद्रूपमुपदधातीति श्रुतेः॥ तस्यै चन्द्ररूपायास्तस्या मतेरुत्पन्नातएव मात्या मतेरियं मात्या या वाक् तद्रूपां सा०। वाचं तस्मा-द्रूपाच्चन्द्रमसो निरमिमीतेति श्रुतेः॥ वाचोऽपत्यं वाच्यः वाच उत्पन्नो यो हेमन्तस्तद्रूपां सा०। हेमन्तमृतुं वाचो निरमि०॥ हेमन्तस्येयं हैमन्ती या पङ्क्तिश्छन्दस्तद्रूपां सा०। पङ्क्तिच्छन्दो हेमन्तादृतोर्निरमि०॥ पङ्क्तेरुत्पन्नं यन्निधनवत्सञ्ज्ञं साम तद्रूपां

**पौक्तिणवचयस्त्रिꣳशाभ्याꣳशाक्वररैवतेविश्वकर्मर्षिःप्रजापतिगृहीतयात्वयावाचङ्गृह्णामिप्रजाभ्य।**

**लोकम्पृणाच्छिद्रम्पृणायोसीदध्रुवात्वम्। इन्द्राग्नीत्वाबृहस्पतिरस्मिन्योनावसीषदन्। ताअस्यसूददोहसःसोमꣳ**

सा०। पङ्क्तेः चतुर्थी पञ्चम्यर्थे। पङ्क्तेः छन्दसो निधनवत्साम निरमि०॥ निधनवतः साम्न उत्पन्नो य आग्रयणो ग्रहस्तद्रूपां सा०। निधनवतः साम्न आग्रयणं ग्रहं निरमि०॥ आग्रयणादुत्पन्नौ यौ त्रिणवत्रयस्त्रिंशौ द्वौ स्तोमौ तद्रूपां सा०। आग्रयणाद्ग्रहा त्त्रिणवत्रयस्त्रिꣳशौस्तोमौ निरमि०॥ त्रिणवत्रयस्त्रिंशाभ्यामुत्पन्ने ये द्वे शाक्वररैवते पृष्ठे त्वां तद्रूपां सा०। त्रिणवत्रयस्त्रिꣳशाभ्याꣳ स्तोमाभ्याꣳ शाक्वर रैवते पृष्ठे निरमि०॥ विश्वकर्मा विश्वं सर्वं करोतीति विश्वकर्मा ऋषिः वागेव वाचा हि सर्वं कुरुते वाग्रूपां त्वां सा०। वाग्वै विश्वकर्मर्षिर्वाचा हीदꣳ सर्वं कृतं तस्माद्वाग्विश्वकर्मर्षिरिति श्रुतेः॥ प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः

दिशः यदिदं स्वः स्वर्गो लोकः तां दिक् स्वर्गरूपां त्वां सा०। क्रियाव्ययविशेषणानां नपुंसकत्वमेकत्वं चेति वचनादिदमुत्तरादित्युक्तम्। दिशो वा उत्तरा यत्ता आह्वोत्तरादित्युत्तरा ह्यन्मात्सर्वस्मादिशोऽथ यत्स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रं ह दिशो भूत्वोत्तरं तस्थौ तदेतद्रूपदमुपधातीति[1] श्रुतेः॥ तस्य स्वर्गस्य सम्बन्धि श्रोत्रं कीदृशं सौवम् स्वः इदं सौवं तस्येदमिति अण् द्वारादित्वादैजागमः अव्ययानां भमात्रे टिलोपः श्रोत्ररूपां त्वां सा०। श्रोत्रं तस्माद्रूपादिग्भ्यो निरमिमीतेति श्रुतेः॥ श्रोत्रादुत्पन्ना या शरत्तद्रूपां सा०। शरदृतुꣳ श्रोत्रान्निरमिमीतेति श्रुतेः॥ शरद उत्पन्नं यदनुष्टुप्छन्दस्तद्रूपां सा०। अनुष्टुभं छन्दः शरद ऋतोर्निरमि०॥ अनुष्टुभ उत्पन्नं यदैडं साम तद्रूपां सा०। अनुष्टुभश्छन्दस ऐडꣳ साम निरमि०॥ ऐडात्साम्न उत्पन्नो यो मन्थी

विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः॥ ५७॥

इयमुपरि मतिस्तस्यै वाङ्मात्या हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती पङ्क्त्यै निधनवन्निधनवत आग्रयण आग्रयणात्त्रिणवत्रयस्त्रिꣳ

ग्रहस्तद्रूपां सा०। ऐडात्साम्नो मन्थिनं ग्रहं निरमि०॥ मन्थिग्रहादुत्पन्नो य एकविंश स्तोमस्तद्रूपां सा०। मन्थिनो ग्रहादेकविंशꣳ स्तोमं निरमि०॥ एकविंशस्तोमादुत्पन्नं यद्वैराजं पृष्ठं तद्रूपां सा०। एकविꣳशात् स्तोमाद्वैराजं पृष्ठं निरमि०॥ विश्वामित्र ऋषिः विश्वं सर्वं मित्रं येन मित्रे चर्षाविति दीर्घः तादृश ऋषिः श्रोत्रं शब्दयाल्पशब्दश्रवणात्सर्वं मित्रं भवति विश्वामित्रर्षिरूपं यत् श्रोत्रं तद्रूपां सा०। श्रोत्रं वै विश्वामित्र ऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऋषिरिति[2] श्रुतेः॥ प्रजापतिसृष्टया लोकेष्टकया प्रजाभ्यः श्रोत्रं गृह्णामीति दशमन्त्रैः श्रोत्रमेव सम्भरति ये नानाकामाः श्रोत्रे तांस्तद्दधाति सकलसादयत्येकं तच्छ्रोत्रं करोतीति श्रुतेः॥ ५७॥

१—८,१,२,४। २—८,१,२,६।

शीलो विश्वं विचति उदितः सन्प्रकाशयतीति विश्वव्यचा आदित्योऽयं प्रसिद्धस्तद्रूपां सा० । असौ वाआदित्यो विश्वव्यचा यदा उदेत्यथेदꣳ सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यक्षमेव यन्तं पश्यन्तीति[१] श्रुतेः ॥ तस्यादित्यस्य सम्बन्धि चक्षुरत एव वैश्वव्यचसं विश्वव्यचसो रवेरुत्पन्नं तद्रूपां सा० । चक्षुस्तस्माद्रूपादादित्यान्निरमिमीतेति[२] श्रुतेः ॥ चाक्षुष्यः चक्षुष उत्पन्ना वर्षा ऋतुस्तद्रूपां सा० । गर्गादित्वाद्यञ् वर्षा ऋतुं चक्षुषो निरमिमीतेति श्रुतेः ॥ वर्षाभ्य उत्पन्नं जगतीच्छन्दस्तद्रूपां सा०। जगतीं छन्दो वर्षाभ्य ऋतोर्निर्ममि० ॥ जगतीच्छन्दस उत्पन्नमृक्सममसत्र्नं यत्साम तद्रूपां सा० । जगत्यै छन्दस ऋक्समꣳ साम निरमि० ॥ ऋक्समादु-

दशः सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्रजापतिगृहीतयात्वयाचक्षुर्गृह्णामिप्रजाभ्यः ॥ ५६ ॥

इदमुत्तरात्स्वस्तस्यश्रोत्रꣳसौवꣳशरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभऐडमैडान्मन्थीमन्थिनएकविꣳशएकविꣳशाद्वैराजं

त्पन्नो यः शुक्रग्रहस्तद्रूपां सा० । ऋक्समात्साम्नः शुक्रं ग्रहं निरमि० ॥ शुक्रादुत्पन्नो यः सप्तदश स्तोमस्तद्रूपां त्वां सा० । शुक्राद्ग्रहात्सप्तदशꣳ स्तोमं निरमि० ॥ सप्तदशात्स्तोमादुत्पन्नं यद्वैरूपं पृष्ठं तद्रूपां सा० । सप्तदशात्स्तोमाद्वैरूपं पृष्ठं निरमि० ॥ जमदग्निर्ऋषिः जमति जगत्पश्यतीति जमन् अङ्गति सर्वत्र गच्छतीत्यग्निः ऋषति जानाति ऋषिः ईदृशं यच्चक्षुस्तद्रूपां सा० । चक्षुर्वै जमदग्निर्ऋषिर्यदेनेन जगत्पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिरिति[३] श्रुतेः ॥ प्रजापतिसृष्टया त्वयेष्टकया प्रजार्थं चक्षुर्गृह्णामि दशमन्त्रैश्चक्षुरेव गृह्णामि । सत्वात्मादयत्येतच्चक्षुः करोतीति श्रुतेः ॥ ५६ ॥ १——८,१,२,१ । २——८,१,२,२ । ३—८,१,२,३ ।

दशमन्त्रैश्चतुर्थं दशमुत्तरांसादारभ्योपदधाति ॥ उत्तरस्यामुत्तरात् उत्तराधरदक्षिणादातिरिति आत्प्रत्ययः सर्वस्मादुत्तरभागस्था

तस्मादेष दक्षिणैव भूयिष्ठं वाति तद्रूपमुपदधातीति श्रुतेः[७]॥ तस्य विश्वकर्मणोऽपत्यं मनोऽत एव वैश्वकर्मणं विश्वकर्मण इदम्। तस्येदमिति अण् इत्यस्यानपत्य इति प्रसक्त्या । मनोरूपां सा० । मनस्तस्माद्रूपाद्वायोर्निरमिमीतेति[८] श्रुतेः ॥ मनसोऽपत्यं ग्रीष्म ऋतुस्तद्रूपां सा० । ग्रीष्मऋतुं मनसो निरमिमीतेति[८] श्रुतेः ॥ ग्रीष्मस्येयं ग्रैष्मी ग्रीष्मोत्पन्ना त्रिष्टुप् छन्दस्तद्रूपां सा० । त्रिष्टुभं छन्दो ग्रीष्मादृतोर्निरमिमीतेति[८] श्रुतेः ॥ त्रिष्टुभ उत्पन्नं यत्स्वारं साम तद्रूपां सा०। त्रिष्टुभश्छन्दसः स्वारꣳ साम निरमिमीतेति[८] श्रुतेः ॥ स्वारात्साम्न उत्पन्नो योऽन्तर्यामो ग्रहस्तद्रूपां सा० । स्वारात्साम्नोऽन्तर्यामं ग्रहं निरमिमीतेति[८] श्रुतेः ॥ अन्तर्यामादुत्पन्नो यः पञ्चदश स्तोमस्तद्रूपां सा०। अन्तर्यामाद्ग्रहात्पञ्चदशꣳ स्तोमं निरमिमीतेति[८] श्रुतेः ॥ पञ्चदशात्स्तोमादुत्पन्नं यद्बृहत्पृष्ठं तद्रूपां सा०। पञ्च-

मात्पञ्चदशः पञ्चदशाद्बृहद्भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः ॥ ५५ ॥

अयम्पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाश्चाक्षुष्यो जगती वार्षी जगत्या ऋक्सममृक्समाच्छुक्रः शुक्रात्सप्त

दशात्स्तोमाद्बृहत्पृष्ठं निर०[८] ॥ भरद्वाज ऋषिः बिभर्तीति भरन् वाजमन्नं यः स भरद्वाजोऽन्नधर्ता मनः मनसि स्वस्थे अन्नादनेच्छोत्पत्तेः ऋषिः सचेतनो मनोरूपस्तद्रूपां सा० । मनो वै भरद्वाज ऋषिः अन्नं वाजो यो वै मनो बिभर्ति सोऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिरिति[९] श्रुतेः ॥ प्रजापतिगृहीतया धात्रसृष्टया त्वयेष्टकया हेत्वा प्रजाभ्यो मनो गृह्णामि एभिर्दशमन्त्रैर्मन एव गृह्णामीत्यर्थः ॥ ५५ ॥

अयं पश्चादित्यादिमन्त्रैर्द्वितीयं दशकमुत्तरस्यां श्रोणिरारभ्योपदधाति । पश्चात् प्रतीचीं दिशमञ्चति गच्छतीति पश्चात् प्रतीचीगमन-

पुरस्तात्सोऽ तदेव तद्रूपमुपदधातीति(५)॥ प्राणस्तस्याग्नेरपत्यमिति शेषः अतएव भौवायनः भुवस्याग्नेरपत्यं(५) भौवायनः। नडादित्वात्फक् इष्टके प्राणरूपां त्वां सा०। प्राणं तस्माद्रूपादग्नेर्निरमिमीतेति(५) श्रुतेः॥ प्राणस्यापत्यं प्राणायनः फक् ये। वसन्त ऋतुस्तद्रूपां सा०। वसन्त ऋतुं प्राणादिरमि मीतेति(५) श्रुतेः। वसन्तस्यापत्यं वासन्ती॥ तस्यापत्यमिति अण् टिड्ढाणञित्यादिना ङीप्। या गायत्री छन्दस्तद्रूपां सा०। गायत्रीं छन्दः। वसन्तादृतोर्निरमिमीतेति(५) श्रुतेः। गायत्रं गायत्रं चतुर्थी पञ्चम्यर्थे गायत्र्याः सकाशाद्गायत्रं सामोत्पन्नं तद्रूपां सा०। गायत्रं छन्दः ये गायत्रꣳ साम निरमिमीतेति(५) श्रुतेः॥ गायत्रात्साम्नोऽथ उपांशुग्रहो निर्मितस्तद्रूपां सा०। गायत्रात्साम्न उपाꣳशुं ग्रहं निरमिमीतेति(५) श्रुतेः॥ उपांशुग्रहान्निर्मितो यस्त्रिवृत्स्तोमस्तद्रूपां सा०। उपाꣳशोर्ग्रहात्त्रिवृतꣳ स्तोमं निरमीमितेति(५) श्रुतेः॥ त्रिवृतः स्तोमान्निर्मितं यद्रथन्तरं पृष्ठं तद्रूपां सा०। त्रिवृतः स्तोमाद्रथन्तरं पृष्ठं निरमिमीतेति(५) श्रुतेः॥ वसत्यधितिष्ठति सर्वजन्तू-

**अयन्दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणङ्ग्रीष्मो मानसस्त्रिष्टुब्ग्रैष्मी त्रिष्टुभः स्वारꣳ स्वारादन्तर्यामोऽन्तर्या**

निति वसिष्ठः प्रतिशयेन वसिता वसिष्ठः तुरिष्ठेमेयःस्विति इष्ठनि तृचो लोपः सर्वाधार ऋषिः प्राता प्राणस्तद्रूपां सा०। प्राणो वै वसिष्ठ ऋषिर्यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तुतमो वसति तेनो एव वसिष्ठ[६] इति श्रुतेः॥ प्रजापतिगृहीतया गृह्णातिः सृष्ट्यर्थः प्रजापतिना सृष्टया त्वयेष्टकया स्थापितया प्रजाभ्यः सर्वप्रजार्थं प्राणं गृह्णामि प्रजानां प्राणसिद्धये त्वामुपदधामीत्यर्थः। अयं पुर इत्यादिदशमन्त्रैः प्राणमेवैकं प्रजाभ्यः गृह्णामि। ये नानाकामाः प्राणे तांस्तद्दधाति सकलादयत्येकं तत्प्राणं करोतीति श्रुतेः॥५४॥

एभिर्मन्त्रैस्तृतीयं दशकं दक्षिणश्रोणेरारभ्योपधेयम्। विश्वं करोति सर्वं सृजतीति विश्वकर्मा वायुरयं दक्षिणा दक्षिणस्यां दिशि आर्यावर्तो यो वाति अद्रूपां त्वां सा०। अयं वै वायुर्विश्वकर्मा योऽयं पवते एष हीदꣳ सर्वं करोति तदयत्तमाह दक्षिणेति

सिकता वा अपां पुरीषम्[५९] ॥ अपां पाथसि अन्ने त्वां सा०। अन्नं वा अपां पाथः[६०] ॥ पञ्च छन्दस्या उपदधाति पञ्चयजुर्भिः । गायत्रेण गायत्रीव गायत्रं तेन छन्दसा त्वामुपदधामि । त्रैष्टुभेन छन्दसा त्वां सा० । जागतेन छन्दसा त्वां सा० ॥५३॥ १—१७,६,२। २—८,१,१,३।

का० व्याघारणवत्प्राणभृतः कर्णसहिता दश-दशायं पुर इति प्रतिमन्त्रम्[१] । प्राणभृत्सञ्ज्ञका इष्टका व्याघारणवद्दक्षिणे अंसे उत्तरश्रोण्यां दक्षिणश्रोण्यामुत्तरे अंसे कर्णसहिता अक्ष्णया संलग्नाः स्वयमातृण्णापर्यन्तं दश दशोपदधातीति सूत्रार्थः ॥ पञ्चाशद्यजूंषि प्राणभृदिष्टकादेवत्यानि प्रतिकण्डिकं दश-दश । प्रथमं दशकं दक्षिणे अंसे । कदाचिदग्रात्प्रजापतेः प्राणा देवा भूत्वोत्क्रान्ताः तदा तान् प्रजापतिरूचे किमित्युत्क्रम्यते मामुपगच्छतेति ततः प्राणास्तमूचुर्वयमन्नं विना स्थातुं न शक्नुमस्तदन्नं त्वया सृज्यते चेत्तिष्ठामस्ततः

अयम्पुरोभुवस्तस्यप्राणोभौवायनोवसन्तःप्राणायनोगायत्रीवासन्तीगायत्र्यैगायत्रङ्गायत्रादुपाᳪशुरुपाᳪशो

स्त्रिवृत्त्रिवृतोरथन्तरंवसिष्ठऋषिःप्रजापतिगृहीतयात्वयाप्राणङ्गृह्णामिप्रजाभ्यः ॥ ५४ ॥

प्रजापतिनोक्तं वयमुभयेऽन्नं सृजामेति तथेत्युक्त्वा प्राणाः प्रजापतिश्चैतदन्नमसृजंस्तेन प्राणान् पुष्णन्तीति इष्टकानां प्राणभृत्सञ्ज्ञेत्युक्तं श्रुत्या प्रजापतेर्विस्रस्तात्प्राणा उदक्रामन्नित्यादिकया[२] ॥ अथ मन्त्रव्याख्या । योऽयं पुरो भुवश्चाग्निर्वर्तते हे इष्टके त्वं तद्रूपासि प्राण एवाग्निर्भूत्वा पुरस्तिष्ठति अतोऽग्निरूपां त्वामुपदधामीति शेषः एवमग्रेऽपि । पुरस्तादुपधीयते प्रागुद्ध्रियेत प्राञ्चमुपचर्यतइति पुरोऽग्निः । भवति सर्वरूपेणेति भवत्यस्मात्सर्वमिति वा भुवोऽग्निः तद्रूपेष्टका ध्येयेति भावः । तदुक्तं श्रुत्या । अयं पुरो भुव इत्यग्निर्वै पुरस्तात्तमाह पुर इति प्राञ्चᳪ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्भुव इत्याहाग्निर्वै भुवोऽग्नेर्हीदᳪ सर्वं भवति प्राणो ह्यग्निर्भूत्वा

यजूंषि पञ्चदशापस्यादेवत्यानि पञ्च छन्दस्यादेवत्यानि । हे इष्टके अपस्ये अपामेमन् एमनि वायौ त्वा त्वां सादयामि स्थापयामि । इण गतौ मनिन् प्रत्ययः सप्तम्या लुक् । त्वा इत्यस्य पररूपम् । अत्रापामेमन्नित्यादीनां श्रुत्योक्तोऽर्थो ग्राह्यः । वायुर्वा अपामेम वायौ त्वाऽ सादयामीति[1] श्रुतेः ॥ अपामोद्मन् ओद्मनि ओषधिषु त्वां सादयामि । उन्दी क्लेदे मन्नलोपश्च गुणः सप्तम्या लुक् । ओषधयो वा अपामोद्म[47] एवमग्रेऽपि तुल्यम् ॥ भस्मन् भस्मनि भस भर्त्सनदीप्त्योः मन् । अभ्रे । अभ्रं वा अपां भस्म[48] ॥ अपां ज्योतिषि विद्युति ।

**म्यपान्त्वासदनेसादयाम्यपान्त्वासधस्थेसादयाम्यपान्त्वायोनौसादयाम्यपान्त्वापुरीषेसादयाम्यपान्त्वा**

**पाथसिसादयामिगायत्रेणत्वाच्छन्दसासादयामित्रैष्टुभेनत्वाच्छन्दसासादयामिजागतेनत्वाच्छन्दसा**

**सादयाम्यानुष्टुभेनत्वाच्छन्दसासादयामिपाङ्क्तेनत्वाच्छन्दसासादयामि ॥ ५३ ॥**

विद्युद्वा अपां ज्योतिः[49] ॥ अपामयने भूमौ । इयं पृथिव्यपामयनम्[50] ॥ अर्णवे सदने स्थाने प्राणरूपे सा० । प्राणो वा अर्णवः[51] ॥ समुद्रे सदने सा० । मनो वै समुद्रः[52] ॥ सरिरे सदने वाचि सा० । वाग्वै सरिरम्[53] ॥ अपां क्षये चक्षुषि त्वां सा० । चक्षुर्वा अपां क्षयो निवासः[54] ॥ अपां सधिषि श्रोत्रे त्वां सा० । श्रोत्रं वा अपाऽ सधिः[55] ॥ अपां सदने दिवि त्वां सा० । द्यौर्वा अपाऽ सदम्[56] ॥ अपां सधस्थे अन्तरिक्षे त्वां सा० । अन्तरिक्षं वा अपाऽ सधस्थम्[57] ॥ अपां योनौ समुद्रे त्वां सा० । समुद्रो वा अपां योनिः[58] ॥ अपां पुरीषे सिकतासु त्वां सा०

१ —— ७,५,२,४६ ।

का० एत्य च त्वं यविष्ठेति चित्युपस्थानम्[१]। बर्हिर्वेदेरागत्याग्निसमीपेऽधिचित्यमुपतिष्ठते। उशनोदृष्टाग्नेयी गायत्री। हे यविष्ठ युवतम यद्वा मिश्रयितृतम गिरोऽस्मदीयाः स्तुतिवाचः शृणुधि। शृणु श्रुशृणुखित्यादिना हेर्धिः अन्येषामपि दृश्यत इति संहितायां दीर्घः। गिरः श्रुत्वा दाशुषो हविर्दत्तवतो यजमानान् नॄन्मनुष्यान् पाहि रक्ष दाशुष इति षष्ठी वा यजमानस्य नॄन्

शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद। शरभन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ५१ ॥

त्वंय्यविष्ठ दाशुषो नॄँ: पाहि शृणुधी गिरः। रक्षा तोकमुत त्मना ॥ ५२ ॥

अपान्त्वेमन्त्सादयाम्यपान्त्वोद्मन्त्सादयाम्यपान्त्वा भस्मन्त्सादयाम्यपान्त्वा ज्योतिषि सादयाम्यपान्त्वायने सादयाम्यर्णवे त्वा सदने सादयामि समुद्रे त्वा सदने सादयामि सरिरे त्वा सदने सादयाम्यपान्त्वा क्षये सादयाम्यपान्त्वा सधिषि सादया

पाहीति। दाश्वान्साह्वान्मीढ्वांश्चेति निपातः। किञ्च उतापि च त्मना आत्मना तोकं यजमानापत्यं रक्ष द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। मन्त्रेष्वाङ्यादेरात्मन इति आकारलोपः। तोकमपत्यमुतात्मानं च रक्षेति विभक्तिव्यत्ययो वा ॥ ५२ ॥

का० अपरेण स्वयमातृण्णामित्यापस्याः पञ्च-पञ्चानूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रम्[२]। तीर्थेनाग्निमारुह्य स्वयमातृण्णामपरेण पूर्वानूकान्तमेत्य चतुर्ष्वप्यनूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रं पञ्च पञ्चापस्यासञ्ज्ञा इष्टका उपदधातीति सूत्रार्थः ॥ विंशतिरिष्टकादेवत्यानि

१—१७,९,१। १——१७,९,२।

ाक्षनीयं प्रिय मपत्य मित्यर्थः। द्विपदां नराणां चतुष्पदां गवादीना मुभयरूपाणां पशूनां त्वचम् त्वचमिव त्वचम् त्वग्रूपकं कम्बलैः छादकत्वात् मनुष्याः शीतनिवृत्त्यै कम्बलं दधते अश्वगोखराद्या अपि मार्दवाय पृष्ठे कम्बलैराच्छाद्यन्ते। तथा त्वष्टुः प्रजापतेः प्रजानां मध्ये प्रथमं जनित्रं प्रथमोत्पन्नम्। एतद्वै त्वष्टा प्रथमꣳ रूपं विचकारेति[१] श्रुतेः। उष्ट्रं प्रसिद्धं ते ददामि। स्पष्ट मन्यत् ॥ ५० ॥

अथाजस्य। हि पादपूरणः। योऽजोऽग्नेः प्रजापतेः शोकात्सन्तापादजनिष्ट उत्पन्नः। शोकाद्दीप्यमानादग्नेः प्रजापतेरजनिष्टेति वा। यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायतेति[२] श्रुतेः। आत्मनो वपामुदखिदत्ता मग्नौ प्रस्तक्षात्ततोऽजस्तूपरः समभवदिति

इममूर्णायुं॑ वरु॒णस्य॒ नाभिं॒ त्वचं॑ पशू॒नां द्वि॒पदां॒ चतु॑ष्पदाम्। त्वष्टुः॑ प्र॒जानां॑ प्रथ॒मं ज॒नित्र॒मग्ने॒ मा हिꣳसीः पर॒मे व्यो॑मन्।

उष्ट्र॑मार॒ण्यमनु॑ ते दिशामि॒ तेन॑ चिन्वा॒नस्त॒न्वो॒ नि षी॑द। उष्ट्रं॑ ते॒ शुगृ॑च्छतु॒ यं द्वि॒ष्मस्तं ते॒ शुगृ॑च्छतु ॥ ५० ॥

अ॒जो ह्य॒ग्नेरज॑निष्ट॒ शोका॒त्सो अ॑पश्यज्जनि॒तार॒मग्रे॑। तेन॑ दे॒वा दे॒वता॒मग्र॑माय॒न् तेन॒ रोह॑माय॒न्नुप॒ मेध्या॑सः।

तैत्तिरीयेऽपि। स उत्पन्नोऽजोऽग्रे प्रथम मुत्पन्नं नरमेव जनितारं स्वोत्पादकं प्रजापति मपश्यद्दृष्टवान्। किञ्च एवं प्रशस्तोऽजस्ततो देवा इदानीन्तना अग्रं पूर्वजन्मनि तेनाजेन कर्म कृत्वेति शेषः देवतां देवभाव मायन् प्राप्ताः तस्य भावस्तत्ता। किञ्च मेध्यासः यज्ञयोग्या यजमाना रोहं रोहणीयं स्वर्गं तेनाजेनोपायन् उपगच्छन्ति। छन्दसि परेऽपि। शरभोऽष्टापदो मृगविशेषः सिंहघाती। शेष सुक्तम् ॥ ५१ ॥

१—७,५,२,३५। २—७,५,२,३६।

क्रन्दितारं हिंसमानम्। क्रन्देर्दाधर्तीत्यादिना यङ्लुकि निपातः। वाजो वेगो विद्यते येषां ते वाजिनो वेगवन्तः। मत्वर्थे इनप्रत्ययः। तेषु मध्ये वाजिनं वेगवन्तम्। ते तुभ्य मारण्यं वनस्थं गौरं गौरवर्णं मृगं दिशामि ददामि तेन तन्वः चिन्वानो निषीदेति पूर्ववत्। ते तव शुग्गौरं गच्छतु ॥ ४८ ॥

अथ गौः। अत्र विशेषणद्वयं स्त्रीलिङ्गं शेषाणि पुंलिङ्गानि व्यत्ययेन उभाभ्यां गौरेव स्तूयते। हे अग्ने परमे व्योमन् उत्कृष्टे स्थाने स्थित मिमं गोरूपं पशुं त्वं मा हिंसीः। कीदृशं साहस्रं सहस्रमूल्यार्हं सहस्रोपकारक्षमं वा। शतधारं शतसङ्ख्याकक्षीर-

गौरन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ४८ ॥

इमꣳ साहस्रꣳ शतधारमुत्सं व्यच्यमानꣳ सरिरस्य मध्ये। घृतन्दुहानामदितिञ्जनायाग्ने मा हिꣳसीः परमे व्योमन्।

गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद। गवयन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ४९ ॥

धारायुत मतएवोत्सम् उत्सः कूपः तत्सदृशम् उत्सवद्बहुस्रोतस्कं बहुस्रोतस मित्यर्थः। सरिरस्य मध्ये एषु लोकेष्वन्तः व्यच्यमानं जनैर्विविध मच्यमान मुपजीव्यमानम्। इमे वै लोकाः सरिरमिति[1] श्रुतेः। जनाय सर्वलोकाय घृतं दुहानां घृतकारणं क्षीरं क्षरन्तीम्। अदिति मखण्डितम्। ते तवारण्यं गवयं गोसदृशं पशुविशेष मनुदिशामि। शिष्टमुक्तम् ॥ ४९ ॥ १—७,५,२,३४।

अथाविः। हे अग्ने परमे व्योमन् स्थाने स्थित मिम मविं मा हिंसीः। कीदृशं ऊर्णायु मूर्णावन्त मूर्णाया युम्। वरुणस्य नाभिं नाभि-

यजुषी तिसृणा मन्त्रे चीणि चीणि यजूंषि । हे अग्ने सहस्राक्षः सहस्रमक्षीणि यस्य सः हिरण्मयशकलरूपसहस्रनेत्रो मेधाय यज्ञाय चीयमानः चयनेन संस्क्रियमाणः सन् त्वमिमं द्विपादं पशुं पुरुषरूपं मा हिंसीः मा दह । हिरण्मयशकलैर्वाएष सहस्राक्षः द्विपाद्वाएष पशुर्यत्पुरुष इति[१] च श्रुतेः। यदि खादनेच्छा तर्हि मेधं शुद्धं मयुं पशुं तुरङ्गवदनं किम्पुरुषं पशुं जुषस्व सेवस्व भक्षयेत्यर्थः। किम्पुरुषो वै मयुरिति[२] श्रुतेः । मयुं कृष्णमृगं वा जुषस्व मयुर्मृगेऽश्ववदनइति कोशोक्तेः। तेन मयुभक्षणेन तन्वः ज्वालारूपास्तनूः चिन्वानः पोषय-

इमम्माहिᳫंसीर्द्विपादम्पशुᳫंसहस्राक्षोमेधायचीयमानः । मयुम्पशुम्मेधमग्नेजुषस्वतेनचिन्वानस्तन्वोनिषीद ।

मयुन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४७ ॥

इमम्माहिᳫंसीरेकशफम्पशुङ्कनिक्रदंवाजिनंवाजिनेषु । गौरमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद ।

न्निह निषीद द्वितीयार्थे तन्व इति प्रथमा । इतो यजुः ते तव शुक् शोकः सन्तापो मयुं किन्नरं मृगं वा ऋच्छतु प्राप्नोतु । किञ्च यं पुरुषं प्रति वयं द्विषः द्वेषं कुर्मः ते तव शुक् तमृच्छतु ॥४७॥ १——७,५,२,२९ । २——७,५,२,३२ । ३——७,५,२,३३ ।

अथाश्वस्य । हे अग्ने इम मेकशफ मेकखुरं पशु मश्वं मा हिंसीः। एकशफो वाएष पशुर्यदश्व इति[३] श्रुतेः। कीदृशं कनिक्राद मत्यन्त

नैर्ऋत्येऽज मुपदधाति । योऽग्निरग्निरूपोऽजोऽग्नेः प्रजापतेः शोकादध्यजायत अग्निसन्तापादुत्पन्नः । अत्राग्निः प्रजापतिः । उत वा अपि च दिवः शोकात्पृथिव्याश्च शोकाद्योऽजः पर्यजायत उत्पन्नः । अग्निपृथिवीदिवां शोकादजोत्पत्तिः श्रुत्योक्ता । यद्वै प्रजापतेः शोकादजायत तद्दिवश्चपृथिव्यै च शोकादजायतेति[1] । विश्वकर्मा स एव प्रजापतिः येनाजेन वाग्रूपेण प्रजा जजान-उत्पादितवान् । अजस्य वाग्रूपत्वं ततः प्रजोत्पत्तिः श्रुत्युक्ता । वाग्वाअजो वाचो वै प्रजा विश्वकर्मा जजानेति[2] । हे अग्ने चित्य ते तव हेडः क्रोधः तमजं परि-वृणक्तु परित्यजतु त्वयाजे कोपो न कार्यं इत्यर्थः ॥ माधवस्तु पृथिव्या उपरि स्थितादुत वा यद्वा दिवः परि द्युलोकोपरि स्थितात् शोकात् शुच दीप्तौ घञन्तः दीप्तियुक्तादग्नेः प्रजापतेः सकाशाद्योऽग्निरूपोऽजोऽध्यजायत विश्वकर्मा येनाजेन प्रजाः पशून्

योऽअग्निरग्नेरध्यजायतशोकात्पृथिव्याउतवादिवस्परि । येनप्रजाविश्वकर्म्माजजानतमग्नेहेडःपरितेवृणक्तु ॥४५॥

चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यवरुणस्याग्नेः । आप्राद्यावापृथिवीअन्तरिक्षꣳसूर्य्यआत्माजगतस्तस्थुषश्च ॥४६॥

जजान । अजस्य पशुसाधनत्वं तैत्तिरीयश्रुत्योक्तम् । ततोऽजस्तूपरः समभवत्तꣳ स्वायै देवताया आलभत ततो वै प्रजाः पशूनसृजतेति । शेषं पूर्ववत् ॥ ४५ ॥

१——७,५,२,२१ । २——७,५,२,२१ । ३——१०,५,१८ । ४——१०,५,१९ ।

का० चित्रं देवानामित्यर्धर्चशः स्रुवाहुती मध्यमे[3] । अर्धर्चद्वयेन पुरुषशिरस्याहुतिद्वयं जुहोतीत्यर्थः ॥ व्याख्याता (७,४२) ॥ ४६ ॥

का० बर्हिर्वेद्युदङ् तिष्ठन्नुपतिष्ठतउत्सर्गैरिमं मा हिꣳसीरिति प्रतिमन्त्रम्[4] । अग्नेरुत्तीर्य वेदेर्बहिर्दक्षिणे उदङ्मुखस्तिष्ठन्निमं मेत्यु-त्सर्गसंज्ञैः पञ्चमन्त्रैः पुरुषादिशिरांस्युपतिष्ठतेऽध्वर्युः एकपशुपक्षे तमेव पञ्चभिरित्यर्थः ॥ अग्निदेवत्याः पञ्च त्रिष्टुभः आद्ययोरन्ते द्वे

ऐश्वर्योपेतं यद्वा उन्दी क्लेदे उनत्ति क्लेदयति जनमनांसीतीन्द्रः उन्देरिच्चादेरिति कुप्रत्ययादीकारो अरुषं रोषरहितं यद्वा अरुर्मर्म मर्मस्थानीयं रहस्यम् आराध्यमित्यर्थः । पूर्वचित्तिं पूर्वैर्महर्षिभिः चित्तिं चेत्तव्यम् । नमोभिरन्नैर्भुरण्युं भर्तारं सर्वेषां पोष्टारम् । हे अग्ने एवं स्तूयमानः स त्वं गा मुपधीयमानां मा हिंसीः मा जहि । कीदृशी मदितिं मखण्डिता मदीनां वा विराजं विविधं राजमानाम् दुग्धदानाद्गौर्विराट् । तस्यै शृतं तस्यै शर इति[१] दशवीर्याभिप्रायं विराट्त्वम् । कीदृशः त्वं पर्वभिः पश्चिष्टकाभिरमावास्यादिपर्वभिर्वा ऋतुशः ऋतौ कल्पमानः कर्माणि सम्पादयन् ॥ ४३ ॥

अजस्रमिन्दुमरुषम्भुरण्युमग्निमीडेपूर्वचित्तिन्नमोभिः। सपर्व्वभिर्ऋतुशःकल्पमानोगाम्माहिꣳसीरदितिंविराजम्।४३

वरूत्रीन्त्वष्टुर्वरुणस्यनाभिमविञ्जज्ञानाꣳरजसःपरस्मात्। महीꣳसाहस्रीमसुरस्यमायामग्नेमाहिꣳसीःपरमेव्योमन् ।४४।

वायव्येऽविमिष्टिर उपदधाति । हे अग्ने परमे व्योमन् उत्कृष्टे रक्षणस्थाने स्थापिता मविं मा हिंसीः । कीदृशीं त्वष्टुः रूपाणां निर्मातुर्देवस्यानुग्रहाद्वरूत्रीं वृणोति कम्बलादिना छादयति लोकानिति वरूत्री ताम् । वरुणस्य नाभिं नाभिस्थानीयां नाभिवद्रक्षणीयाम् वारुणी त्वाष्ट्री चाविः । परस्माद्रजसः दिग्रूपाल्लोकाज्जज्ञानं जायमानम् । श्रोत्रं वै परमꣳ रजो दिशो वै श्रोत्रं दिशः परमꣳ रज इति[२] श्रुतेः । यद्वा परस्माद्रजसः प्रजापते रजोगुणाज्जायमानाम् । महीं महतीम् । साहस्रीं सहस्रमूल्यार्हां सहस्रोपकारक्षमां वा । असुरस्य माया मसवः प्राणा विद्यन्ते यस्य सोऽसुरः मत्वर्थे रः प्राणवतो मायां प्रज्ञां मीयते ज्ञायतेऽनया माया प्रज्ञा प्राणिनां प्रज्ञाप्रदामित्यर्थः ॥ ४४ ॥

१—— ३,२,३,२ । २ —— ७,५,२,२० ।

रूपं सर्वरूप मादित्यत्वात्सर्वरूपप्रकाशकमित्यर्थः। सर्वाणि रूपाणि यस्मात्। किञ्च हरसा सर्वत्रीर्योपहारक मग्नेर्ज्योतिर्हरस्तेना- ग्नितेजसा यजमानं परिवृङ्धि परिवर्जय। वृजी वर्जने रुधादिः लोट्। मा अभिमंस्थाः यजमानं मा हिंसीः। मन्यतेर्लुङ् अभि- पूर्वो मन्यतिर्हिंसार्थः। किञ्च चीयमानः उपधीयमानः सन् यजमानं शतायुषं शताब्दजीविनं कृणुहि कुरु॥ ४१॥

अश्वशिर इष्टकामुपदधाति। हे अग्ने चित्याग्ने त्व मश्व मिमं मा हिंसीः ज्वालया मा दह। कीदृशं वातस्य जूतिं जूतिर्गतिः प्रीतिर्वा वायोर्गतिस्वरूपं वायुवच्छीघ्रगतिमित्यर्थः। वायोः प्रीतिं प्रेमपात्रं वरुणस्य नाभिं जलेशस्य नाभिमिव नाभिः अन्तरं यथा नरेण स्वनाभिर्वस्त्रावरणादिना पाल्यते तद्वद्वरुणेनातिप्रियत्वात्पाल्यम्। यतः सरिरस्य सलिलस्य मध्ये समुद्रे जज्ञानं जायमानं। जन् जनने ह्वादिः शानच् गमहनेत्युपधालोपः अप्सुयोनिर्वा अश्व इति श्रुत्यन्तरात् अतएव नदीनां शिशुं बालं नदीपतिः समुद्रः

वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये। शिशुं नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः परमे व्योमन्॥२

पिता अतएव नदीनां मातृत्वात्तच्छिशुम्। हरिं हरितवर्णं यद्वारूढं नरं हरतीति हरिस्तम्। अद्रिबुध्न मद्रिर्गिरिः बुध्नं मूलं कारणं यासां ता अद्रिबुध्ना आपस्तज्जात मद्रिबुध्न मपत्यप्रत्ययलोपः। यद्वा बुध्नपदे नकारः उपजनश्छान्दसः। अद्रिबुध्न मद्रिभिर्बुद्धं ज्ञातम् पथि तत्खुरैः क्षुण्णानद्रीन् पाषाणान् दृष्ट्वा गरैर्ज्ञातं यदश्वोऽयं गत इति उत्प्रेक्षितमित्यर्थः। परमे व्योमन् एषु लोकेषु निषिद्धत्वमिति शेषः। इमे वै लोकाः परमं व्योमेति[1] श्रुतेः। यद्वा विविध मोम अवनं रक्षणम् परम मुत्कृष्टं यद्वोम नामोपद्रवेभ्यः पालनं तत्र स्थापितमिति शेषः॥ ४२॥

१——७,५,२,१८।

गोशिर आग्नेय्या मुपदधाति। अहं मग्नि मीडे स्तौमि ईड स्तुतौ। कीदृशं मजस्र मनुपक्षीणम्। इन्दुमिदि परमैश्वर्ये धुन्दतीतीन्दुः

हिरण्मयशकलदेवत्योष्णिक् द्वौ पादावष्टार्णौ तृतीयो द्वादशको व्यूहेन । दक्षिणश्रोत्रे शकलं प्रास्यति । अयमग्निः ज्योतिषा पशुश्रोत्रस्थित-हिरण्यतेजसा ज्योतिष्मान् तेजस्वी अस्तु रुक्मो रोचमानोऽग्निर्वर्चसा हिरण्यकान्त्या वर्चस्वान् कान्तिमानस्तु वाह्यप्रभा ज्योतिः शरीरगत-कान्तिर्वर्च इति ज्योतिर्वर्चसोर्भेदः । यद्वा श्रोत्रमेव हिरण्यज्योतिषाग्निरिव ज्योतिष्मदस्तु हिरण्यवर्चसा च वर्चस्वदस्तु रुक्म इव उभयत्रेवाध्याहारेण लिङ्गव्यत्ययेन च योजनेत्यर्थः ॥ का० सहस्रदा इति पुरुषशिर उद्गृह्य मध्ये[1] । पुरुषशिर आदायो-खामध्ये वक्ष्यमाणमन्त्रेणोपदधातीति सूत्रार्थः ॥ हे पुरुष त्वं सहस्रदाः सहस्रसङ्ख्यस्य दातासि अतः सहस्राय सहस्रधनलाभाय

अग्निर्ज्योतिषाज्योतिष्मान्रुक्मोवर्च्चसावर्च्चस्वान् । सहस्रदाअसिसहस्रायत्वा ॥ ४० ॥

आदित्यङ्गर्भम्पयसासमङ्धिसहस्रस्यप्रतिमांविश्वरूपम् । परिवृङ्धिहरसामाभिमᳪस्थाःशतायुषङ्कृणुहिचीयमानः ॥ ४१ ॥

त्वा त्वामुद्गृह्णामीति शेषः । आदौ पुरुषशिरसि शकलप्रासनं ततोऽश्वगोऽव्यजानां क्रमेण । एकपशुपक्षे मुखादिषु प्रत्येकं सप्त-सप्त पञ्चकत्व एकैकमित्यन्ये[2] ॥ ४० ॥

[1] — १७,५,१४ । [2] — का० १७,५,११; शतपथ० ७,५,२,१० । [3] — १७,५,१७ ।

का० आदित्यं गर्भमिति प्रतिमन्त्रं क्रमेण[3] । पुरुषादीनां शिरसि पञ्चमन्त्रक्रमेणैकैक मुपदधातीत्यर्थः ॥ पञ्च ऋचोऽग्निदेवत्या-स्त्रिष्टुभः । आदौ पुरुषशिर उपदधाति मध्ये । हे पुरुषशिरः त्व मादित्यं चित्याग्निं पयसा समङ्धि संस्रवय । अञ्जेर्लोटि मध्यमैक-वचने रूपम् । पयसि स्थाप्य इत्येवमुच्यते । आदत्ते पशूनादित्यवदीष्टे वा सर्वपशूना मित्यादित्यश्चित्योऽग्निः । कीदृश मादित्यं गर्भं गृह्णाति पशूनिति गर्भः पचाद्यच् ह्यग्रहोर्भश्छन्दसि तम् । सहस्रस्य प्रतिमां बहुधनस्य प्रतिमाभूतं बहुधनप्रदमित्यर्थः । विश्व-

सरित इव यथा नद्यः समुद्रं प्रति स्रवन्ति गच्छन्ति तद्वत्। न केवलं धेनाः स्रवन्ति घृतस्य धारा अपि स्रवन्ति। ताश्च धेना घृतधाराश्च हिरण्मयं पुरुषं प्रति स्रवन्तीरहमभिचाकशीमि पश्यामि। चाकशीतिः पश्यतिकर्मा यङ्लुगन्तः ॥ ३८ ॥

हिरण्यशकलदेवत्यार्षी बृहती पादार्णनियमाभावात् ॥ का० नासिकयोर्ऋचे त्वेति[1]। मन्त्राभ्यां पशूनां नसोः शकलप्रासन मित्यर्थः ॥ हे हिरण्यशकल ऋचे ऋग्वेदाय तदुक्तहौत्रादिसिद्धये त्वा त्वां वामनसि प्रास्यामि। रुचे दीप्तये शोभामाप्त्यै त्वां दक्षिणनसि प्रास्यामि। का० शिराऽऽसि प्रत्यक्षीति[2] आदौ वामनसि ततो दक्षिणे ॥ का० अक्ष्णोर्भासे त्वेति[3]। भासेत्वेति मन्त्राभ्यां नेत्रयोरुपरि हिरण्य-शकलप्रासनम् ॥ भासे कान्त्यै त्वां वामनेत्रे प्रास्यामि। ज्योतिषे तेजसे तत्प्राप्त्यै त्वां दक्षनेत्रे प्रास्यामि ॥ का० श्रोत्रयोरभूदिदमिति[4]।

**सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम्॥ ३८**

**ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा। अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ॥ ३९ ॥**

कर्णयोः प्रास्यति अभूदिद मग्निर्ज्योतिषेति मन्त्राभ्याम् ॥ इदं श्रोत्रं विश्वस्य सर्वस्य भुवनस्य भूतजातस्य वैश्वानरस्य विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितस्याग्नेश्च वाजिनं वार्चा ज्ञाप्त अभूत् सर्वप्राणिशब्दा वह्नेश्च शब्दोऽपि श्रोत्रेणैव ज्ञायतेऽतः श्रोत्रे हिरण्यं प्रास्यामीति शेषः। वाचमेति जानाति वाजिनं। वाच्पूर्वादेतेरौणादिको नक् प्रत्ययः छान्दसः कुत्वाभावः झलां जशोऽन्त इति जश्त्वम्। अयमग्निर्वैश्वानर इत्युपक्रम्य तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोतीति श्रुत्यनुवादकोऽयं मन्त्रः। यद्वायमर्थः इदं श्रोत्रेऽस्य-मानं हिरण्यं विश्वस्य भुवनस्य वैश्वानरस्याग्नेश्च वाजिनं वीर्यं तेजोजनकमभूत् भवति अतोऽस्यामीति ॥ ३९ ॥

1—१७,५,९। 2—१७,५,१२। 3—१७,५,१०। 4—१७,५,११।

आद्या भरद्वाजदृष्टा द्वितीया विरूपदृष्टा। हे देव दीप्यमान हे अग्ने ये साधवः दान्तास्ते तवाश्वासः त्वया अरं मत्व मत्यर्थं मन्यवे यज्ञाय वहन्ति प्रापयन्ति देवानिति शेषः तानश्वान्युङ्क्ष्व हि योजय। हि पादपूरणः॥ ३६ ॥

अग्ने त्वमश्वान्युङ्क्ष्व योजय हिशब्दः प्रसिद्धौ। कीदृशान् देवहूतमान् देवानाह्वयन्तीति देवहुवः अतिशयेन देवहुवो देवहूतमाः तान् देवाना मतिशयेनाह्वातॄन्। द्व्यचोऽतस्तिङ इति संहितायां युङ्क्ष्वेत्यस्य दीर्घः। दृष्टान्तमाह रथीरिव रथीः रथस्वामी यथाश्वान् योजयति तद्वत्। रथोऽस्यास्तीति रथीः ईर् मत्वर्थे। किञ्च त्वं पूर्व्यः पूर्वभवः पुरातनो होतामानुषाद्धोतुः प्रथमोऽग्रणी भूत्वा निसदः

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः। अरं वहन्ति मन्यवे॥ ३६ ॥

युक्ष्वा हि देवहूतमाँ२॥ अश्वाँ२॥ अग्ने रथीरिव। नि होता पूर्व्यः सदः॥ ३७ ॥

अस्मिन्यागे होतृषदने निषीद। छन्दसीति लोडर्थे लुङ्। देवहूतमानश्वानित्यत्रातोऽटि नित्यमिति आकारस्यानुनासिकत्वम् दीर्घादटीति नस्य रुः॥ ३७ ॥

१—१०,५,७। २—७,५,२,११। ३—७,५,२,११।

का० मुखे करोति सम्यक् स्रवन्तीति[१]। सम्यगिति मन्त्रेण पञ्चपशूनां मुखे एकैकं हिरण्यशकलं क्षिपतीति सूत्रार्थः॥ त्रिष्टुप्। लिङ्गोक्ता देवता त्रिष्टुप्। हिरण्मयपुरुषोदेश्गिनायं मन्त्रः। अग्नेर्मध्ये चितिमध्ये हिरण्मयो वेतसः पुरुषो यो निहितोऽस्ति तं प्रति धेना अन्नानि सम्यक् स्रवन्ति चरन्ति हूयमानानि हवींषि तं प्रति गच्छन्तीत्यर्थः। अन्नं वै धेना इति[२] श्रुतेः। कीदृश्यो धेनाः मनसा पूयमानाः पवित्रीक्रियमाणाः कीदृशेन मनसा अन्तर्हृदा हृदयान्तर्वर्तमानेन हृत्प्रतिष्ठितेन विषयव्यावृत्तेनाव्याकुलेनेत्यर्थः। श्रद्धा-युक्तेन मनसा दत्ता इत्यर्थः। अन्तर्वै हृदयेन मनसा सताान्नं पूतं यजुरिति[३] श्रुतेः। तत्र दृष्टान्तः सरितो न नकार इवार्थः

खापुरस्ताद्भूमौ प्रक्षिप्य तत्रोखां मन्त्रद्वयेनोपदध्यादिति सूत्रार्थः ॥ उखादेवत्या त्रिष्टुप्। हे उखे धरुणा जगतो धारयित्री त्वं ध्रुवा स्थिरासि अथाग्निजनकत्वेनोखा स्तूयते । योऽग्निरितोऽस्याः उखायाः सकाशात् प्रथम मादौ जातवेदाः जातप्रज्ञानोऽग्निरधिजज्ञे तत एभ्यो योनिभ्यः स्वकारणेभ्योऽधिजज्ञे जायते । सोऽग्निः प्रजानन् स्वाधिकारं प्रकर्षेण जानानः सन् गायत्र्या त्रिष्टुभानुष्टुभेति छन्द स्त्रयेण देवेभ्यो देवार्थं हव्य मस्मद्धविर्वहतु ॥ ३४ ॥

उखादेवत्या बृहती । हे उखे त्वं रमस्व अत्र क्रीड़ां कुरु किमर्थम् इषे अन्नार्थं राये धनार्थं सहसे बलाय द्युम्ने द्युम्नाय यशोऽर्थं मं। द्युम्नं द्योततेर्यशो वान्नं वेति[१] यास्कः । ऊर्जे उपसेचनाय पयोदधिघृतादिकाय अपत्याय पुत्रपौत्रादिकाय । रमस्वेति सर्वत्र सम्बन्धः।

**ध्रुवासिधरुणेतोजज्ञेप्रथममेभ्योयोनिभ्योअधिजातवेदाः। सगायत्र्यात्रिष्टुभानुष्टुभाचदेवेभ्योहव्यंवहतुप्रजानन् ॥३४**

**इषेरायेरमस्वसहसेद्युम्नऊर्ज्जेअपत्याय । सम्राडसिस्वराडसिसारस्वतौत्वोत्सौप्रावताम् ॥ ३५ ॥**

किञ्च सम्यग्राजतइति सम्राडसि स्वेनैव राजतइति स्वराडसि। एवम्भूतां त्वां सारस्वतौ सरस्वतीसम्बन्धिनौ उत्सौ उत्स्यन्दनौ कूपौ प्रवाहौ वा त्वा त्वां प्रावतां प्रकर्षेण पालयताम् । तौ चोत्सौ मनोवाचौ। आस्वज्ञानाय कूपइवोत्स्यन्दतीति मनः कूपः तत्प्रतिपादनं कुर्वन्ती वागपि कूपः। मनो वै सरस्वान्वाक् सरस्वत्यै तौ सारस्वतावुत्साविति[२] श्रुतिः। यद्वा सारस्वतौ उत्सौ ऋग्वेदसामवेदौ त्वां रक्षताम् । तथाच तित्तिरिश्रुतिः ऋक्साम वै सारस्वतावुत्साविति ॥ ३५ ॥ १——निरु० ५,५ । २——७,५,१,१२ । ३——१०,५,५ ।

का० अग्ने युङ्क्ष्वा होति प्रत्यृचं स्रुवाहुती जुहोत्युखायाम्[३] । ऋग्द्वयेनोखामध्ये द्वे आहुती जुहोति ॥ अग्निदेवत्ये द्वे गायत्र्यौ

यजुषो तिसृणा मन्त्रे चीणि-चीणि यजूंषि। हे अग्ने सहस्राक्षः सहस्रमक्षीणि यस्य सः हिरण्यशकलरूपसहस्रनेत्रो मेधाय यज्ञाय चीयमानः चयनेन संस्क्रियमाणः सन् त्वमिमं द्विपादं पशुं पुरुषरूपं मा हिंसीः मा दह। हिरण्यशकलैर्वा एष सहस्राक्षः द्विपाद्वा एष पशुर्यत्पुरुष इति[१] च श्रुतेः। यदि खादनेच्छा तर्हि मेधं शुद्धं मयुं पशुं तुरङ्गवदनं किम्पुरुषं पशुं जुषस्व सेवस्व भक्षयेत्यर्थः। किम्पुरुषो वै मयुरिति[१] श्रुतेः। मयुं कृष्णमृगं वा जुषस्व मयुर्मृगोऽश्ववदनश्चेति कोशोक्तेः। तेन मयुभक्षणेन तन्वः ज्वालारूपास्तनूः चिन्वानः पोषय-

इमम्मा हिꣳसीर्द्विपादम्पशुꣳ सहस्राक्षो मेधाय चीयमानः। मयुम्पशुम्मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो निषीद।

मयुन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ४७ ॥

इमम्मा हिꣳसीरेकशफम्पशुङ्कनिक्रदं वाजिनं वाजिनेषु। गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद।

न्निह निषीद द्वितीयार्थे तन्व इति प्रथमा। इतो यजुः ते तव शुक् शोकः सन्तापो मयुं किन्नरं मृगं वा ऋच्छतु प्राप्नोतु। किञ्च यं पुरुषं प्रति वयं द्विष्मः द्वेषं कुर्मः ते तव शुक् तमृच्छतु ॥४७॥ १——७,५,२,२९। २——७,५,२,३२। ३——७,५,२,३३।

अथाश्वस्य। हे अग्ने इम मेकशफ मेकखुरं पशु मश्वं मा हिंसीः। एकशफो वा एष पशुर्यदश्व इति[२] श्रुतेः। कीदृशं कनिक्रद मत्यन्तं

नैर्ऋत्यैऽज मुपदधाति। योऽग्निरग्निरूपोऽजोऽग्नेः प्रजापतेः शोकादध्यजायत अग्निसन्तापादुत्पन्नः। अत्राग्निः प्रजापतिः। उत वा अपि च दिवः शोकात्पृथिव्याश्च शोकाद्योऽजः पर्यजायत उत्पन्नः। अग्निपृथिवीदिवां शोकादजोत्पत्तिः श्रुत्योक्ता। यद्वै प्रजापतेः शोकादजायत तद्दिवश्चपृथिव्यै च शोकादजायतेति[1]। विश्वकर्मा स एव प्रजापतिः येनाजेन वायुरूपेण प्रजा जजान उत्पादितवान्। अजस्य वायुरूपत्वं ततः प्रजोत्पत्तिः श्रुत्युक्ता। वाग्वाअजो वाचो वै प्रजा विश्वकर्मा जजानेति[2]। हे अग्ने चित्य ते तव हेडः क्रोधः तमजं परिवृणक्तु परित्यजतु त्वयाजे कोपो न कार्य इत्यर्थः॥ माधवस्तु पृथिव्या उपरि स्थितादुत वा यद्वा दिवः परि द्युलोकोपरि स्थितात् शोकात् शुच दीप्तौ पचाद्यन्तः दीप्तियुक्तादग्नेः प्रजापतेः सकाशाद्योऽग्निरूपोऽजोऽध्यजायत विश्वकर्मा येनाजेन प्रजाः पशून्

योऽअग्निरग्नेरध्यजायतशोकात्पृथिव्याउतवादिवस्परि। येनप्रजाविश्वकर्म्माजजानतमग्नेहेडःपरितेवृणक्तु॥४५॥

चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यवरुणस्याग्नेः। आप्राद्यावापृथिवीअन्तरिक्षᳬसूर्य्यआत्माजगतस्तस्थुषश्च॥४६॥

जजान। अजस्य पशुसाधनत्वं तैत्तिरीयश्रुत्योक्तम्। ततोऽजस्तूपरः समभवत्त[3] स्वायै देवताया आलभत ततो वै प्रजाः पशूनसृजतेति। शेषं पूर्ववत्॥ ४५॥

[1] ७,५,२,२१। [2] ७,५,२,२१। [3] १०,५,१८। [4] १०,५,१९।

का० चित्रं देवानामित्यर्धर्चाभ्यः स्रुवाहुती मध्यमे[1]। अधर्चद्वयेन पुरुषशिरस्याहुतिद्वयं जुहोतीत्यर्थः॥ व्याख्याता (७,४२)॥ ४६॥

का० वर्हिर्वेद्युदङ् तिष्ठन्नुपतिष्ठतउत्सर्गैरिमं मा हिᳬसीरिति प्रतिमन्त्रम्[4]। अग्नेरुत्तीर्य वेदेर्बहिर्दक्षिणे उदङ्मुखस्तिष्ठन्निमं मेत्युत्सर्गसञ्ज्ञैः पञ्चमन्त्रैः पुरुषादिशिरांस्युपतिष्ठतेऽध्वर्युः एकपशुपक्षे तमेव पञ्चभिरित्यर्थः॥ अग्निर्देवत्याः पञ्च त्रिष्टुभः आद्ययोरन्ते हे

ऐश्वर्योपेतं यद्वा उन्दी क्लेदे उनत्ति क्लेदयति जनमनांसीतीन्दुः उन्देरिच्चादेरिति कुप्रत्ययादीकारो अरुषं रोषरहितं यद्वा अरुर्मर्म मर्मस्थानीयं रहस्यम् आराध्यमित्यर्थः । पूर्वचित्तिं पूर्वैर्महर्षिभिः चित्तिं चेतव्यम् । नमोभिरन्नैः भुरण्युं भर्तारं सर्वेषां पोष्टारम् । हे अग्ने एवं स्तूयमानः स त्वं गा मुपधीयमानां मा हिंसीः मा जहि । कीदृशी मदिति मखण्डिता मदीनां वा विराजं विविधं राजमानाम् दुग्धदानाद्गौर्विराट् । तस्मै शृतं तस्यै शर इति[1] दशवीर्याभिप्रायं विराट्त्वम् । कीदृशः त्वं पर्वभिः पक्षिष्टकाभिरमावास्यादिपर्वभिर्वा ऋतुथः ऋतौ कल्पमानः कर्माणि सम्पादयन् ॥ ४३ ॥

**अजस्रमिन्दुमरुषम्भुरण्युमग्निमीडे पूर्वचित्तिन्नमोभिः । सपर्व्वभिर्ऋतुथः कल्पमानो गाम्मा हिꣳसीरदितिं विराजम् ॥४३**

**वरूत्रीन्त्वष्टुर्वरुणस्य नाभिमविञ्जज्ञानाꣳ रजसः परस्मात् । महीꣳ साहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन् ॥ ४४ ॥**

वायव्येऽविमिष्टिर उपदधाति । हे अग्ने परमे व्योमन् उत्कृष्टे रक्षणस्थाने स्थापिता मविं मा हिंसीः । कीदृशीं त्वष्टुः रूपाणां निर्मातुर्देवस्यानुग्रहाद्वरूत्रीं वृणोति कम्बलादिना छादयति लोकानिति वरूत्री ताम् । वरुणस्य नाभिं नाभिस्थानीयां नाभिवद्रक्षणीयाम् वारुणी त्वाष्ट्री चाविः । परस्माद्रजसः दिव्यूपाल्लोकाज्जायमानं जायमानम् । श्रोत्रं वै परमꣳ रजो दिशो वै श्रोत्रं दिशः परमꣳ रज इति[2] श्रुतेः । यद्वा परस्माद्रजसः प्रजापते रजोगुणाज्जायमानाम् । महीं महतीम् । साहस्रीं सहस्रमूल्यार्हां सहस्रोपकारक्षमां वा । असुरस्य माया मसवः प्राणा विद्यन्ते यस्य सोऽसुरः मत्वर्थे रः प्राणवतो मायां प्रज्ञां मीयते ज्ञायतेऽनया माया प्रज्ञा प्राणिनां प्रज्ञाप्रदामित्यर्थः ॥ ४४ ॥

१——३,२,३,२ । २——७,५,१,१० ।

रूपं सर्वरूप मादित्यत्वात्सर्वरूपप्रकाशकमित्यर्थः । सर्वाणि रूपाणि यस्मात् । किञ्च हरसा सर्ववीर्यापहारक मग्नेर्ज्योतिर्हरस्तेनाग्नितेजसा यजमानं परिवृङ्धि परिवर्जय । वृजी वर्जने रुधादिः लोट् । मा अभिमंस्थाः यजमानं मा हिंसीः । मन्यतेर्लुङ् अभिपूर्वो मन्यतिर्हिंसार्थः । किञ्च चीयमानः उपधीयमानः सन् यजमानं शतायुषं शताब्दजीविनं कृणुहि कुरु ॥ ४१ ॥

अश्वशिर ईशाने उपदधाति । हे अग्ने चित्याग्ने त्व मश्व मिमं मा हिंसीः ज्वालया मा दह । कीदृशं वातस्य जूतिं जूतिर्गतिः प्रीतिर्वा वायोर्गतिस्वरूपं वायुवच्छीघ्रमतिमित्यर्थः । वायोः प्रीतिं प्रेमपात्रं वरुणस्य नाभिं जलेशस्य नाभिमिव नाभिः अन्तरं यथा नरेण स्वनाभिर्वस्त्रावरणादिना पाल्यते तद्वद्वरुणेनातिप्रियत्वात्पाल्यम् । यतः सरिरस्य सलिलस्य मध्ये समुद्रे जज्ञानं जायमानं । जन् जनने ह्वादिः शानच् गमहनेत्युपधालोपः अप्सुयोनिर्वा अश्व इति श्रुत्यन्तरात् अतएव नदीनां शिशुं बालं नदीपतिः समुद्रः

वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये । शिशुन्नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः परमे व्योमन् ।२

पिता अतएव नदीनां मातृत्वात्तच्छिशुम् । हरिं हरितवर्णं यद्वारूढं नरं हरतीति हरिस्तम् । अद्रिबुध्न मद्रिर्गिरिः बुध्नं मूलं कारणं यासां ता अद्रिबुध्ना आपस्तज्जात मद्रिबुध्न मपत्यप्रत्ययलोपः । यद्वा बुध्नपदे नकारः उपजनश्छान्दसः । अद्रिबुद्ध मद्रिभिर्बुद्धं ज्ञातम् पथि तत्खुरैः क्षुण्णानद्रीन् पाषाणान् दृष्ट्वा नरैर्ज्ञातं यदनेनाश्वो गत इति उत्कृष्टमित्यर्थः । परमे व्योमन् एषु लोकेषु निविष्टमिति शेषः । इमे वै लोकाः परमं व्योमेति[1] श्रुतेः । यद्वा विविध मोम अवनं रक्षणम् परम मुत्कृष्टं यद्व्योम मानोपद्रवेभ्यः पालनं तत्र स्थापितमिति शेषः ॥ ४२ ॥

१ —— ७,५,२,१८ ।

गोशिर आग्नेय्या मुपदधाति । अहं मग्नि मीडे स्तौमि ईड स्तुतौ । कीदृश मजस्र मनुपक्षीणम् । इन्दु मिदि परमैश्वर्ये इन्दतीतीन्दुः

हिरण्यशकलदेवत्योष्णिक् द्वौ पादावष्टार्णौ तृतीयो द्वादशको व्यूहेन । दक्षिणश्रोत्रे शकलं प्रास्यति । अयमग्निः ज्योतिषा पश्चश्रोतस्थित-हिरण्यतेजसा ज्योतिष्मान् तेजस्वी अस्तु रुक्मो रोचमानोऽग्निर्वर्चसा हिरण्यकान्त्या वर्चस्वान् कान्तिमानस्तु बाह्यप्रभा ज्योतिः शरीरगत-कान्तिर्वर्च इति ज्योतिर्वर्चसोर्भेदः । यद्वा श्रोत्रमेव हिरण्यज्योतिषाग्निरिव ज्योतिष्मदस्तु हिरण्यवर्चसा च वर्चस्वदस्तु रुक्म इव उभयत्रैवाध्याहारेण लिङ्गव्यत्ययेन च योजनेत्यर्थः ॥ का० सहस्रदा इति पुरुषशिर उद्गृह्य मध्ये[1] । पुरुषशिर आदायो-खामध्ये वक्ष्यमाणमन्त्रेणोपदधातीति सूत्रार्थः ॥ हे पुरुष त्वं सहस्रदाः सहस्रसङ्ख्यस्य दातासि अतः सहस्राय सहस्रधनलाभाय

अ॒ग्निर्ज्योति॑षा॒ ज्योति॑ष्मान्रु॒क्मो वर्च॑सा॒ वर्च॑स्वान् । स॒ह॒स्र॒दा अ॑सि स॒हस्रा॑य त्वा ॥ ४० ॥

आ॒दि॒त्यं गर्भं॒ पय॑सा॒ सम॑ङ्धि स॒हस्र॑स्य प्रति॒मां वि॒श्वरू॑पम् । परि॑ वृङ्धि॒ हर॑सा॒ माभि म॑ꣳस्थाः श॒तायु॑षं कृणुहि ची॒यमा॑नः ॥ ४१ ॥

त्वा त्वामुद्गृह्णामीति शेषः । आदौ पुरुषशिरसि शकलप्रासनं ततोऽश्वगोऽव्यजानां क्रमेण । एकपशुपक्षे मुखादिषु प्रत्येकं सप्त-सप्त पञ्चकत्व एकैकमित्यन्ये[2] ॥ ४० ॥

१—१७,५,१४ । २—का० १७,५,११; शतपथ० ७,५,२,१० । ३—१७,५,१७ ।

का० आदित्यं गर्भमिति प्रतिमन्त्रं क्रमेण[3] । पुरुषादीनां शिरसि पञ्चमन्त्रक्रमेणैकैक मुपदधातीत्यर्थः ॥ पञ्च ऋचोऽग्निदेवत्या-स्त्रिष्टुभः । आदौ पुरुषशिर उपदधाति मध्ये । हे पुरुषशिरः त्व मादित्यं चिताग्निं पयसा समङ्धि संस्त्रवय । अङ्ग्धीति मध्यमैक-वचने रूपम् । पयसि स्थाप्य इत्येवमुच्यते । आदत्ते पशूनादित्यवदीष्टे वा सर्वपशूना मित्यादित्यश्चित्योऽग्निः । कीदृश मादित्यं गर्भं गृह्णाति पशूनिति गर्भः पचाद्यच् हृग्रहोर्भश्छन्दसि तम् । सहस्रस्य प्रतिमां बहुधनस्य प्रतिमाभूतं बहुधनप्रदमित्यर्थः । विश्व-

सरित इव यथा नद्यः समुद्रं प्रति स्रवन्ति गच्छन्ति तद्वत्। न केवलं धेनाः स्रवन्ति घृतस्य धारा अपि स्रवन्ति। ताश्च धेना घृतधाराश्च हिरण्मयं पुरुषं प्रति स्रवन्तीरहमभिचाकशीमि पश्यामि। चाकशीतिः पश्यतिकर्मा यङ्लुगन्तः ॥ ३८ ॥

हिरण्यशकलदेवत्यार्षी बृहती पादार्णनियमाभावात् ॥ का० नासिकयोर्ऋचे त्वेति[1]। मन्त्राभ्यां पृथूनां नसोः शकलप्रासन मित्यर्थः ॥ हे हिरण्यशकल ऋचे ऋग्वेदाय तदुक्तहौत्रादिसिद्धये त्वा त्वां वामनसि प्रास्यामि। रुचे दीप्तये शोभाप्राप्त्यै त्वां दक्षिणनसि प्रास्यामि। का० शिराᳪसि प्रत्यञ्चीति[2] आदौ वामनसि ततो दक्षिणे ॥ का० अक्ष्योर्भासे त्वेति[3]। भासेत्वेति मन्त्राभ्यां नेत्रयोस्तद्वद्धिरण्यशकलप्रासनम् ॥ भासे कान्त्यै त्वां वामनेत्रे प्रास्यामि। ज्योतिषे तेजसे तत्प्राप्त्यै त्वां दक्षनेत्रे प्रास्यामि ॥ का० श्रोत्रयोरभूदिदमिति[4]।

सम्यक्स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥ ३८ ॥ (printed: सम्यक्स्रवन्तिसरितोनधेनाअन्तर्हृदामनसापूयमानाः। घृतस्यधाराअभिचाकशीमिहिरण्ययोवेतसोमध्यआसाम्॥३८)

ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा। अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ॥ ३९ ॥

कर्णयोः प्रास्यति अभूदिद मग्निर्ज्योतिषेति मन्त्राभ्याम् ॥ इदं श्रोत्रं विश्वस्य सर्वस्य भुवनस्य भूतजातस्य वैश्वानरस्य विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितस्याग्नेश्च वाजिनं वाचां ज्ञातृ अभूत् सर्वप्राणिशब्दा वह्नेश्च शब्दोऽपि श्रोत्रेणैव ज्ञायतेऽतः श्रोत्रे हिरण्यं प्रास्यामीति शेषः। वाचमेति जानाति वाजिनं। वाचपूर्वादेतेरौणादिको नक् प्रत्ययः छान्दसः कुत्वाभावः झलां जशोऽन्त इति जश्त्वम्। अयमग्निर्वैश्वानर इत्युपक्रम्य तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोतीति श्रुत्यनुवादकोऽयं मन्त्रः। यद्वायमर्थः इदं श्रोत्रेऽस्यमानं हिरण्यं विश्वस्य भुवनस्य वैश्वानरस्याग्नेश्च वाजिनं वीर्यं तेजोजनकमभूत् भवति अतोऽस्यामीति ॥ ३९ ॥

१——१०,५,९। २——१७,५,१३। ३——१७,५,१०। ४——१०,५,११।

भाद्या भरद्वाजदृष्टा द्वितीया विरूपदृष्टा । हे देव दीप्यमान हे अग्ने ये साधवः दान्तास्ते तवाश्वासः त्वया भर मत्र मत्यर्थं मन्यवे

यज्ञाय वहन्ति प्रापयन्ति देवानिति शेषः तानश्वान्युक्ष्व हि योजय । हि पादपूरणः ॥ ३६ ॥

देवान् आह्वयन्तीति देवहुवः अतिशयेन देवहुवो देवहूतमाः

अग्ने त्वमश्वान्युक्ष्व योजय हिशब्दः प्रसिद्धौ । कीदृशान् देवहूतमान् देवानाह्वयन्तीति देवहुवः अतिशयेन देवहुवो देवहूतमाः

तान् देवाना मतिशयेनाह्वातॄन् । द्व्यचोऽतस्तिङ इति संहितायां युक्ष्वेत्यस्य दीर्घः । दृष्टान्तमाह रथीरिव रथी: रथस्वामी यथाश्वान्

योजयति तद्वत् । रथोऽस्यास्तीति रथी: ईर् मत्वर्थे । किञ्च त्वं पूर्व्यः पूर्वभवः पुरातनो होतामानुषाद्धोतुः प्रथमोऽग्नौ भूत्वा निसदः

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्ति मन्यवे ॥ ३६ ॥

युक्ष्वा हि देवहूतमाँ२॥ अश्वाँ२॥ अग्ने रथीरिव । नि होता पूर्व्यः सदः ॥ ३७ ॥

अस्मिन्यागे होतृषद्ने निषीद । छन्दसीति लोडर्थे लुङ्[1] । देवहूतमानश्वानित्यत्रातोऽटि नित्यमिति[2] आकारस्यानुनासिकत्वम् दीर्घादटीति[3] नस्य रुः ॥ ३७ ॥

१——१०,४,७ । २——७,५,२,११ । ३——७,५,२,११ ।

सम्यगिति मन्त्रेण पञ्चपशूनां मुखे एकैकं हिरण्यशकलं क्षिपतीति सूत्रार्थः ॥ त्रिष्टुप्

मुखे करोति सम्यक् स्रवन्तीति[1] । सम्यगिति मन्त्रेण पञ्चपशूनां मुखे एकैकं हिरण्यशकलं क्षिपतीति सूत्रार्थः ॥ त्रिष्टोता-

का० मुखे करोति सम्यक् स्रवन्तीति[1] । अग्नेर्मध्ये चितिमध्ये हिरण्मयो वेतसः पुरुषो यो निहितोऽस्ति तं प्रति धेना

देवता त्रिष्टुप् । हिरण्मयपुरुषोद्देशेनायं मन्त्रः । अग्नेर्मध्ये चितिमध्ये हिरण्मयो वेतसः पुरुषो यो निहितोऽस्ति तं प्रति धेना

अन्नानि सम्यक् स्रवन्ति क्षरन्ति हूयमानानि हवींषि तं प्रति गच्छन्तीत्यर्थः । अन्नं वै धेना इति[2] श्रुतेः । कीदृश्यो धेनाः मनसा

पूयमानाः पवित्रीक्रियमाणाः कीदृशेन मनसा अन्तर्हृदा हृदयान्तर्वर्तमानेन हृत्प्रतिष्ठितेन विषयव्यावृत्तेनाव्याकुलेनेत्यर्थः । अन्ना-

युक्तेन मनसा दत्ता इत्यर्थः । अन्तर्वै हृदयेन मनसा सताऽन्नं पूतं यजुरिति[2] श्रुतेः । तत्र दृष्टान्तः सरितो न नकार इवार्थः

खापुरस्ताद्भूमौ प्रक्षिप्य तचोखां मन्त्रद्वयेनोपदध्यादिति सूत्रार्थः ॥ उखादेवत्या त्रिष्टुप्। हे उखे धरुणा जगतो धारयित्री त्वं ध्रुवा स्थिरासि अथाग्निजनकत्वेनोखा स्तूयते । योऽग्निरितोऽस्याः उखायाः सकाशात् प्रथम मादौ जातवेदाः जातप्रज्ञानोऽग्निरधिजज्ञे तत एभ्यो योनिभ्यः स्वकारणेभ्योऽधिजज्ञे जायते । सोऽग्निः प्रजानन् स्वाधिकारं प्रकर्षेण जानानः सन् गायत्र्या त्रिष्टुभानुष्टुभेति छन्दोरूपेण देवेभ्यो देवार्थं हव्य मस्मद्दविर्वहतु ॥ ३४ ॥

उखादेवत्या बृहती । हे उखे त्वं रमस्व अत्र क्रीडां कुरु किमर्थम् इषे अन्नार्यं राये धनार्थं सहसे बलाय द्युम्ने द्युम्नाय यशोऽर्थम्। द्युम्नं द्योततेर्यशो वान्नं वेति[1] यास्कः। ऊर्जे उपसेचनाय पयोदधिघृतादिकाय अपत्याय पुत्रपौत्रादिकाय । रमस्वेति सर्वत्र सम्बन्धः।

ध्रुवासि धरुणेतोजज्ञे प्रथममेभ्यो योनिभ्यो अधिजातवेदाः । स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥ ३४

इषे राये रमस्व सहसे द्युम्न ऊर्ज्जे अपत्याय । सम्राडसि स्वराडसि सारस्वतौ त्वोत्सौ प्रावताम् ॥ ३५ ॥

किञ्च सम्यग्राजतइति सम्राडसि स्वेनैव राजतइति स्वराडसि। एवम्भूतां त्वां सारस्वतौ सरस्वतीसम्बन्धिनौ उत्सौ उत्स्यन्दनौ कूपौ प्रवाहौ वा त्वा त्वां प्रावतां प्रकर्षेण पालयताम् । तौ चोत्सौ मनोवाचौ। शास्त्रज्ञानाय कूपइवोत्स्यन्दतीति मनः कूपः तत्प्रतिपादनं कुर्वन्ती वागपि कूपः। मनो वै सरस्वान्वाक् सरस्वत्यं तौ सारस्वतावुत्साविति[2] श्रुतिः। यद्वा सारस्वतौ उत्सौ ऋग्वेदसामवेदौ त्वां रक्षताम् । तथाच तैत्तिरिश्रुतिः ऋक्साम वै सारस्वतावुत्साविति ॥ ३५ ॥

१——नि६० ५,५ । २——७,५,१,१२ । ३——१७,५,५ ।

का० अग्ने युक्ष्वा हीति प्रत्यृचं स्रुवाहुती जुहोत्युखायाम्[3] । ऋग्द्वयेनोखामध्ये द्वे आहुती जुहोति ॥ अग्निदेवत्ये द्वे गायत्र्यौ

का० घट्टयति मध्यमयेति[१]। तिसृणां मध्यमया त्रीन्त्समुद्रानिति ऋचा हस्तस्थमेव कूर्मं कम्पयतीति सूत्रार्थः। कूर्मदेवत्या त्रिष्टुप्। हे कूर्म यो भवान् त्रीन् समुद्रान् लोकान् समसृपत् सम्यक् प्राप्तो भवति। सृप्लृ गतौ पुषादीत्यादिना च्लेरङ्। समुद्रवन्ति स्वकारणात्समुद्भवन्तीति समुद्रा लोकास्तान् कीदृशान् स्वर्गान् भोगसाधनभूतान्। कीदृशो भवान् अपां पतिः जलेशः इष्टकानां वृषभः वर्षिता। किञ्च यत्र यस्मिन्स्थाने पूर्वे पुरातनाः कूर्माः अन्वेष्वग्निषूपहिताः परेताः परागताः सुकृतस्य शोभनकृतस्याग्नेस्तत् तस्मिन् लोके स्थाने त्वं गच्छ। किं कुर्वन् पुरीषं हुतान् पशून् वसानः आच्छादयन्॥ ३१ ॥ व्याख्याता(८,३२)॥ ३२ ॥ १-१७,५,२।

त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानपाम्पतिर्वृषभऽइष्टकानाम्। पुरीषंवसानःसुकृतस्यलोकेतत्रगच्छयत्रपूर्वेपरेताः॥३१॥

महीद्यौःपृथिवीचनऽइमंयज्ञम्मिमिक्षताम्। पिपृतान्नोभरीमभिः॥ ३२ ॥

विष्णोःकर्म्माणिपश्यतयतोव्रतानिपस्पशे। इन्द्रस्ययुज्यःसखा॥ ३३ ॥

का० उलूखलमुसले स्वयमातृण्णा मुत्तरेणारत्निमात्रे औदुम्बरे प्रादेशमात्रे चतुरस्रं मुलूखलं मध्यसङ्गृहीत मूर्ध्वं वृत्तं दक्षिणं मुलूखलाद्विष्णोः कर्माणीति[२]। चतुष्कोणं मध्यसङ्कुचितं खातहीन मुदुम्बरतरुज मूर्ध्वं मुलूखलम् वृत्तं मुसलम् ते उभे स्वयमातृण्णोत्तरे देशे तन्मध्याद्धस्तमात्रे तृतीये लोके विष्णोरिति मन्त्रेण सहैवोपदधातीति सूत्रार्थः॥ व्याख्याता(६,४) ॥ ३३ ॥ २-१७,५,३। ३-१७,५,४।

का० उलूखल उखां कृत्तिपशयां पिष्ट्वा न्युप्य पुरस्ताद् ध्रुवासीत्युखाम्[३]। पूर्वं मुलूखलोपर्युखां तृष्णीं कृत्वा तत उपशयां मृदं पिष्ट्वो-

वनस्पतिरश्वत्थादिर्नोऽस्माकं मधुमान् रसवान्यज्ञसाधनभूतोऽस्तु सूर्यो मधुमान्सन्तापराहित्यलक्षणमाधुर्यरसोपेतोऽस्तु गावः यज्ञसाधनभूता रश्मयः नोऽस्माकं माध्वीः मधुमत्यो भवन्तु। रसो वै मध्विति[1] श्रुतेः। वातादीनि रसवन्त्यस्माकं भोग्यानि भवन्त्विति सर्वोऽर्थः ॥ २९ ॥

का० अरत्निमात्रेऽषाढां दक्षिणेनावकासूपरिष्टाच्च पुरुष मभिमुख मपां गम्भन्निति तिसृभिः[2] । अषाढादक्षिणदेशे हस्तमात्रे पद्यालोकद्वय मन्तराले मुक्त्वा तृतीये पद्यालोके पूर्वमेव स्थापितास्ववकासु शैवालेषु पुरुषसम्मुख मृत्त्रयेण कूर्म मुपदधातीति सूत्रार्थः ॥ स्वराट् पङ्क्तिः दशाक्षरचतुष्पादा तृतीयो द्वादशाक्षरः कूर्मदेवत्या। कूर्मः प्रजापतिरादित्यो वा। तृतीया द्यावापृथिवीया। हे कूर्म अपां

मधुमान्नोवनस्पतिर्मधुमाँ२॥अस्तुसूर्यः। माध्वीर्गावोभवन्तुनः ॥ २९ ॥

अपाङ्गम्भन्त्सीदमात्वासूर्योभितात्सीन्माग्निर्वैश्वानरः। अच्छिन्नपत्राःप्रजाअनुवीक्षस्वानुत्वादिव्यावृष्टिःसचताम्।३०

जलानां गम्भन् गम्भनि गम्भीरे स्थाने रविमण्डले त्वं सीद उपविश। एतद्वा अपां गम्भिष्ठं यत्रैष एतत्तपतीति[3] श्रुतेः। तत्रोपविष्टं त्वा त्वां सूर्यो माभितात्सीत् अभितो मा सन्तापयतु। वैश्वानरः सर्वानरहितोऽग्निश्च मा सन्तापयतु। त्वं चात्र स्थितः सन् प्रजा इष्टकारूपा अनुवीक्षस्व निरन्तरं पश्य। कीदृशीः प्रजाः अच्छिन्नपत्राः अच्छिन्नान्यनवखण्डितानि पत्राणि अवयवा यासां ताः अखण्डिता इष्टकाः कुर्वित्यर्थः। इमा वै सर्वाः प्रजा या इमा इष्टकास्ता अरिष्टा अनार्त्ता अनुवीक्षस्वेति[4] श्रुतेः। किञ्च दिव्या दिवि भवा वृष्टिः त्वा त्वामनु सचतां सेवता मुदकेन नित्यं सिक्तो भवेत्यर्थः ॥ ३० ॥ १—७,५,१,४। २—१०,४,२८;५,१। ३—७,५,१,८। ४—७,५,१,८।

मेव तामुपादधत् तामुपधायासुरान्त्सपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त तस्मादषाढेति[1]। कीदृशी त्वं सहमाना सहतइति सहमाना अभिभवनशीला स्वभावतः अतोऽरातीः अदानशीलाः प्रजाः सहस्वाभिभव। पृतनां सङ्ग्राम मिच्छन्ति ते पृतनायन्ति पृतनायन्तीति पृतनायन्तः क्यजन्ताच्छतृप्रत्ययः तान् पृतनायतः सङ्ग्रामेच्छून् शत्रून्सहस्व। किञ्च त्वं सहस्रवीर्या बहुसामर्थ्या यासि सा मां जिन्व प्रीणीहि ॥ २६ ॥

का० कूर्मं दधिमधुघृतैरनक्ति मधु वाता इति[2]। मिश्रितैर्दधिमधुघृतैर्ऋक्त्रयेण कच्छप मनक्ति ॥ गोतमदृष्टा विश्वदेवदेवत्यास्तिस्रो गायत्र्यः ऋतं यज्ञ मिच्छतीति ऋतयन् तस्मै ऋतयते यजमानाय वाता वायवो मधु मधुमन्तो रसवन्तो वान्त्विति शेषः। ऋतयतीत्यत्र

मधुवाताऽऋतायतेमधुक्षरन्तिसिन्धवः। माध्वीर्नःसन्त्वोषधीः ॥ २७ ॥

मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः। मधुद्यौरस्तुनःपिता ॥ २८ ॥

क्यचि चेति प्राप्तस्येत्वस्य न छन्दस्यपुत्रस्येति अभावः अश्वाघस्यादिति अश्वाघयोरेव क्यच्यात्वविधानादन्यत्रार्धधातुकयोः इत्यात्वमपि न। संहितायां तु छान्दसो दीर्घः। मधु मधुमानित्यग्रे(२८) मतुप्प्रत्ययदर्शनात् सर्वत्र मधुशब्दाग्रे मतुब् ज्ञेयः। सिन्धवः स्यन्दमाना नद्यः समुद्रा वा मधु मधुमत् रसवत् उदकं क्षरन्ति स्रवन्त्वित्यर्थः। तिङां तिङ इति लोटो लडादेशः। ओषधीः ओषधयः नोऽस्माकं माध्वीः मधुररसोपेताः सन्तु ॥ २७ ॥

नक्तं रात्रिर्नोऽस्माकं मधु मधुमत् मधुररसोपेत मानन्दकर मस्तु। उतापि च उषसो दिवसा अपि मधुमन्तः सन्तु। पार्थिवं रजः पृथिवीलोको मातृभूतो मधुमत् मधुररसोपेत मस्तु। पिता पितृभूतो द्यौः द्युलोको मधु मधुमान्मधुररसोपेतोऽस्तु ॥ २८ ॥

१ —— ७,४,२,२३। २ —— १,७,४,२७।

ज्यैष्ठाय जेष्ठत्वायोत्कर्षाय इमे द्यावापृथिवी द्यावापृथिव्यौ कल्पन्तां स्वोचित मुपकारं। यद्वा ममेति तवस्थाने व्यत्ययः। द्यावाभूमी तवोत्कर्षाय कल्पन्ताम् आपश्चौषधयश्च तव ज्यैष्ठत्वाय कल्पन्ताम् समानं व्रतं कर्म येषां ते सव्रताः एकस्मिन् चयनाख्यकर्मण्यवस्थिताः पृथक् नानाभूताः अग्नयः स्वयमातृण्णाद्या इष्टकाः तव जैष्ठ्याय कल्पन्ताम् अग्नयो हैते पृथग्यदेता इष्टका इति श्रुतेरग्निशब्देनेष्टका उच्यन्ते। किञ्च इमे द्यावापृथिवी अन्तरा अनयोर्द्यावापृथिव्योर्मध्ये वर्तमानाः समनसः एकमनस्का ये अग्नयः अग्नेरपि चिताः तेऽपि

**पृथङ्ग्मज्यैष्ठ्यायसव्रताः। येऽअग्नयःसमनसोन्तराद्यावापृथिवीइमे। वासन्तिकाऽऋतूऽअभिकल्पमाना**

**इन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम्॥ २५॥**

**अषाढासिसहमानासहस्वारातीःसहस्वपृतनायतः। सहस्रवीर्य्यासिसामाजिन्व॥ २६॥**

वासन्तिकावृतू वसन्त ऋतु मभिकल्पमाना सम्पादयन्तः सन्तः अभिसंविशन्तु एतत्कर्माश्रयन्तु। तत्र दृष्टान्तः इन्द्रमिव देवाः यथा देवा इन्द्रं परिचरणायाभिसंविशन्ति एव मन्ये ष्टका वसन्तं परिचरणायाभिसंविशन्तु॥ सादयति तया देवतया सादिते हे ऋतव्येष्टके युवा मङ्गिरसां कर्मणेव ध्रुवे स्थिरे सत्यौ सीदत मुपविशतम्॥ २५॥ १——१७,४,२५।

का० अषाढासीत्यषाढाम्१। अषाढासञ्ज्ञका मिष्टकां पत्नीक्षतां पद्यां प्राग्लक्षणा ऋतव्याभ्यां पूर्वां संलग्ना मनूके उपदधाति॥ सविदृइष्टकादैवत्या विराडनुष्टुप्। हे इष्टके त्व मषाढासि न तुन्न सहते इत्यषाढा। यथा च श्रुतिः ते देवा एता मिष्टका मपश्यन्नषाढामिमा-

नुष्टुभौ। विशेषेण राजतइति विराट् अयं लोको ज्योतिरग्निलक्षण मधारयत् धारयति। स्वेनैव राजतइति स्वराट् असौ लोको ज्योति'रादित्यलक्षण मधारयत् धारयति। विराडयं लोकः स इम मग्निं ज्योतिर्धारयत्यसौ वै लोकः स्वराट् सोऽमु मादित्यं ज्योतिर्धारयतीति[1] श्रुतेः॥ का० प्रजापतिरिति विश्वज्योतिषम्[2]। रेतःसिग्भ्यां पुरो यजमानकृतां प्रथमां विश्वज्योतिरसज्ञ्ज्ञा मिष्टकां पद्यां प्रागलक्षणा मुदङ्मुखोऽनूके उपदधाति॥ विश्वज्योतिर्दैवतं यजुः शक्करीच्छन्दस्कम्। पृथिव्याः पृष्ठे उपरि ज्योतिष्मतीं ज्योतिषोपेतां त्वा त्वामिष्टकां प्रजापतिः सादयतु किमर्थं विश्वस्मै सर्वस्मै प्राणायापानाय व्यानाय प्राणादिसम्पत्त्यर्थम्। किञ्च हे इष्टके त्वं विश्वं

विश्वस्मै प्राणायापानायव्यानायविश्वञ्ज्योतिर्यच्छ। अग्निष्टेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवासीद॥ २४॥

मधुश्चमाधवश्चवासन्तिकावृतूअग्नेरन्तःश्लेषोसिकल्पेताम्द्यावापृथिवीकल्पन्तामापओषधयःकल्पन्तामग्नयः

सर्वं ज्योतिर्यच्छ निगृहाण देहि वा। अग्निश्च ते तवाधिपतिः स्वामी तया देवतयाग्निलक्षणया ध्रुवा स्थिरा सती सीद उपविश अङ्गिरस्वदङ्गिरसां चयने यथा स्थिरा सीदः तद्वदत्रापीत्यर्थः॥ २४॥ [1] —— ७,४,२,२२। [2] —— १७,४,२२। [3] —— १७,४,२४।

का० ऋतव्ये मधुश्च माधवश्चेति[3]। विश्वज्योतिषः पुरो द्वे पद्ये प्रागलक्षणे ऋतव्येष्टके अनूक मभित उदङ्मुख उपदधाति॥ ऋतुदैवतं यजुः अष्टोत्तरशताक्षरत्वाच्छन्दो नास्ति। मधुश्चैत्रो मासः माधवो वैशाखः तावुभौ वासन्तिकौ वसन्तसम्बन्धिनौ ऋतू अवयवौ यद्वा मधुमाधवौ वसन्त एव वासन्तिक ऋतुः द्विवचन मेकवचनार्थम्। हे ताद्दश वसन्ताख्य ऋतो त्वं चीयमानस्याग्नेरन्तःश्लेषोऽसि अन्तर्मध्ये व्यवस्थितः सन् श्लेषकोऽसि यथा कुड्यस्यान्तर्दार्ढ्याय काष्ठपाषाणादयः श्लिष्यन्ते तद्वत्। ममाग्निं चिन्वतो यजमानस्य

का० यास्तइति द्वियजुषं द्वितीये[1]। दूर्वेष्टकापुरस्ताद्द्वितीये पद्यालोके यास्तइति ऋग्द्वयेन द्वियजुःसञ्ज्ञां पद्येष्टका मुपदधातीति सूत्रार्थः॥ इन्द्राग्निदृष्टे अग्निदेवत्ये द्वे अनुष्टुभौ। हे अग्ने याः ते तव रुचः दीप्तयः सूर्ये सूर्यमण्डले वर्तमानाः सत्यः दिवं द्युलोक मातन्वन्ति प्रकाशयन्ति रश्मिभिः स्वरूपभूतैः किरणैः। ताभिः सर्वाभिः रुग्भिः नोऽस्मान्रुचे रोचनाय शोभायै अद्यास्मिन्दिने कृधि कुरु। जनाय पुत्रपौत्रादिकाय च कुरु। द्युलोकप्रकाशिकाः सर्वाः कान्तीः पुत्रांश्चास्मभ्यं देहीत्यर्थः। यद्वा विभक्तिव्यत्ययः नोऽस्माकं जनाय जनं पुत्रादिकं ताभिः रुग्भिः रुचे शोभायै कुरु जगत्प्रसिद्धं पुत्रादिकं देहीत्यर्थः॥ २२॥ १——१७,४,२०।

याास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः। ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि॥ २२॥

यावो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभिः सर्वाभी रुचन्नो धत्त बृहस्पते॥ २३॥

विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत्। प्रजापतिष्ट्वा सादयतु पृष्ठे पृथिव्या ज्योतिष्मतीम्॥

हे देवाः हे इन्द्राग्नी हे बृहस्पते वो युष्माकं सम्बन्धिन्यो या रुचः दीप्तयः सूर्ये सूर्यमण्डले सन्ति गोषु धेनुषु अश्वेषु तुरगेषु च या युष्माकं रुचः सन्ति ताभिः सर्वाभिः रुग्भिः कृत्वा नोऽस्मभ्यं रुचं धत्त दत्त तत्समप्रभानस्मान्कुरुतेत्यर्थः॥ २३॥ २——१७,४,२२।

का० विराट् स्वराडिति रेतःसिचौ प्रतिमन्त्रम्[2]। द्वियजुषः पूर्वे अव्यवहिते रेतःसिचौ द्वे पद्येष्टके प्राग्लक्षणे अनूक मभितो विराट् स्वराडिति प्रतिमन्त्र मुपदधाति विराडितुत्तरां स्वराडिति दक्षिणामिति सूत्रार्थः॥ द्वे यजुषी इदंलोकादोलोकदेवत्ये क्रमात् यजुर-

लाभाय प्रतिष्ठायै कीर्त्यै चरित्राय शास्त्रीयाचरणाय च। प्राणिना मेतत्सर्वसिध्यर्थं त्वां सादयामीति शेषः। किञ्च मह्या महत्या स्वस्त्या योगक्षेमसम्पत्त्या शन्तमेनात्यन्तं सुखकारिणा छर्दिषा गृहेण चाग्निस्त्वा त्वामभिपातु सर्वतो रक्षतु। तया देवतयानुगृहीता त्वं ध्रुवा स्थिरा सती सीदोपविश अङ्गिरस्वदङ्गिरसां चयनानुष्ठाने यथा त्वं स्थिरस्थिता तद्वदिहोपविश ॥ १९ ॥

का० मूलाग्रवतीं दूर्वां तस्यां पुरस्ताद्भूमिप्राप्तां काण्डात्काण्डादिति[१]। तस्यां स्वयमातृण्णायां काण्डादिति ऋग्द्वयेन पुरस्ताद्भूमिगताग्रं मूलाग्रयुतां दूर्वा मुपदधाति॥ अग्निदृष्टे दूर्वेष्टकादेवत्ये द्वे अनुष्टुभौ। मूलैर्भूसम्बद्धं पर्व काण्डं भूम्यसम्बद्धं परुः। हे दूर्वे दूर्वेष्टके काण्डात्काण्डात् प्रतिकाण्डं परुषः परुषः प्रतिपरुः भूमिसम्बद्धासम्बद्धेभ्यः सर्वपर्वभ्यः सकाशाद्यथा त्वं परि

काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषस्परि। एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥ २० ॥

या शतेन प्रतनोषि सहस्रेण विरोहसि। तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥ २१ ॥

समन्तात् प्ररोहन्ती अङ्कुरवती वर्त्तसे। नित्यवीप्सयोरिति वीप्सार्थे काण्डपरुषोर्द्वित्वम्। एवेत्यव्यय मेवमित्यर्थे निपातस्य चेति संहितायां दीर्घः। हे दूर्वे एवं स्वाङ्कुरविस्तारवत् सहस्रेण शतेन च सहस्रशतशब्दावसङ्ख्यार्थौ असङ्ख्यैः पुत्रपौत्रनप्त्रादिभिर्नोऽस्मान् प्रतनु विस्तारय॥ २० ॥

हे देवि दीप्यमाने हे इष्टके या त्वं शतेन काण्डानां प्रतनोषि विस्तारयसि सहस्रेण चाङ्कुराणां विरोहसि विविधं प्ररूढा भवसि वयं हविषा सह ते स्थानं विधेम परिचरेम॥ २१ ॥

१ —— १७,४,१८।

एमनि अवस्थाने सादयतु। दृणी धातोर्मनिन्प्रत्यये एर्मन्निति रूपम् सुपां सुलुगिति सप्तम्या लुक्। किम्भूतां त्वां व्यचस्वतीं व्यचनं व्यचस्तदस्या अस्तीति व्यचस्वती ता मभिव्यक्तियुताम्। प्रथस्वतीं प्रथनं प्रथः पृथुत्वं तदस्या अस्तीति प्रथस्वती तां विस्तारयुक्ताम्। त्वमपि प्रजापतिसादिता सती प्रथस्व अस्माभिरितिः प्रथनं कुरु यतस्त्वं पृथिव्यसि पृथिव्युत्पन्नत्वात्॥ १७॥

प्रस्तारपङ्क्तिः। आद्यौ चेत्प्रस्तारपङ्क्तिरित्युक्तेर्यदाद्यौ द्वादशकावन्त्यावष्टकौ सा प्रस्तारपङ्क्तिः अत्र त्वाद्य एकादशकौ द्वितीय-

**भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री। पृथिवींयच्छपृथिवीन्दृꣳहपृथिवीम्माहिꣳसीः ॥१८॥**

**विश्वस्मैप्राणायापानायव्यानायोदानायप्रतिष्ठायैचरित्राय।**

**अग्निष्ट्वाभिपातुमह्यास्वस्त्याच्छर्दिषाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद॥ १९॥**

स्त्रयोदशकस्तृतीयतुर्यौ पञ्चको पञ्चमः षड्चरः एवं पञ्च पादाः। हे स्वयमातृस्ते त्वं भूः सुखानां भावयित्र्यसि। भूमिः पृथिव्यसि भूम्यभिमानिनी देवतासीत्यर्थः। अदितिर्देवमातासि। विश्वधायाः विश्वं दधाति पुष्णातीति विश्वधायाः विश्वं निहितमस्या मिति वा। विश्वस्य भुवनस्य सर्वस्य भूतग्रामस्य धर्त्री धारयित्री तादृशी त्वं पृथिवीं यच्छ नियतां कुरु पृथिवीं दृंह दृढीकुरु पृथिवीं मा हिंसीः पृथिव्या हिंसां मा कुरु॥ १८॥

यजुः एकाधिकार्षी त्रिष्टुप्। हे स्वयमातृस्त्वं विश्वस्मै सर्वस्मै प्राणायापानाय व्यानायोदानाय प्राणापानव्यानोदानाख्यवायुवृत्ति-

वायोरिन्द्रियुक्तेर्नियुतो नाम वायोरश्वाः[१] ताभिर्वायुर्लक्ष्यते वायुना चान्तरिक्षं लक्ष्यते। यत्र च दिवि मूर्धानं मादित्यं दध्रिषे धारयसि लिङ्व्यत्ययः। किम्भूतं मूर्धानं स्वर्षां स्वः स्वर्गं सनोति ददाति स्वर्षाः। षणु दाने विट्प्रत्ययः विड्वनोरनुनासिकस्यात् इति नकारस्याकारः। यद्वा स्वः स्वर्गे स्यति तिष्ठतीति स्वर्षाः तम् षोऽन्तकर्मणि क्विप्। अन्तरिक्षे द्युलोके च यज्ञस्य रजसश्च नेता भवसीत्यर्थः। यत्रेत्यस्य संहितायां निपातस्य चेति दीर्घः यस्य तवैतत्कर्म तं त्वां स्रुग्रूपेण सादयामीति शेषः॥ १५॥ १——निघ० १;१५,१०।

का० स्वय मातृणां पुरुषे शर्करां छिद्रां ध्रुवासीति[२]। पुरुषोपरि ध्रुवेत्यादिकण्डिकाचतुष्टयेन स्वयमातृण्णा मुपदधाति कीदृशीं शर्करां पाषाणमयीं छिद्रां स्वाभाविकछिद्रयुतां सच्छिद्राश्ममयीष्टकैव स्वयमातृण्णोच्यतइति सूत्रार्थः॥ ऊर्ध्वबृहती। द्वादशाक्षरत्रि-

ध्रुवासिधरुणास्तृताविश्वकर्म्मणा। मात्वासमुद्रउद्वधीन्मासुपर्णोव्यथमानापृथिवीन्दृꣳह॥ १६॥

प्रजापतिष्ट्वासादयत्वपाम्पृष्ठे समुद्रस्येमन्। व्यचस्वतीम्प्रथस्वतीम्प्रथस्वपृथिव्यसि॥ १७॥

पादोर्ध्वबृहती अत्र प्रथमस्त्रयोदशार्णस्तृतीयो दशार्णः। हे स्वयमातृण्णे त्वं ध्रुवा स्थिरासि। कीदृशी त्वं धरुणा भूमिरूपेण विश्वस्य धारयित्री। विश्वं करोतीति विश्वकर्मा तेन सर्वस्य कर्त्रा प्रजापतिना आस्तृता उपहिता। समुद्रो रुक्मः त्वां त्वां मा उद्वधीत् मा हन्तु। सुपर्णः पुरुषश्च त्वां मोद्वधीत्। रुक्मो वै समुद्रः पुरुषः सुपर्ण इति[३] श्रुतेः समुद्रसुपर्णशब्दाभ्यां रुक्मपुरुषावुच्येते। त्वं चाव्यथमाना अचलन्ती सती पृथिवीं दृंह भूमिं दृढीकुरु॥ १६॥ २——१७,४,१५। ३——७,५,२,५।

अनुष्टुप्। हे स्वयमातृण्णे प्रजापतिः त्वा त्वां सादयतु स्थापयतु क्व अपां जलानां पृष्ठे उपरि। समुद्रस्य जलसङ्घातस्य एमन्

हे अग्ने ऊर्ध्वो भव उद्युक्तो भव अस्मदधि अस्माकमुपरि वर्तमानान् शत्रून् प्रतिविध्य प्रतिताडय। दैव्यानि देवसम्बन्धीनि कर्माणि आविः कृणुष्व प्रकटय। किञ्च यातुजूनां यातुधानानां स्थिरा स्थिराणि धनूंषि अवतनुहि अवतारय। किञ्च जाम्यजामिशब्दौ पुनरुक्तापुनरुक्तवचनौ जामिमजामिं पुनरुक्तमपुनरुक्तं कृत्वा पुनः पुनस्ताडितमताडितं वा शत्रून् प्रमृणीहि मृणातिर्मारणार्थः रिपून् मारय ॥ का० घृतपूर्णामग्नेष्ट्वेति[1]। कार्ष्मर्यमयीं पादमात्रदीर्घां षडङ्गुलविपुलां घृतपूर्णां प्रागग्रां स्रुचमग्नेष्ट्वेति यजुषाग्निर्मूर्धेति ऋचा चोपदधाति ॥ आग्नेयं यजुः। हे स्रुक् अग्नेः सम्बन्धिना तेजसा त्वा त्वां सादयामि ॥ १३ ॥ १—१७,४,११। २—१७,४,१३।

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वति इन्द्रस्य त्वौजसा सादयामि ॥ १४ ॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ १५ ॥

अग्निर्मूर्धेति व्याख्याता(३,१२)। का० एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति[2]। एवंविधमौदुम्बरीं दधिपूर्णां स्रुचमुत्तरे उपदधाति ॥ इन्द्रस्य त्वेति यजुषा भुव इति ऋचा च ॥ इन्द्रदेवत्यं यजुः। हे स्रुक् इन्द्रस्यौजसा तेजसा त्वां सादयामि स्थापयामि ॥ १४ ॥

त्रिशिरोदृष्टाग्निदेवत्या त्रिष्टुप्। हे अग्ने त्वं यदा हव्यवाहं हव्यं वहतीति हव्यवाट् तां हविषो वोढ्रीं जिह्वां ज्वालां चकृषे करोषि लडर्थे लिट्। तदा यज्ञस्य द्रव्यदेवतात्यागात्मनो नेता भुवः भवसि रजसः यज्ञपरिणामरूपोदकस्य च नेता भवसि जगद्रक्षार्थम् भवतेर्लेटि मध्यमैकवचने सिपि इतश्च लोप इति इकारलोपे लेटोऽडाटावित्यडागमे अचि श्नुधात्विति उवङादेशे च कृते भुव इति रूपम्। कुत्र नेता भवसीत्यत आह यत्र यस्मिन् स्थाने शिवाभिर्मङ्गलरूपाभिर्नियुद्भिरश्वाभिः त्वं सचसे सम्बन्धं प्राप्नोषि। नियुतो

भव। कीदृशस्त्वं तूर्णितमः तूर्णं वेगोऽस्यास्तीति तूर्णी अत्यन्तं तूर्णी तूर्णितमः वेगवत्तरः। अदब्धः अनुपहिंसितः। हे अग्ने एवमनुग्रहं प्रवृत्तस्य ते तव मा किः मा कश्चित् व्यथिः व्यथयतीति व्यथिः व्यथकः शत्रु रादधर्षीत् धार्ष्ट्यं मा करोतु। दूरसमीपस्थानस्थच्छत्रून्प्रति त्वरतो बन्धकान् प्रेरय केनाप्यहिंसितोऽस्मत्प्रजापालको भव राक्षसाश्च त्वां प्रति धृष्टा मा सन्त्वित्यर्थः। धृष धातो लुंङि द्वित्व मडभावश्च माङ्योगात् ॥ ११ ॥

उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ२॥ ओषतात्तिग्महेते। यो नो अरातिꣳ समिधान चक्रे नीचा तन्धक्ष्यतसन्न शुष्कम् ॥१२॥
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अवस्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥
अग्नेष्ट्वा तेजसा सादयामि ॥ १३ ॥

हे अग्ने त्व मुत्तिष्ठ ततः प्रत्यातनुष्व ज्वाला विस्तारय तिग्मा हेतयो यस्य स तिग्महेतिः तिग्मं तेजतेरुत्साहकर्मणः तत्सम्बोधनं हे तिग्महेते उत्साहवदायुध अमित्रान्शत्रून् त्वं न्योषतात् नितरां दह। उष दाहे तुह्योस्तातङ्ङित्यनेन तातङ्ङादेशः। हे समिधान समिन्द्धे दीप्यतेऽसौ समिधानः तत्सम्बुद्धौ हे समिधान दीप्यमान नोऽस्माकं योऽरातिं चक्रे करोति दानं प्रतिषेधति तं नीचा नीचैः कृत्वा धक्षि दह। दह भस्मीकरणे बहुलं छन्दसीति शपि लुप्ते लटि मध्यमैकवचने धक्षीति रूपम्। तत्र दृष्टान्तः शुष्कमतसं न। न इवार्थः अतसो वृक्षः शुष्कं वृक्ष मिवादातारं निर्दहेत्यर्थः ॥ १२ ॥

त्वात्सम्प्रसारणम्। कैः तपिष्ठैः तापकतमैरायुधैः तपन्ति सन्तापयन्तीति तपूंषि अतिशयेन तपूंषि तपिष्ठानि तैः तुरिष्ठेमेयःस्विति इष्ठनि परे तृचो लोपः। कीदृशस्त्वं तृष्वीं प्रसितिं विभक्तिव्यत्ययः तृष्व्या क्षिप्रया प्रसित्या जालेन अनु दूणानः शत्रून्मारयन् दृ हिंसायां क्र्यादिः शानच् प्रत्ययः दूणीतेऽसौ दूणानः ॥ ९ ॥

हे अग्ने तव ये भ्रमासः भ्रमा वातोद्भूता ज्वालासमूहाः पतन्ति इतस्ततो गच्छन्ति कीदृशा भ्रमाः आशुया आशवः शीघ्रगमनाः आशुशब्दात्परस्य जसः सुपांसुलुगित्यादिना यादेशः। तैर्भ्रमैः तपूंषि तपन्ति सन्तापयन्ति तानि तपूंषि तापयितृृणि रक्षांसि पतङ्गान् पतन्तः सन्तो गच्छन्तीति पतङ्गाः पिशाचास्तांश्चानुस्पृश ज्वालाभिस्तान्दहेत्यर्थः। कीदृशस्त्वं धृषता धृष्णोतीति धृषता प्रगल्भेन

तवभ्रमासआशुयापतन्त्यनुस्पृशधृषताशोशुचानः। तपूंष्यग्नेजुह्वापतङ्गानसन्दितोविसृजविष्वगुल्काः ॥ १० ॥

प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोअस्याअदब्धः। योनोदूरेअघशंसोयोअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत्॥११

धृष्टेन ज्वालौघेन शोशुचानः देदीप्यमानः अत्यन्तं शोचते शोशुच्यतइति शोशुचानः शुच दीप्तावित्यस्माद्यङ्न्ताच्छानच् प्रत्ययः। तथा जुह्वा स्रुचा हूयमान इति शेषः। असन्दितः अखण्डितः। ईदृशः सन्विष्वक् सर्वत्र तिर्यगूर्ध्वं नधश्च उल्काः ज्वाला विसृज रक्षोघाताय मुञ्चेत्यर्थः ॥ १० ॥

नोऽस्माकं दूरे योऽघशंसः अघं पापं शंसतीच्छति अघशंसः अस्मद्द्रोही यो दूरे वसति यश्चान्ति समीपे अघशंसः हे अग्ने तं प्रति स्पशः स्पश बन्धने स्पशयन्ति बध्नन्तीति स्पशो बन्धनकृतः प्राणधीन्विसृज प्रेरय। अस्या अस्मदीयायाः विशः प्रजायाः पायुः पालको

यातु यातनां दुःखं दधति ते यातुधाना रक्षःप्रभृतयस्तेषां याः सर्पजातय इषवो बाणरूपेण वर्तन्ते ये वान्ये वनस्पतीन् चन्दनादिवृक्षाननुवेष्ट्य स्थिताः ये वा ये चान्ये अवटेषु बिलेषु शेरते स्वपन्ति तेभ्यः सर्पेभ्यो नमोऽस्तु ॥ ७ ॥

दिवो द्युलोकस्य रोचने दीप्तस्थाने ये वामी सर्पा अस्माभिरदृश्यमानाः सन्ति रोचनो ह नामैष लोको यत्रैष एतत्तपतीति श्रुतिः। तथा सूर्यस्य रश्मिषु-किरणेषु ये च सर्पा वसन्ति। येषां सर्पाणा मप्सु जलेषु सदः स्थानं कृतं तेभ्यः सर्पेभ्यो नमोऽस्तु ॥ ८ ॥

का० उपविश्य पञ्चगृहीतं जुहोति पुरुषे कृणुष्व पाज इति प्रत्यचं प्रतिदिशं परिसर्पम्[१]। आज्यं संस्कृत्य पञ्चगृहीत मादायाक्रान मारुह्य पुरुषान्तिके उपविश्य प्रतिदिशं परिसृप्य परिसृप्य पुरुषोपरि पञ्चभिर्जुहोतीति सूत्रार्थः॥ वामदेवदृष्टा राक्षोघ्नाः प्रतिसराः

ये वामी रोचने दिवो ये वा सूर्य्यस्य रश्मिषु। येषामप्सु सदस्कृतन्तेभ्यः सर्पेभ्यो नमः ॥ ८ ॥

कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँ२॥ इभेन। तृष्वीमनु प्रसितिन्द्रूणानोऽस्तासि विद्ध्य रक्षसस्तपिष्ठैः ॥ ९ ॥

अग्निदेवत्याः पञ्च त्रिष्टुभः। हे अग्ने पाजः बलं कृणुष्व कुरुष्व पाज इति बलनामसु पठितम्[२]। तत्र दृष्टान्तः पृथ्वीं विशालां प्रसितिं न प्रसितिमिव। प्रसितिर्जालं प्रसितिः प्रसयनात्तन्तुर्वा जालं वेति यास्कोक्तेः। षिञ् बन्धने प्रकर्षेण सीयन्ते बध्यन्ते पक्षिणो यया सा प्रसितिः ताम् नकार इवार्थः पक्षिग्रहणाय प्रसारितं जालमिव शत्रुग्रहणाय बलं प्रसारयेत्यर्थः। ततो राजेव नृप इवामवान्सहायवानिभेन गजेन याहि शत्रून्प्रति गच्छ। अम गतौ भजने शब्दे अमन्ति भजन्ति स्वामिनइत्यमाः सेवकास्ते ऽस्य सन्तीत्यमवान् पचाद्यजन्तादमशब्दान्मतुप्प्रत्ययः। हे अग्ने अस्ता शत्रूणां क्षेप्तासि अतो रक्षसः राक्षसान्विध्य ताडय। व्यध ताडने दिवादिर्विध्य सम्प्रसारणं ग्रहादि-

१——१७,४,७। २——निघ० २,९,२।

देवश्रवोदृष्टादित्यदेवत्या त्रिष्टुप् । यः पूर्वः प्रथमो मुख्यो द्रप्स आदित्यः पृथिवीमन्तरिक्ष मनुचस्कन्द अनुस्कन्दति गच्छति सिञ्चतीत्यर्थः मनुष्यादिधारणाय । द्यां द्युलोकं चानुसिञ्चति आहुतिपरिणामभूतेन रसेन देवादिधारणाय । य इमं योनिं स्थानं भूलोकमनुस्कन्दति आगच्छति आहुतिग्रहणाय । एवं समानं योनिं सर्वेषां तुल्यं स्थानं लोकत्रय मनु सञ्चरन्तं द्रप्स मादित्यं सप्त होत्रा अनु जुहोमि विभक्तिव्यत्ययः सप्तसु होत्रासु दिक्षु स्थापयामि हिरण्यपुरुषरूपेण सर्वदिक्षु सूर्यमेव स्थापयामीत्यर्थः । असौ वाऽऽआदित्यो

द्रप्सश्चस्कन्दपृथिवीमनुद्यामिमञ्चयोनिमनुयश्चपूर्व्वः । समानंयोनिमनुसञ्चरन्तन्द्रप्सञ्जुहोम्यनुसप्तहोत्राः ॥५॥

नमोस्तुसर्पेब्भ्योयेकेचपृथिवीमनु । येअन्तरिक्षेयेदिवितेब्भ्यःसर्पेब्भ्योनमः ॥ ६ ॥

याइषवोयातुधानानांयेवावनस्पतीँ१॥रनु । येवावटेषुशेरतेतेब्भ्यःसर्पेब्भ्योनमः ॥ ७ ॥

द्रप्सो दिशः सप्त होत्रा अमु मादित्यं दिक्षु प्रतिष्ठापयतीति[1] श्रुतेः । पूर्वादि चतस्रो दिशः अध एका उपर्येका मध्ये चैकेति सप्त दिशो ज्ञेयाः ॥ ५ ॥

१—७,४,१,२० । २—१७,४,६ । ३—७,४,१,२५ ।

का० उपतिष्ठते यजमानो नमोऽस्त्विति[2] । यजमानो हिरण्यपुरुषं पश्यन्नृक्त्रयं पठेत् ॥ सर्पदेवत्यास्तिस्रोऽनुष्टुभः । ये के च ये केचित् सर्पन्ति सर्पा लोकाः पृथिवी मनुगताः तेभ्यः सर्पेभ्यो नमोऽस्तु नमस्कारो भवतु । अन्तरिक्षे लोके ये वर्तमानाः सर्पाः ये च दिवि द्युलोके ये वर्तमानाः सर्पास्तेभ्यः सर्पेभ्यो नमोऽस्तु । इमे वै लोकाः सर्पा इति[3] श्रुतेः सर्पशब्देन लोका उच्यन्ते ॥ ६ ॥

प्रथम मादौ पुरस्तात्पूर्वस्यां दिशि जज्ञानं जायमानं दृश्यमानं। जनेः शानचि शपः श्लौ सति जज्ञानमिति रूपम्। किञ्च वेनः कामनीयो मेधावी वा स आदित्यः बुध्न्या बुध्न मन्तरिक्षं तत्र भवा बुध्न्या दिशः विवः विवृणोति। सतो विद्यमानस्य मूर्तस्य घटपटादेर्योनिं स्थान मसतोऽमूर्तस्य वाय्वादेश्च योनिं प्रभवं विवः प्रकाशयति वृणोतेः शपि लुप्ते लङि गुणे च व इति रूप मड़भाव आर्षः बहुलं छन्दस्यमाङ्योगेऽपीति वचनात्। कीदृशीर्बुध्न्याः उपमाः उप समीपे मान्ति भूतानि यासु ता उपमाः सावकाशा इत्यर्थः। अत एवास्य जगतो विष्ठाः विविधस्थानभूताः विविधं तिष्ठन्ति यासु ताः अम्बाम्बगोभूमीत्यादिना षत्वम्। आदित्य एव लोकान्दिशो भूतानि चाभिव्यनक्तीत्यर्थः ॥ ३ ॥

**ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनआवः। सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥३॥**

**हिरण्यगर्भःसमवर्त्ततार्ग्रेभूतस्यजातःपतिरेकआसीत्। सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ ४ ॥**

का० उत्तानं प्राञ्चꣳ हिरण्यपुरुषं तस्मिन् हिरण्यगर्भ इति[१]। तस्मिन्रुक्मे प्राञ्च मुत्तानं हिरण्यं पुरुषाकार मृग्द्वयेनोपदधाति॥ हिरण्यगर्भदृष्टा प्रजापतिदेवत्या त्रिष्टुप्। हिरण्ये हिरण्यपुरुषरूपे ब्रह्माण्डे गर्भरूपेणावस्थितः प्रजापतिर्हिरण्यगर्भः-भूतस्य प्राणिजातस्याग्रे समवर्तत प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव। स च जातः उत्पन्नमात्र एक एवोत्पत्स्यमानस्य सर्वस्य जगतः पतिरीश्वर आसीत्। स एव पृथिवी मन्तरिक्षं द्यां द्युलोक मुतापि चेमां भूमिं लोकत्रयं दाधार धारयति तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः। पृथिवी भूः स्वयम्भूरित्यन्तरिक्षनामसु पठितत्वात्पृथिवीशब्देनान्तरिक्षलोकोऽत्रोच्यते। कस्मै काय प्रजापतये देवाय वयं हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः ॥ ४ ॥

[१] — १७,४,२।

द्वादशेऽध्याये उखाधारणगार्हपत्यचयन चैत्रकर्षणौषधवपनादिमन्त्रा उक्तास्त्रयोदशे पुष्करपर्णादिप्रधानमन्त्रा उच्यन्ते । का० उत्तरवेदि मपरेण तिष्ठन्यजमानो मयि गृह्णामीति जपति[1] । उत्तरवेदेः पश्चात्तिष्ठन्यजमानो जुहोति ॥ अग्निर्देवत्या ककुप् यस्या मध्यपादो द्वादशक आद्यन्तौ यावष्टकौ सा ककुप् अत्र मध्यश्चतुर्दशकस्तेन द्व्यधिका । अहं यजमानोऽग्रे प्रथमं मयि आत्मनि अग्निं गृह्णामि धारयामि ततोऽग्निं चिनोमीति शेषः । किमर्थं रायो धनस्य पोषाय पुष्ट्यर्थम् ॥ सुप्रजास्त्वाय शोभना प्रजा यस्य स सुप्रजाः सुप्रजसो भावः सुप्रजस्त्वम् तस्मै दीर्घञ्छान्दसः शोभनपुत्रादिनिष्पत्त्यै । सुवीर्याय शोभनसामर्थ्याय वीर्यं शक्तिः । किञ्च उकारोऽप्यर्थे देवता अपि मां सचन्तां सेवन्तां सङ्गच्छन्ताम् उ एवार्थे वा देवता मामेव सचन्ताम् ॥ १ ॥ १——१७,३,२७ २——१७,४,१ ।

**मयिगृह्णाम्यग्रेऽअग्निꣳरायस्पोषायसुप्रजास्त्वायसुवीर्य्याय । मामुदेवताःसचन्ताम् ॥ १ ॥**

**अपाम्पृष्ठमसियोनिरग्नेःसमुद्रमभितःपिन्वमानम् । वर्द्धमानोमहाँ२॥ऽआचपुष्करेदिवोमात्रयावरिम्णाप्रथस्व॥२॥**

का० पुष्करपर्ण सुपदधाति स्तम्बि पूर्ववत्[2] । ततोऽध्वर्युः कुशस्तम्बोपरि कमलिनीपत्र मुपदधाति पूर्ववदित्युखासम्भरणवत् तेनापां पृष्ठमिति मन्त्रेण पुष्करइत्यन्तेनोपधानं दिवो मात्रयेति तस्य मार्जनमिति सूत्रार्थः ॥ व्याख्यातः (११,२९) ॥ २ ॥ २——१७,३,२९ ।

का० तस्मिन्रुक्ममधःपिण्डं ब्रह्मजज्ञानमिति[3] । तस्मिन् पुष्करपर्णे पूर्वं कण्ठधृतं रुक्म मधःपिण्ड मुपदधाति॥ आदित्यदेवत्या त्रिष्टुप् । वीत्युपसर्ग आव इति क्रियापदेन सम्बध्यते व्यवहिताश्चेति पाणिनिस्मरणात् । ब्रह्म बृहत् रुक्मरूपोऽय मादित्यः सीमतः सीमानं मर्यादां भूगोलमध्यभाग मारभ्य सुरुचः सुष्ठु रोचन्ते शोभन्ते तान्सुरोचनानिमान् लोकान्वि आवः विवृतानकरोत्स्वप्रकाशेन । कीदृशं ब्रह्म

त्यर्थः। कीदृश्या गिरा त्वाङ्कामया त्वां कामयते स्तोतु मिच्छतीति त्वाङ्कामा तया अलुक्। देवैः सह तिष्ठति यस्मिन्नग्निः तत्सधस्थं द्युलोकः सध माद इति सहस्य सधादेशः ॥ ११५ ॥

हे अङ्गिरस्तम अन्यते जीव्यते येनेत्यन् अन्नम् अन प्राणने क्विप् अन् अन्न गिरति अत्तीत्यङ्गिराः अङ्गिरस्तमः हे अग्ने पृथक् नानाभूताः विश्वाः सर्वाः ताः प्रसिद्धाः स्तुतयः कामायाभिलाषपूरणाय तुभ्यं त्वयि येमिरे नियम्यन्ते यजमानैरिति शेषः कर्मणि लिट्।

तुभ्यन्ताअङ्गिरस्तमविश्वाःसुक्षितयःपृथक्। अग्नेकामाययेमिरे ॥ ११६ ॥

अग्निःप्रियेषुधामसुकामोभूतस्यभव्यस्य। सम्राडेकोविराजति ॥ ११७ ॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां द्वादशोऽध्यायः ॥ १२ ॥

कीदृश्यः सुक्षितयः शोभनाः क्षितयो निवासा याभ्यस्ताः स्वर्गादिशुभस्थानप्रदा इत्यर्थः। यजमाना इहकामपूर्त्यै द्युलोकाप्त्यै च मन्त्रैस्त्वामेव स्तुवन्तीति भावः ॥ ११६ ॥

अग्निः प्रियेषु अभिरुचितेषु धामसु स्थानेषु धिष्ण्येषु एकोऽसहायभूतः सन्विराजति विशेषेण दीप्यते। कीदृशोऽग्निः भूतस्योत्पन्नस्य भव्यस्य भविष्यतश्च जनस्य कामः कामपूरकः। सम्राट् सम्यक् राजमानः शोभमानः भूतस्य भव्यस्य सम्राडीश्वर इति वा। काम्यते सर्वैर्यष्टु मिष्यतइति काम इति वा ॥ ११७ ॥

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। एकादिवाचनाल्लोऽयं द्वादशोऽध्याय ईरितः ॥ १२ ॥

आहुतिपरिणामजनितानि धिष्व धारय सम्पादय लोकद्वयभोगं सम्पादयेत्यर्थः। धि धारणे तुदादिः विकरणव्यत्यय आत्मनेपदं च छान्दसं बहुलं छन्दसीत्युक्तेः सुधितवसुधितेति सूत्रेण दधातेर्निपातो वा धत्स्वेत्यर्थः ॥ ११३ ॥ १—१७,३,२०,२१।

हे मदिन्तम मदयति तर्पयतीति मदी ग्रहादित्वाण्णिनिप्रत्ययः। यद्वा मदस्तुतिरस्यास्तीति मदी अत इनिठनाविति इन् अतिशयेन मदी मदिन्तमः नाद्घस्येति नान्तात्परस्य तमपो नुडागमः। ईदृश हे सोम विश्वेभिर्विश्वैः सर्वैरंशुभिः सूक्ष्मांशैः आप्यायस्व प्रवृद्धो भव वृद्धः सन्नोऽस्माकं वृधे वर्धनाय सखा सहायो भव द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। कीदृशस्त्वं सप्रथस्तमः अत्यन्तं सप्रथाः सकीर्तिः सप्रथस्तमः ॥ ११४ ॥

आप्यायस्वमदिन्तमसोमविश्वेभिरᳪशुभिः। भवानःसप्रथस्तमःसखावृधे॥ ११४ ॥

आतेवत्सोमनोयमत्परमाच्चित्सधस्थात्। अग्नेत्वाङ्कामयागिरा॥ ११५ ॥

का० श्वेतेऽश्वे पुरस्तात्तिष्ठति श्वेताभावेऽश्वेतेऽश्वाभावेऽनडुह्यग्निभ्यः प्रक्रियमाणेभ्योऽनुवाचयति१। श्वेतवर्णेऽश्वेऽन्यवर्णे तदभावे वृषे वा तिष्ठति सति अग्निभ्यः प्रक्रियमाणेभ्योऽनुब्रूहीति प्रेषितो होताऽऽते वत्स इति तृच मनुवक्तीति सूत्रार्थः॥ अग्निदेवत्यास्तिस्रो गायत्र्यः आद्यावत्सारदृष्टा द्वितीया विरूपदृष्टा तृतीया प्रजापतिदृष्टैव। हे अग्ने ते तव वत्सः पयोव्रतत्वाद्वत्ससमस्त्वत्प्रियो यजमानः परमाच्चित् चिदप्यर्थे उत्कृष्टादपि सधस्थात्सहस्थानात् द्युलोकात् मन आहृत्येति शेषः। आयमत् आयच्छति गृह्णाति मनोनिग्रहं करोतीत्यर्थः। इतश्च लोप इति इकारलोपे यमदिति रूपम्। इषुगमियमां छ इति छत्वाभावश्छान्दसः। कया गिरा वेदवाचा मन आहृत्ये-

दर्शनीयं श्रुत्कर्णं शृणुत इति श्रुतौ क्विप् श्रुतौ कर्णौ यस्य तम् यद्विज्ञाप्यते तत्सत्यमेव कर्णाभ्यां श्रुत्वा सम्पादयतीत्यर्थः। सप्रथस्तमं प्रथनं प्रथः कीर्तिः। प्रथ प्रख्याने अस्मादसुन्प्रत्ययः प्रथसा सह वर्तमानः सप्रथाः अतिशयेन सप्रथाः सप्रथस्तमस्तं मतिकीर्तिमन्तम्। दैव्यं देव एव दैवस्तं स्वार्थे यत् यद्वा देवेभ्यो हितम् ॥ १११ ॥

का० आप्यायस्वेति सिकतालम्भन मृत्स्थाम्[1]। आत्मनि विस्तारिताः सिकताः स्पृशति ऋग्द्वयेन ॥ गोतमदृष्टाः सोमदेवत्यास्तिस्रो गायत्रीत्रिष्टुबुष्णिक्छन्दस्काः। आप्यायस्व मदिन्तमेति(११४) तृतीयस्या विनियोगः सूत्रे नास्ति। हे सोम विश्वतः सर्वस्मात् वृष्ण्यं वीर्यं

आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम्। भवावाजस्यसङ्गथे ॥ ११२ ॥

सन्तेपयाᳬंसिसमुयन्तुवाजाःसंवृष्ण्यान्यभिमातिषाहः। आप्यायमानोअमृतायसोमदिविश्रवाᳬंस्युत्तमानिधिष्व ॥ ११३

सर्वभूतोत्पत्तिकृद्वीजं ते तव समेतु समागच्छतु तेन च वीर्येण त्वमाप्यायस्व सर्वतो वर्धस्व। किञ्च वाजस्यान्नस्य सङ्गथे सङ्गमननिमित्तं भवानस्मासु सङ्गमयेत्यर्थः ॥ ११२ ॥

१——१७,३,१६। २——७,३,१,४६।

हे सोम पयांसि पातव्या रसाः ते तव संयन्तु सङ्गच्छन्तामुत अपि च वाजा अन्नानि संयन्तु वृष्ण्यानि रेतांसि ते संयन्तु। कीदृशस्य ते अभिमातिषाहः अभिमातिं पाप्मानं सहतेऽभिभवतीत्यभिमातिसाट् तस्याभिमातिसाहः षत्वं छान्दसम्। हे सोम पयोऽन्नवृष्ण्यैराप्यायमानः वर्धमानः सन् अमृताय अमरणधर्मिण्यै प्रजात्यै पुत्रादिवृद्ध्यै यजमानस्य भवेति शेषः। अमृतशब्देन श्रुत्या प्रजातिर्व्याख्याता। तथा च श्रुतिः प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृतेति[2]। किञ्च दिवि द्युलोके उत्तमानि उत्कृष्टानि श्रवांसि अन्नानि

तिभिः इरज्यन्दीप्यमानः। किञ्च यस्त्व मीदृशो धनप्रद्यायिता स त्वं दृशतस्य दर्शनीयस्य वपुषः चित्याग्निरूपस्य शरीरस्य मध्ये विराजसि विशेषेण दीप्यसे विभक्तिव्यत्ययो वा दर्शतेन वपुषा ज्वालालक्षणेन शरीरेण विराजसि। सानसिं चिरन्तनं क्रतुं सङ्कल्पं पृणक्षि पूरयसि सर्वेष्टं ददासीत्यर्थः॥ १०९ ॥

हे अग्ने अध्वरस्य यज्ञस्य इष्कर्तारं निस उपसर्गस्य नलोपः पूर्वमुक्तः(८३) निष्कर्तारं निश्चयेन कर्तारं यज्ञनिष्पादकं प्रचेतसं प्रकृष्टचित्तयुक्तं क्षयन्तं क्षि निवासगत्योः विशिष्टस्थाने निवसन्तं मीदृशं यजमानं प्रति वामस्य वननीयस्य महो महतो राधसो धनस्य रातिं

**इष्कर्त्तारमध्वरस्यप्रचेतसङ्क्षयन्तꣳराधसोमहः। रातिंवामस्यसुभगाम्महीमिषन्दधासिसानसिꣳरयिम्॥११०॥**

**ऋतावानम्महिषंविश्वदर्शतमग्निꣳसुम्नायदधिरेपुरोजनाः। श्रुत्कर्णꣳसप्रथस्तमन्त्वागिरादैव्यम्मानुषायुगा॥१११॥**

दानं त्वं दधासि ददासि। किञ्च सुभगां सुष्ठु भजनीयां महीं महतीं मिषं मन्नं च ददासि। सानसिं पुराणं रयिं धन मस्मर्यमाणविषयं निधानलक्षणं च दधासि निधिं दर्शयसीत्यर्थः॥ ११० ॥

उपरिष्टाज्ज्योतिः। यस्यास्त्रयः पादा द्वादशाक्षरास्तुर्योऽष्टाक्षरः सोपरिष्टाज्ज्योतिः। मानुषा विभक्तेराकारः मनुष्या जना मनुष्यजातियुक्ता जन्मव ऋत्विग्यजमानाः युगा विभक्तेराकारः युगशब्दः कालवाची युगैः कालैः पौर्णमास्यमावास्यादिभिर्निमित्तैः गिरा वेदवाचा कृत्वा सुम्नाय यज्ञाय त्वा त्वामग्निं पुरो अग्रतः पूर्वभागे आहवनीयरूपेण दधिरे स्थापितवन्तः। किम्भूतं त्वामृतवानमृत मस्यास्तीति ऋतवा तं सत्यवन्तं छान्दसो दीर्घः छन्दसीवनिपौ वाच्यौ वंश मतुप् चेति अस्त्यर्थे वन्प्रत्ययः। महिषं विश्वदर्शतं सर्वस्य

[illegible] मातरा च छन्दसीति निपातः। किञ्च उभे रोदसी द्यावापृथिव्यौ पृणक्षि पूरयसि हविषा द्यां इरया भूमिं पूरयसीत्यर्थः। इमे वै द्यावापृथिवी रोदसी ते एष उभे पृणक्ति धूमेनाम्नं वृष्टेमामितिर[1] श्रुतेः। तं त्वां स्तुम इति वाक्यशेषः॥ १०७॥

तिस्रः सतोबृहत्यः। यस्या आद्यतृतीयौ द्वादशकौ द्वितीयतुर्यावष्टकौ सा सतोबृहती। ऊर्क् जलं नपात्पौत्रः हे ऊर्जोनपा दपां पौत्र अद्भ्य ओषधिवनस्पतयो जायन्ते तेभ्योऽग्निर्जायतइत्यपां पौत्रत्व मग्नेः। यद्वा ऊर्जोऽन्नस्य नपात् न पातयति नाशयति नपात् पततेर्णिजन्तात् क्विप् हे अन्नस्याविनाशक। हे जातवेदः जातप्रज्ञान धीतिभिः कर्मभिर्निमित्तभूतैर्हितः स्थापितः सन् सुशस्तिभिः शोभनाभिः शस्तिभिः स्तुतिभिः कृत्वा त्वं मन्दस्व मोदस्व हृष्टो भव। मदिङ् स्वपने जाड्ये मदे मोदे स्तुतौ गताविति धातुः। किमिति हर्षः

**ऊर्जोनपाज्जातवेदःसुशस्तिभिर्मन्दस्वधीतिभिर्हितः। त्वेइषःसन्दधुर्भूरिवर्पसश्चित्रोतयोवामजाताः॥१०८॥**

**इरज्यन्नग्नेप्रथयस्वजन्तुभिरस्मेरायोअमर्त्य। सदर्शतस्यवपुषोविराजसिपृणक्षिसानसिङ्क्रतुम्॥ १०९॥**

कार्यस्तत्राह यजमानाः त्वे त्वयि इषो हविर्लक्षणान्यन्नानि सन्दधुः जुहवुः हविःप्राप्त्या हर्षः कार्य इत्यर्थः। कीदृशा यजमानाः भूरिवर्पसः वर्प इति रूपनाम भूरीणि वर्पांसि येषां ते नानारूपाः। चित्रोतयः चित्रा विचित्रा नानाविधा ऊतयो रक्षा अवनानि अन्नानि तर्पणानि वा त्वत्कृतानि येषां ते त्वया तर्पिता इत्यर्थः। वामजाताः वामं वननीयं सम्भजनीयं जातं जन्म येषां ते विशिष्टदेशजातिकुलोत्पन्ना इत्यर्थः॥ १०८॥

[1] — ७, ३, २, १०।

हे अमरणधर्मन् हे अग्ने रायो धनानि अस्मे अस्मासु त्वं प्रथयस्व विस्तारय। कीदृशस्त्वं जन्तुभिः प्राणिभिर्हविःप्रदैरध्वर्युप्रमु-

का० अग्ने तवेति सिकता न्युप्य छादयत्यात्मानम्[१]। षड्चेनोत्तरवेदौ सिकताः प्रक्षिप्य ताभिः पुच्छपक्षं विनात्मानं छादयेत्॥ पावकाग्निदृष्टं षडृच मग्निदेवत्यम्। आद्ये द्वे विष्टारपङ्क्ती यस्या द्वितीयतृतीयपादौ द्वादशार्णौ आद्यतुर्यावष्टकौ सा विष्टारपङ्क्तिः। हे अग्ने हे विभावसो विभा दीप्तिरेव वसु धनं यस्य तत्सम्बोधनं हे कान्तिधन तव वयो धूमः अर्चयो दीप्तयश्च भ्राजन्ते दीप्यन्ते. वीयते भक्ष्यते प्राणिभिरिति वयोऽन्नम्। वी कान्त्यसनखादनव्याप्तिषु। धूमस्याहुतिपरिणामद्वारेणान्नहेतुत्वाद्वयोऽत्र धूम उच्यते। कीदृशं वयः श्रवः श्रावयति द्युलोके कृतं कर्मेति श्रवः धूमदर्शनाद्देवानां कर्मज्ञानम्। तथा महि महत् नभोगामित्वात् धूमो वा अस्य श्रवो वयः स ह्येन ममुष्मिंल्लोके श्रावयतीति[२] श्रुतिः। किञ्च बृहन्तो महान्तो भानवो रश्मयो यस्य तत्सम्बुद्धौ हे बृहद्भानो हे कवे

अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो। बृहद्भानो शवसा वाजमुक्थ्यन्दधासि दाशुषे कवे ॥ १०६ ॥

पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना। पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥ १०७॥

क्रान्तदर्शिन् विद्वन् यजमानाभिप्रायज्ञ दाशुषे हविर्दत्तवते यजमानाय शवसा बलेन सह वाज मन्नं त्वं दधासि ददासि। कीदृशं वाजम् उक्थ्यम् उक्थः शस्त्रादुपेतो यज्ञस्तद्योग्यं यज्ञपर्याप्त मन्नं ददासीत्यर्थः॥ १०६ ॥

१——१७,३,१५। २——७,३,१,२९।

हे अग्ने त्वं भानुना दीप्त्या उदियर्षि उद्गच्छसि उत्कर्षं प्राप्नोषीत्यर्थः। कीदृशस्त्वं पावकवर्चाः पावकं शोधकं वर्चो दीप्तिशक्तिर्यस्य सः। शुक्रवर्चाः शुक्रं शुक्लं निर्मलं वर्चो यस्य। अनूनवर्चाः अनून महीनं वर्चो यस्य पूर्णशक्तिः। किञ्च हे अग्ने त्वं विचरन् सर्वतः प्रचरन्सन् उपावसि उप सङ्गमय पालयसि सदेवमनुष्यं जगद्रक्षसि। तत्र दृष्टान्तः पुत्रो मातरा यथा पुत्रश्चरमे वयसि मातरा माता-

कथ मागन्तव्य मत आह इषितः प्रजापतिप्रेषितोऽग्निः ते तव वपां त्वचं पृष्ठं वपासदृश मिमं प्रदेश मरोहत् आरोहतु । अनयर्चा दक्षिणे लोगेष्टकोपधानम् ॥ १०३ ॥

अग्निदेवत्या गायत्री पश्चाल्लोगेष्टकोपधाने विनियुक्ता । हे अग्ने यत्ते तवाङ्गं शुक्रं शुक्लं शुद्धं दीप्तिमत् यच्चान्यदङ्गं चन्द्रं माह्लादकरं यदन्यत्पूतं पवित्रं यच्चान्यदङ्गं यज्ञियं यज्ञार्हं तत्सर्वं स्वाध्यरूपं देवेभ्यो देवाना मर्थं भरामसि भरामः सम्पादयामः ॥ १०४ ॥

आशीर्दैवी त्रिष्टुप् पादत्रयस्योत्तरतो लोगेष्टकोपधाने विनियोगः । इष मन्न मूर्जं तदुपसेचनं दधिपयोघृतादिकं मृतस्य सत्यस्य योनिं स्थानं विधात्रयम् महिषस्य महत इच्छावतोऽग्ने र्धारां धारणा माहुतिं वा इतोऽस्मात्प्रदेशादुदीच्या दिशः सकाशा दह माद मश्नि

अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम् । तद्देवेभ्यो भरामसि ॥ १०४ ॥

इषमूर्जमहमित आदमृतस्य योनिं महिषस्य धाराम् । आ मा गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् ॥ १०५ ॥

भक्षयामि स्वीकरोमीत्यर्थः । अद भक्षणे लङ् । किञ्च एतत्सर्वमिडादिकं मा मा माविशतु आगत्य प्रविशतु तनूषु मदीयपुत्रादिशरीरेषु गोषु मदीयधेन्वादिपशुषु चाविशतु । का० उत्तरस्याः सिकताः प्रमार्ष्टि जहामि सेदिमिति[1] । उत्तरलोगेष्टकातः सिकताः पातयति नास्ति इरान्नं यस्यां ता मनिरा मन्नरहिता ममीवां व्याधियुतां सेदिं मवसाद महं जहामि त्यजामि अन्नाभावरोगदुःखानि मे मा सन्त्वित्यर्थः ॥ १०५ ॥

१—१७,३,१२ ।

का० लोगेष्टका: स्फ्येनाहृत्य बहिर्वेदेरन्तःक्रान्तेषूपदधाति तिष्ठन्मा मा हिꣳसीदिति प्रत्यृचं प्रतिदिशं पुरस्तात्प्रथमम्[1] । ततोऽ-
ध्वर्युः स्फ्येन वेदिबहिःप्रदेशाल्लोगेष्टकाश्चतुरो मृत्खण्डान् पद्मप्रमाणानानीयात्मनो दक्षिणोत्तरपूर्वापरमध्यसूत्रप्रान्तेषु पूर्वादि तिष्ठन्
मन्त्रचतुष्टयेनोपदध्यादिति सूत्रार्थः । हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप् । यः प्रजापतिः पृथिव्या भूमेर्जनिता जनयिता उत्पादकः
जनिता मन्त्र इति णिचो लोपः । वा चार्थे यो वा यश्च दिवं व्यानट् द्युलोकं ससृजे । व्यानट् इति व्याप्तिकर्मा[2] । श्रुतौ तु सृजतेरर्थे
व्याख्यातः यो वा दिवं सत्यधर्मा सृजनेति[3] श्रुतेः । यश्च चन्द्राः आह्लादिका जगत्कारणभूता अपो जलानि प्रथमः आदिभूतः सन् जजानो-

मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट् । यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥ २

अभ्यावर्त्तस्व पृथिवि यज्ञेन पयसा सह । वपान्ते अग्निरिषितो अरोहत् ॥ १०३ ॥

त्पादितवान् तद्द्वारा मनुष्यानुत्पादितवानित्यर्थः । यतः श्रुतौ आपश्चन्द्रा इति मनुष्या व्याख्याताः मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्र-
लोकं पितृमार्गानुसारिणः मनुष्या वा आपश्चन्द्रा इति[4] श्रुतेः कारणे कार्योपचारात् । कीदृशः प्रथमः शरीरी सत्यधर्मा सत्यं धरतीति
सत्यस्य धारयिता स प्रजापतिर्मां मा हिंसीत् मा हन्तु यतः कस्मै काय प्रजापतये हविषा हविः वयं विधेम दद्मः । हविर्दानाम्ना
हन्तु । कशब्दस्य सर्वनामत्वाभावात् स्मै-आदेशः छान्दसः । हविषा इति विभक्तिव्यत्ययः । विधतिर्धातुर्दानार्थः ॥ १०२ ॥
अग्निदेवत्या उष्णिक् । हे पृथिवि यज्ञेनास्मच्चिकीर्षितेन पयसा तत्फलभूतेन दुग्धादिभोगेन च सह अभ्यावर्तस्व आभिमुख्येनागच्छ ।

१—१७,३,११ । २—निघ० २,१८,४ । ३—७,३,१,२० । ४—७,३,१,२० ।

हे ओषधे यतः त्वं सहमानासि शत्रूनभिभवन्ती भवसि अतो मे अरातीः अदानशीलाः शत्रुसेनाः सहस्व अभिभव नास्ति
रातिर्दानं यासां ता अरातयस्ताः। पृतनायतः सङ्ग्रामकामांश्च सहस्व पृतनां सङ्ग्रामं कामयन्ते ते पृतनायन्तस्तान् सुप आत्मनः
क्यजिति क्यजन्ताच्छतृप्रत्ययः किञ्च सर्वं पाप्मानमशुभं सहस्व सहतिरभिभवार्थः ॥ ९९ ॥
हे ओषधे ते तव खनिता खननकर्त्ता दीर्घायुर्भूयादिति शेषः। यस्मै चातुराय नरायाहं त्वां खनामि सोऽपि दीर्घायुरस्तु। अथो

सहस्वमेअरातीःसहस्वपृतनायतः। सहस्वसर्वम्पाप्मानꣳसहमानास्योषधे ॥ ९९ ॥

दीर्घायुस्तओषधेखनितायस्मैचत्वाखनाम्यहम्। अथोत्वन्दीर्घायुर्भूत्वाशतवल्शाविरोहतात् ॥ १०० ॥

त्वमुत्तमास्योषधेतवृक्षाउपस्तयः। उपस्तिरस्तुसोस्माकंय्योअस्माँ२ ॥ऽअभिदासति ॥१०१॥

अपि च त्वं दीर्घायुरखण्डितजीवना भूत्वा शतवल्शा बह्वङ्कुरा सती विरोहताद्विरोह बह्वङ्कुरीत्यर्थः तुह्योस्तातङ् इति तातङ्
वल्शशब्दोऽङ्कुरवाची शतं वल्शाः यस्याः सा शतवल्शा ॥ १०० ॥
हे ओषधे त्वमुत्तमा उत्कृष्टासि भवसि वृक्षाः शालतमालादयस्तवोपस्तयः सन्तु स्तौ शब्दसङ्घातयोः उपस्त्यायन्ति उपकारायोप
द्रवनिराकरणाय च समीपे संहतास्तिष्ठन्तीत्युपस्तयः वृक्षाः त्वां सेवन्तामित्यर्थः। किञ्च यो नरोऽस्मानभिदासति अभिहन्ति स ॥ अनारभ्याधीताः समाप्ताः ॥
नरोऽस्माकमुपस्तिः समीपस्थ उपासकोऽस्तु दासतिर्हिंसाकर्मा ॥ १०१ ॥

राज्ञा स्वस्वामिना सोमेन सह ओषधयः देवताः समवदन्त संवादं कृतवत्यः। कथं संवादस्तमाह ब्राह्मणा यस्मै रुग्णाय कृणोति अस्मन्मूलादिना चिकित्सां करोति कृ कृतौ स्वादिः हे राजन् स्वामिन् सोम तं रुग्णं नरं वयं पारयामसि पारयामः दूरन्तो मसि सोमसंवादो व्याधिनाशदार्ढ्यार्थः॥ ९६॥

हे ओषधे त्वं बलासस्य चयव्याधेर्नाशयित्री नाशनकर्त्री असि भवसि बल मस्यति क्षिपति बलासः क्षयः। अर्शसो गुदव्याधेश्च नाशिकासि। उपचिताम् उपचिन्वन्ति शरीरं वर्धयन्तीत्युपचितः क्विप् श्वयथुगडुस्त्रोपदादयः तेषां च नाशिकासि। अथो अपि च

ओषधयःसमवदन्तसोमेनसहराज्ञा। यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि॥ ९६॥

नाशयित्रीबलासस्यार्शसउपचितामसि। अथोशतस्ययक्ष्माणाम्पाकारोरसिनाशनी॥ ९७॥

त्वाङ्गन्धर्वाअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः। त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत॥ ९८॥

शतस्य यक्ष्माणां बहूनां व्याधिनां पाकारोः मुखपाकक्षतादेश्च नाशनी नाशकर्त्री त्वं भवसि पाको मुखपाकः अरुः क्षतमुच्यते पाकेनारुः पाकारुस्तस्य यद्वा पाकोऽन्नपाकस्तस्यारुर्व्यथा मन्दाग्नित्वं तस्य नाशनी त्वमसि॥ ९७॥

हे ओषधयः गन्धर्वाः देवविशेषाः त्वा मखनन् स्वेष्टकार्यसिद्ध्यर्थं खनन मकुर्वन् इन्द्रश्च त्वा मखनत् बृहस्पतिश्च त्वा मखनत् हे ओषधे सोमो राजा त्वां च विद्वान् त्वत्सामर्थ्यं जानन् सन् त्वा मुपयुज्य यक्ष्मात् महाव्याधेरमुच्यत मुक्तोऽभवत्। ९८।

सोमराज्ञीर्या ओषधयः पृथिवीमनु विष्ठिताः विविधं स्थिताः बृहस्पतिप्रसूताः बृहस्पतिना प्रेरिताः ता ओषधयोऽस्यै ओषध्यै मद्गृहीतायै वीर्यं सन्दत्त सामर्थ्यं प्रयच्छत इयं बहुवीर्या भवत्विति भावः ॥ ९३ ॥

या ओषधय इदं मद्वचनं प्रार्थनारूपमुप समीपस्थाः शृण्वन्ति याश्चान्याः दूरं परागताः दूरे व्यवस्थिता व्यवहिताः सत्यः ईषत् शृण्वन्ति हे वीरुधः विविधरोहणा ओषधयः ताः सर्वाः समीपदूरस्थाः सङ्गत्य सङ्गता भूत्वा अस्यै ओषध्यै यूयं वीर्यं सन्दत्त प्रयच्छत ॥ ९४

याऽओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु । बृहस्पतिप्रसूताऽअस्यै सन्दत्त वीर्यम् ॥ ९३ ॥

याश्चेदमुपशृण्वन्ति याश्च दूरम्परागताः । सर्वाः सङ्गत्य वीरुधोऽस्यै सन्दत्त वीर्यम् ॥ ९४ ॥

मा वो रिषत्खनिता यस्मै चाहं खनामि वः । द्विपाच्चतुष्पादस्माकं सर्वमस्त्वनातुरम् ॥ ९५ ॥

हे ओषधयः वो युष्माकं खनिता चिकित्सायै युष्मान्मूलं ग्रहीतुं खननकर्त्ता मा रिषत् मा विनश्यतु यस्मै च रुग्णाय चिकित्सार्थं वो युष्मानहं खनामि युष्मान्मूलमादातुं खननं करोमि स च मा रिषत् । किम्बहुनाऽस्माकं सम्बन्धि द्विपात् स्त्रीपुंसं चतुष्पाद्गवादिप्राणिजातं सर्वमनातुरं रोगरहितमस्तु । द्वौ पादौ यस्य चत्वारः पादा यस्य सङ्ख्यासुपूर्वस्येति पादशब्दस्यान्त्यलोपः ॥ ९५ ॥

एवमोषधिवापार्थानि पञ्च तृचानि समाप्तानि ॥ अथानारभ्याधीताः ॥ शपथनिमित्तात्किल्बिषात्पापादोषधयो मा मां मुञ्चन्तु पृथक् कुर्वन्तु। अथो अपि च वरुण्यात् वरुणे भवं वरुण्यं तस्माद्वरुणापराधनिमित्तात्पापान्मां मुञ्चन्तु उतापि च यमस्य सम्बन्धिनः पड्वीशात् पड्वीशशब्दो बन्धनवाची यमबन्धननिमित्तात्पापान्मां मुञ्चन्तु। अथो अपि च सर्वस्माद्देवकिल्बिषाद्देवापराधनिमित्तात्पापान्मां मुञ्चन्तु। ९०।

दिवः परि द्युलोकात्सकाशादवपतन्तीरवपतन्तोऽधस्ताद्भूमौ गच्छन्तः ओषधयः अवदन् परस्परं वदन मुक्तवत्यः। किम् तदाह

अवपतन्तीरवदन्दिवओषधयस्परि। यञ्जीवमश्नवामहैनसरिष्यातिपूरुषः ॥९१॥

याओषधीःसोमराज्ञीर्बह्वीःशतविचक्षणाः। तासामसित्वमुत्तमारङ्कामायशंहृदे ॥ ९२॥

जीवतीति जीवस्तं यं जीव मनुत्क्रान्तप्राणं पुरुषं वय मश्नवामहै अशूङ् व्याप्तौ लोट् व्याप्नुमः स पुरुषो न रिष्यति न नश्यति रिष्यतीत्यत्र लेटोऽडाटाविति आडागमः पूरुष इति छान्दसो दीर्घः सर्वत्र। ९१।

सोमो राजा यासां ताः सोमराज्ञ्यः बह्वीः बह्व्योऽनन्ताः शतविचक्षणाः शत मसङ्ख्यं विचक्षणाश्चतुराः बहुवीर्या वा शतं विचक्षणाः स्तोतारो यासामिति वा एवम्भूता या ओषधीः ओषधयः सन्ति तासा मोषधीनां मध्ये हे ओषधे त्व मुत्तमा उत्कृष्टा यतोऽसि भवसि अतः कामायेप्सिताय अर मलं पर्य्याप्ता भव हृदे हृदयाय शं सुखकारिणी भव ॥ ९२ ॥

शब्दानुकरणमिदं हा कष्टं कया ओषध्या निहतोऽहमिति शब्दं कुर्वन् हे यक्ष्म त्वं नश्य॥ अर्थान्तरं वा कफावरुद्धकण्ठोत्थ-ध्वनेरनुकरणार्थः किकिशब्दः किकिना कण्ठध्वनिना दीव्यतीति किकिदीविः श्लेष्मरोगः। चष वधे चषति व्याकुलं कृत्वा हन्ति चाषः पित्तरोगः। वातस्य गाजिवीतिरोगः। हे यक्ष्म रोगराज त्वं कफपित्तवातरोगैः सह प्रपत गच्छ। यया पीड़या कया रुजा निहतोऽस्मि हा कष्टमिति शब्दं करोति सा निहाका सर्वाङ्गवेदना तया साकं हे यक्ष्म त्वं नश्य॥ ८७॥

हे ओषधयो वो युष्माकं मध्ये अन्या काचिदोषधिव्यक्तिरन्य मोषधिव्यक्तिं अवतु तथा रक्षिता अन्यापि अन्यस्या रक्षिकाया

अन्या वो अन्यामवत्वन्यान्यस्या उपावत। ताः सर्वाः संविदाना इदं मे प्रावता वचः॥ ८८॥

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः॥ ८९॥

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत। अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात्॥ ९०॥

उपावत उपावतु उप समीप मागत्य पालयतु पुरुषवचनव्यत्ययः अन्यान्यस्याः प्रभाव भवतु वा। ताः सर्वास्तथाविधा ओषधयो यूयं संविदानाः परस्परैकमत्यं गताः सत्यो मे ममेदं वचो वाक्यं प्रार्थनारूपं प्रावत प्रकर्षेण रक्षत॥ ८८॥

या ओषधयः फलिनीः फलिन्यः फलयुक्ताः याश्चाफलाः फलरहिताः याश्चापुष्पाः पुष्परहिताः याश्च पुष्पिणीः पुष्पिण्यः पुष्पयुक्ताः ताः सर्वा ओषधयो बृहस्पतिप्रसूताः बृहस्पतिप्रेरिताः सत्यो नोऽस्मानंहसः पापाद्रोगरूपात् मुञ्चन्तु पृथक् कुर्वन्तु॥ ८९॥

घातप्रागेव नश्यति किं पुनर्भक्षणेनेति भावः। तत्र दृष्टान्तः जीवगृभो यथा जीवन् सन्नेव यो हिंसार्थं गृह्यते आघातस्थानं नीयते स जीवगृप् तस्य जीवगृभो बधात्प्रागेवातिविषादात् मृतोऽहमिति मन्यमानस्य मनुष्यस्यात्मा यथा नश्यति नष्टप्रायो भवति तथौषधौ हस्ते धृतायां व्याधेरात्मा नश्यतीत्यर्थः॥ ८५॥

हे ओषधीः ओषधयो यस्य रोगिणः अङ्गमङ्गं प्रत्यङ्गं सर्वाण्यङ्गानि परुष्परुः परुःशब्दः पर्ववचनः प्रतिपरुः पर्वाणि सर्वाणि ग्रन्थीन् यूयं प्रसर्पथ प्रगच्छथ व्याप्नुथ ततोऽङ्गपर्वसमुदायात् यक्ष्मं रोगं यूयं विबाधध्वे निवर्तयथ व्याधिनाशं कुरुध्वे। तत्र दृष्टान्तः उग्रो मध्यमशीरिव मध्ये देहमध्ये भवं मध्यमं मर्मभागं शृणाति हिनस्ति मध्यमशीः शॄ हिंसायां क्विप् ऋतइद्धातोरिति इत्वादेशः उरण् रपर इति

यस्यौषधीःप्रसर्पथाङ्गमङ्गम्परुष्परुः। ततोयक्ष्मंविबाधध्वउग्रोमध्यमशीरिव॥ ८६॥

साकंयक्ष्मप्रपतचाषेणकिकिदीविना। साकंवातस्यध्राज्यासाकन्नश्यनिहाकया॥ ८७॥

रेफः मर्मघातकः उग्र उत्कृष्टो बहुगोधाङ्गुलित्राण उद्गूर्णशस्त्रः पत्तिर्यो यथा शत्रुं बाधते। यद्वा उग्रो वज्री मध्यमेन त्रिशूलमध्यभागेन शृणातीति मध्यमशीः यथा दुर्गासौ जगद्बाधते तद्वद्यूयमपि रोगिणो देहं प्रविष्टा व्याधिं विबाधध्वमित्यर्थः॥ ८६॥

हे यक्ष्म रोग त्वं चाषेण पक्षिणा साकं सह प्रपत प्रकर्षेण गच्छ। किम्भूतेन चाषेण किकिदीविना किकीति शब्दानुकरणं किकीतिशब्देन दीव्यति क्रीडतीति किकिदीविस्तेन। चाषस्तर्वाचितः सार्थः। वातस्य ध्राज्या गत्या साकं प्रपत वातगतिवत्त्वरायस्वेत्यर्थः। किञ्च निहाकया साकं नश्य नष्टो भव निहन्ति कायमिति निहाका निर्ऋतिः कृच्छ्रापत्तिस्तया सह नश्य। यद्वा

मातृकत्वात् । किंच सीराः सह इरया अन्नेन वर्तन्त इति सीराः सहस्य सादेशे टिलोप इकारदीर्घश्च छान्दसः । यद्वा सीराः क्षुधादीनामपसारयित्र्यः । यद्वा सीरं हलं निष्पादकत्वेन यासु ताः सीराः । पतत्रिणीः पतत्रं पतनं गमनं विद्यते यासां ताः पतत्रिण्यः प्रसरणशीलाश्च स्थन भवथ वाच्छन्दसीति दीर्घः तप्तनबित्यादिना थस्य थनादेशः । यत् यस्मात् आमयति अम रोगे चुरादिः शबन्तः रुजति आमयाविनि नरे स्थितं रोगं निष्कृथ नाशयथ । यद्वा यत् आमयति यत् क्षुधादिकं रोगवद्बाधते तद्रूपं निष्कृथ करोतेः अपि लुमे लटि रूपम् ॥ ८३ ॥

परि सर्वतो रोगानधिष्ठाय तिष्ठन्तीति परिष्ठाः रोगनाशिका विश्वाः सर्वाः ओषधीः ओषधयो यदा अत्यक्रमुः आक्रामन्ते भक्षिताः

अतिविश्वाः परिष्ठास्तेन इव व्रजमक्रमुः । ओषधीः प्राचुच्यवुर्यत्किं च तन्वो रपः ॥ ८४ ॥

यदिमा वाजयन्नहमोषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ ८५ ॥

सत्यो देहं व्याप्नुवन्ति क्रमतेर्लिङि अग उश् छान्दसः । तत्र दृष्टान्तः स्तेन इव व्रजम् यथा रात्रौ स्तेनश्चोरो गोष्ठमाक्रमते गोशालायां गा अपहर्तुं सत्वरं गच्छति तद्वत् यदौषधयो रोगमपहर्तुं देहमाक्रमन्ते तदा तन्वः शरीरस्य यत् किंच यत् किमपि रपः पापं शिरोव्यथागुल्मातिसारादिरूपं पापफलं यत् किंचिदस्ति तत्सर्वं प्राचुच्यवुः प्रच्यावयन्ति नाशयन्ति च्यु गतौ लुङि णिश्रिद्रुस्रुभ्यः कर्तरि चङ् इति चङ्प्रत्यये रूपम् । रपो रिप्रमिति पापनामनी भवत इति[1] यास्कः ॥ ८४ ॥

यत् यदा इमा ओषधीः वाजयन् पूजयन्मानयन् सन् अहं हस्ते स्वकरे आदधे स्थापयामि तदैव यक्ष्मस्य व्याधेरात्मा स्वरूपं पुरा भय-

१—निरु० ४।२१ ।

अविवित्ति समन्ताद्वेद्मि जानामि विद्लृ लुङि आत्मनेपदे उत्तमैकवचने छन्दसि रूपम्। असौ यजमानार्थं वेत्तीति वा। तद्विशेषणम् अरिष्टं शुभं करोति तनोतीति वारिष्टतातिस्तस्मै। सर्वाः वा इत्यत आह अश्ववती सन्त्यस्यां सन्तीत्यश्ववती ताम् अश्व-सम्पादिनीं काञ्चित् ओषधिसम्बन्धो सत्यां धनद्वारेणाश्वलाभात्। अन्यां सोमवतीं सोमयागोऽस्या अस्तीति सोमवती तां सोमसम्पा-दिनीं मन्ये सोमाश्वेत्यादिना अश्वसोमयोर्दीर्घः। ऊर्जयन्तीं ऊर्ज बलप्राणनयोः बलसम्पादिनीं जीवयन्तीं वा ऊर्जयतीति। उदोजस मुन्नत मोजो यस्याः सा उदोजास्तां तेजःसम्पादिनीम्। एवं नानाकार्यकारिणीः सर्वा ओषधीः जानामीत्यर्थः। यद्वा अश्वावतीमित्या-दीनि बहुवचनान्तानि कार्याणि ओषधीरित्यस्य विशेषणत्वात्॥ ८१॥

उच्छुष्माओषधीनाङ्गावोगोष्ठादिवेरते। धनꣳसनिष्यन्तीनामात्मानन्तवपूरुष॥ ८२॥

इष्कृतिर्न्नामवोमाताथोयूयꣳस्थनिष्कृतीः। सीराःपतत्रिणीस्थनयदामयतिनिष्कृथ॥ ८३॥

हे पुरुष यज्ञपुरुष तवात्मानं त्वदीयं शरीरं प्रति धनं सनिष्यन्तीनाम् षणु दाने हवीरूपं धनं दातुमिच्छन्तीना मोषधीनां शुष्मा बलानि सामर्थ्यानि उदीरते उद्गच्छन्ति प्रकाशीभवन्ति गावो गोष्ठादिव यथा गोष्ठात्स्वस्थानाद्गावोऽरण्यदेशं प्रति उद्गच्छन्ति तद्वत्। ईर कम्पे अदादिः॥ ८२॥

हे ओषधयो वो युष्माक मिष्कृतिर्नाम निष्कृतिनाम्नी माता जननी। निष्करोति व्याधिं नाशयति निष्कृतिः। निशब्दो बहुलमिति[१] प्रातिशाख्यसूत्रेणोपसर्गैकदेशनकारलोपः। अथो अपि च यूयमपि निष्कृतीः निष्कृतयः स्थ व्याधिनिष्क्रमणकारिण्यो भवथ निष्कृति-

१—,२१,१०।

फलितत्वात् । अत एव यूय मुस्राः सत्यो गोभाजो भूमिभाज एव किलासथ भवथ । गौर्नादित्ये बलीवर्दे मखभेदर्षिभेदयोः । स्त्रियां स्याद्दिशि भारत्यां भूमौ च सुरभावपीति कोशात् । किमर्थ मिद मित्यत आह यत् यस्मात्कारणात् पुरुष यजमान यूय सनवथ सेवध्व मन्नदानेन पोषयथ यस्मादश्वत्थादिस्थान मित्यर्थः । अश्वत्थे पलाशे च वः स्थानम् देवाधिष्ठानादश्वत्थो लोके नति-प्रदक्षिणादिना पूज्यते पलाशस्य ब्रह्मादिरूपेण । एव मश्वत्थादि रूपेण यूय भूभाजः स्थ शेष पूर्ववत् । असतेः अपि चसथेति रूप लटि सनवतिः परिचर्यार्थः ॥ ७९ ॥

हे ओषधीः ओषधयः यत्र विप्रे भेषज्यकर्तरि ब्राह्मणे यूय समग्मत सङ्गच्छत रोग जेतुम् के इव राजान इव यथा राजानः

यत्रौषधीः समग्मत राजानः समिताविव । विप्रः स उच्यते भिषग्रक्षोहामीवचातन ॥ ८० ॥

अश्वावतीᳬ सोमावतीमूर्जयन्तीमुदोजसम् । आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये । ८१ ॥

समितौ युद्धे शत्रून् जेतु समागच्छन्ति । गमेर्लुङि मध्यमबहुवचने पुषादीत्यङि गमहनेति उपधालोपे छान्दसेऽग्मतेति रूपम् । स भवदाश्रितो विप्रः भिषग्वैद्य उच्यते कथ्यते । कीदृशो विप्रः रक्षोहा रक्षांसि हन्तीति रक्षोघ्न पुरोडाश कृत्वा रक्षसां हन्ता रक्षःकृतोपद्रवनाशकः । तथा अमीवचातनः अमीवान् रोगान् चातयति नाशयति अमीवचातनः औषधदाने रोगनाशकः चातयतिर्नाशनार्थ धातूना मनेकार्थत्वात् ॥ ८० ॥

अस्मै अस्य यजमानस्य अरिष्टतातये रिषतिर्विनाशार्थः रेषणं रिष्टम् भावे क्तः न रिष्टमरिष्टमनाशो मङ्गलमित्यर्थः तस्य करण-मरिष्टतातिः शिवशमरिष्टस्य करइति तातिप्रत्ययः यद्वा तनन तातिर्विस्तारः तस्मै यजमानस्य शुभकरणाय सर्वा ओषधीरहमा

सह जुषा वर्तते समाना जुड् वा यस्य सजूः जुषतेः सम्पदादित्वात् क्विप् मासार्धमासैः प्रीतियुक्त इत्यर्थः । कीदृश्य उषाः अरुणीभिः अरुणवर्णाभिः गोभिः सजूः प्रीतियुता । कीदृशावश्विनौ दंसोभिः कर्मभिश्चिकित्सादिभिः सजोषसौ प्रीतौ । कीदृशः सूरः एतशेनाश्वेन सजूः तुष्टः । कीदृशोऽग्निः इडया पृथिव्या सजूः प्रीतः तदधिष्ठातृत्वात् आग्नेयी हि पृथिवी इडाशब्देन गौर्वागन्नं चोच्यते ॥ ७४ ॥

का० या ओषधीरिति ऋचैवैतत्युदपात्रवत्[1] । पञ्चभिस्तुवैयमतेन सर्वौषधं वपति उदपात्रवदिति चतुश्चतुःसीतासु यथा कृष्टम् ॥ अथर्वपुत्रभिषग्दृष्टा ओषधिदेवत्या योऽस्मानभिदासतीत्यन्ताः(१०१) सप्तविंशतिरनुष्टुभः मुञ्चन्तु मेत्याद्या(९०) द्वादश बन्धुदृष्टाः क्वापि कर्मण्यनियुक्ताः । पादानां न्यूनाधिक्ये व्यूहाधिक्ये कार्ये । युगशब्दः कालवाची त्रयाणां युगानां समाहारस्त्रियुगं

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहꣳ शतं धामानि सप्त च ॥ ७५ ॥

त्रिकालं वसन्ते प्रावृषि शरदि च । पुरा सृष्ट्यादौ या ओषधीः ओषधयः पूर्वाः प्रथमा भाविनीभ्य ओषधीभ्यः आद्याः जाता उत्पन्नाः । किमर्थं देवेभ्यः ऋतुभ्यः । ऋतवो वै देवा इति[2] श्रुतेः ऋतव ओषधियुताः कर्तव्या एतदर्थम् । बभ्रूणां जगज्जनभरणसमर्थानां पाकेन पिङ्गलवर्णानां वा तासामोषधीनां शतं सप्त च धामानि अहं मनै नु मन्यऽएव जाने मन्यतेर्लेटि आत्मनेपदे उत्तमैकवचने शपि एत ऐ इति रूपम् । संवत्सरोपलक्षितं शैकैकं स्थानं शतायुर्वै पुरुष इति श्रुतेः शतं धामानि वर्षात्मकानि शिरःस्थानि मुखदृङ्नासाकर्णाख्यानि सप्त स्थानानि च यएवेमे सप्त शीर्षन् प्राणास्तानेतदाहेति[3] श्रुतेः नराणां शतवर्षपर्यन्तमिन्द्रि-

१ —— १७,३,८ । २ —— ७,२,४,२६ । ३ —— ७,२,४,२६ ।

फलितत्वात्। अत एव यूयं सुसाः सत्यो गोभाजो भूमिभाज एव किलासथ भवथ। गौर्नादित्ये बलीवर्दे मखभेदर्षिभेदयोः। स्त्रियां स्याद्दिशि भारत्यां भूमौ च सुरभावपीति कोशात्। किमयं मित्र मित्यत आह यत् यस्मात्कारणात् पुरुषं यजमानं यूयं सनवथ सेवध्व मन्नदानेन पोषयथ यस्मादश्वत्थादिस्थान मित्यर्थः। अश्वत्थे पलाशे च वः स्थानम् देवाधिष्ठानादश्वत्थो लोके नति-प्रदक्षिणादिना पूज्यते पलाशस्तु यज्ञपात्रादिरूपेण। एव मश्वत्थादि रूपेण यूयं भूभाजः स्थ शेषं पूर्ववत्। अस्तेः अपि असथेति रूपं लटि सनवतिः परिचर्यार्थः॥ ७९॥

हे ओषधीः ओषधयः यत्र विप्रे भेषज्यकर्तरि ब्राह्मणे यूयं समग्मत सङ्गच्छत रोगं जेतुम् के इव राजान इव यथा राजानः

यत्रौषधीःसमग्मतराजानःसमिताविव। विप्रःसउच्यतेभिषग्रक्षोहामीवचातनः॥ ८०॥

अश्वावतीꣳसोमावतीमूर्जयन्तीमुदोजसम्। आवित्सिसर्वाओषधीरस्माअरिष्टतातये॥ ८१॥

समितौ युद्धे शत्रून् जेतुं समागच्छन्ति। गमेर्लुङि मध्यमबहुवचने पुषादित्वादङि गमहनेति उपधालोपे छान्दसोऽमतेति रूपम्। स भवदाश्रितो विप्रः भिषग्वैद्य उच्यते कथ्यते। कीदृशो विप्रः रक्षोहा रक्षांसि हन्तीति रक्षोघ्नं पुरोडाशं कृत्वा रक्षसां हन्ता रक्षःकृतोपद्रवनाशकः। तथा अमीवचातनः अमीवान् रोगान् चातयति नाशयति अमीवचातनः ओषधदाने रोगनाशकः चात-यतिर्नाशनार्थे धातूना मनेकार्थत्वात्॥ ८०॥

अस्मै अस्य यजमानस्य अरिष्टतातये रिषतिर्विनाशार्थः रेषणं रिष्टम् भावे क्तः न रिष्टमरिष्टमनाशो मङ्गलमित्यर्थः तस्य करण-मरिष्टतातिः शिवशमरिष्टस्य करइति तातिप्रत्ययः यद्वा तननं तातिर्विस्तारः तस्मै यजमानस्य शुभकरणाय सर्वा ओषधीरहमा

सह जुषा वर्तते समाना जुट् वा यस्य सजूः जुषतेः सम्पदादित्वाद्भावे क्विप् मासार्धमासैः प्रीतियुक्त इत्यर्थः। कीदृश्युषाः अरुणीभिः अरुणवर्णाभिः गोभिः सजूः प्रीतियुता। कीदृशावश्विनौ दंसोभिः कर्मभिश्चिकित्सादिभिः सजोषसौ प्रीतौ। कीदृशः सूरः एतशेनाश्वेन सजूः तुष्टः। कीदृशोऽग्निः इडया पृथिव्या सजूः प्रीतः तदधिष्ठातृत्वात् आग्नेयी हि पृथिवी इडाशब्देन गौर्वाग्वा चोच्यते ॥ ७४ ॥

का० या ओषधीरिति प्रचैवैंपत्य् उदपात्रवत्[१]। पञ्चभिस्तृचैश्चमसेन सर्वौषधं वपति उदपात्रवदिति चतुश्चतुःसीतासु यथा कष्टम् ॥ अथर्वपुत्रभिषग्दृष्टा ओषधिदेवत्या योऽस्मानभिदासतीत्यन्ताः(१०१) सप्तविंशतिरनुष्टुभः मुञ्चन्तु मेत्याद्या(९०) द्वादश वन्यदृष्टाः कुत्रापि कर्मण्यनियुक्ताः। पादानां न्यूनाधिक्ये व्यूहाधिक्ये कार्ये। युगशब्दः कालवाची त्रयाणां युगानां समाहारस्त्रियुगं

**या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥ ७५ ॥**

त्रिकालं वसन्ते प्रावृषि शरदि च। पुरा सृष्ट्यादौ या ओषधीः ओषधयः पूर्वाः प्रथमा भाविनीभ्य ओषधीभ्यः आद्याः जाता उत्पन्नाः। किमर्थं देवेभ्यः ऋतुभ्यः। ऋतवो वै देवा इति[१] श्रुतेः ऋतव ओषधियुताः कर्तव्या एतदर्थम्। बभ्रूणां जगज्जनभरणसमर्थानां पाकेन पिङ्गलवर्णानां वा तासां ओषधीनां शतं सप्त च धामानि अहं मनै नु मन्य एव जाने मन्यतेर्लेटि आत्मनेपदे उत्तमैकवचने अपि एत ऐ इति रूपम्। संवत्सरोपलक्षितमेकैकं स्थानं शतायुर्वै पुरुष इति श्रुतेः शतं धामानि वर्षात्मकानि शिरःस्थानि मुखदृङ्नासाकर्णाख्यानि सप्त स्थानानि च यएवेमे सप्त शीर्षन् प्राणास्तानेतदाहेति[२] श्रुतेः नराणां शतवर्षपर्यन्तं सिद्धि-

१ —— १०,१,८। १ —— ७,२,४,२६। २ —— ७,२,४,२६।

का० अनडुहो विमुच्य विमुच्यध्वमिति पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति[1]। वृषान् हलाद्वियोज्य पशुवद्दितीयैशानीं दिशं प्रति विसृजत्यध्वर्युः यजमानश्च सुत्यायां सर्वोरांस्तानध्वर्यवे ददातीति सूत्रार्थः। विमोचने मन्त्रः वृषदेवत्यार्षी गायत्री पादानियमात्। हे देवयानाः देवतार्थकर्मकारिणः देवार्थं यानं क्रियाद्गमनं येषां ते यद्वा देवयानमार्गहेतुभूताः कर्मद्वारा तत्प्रापकाः। हे अघ्न्या अहन्तव्या गावो बलीवर्दा यूयं विमुच्यध्वम् मुचेः कर्मकर्तरि यक् लोटि जगत्स्थितिहेतुं कृषि मेवं निष्पाद्य कृतकृत्याः सन्तो युगात् पृथग्भवतेत्यर्थः। अस्य तमसः क्षुत्पिपासाद्युद्भूतस्य दुःखस्य पारं समाप्तिं वय मगन्म प्राप्ताः गच्छतेर्लुङि

विमुच्यध्वमघ्न्यादेवयानाअगन्मतमसस्पारमस्य। ज्योतिरापाम॥ ७३॥

सजूरब्दोअयवोभिःसजूरुषाअरुणीभिः। सजोषसावश्विनादꣳसोभिःसजूःसूरएतशेनसजूर्वैश्वानरइडयाघृतेनस्वाहा। ॥७४॥

अपि लुप्ते रूपम् तदुक्तं योऽशनायापिपासे शोकं मोहं जरां मृत्यु मत्येतीति[1]। दुःखपार मेव स्पष्टयति। वयं ज्योतिरापाम परमात्मलक्षणं यज्ञरूपं वा तेजः प्राप्ताः। आप्नोतेर्लुङि पुषादीत्यादिना अङ्प्रत्ययः॥ ७३॥

का० पञ्चगृहीतेनोदृह्णन्नभिजुहोति सजूरब्द इति[2]। तदानीं संस्कृतेन जुह्वा पञ्चगृहीतेनाज्येन कृष्टाश्ममध्यस्थापितकुशस्तम्बे स्रुच मूर्ध्वां कुर्वन् जुहोति॥ लिङ्गोक्तदेवतं यजुर्ब्राह्म्यनुष्टुप्छन्दस्कम्। अब्दः अपो जलानि ददातीत्यब्दः संवत्सरः उषाः प्रातरधिष्ठात्री देवता अश्विना अश्विनौ देवभिषजौ सूरः सूर्यः वैश्वानरः अग्निश्च एभ्योऽब्दादिदेवेभ्यो घृतेन स्वाहा इदं घृतं तेभ्यः सुहुत मस्तु। तेषां प्रत्येकं विशेषणानि। कीदृशोऽब्दः अयवोभिः सजूः यवाश्चायवाश्चार्धमासामासाश्चोच्यन्ते जोषणं जुट् प्रीतिः

[1]—१७,२,२०-१। [2]—श० ब्रा० मा० ३,२,१। [3]—१७,१,१।

हे कर्षकाः सीरा सीराणि हलानि युनक्त युङ्क्त योजयत। तप्तनप्तनथनाश्चेति तस्य तबादेशे श्नसोरल्लोपाभावे युनक्तेति रूपम्। युगा युगानि वितनुध्वं शम्याद्योक्त्रादिभिर्विस्तारयत। ततः कृते कर्षणेन संस्कृते इह अस्मिन्योनौ स्थाने बीजं व्रीह्यादिकं यूयं वपत। कया। गिरा या ओषधीरित्यादिकया(७५) वेदमन्त्रवाचा चकाराद्गमनेन च। किञ्च वाग्वै गौरन्नं श्रुष्टिरिति[१] श्रुतेः श्रुष्टिः अन्नजातिर्व्रीह्यादिका सभरा असत् भरणं भरः पुष्टिः ऋदोरबिति अप् प्रत्ययः भरेण फलसमृद्ध्या सह वर्तमाना सभराः पुष्टा अस्तु। इतश्च लोपः परस्मैपदेष्विति इकारलोपेऽडागमेऽसदिति रूपम्। पक्वं धान्यं नेदीय इत् अतिशयेनान्तिकं नेदीयः अन्तिकबाढयोर्नेद-

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम्। गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्॥६८॥

शुनꣳ सु फाला वि कृषन्तु भूमिꣳ शुनं कीनाशा अभि यन्तु वाहैः।

शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मे॥६९॥

साधाविति अन्तिकस्येयसुनि प्रत्यये नेदादेशः इत् एवार्थे नेदीय इत् अन्तिकतममेवाल्पकालमेव पक्वं धान्यं सृण्यः सृण्या सृणिशब्दोऽत्र दात्रार्थः सृण्या लवनसाधनेन दात्रेण लूनमिति शेषः। दात्रेण छिन्नं सत् नः अस्मान् प्रति आ इयात् आगच्छतु अल्पकालेन पक्वमस्मद्गृह मागच्छत्वित्यर्थः॥६८॥

का० आत्मनि कृषत्यनुपरिश्रिच्छुनं सु फाला इति प्रत्यृचम्[२]। चितिस्थाने परिश्रित्समीपे चतुर्भिर्दक्षिणपश्चिमोत्तरपूर्वेषु

१—७,२,२,५। २—१७,२,१२।

का० अनडुहो विमुच्य विमुच्यध्वमिति पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति[1] । वृषान् हलाद्वियोज्य पशुवदित्यैशानीं दिशं प्रति विसृजत्यध्वर्युः यजमानश्च सुत्यायां सतोरांस्तानध्वर्यवे ददातीति सूत्रार्थः । विमोचने मन्त्रः वृषदेवत्यार्षी गायत्री पादानियमात् । हे देवयानाः देवतार्थकर्मकारिणः देवार्थं यानं क्रयाद्गमनं येषां ते यद्वा देवयानमार्गहेतुभूताः कर्मद्वारा तत्प्रापकाः । हे अघ्न्याः अहन्तव्या गावो बलीवर्दाः यूयं विमुच्यध्वम् मुचेः कर्मकर्तरि यक् लोटि जगत्स्थितिहेतुं कृषिमेवं निष्पाद्य कृतकृत्याः सन्तो युगात् पृथग्भवतेत्यर्थः । अस्य तमसः क्षुत्पिपासाद्युद्भवस्य दुःखस्य पारं समाप्तिं वयमगन्म प्राप्ताः गच्छतेर्लङि

विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारमस्य । ज्योतिरापाम ॥ ७३ ॥

सजूरब्दो अयवोभिः सजूरुषा अरुणीभिः । सजोषसावश्विना दꣳसोभिः सजूः सूर एतशेन सजूर्वैश्वानर इडया घृतेन स्वाहा ॥ ७४ ॥

अपि लुप्ते रूपम् तदुक्तं योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीति[2] । दुःखपारमेव स्पष्टयति । वयं ज्योतिरापाम परमात्मलक्षणं यज्ञरूपं वा तेजः प्राप्ताः । आप्नोतेर्लुङि पुषादीत्यादिना अङ्प्रत्ययः ॥ ७३ ॥

का० पञ्चगृहीतेनोद्गच्छन्नभिजुहोति सजूरब्द इति[3] । तदानीं संस्कृतेन जुह्वा पञ्चगृहीतेनाज्येन कृष्टात्ममध्यस्थापितकुम्भस्तम्बे स्रुचं मूर्ध्वां कुर्वन् जुहोति ॥ लिङ्गोक्तदेवतं यजुर्ब्राह्म्यनुष्टुप्छन्दस्कम् । अब्दः अपो जलानि ददातीत्यब्दः संवत्सरः उषाः प्रातरधिष्ठात्री देवता अश्विना अश्विनौ देवभिषजौ सूरः सूर्यः वैश्वानरः अग्निश्च एभ्योऽब्दादिदेवेभ्यो घृतेन स्वाहा इदं घृतं तेभ्यः सुहुतमस्तु । तेषां प्रत्येकं विशेषणानि । कादृशोऽब्दः अयवोभिः सजूः यवा अयवाश्चाधमासा मासाश्चोच्यन्ते जोषणं जुट् प्रीतिः

1——१७,२,२०१ । 2——बृ० आ० मा० ३,२,१ । 3——१७,२,३ ।

हे कर्षकाः सीरा सीराणि हलानि युनक्त युङ्क्त योजयत। तप्तनप्तनथनाश्चेति थस्य तबादेशे श्नसोरल्लोपाभावे युनक्तेति रूपम्। युगा युगानि वितनुध्वं शम्यायोक्त्रादिभिर्विस्तारयत। ततः कृते कर्षणेन संस्कृते इह अस्मिन्योनौ स्थाने बीजं व्रीह्यादिकं यूयं वपत। कया। गिरा या ओषधीरित्यादिकया(७५) वेदमन्त्रवाचा चकारात्समसेन च। किञ्च वाग्वै गीरन्नं श्रुष्टिरिति[1] श्रुतेः श्रुष्टिः अन्नजातिव्रीह्यादिका सभरा असत् भरणं भरः पुष्टिः भृञोऽसुन् प्रत्ययः भरसा फलपुष्ट्या सह वर्तमाना सभराः पुष्टा अस्तु। इतश्च लोपः परस्मैपदेष्विति इकारलोपेऽडागमेऽसदिति रूपम्। पक्वं धान्यं नेदीय इत् अतिशयेनान्तिकं नेदीयः अन्तिकबाढयोर्नेद-

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम्। गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्॥६८॥

शुनꣳसु फाला वि कृषन्तु भूमिꣳशुनं कीनाशा अभि यन्तु वाहैः।

शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मे॥६९॥

साधाविति अन्तिकस्येयसुनि प्रत्यये नेदादेशः इत् एवार्थे नेदीय इत् अन्तिकतम मेवात्यल्पकाल मेव पक्वं धान्यं सृण्यः सृण्या सृणिशब्दोऽत्र दात्रार्थः सृण्या लवनसाधनेन दात्रेण लूनमिति शेषः। दात्रेण छिन्नं सत् नः अस्मान् प्रति आ इयात् आगच्छतु अल्पकालेन पक्व मन्नमिह मागच्छत्वित्यर्थः॥६८॥

का० आत्मनि कृषत्यनुपरिश्रिच्छुनं सु फाला इति प्रत्यृचम्[2]। चितिस्थाने परिश्रित्समीपे चतुर्भिर्दक्षिणपश्चिमोत्तरपूर्वेषु

१—७,२,२,५। २—१७,२,१२।

रूपां रूपाणि अभिचष्टे पश्यति आहवनीयातिप्रणीताग्नीध्रधिष्ण्यादीनि सर्वाणि रूपाणि सर्वतः पश्यति। कीदृशानि रूपाणि शचीभिः स्वैः स्वैः कर्मभिर्युक्तानीति शेषः। कीदृशोऽग्निः निवेशनः निवेशयति यजमानं स्वगृहे स्थापयतीति निवेशनः। तथा वसूनां सङ्गमनः सङ्गमयति प्रापयतीति सङ्गमनः प्रजापशुरूपधनप्रापकः। सत्यधर्मा सत्योऽवश्यभावी फललोपेतो धर्मोऽग्निहोत्रादिलक्षणो यस्यासौ सत्यधर्मा। क इव सविता देव इव यथा सविता सूर्यो देवः सर्वाणि अभिचष्टे। यश्चाग्निः पथीनां विभक्तिव्यत्ययः पथिभिः परिपन्थिभिः सह समरे सङ्ग्रामे इन्द्रो न इन्द्र इव तस्थौ स्थितवान् यथेन्द्रो युद्धे तिष्ठति तद्वत् तं वयं स्तुम इति शेषः। पथिन् शब्दस्य परिपन्थिवाचकत्वाद्गस्य टेरिति टिलोपाभावे छान्दसे दीर्घे पथीनामिति रूपम् ॥ ६६ ॥

निवेशनःसङ्गमनोवसूनांविश्वारूपाभिचष्टेशचीभिः। देवइवसवितासत्यधर्म्मेन्द्रोनतस्थौसमरेपथीनाम् ॥६६

सीरायुञ्जन्तिकवयोयुगावितन्वतेपृथक्। धीरादेवेषुसुम्नया ॥ ६७

का० दक्षिणा मग्निश्रोणि मपरेण तिष्ठन्युज्यमान मभिमन्त्रयते सीरा युञ्जन्तीति[१]। चितेर्दक्षिणश्रोणेः पश्चिमे तिष्ठन्नध्वर्युः प्रतिप्रस्थात्रोत्तरांसपूर्वं षड्भिर्द्वादशभिश्चतुर्विंशत्या वा वृषैर्युज्यमान मौदुम्बरं हलं द्वाभ्यामभिमन्त्रयते॥ सीरदेवत्ये सोमपुत्रबुधदृष्टे गायत्रीत्रिष्टुभौ। धीराः धीमन्तोऽग्निचेत्रविदः कवयः कृषिकर्माभिज्ञाः सीरा सीराणि हलानि युञ्जन्ति। वृषैर्योजयन्ति युगा युगानि पृथक् नाना वितन्वते विस्तारयन्ति। किं कर्तुम् देवेषु सुम्नया सुम्नमिति सुख नाम[२] ततो द्वितीयैकवचनस्य सुपां सुलुगिति यादेशः सुम्नं सुखं कर्तुमिति शेषः। देवानां सुम्नं कर्तुं युञ्जन्तीत्यर्थः। चतुर्थ्या यादेशो वा देवानां सुम्नाय युञ्जन्ति। सीरयुगपदयोर्बहुत्वं पूजार्थं तयोरेकत्वात् युगानि बहूनि सन्ति ॥ ६७ ॥

१——१७,२,११। २——निघ० ३,६,१६।

का० शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यं त इति१ । शिक्यं रुक्मपाशं द्वे इण्ड्वे आसन्दीं च नैर्ऋतीष्टकातः पश्चात्क्षिपति ॥ यजमानदेवत्या त्रिष्टुप् । यजमानं प्रत्युच्यते । हे यजमान निर्ऋतिर्देवी ते तव ग्रीवासु कण्ठावयवेषु यं पाशं शिक्यरूप माबबन्ध आ समन्ताद्बद्धवती कीदृशं पाशं मविचृत्यं चृती छेदने अच्छेद्यं दृढं तं ग्रीवस्थं ते तव पाशं मनेन मन्त्रेणाहं विष्यामि विमुञ्चामि स्यतिरुपसृष्टो विमोचनार्थः । कस्मात् स्थानाद्विमुञ्चामि आयुषोऽग्नेर्मध्याद्गार्हपत्यचितिस्थानात् न सम्प्रति इदानीमेव पाशं दूरीकरोमीत्यर्थः। नकारः सम्प्रत्यर्थः अग्निर्वा आयुस्तस्यैतन्मध्यं यच्चितो गार्हपत्यो भवत्यचित आहवनीय इति२ श्रुतेरायुः शब्देनाग्निरुच्यते। अथ पाशविमोकानन्तरं प्रसूतः निर्ऋत्यानुज्ञातः सन् अग्निरूप माश्रित्य हे यजमान एतं पितुं मन्नं मद्धि भक्षय ॥ का० उदपात्रं

यन्तेदेवीनिर्ऋतिराबबन्धपाशङ्ग्रीवास्वविचृत्यम्। तन्तेविष्याम्यायुषोनमध्यादथैतम्पितुमद्धिप्रसूतः ॥

नमोभूत्यैयेदञ्चकार ॥ ६५ ॥

निविष्यान्तरामेष्टका मुत्तिष्ठन्ति नमो भूत्या इति३ । शिक्यादिनिरसनानन्तरं मात्मनो नैर्ऋतीष्टकानां च मध्ये जलपूर्णं चमसं तूष्णीं विनीय ब्रह्मयजमानाध्वर्यवो नम इति मन्त्रेणोत्तिष्ठन्ति नैर्ऋतीसमीपादिति सूत्रार्थः ॥ भूतिदेवत्यैकपदा विराट् । या देवी इदमग्निचयं कर्म चकार कृतवती तस्यै भूत्यै श्रीरूपिण्यै देव्यै नमो नमस्कारोऽस्तु ॥ ६५ ॥

का० अनपेक्ष मेत्य शालाद्वार्योपस्थानं निवेशन इति४ । ब्रह्मयजमानाध्वर्यवो नैर्ऋतेष्टकापधानदेशात्पश्चादपश्यन्तः शालां गच्छन्ति अध्वर्युरेत्य शालाद्वारि भवं गार्हपत्यचितिरूप मग्नि मुपतिष्ठते ॥ विश्वावसुगन्धर्वदृष्टेन्द्रदेवत्या त्रिष्टुप् । अथ मग्निः विश्वा विश्वानि

१—१७,२,४ । २—७,२,१,१५ । ३—१७,२,४ । ४—१७,२,६ ।

निर्ऋतिः कृच्छ्रापत्तिः स्यादलक्ष्मीस्तु निर्ऋतिरित्यभिधानात्[1] भूमिर्वा निर्ऋतिर्दिगभिमानिनी देवता वा। अलक्ष्म्यां दिक्पतौ चापि निर्ऋतिर्निरुपद्रवे इति[2] कोशात्। तिग्मं तीक्ष्णं दुःसहं तेजो यस्याः सा तिग्मतेजाः तस्याः सम्बोधने हे तिग्मतेजः हे निर्ऋते ते तुभ्यं सु सुतरां नमोऽस्तु। अयस्मय मयोमयम्। अयस्मयादीनि छन्दसीति सत्वम्। लोहपाशवद्दृढमेतं बन्धं जीवत्वेन जन्ममृतिरूपमज्ञानं त्वं विचृत विच्छिन्धि नाशय चृती ग्रन्थे तुदादिः द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। किञ्च यमेन अग्निना यम्या पृथिव्या च संविदाना ऐकमत्यं गता सती उत्तमे उत्कृष्टे नाके सर्वसुखोपेते दुःखमात्रहीने स्वर्गे एनं यजमानमधिरोहय स्थापय ॥ ६३ ॥

नमः सुते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम्। यमेन त्वं यम्या संविदानोत्तमे नाके अधि रोहयैनम् ॥ ६३ ॥

यस्यास्ते घोर आसञ्जुहोम्येषां बन्धानामवसर्जनाय। यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परि वेद विश्वतः ॥ ६४ ॥

हे घोरे विषमशीले क्रूररूपे निर्ऋतिदेवि यस्याः ते तव आसन् आस्ये मुखे अहं जुहोमि आहुतिवदिष्टका मुपदधामि। किमर्थम् एषां बन्धानां यजमानस्य स्वर्गाप्तिप्रतिबन्धकानां पापाना मवसर्जनाय। किञ्च जनो जन्तुमात्रो यां त्वा त्वां भूमिरिति प्रमन्दते स्तौति शास्त्रानभिज्ञत्वात्। मदि स्वपने जाड्ये मदे मोदे स्तुतौ गताविति धातुः। त्वं तु निर्ऋतिः। अहं तु शास्त्रज्ञतया तादृशीं त्वा त्वां विश्वतः सर्वथापि निर्ऋति मेव परिवेद सम्यग्जानामि। निर्ऋतिशब्दस्यायमर्थः सर्वदेवसाधारणाद्देवयजनान्निष्क्रम्य स्वतन्त्रदेशे विदीर्णादौ ऋतिः प्राप्तिर्यस्याः सा निर्ऋतिरिति। इदं प्रकारद्वयं वेदेति विश्वत इत्युक्तम् ॥ ६४ ॥

१——अम० १,२,१२। २——हैम० नाना० ३,२७२।

ताभिः सम्मूर्य मातेवेति मन्त्रेण शिक्यात् पृथक्कृत्वाश्विरादिति स्थापिताग्नेरुत्तरेऽरत्निमात्रे गार्हपत्यचितेरुपर्येवोखां निधाय तन्मध्ये तूष्णीं दुग्धं सिञ्चेदिति सूत्रार्थः। उखादेवत्या त्रिष्टुप्, तृतीयो नवकः चतुर्थो द्वादशकः। पृथिवी भूरूपा मृन्मयी या उखा पुरीष्यं पशव्य मग्निं स्वे योनौ स्वकीयगर्भस्थाने अभाः अभार्षीत् धृतवती भृञो लुङि बहुलं छन्दसीति ईडागमाभावे सिचो विसर्गे तिपि लुप्ते रूपम्। माता पुत्रमिव यथा माता पुत्रमुत्सङ्गे बिभर्ति। प्रजापतिः कृतकृत्यां ताम् उखां विमुञ्चतु शिक्यपाशाद्विमुक्तां करोतु। कीदृशः प्रजापतिः विश्वैर्देवैर्ऋतुभिश्च संविदानः संविदान इति ऐकमत्यं गतः अहो महत्कर्मोखया कृतमिति संवादं कुर्वन्। विश्वकर्मा विश्वं सृष्टिरूपं कर्म यस्यासौ विश्वकर्मा ॥ ६१ ॥

का० नैर्ऋतीः कृष्णास्तुषपक्वास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यन्नहोमवद्देशे दक्षिणोत्तराः कृत्वा दक्षिणामुखोऽनुपस्पृशन्नसुन्वन्त

**असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥६२॥**

मिति प्रत्यृचं पराचीः[1]। ततोऽध्वर्युः राजसूये हविष्यन्नहोमे यादृशो देशस्तादृशे स्वयंप्रदीर्णे इरिणे वा असुन्वन्तमिति प्रत्यृचं तिस्रो नैर्ऋतीसंज्ञा इष्टका दक्षिणोत्तराः कृत्वा ततस्ता अस्पृशन् पद्यन्ति। कीदृशीः पाकेन कृष्णवर्णाः तुषैरेव पक्वाः लक्षणहीनाः पद्याः पराचीः अनात्ममुखीः। स्वयं दक्षिणामुखः पूर्वं मुत्तरां निधाय ततो दक्षिणे द्वे इति सूत्रार्थः॥ तिस्रो निर्ऋतिदेवत्यास्त्रिष्टुभः। हे निर्ऋते असुन्वन्तं सोमयाग मकुर्वाणम् अयजमानम् अन्यैर्हविर्यज्ञैर्यजन मकुर्वाणं च त्व मिच्छ प्रतिगच्छ तं गृहाणेत्यर्थः। किञ्च स्तेनो गुप्तचोरः तस्करः प्रकटचोरः तयोरित्यां गति मन्विहि अनुगच्छ पृष्ठतो गत्वा तावपि गृहाणेत्यर्थः। सर्वथा सोमं सुन्वद्भ्यो हविर्यज्ञैश्च यजद्भ्योऽस्मदन्य मिच्छ न त्वस्मानिच्छ। सा दुष्टशिक्षा ते तमित्या गतिश्चर्या हे देवि निर्ऋते एवम्भूतायै तुभ्यं नमोऽस्तु॥ ६२॥

1—१७,१,१३;२,१।

उष्णिक् निदेर्वंयोष्णिक् आर्य्येकाधिका अनियताक्षरपादत्वात् । हे अग्ने त्वं पुरीष्यः पशव्योऽसि रयिमान्धनवान् पुष्टिमान् पोषयुक्तश्चासि अतः सर्वाः दिशः शिवाः शान्ताः कृत्वा इहास्मिंश्चयने स्वं योनिं स्वकीयं स्थान मासदः प्राप्नुहि ॥ ५९ ॥

आर्षी पङ्क्तिः अनियताक्षरपादत्वात् द्व्यग्निदेवत्या । पुनर्व्याख्यायते(५,३) । हे जातवेदसौ अग्नी यज्ञ मस्मदीयं कर्म्म युवां मा हिंसिष्टं मा विनाशयतम् यज्ञपतिं यजमानं च मा हिंसिष्टम् अद्यास्मिन् कर्म्मदिने नोऽस्मभ्यं शिवौ शान्तौ युवां भवतम् । किञ्च

**अग्नेत्वम्पुरीष्योरयिमान्पुष्टिमाꣳअसि । शिवाःकृत्वादिशःसर्वाःस्वंयोनिमिहासदः ॥ ५९ ॥**

**भवतन्नःसमनसौसचेतसावरेपसौ । मायज्ञꣳहिꣳसिष्टम्मायज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः ॥ ६० ॥**

**मातेवपुत्रम्पृथिवीपुरीष्यमग्निꣳस्वेयोनावभारुखा । तांविश्वैर्देवैरृतुभिःसंविदानःप्रजापतिर्विश्वकर्म्माविमुञ्चतु ।** ॥ ६१ ॥

युवां नोऽस्मद्र्थं समनसौ सचेतसौ अरेपसौ च भवतम् । मनसा सहितौ समानचित्तौ । अन्यविषयं मनो हित्वास्मदनुग्रहाभिमुखत्वं समनस्त्वम् । अस्मदनुग्रहेऽन्योन्यविप्रतिपत्तिराहित्यं सचेतस्त्वम् । अरेपसौ निष्पापौ अस्माकं प्रामादिकापराधसत्त्वे कोपाभावो निष्पापत्वम्, ईदृशावस्मभ्यं भवत मित्यर्थः ॥ ६० ॥

का० सिकताभिः समंविलां कृत्वा मातेव पुत्रमिति शिक्याद्विमुच्याभिवन्निधायासिञ्चति पयोमध्ये तूष्णीम्[१] । शून्या मुखां सिक-

१ —— १७,१,२१ ।

स्तृत्य रथेन परिश्रितमं कृत्वा तन्मध्ये नीचैरुख्याग्निं स्थापयति चतुर्भिर्मन्त्रैः॥ चतस्रो ह्याग्निदेवत्याः। समितम् उष्णिगेकाधिका अनियताक्षरपादत्वेऽप्यष्टाविंशत्यक्षरत्वात्। हे चित्योख्याग्नी युवां समितं सङ्गच्छतम्। कीदृशौ युवाम् सम्प्रियौ सम्प्रीणीतस्तौ इगुपधेति कः सम्यक् परस्परं प्रीतियुक्तौ। रोचिष्णू दीप्यमानौ अलङ्कृञित्यादिना इष्णुच्। सुमनस्यमानौ शोभनं मनः कुरुतस्तौ सुमनस्येते। सुमनस्येते तौ सुमनस्यमानौ सुब्धातुः क्यङन्ताच्छानच् परस्परं शोभनं चित्तवन्तौ। इषमन्नमूर्जं मुपसेचनं घृतादि चाभिसंवसानौ अभ्यवहरन्तौ भुञ्जानौ अभितः सम्यक् सम्पादयन्तौ वा वसेरर्थान्तरे वृत्तिः॥ ५६॥

समितꣳसङ्कल्पेथाꣳसम्प्रियौरोचिष्णूसुमनस्यमानौ। इषमूर्ज्जमभिसंवसानौ॥ ५७॥

संवाम्मनाꣳसिसंव्व्रतासमुचित्तान्याकरम्। अग्नेपुरीष्याधिपाभवत्वन्नइषमूर्ज्जंयजमानायधेहि॥५८॥

उपरिष्टाद्बृहती अष्टसप्तनवत्रयोदशाक्षरपादत्वादेकाधिका। हे पूर्वोक्तावग्नी वां युवयोर्मनांसि बहुवचनत्वान्मनोबह्वाद्दहङ्कारानहं समाकरं सर्वतः सङ्गतान् करोमि करोतेर्लङ्युत्तमबहुवचने अपि अकरमिति रूपम्। तथा व्रता व्रतानि कर्माणि समाकरम्। व्रतमिति कर्मनाम[1]। तथा चित्तानि च मनोगतसंस्कारान् समाकरम्। उकारः समुच्चयार्थः। एवं मनःकर्मसंस्कारैरेकीकृतैरेकीभूतमग्निं प्रार्थये हे पुरीष्य पशव्य हे अग्ने त्वं नोऽस्माकम् अधिपातीति अधिपाः पालको भव इषमन्नमूर्जं तदुपसेचनं दध्यादि च यजमानाय धेहि देहि॥ ५८॥

१—निघ॰ २,१,७।

वर्द्धनम् एते निर्व्यसंख्येति सूत्रार्थः ॥ इन्द्रपुत्रप्रियमेधदृष्टाब्देवत्यानुष्टुप् । दिवो द्युलोकसम्बन्धिनो दिवस्पुता वा सूद-दोहसः सूदाय दोहसस्य ते सूददोहसः सूदेन जलेन सहिता दोदसोऽन्नानि अन्नयुक्ता आपः ताः प्रसिद्धा अस्य विशो यज्ञस्य सम्बन्धिनं सोम माश्रीणन्ति सम्यक्मिश्रयन्ति पक्वं कुर्वन्ति वा श्री पाके क्रयादिः आपो वै सूदोऽन्नं दोहः यज्ञो वै विश इति[1] च श्रुतिः । कीदृश्यः सूददोहसः पृश्नयः नानाविधाः यद्वा अन्नं वै पृश्नीति[2] श्रुतिरन्नरूपाः अत्रागत्य व्रीह्यादिधान्यनिष्पादका इत्यर्थः । कदा श्रीणन्ति देवानां जन्मन् जन्मनि संवत्सरे संवत्सरो वै देवानां जन्मेति[3] श्रुतिः । संवत्सरेसंवत्सरे सोमयागस्तदभिप्राय मेतत् । सवनानि वै त्रीणि रोचनानीति[4] श्रुतिः । यज्ञपरिणामभूता अन्नोत्पादिका आपो दिवः सकाशादस्मिन् लोके पतित्वौषधिवनस्पत्यन्नभूताः सत्यः सोमस्योपस्कुर्वन्तीति भावः ॥ ५५ ॥

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिम्पतिम् ॥ ५६ ॥

का० चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति[5] । चात्वालस्थानात् मृद मानीय गार्हपत्यचितेरुपरि क्षिपति । इन्द्रदेवत्या मधुच्छन्दःसुतजेतृदृष्टानुष्टुप् । विश्वाः सर्वा गिरः स्तुतयः ऋग्यजुःसामरूपा इन्द्र मवीवृधन् वर्धयन्ति । कीदृश मिन्द्रं समुद्रव्यचसं समुद्रवद्व्यचो व्याप्तिर्यस्य तं समुद्रवद्व्यापकं विविधाञ्चनं नानागति मित्यर्थः अत्यभ्यगतिं वा । रथीनां रथयुक्तानां सर्वेषां मध्ये रथीतम मत्यन्तं रथयुतं रथयुद्धे लब्धातिशय मित्यर्थः । ईद्रथिन इति चे परे रथिन ईदादेशः । तथा वाजाना मन्नानां पतिं स्वामिनं सत्पतिं स्वधर्मवर्तिनां च प्रतिपालकम् ॥ ५६ ॥

का० समंविलां कृत्वोख्यं निवपति समितमिति[6] । समं विलं यस्याः सा समंविला विभक्तालुक् छान्दसः गार्हपत्यचिति

१—८,७,२,२१ । २—८,७,३,२१ । ३—८,७,३,२१ । ४—८,७,३,२१ । ५—१७,१,१८ । ६—१७,१,१९ ।

देवतया वायूपया सादिता सती अङ्गिरस्वत्प्राणवत् प्राणा यथा सर्वाङ्गेषु स्थिता स्तथा ध्रुवा स्थिरा सती त्वं सोद निविशस्व तया देवतयेति वाग्वै सा देवताङ्गिरस्वदिति प्राणोवाअङ्गिरा इति श्रुतेः ॥ द्वितीया मुपदधाति। परिचित् परितः सर्वतः चीयते परितो भोगांश्चिनोतीति वा परिचिदसि। तया देवतयेति व्याख्यातम् ॥ ५३ ॥

का० तिसृषु लोकम्पृणासु मन्त्रो दशसु च द्वयोर्वा दशस्वेकस्यां च[१]। आदौ तिसृषु लोकम्पृणेष्टकासु तुष्णी मुपहितासु लोकं पृणेत्यभिमन्त्रणम् ततो दशसु मन्त्रः यद्वादौ द्वयोर्लोकम्पृणयोर्मन्त्रस्ततो दशसु तत एकस्याम् एक मेकविंशतीष्टका गार्हपत्ये

लोकम्पृणच्छिद्रम्पृणाथोसीदध्रुवात्वम्। इन्द्राग्नीत्वाबृहस्पतिरस्मिन्योनावसीषदन् ॥ ५४ ॥

ताअस्यसूददोहसःसोमꣳश्रीणन्तिपृश्नयः। जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः ॥ ५५ ॥

स्युरिति सूत्रार्थः ॥ लोकम्पृणादेवत्यानुष्टुप्। हे लोकम्पृणेष्टके त्वं लोकं पृण गार्हपत्यचयनदेशे पूर्वेष्टकाभिरनाक्रान्तं स्थानं पूरय। तथा छिद्रं पृण किञ्चिदपि छिद्रं यथा न दृश्यते तथा संश्लिष्टा भवेत्यर्थः पृण व्यसौ तुदादिः। अथो अपि च ध्रुवा दृढा सती त्वं सीद तिष्ठ। किञ्च इन्द्राग्नी बृहस्पतिश्चैते देवा अस्मिन्योनौ स्थाने त्वा त्वा मसीषदन् सादितवन्तः सदेश्लङ् न हि मानुषोऽध्वर्युस्त्वां सादयितुं शक्त इति भावः ॥ ५४ ॥

का० नित्यं सादनसूददोहसाऽउपधानादुत्तरे तया देवतया ता अस्येति[२]। तया देवतयेति सादनम् ता अस्येति सूददोहसाधि-

१——१७,१,१७। २——१६,७,१४।

जुहोति वा हवमानः तस्मै । यत्तु श्रुत्योक्तं पशवो वाइडेति[1] तद्बलीवर्दैरवस्योत्पाद्यमानत्वात् किम्भूता मिडां पुरुदंसं दंस इति कर्मनामसु पठितं[2] पुरूणि बहूनि दंसांसि कर्माणि यया सा पुरुदंसाः तां पुरुदंससमिति प्राप्ते टिलोपश्छान्दसः । बहुकर्मसाधन-भूत मन्नं देहीत्यर्थः । तथा शश्वत्तम मत्यन्त मविच्छेदेन वर्तमान मनपायिनं गोः सनिं धेनुसम्बन्धि दानं पयोदधिघृतादिकं सर्वदा देहीत्यर्थः । किञ्च नोऽस्माकं यजमानानां सूनुः पुत्रः स्यादस्तु । कीदृशः सूनुः तनयः औरसः पुत्रस्य सूनुशब्देनोक्तत्वाद्दत्त-पुत्रादिव्यावृत्त्यै तनयशब्दः यद्वा तनोत्यग्निहोत्रादिकर्माणीति तनयः । तथा विजावा विविधं जायते पुत्रादिद्वारेति विजावा प्रजावान् विड्वनोरनुनासिकस्यादिति धातोराकारः । हे अग्ने ते तव सान्नगोपुत्रदानविषया सुमतिः शोभना

अयन्ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तञ्जानन्नग्न आरोहाथा नो वर्द्धया रयिम् ॥ ५२ ॥

चिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद । परिचिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ ५३ ॥

बुद्धिरनुग्रहेणास्मे अस्मासु भूतु भवतु यजमानेभ्यस्त्वयान्नादि देयमिति भावः व्यत्ययेन शपो लुक् अस्मे विभक्तेः शेआदेशे त्वदाद्यत्वम् ॥ ५१ ॥ ॥ व्याख्याता(३,१४) ॥ ५२ ॥

का० चिदसीति पूर्वं दक्षिणतः प्रतिमन्त्रम्[3] । तदुत्तरतोऽपरमार्गेण दक्षिणां गत्वा चिदसीति प्रतिमन्त्रं पूर्वं तिरश्चौ उदक्त्व-चणी दक्षिणे स्थित उदङ्मुख उपदधाति चिदसीतुत्तरां परिचिदसीति दक्षिणाम् । इष्टकादैवत्ये द्वे यजुषी । चीयतइति चित् । हे इष्टके त्वं चिता स्थापितासि यद्वा चिनोति भोगान् सम्पादयतीति चित् त्वं भोगसम्पादिकासि । तया प्रसिद्धया

१——७,१,१,२७। २——निघ०२,१,३। ३——१७,१,१२।

मच्छजिगासि अभिगच्छसि । जचिषे ब्रूञः कर्मणि लिट् पुरुषवचनयोर्व्यत्ययः । प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णन्तीति[1] श्रुतेः । किञ्च रोचने दीप्तिरूपे मण्डले वर्तमानस्य सूर्यस्य परस्तादुपरिष्टाद्या आप उपतिष्ठन्ते अवस्ताद्वेरधस्ताच्च या आप उपतिष्ठन्ते ता अपश्च त्वमभिजिगासीत्यन्वयः त्वमेवैतै रूपैः परिणमसीति भावः ॥ ४९ ॥

अनुष्टुप् । बहुवचन मिष्टकापेचम् अग्नयः एते इष्टकारूपा यज्ञ मस्मदीय मिमं यागं जुषन्तां सेवन्ताम् अनमीवा नास्ति अमीवा व्याधिरशनायाबुभुक्षारूपो याभिस्ता अनमीवा क्षुधाद्युष्णानिवर्तिकाः महीः महत्त्वीः बहुला इषः अन्नभक्तीश्चाग्नयो जुषन्ताम् । कीदृशा अग्नयः पुरीष्यासः पुरीषेभ्यः पशुभ्यो हिताः पुरीष्याः आज्जसेरसुक् । तथा प्रावणेभिः प्रवणैः प्रकर्षेण वनन्ति सम्भजन्ति विषयानिति

पुरीष्यासोअग्नयःप्रावणेभिःसजोषसः । जुषन्तांयज्ञमद्रुहोनमीवाइषोमहीः ॥ ५० ॥

इडामग्नेपुरुदᳪंसᳪंसनिङ्गोःशश्वत्तमᳪंहवमानायसाध । स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ।५१।

प्रवणानि मनांसि तैः सजोषसः समानप्रीतयः मनसा प्रीतियुक्ता इत्यर्थः अन्येषामपि दृश्यतइति संहितायां प्रावणेति दीर्घः बहुलं छन्दसीत्येलम् । तथा अद्रुहः न द्रुह्यन्तीत्यद्रुहः अहिंसितारः परस्परं प्रीतियुताः ॥ ५० ॥

का० इडामग्नइति पश्चिमे प्रतिमन्त्र मुत्तरतः[2] । इडामग्नइतिऋग्द्वयेन प्रतिमन्त्रं पश्चिमे द्वे पादमात्र्यौ पद्ये तिरश्च्यौ उदग्लक्षणे उपदध्यात् उत्तरतोऽवस्थितो दक्षिणामुखः इडामिति दक्षिणाम् अयं तदुत्तरामिति सूत्रार्थः ॥ द्वे आग्नेय्यौ त्रिष्टुबनुष्टुभौ । हे अग्ने हवमानाय यजमानाय इडा मन्नं साध साधय सम्पादय छन्दस्युभयथेति शप आर्धधातुकत्वाण्णिलोपः ह्वयति आह्वयति देवान्

१——७,१,१,२४ । २——१७,१,११ ।

गमनकुशलं मत्यं न अश्वमिव सहस्रियं सहस्रसङ्ख्याकेन धनेन सम्मितं वाजमन्नं ससवान् दत्तवान् सन् यजमानस्त्वं स्तूयसे सहस्रेण सम्मितौ घ इति प्रत्ययः षणु दाने क्वसुः ससवान् ॥ ४७ ॥

हे आयजत्र मर्यादया यजनीय हे अग्ने ते तव यत् दिवि द्युलोके वर्चो दीप्तिरर्करूपं वर्तते यच्च पृथिव्यामग्निरूपं यच्च ओषधीष्वन्तः स्थितं यच्चाप्सु जलेषु अन्तः स्थितं यच्च वर्चसा उरु विस्तीर्णमन्तरिक्षमाततन्थ आतनोषि विस्तारयसि बभूथाततन्थेति इडभावः। स भानुः दीप्तिः त्वेषः त्वेषयति प्रकाशयति सकलं विश्वमिति त्वेषः त्विष दीप्तौ पचादित्वादच् अर्णवः अर्णांसि उदकानि

**अग्ने॒ यत्ते॑ दि॒वि वर्चः॑ पृथि॒व्यां यदोष॑धीष्व॒प्स्वा य॑जत्र। येना॒न्तरि॑क्षमु॒र्वा॑त॒तन्थ॑ त्वे॒षः स भा॒नुर॑र्ण॒वो नृ॒चक्षाः॑ ॥ ४८ ॥**

**अग्ने॑ दि॒वो अर्ण॒मच्छा॑ जिगा॒स्यच्छा॑ दे॒वाँ२ऽऊ॑चिषे॒ धिष्ण्या॒ ये। या रो॑च॒ने प॒रस्ता॒त्सूर्य॑स्य॒ याश्चा॒वस्ता॑दुप॒तिष्ठ॑न्त॒ आपः॑ ॥४९**

सन्ति यत्रेत्यर्थः अर्णसो वः सलोपश्च यद्वा अरणवान् गमनवान् प्रसरणशीलः। नृचक्षाः नॄन् चष्ट इति नृणां शुभाशुभकर्मद्रष्टा। ईदृशो यस्ते भानुस्तमेवेष्टकारूपमुपदधामीति शेषः। अनेन त्रिस्थानोऽग्निः स्तुतः ॥ ४८ ॥

हे अग्ने दिवो द्युलोकस्य सम्बन्धि अर्णमुदकं त्वमच्छ जिगासि आभिमुख्येन गच्छसि गा स्तुतिगत्योर्ह्वादिः अभ्यासेत्वं छान्दसम् अच्छाभेराप्तुमिति शाकपूणिः[1] निपातस्य चेति अच्छेत्यस्य संहितायां दीर्घः आपो वा अस्य दिवोऽर्णस्ता एष धमेनाच्छैतीति[2] श्रुतिः। किञ्च ये देवा धिष्ण्या ऊचिषे ऊचिरे उच्यन्ते धिया बुद्धीरिन्द्रियाणि इष्णन्ति प्रेरयन्ति धिष्ण्याः प्राणरूपा देवास्तान्देवांश्च त्वं

१——निरु० ५,२८। २——७,१,१,२४।

अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकता इति[1] च श्रुतिः ॥ का० परिश्रिद्भिः परिश्रयति पूर्ववदेकविꣳशत्या चितः स्थेति[2] । एकविंशतिपरिश्रिद्भिर्गार्हपत्यस्थानं वेष्टयति पूर्ववदिति प्रदक्षिणं मृद्ध्वांस्ताः खननीया इति ॥ परिश्रिद्देवत्यं यजुः हे परिश्रितः शर्करा यूयं चितः स्थ चीयन्ते भूमौ प्रक्षिप्यन्ते इति चितः भूमौ क्षिप्ता भवथ परिचितः स्थ परितः सर्वतः स्थापिता भवथ ऊर्ध्वं चीयन्त इति ऊर्ध्वचितः ऊर्ध्वं स्थापिताः सत्यो यूयं श्रयध्व मिदं गार्हपत्यायतनं सेवध्वम् ॥ ४६ ॥

का० मध्येऽर्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदङ्ङयꣳ सोअग्निरिति प्रत्यृचम्[3] । ततोऽध्वर्युर्मण्डलाद्दक्षिणे उदङ्मुख उपविश्य मध्ये चतस्रोऽर्धबृहतीसञ्ज्ञा इष्टकाः प्राचीः प्राग्लक्षणा दक्षिणोत्तरपङ्क्त्योत्तर मारभ्योपदधाति अध्यात्मं चयन मितृशन्ते । ऋक्चतुष्कं यैकैकाम् । हस्तदीर्घास्तदर्धायामाः पद्या लोकद्वयव्यापिन्य इष्टका अर्धबृहत्य उच्यन्त इति

अयꣳसोअग्निर्यस्मिन्त्सोममिन्द्रः सुतन्दधे जठरे वावशानः । सहस्रियं वाजमत्यन्नसप्तिꣳससवान्त्स्तूयसे जातवेदः ॥ ४७

सूत्रार्थः ॥ पञ्च ऋचो विश्वामित्रदृष्टा आग्नेय्यस्त्रिष्टुभश्चतुर्थ्यनुष्टुप् । इष्टकोपधानं कुर्वन्नभिनयेन दर्शयति अयं गार्हपत्यः सः अग्निरिष्टकाभिश्चीयत इति शेषः । यस्मिन्नग्नौ चिते सति इन्द्रः सुत मभिषुतं सोमं जठरे स्वोदरे दधे धारयति वर्तमाने लिट् । किम्भूत इन्द्रः वावशानः वष्टीति वावशानः बहुलं छन्दसीति शपः श्लौ सति द्वित्वेऽभ्यासदीर्घे शानचि रूपम् कामयमानः । कीदृशं सोमं सहस्रियं सहस्रार्हम् । वाज मन्नं बहूनां तृप्तिकर मित्यर्थः । अत्यं न नकारः सम्प्रत्यर्थः । भक्षणादेव मदकरम् । सप्तिं सरणं तृप्तिकरम् । अग्नौ चिते न केवल मिन्द्र एव सोमं जठरे धत्ते किन्तु हे जातवेदः जातं वेदो धनं यस्मात् हे अग्ने त्वमपि ससवान् हवींषि सम्भजमानः सन् ऋत्विग्यजमानैः स्तूयसे षण सम्भक्तौ क्वसुप्रत्ययः । उत्तरार्द्धस्यायं वार्थः हे जातवेदः सप्तिं सरणं

[1] ——— ७,१,१,९-१० । [2] ——— १७,१,७ । [3] ——— १७,१,८ ।

ये पुराणाः चिरन्तना ये च नूतनाः इदानींतना यूयमत्र स्थाने स्थ भवथ ते सर्वे यूयमतः स्थानादपेत अपगच्छत वीत विगच्छत अतिदूरं गच्छत विसर्पत च अतः स्थानादपेत्य सङ्घातं विहाय विविधं गच्छत। कस्मादियमप सर्पामित्यत आह अवस्यति स्थापयत्यस्मिन्निति अवसानं पृथिव्या अवसानं स्थानमिदं यमो देवोऽस्मै यजमानायादात् दत्तवान्। पितरश्चेमं लोकं स्थानमस्मै यजमानायाक्रन् कृतवन्तः करोतेः अपि लुप्ते लङि रूपम् यमेन पितृभिश्च एतच्चयनस्थानस्य यजमानाय दत्तत्वाद् यूयमपसर्पतेत्यर्थः ॥ ४५ ॥

का० उदीचीᳪ शाखा मुदस्योषान्निवपति सञ्ज्ञानमिति[1]। यया व्युदूहनं कृतं तां शाखा मुदक् क्षिप्त्वा गार्हपत्यचितिस्थाने क्षारमृदो निदधाति ॥ ऊषदेवत्यं यजुः हे ऊषस्वरूप त्वं सञ्ज्ञानमसि पशूनां सम्यक् ज्ञानसाधनमसि पशवो हि ऊषदेशं ज्ञात्वा

**सञ्ज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्। अग्नेर्भस्मास्यग्नेः पुरीषमसि चितस्थ परिचित ऊर्ध्वचितः श्रयध्वम् ॥ ४६ ॥**

लिहन्ति। तथा कामधरणम् कामान्मनोरथान्धरति सम्पादयतीति कामधरणं यज्ञद्वारा कामसम्पादकत्वात्। अतस्ते तव कामधरणं कामसम्पादनसामर्थ्यं मयि भूयात् अस्तु। यद्वा श्रुत्यनुसारेण व्याख्यानं ते तव कामधरणं पशवः मयि भूयात् भूयासुः यतस्त्वं कामधरणं पशुरूपं सञ्ज्ञानं सम्यक् ज्ञापकमसि उल्बसम्भवात् पशवो वा ऊषाः पशवः कामधरणं मयि ते पशवो भूयासुरिति श्रुतेः उल्बाभिप्रायमेकवचनमुल्बस्योषोत्पन्नत्वात् ॥ का० सिकताश्चाग्नेर्भस्मेत्यूषवत्[2]। ऊषवत्सिकता निवपति ॥ सिकतादेवत्यं यजुः। हे सिकतास्वरूप त्वमग्नेर्भस्म भासकमसि सिकतास्थोऽग्निरतुरीयो भवति। अग्नेश्च पुरीषं पूरणमसि पूरयतीति पुरीषं पिपर्तेरीषक् प्रत्यये औणादिके उदोष्ठ्यपूर्वस्येति उदादेशः। भस्माभिप्रायमेकवचनम्। न वा अग्निः स्वं भस्मातिदहति।

१——१७,१,४। २——१७,१,६।

मादायोख्येऽग्नौ जुहोति तत्कर्मणः प्रायश्चित्तिरिति सत्रस्येति सूत्रार्थः ॥ यजुः । जगत्सृष्टिस्थित्यादिकर्मकर्त्रे तुभ्यं स्वाहा सुहुतमस्तु ॥ ४३ ॥

का० उत्थायादधाति समिधं पुनस्त्वेति[1] । घृतहोमानन्तर मुत्थाय तामेव समिधं उख्येऽग्नावादधाति ॥ आग्नेयी त्रिष्टुप् आद्यपादचतुर्दशार्णस्तृतीयो दशकस्तेन द्वाधिका । हे अग्ने आदित्याः रुद्राः वसवश्च त्वा त्वां पुनः समिन्धता मुपशान्तं दीपयन्तु । हे वसुनीथ वसु धनं तन्निमित्ता नीथा स्तुतिर्यस्य यद्वा वसूनि नयतीति वसुनीथः तत्सम्बुद्धौ हे धननेतः ब्रह्माणः ब्राह्मणा ऋत्विग्यजमाना यज्ञैः कृत्वा त्वां पुनः समिन्धतां त्वं च तन्वं स्वशरीरं घृतेनास्मद्दत्तेन वर्धयस्व त्वयि वृद्धे सति यजमानस्य कामाः सत्याः सन्तु ॥ ४४ ॥

पुनस्त्वादित्यारुद्रावसवः समिन्धताम्पुनर्ब्रह्माणोवसुनीथयज्ञैः । घृतेनत्वन्तन्वंवर्द्धयस्वसत्याः सन्तुयजमानस्यकामाः ॥ ४४

अपेतवीतविचसर्प्पतातोयेत्रस्थपुराणायेचनूतनाः । अदाद्यमोवसानम्पृथिव्याअक्रन्निमम्पितरालोकमस्मै ॥ ४५ ॥

अथ गार्हपत्यचयन मुच्यते ॥ का० पलाशशाखया गार्हपत्यं व्युदूहत्यपेत वीतेति पुच्छः प्रतिदिशं पुरस्तात् प्रथमम्[2] । अत्र भाविन्याहुत्या शालद्वार्यो गार्हपत्यशब्देनोच्यते तदर्था चितिश्चितेः स्थान मपि गार्हपत्य एव । पलाशशाखया गार्हपत्यचितेः स्थानं व्युदूहति जहिरतं प्रेरणे तत्र पतितं तृणादिकं स्थानाद्बहिः क्षिपतीत्यर्थः अपेत वीति ऋचः पुच्छः पादैः प्रतिदिशं मादौ प्राच्या मपेत वीति येऽत्रस्थेति दक्षिणे अदादिति पश्चादक्रन्नितुत्तरे इति सूत्रार्थः ॥ लिङ्गोक्तबहुदेवत्या त्रिष्टुप् अर्द्धर्चेन तत्स्थानसर्पिण उच्यन्ते पादेन यमः पादेन पितरः । यमस्य सर्वभूम्यधिपतित्वात्तद्भृत्याः सर्वत्र चरन्ति तान् प्रत्युच्यते । हे यमभृत्याः

[1] — १६,७,२ । [2] — १७,१,३ ।

का॰ आस्योखाया मुपतिष्ठते बोधा मऽइति¹ । तडागादागत्यानामिकया गृहीतं भस्म तूष्णीं मुखायां प्रास्य बोधा मऽइति द्वा॒चेनो-ख्याग्नि मुपतिष्ठते ॥ दीर्घतमोदृष्टाग्नेयी त्रिष्टुप् । स्वधान्न मस्यास्तीति स्वधावान् तत्सम्बोधने स्वधावः मतुवसो रुः सम्बुद्धौ छन्द-सीति रुत्वम् हे अन्नवन् हे यविष्ठ युवतम अग्ने मे मम वचसो बोध बुध्यस्व अभिप्रायमिति शेषः यद्वा कर्मणि षष्ठी मद्वचनं जानी-हीत्यर्थः । किञ्च तस्य वचसः मंहिष्ठस्य भूयिष्ठस्य अतिशयेन बहु मंहिष्ठं तस्य । तथा प्रभृतस्य प्रहृतस्य श्रोत्रपथं प्रापितस्य आद-रोतस्येत्यर्थः । किञ्च त्वशब्द एकशब्दार्थः सर्वादिः पीयतिराक्रोशतिकर्मा हे अग्ने त्वः एकः पुरुषः पीयति आक्रोशति निन्दति त्वः

**बोधा॑मे अ॒स्य वच॑सो यविष्ठ॒ मꣳहि॑ष्ठस्य॒ प्रभृ॑तस्य स्वधावः । पीय॑ति त्वो॒ अनु॑ त्वो गृणाति व॒न्दारु॑ष्टे त॒न्वं॑ वन्दे अग्ने ॥४२॥**

**स बो॑धि सू॒रिर्म॒घवा॒ वसु॑पते॒ वसु॑दावन् । यु॒यो॒ध्य॑स्मद्द्वेषाꣳसि वि॒श्वक॑र्म॒णे स्वाहा॑ ॥ ४३ ॥**

एकः त्वा मनुगृणाति त्वां स्तौति कश्चित् स्तौति कश्चिन्निन्दतीति लोकस्वभावः । एवं सति हे अग्ने अहं तु ते तव तन्वं तनूं शरीरं वन्दे स्तौमि नमामि च वदि अभिवादनस्तुत्योः । कीदृशोऽहम् वन्दारुः वन्दनशीलः शृवन्द्योरारुरिति आरुप्रत्ययः शीलार्थः ॥ ४२ ॥

सोमाहुतिदृष्टाग्नेयी यजुरन्ता गायत्री । विश्वकर्मणे स्वाहेति यजुः । हे वसुपते धनपते हे वसुदावन् वसु ददातीति वसुदावा आतो मनिन्निति क्वनिप् तत्सम्बुद्धौ हे वसुदावन् धनस्य दातः स त्वं बोधि अस्मदभिप्रायं बुध्यतेः शपि लुप्ते हुझल्भ्यो हेर्धिरिति धिः गुणाभ्यलोपौ छान्दसौ । कीदृशस्त्वं सूरिः विद्वान् मघवा धनवान् मघं धन मस्यास्तीति । सन्तुष्टः सन् द्वेषांसि दौर्भाग्यानि अस्मद्युयोधि अस्मत्तः पृथक् कुरु । का॰ प्रायश्चित्तिꣳ समिधोऽपहृत्याज्यं विश्वकर्मणइति जुहोति² । स्रुवस्थानीयया समिधा घृत

१——१६,६,३०। २——१६,७,१।

तरूणां गर्भोऽसि अरणिभ्यो जायमानत्वात् विश्वस्य भूतस्य सर्वस्य प्राणिजातस्य गर्भोऽसि जठराग्निरूपेण विद्यमानत्वात् अपां गर्भोऽसि वाडववैद्युतादिरूपत्वात् ॥ ३७ ॥

का० अनामिकया प्रास्तादादत्ते प्रसद्येति[1]। अप्सु चिप्रात् भस्मनः सकाशादनामिकया भस्म गृह्णाति प्रसद्येति चतुर्भिः ॥

प्रसद्यभस्मनायोनिमपश्चपृथिवीमग्ने। सᳬसृज्यमातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ॥ ३८ ॥

नरासद्यसदनमपश्चपृथिवीमग्ने। शेषेमातुर्य्यथोपस्थेन्तरस्याᳬशिवतमः ॥ ३९ ॥

पुनरूर्ज्जानिवर्त्तस्वपुनरग्नइषायुषा। पुनर्न्नःपाह्यᳬहसः ॥ ४० ॥

सहरय्यानिवर्त्तस्वाग्नेपिन्वस्वधारया। विश्वप्स्न्याविश्वतस्परि ॥ ४१ ॥

हे अग्ने त्वं भस्मना मिलित्वा योनिं कारणभूतां पृथिवीं योनिभूता अपश्च प्रसद्य प्राप्य मातृभिरद्भिः संसृज्यैकीभूय ज्योतिष्मान् तेजस्वी सम्पन्नः सन् पुनरासदः स्वस्थान मुखा मासीद ॥ ३८ ॥

हे अग्ने अपश्च पृथिवीं च सदन मासद्य जलभूमिरूपं स्थानं प्राप्य पुनरपि अस्या मुखाया मन्तर्मध्ये त्वं शेषे स्वपिषि मातुरुपस्थे उत्सङ्गे यथा शिशुः शेते किम्भूतस्त्वं शिवतमः कल्याणतमः ॥ ३९ ॥ द्वे व्याख्याते ॥ ४० ॥ ४१ ॥

१——१६,६,२९ ।

प्रतिगृह्णीत स्वागतादिभिः प्रतिगृह्णीत। किञ्च स्योनेसुखावहे सुरभौ पुष्पधूपादिभिः शोभनगन्धयुते लोके स्थाने एतद्भस्म कृणुध्वं कुरुध्वं छान्दसं कृतो स्वादिः उ पादपूरणः। किञ्च शोभनः पतिर्वरुणो यासां ताः सुपत्न्यः आपो वरुणस्य पत्नय आसन्निति श्रुत्यन्तरात्। जनयत्वं नि मुर्धादयन्ति ह्वचोत्पत्त्यादिहारेति जनयः सुपत्नीर्जनयो भवयस्तस्मै भस्मरूपायाग्नये नमन्तां प्रह्वीभवन्तु। किञ्च हे आपः एनत् भस्म अप्सु स्वात्मनि यूयं बिभृत धारयत माता पुत्र मिव यथा माता पुत्रं स्वात्मनि धारयति तद्वत्पालयत ॥ २५ ॥

का० ततो द्वाभ्याम्[१]। ततोऽनन्तरं पठिताभ्यां द्वाभ्या मप्स्वग्ने गर्भो असीत्येताभ्या मृग्भ्यां पत्रपुटेन द्वितीयवार मुख्याग्निभस्माप्य,

**अप्स्वग्नेसधिष्टवसौषधीरनुरुध्यसे। गर्भेसञ्जायसेपुनः ॥ २६ ॥**

**गर्भोअस्योषधीनाङ्गर्भोवनस्पतीनाम्। गर्भोविश्वस्यभूतस्याग्नेगर्भोअपामसि ॥ २७ ॥**

प्रास्यति ॥ विरूपदृष्टाग्नेयी गायत्री पूर्वमन्त्रेण भस्मातिथित्वेन संस्तुत्य द्वाभ्या मग्नेः सर्वव्यापकत्वं वदन् भस्माभ्यवहरण मपह्नुते। हे अग्ने अप्सु जलेषु तव सधिः स्थानं स त्व मोषधीः यवाद्या अनु रुध्यसे ओषधिपरिणाम मनु विपरिणमसे सोऽचि लोपे चेत्पादपूरण मिति स इत्यस्य विसर्गलोपे सधिः यद्वा ओषधीः स्वीकरोषि जठराग्निरूपेण। किञ्च गर्भे अरण्योर्मध्ये स्थितः सन् पुनः पुनर्जायसे ॥ २६ ॥

तिस्रोऽनुष्टुभोऽग्निदेवत्याः। हे अग्ने त्व मोषधीनां गर्भोऽसि भेषजरूपै रोगधिविशेषैरुत्पद्यमानत्वात् हे अग्ने त्वं वनस्पतीनां

१——१६,६,२१।

का० अच्चे खर्द्ं त्यक्रन्दद्ग्निरिति जपति[1]। अच्चे शब्दं कुर्वति जपेत्॥ व्याख्याता(१)॥ ३३॥

का० वासेऽवहरतुग्रहतावोच्चित उत्तरतः समिदाधानं प्र प्रेति[2]। वासे स्थिते क्रियमाणे उत्तरदिशि उद्धृतावोच्चिते प्रदेशेऽग्निम-वस्थाप्य ज्वालयति ततोऽग्नौ समिदाधानम्॥ वसिष्ठदृष्टाग्नेयी त्रिष्टुप्। प्रसमुपोदः पादपूरण इति प्रोपसर्गस्य द्वित्वम् अथ मग्निः भर्ति हवींषि भरतस्तस्य भरतस्य यजमानस्य शृण्वे शृणुते आह्वान मिति शेषः यजमानकृत माह्वानं शृणोतीत्यर्थः पुरुषव्यत्ययः। योऽग्निः सूर्यो न सूर्य इव भाः भासतइति भाः सूर्यवद्भासमानः सन् बृहद्यथा तथा रोचते अत्यन्तं दीप्यते। योऽग्निः पृतनासु

प्रप्रायमग्निर्भरतस्यशृण्वे वियत्सूर्यो॒नरोचतेबृहद्भाः। अभियःपूरुम्पृतनासुतस्थौदीदायदैव्यो अतिथिःशिवोनः॥३४॥

आपोदेवीःप्रतिगृभ्णीतभस्मैतत्स्योनेकृणुध्वꣳसुरभाउलोके। तस्मैनमन्ताञ्जनयःसुपत्नीर्मातेवपुत्रम्बिभृताप्स्वेनत्॥३५॥

सङ्ग्रामेषु पूरुं राक्षस मभितस्थौ सम्मुखं तिष्ठति। दैव्यो देवसम्बन्धी अतिथिः नोऽस्माकं शिवः मङ्गलरूपः सोऽग्निर्दीदाय दीप्यते दीङ् क्षये धातूना मनेकार्थत्वादत्र दीप्त्यर्थः लिटि रूपम् तुजादीनां दीर्घोभ्यासस्येति अभ्यासदीर्घः छन्दसि लुङ्लङ्लिट इति वर्त-माने लिट्॥ ३४॥

का० पलाशपुटेनापो देवीरित्येकया[3]। वनीवाहनानन्तरं तडागादिजलस्थानं गत्वा वटादिपत्रपुटेन सायं प्रातरुखायाः सका-शादुद्धृतं यद्भस्मास्ति तदेकया ऋचा जले क्षिपेदिति सूत्रार्थः॥ अब्दैवत्या त्रिष्टुप्। हे आपो देवीः देव्यः दीप्यमानाः भस्म यूयं

१——१६,६,२०। २——१६,६,२१। ३——१६,६,२६।

यजमान् उख्ये ऽग्नौ वनीवाहने समिध माधत्तइति सूत्रार्थः ॥ विरूपाचदृष्टाग्नेयी गायत्री व्याख्याताप्युच्यते(१,१) । हे ऋत्विग्यजमानाः समिधा कृत्वाग्निं दुवस्यत परिचरत अतिथि मेन मग्निं बोधयत । अस्मिन्नग्नौ हव्या हवींषि आजुहोतन साकल्येन जुहुत ॥ ३० ॥

का० सासन्दीकं मुख्यमोदु त्वेति दक्षिणतोऽनसि करोति[१] । समिदाधानानन्तर मुदु त्वेति मन्त्रेणासन्दीसहित मुख्याग्नि मूर्ध्वं कृत्वा दक्षिणे स्थितो यजमानः शकटे तं स्थापयतीति सूत्रार्थः ॥ तापसदृष्टाग्नेय्यनुष्टुप् । हे अग्ने विश्वे सर्वे देवाः प्राणरूपाः

उदु॒ त्वा॒ विश्वे॑ दे॒वा अग्ने॒ भर॑न्तु॒ चित्ति॑भिः । स नो॑ भव शि॒वस्त्वꣳ सु॒प्रती॑को वि॒भाव॑सुः ॥ ३१ ॥

प्रेद॑ग्ने॒ ज्योति॑ष्मान्याहि शि॒वेभि॑र॒र्चिभि॒ष्ट्वम् । बृ॒हद्भि॑र्भा॒नुभि॒र्भास॒न्मा हिꣳसी॑स्त॒न्वा प्र॒जाः ॥ ३२ ॥

अक्र॑न्दद॒ग्निः स्त॒नय॑न्निव॒ द्यौः क्षामा॒ रेरि॑ह॒द्वी॒रुधः॑ सम॒ञ्जन् । स॒द्यो ज॑ज्ञा॒नो वि हीमि॒द्धो अख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः ॥ ३३ ॥

चित्तिभिः उद्यमनप्रवीणाभिर्धीवृत्तिभिः त्वा त्वामुद्भरन्तु ऊर्ध्वं धारयन्तु भृञः शप् उ पादपूरणः हे अग्ने स उद्धार्यमाणस्त्वं नोऽस्माकं शिवः कल्याणकृद्भव । किम्भूतः सुप्रतीकः शोभनं प्रतीकं मुखं यस्य । विभा दीप्तिरेव वसु धनं यस्य सः ॥ ३१ ॥

का० अनड्वाहौ युक्त्वा प्रेदग्नइति प्राङ् यात्वा यथार्थम्[२] । शकटे तूष्णीं वृषौ संयोज्य प्रेदिति मन्त्रेण प्राचीं गत्वा यथार्थं प्रयोजनवन्तं देशं गच्छेदित्यर्थः ॥ अग्निदेवत्यानुष्टुप् । हे अग्ने शिवेभिरर्चिभिः शान्ताभिर्ज्वालाभिर्ज्योतिष्मान् प्रकाशयुक्तस्त्वं प्रयाहि गच्छ । इत्यादपूरणः । किञ्च बृहद्भिर्भानुभिः प्रौढैः रश्मिभिः भासन् भासयन् जगदवभासयन् तन्वा स्वकीयेन दाहकेन शरीरेण प्रजाः पुत्रादिका मा हिंसीः मा नाशय ॥ ३२ ॥

१—१६,६,१६ । २—१६,६,१८ ।

वार्याणि वरणीयानि प्रार्थ्यानि विश्वा विश्वानि सर्वाणि वसु वसूनि धनानि गोभूहिरण्यादीनि दधिरे धारयन्ति यथेष्टं धनं प्राप्नुवन्तीत्यर्थः । वसु अत्र सुब्लोपः । किञ्च त्वया सह स्थिताः त्वां भजन्तस्ते यजमाना द्रविणं यज्ञफलमिच्छमाना इच्छन्तः उशिजः मेधाविनो ज्ञानकर्मसमुच्चयकारिणः सन्तो गोमन्तं गावो रश्मयोऽत्र सन्तीति गोमान् तं रविमण्डलमध्यगं व्रजं व्रजन्त्यनेन सुकृतिन इति व्रजस्तं देवयानमार्गं विवव्रुः बिभिदुः रविमण्डले मार्गं कृतवन्त इत्यर्थः तदुक्तम् ते यऽएव मेतद्विदुरित्युपक्रम्य देवलोकादादित्यमिति ॥ २८ ॥

ऋषिभिः यजमानऽत्विग्भिः अग्निरस्तावि स्तुतः कर्म्मणि चिण् । कीदृशोऽग्निः नरां नराणां सुशर्मः शोभनं सुखयिता नुडागमा-

अस्ताव्यग्निर्नराᳪसुशेवो वैश्वानर ऋषिभिः सोमगोपाः । अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥२९

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन ॥ ३० ॥

भावे गुणे च नरामिति रूपम् शोभनं शेवः सुखं यस्मात् । वैश्वानरः विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितः जठराग्निरूपेण । सोमं गोपायतीति सोमगोपाः सोमस्य रक्षिता । अद्वेषे पादौ लिङ्गोक्तदेवौ । यतोऽग्निः स्तुतः अतोऽद्वेषे द्वेषरहिते द्यावापृथिवी रोदसी वयं हुवेम आह्वयामः तदाश्रितकर्मासिद्ध्यै । हे देवा अग्न्यादयः अस्मे अस्मासु सुवीरं शोभनपुत्रयुतं रयिं धनं यूयं धत्त स्थापयत॥२९॥

अथ वनीवाहम् ॥ का० प्रागनः कृत्वोत्थर्स्यात्तरतः समिदाधानᳪ समिधाग्निमिति[१] । उख्याग्नेरुत्तरदिशि प्रागीषं शकटं संस्थाप्य

१—१६,६,१५ ।

अव्ययात्परात् घादमुप्रत्ययः प्रकृष्टतरम् वस्यः स्थान मुत्तमं लोकं प्रनय प्रापय । अच्छाभिमुख्येन सुम्नं सुखं चाभि नय सर्वतः प्रापय कीदृशं सुम्नम् देवभक्तं देवैः भक्तं सेवितं देवयोग्य सुखं प्रापयेत्यर्थः । वसति यत्र तद्वस्तु वन्प्रत्ययः अतिशयेन वस्तु वसीयः तुश्छन्दसीति ईयसुन् तुरिष्ठेमेयःस्विति वचो लोपः छान्दसे ईलोपे वस्य इति सिध्यति स लोक मागच्छत्यशोक महिमं तस्मिन्वसति शाश्वतीः समा इति[1] श्रुतेः । प्रकृत्यान्तःपादमव्यपरइति वस्योअच्छेत्यत्र सन्ध्यभावः ॥ २६ ॥

शोभनं श्रवः कीर्तिः सुश्रवः सुश्रवसः सम्बन्धीनि कीर्तिहेतुभूतानि कर्माणि सौश्रवसानि तेषु यज्ञकर्मसु हे अग्ने त्वं तं यजमान माभज सेवस्व निरन्तरं कर्मानुष्ठायिनं कुर्वित्यर्थः । उक्थे उक्थे निष्केवल्यप्रगाथादिरूपे च शस्यमाने तत्तच्छस्त्रे सति

**आतम्भजसौश्रवसेष्वग्नउक्थउक्थआभजशस्यमाने । प्रियःसूर्येप्रियोअग्नाभवात्युज्जातेनभिनददुज्जनित्वैः ॥२७॥**

**त्वामग्नेयजमानाअनुद्यून्विश्वावसुदधिरेवार्याणि । त्वयासहद्रविणमिच्छमानाव्रजङ्गोमन्तमुशिजोविवव्रुः ॥२८**

तं माभज सर्वतः सेवस्व कर्मणि शस्त्रे च प्रेरयेत्यर्थः । एवं त्वया सेवितोऽयं यजमानः सूर्ये सूर्यस्य प्रियो भवाति भवतु लिङर्थे लेट् लेटोऽडाटौ । अग्ना अग्नेश्च प्रियोऽस्तु ङसो डादेशः । तथा जातेनोत्पन्नेन पुत्रेण उद्भिनदत् उद्भेद मुदयं वृद्धि माप्नोतु इलोपेऽडागमे चोद्भिनदिति रूपम् तथा जनित्वैः जनिष्यमाणैश्च पौत्रादिभिरुद्भिनदत् जनिष्यन्ते ते जनित्वाः तैः भविष्यदर्थे औणादिक इत्वप्रत्ययः ॥ २७ ॥

हे अग्ने यजमानास्त्वा मनु वर्तमानाः त्वां सेवमानाः सन्तः द्यून् द्युशब्दो दिनवाची कालाध्वनोरिति द्वितीया दिनेषु सर्वदा

१——इ,आ,मा,४,१५ ।

योऽग्निर्मर्त्येषु मरणधर्मेषु मनुष्येषु निधायि निहितः देवैरिति शेषः बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः। स अदब्ध मरोषं चक्षुराद्युपद्रवरहित मरोचनं वा धूम मुदियर्ति उद्गमयति व्यवहिताश्चेति उपसर्गक्रिययोर्व्यवधानम् इतो वा अथ मूर्ध्वं रेतः सिञ्चति धूमं सामुत्रा वृष्टिर्भवतीति श्रुतेः। कीदृशोऽग्निः उशिक् उश्यते काम्यते लोकैरित्युशिक् कान्तः वशेरौणादिक इक् प्रत्ययः। पावकः पावयिता पुनातीति। अरतिः अलमतिः पर्याप्तमतिः यद्वा दुष्टेष्वरतिः प्रीतिरहितः। सुमेधाः शोभना मेधकाभिप्राय-धारणसमर्था मेधा बुद्धिर्यस्य शोभनो मेधो यज्ञो यस्येति वा। अमृतोऽमरणधर्मा। भरिभ्रत् बिभ्रत् जगद्धारयन् दाधर्तीत्यादिना

द॒शा॒नो रु॒क्म उ॒र्व्या व्य॑द्यौद्दु॒र्मर्ष॒मायुः॑ श्रि॒ये रु॑चा॒नः। अ॒ग्निर॒मृतो॑ अभव॒द्वयो॑भि॒र्यदे॑नं॒ द्यौर॒जन॑यत्सु॒रेताः॑ ॥ २५ ॥

यस्ते॑ अ॒द्य कृ॒णव॑द्भद्रशोचेऽपू॒पं दे॑व घृ॒तव॑न्तमग्ने। प्र तं न॑य प्र॒त॒रं वस्यो॒ अच्छा॒भि सु॒म्नं दे॒वभ॑क्तं यविष्ठ ॥ २६ ॥

निपातः। शुक्रेण शोचिषा निर्मलेन तेजसा प्रभारूपेण द्या माकाश मिनचन् व्याप्नुवन् नक्षत्रग्रहतारासम्बन्धितेजसा द्युलोकं व्याप्नुवन्नित्यर्थः इतः प्रदानाद्धि देवा उपजीवन्तीति श्रुतेः ॥ २४ ॥ व्याख्याता(१) ॥ २५ ॥

भद्रा कल्याणकारिणी शोचिर्दीप्तिर्यस्य तत्सम्बोधने हे भद्रशोचे हे देव अग्ने अद्य प्रतिपदि यः पुमान् ते तव अपूपं पुरोडाशं घृतवन्तं घृतयुक्तं सुपस्तरणाभिघारणोपेतं कृणवत् कृणोति करोति कृञ् करणे स्वादिः इतश्च लोपः परस्मैपदेष्विति तिप इकार-लोपे लेटोऽडाटाविति अडागमे नोर्गुणे कृणवदिति रूपम् स आज्यस्योपस्तीर्य हिरण्यविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयतीत्ये-तच्छ्रुत्यभिप्रायम्[१]। हे यविष्ठ युवतम यद्वा मिश्रयितृतम तं यजमानं प्रतर मतिशयेन प्रकृष्टं प्रतरम् अमु च छन्दसीति

१—१,७,२,१०।

रयीणां धनानां धरुणो धारयिता। मनीषाणां मनसा इषितानामभिलषितानां प्रापणः प्रकर्षेणार्पयिता। सोमगोपाः सोमं गोपायतीति यजमानकर्तृकसोमयागस्य रक्षिता। वसुः सर्वस्य निवासहेतुः वासयतीति वसुः यद्वा वसुः धनरूपः यथान्यानि शयनासनरथादिधनान्युपकुर्वन्ति तथायमपि तापपाकप्रकाशैर्जनानामुपकर्तातो वसुः। सहसः सूनुः बलस्य मन्थनवेगरूपस्य पुत्रः यतो मथ्यमानो जायतेऽत एव मुच्यते। अप्सु राजा जलेऽवस्थितो वरुणात्मना राजा यद्वा अप्सु वृष्टिरूपासु राजा विद्युद्रूपेण दीप्यमानः। उषसामग्रे प्रातःकाले इधानः आदित्यात्मना दीप्यमानः उषःकालेऽग्निहोत्रहोमायाग्नयः प्रादुष्क्रियन्ते तदभिप्रायेणोच्यते प्रातर्दीप्यमान इति ॥ २२ ॥

विश्वस्यकेतुर्भुवनस्यगर्भआरोदसीअपृणाज्जायमानः। वीडुञ्चिदद्रिमभिनत्परायञ्जनायदग्निमयजन्तपञ्च ॥२३॥

उशिक्पावकोअरतिःसुमेधामर्त्येष्वग्निरमृतोनिधायि। इयर्त्तिधूममरुषम्भरिभ्रदुच्छुक्रेणशोचिषाद्यामिनक्षन्॥२४

सोऽग्निर्जायमानः उत्पद्यमानः सूर्यात्मना प्रकटीभवन् रोदसी द्यावापृथिव्यौ आ अपृणात् सर्वतस्तेजसा पूरयति। कीदृशः विश्वस्य केतुः प्राणिजातस्य विज्ञानभूतोऽग्न्यात्मना। भुवनस्य गर्भः भूतजातस्य गर्भवदन्तरवस्थितो वाय्वात्मना स हि प्राणभावेन भूतानामन्तः सञ्चरति। किञ्च यः परायन् इन्द्ररूपेण परा परतो गच्छन् वीडुं चित् वीडुशब्दो दृढार्थः चिदप्यर्थः दृढमपि अद्रिमदारयितव्यं मेघमभिनत् भिनत्ति विदारयति। यत् विभक्तिलोपः यमग्निं पञ्चजना अयजन्त यजन्ते विप्राद्याश्चत्वारो निषादश्चेति पञ्च यद्वा चत्वार ऋत्विजो यजमानश्च ॥ २३ ॥

हे अग्ने नृषु मनो यस्यासौ नृमणाः प्रजापतिः समुद्रे वडवानलरूपेण तस्थिवांसं वर्तमानं त्वा त्वामीधे दीपयाञ्चकार इन्धिभवतिभ्यां चेति किद्वत्वान्नलोपः। नृचक्षाः नृषु पठत्सु पुरुषेषु चष्टे मन्त्रान्विस्पष्टं वक्तीति नृचक्षाः प्रजापतिः अप्सु वृष्टिरूपासु अन्तर्मध्ये विद्युद्रूपेण स्थितं त्वा मीधे दीपितवान्। तथा दिवः द्युलोकस्य ऊधन् ऊधःस्थानीये तृतीये समुद्रद्वयापेक्षया तृतीय-

समुद्रेत्वानृमणाअप्स्वन्तर्नृचक्षाईधेदिवोअग्नऊधन्। तृतीयेत्वारजसितस्थिवांसमपामुपस्थेमहिषाअवर्द्धन्॥२०॥

अक्रन्ददग्निस्तनयन्निवद्यौःक्षामारेरिहद्वीरुधःसमञ्जन्। सद्योजज्ञानोविहीमिद्धोअख्यदारोदसीभानुनाभात्यन्तः॥२१॥

श्रीणामुदारोधरुणोरयीणाम्मनीषाणाम्प्रार्पणःसोमगोपाः।

वसुःसूनुःसहसोअप्सुराजाविभात्यग्रउषसामिधानः॥२२॥

स्थाने रजसि रञ्जनात्मके तेजोमण्डले आदित्यात्मना तस्थिवांसं त्वां नृचक्षा एव ईधे। किञ्च महिषाः महान्तः प्राणा अपामुपस्थे उत्सङ्गे नाभ्यानामपां मध्ये स्थितं त्वा मवर्धन् छन्दस्युभयथेति शप आर्धधातुकत्वाच्छिलोपः। प्राणा वै महिषा इति[1] श्रुतिः॥२०॥

व्याख्यातः[(६)]॥२१॥

एवंविधोऽग्निर्विभाति विशेषेण भासते कीदृशः श्रीणां गवाश्वादिसम्पदामुदारः अत्यर्थं दाता उदारो दातृमहतोरिति कोशः

१—६,७,४,५।

श्रुतेः स पुरुषविध इत्यर्थः। नृषु मनो यस्य स नृमणाः पूर्वपदादिति णत्वम्। नृमणाः प्रजापतिः अजस्रं मनुपक्षीण मग्निं मप्सु जलेष्वन्तरवस्थितं तृतीयं तृतीयवार मजनयत् यदेन मदस्तृतीय मग्नीऽजनयत्। अथ यो गर्भोऽन्तरासीत्सोऽग्निरसृज्यत। प्रजापतिर्वै नृमणा अजस्रोऽग्निरित्यादि[1] श्रुतयः। एवं बहुजन्माग्निः स्वाधीः शोभना आहिता धीर्बुद्धिर्यस्य स यजमान एनं बहुजन्मानमग्नि मिन्धानो दीपयन् जरते जनयति धातोरर्थान्तरे वृत्तिः॥ यद्वायमर्थः अग्निः प्रथमं दिवः परि द्युलोकस्योपरि जज्ञे सूर्यरूपेणोत्पन्नः। अस्मत्परि अस्मदीयमनुष्यलोकस्योपरि जातवेदाः द्वितीयं जन्म प्रसिद्धवह्निरूपेण द्वितीयं जन्म प्राप्तवान्। अप्सु समुद्रे तृतीयं जज्ञे वडवानलरूपेण तृतीयवार मुत्पन्नः। अजस्रं त्रिष्वपि जन्मसु नृमणा नृषु मनो यस्य यजमानेष्वनुग्रहबुद्धियुक्तः एन मीदृश मग्नि मिन्धानः पुरोडाशादिना दीपयन् स्वाधीः स्वायत्तचित्तो यजमानो जरते जीर्यते जरापर्यन्तं परिचरतीत्यर्थः॥१८॥

विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा। विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥१९॥

हे अग्ने यानि पूर्वस्मिन्मन्त्रे दिवस्परीत्यादिना त्रेधा स्वरूपाण्युक्तानि आदित्याग्निवडवानलरूपाणि तानि त्रयाणि त्रिसङ्ख्याकानि ते तव सम्बन्धीनि रूपाणि वयं विद्म जानीमः द्व्यचोऽतस्तिङ इति संहितायां दीर्घः विदो लटो वेति मसो मादेशः। यद्वा त्रेधा विभक्तानि त्रयाणि त्रीणि ते तव रूपाणि अग्निवायुसूर्याख्यानि वयं विद्म। किञ्च ते तव सम्बन्धीनि पुरुत्रा बहुषु प्रदेशेषु गार्हपत्याहवनीयान्वाहार्यपचनाग्नीध्रीयरूपेषु विभृता विहृतानि धाम धामानि स्थानानि अपि वयं विद्म विभृतेति विभक्तेराकारः धामेत्यत्र विभक्तिलोपः। किञ्च ते तव परम मुत्कृष्टं गुहा सप्तमीलोपः गुहायां यद्वावस्थितं गोप्यं यविष्ठ इत्यादि मन्त्रप्रसिद्धं नाम यदस्ति तदपि विद्म। किञ्च यत उत्सात् अन्तरिक्षस्थानात्त्व माजगन्थ वैद्युतरूपेणागतोऽसि त मुत्स मुत्स्यन्दनं जलरूपं स्थानं वयं विद्म। गमेर्लिट्॥१९॥

[1]—(१,७,५,२)

अग्निदेवत्ये द्वे अनुष्टुभौ। हे अग्ने त्वं सुखाया अन्तः मध्ये स्वे सदने स्वकीये स्थाने रुचा दीप्त्या युक्तः सन् सीदेति शेषः। किञ्च जातं जातं विन्दतीति जातवेदाः तस्य सम्बोधनं हे जातवेदः सर्वत्र जातं वेदो ज्ञानं यस्येति वा जातविज्ञान तस्याः सुखायाः शिवः कल्याणकारी शान्तो भव किं कुर्वन् हरसा ज्योतिषा तपन् प्रतपन् सन्॥ १६॥

हे अग्ने मह्यं मदर्थं शिवः शान्तो भूत्वा अथो अनन्तरं शिवः सीद सर्वात्मना शान्तः सन् प्रविश। सर्वा दिशः शिवाः शान्ताः कृत्वा इहास्या सुखायां स्वं योनिं स्वकीयं स्थानमासदः आसीद आगत्योपविश छन्दसि लुङ्लङ्लिट इति लोडर्थे लुङ्॥ १७॥

अन्तरग्ने रुचा त्वमुखायाः सदने स्वे। तस्यास्त्वꣳ हरसा तपञ्जातवेदः शिवो भव॥ १६॥

शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम्। शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः॥ १७॥

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः॥१८॥

का॰ वात्सप्रेणं च दिवस्परीत्येकादशभिरनुवाकेनैके[1]। दिवस्परीत्येकादशर्चेन वात्सप्रेणोक्थ्य मग्नि मुपतिष्ठते एके आचार्या अनुवाकेन द्वादशर्चेन वदन्तीति सूत्रार्थः॥ अग्निदेवत्या द्वादश त्रिष्टुभो भलन्दनपुत्रवत्सप्रीदृष्टाः। अग्निः प्रथमं दिवः परि दिवः सकाशात् जज्ञे जातः प्राणो वै दिवः प्राणाद्वा ऽएष प्रथममजायतेति[2] श्रुतिः। जातवेदाः अग्निः द्वितीयं द्वितीयवारमस्मत्परि अस्मत्तः सकाशात् ब्राह्मणो जज्ञे जातः यदेनमदो द्वितीयं पुरुषविधो ऽजनयदिति[3] श्रुतिः स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजतेति च

१—१६,५,२१-२२। २—६,७,४,२। ३—६,७,४,३।

का० अवहरति हꣳसः शुचिषदिति[१] । उख्याग्नि मवतारयति । जगती अग्निप्रोक्षणे इय मुक्ता यजुरन्ता । राजसूयप्रकरणे इय मतिजगत्युक्ता इह तु जगती अन्ते बृहदिति यजुः तद्विनियोगमाह का० आसन्द्यां करोति बृहदिति[२] । बृहदिति यजुषा उख्याग्नि मासन्द्यां स्थापयतीति सूत्रार्थः ॥ हꣳस इति मन्त्रस्तु व्याख्यातः ॥ १४ ॥

का० उपतिष्ठति सीद त्वमिति[३] । आसन्दीनिधानानन्तर मुख्याग्नि मुपतिष्ठते ऋचां तृयेति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुप् ।

हꣳसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ।

नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतम्बृहत् ॥१४॥

सीदत्वम्मातुरस्याउपस्थेविश्वान्यग्नेवयुनानिविद्वान् । मैनान्तपसामार्चिषाभिशोचीरन्तरस्याꣳशुक्रज्योतिर्विभाहि ॥१५॥

हे अग्ने त्वं मातुः मातृसमाया अस्या उखाया उपस्थे उत्सङ्गे सीद उपविश । कीदृशस्त्वं विश्वानि वयुनानि सर्वान् ज्ञानोपायान्विद्वान् जानन् सर्वपदार्थतत्त्ववेदी सन्नित्यर्थः । किञ्च एना मुखां तपसा सन्तापेन माभिशोचीः मा संतापय अर्चिषा ज्वालया च माभिशोचीर्मा दीपय तपः कार्यं मर्चिः कारणं कार्येण भूयांस्तापो भवति कारणेन त्वीषत् तदुभयं मा कुर्वित्यर्थः अस्या मुखाया मन्तर्मध्ये शुक्रज्योतिः निर्मलप्रकाशः सन् विभाहि विशेषेण दीप्यस्व ॥ १५ ॥

१——१६,५,१८ । २——१६,५,१९ । ३——१६,५,२० ।

शुनःशेपदृष्टा। उदित्युपसर्गावव वि एतावपि श्रथयेत्यनेन सम्बध्यन्ते। हे वरुण उत्तम मुत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाश मस्मत् अस्मत्तः सकाशात् उत् श्रथय उत्कृष्य विनाशय अधम मधमाङ्गे पादप्रदेशे स्थापितं त्वत्पाश मवश्रथय अवकृष्यास्मत्तो विनाशय मध्यमं मध्यमप्रदेशे स्थितं पाशं विश्रथय विच्छेदय श्रथ बधे मित्वाण्णिचि ह्रस्वः लोटि मध्यमैकवचने रूपम् श्रथायेति संहितायां दीर्घश्छान्दसः यद्वा श्रथ क्र्यादिः लोटि मध्यमैकवचने छन्दसि शायजपीति श्नाप्रत्ययस्य शायजादेशे श्रथायेति रूपम्। अथ पाशत्रयविनाशानन्तरं हे आदित्य अदितिपुत्र वरुण अनागसः अनपराधा निष्पापास्तव व्रते कर्मणि वर्तमानाः सन्तो वय मदितये अदीनतायै स्याम अखण्डितत्वाय योग्या भवेम। निपातस्य चेति दीर्घः अथा इत्यत्र ॥ १२ ॥

का० पिण्डवत्प्राग्दर्भेषथा प्रगृह्यात्यये ह्यर्हमिति[1]। पूर्वमन्त्रेण पाशावुन्मुच्योर्ध्वबाहुराग्नेयीं दिशं प्रत्युत्थायाग्निं मूर्ध्वं धारय-

**अग्रेबृहन्नुषसामूर्ध्वोअस्थान्निर्जगन्वान्तमसोज्योतिषागात्। अग्निर्भानुनारुशतास्वङ्गआजातोविश्वासद्मान्यप्राः॥१३॥**

तीति सूत्रार्थः॥ अग्निदेवत्या त्रिष्टुप् त्रितदृष्टा। आदित्यात्मनाग्नेः स्तुतिः क्रियते। बृहन् प्रभावान्महानय मग्निरुषसा मग्रे प्रातःकालानां मुखे ऊर्ध्वो अस्थात् ऊर्ध्वः स्थितः यद्वाग्निहोत्रादौ बोध्यमान उत्तिष्ठति ऊर्ध्वो अस्थादित्यत्र प्रकृत्यान्तःपादमव्यपरेऽति एङः पदान्तादतीति सूत्रप्राप्तसन्ध्यभावः। यश्च तमसो रात्रिलक्षणान्निर्जगन्वान्निर्गतः सन् ज्योतिषाहर्लक्षणेन सह आ अगात् इहागतः सोऽग्निर्जात उत्पन्नमात्र एव विश्वा विश्वानि सर्वाणि सद्मानि स्थानानि सर्वान् लोकान् आ अप्राः स्वतेजसा सर्वतः पूरितवान्. प्रा पूरणे लङ् पुरुषव्यत्ययः इमे वै लोका विश्वा सद्मानीति श्रुतिः कीदृशः रुशता रुश हिंसायाम् रुशतीति रुशन् तेन रुशता तमो हिंसता भानुना रश्मिना स्वङ्गः शोभनान्यङ्गानि यस्य शोभनशरीरः॥ १३॥

१——१६,५,१७।

पिन्वस्व सिञ्च पिन्वतिः सेचनार्थः । कीदृश्या धारया विश्वप्स्न्या प्सा भक्षणे विश्वैः प्सायते भक्ष्यते पीयतइति विश्वप्स्नी तया यद्वा विश्वप्स्न्यां सर्वजनोपभोग्यया धारया धनधारया सर्वतः परि सर्वतोऽधिगतैरर्थैः पूर्यमाणया पिन्वस्व सिञ्च अनवच्छिन्नधनदानेन पुनः पुनराप्यायस्वेत्यर्थः ॥ १० ॥

का० सर्पान्नाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयते[१] । नाभेरुपर्युख्याग्निं धारयंस्त मभिमन्त्रयतइति सूत्रार्थः ॥ आग्नेय्यनुष्टुब् ध्रुवदृष्टा । हे अग्ने अहं त्वा माहार्षं माहृतवानस्मि आङ्पूर्वस्य हरतेर्लुङि उत्तमैकवचनम् त्वं च अन्तरभूः उखामध्येऽवस्थितोऽसि । अविचाचलिरत्यन्तं चलनरहितो ध्रुवः स्थिरः सन् तिष्ठ विचलतीति विचाचलिः यङ्लुगन्तादिन् । किञ्च सर्वा

आत्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् ॥ ११ ॥

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ १२ ॥

विशः प्रजाः त्वा त्वां वाञ्छन्तु यद्वा सर्वा विशः सर्वाण्यन्नानि त्वां वाञ्छन्तु, अन्नानि तवोपतिष्ठन्तु, अन्नं वै विश इति[२] श्रुतेः । इदं राष्ट्रं त्वत् त्वत्तः सकाशान्मा अधि भ्रशत् अयं जनपदस्त्वत्तो मापभ्रश्यतु शून्यो मा भूत् अस्मिन् राज्ये स्थित्वा सर्वाः प्रजाः पाहीत्यर्थः । यद्वा श्रीर्वै राष्ट्रं मा त्वच्छ्रीरधिभ्रशदिति[३] श्रुतेः श्रीः त्वत्तो मा भ्रश्यतु भ्रंशु अधःपतने पुषादित्वाच्लेरङ् न माङ्योगइति अडभावः ॥ ११ ॥

का० पाशाउन्मुच्योदुत्तममिति[४] । रुक्मपाशशिक्यपाशौ गलादूर्ध्वमार्गेण निष्काशयतीति सूत्रार्थः ॥ वरुणदेवत्या त्रिष्टुप्

१—१६,५,१८ । २—१६,७,२,७ । ३—६,७,३,७ । ४—१६,५,१७ ।

आग्नेयी महाबृहती एकः पादो द्वादशार्णश्चत्वारोऽष्टार्णाः। हे अङ्गिरः अङ्गिनां रसभूत अङ्गसौष्ठवयुक्त हे अग्ने ते तव शत मावृत्तः सन्तु, शतसङ्ख्याका आवृत्तिशक्तयः सन्तु। तथा ते तव सहस्र मुपावृत्तः सन्तु, सहस्रसङ्ख्याका उपावृत्तिशक्तयः सन्तु, स्वस्यैवावर्तन मावृत् त्वत्समीपवर्तिनां पुरुषाणां द्रव्यविशेषाणां चावर्तन मुपावृत्तिः अस्मासु स्नेहातिशयेन त्वमपि पुनः पुनरावर्तस्व त्वदीयाः पुरुषास्त्वदीयानि च द्रव्याणि पुनः पुनरावर्तन्ता मित्यर्थः। अधीत्यव्यय मथार्थम् निपातस्य चेति संहितायां दीर्घः अथापि शतसहस्रसङ्ख्याना मावृत्त्युपावृत्तिशक्तीनां यः पोषः समृद्धिस्तस्यापि पोषस्यान्यः पोषोऽयुतलक्षादिसङ्ख्याकाभिवृद्धिस्तादृशेन पोषेण

अग्ने अङ्गिरः शतन्तेसन्त्वावृत्तःसहस्रन्तउपावृत्तः। अधापोषस्यपोषेणपुनर्न्नोनष्टमाकृधिपुनर्नोरयिमाकृधि ॥ ८ ॥

पुनरूर्ज्जानिवर्त्तस्वपुनरग्नइषायुषा। पुनर्न्नःपाह्यंहसः ॥ ९ ॥

सहरय्यानिवर्त्तस्वाग्नेपिन्वस्वधारया। विश्वप्स्न्याविश्वतस्परि ॥ १० ॥

नोऽस्मदीयं नष्टं धनं पुनर्भूयोऽपि आकृधि आवृत्तं कुरु आगमय पुनः भूयोऽपि नोऽस्मदीयं पूर्व मसम्पादितं धन माकृधि सर्वतः सम्पादितं कुरु करोतिर्गतिकर्मा शृशृणुपृकृवृभ्यश्छन्दसीति हेर्धिः व्यत्यये शपोलुक् ॥ ८ ॥

आग्नेय्यौ द्वे गायत्र्यौ। हे अग्ने त्वमूर्जा क्षीरादिरसेन सह निवर्तस्व पुनरप्यागच्छ इषा अन्नेन आयुषा जीवेन च सह पुनरागच्छ आगतस्त्वं नोऽस्मान् पुनः क्षतादंहसः पापात्पाहि रक्ष ॥ ९ ॥

हे अग्ने रय्या धनेन सह निवर्तस्व किञ्च धारया जलधारया वृष्टिरूपया विश्वतः परि सर्वेषां तृणधान्यलतापादपाना मुपरि

स्तनयन् गर्जयन् शब्दं कुर्वाणः स्तन गद देव शब्दे चुरादिरदन्तः। मेघसाधर्म्यमाह चामा रेरिहत् सुपां सुलुगिति विभक्तिलोपः क्षामेति पृथिवीनामसु पठितं[1] क्षामां पृथिवीं रेरिहत् लिह आस्वादने यङ्लुगन्ताच्छतृप्रत्ययः रेफश्छान्दसः अत्यन्तं लेढीति लेलिहत् नाभ्यस्ताच्छतुरिति नुमभावः भूमिं मतिं आस्वादयन् व्याप्नुवन् यथा मेघो जलभावं गच्छन्नत्यर्थं भूमिं लेढि। वीरुधः समञ्जन् स्वकीयज्वालासमूहेन ओषधीर्व्याप्नुवन्। अन्यदप्युच्यते हि यस्मात् जज्ञानः उत्पद्यमानः सन् सद्यः तदानीमेव इद्धः दीप्तश्च सन् व्यख्यत् .विख्याति अन्तर्भूतणिजन्तो ह्ययं श्रुत्या तथा व्याख्यातत्वात् विख्यापयति इदं सर्वं विविधं प्रकाशयति। अयञ्च योऽग्निः रोदसी द्यावापृथिव्योः अन्तर्मध्ये भानुना रश्मिना स्वयमाभाति समन्तात्प्रकाशते यथा पर्जन्यो भानुना विद्युद्रूपेण द्यावापृथिव्योरन्तर्भाति एवमग्निः पर्जन्यवत् स्तूयते। ईम् निपातः पादपूरणे ॥ ६ ॥

अक्रा॑न्द॒द॒ग्निः स्त॒नय॑न्निव॒ द्यौः क्षामा॒ रेरि॑ह॒द्वी॒रुधः॑ सम॒ञ्जन्। स॒द्यो ज॑ज्ञा॒नो वि हीमि॒द्धो अख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः ॥६॥

अग्ने॑ऽभ्यावर्तिन्न॒भि मा॒ नि व॑र्तस्वा॒युषा॒ वर्च॑सा प्र॒जया॒ धने॑न। स॒न्या मे॒धया॑ र॒य्या पोषे॑ण ॥ ७ ॥

का० अवहरत्यग्नेऽभ्यावर्तिन्निति[2]। ऋक्चतुष्टयेन चतुर्वारं मुख्याग्निमात्मसमीपमानयतीति सूत्रार्थः॥ अग्निदेवत्योर्ध्वबृहती द्वादशार्णत्रिपादा। अभि आभिमुख्येनावर्तितुं शील मस्यास्तीत्यभ्यावर्ती तत्सम्बोधनम् अस्मदभिमुखागमनशील. आयुरादिभिः सह मा मामभि मां प्रति निवर्तस्व शीघ्र मागच्छ आयुषा जीवनेन वर्चसा ब्रह्मवर्चसेन प्रजया पुत्रादिकया धनेन वसुना सन्या इष्टलाभेन मेधया धारणावत्या बुद्ध्या रय्या सुवर्णालङ्कारैः पोषेण आयुरादीनां पुष्ट्या ॥ ७ ॥

[1]—निघ० १,१,३। [2]—१६,५,१५।

पत्या बृहती। विष्णुशब्देनाग्निरुच्यते स यः स विष्णुर्यज्ञः स स यः स यज्ञोऽयमेव स योऽयमग्निरुखायामिति[1] श्रुतेः। हे प्रथम पादविन्यास त्वं विष्णोः यज्ञस्याग्नेः क्रमोऽसि सपत्नहा सपत्नान् शत्रून् हन्तीति शत्रुघातकश्च अतो गायत्रं छन्दः आरोह अनुग्राहकत्वेन स्वीकुरु ततः पृथिवीमनु विक्रमस्व भूदेवतारूपमिमं प्रदेशं विशेषेण प्राप्नुहि। एवमुत्तरेष्वपि मन्त्रेषु योज्यम्। हे द्वितीय पादन्यास त्वं विष्णोः क्रमोऽसि अभिमातिहा अभिमातिर्घातकः पाप्मा वा तं हन्तीति त्रैष्टुभं छन्दः स्वीकुरु अन्तरिक्षं प्रदेशं व्याप्नुहि। हे तृतीय पादन्यास विष्णोः क्रमोऽसि अरातीयतो हन्ता रातिर्दानं न रातिररातिर्दानाभावस्तमात्मन इच्छतीत्यरातीयन् तस्य हन्ता विनाशकः जागतं छन्दः आरोह दिवं द्युलोकमनु विक्रमस्व द्युलोकं व्याप्नुहि। हे चतुर्थ पादन्यास त्वं

छन्दऽआरोहान्तरिक्षमनुविक्रमस्व विष्णोः क्रमोस्यरातीयतो हन्ता जागतञ्छन्दऽआरोह दिवमनु

विक्रमस्व विष्णोः क्रमोसि शत्रूयतो हन्तानुष्टुभञ्छन्दऽआरोह दिशोनुविक्रमस्व ॥ ५ ॥

विष्णोः क्रमोऽसि शत्रूयतो हन्ता शत्रुत्वं हन्तृत्वमिच्छति शत्रूयति शत्रूयतीति शत्रूयन् क्यजन्ताच्छतृप्रत्ययः उभयत्र तस्य हन्ता आनुष्टुभं छन्द आरोह। अत्र चतुर्ष्वपि पादन्यासेषु यजमान आत्मानं विष्णुत्वेन भावयेत् चतुर्णां प्रक्रमाणां प्रदेशान् पृथिव्यादिलोकरूपत्वेन भावयेत् ॥ का० दिशो वीक्षते दिशोऽनु विक्रमस्वेति[2]। सर्वा दिशः पश्यतीत्यर्थः। यजुरुष्णिक्। हे अग्ने त्वं दिशोऽनु विक्रमस्व प्राच्यादिदिशो व्याप्नुहि ॥ ५ ॥

का० पिण्डवत् प्रागुदङ्‌ अग्रहणात्यक्रन्ददग्निरिति[3]। ऊर्ध्वबाहुः प्रागूर्ध्वमग्निं गृह्णातीति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुप् वत्सप्रीदृष्टा। अग्निरक्रन्दत् छन्दसि लुङ्लिटः क्रन्दति विस्फूर्जति। कीदृशः द्यौरिव स्तनयन् द्योशब्देनात्र पर्जन्य उक्तः द्यौर्मेघ इव

१—६,७,२,११। २—१६,५,१३। ३—१६,५,१४।

का० सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति पिण्डवत्[१] । शिक्यसहित मुख्याग्निं प्राच्या मूर्ध्वं धारयति पिण्डवदित्यूर्ध्वबाहुः सन्नेनोख्याग्निं भूमिमक्षण मप्युक्तं केचिदिति सूत्रार्थः ॥ गरुत्मद्देवत्या विषहन्तो चतुरवसाना कृतिः । हे अग्ने त्वं सुपर्णः शोभन पर्णं पतनं यस्य स पक्षिरूपोऽसि पक्ष्याकारेण चितत्वात् तत दृष्टान्तः गरुत्मान् गरुडो यथा पक्षिराजस्तद्वत् । तस्यावयवाः कथ्यन्ते त्रिवृत् ते तव शिरः त्रिवृत् स्तोमस्तव शिरःस्थानीयः । गायत्रं चक्षुः यद्गायत्राख्यं साम तत्तव चक्षुः नेत्रस्थानीयम् । बृहद्रथन्तरे पक्षौ बृहद्रथन्तराख्ये सामनी तव पक्षस्थानीये । स्तोम आत्मा पञ्चदश स्तोमस्तवात्मा अन्तःकरणस्थानीयः । छन्दांसि अङ्गानि गायत्र्यादीनि एकविंशतिच्छन्दांसि तव हृदयाद्यङ्गस्थानीयानि । यजूंषि नाम इषे त्वेत्यादीनि यजूंषि तव नामस्थानीयानि ।

सामतेतनूर्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याःशफाः । सुपर्णोसिगरुत्मान्दिवङ्गच्छस्वःपत ॥ ४ ॥

विष्णोःक्रमोसिसपत्नहागायत्रञ्छन्दआरोहपृथिवीमनुविक्रमस्वविष्णोःक्रमोस्यभिमातिहात्रैष्टुभ

वामदेव्यं साम ते तव तनूः शरीरस्थानीयम् । यज्ञायज्ञियाख्यं साम तव पुच्छं पुच्छस्थानीयम् । धिष्ण्याः शफाः होत्रादिधिष्ण्यस्थिता अग्नयस्तव शफाः खुरस्थानीयाः । हे अग्ने एवम्भूतस्त्वं यतो गरुत्मान् गरुड इव सुपर्णः पक्षिरूपोऽसि अतो दिवमाकाशं प्रति गच्छ तत्रापि स्वः पत स्वः स्वर्गलोकं प्राप्नुहि ॥ ४ ॥

का० विष्णुक्रमान् क्रमते विष्णोरिति प्रतिमन्त्रं मन्त्र्युद्वहणं च तस्मिंस्तस्मिन्[२] । विष्णुक्रमसञ्ज्ञान् पादन्यासान् करोति तस्मिंस्तस्मिन् क्रमणे उख्यस्याग्नेरूर्ध्वं ग्रहणं कार्यमिति सूत्रार्थः ॥ चत्वारि यजूंष्युख्याग्निदेवत्यानि ऋग्बृहतीच्छन्दस्कानि त्रीणि चतुर्थं प्राजा-

१—१६,५,७ । २—१६,५,११ ।

मरत्निमात्राङ्गयां मुञ्जरज्ज्वा व्युताया मिति लभ्यते तथा चतुरस्राङ्गयां चतुरस्राणि चतुष्कोणानि अङ्गानीषोपलपादरूपाणि यस्यास्तस्यां सम्भिक्यायां चेति सूत्रार्थः । देवाः दीव्यन्ति व्यवहरन्तीति देवाः प्राणा यजमानस्य एत मग्निं धारयन् अधारयन् अडभाव आर्षः । कीदृशा देवाः द्रविणोदाः यागद्वारेण द्रविणं धनरूपं फलं ददति प्रयच्छन्ति ते । तमहं धारयामीति शेषः । अग्निं धारयन्द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा इति तैत्तिरीयश्रुतेर्देवशब्देन प्राणा उच्यन्ते ॥ २ ॥

का० शिक्यपाशं प्रतिमुञ्चते षडुद्याम विश्वा रूपाणीति[1] उत् उर्ध्वं यम्यते नियम्यते यैस्ते उद्यामा रज्जवः षडुद्यामा रज्जव ऊर्ध्वाकर्षणहेतवो यस्य दृश माऽऽसन्दीस्थं शिक्यपाशं यजमानः कण्ठे बध्नातीति सूत्रार्थः ॥ सवितृदेवत्या जगती श्यावाश्वदृष्टा ।

विश्वारूपाणिप्रतिमुञ्चतेकविःप्रासावीद्भद्रन्द्विपदेचतुष्पदे । विनाकमख्यत्सवितावरेण्योनुप्रयाणमुषसोविराजति ।३।

सुपर्णोऽसिगरुत्माँस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथन्तरेपक्षौ । स्तोमआत्माछन्दाᳬस्यङ्गानियजूᳬषिनाम ।

कविः विद्वान् क्रान्तदर्शनः । वरेण्यः श्रेष्ठः सविता सर्वस्य प्रसविता सूर्यः विश्वा विश्वानि सर्वाणि रूपाणि प्रतिमुञ्चते द्रव्येषु प्रतिबध्नाति रात्रितमोऽपहत्य रूपाणि प्रकाशयतीत्यर्थः । यश्च द्विपदे चतुष्पदे द्विपाद्भ्यश्चतुष्पाद्भ्यो मनुष्यपश्वादिभ्यो भद्रं कल्याणं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः प्रासावीत् प्रसौति प्रेरयति । यश्च नाकं स्वर्गं व्यख्यत् विख्याति प्रकाशयति अस्यतिवक्तिख्यातिभ्योऽङ् इति च्लेरङ् । यश्च उषसः उषःकालस्य प्रयाणं गमन मनु पश्चात् उषःकाले व्यतीते सति विराजति विशेषेण दीप्यते । उषाः सवितुः पुरोगामिनीति सवितुः स्तुतिः । ईदृशः सविता शिक्यं प्रतिमुञ्चत्विति शेषः ॥ ३ ॥

[1] —१६,५,९ ।

कारणात् द्यौर्द्युलोकवासी देवगण एन मग्नि मजनयत् जनितवती। कीदृशी द्यौः सुरेताः शोभनं रेतोऽग्निरूपं यस्याः सा तस्मादमृतत्वं युक्तम्॥ १ ॥

का० परिमण्डलाभ्या मिण्ड्वाभ्या मुखां परिगृह्णाति नक्तोषासेति[१]। वर्तुलाभ्या मुखाधारणसाधनरूपाभ्या मिण्ड्वाभ्या मुखां गृह्णातीति सूत्रार्थः॥ अग्निदेवत्या त्रिष्टुप् कुत्सदृष्टा अर्धं मुखाग्रहणे विनियुक्तम्। नक्तोषासा नक्तं च उषाश्च नक्तोषसौ विभक्तेराकारः संहितायां दीर्घः नक्तं रात्रिः उषा अहः नक्तोषसौ रात्रिदिवसौ एक मग्निं धापयेते पाययेते सायम्प्रातरग्निहोत्रादिकर्मभिः तर्पयेतेइत्यर्थः। तत्र लुप्तोपमानम् शिशुं बालं मातापितराविव। धेट् पाने हेतुमति चेति णिच् आदेच उपदेशेऽशितीति आकारे अर्तिह्रीत्यादिना पुक्। कीदृश्यौ नक्तोषसौ समनसा समनसौ समानं मनो ययोस्ते एकमनस्के परमैकमत्ययुक्ते इत्यर्थः।

**नक्तोषासासमनसाविरूपेधापयेतेशिशुमेकꣳसमीची। द्यावाक्षामारुक्मोअन्तर्विभातिदेवाअग्निन्धारयन्द्रविणोदाः॥२॥**

विरूपे विलक्षणं रूपं ययोस्ते विरूपे कृष्णा रात्रिः शुक्ल महः। समीची सम्यगञ्चतस्ते समीच्यौ सम्यगञ्चने समन्विते संश्लिष्टे वा पूर्वसवर्णो विभक्तेः। ये इत्थम्भूते रात्र्यहनी ताभ्या मिण्ड्वारूपाभ्या मुखां गृह्णामीति शेषः॥ का० हरति द्यावाक्षामेति[२]। आहवनीयोपरिस्था मुखा मेव मिण्ड्वाभ्या मादाय द्यावेति पादेनासन्दीं प्रति तां हरतीति सूत्रार्थः॥ द्यावाक्षामा द्यौश्च क्षामा पृथिवी च द्यावाक्षामा दिवो द्यावादेशः विभक्तेर्लोपः द्यावापृथिव्योरन्तर्मध्ये अन्तरिक्षे च यो रुक्मः रोचमानोऽग्निर्विभाति प्रकाशते तं हरामीति शेषः॥ का० आहवनीयस्य पुरस्तादुद्गात्रासन्दीवदासन्द्यां चतुरस्राङ्ग्यां शिक्यवत्या मादधाति देवा अग्निमिति[३]। आहवनीयात्पूर्वदिशि भूमौ स्थापितायामासन्द्यां मुखां निदधाति देवा इति पादेन उद्गात्रासन्दीवदिति प्रादेशमात्रपाद्या मौदुम्बर्यां

१——१६,५,३। २——१६,५,४। ३——१६,५,५।

द्वौ पादौ यस्य स द्विपात्तस्मै द्विपदे चत्वारः पादा यस्य स चतुष्पात् तस्मै पादः पत् पादस्य लोपोऽहस्त्यादिभ्य इति अन्तलोपे पदादेशः द्विपदे मनुष्याय चतुष्पदे गवादये अन्नं धेहि देहि जातावेकवचनम् सर्वेभ्यो नरपशुभ्योऽन्नं देहीत्यर्थः ॥ ८३ ॥

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे । उखादिसमिदाध्यन्तोऽध्याय एकादशोऽगमत् ॥ ११ ॥

एकादशाध्याये उखासम्भरणादिमन्त्रा उक्ताः द्वादशेऽध्याये उखाधारणादिमन्त्रा उच्यन्ते । तत्र का० यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्प्रोतमुपरिनाभि बहिष्पिण्डं दृशानो रुक्म इति[१] । समिदाधानान्ते ऐशान्यां तिष्ठन्यजमानो ग्रीवायां रुक्मं स्वर्णनिर्मितं फलकाकारमाभरणविशेषं बध्नाति । कीदृशं

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥१॥

वर्तुलम् एकविंशतिः पिण्डा यत्र । शणकदलतुल्याः स्वरूपाद्बहिर्भूता उन्नतबिन्दवः पिण्डा उच्यन्ते । कृष्णाजिनखण्डे श्वेतकृष्णरोमस्थाने स्यूतम् त्रिगुणशणसूत्रे प्रोतम् नाभेरूर्ध्वं वर्तमानम् पिण्डा बहिर्भवन्ति तथा धार्यमिति सूत्रार्थः ॥ रुक्मदेवत्या त्रिष्टुप् वत्सप्रीदृष्टा आदित्याध्यासेन रुक्मः स्तूयते । रुक्म आभरणविशेषः उर्व्या महत्या दीप्त्या व्यद्यौत् विद्योतते द्युत द्योतने व्यत्ययेन शपि लुप्ते हलो लङि रूपम् । कीदृशो रुक्मः दृशानो दृश्यमानः शानचि शपो लुक् प्रत्यक्ष मुपलभ्यमानः । श्रिये जनेभ्यः श्रियं दातुम् । दुर्मर्षं दुर्मर्षण मनवखण्डितं केनाप्यतिरस्कार्यं वा आयुः जीवनं रुचानः रोचत इति रुचानो वाञ्छन् रोचतेः शानचि बहुलं छन्दसीति शपो लुक् । सोऽय मग्निर्वयोभिरन्नैः पशुपुरोडाशप्रभृतिभिरमृतोऽमरणधर्मा अभवत् । यद्यस्मात्

१—१६,५,१ ।

एषां स्वकीयानां राजब्राह्मणादीनां मध्ये एकैकस्य बाहू भुजौ उदतिर मुत्कर्षेण वर्धितवानस्मि तिरतिर्वृद्ध्यर्थः लौकिकोक्तिरियं लोके हि योऽन्यस्मादुत्कृष्टो भवति जना एवं वदन्ति अयं स्वहस्त मुपरि कृतवानिति। वर्चः कान्तिः तामप्युदतिरम्, अथो अपि च बलं शरीरशक्ति मुदतिरम्। ब्रह्मणा मन्त्रसामर्थ्येन अमित्रान् शत्रून् क्षिणोमि क्षीणान् करोमि। स्वान् स्वकीयान् पुरुषान् पुत्रपौत्रादीनहं सुनयामि उत्कर्षं प्रापयामि। एवं त्रयोदश समिन्मन्त्रा उक्ताः॥ ८२॥

का० न्यज्य समिधं व्रते प्रत्ते-प्रत्तेऽन्नपतइत्याधानम्[१]। अध्वर्युणा व्रतपयसि दत्ते तत्र समिध मभ्यज्य दीक्षितउख्येऽग्नावादध्यात् प्रत्ते इति वीप्सा प्रतिव्रतं समिदाधानप्राप्त्यर्था इति सूत्रार्थः॥ आग्नयी उपरिष्टाद्बृहती अष्टाक्षत्रिपादा चतुर्थी द्वादशार्णः।

अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः। प्रप्रदातारन्तारिषऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे॥ ८३॥

॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायामेकादशोऽध्यायः॥ ११॥

हे अन्नपते अन्नस्य पालक अग्ने नोऽस्मभ्य मन्नस्य देहि कर्मणि षष्ठी अन्नं प्रयच्छ यद्वान्नस्य स्व मंशं देहि। कीदृशस्यान्नस्य अनमीवस्य नास्ति अमीवा व्याधिर्येन तदनमीवम् तस्य। शुष्मिणः शुष्ममिति बलनाम[२] शुष्मं बलं विद्यते यस्मात्तत् शुष्मि तस्य। रोगनाशकं बलहेतुकं प्रयच्छेत्यर्थः। किञ्च दातारं प्रतारिषः अन्नस्य दातारं प्रकर्षेण वर्धय प्रसमुपोदः पादपूरणइति पादपूर्त्यै प्रोपसर्गस्य द्वित्वम् अतिशयार्थं वोपसर्गाभ्यासः अभ्यासे भूयांस मर्थं मन्यन्तइति यास्कोक्तेः[३]। तॄ प्लवनतरणयोः लेटो मध्यमैकवचनं सिब्बहुलं लेटीति सिप्प्रत्ययः आर्धधातुकस्येडिति छान्दसी धातोर्वृद्धिः लेटोऽडाटाविति अडागमः इतश्च लोप इति लेट इकारलोपे रुत्वविसर्गौ तारिष इति रूपम्। किञ्च नोऽस्माकं द्विपदे मनुष्ये पुत्रादौ चतुष्पदे गवादौ च ऊर्जं मन्नं धेहि धारय यद्वा

१——१६,६,८। २——निघ० २,९,११। ३——निरु० १०,४२।

पूर्वं चोरभेदा दर्शिताः इदानीं शत्रुभेदा उच्यन्ते ते चतुर्विधाः अरातयो द्वेषिणो निन्दका जिघांसवश्चेति तत्र दातव्यत्वेन प्राप्तं धनं यो न ददाति सोऽरातिः कार्यविघातं यः करोति सो द्वेषी वाग्दौर्जन्यमात्रं यः करोति स निन्दकः हन्तुकामश्चतुर्थः तान् अग्नये समर्पयति । यो नरः अस्मभ्यमस्मदर्थं अरातीयात् अरातीयति अरातिरिवाचरति अरातित्वमिच्छति आचारे इच्छायां वा क्यच् प्रत्ययः । यश्च जनो नोऽस्मान्द्वेषते कार्यनाशेनाप्रीतिमुत्पादयति द्विष अप्रीतौ बहुलं छन्दसीति शपो लुगभावः । योऽप्यन्योऽस्मान्निन्दात् निन्दति वाचा दुःखं ददाति । यश्चापरोऽस्मान्धिप्सात् धिप्सति दम्भितुमिच्छति जिघांसति दम्भेः सनन्तस्य दभ इच्चेति

सꣳशितम्मेब्रह्मसꣳशितंवीर्य्यम्बलम् । सꣳशितङ्क्षत्रञ्जिष्णुयस्याहमस्मिपुरोहितः ॥ ८१ ॥

उदेषाम्बाहूअतिरमुद्वर्चोअथोबलम् । क्षिणोमिब्रह्मणामित्रानुन्नयामिस्वाꣳअहम् ॥ ८२ ॥

अभ्यासलोप इकारस्य । इतश्च लोपः परस्मैपदेष्विति इकारलोपः लेटोऽडाटाविति आडागमोरातीयादित्यादिषु निर्व्वपि । हे अग्ने तं सर्वं जनं चतुर्विधं भस्मसा कुरु चूर्णीकुरु चर्वित्वा भक्षयेत्यर्थः भस्मसाशब्दो डाजन्तो निपातः चर्वणजन्यशब्दानुकरणवाची ॥ ८० ॥

का० उपोत्तमां क्षत्रियस्येच्छन्नुत्तमां पुरोहितस्य । क्षत्रिययजमानस्य द्वादशीं संशितमित्येतामिच्छया दधाति पुरोहितयजमानस्यान्त्यामुदेषामित्येतामिच्छया दधाति एकादश नित्याः सर्वासामृचामन्ते स्वाहाकारश्चेति सूत्रार्थः । मे मदीयं ब्रह्म ब्राह्मण्यं संशितं सम्यक् तीक्ष्णीकृतं शास्त्रीयमार्गवर्ति कृतमित्यर्थः शो तनूकरणे क्तान्तः । वीर्यमिन्द्रियशक्तिः बलं शरीरशक्तिः तदुभयं संशितं स्वकार्यक्षमं कृतम् । तथा यस्य क्षत्रस्याहं पुरोहितोऽस्मि भवामि तन्मदीयं क्षत्रं क्षत्रजातं जिष्णु जयनशीलं यथा भवति तथा संशितं तीव्रं कृतम् ॥ ८१ ॥

गुप्ता: प्रकटाश्चेति द्विविधाश्चोरा: प्रकटा अपि पुनर्द्विविधा: अरण्ये मार्गे च प्रहृत्य प्रत्यह मेव पलायमाना: प्रकटा: ततोऽप्यतिप्रकटा निर्भया. ग्रामेष्वेवागत्य बन्दीकारा: ते अत्र मलिम्लुच उच्यन्ते मलं पापाधिक्य मेषा मस्तीति मलिन: तथाविधा भूत्वा म्लोचन्ति जने वने वा यद्दृश्या भवन्तीति मलिम्लुचः। दन्तपङ्क्तिमध्ये याभ्यां तीक्ष्णदन्ताभ्यां क्रमुकादिकं भक्ष्यते ते दंष्ट्रे राक्षसीसम्पन्ने। ततः पुरोवर्तिनो बहिर्दृश्यमाना दन्ता जम्भा: जम्भावर्ति माश्रिता जम्भ्या:। दन्तलीने तु हनू। दंष्ट्राभ्यां मलिम्लून्

द॑ꣳष्ट्राभ्या॑म्मलि॒म्लून्जम्भ्यै॒स्तस्क॑राꣳउ॒त। हनु॑भ्याꣳस्ते॒नान्भ॑गव॒स्ताँस्त्वङ्खा॑द॒ सुखा॑दितान्॥ ७८ ॥

ये जने॑षु म॒लिम्ल॑व॒ स्ते॒ना॑स॒स्तस्क॑रा॒ वने॑। ये कक्षे॑ष्वघा॒यव॒स्ताँस्ते॑ दधामि॒ जम्भ्यो॑:॥ ७९ ॥

यो अ॒स्मभ्य॑मराती॒याद्यश्च॑ नो॒ द्वेष॑ते॒ जन॑:। निन्दा॒द्यो अ॒स्मान्धिप्सा॑च्च॒ सर्वं॒ तम्भ॑स्म॒सा कु॑रु॥ ८० ॥

पीडयित्वा जम्भ्यैस्तस्करानपि पीडयित्वा हनुभ्यां स्तेनान् पीडयित्वा हे भगव: भगवन्मष्टदैश्वर्ययुक्त पूजनीय तान् सर्वान् पूर्वोक्तान् सुखादितान् सुष्ठु खादितान् भक्षितान् पुनर्जीवनरहिता यथा भवन्ति तथा खाद भक्षय। सुखादितानपेतान् कुर्विति वा॥ ७८ ॥

जनेषु ग्रामवर्तिषु ये मलिम्लुच: पूर्वोक्ता बन्दीकारा: ये च वने स्तेनास: स्तेनाः आज्जसेरसुक् गुप्तचोरा: तस्करा: प्रकटचोरा: ये च कक्षेषु नदीपर्वतगहनेषु अघायवः परेषां पापाभिलाषुका: हे अग्ने तान् चतुर्विधान् ते तव जम्भ्यो: दंष्ट्रयोर्दधामि स्थापयामि भक्षयेत्यर्थ:। अघं परस्येच्छन्ति ते अघायव: छन्दसि परेच्छायामिति वक्तव्यमिति अघशब्दात् क्यच् क्याच्छन्दसीति उप्रत्यय: ॥७९॥

एषा ह नाभिः पृथिव्यै यद्वेष एतत्समिध्यत इति श्रुतेः पृथिव्या नाभा नाभौ विभक्तेराकारः पृथिवीरूपाया उखाया मध्ये समिधाने दीप्यमाने अग्नौ आहवनीयाख्ये अग्निं तदभिमानिनं देवं वयं हवामहे आह्वयामः किमर्थं बृहते रायः पोषाय प्रौढाय धनपोषणाय । कीदृशं मग्निम् इरम्मदम् इरया अन्नेन माद्यति हृष्यति तुष्यतीति इरम्मदस्तम् उग्रम्पश्येत्यादिना खश् प्रत्ययः निपातः । बृहदुक्थं बृहन्ति महान्ति उक्थानि शस्त्राणि यस्य तम् । यजत्रं यजनीयम् । पृतनासु संग्रामेषु जेतारं जयशीलम् । सासहिं सहतेऽभिभवतीति सासहिस्तं सोढारं मस्मच्छत्रूणा मभिभवितारम् । अग्नावित्याहवनीयविषयोऽग्निशब्दः जेतार मग्नि मित्यधिष्ठात्रग्निविषयः ।। ७६ ।।

नाभापृथिव्याःसमिधानेअग्नौरायस्पोषायबृहतेहवामहे । इरम्मदम्बृहदुक्थंयजत्रञ्जेतारमग्निम्पृतनासुसासहिम् । ७६ ।

याःसेनाअभीत्वरीराव्याधिनीरुगणाउत । येस्तेनायेचतस्करास्तांस्तेअग्नेपिदधाम्यास्ये ॥ ७७ ॥

षडनुष्टुभः । याः काश्चित्परकीयाः सेनाः अभीत्वरीरभीत्वर्यः अभियायिन्यः अस्मदाभिमुख्येनागमनशीलाः अभियन्ति ता अभीत्वर्यः इण्नशजिसर्तिभ्यः क्वरबिति क्वरप् ह्रस्वस्य पिति कृति तुक् टिड्ढाणञ्द्वयसजित्यादिना ङीप् । उतशब्दोऽप्यर्थे उतापि च याः सेनाः आव्याधिनीः आ समन्ताद्विध्यन्ति ताः सर्वतोऽस्मांस्ताडयन्त्यः । उगणाः उद्गूर्णगणाः पृषोदरादिपाठान्मध्यमपदलोप उद्यतायुधगणोपेताः बहुस्तोमा इत्यर्थः । ये च स्तेनाः गुप्तचराः ये च तस्कराः प्रकटचोराः तस्करस्तत्करोति यत्पापकमिति नैरुक्ताः(३,१४) । हे अग्ने तान् पूर्वोक्तान् सेनादीन् ते तव आस्ये मुखे अपिदधामि प्रक्षिपामि भक्षणाय दुष्टान् सर्वान् भक्षयेत्यर्थः ॥ ७७ ॥

१——६,६,३,९ ।

चित् यानि कानि दारूणि काष्ठानि ते तव सम्भ्यर्थं षष्ठी त्वयि यत् आदध्मसि आदध्मः आरोपयामः इदन्तो मसि तत्सर्वं काष्ठजातं ते त्वदर्थं घृवं घृतवत् प्रिय मस्तु तद्दारुजातं त्वं जुषस्व सेवस्व ॥ ७३ ॥

का० अधःशयां यदत्तीति[1] । अधो नीचे देशे शेते तां भूलग्नां समिधं पञ्चमी मादधाति ॥ उपजिह्विका उपदीपिका पिपीलिका-सदृशः क्षुद्रजीवः यद्दारु अत्ति भक्षयति अधःशयत्वादेव । वम्रो वल्मीकस्य यद्दारु अतिसर्पति अतिव्याप्नोति अतीत्यनुवर्तते तत्सर्वं ते घृत मस्तु इति पूर्ववत् ॥ ७४ ॥

का० पालाशीः प्रत्यृच महरहरिति[2] । अष्टभिः प्रत्यृच मष्टौ पालाशीः प्रादेशमिताः समिध उख्येऽग्नावादधातीति सूत्रार्थः ॥

यदत्त्युपजिह्विकायद्वम्रोऽअतिसर्प्पति । सर्व्वन्तदस्तुतेघृतन्तञ्जुषस्वयविष्ठ्य ॥ ७४ ॥

अहरहरप्रयावम्भरन्तोऽश्वायेवतिष्ठतेघासमस्मै । रायस्पोषेणसमिषामदन्तोऽग्ने मातेप्रतिवेशारिषाम ॥ ७५ ॥

हे त्रिष्टभो नाभानेदिष्ठदृष्टे । हे अग्ने तव प्रतिवेशाः प्रातिवेश्यिकाः प्रत्यासन्नास्त्वदाश्रयाः सन्तो वयं मा रिषाम मा हिंसन प्राप्नुमः मा विनश्येमेत्यर्थः । किं कुर्वन्तः अहरहः प्रत्यहं सन्तत मप्रयाव मप्रमत्तं यथा तथा अस्मै अग्नये घासं समिद्रूपं भक्ष्यं भरन्तः सम्पादयन्तः प्रयवणं प्रयावः यु मिश्रणे घञ् प्रत्ययः नास्ति प्रयावः प्रमादो यस्यां क्रियायाम् । तत्र दृष्टान्तः अश्वायेव तिष्ठते वाजिशालाया मवस्थितायाश्वाय यथा प्रत्यह मप्रमादेन घासं यच्छन्ति तद्वत् । पुनः किं कुर्वतः-रायः पोषेण धनस्य पुष्ट्या दक्षिणालक्षणेन इषा अन्नेन च सम्मदन्तः हर्षं कुर्वन्तः त्वामुत्साहयन्त इत्यर्थः ॥ ७५ ॥

१—१६,४,३९ । २—१६,४,४० ।

मामित्र्यः । संवत् इति सङ्ग्रामनामसु पठितम्[1] । संपूर्वस्य वनुतेर्गत्यर्थस्य क्विप् संवन्वते संगच्छन्ते योधा यत्र सा संवत् परस्याः अत्र-सम्बन्धिन्याः संवतः सङ्ग्रामात् अवरानस्मदीयान् जनानभ्यातर अभिमुख मागच्छ दुःखात्तारयेत्यर्थः । किञ्च यत्र जनपदे अहं मस्मि भवामि तानव पालय तर्पय वा ॥ ७१ ॥

का० औदुम्बरीं पर मस्या इति[2] । उदुम्बरतरुसमिधं तृतीया मादधातीति सूत्रार्थः ॥ अनुष्टुब्वारुणिदृष्टा । हे अग्ने परमस्याः परावतोऽत्यन्तदूरदेशादिहास्मिन् कर्मणि त्व मागहि आगच्छ गच्छतेः अपि लुप्ते अनुदात्तोपदेशे मलोपे आगहीति रूपम् । परावत इति दूरनामसु पठितम्[3] । परमाशब्दस्य सर्वनामत्व मार्षम् परमा उत्कृष्टातिशयिता या परावत् अतिदूर मित्यर्थः । आगत्य च मृधः

परमस्याःपरावतोरोहिदश्वइहागहि । पुरीष्यःपुरुप्रियोग्नेत्वन्तराम्मृधः ॥७२॥

यदग्नेकानिकानिचिदातेदारूणिदध्मसि । सर्वन्तदस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७३ ॥

सङ्ग्रामान् तर अतिलङ्घय शत्रून् विनाशयेत्यर्थः द्व्यचोऽतस्तिङ इति दीर्घः । कीदृशस्त्वं रोहिदश्वः रोहितोऽग्ने हरित आदित्यस्येति निघण्टूक्तेः (१,१५) रोहितोऽग्नेरश्वाः रोहितः तत्सञ्ज्ञा अश्वा यस्य स रोहिदश्वः । पुरीष्यः पशव्यः पुरुप्रियः पुरूणां बहूनां प्रियो वल्लभः ॥ ७२ ॥

का० अपरशुवृक्णां यदग्न इति[4] । कुठारं विना छिन्नां वातादिना भग्नां यज्ञियतरुसमिधं चतुर्थीं मादधातीति सूत्रार्थः ॥ द्वे अनुष्टुभौ जमदग्निदृष्टे । अतिशयेन युवा यविष्ठः यविष्ठ एव यविष्ठ्यः स्वार्थे यत् प्रत्ययः हे यविष्ठ्य हे युवतम हे अग्ने कानि कानि

१—निघ० २,१७। २—१६,४,३७,४७। ३—निघ० ३,२६,५। ४—१४,४,४८।

स्वस्तये यजमानस्य क्षेमाय दृंहस्व दृढा भव कस्मात्त्व मिद मुच्यते स्वधयान्नेन निमित्तेन त्व मासुरी माया प्राणसम्बन्धिनी प्रज्ञा कृतासि असूनां प्राणाना मिय मासुरी यद्वा असुरसम्बन्धिनी माया अचिन्त्यरचनारूपं चित्रं वस्तु भूत्वा यद्वत्प्रतिभाति तद्वत् त्वमपि रचनरचनायुक्ता निष्पन्नासीत्यर्थः। किञ्च हे उखे इदं हव्य मुख्येऽग्नौ होष्यमाणं देवेभ्यो जुष्टं प्रिय मस्तु त्वत्प्रसादाद्देवेभ्यो रोचता मित्यर्थः। त्वमपि अरिष्टा अनवखण्डिता सती अस्मिन्यज्ञे वर्तमाने उदिहि उद्गच्छ उद्गता भव ॥ ६९ ॥

का० अग्नावारूढे त्रयोदशास्यां प्रादेशमात्रीः समिध आदधाति[१]। घृतोन्नां कामुकीं द्रुन्न इति(२५)। अभितापादुखायां वह्नौ जाते प्रादेशमितास्त्रयोदशसङ्ख्याकाः समिधो जुहोति ताः क्रमेणाह घृतक्लिन्नां क्रमुकसमिध मादौ क्रमुको धमनः इति सूत्रार्थः॥ अग्नि-

द्रुन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः। सहसस्पुत्रो अद्भुतः ॥ ७० ॥

परस्या अधि संवतोऽवराँ अभ्यातर। यत्राहमस्मि ताँ अव ॥ ७१ ॥

देवत्या गायत्री सोमाहुतिदृष्टा। ईदृशोऽग्निः कामुकीं समिधं भक्षयत्विति शेषः। कीदृशः द्रुन्नः पलाशिद्रुद्रुमागमा इति कोशोक्तेर्द्रुवो वृक्षा एवान्न मदनीयं यस्य स द्रुन्नः सर्पिरासुतिः सर्पिर्घृत मासुतिरासवस्थानीयं मादकं यस्य सः यद्वा सर्पिराहारत्वेन सूयते प्रक्षिप्यते यस्मिन् सर्पिरासुतिः। प्रत्नः पुरातनः। होता देवाना माह्वाता। वरेण्यः वरणीयः। सहसो बलस्य पुत्रः मन्थनहेतुना बलेनोत्पद्यमानत्वात्। अद्भुतः आश्चर्यरूपः अनन्यसदृश इत्यर्थः ॥ ७० ॥

का० वैकङ्कतीं परस्या इति[२]। विकङ्कततरुसमिधं जुहोतीति सूत्रार्थः॥ आग्नेयी गायत्री विरूपदृष्टा। इत अध्यायान्त

१——१६,४,३३। २——१६,४,३६।

वृणीत वृणुते प्रार्थयते । विश्वः सर्वो जनः राये धनाय इषुध्यति देवं प्रार्थयते । याच्ञाकर्मसु पठितः[1] । किञ्च पुष्यसे पोष्टुं पोषणाय द्युम्नं यशोऽन्नं वा वृणीत सर्वो जनः प्रार्थयते स्वाहा तस्मै प्रेरकाय सुहुतमस्तु ॥ ६७ ॥

का० दण्डोच्छ्रयणान्तं कृत्वाध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मुञ्जकुलायशणकुलायावस्तीर्य मन्त्रेणशणां मा सु भित्था इति तिष्ठन्नुदङ् प्राङ्[2] । औद्ग्रभणहोमानन्तरं दीक्षणीयाशेषं समाप्य कृष्णाजिनदीक्षादि दण्डोच्छ्रयणान्तं प्राकृतं कर्म कृत्वाध्वर्युर्यजमानो वैशानाभिमुखः प्राग्वा तिष्ठन्नृग्द्वयेन समिद्धे आहवनीये उखामारोपयति कीदृशीं मुखां मुञ्जतृणनिर्मितं पक्षिनीडं मुञ्जकुलायः शणनिर्मितं तच्छणकुलायस्ताभ्यां मध्ये छादितामादौ शणकुलायेन ततोऽन्येनेति सूत्रार्थः ॥ उखादेवत्ये

मासु भित्था मासु रिषोऽम्ब धृष्णु वीरयस्व सु । अग्निश्चेदं करिष्यथः ॥ ६८ ॥

दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि । जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥ ६९

द्वे गायत्रीत्रिष्टुभौ प्रथमायास्तृतीयपादोऽग्निदैवतः । हे अम्ब मातः उखे त्वं सुतरां मा भित्थाः भिन्ना विदीर्णा मा भव इदमभिन्नत्वं सुष्ठु विधेयम् तथा मा सुतरां रिषः रिषतिर्हिंसाकर्मा मा हिंसिता भव मा विनश्यस्व इदमस्फुटनं सुष्ठु विधेयम् सर्वात्मना द्वैधीभावो भेदः लेशस्य पृथग्भावः स्फुटनं तदुभयं तव मा भूदित्यर्थः । किञ्च हे उखे धृष्णु प्रगल्भं यथा सुतरां वीरयस्व अग्निधारणलक्षणं वीरकर्म कुरु । किञ्च अग्निश्चकारात् त्वं चेदं मस्मदीयं कर्म आसमाप्तेः करिष्यथः ॥ ६८ ॥

कार्ये कारणोपचारो वर्णनार्थः । हे पृथिवि देवि मृत्कार्यत्वात्पृथिवीत्वं मन्त्रैर्निष्पादितत्वाद्देवतात्वम् तथाविधे हे उखे

१——निघ० ३,१९,१४ । २——१६,४,३१ ।

फाल्गु नामावास्यायां दीक्षां कृत्वोद्ग्रभणहोमकाले प्राकृतानि सोमयागे कर्त्तव्यानि आकूत्यै प्रयुजेऽग्नये स्वाहेत्यादीनि(४,७) पञ्चौद्ग्रभणानि हुत्वाग्निचयनसम्बन्धीनि सप्तौद्ग्रभणानि प्रतिमन्त्रं जुहोतीति सूत्रार्थः ॥ सप्तौद्ग्रभणसञ्ज्ञानि लिङ्गोक्तदेवत्यानि । आकूत्यै यजुः पङ्क्तिः । आकूतिरस्मदीयः सङ्कल्पोऽग्निचयनानुष्ठानविषयः तां प्रति प्रयुङ्क्ते प्रेरयतीति प्रयुक् तं सङ्कल्पप्रेरक मग्नि मुद्दिश्य स्वाहा सुहुत मस्तु आकूतिरेवाग्निरिति सामानाधिकरण्यं वा ॥ मनः । यजुस्त्रिष्टुप् । अनुष्ठेयस्मरणसाधनं मनः श्रुतयोर्मन्त्रतन्त्रयोर्धारणशक्तिर्मेधा तदुभयं प्रति प्रयुजं प्रेरक मग्नि मुद्दिश्य स्वाहा ॥ चित्तम् । यजुर्जगती । अविज्ञातस्यानुष्ठानस्य ज्ञानसाधनं

**आकूतिमग्निम्प्रयुजꣳस्वाहामनोमेधामग्निम्प्रयुजꣳस्वाहाचित्तंविज्ञातमग्निम्प्रयुजꣳस्वाहावाचोविधृतिमग्निम्प्रयुजꣳस्वाहाप्रजापतयेमनवेस्वाहाग्नयेवैश्वानरायस्वाहा ॥ ६६ ॥**

**विश्वोदेवस्यनेतुर्मर्त्तोवुरीतसख्यम् । विश्वोरायइषुध्यतिद्युम्नंवृणीतपुष्यसेस्वाहा ॥ ६७ ॥**

चित्तं तेन चित्तेनावगत मनुष्ठानं विज्ञातम् तदुभयं प्रति प्रेरक मग्नि मुद्दिश्य सुहुत मस्तु ॥ वाचः । यजुर्जगती । वाचो मन्त्रपाठरूपाया विधृतिं विधारणं प्रति प्रयुजं प्रेरक मग्नि मुद्दिश्य स्वाहा सुहुत मिद मस्तु ॥ प्रजापतये । यजुःपङ्क्तिः । मनवे मन्वन्तरकारिणे प्रजापतये प्रजानां पालकाय स्वाहा ॥ विश्वेषां नराणा मनुग्राहकाय विश्वानरपुत्राय वाग्नये स्वाहा सुहुत मस्तु ॥६६॥

ऋष्याद्युक्तं व्याख्याता च(४,८) । विश्वो मर्तो सर्वो मनुष्यो नेतुः फलप्रापकस्य देवस्य दानादिगुणयुक्तस्य सवितुः सख्यं सखिभावं

उत्तरार्धा मित्रदेवत्य:। हे उखे त्वं मुत्थायैतस्मादवटाद्बहिरागत्य बृहती महती भव तत उत्तिष्ठ स्वकर्मणि प्रवर्तस्व यतस्त्वं ध्रुवा स्थिरासि स्वभावतः। उकारः पादपूरणः॥ का० पात्रे करोति मित्रैतान्त इति[1]। हस्तगृहीता मुखामुत्तरतः पूर्वस्थापिते कस्मिंश्चित्पात्रे स्थापयतीति सूत्रार्थः॥ ततो विश्वज्योतिषां तूष्णी मुद्वपनम्। हे मित्र सर्वप्राणिहितकारिन् देव एतां मुखां ते तव परिददामि परित्राणाय प्रयच्छामि किमर्थ मभित्त्यै भेदनं भित्तिः न भित्तिरभित्तिस्तस्यै अभेदनाय। एषा चोखा त्वया गृहीता सती मा भिद्यतां विदीर्णा मास्तु॥ ६४॥

का० अजापयसावसिञ्चति वसवस्त्वेति प्रतिमन्त्रमिति[2]। चतुर्मन्त्रैश्चतुर्वार मजादुग्ध मुखाया मवनयतीति सूत्रार्थः॥ उखा-

वसवस्त्वाछृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाछृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वाछृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वेत्वा देवा वैश्वानरा आछृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत्॥ ६५॥

देवत्यानि चत्वारि आद्या ऋग्गायत्री। हे उखे वसवः गायत्रेण छन्दसाङ्गिरस इव त्वा त्वां माच्छृन्दन्तु समन्तात्सिञ्चन्तु। उच्छृदिर् दीप्तिदेवनयोः रुधादिः अत्र सेचनार्थः॥ रुद्राः। प्राजापत्यानुष्टुप्। रुद्रास्त्वा छन्दसा त्रैष्टुभेन आच्छृन्दन्तु॥ आदित्याः। ऋग्गायत्री। आदित्याः जगतीच्छन्दसा त्वां छृन्दन्तु॥ विश्वे। सामजगती। वैश्वानरा सर्वहिता विश्वे देवा अनुष्टुप्छन्दसा त्वां छृन्दन्तु। शेषं स्पष्टम्॥ ६५॥

का० प्राक्कृतान्यौद्गभणानि हुत्वा समाप्तिकान्याकूतिमिति प्रतिमन्त्रम्[3]। एवं मुखासम्भरणं समाप्यान्या अपीष्टकाः कृत्वा

१—१६,४,२२। २—१६,४,२३। ३—१६,४,३०।

चर्षणिधृत् तस्य संहितायां दीर्घः मनुष्याणां धारयितुः । देवस्य दीप्यमानस्य । कीदृश मवः सानसि सनातनं सानसीति पुराणनाम[1] फलदानशीलं वा षणु दानइत्यस्य प्रयोगः । कीदृशं द्युम्नं चित्रश्रवस्तमं चित्रं विचित्र मनेकैः श्रूयते तच्चित्रश्रवः श्रु श्रवणेऽस्मात्कर्मण्यसुन् अतिशयेन चित्रश्रव इति चित्रश्रवस्तम मत्यन्तं श्रवणीयं यशः प्रार्थयामीति भावः ॥ ६२ ॥

का० उद्वपति. अपणं देवस्त्वेति[2] । भस्मीभूतं अपण मुखायाः पराकरोतीति सूत्रार्थः ॥ सवितृदेवत्या बृहती । हे उखे सविता देवः शक्रां स्वसामर्थ्येन उत अपि बुद्ध्या च त्वा त्वा मुद्वपतु अपणाच्छादनात्पृथक्करोतु उतशब्दाद्बुद्धिरध्याहार्या । कीदृशः सविता सुपाणिः शोभनौ पाणी हस्तौ यस्य स सुपाणिः । स्वङ्गुरिः शोभना अङ्गुलयः करस्था यस्य स स्वङ्गुलिः लकारस्य

देवस्त्वासवितोद्वपतुसुपाणिःस्वङ्गुरिःसुबाहुरुतशक्त्या । अव्यथमानापृथिव्यामाशादिशआपृण ॥ ६३ ॥

उत्थायबृहतीभवोदुतिष्ठध्रुवात्वम् । मित्रैतान्तउखाम्परिददाम्यभित्याएषामाभेदि ॥ ६४ ॥

रेफश्छान्दसः । सुबाहुः शोभनौ बाहू भुजौ यस्य स सुबाहुः मणिबन्धादुपरिभागो बाहुः अधोभागः पाणिः ॥ का० उखा मुत्तानां करोत्यव्यथमानेति[3] । अपण मपाकृत्याषाढां बहिर्निष्काश्योखा मुत्ताना मूर्ध्वमुखीं करोतीति सूत्रार्थः ॥ हे उखे त्वं उद्गता सती अव्यथमाना अचलन्ती व्यथा मनाप्नुवन्ती पृथिव्यां स्थिता सती त्व माशाः प्राच्यादिदिशः दिशः आग्नेय्यादिविदिशश्च आपृण आपूरय आहुतिरसेनेति शेषः ॥ ६३ ॥

का० उद्यच्छत्युत्थायेति परिगृह्य[4] । हस्ताभ्या मुखा मादाय पाकादूर्ध्वं निष्काशयतीति सूत्रार्थः ॥ बृहती पूर्वोऽर्धर्चे उखादेवत्यः

१——निघ० ३,२७,४ । २——१६,४,१८-१९ । ३——१६,४,१९-२० । ४——१६,४,२१-२२ ।

त्रिष्टुभौ। विश्वदेव्यवती: विश्वै: देवै: सहिता: देवानां पत्नी: देवी: देवपत्न्यो देव्यो दीप्यमाना ओषधय: पृथिव्या: सधस्थे उपरि अङ्गिरस्वत् इव हे उखे त्वा त्वां दधतु स्थापयन्तु देवपत्नीशब्देनौषधय: श्रुत्योक्ता: तथाच श्रुति: ओषधयो वै देवानां पत्न्य इति[1] ॥ का० अपणेनावच्छाद्य दक्षिणाग्न्यग्निना दीपयति धिषणास्त्वेति[2]। उखास्थापनानन्तरं विश्वज्योतिषस्तूष्णीं श्वभ्रेऽवधाय अपणै: सर्वं माच्छाद्य दक्षिणाग्नेरानीतेन वह्निनोखां दीपयतीति सूत्रार्थ:। विश्वदेवयुक्ता धिषणा: वागभिमानिन्यो देव्य: पृथिव्या: उपरि अङ्गिरस इव हे उखे त्वा मभीन्धतां समन्ताद्दीपयन्तु ॥ का० वरूत्रीष्ट्वेतीक्षमाणो जपति[3]। सामर्थ्यादुखोपरिस्थअपणे छिद्रं कृत्वा तेनोखां पश्यन् त्रीणि यजूंषि जपतीति सूत्रार्थ: ॥ ऋग्बृहती। विश्वदेवयुता वरूत्रयो देव्योऽहोरात्राभिमानिन्यो देवता: पृथिव्या उपरि अङ्गिरस इव हे उखे त्वां श्रपयन्तु पच्यमानतां सम्पादयन्तु अहोरात्राणि वै वरूत्रयोऽहोरात्रैर्हीदं सर्वं

मित्रस्य चर्षणीधृतोवो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमम् ॥ ६२ ॥

वृतमिति[4] श्रुतेर्वरूत्रिशब्देनाहोरात्राणि ॥ ग्नास्त्वा। सामजगती। छन्दांसि ह वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्तीति[5] श्रुतेर्ग्नाशब्देन छन्दांसि। विश्वदेवयुता ग्ना देव्यश्छन्दोऽभिमानिन्यो देवता: पृथिव्या उपरि हे उखे अङ्गिरस इव त्वां पचन्तु ॥ जनयस्त्वा। ऋक्पङ्क्ति:। नक्षत्राणि वै जनय इति[6] श्रुतेर्जनयो नक्षत्राभिमानिन्यो देवता: हे उखे त्वां पचन्तु कीदृश्यो जनय: अच्छिन्नपत्रा: अच्छिन्नं पत्रं पतनं यासां ता: सन्ततयायिन्य:। शिष्टं स्पष्टम् ॥ ६१ ॥

का० आचरति मित्रस्येति[7]। प्राकान्तं अपणं क्षिपतीति सूत्रार्थ: ॥ मित्रदेवत्या गायत्री विश्वामित्रदृष्टा। मित्रस्यादित्यस्य श्रवो वृक्षणं द्युम्नं यशो ऽन्नं वा वयं स्तुम इति शेष: याचेमहीति वा। कीदृशस्य मित्रस्य चर्षणीधृत: चर्षणयो मनुष्यास्तान् धरतीति

१—६,५,४,४। २—१६,२,१२। ३—१६,४,१४। ४—६,५,३,६। ५—६,५,४,७। ६—६,५,४,८। ७—१६,४,१५।

त्वां धू० । अदित्या जागतेन छन्दसा । वैश्वानराः सर्वहिता विश्वे देवाः आनुष्टुभेन छन्दसा । इन्द्रस्त्वां धूपयतु वरुणो विष्णुश्च । शेषं पूर्ववत्सुगमम् ॥ ६० ॥

का० अश्वां खात्वा चतुरस्रं खनत्वदितिष्ट्वेति[1] । अषाढोत्थाविश्वज्योतिषां पाकाय चतुरस्रं गर्तं मभ्र्या खनतीति सूत्रार्थः । अवटदेवत्यम् प्राजापत्या त्रिष्टुप् । हे अवट गर्त अदितिर्देवी पृथिव्याः सधस्थे सहस्थाने उपरिभागे त्वा त्वां खनतु अङ्गिरस

अदितिष्ट्वादेवीविश्वदेव्यावतीपृथिव्याःसधस्थेअङ्गिरस्वत्खनत्ववटदेवानान्त्वापत्नीर्देवीर्विश्वदेव्यावतीःपृथिव्याः

सधस्थेऽअङ्गिरस्वद्दधतूखेधिषणास्त्वादेवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेअङ्गिरस्वदभीन्धतामुखेवरूत्रीष्ट्वा

देवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेअङ्गिरस्वच्छ्रपयन्तूखेग्नास्त्वादेवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेअङ्गिर

स्वत्पचन्तूखेजनयस्त्वाच्छिन्नपत्त्रादेवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वत्पचन्तूखे ॥ ६१ ॥

इव यथाङ्गिरोभिस्त्वं खातस्तद्वत् । कीदृश्यदितिः विश्वदेव्यावती विश्वेषां देवानां समूहो विश्वदेव्यम् तद्विद्यते यस्याः सा विश्वदेव्यवती मन्त्रे सोमाश्वेत्यादिना दीर्घः सर्वैर्देवैः सहिता । विश्वेषु देवेषु साधवो विश्वदेव्याः तेऽस्यां सन्तीति वा ॥ का० देवानां त्वेत्युखां न्युब्जाम् । अधोमुखां मुखा मषाढोत्तरतो गर्ते स्थापयतीति सूत्रार्थः[2] । पञ्च यजूंष्युखादेवत्यानि द्वे प्राजापत्ये

१—१६,४,९ । २—१६,४,११ ।

एव मुखां निष्पाद्य भूमौ स्थापयतीति सूत्रार्थः। अदितिदेवत्या उष्णिगनुष्टुब्वा उष्णिक्पक्षे तृतीयपादश्चतुर्दशार्णस्तेन द्व्यधिका अनुष्टुप्पक्षे तृतीयः षडर्णो व्यूहः। सा पूर्वोक्ता अदितिः उखां कृत्वाय सृ बक् कृत्वा निष्पाद्य पुत्रेभ्यो देवेभ्यः इति वदन्तो प्रायच्छत् इति किम् अपयान् अपन्तु आ पाके णिजन्तः हे पुत्राः इमा मुखां भवन्तः अपयन्तु पचन्तु इतश्च लोपः परस्मैपदेष्विति अन्तोत्यस्येकारलोपे संयोगान्तलोपे च लेटोऽडाटावित्यडागमे अपयानिति रूपम्। कीदृशी मुखां महीं महतीं विशालां कृत्स्नीं सत्कार्यभूताम् अग्नये अग्न्यर्थं सम्म वां योनिं स्थानभूताम् ॥ ५९ ॥

वसवस्त्वाधूपयन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वधूपयन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वाधूपयन्तु

जागतेनच्छन्दसाङ्गिरस्वद्विश्वेत्वादेवावैश्वानराधूपयन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वदिन्द्रस्त्वाधूपयतु

वरुणस्त्वाधूपयतुविष्णुस्त्वाधूपयतु ॥ ६० ॥

का० सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति प्रतिमन्त्रम्[१]। दक्षिणाग्नौ प्रदीप्तैः सप्तभिरश्व-शकृद्भिरुखां प्रतिमन्त्रं धूपयत्यध्वर्युः धूमायमानमेकैकमश्वशकृदादायैकैकेन मन्त्रेणोखायां मध्ये बहिश्च भ्रामयेदिति सूत्रार्थः। सप्त यजूंषि वस्वादिदेवत्यानि त्रीणि ऋग्गायत्र्यः तुर्यं सामजगती पञ्चमसप्तमे यजुर्बाह्मी षष्ठं यजुरनुष्टुप्। हे उखे अष्टौ वसवः गायत्रेण छन्दसा अङ्गिरस इव त्वां धूपयन्तु अश्वशकृज्जन्येन धूपेन संस्कुर्वन्तु। रुद्राः एकादश त्रैष्टुभेन छन्दसा अङ्गिरस इव

[१] १—१६,२,८।

कुर्वन्तु त्वं द्योरूपासीति विशेषः। शेषा व्याख्या प्राची ॥ का० विश्वे त्वेति समीकरोति[1]। पूर्वान्नमानां करोतीति सूत्रार्थः। औखम् ब्राह्मी बृहती। विश्वैर्नरैर्नीयन्ते विश्वान्नरान्नयन्ति वा विश्वेषां नराणां सम्बन्धिनो वा विश्वेभ्यो नरेभ्यो हिता वा वैश्वानराः एवम्भूता विश्वे देवाः हे उखे त्वां कुर्वन्तु आनुष्टुभेन छन्दसा कृत्वा त्वं च दिशो दिग्रूपासि शेषं पूर्वतुल्यम् ॥ ५८ ॥

का० द्वितीयमुत्तरे वर्तिं सर्वतः करोत्यदित्यै रास्नेति[2]। उखोर्ध्वमानं त्रेधा विभज्योपरि तृतीयभागे सर्वत्र मेखलां करोति तत्रापि मेखलान्तमपि प्रतिदिशं चतुरस्तोरग्रे स्तनयुक्ताः कुर्यादिति सूत्रार्थः।

स्पोषङ्गौपत्यꣳसुवीर्यꣳसजातान्यजमानायविश्वेत्वादेवावैश्वानराःकृण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवासि

दिशोसिधारयामयिप्रजाꣳरायस्पोषङ्गौपत्यꣳसुवीर्यꣳसजातान्यजमानाय ॥ ५८ ॥

अदित्यैरास्नास्यदितिष्टेबिलङ्गृभ्णातु। कृत्वायसामहीमुखाम्मृन्मयींयोनिमग्नये

पुत्रेभ्यःप्रायच्छददितिःश्रपयानिति ॥ ५९ ॥

मेखलां करोति तत्रापि मेखलान्तमपि प्रतिदिशं चतुरस्तोरग्रे स्तनयुक्ताः कुर्यादिति सूत्रार्थः। रास्नादेवत्यम् यजुर्गायत्री। हे रास्ने त्वम् अदित्यै अदितिरूपाया उखाया रास्ना काञ्चीगुणस्थानीयासि ॥ का० बिलं गृह्णात्वदितिष्ट इति[3]। उखाया मुखमालभते। उखादेवत्यम् यजुर्बृहती। हे उखे अदितिः देवमाता ते तव बिलं मध्यं गृभ्णातु गृह्णातु ॥ का० कृत्वायेति निदधाति[4]।

१—१६,३,२९। २—१६,३,३०। ३—१६,४,२। ४—१६,४,४।

अनुष्टुप्। हे उखे वसवः देवविशेषाः गायत्रेण छन्दसा कृत्वा अङ्गिरस्वत् अङ्गिरस इव त्वा त्वां कृण्वन्तु कुर्वन्तु यथाङ्गिरोभिर्मुनिभिः कृता तद्वत् यतस्त्वं कृता सती ध्रुवा स्थिरासि पृथिवी चासि अतस्त्वां वच्मि। यजमानायेति चतुर्थी सप्तम्यर्थे मयीति सामानाधिकरण्यात् हे उखे मयि यजमाने प्रजां पुत्रादिकां धारय स्थापय रायः पोषं धनस्य पुष्टिं च धारय गौपत्यं गोपतित्वं धनस्वामित्वं मयि धारय सुवीर्यं शोभनं वीर्यं वीरकर्म मयि स्थापय सजातान् समानोदरोत्पन्नान् भ्रातॄन्मयि धारय॥ का०

वसवस्त्वाकृण्वन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्ध्रुवासिपृथिव्यसिधारयामयिप्रजाꣳरायस्पोषङ्गौपत्यꣳसुवीर्य्यꣳसजा

तान्यजमानायरुद्रास्त्वाकृण्वन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिप्रजाꣳरायस्पोषङ्गौपत्यꣳ

सुवीर्य्यꣳसजातान्यजमानायादित्यास्त्वाकृण्वन्तुजागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिप्रजाꣳराय

अन्ताग्नीव सर्वतः प्रथमं धातु मादधाति रुद्रास्त्वेति[1]। प्रथनानन्तरं प्रथिततलस्य प्रान्तान् सर्वानूर्ध्वं नीत्वा प्रथमां पिण्डिका मन्त्रैः संयोजयतीति सूत्रार्थः। उखादेवत्यम् आर्च्यनुष्टुप्। हे उखे रुद्राः त्रैष्टुभेन छन्दसा त्वां कुर्वन्तु त्वमन्तरिक्षरूपासीति विशेषः। शेषं पूर्ववत्॥ का० संक्षिप्य शक्लं कृत्वोत्तरमादित्यास्त्वेति[2]। ता मुखां शिथिलमृदा लिप्त्वा वारिणा मृदुं कृत्वोत्तरं धातुं द्वितीयपिण्डिकां पूर्वोपरि योजयतीति सूत्रार्थः। उखादेवत्यम् ब्राह्मी अनुष्टुप्। आदित्याः देवा जागतेन छन्दसा त्वां

१—१६,३,२७। २—१६,३,२८।

मादधातु स्थापयतु। कीदृशी सा सुकपर्दा कपर्दोऽत्र स्त्रीणां सुचितः केशबन्धविशेषः शोभनः कपर्दो यस्याः सा सुकपर्दा। सुकुरीरा स्त्रीभिः शृङ्गारार्थं शिरसि धार्यमाणं कनकाभरणं कुरीरः शोभनः कुरीरो यस्याः सा सुकुरीरा सुमुकुटा। स्वौपशा सम्यक् उपशेते शयनं कुरुते यैरवयवविशेषैस्ते सर्वेऽप्युपशाः तेषां समूहः औपशः शोभनः शयनविदग्धो विलासचतुर औपशोऽवयवसमूहो यस्याः सा ॥ ५६ ॥

अदितिः शक्त्या सामर्थ्येन धिया बुद्ध्या च बाहुभ्यां हस्ताभ्यां उखां कृणोतु करोतु सा उखा जाता सती गर्भे मध्यभागे आ समन्तात् अग्निं बिभर्तु धारयतु तत्र दृष्टान्तः यथा माता जननी उपस्थे उत्सङ्गे पुत्रं बिभर्ति तद्वत्॥ का० यजमान उखां

सिनीवालीसुकपर्दासुकुरीरास्वौपशा। सातुभ्यमदितेमह्योखान्दधातुहस्तयोः ॥ ५६ ॥

उखाङ्कृणोतुशक्त्याबाहुभ्यामदितिर्धिया। मातापुत्रंयथोपस्थेसाग्निम्बिभर्तुगर्भआ। मखस्यशिरोऽसि ॥ ५७ ॥

करोति मृद मादाय मखस्य शिर इति[1]। यजमानपत्न्या तत्पिण्डान्मृ द मादाय त्र्यादृशाङ्गुलिनिस्थानलिखिताषाढसञ्ज्ञकेष्टकायां कृतायां यजमानः पिण्डान्मृद मादाय स्वयमेवोखां करोति एकपशुपक्षे प्रादेशायामविस्तारोर्ध्वां चतुरस्रां पञ्चपशुपक्षे त्रिभागोनत्रयोविंशत्यङ्गुलायामविस्तारामूर्ध्वां प्रादेशेनैवेति सूत्रार्थः। मृत्पिण्डदेवत्यं यजुः यजुर्गायत्रीच्छन्दः। हे मृत्पिण्ड त्वं यज्ञस्य शिरोऽसि आहवनीयो यज्ञस्य शिरस्तदुद्धरणादिहापि लक्षणया शिरःशब्दः ॥ ५७ ॥

का० वसवस्त्वेति प्रथयति[2]। यजमान आत्तां मृद मुखातलाय प्रादेशमात्रविपुलां करोतीति सूत्रार्थः। उखादेवत्यम् ब्राह्मी

१——१६,१,२२।    २——१६,२,२६।

देवत्योपरिष्टाद्बृहती त्रयोऽष्टार्णाश्चतुर्थी द्वादशार्णः। मित्रः आदित्यो देवः पृथिवीं द्युलोकं भूमिं चेमां मृत्पिण्डरूपां ज्योतिषाजलो-मभिः सह संसृज्य एकीकृत्य मह्य मध्ययवे प्रयच्छत्विति शेषः। पृथिवीशब्दो द्युलोकान्तरिक्षवाची इह द्युलोकवाची गृह्यते अजस्राग्नेयत्वाज्ज्योतिः शब्देनाजलोमा उच्यन्ते। अहमपि सुजातं शोभनोत्पन्नं जातवेदसं जातप्रज्ञान मजलोमाख्यं मग्निं त्वां संसृजामि पिण्डेन योजयामि किमर्थं प्रजाभ्यः चतुर्थी षष्ठार्थे प्रजाना मयक्ष्माय यक्ष्मणो रोगस्याभावोऽयक्ष्मं तस्मै रोगाभावाय॥५३॥

का० शर्करायोरसाश्मचूर्णैश्च रुद्राः संसृज्येति[1]। सूक्ष्मसिकतालोहकिट्टपाषाणचूर्णैः पिण्डं मिश्रयतीति सूत्रार्थः॥ रुद्रदेवत्यानुष्टुप्। ये रुद्राः पृथिवीं पार्थिवं पिण्डं संसृज्य शर्करायोरसाश्मचूर्णैः संयोज्य बृहज्ज्योतिः प्रौढ मग्निं समीधिरे सम्यक् दीपितवन्तः उखाख्य मग्निं सम्यक् पालितवन्तः॥ तेषां फलमाह। तेषां रुद्राणां शुक्रः शुद्धो देदीप्यमानोऽजस्रः अनुपक्षीण एव देवेषु मध्ये भानुः दीप्तिः रोचते प्रकाशते इत् एवार्थः॥ ५४॥

स॒ꣳसृ॒ष्टां वसु॑भी रु॒द्रैर्धीरैः॑ कर्म॒ण्यां॒ मृद॑म्। हस्ता॑भ्यां मृ॒द्वीं कृ॒त्वा सि॑नीवा॒ली कृ॑णोतु॒ ताम्॥ ५५॥

का० संसृष्टामिति संयौति[2]। ऋत्विग्येण मृत्पिण्डं सम्यक् मिश्रयति। द्वे सिनीवालीदेवत्ये तृतीयादितिदेवत्या तिस्रोऽनुष्टुभः। सिनीवाली चन्द्रकलायुक्तामावास्याभिमानिनी देवता मृदं हस्ताभ्यां मृद्वीं कोमलां कृत्वा पुनस्तां मृदं कर्मण्या मुखाकर्मयोग्यां कृणोतु कर्म सम्पद्यते यया सा कर्मण्या ताम् कीदृशीं मृदं धीरैः बुद्धिमद्भिर्वसुभिः रुद्रैश्च संसृष्टां सेवितां शर्करादिभिः संयोजितां वा धीरस्ति येषां ते धीराः मत्वर्थे रः॥ ५५॥

अदितिरदीनां देवमातेति यास्कः[3]। हे अदिते अदीने देवमातः हे महि महति सा पूर्वमन्त्रोक्ता सिनीवाली तुभ्यं तव हस्तयोः उखा

१——१६,३,१९। २——१६,३,२०। ३——निरु० ४,२२।

दीर्घः वश कान्तौ इत्यस्माच्छतृप्रत्ययान्तादुगितश्चेति ङीप् उशत्यः कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयस्तन्यरसं बालं पाययन्ति तद्वत् ॥ ५१ ॥

अलमिति प्राप्ते लकारस्य रेफश्छान्दसः। हे आपो वो युष्मत्सम्बन्धिनस्तस्य पर्याप्तिं वयं गमाम गच्छेम पर्याप्तिर्नाम रसविषये वैतृष्ण्यं सदा तृप्तिर्वा तस्मै इति चतुर्थी षष्ठ्यर्थे। यस्य क्षयाय जिन्वथ क्षयो निवास इत्याद्युदात्तत्वात् क्षयशब्देन निवासः क्षयायेति चतुर्थी षष्ठ्यर्थे यस्येत्यनेन सामानाधिकरण्यात् क्षयस्य निवासस्य जगता माधारभूतस्य यस्याहुतिपरिणामभूतस्य रसस्यैकदेशेन यूयं ब्रह्मादिस्तम्बपर्यन्तं जगत् जिन्वथ तर्पयथ जिन्वतिः प्रीतिकर्मा पश्चादाहुतिपरिणामक्रमेणेति भावः। किञ्च हे आपः नोऽस्मान् तत्र

मित्रः सꣳसृज्य पृथिवीम्भूमिञ्च ज्योतिषा सह। सुजातञ्जातवेदसमयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः ॥ ५३ ॥

रुद्राः सꣳसृज्य पृथिवीम्बृहज्ज्योतिः समीधिरे। तेषाम्भानुरजस्र इच्छुक्रो देवेषु रोचते ॥ ५४ ॥

भोक्तृत्वेन जनयथ उत्पादयत आशिषि लेट् तद्रसभोक्तॄनस्मान् कुरुतेत्याजानदेवत्व माशास्यते इति भावः अन्येषामपि दृश्यत इति संहितायां दीर्घः ॥ यद्वास्या ऋचोऽयमर्थः यस्य क्षयाय क्षयेन निवासेन यूयं जिन्वथ प्रीता भवथ तस्मै रसाय तद्रसाप्तये वो युष्मा- नरमत्यर्थं वयं गमाम प्राप्नुमः किञ्च हे आपो यूयं नोऽस्मान् जनयथ प्रजोत्पादनसमर्थान् कुरुथ गच्छतेर्लुङि उत्तमबहुवचनेऽगमामेति रूपम् अडभाव आर्षः बहुलं छन्दसीति शपो लुकि लोटि वा रूपम् ॥ ५२ ॥

का० अजलोमभिः संसृजति मित्रः संसृज्येति[1]। आजाद्यानि पूर्वं लोमानि गृहीतानि तैः पिण्डं मिश्रयतीति सूत्रार्थः। मित्र-

१——१६,२,१८।

का० आपो हि ष्ठेति पर्णकषायपक्वमुदकमासिञ्चति पिण्डे। पलाशत्वक्क्वथितं जलं पिण्डे त्र्यृचकतृयेन क्षिपेदिति सूत्रार्थः॥ अब्देवतास्तिस्रो गायत्र्यः सिन्धुद्वीपदृष्टाः। हिशब्दः एवार्थः प्रसिद्धार्थो यस्मादर्थो वा। हे आपो या यूयमेव मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ मयः सुखं भावयन्ति प्रापयन्ति ता मयोभुवः यस्मात्कारणात् मयोभुवः स्थेति वा स्नानपानादिहेतुत्वेन सुखोत्पादकत्वमपां प्रसिद्धम् तास्तादृश्यो यूयं नोऽस्मानूर्जे रसाय भवदीयरसानुभवार्थं दधातन स्थापयत तप्तनप्तनथनाश्चेति लोण्मध्यमबहुवचनस्य तनबादेशे दधातनेति रूपम् यथा वयं सर्वस्य भोग्यस्य रसस्य भोक्तारो भवेम तथास्मान् कुरुतेति भावः। किञ्च महे महते रणाय रमणीयाय चक्षसे दर्शनाय चास्मान्दधातनेत्यनुवर्तते महद्रमणीयं दर्शनं ब्रह्मसाक्षात्कारलक्षणं तदस्माकं कुरुत अस्मान्

योवःशिवतमोरसस्तस्यभाजयतेहनः। उशतीरिवमातरः॥ ५१॥

तस्माअरङ्गमामवोयस्यक्षयायजिन्वथ। आपोजनयथाचनः॥ ५२॥

ब्रह्मसाक्षात्कारयोग्यान् कुरुतेति भावः ऐहिकपारलौकिकसुखं ददतेत्यृचो भावः। मह पूजायां मह्यते पूज्यतइति मट् क्विप् प्रत्ययः तस्मै महे। रण शब्दे रण्यते स्तूयते सर्वैरिति रणम् तस्मै रणाय। चष्टे पश्यति सर्वं येन इति चक्षः चक्षतेरसुन् प्रत्ययः तस्मै चक्षसे यस्मिन् ज्ञाते सर्वं विज्ञातं स्यादिति छान्दोग्यश्रुतेः॥ ५०॥

हे आपो वो युष्माकं यः शिवतमः शान्ततमः सुखैकहेतू रसोऽस्ति इहास्मिन् कर्मणि इह लोके वा स्थितान्नोऽस्मान् तस्य रसस्य भाजयत भागिनः कुरुत तं रसं प्रापयतेति भावः कर्मणि षष्ठी। तत्र दृष्टान्तः उशतीर्मातर इव उशन्ति ता उशत्यः वा छन्दसीति

१—१९,२,१०।

प्रशस्तपुष्पोपेताः। सुपिप्पलाः शोभनं पिप्पलं फलं यासां ताः किञ्च ऋत्वियः ऋतव्यः ऋतुः प्राप्तोऽस्य छन्दसि घस् इति कालप्राप्तौ घस्प्रत्ययः ऋतुकालीनः प्राप्तकालः वो युष्माकं गर्भो भूत्वायमग्निः प्रत्नं पुरातनं सधस्थं सहस्थानं गर्भयोग्यस्थान मासदत् आसीदति॥४८

का० वि पाजसेति प्रमुच्यैन मजलोमान्यादाय प्रागुदीचः पशूनुत्सृजति[१]। वि पाजसेति मन्त्रेण पिण्डं कृष्णाजिनबद्धं विस्रंस्य छागरोमाणि गृहीत्वाश्वादीनैशानीं दिशं प्रत्युत्सृजतीति सूत्रार्थः॥ अग्निदेवत्या विष्टुबुत्कीलदृष्टा वीत्युपसर्गौ बाधस्व शनेन सम्बध्यते हे अग्ने द्विषः शत्रून् रक्षसः राक्षसान् अमीवाः व्याधींश्च त्वं विबाधस्व विशेषेण निवर्त्तय। कीदृशस्त्वं पृथुना विस्तीर्णेन

ओषधयः प्रतिगृभ्णीतपुष्पवतीः सुपिप्पलाः। अयंवोगर्भऋत्वियःप्रत्नᳬसधस्थमासदत् ॥ ४८ ॥

विपाजसापृथुनाशोशुचानोबाधस्वद्विषोरक्षसोअमीवाः। सुशर्म्मणोबृहतःशर्म्मणिस्यामग्नेरहᳬसुहवस्यप्रणीतौ॥४९

आपोहिष्ठामयोभुवस्तानऊर्ज्जेदधातन। महेरणायचक्षसे ॥ ५० ॥

पाजसा बलेन शोशुचानः अत्यन्तं दीप्यमानः पाज इति बलनाम[२] शोचतेर्यङ्लुगन्ताच्छानच् प्रत्ययः। एवं प्रत्यक्ष मुक्त्वा परोक्षमाह अग्नेः प्रणीतौ प्रणयने अभ्यनुज्ञायां परिचर्य्यायां सत्यां मह शर्म्मणि शरणे सुखे वा स्यां भवेयं सुखं प्राप्नुयामित्यर्थः। कीदृशस्याग्नेः सुशर्म्मणः साधुशरणस्य शोभनं शर्म्म सुखं यस्मात्स सुशर्म्मा तस्य। बृहतः प्रौढस्य। सुहवस्य सुखेनाह्वातुं शक्यस्य। अस्तेर्लिङि उत्तमैकवचने स्यामिति रूपम्॥ ४९ ॥

१—१६,२,१५। २—निघ० २,९,२।

अग्निदेवत्यं यजुः प्राजापत्या गायत्री ऋतसत्यशब्दाभ्या मादित्याग्नी विवक्षितौ ऋत मादित्यः सत्य मग्निः तादृगुभयरूप मग्नि मच्छाहरामीति शेषः। ऋतं सत्य मिति पुनर्वचन मादरार्थम् ॥ का० अनड्वापुरुषमीक्षते पूर्ववदग्निं पुरीष्यमितिर[1] । देवपितृकार्यविमुखोऽनड्वापुरुषस्तमध्वर्युरीक्षते अग्निषु ज्वलत्स्वाहवनीयान्ते स्थित इति पूर्ववत्पदेन लभ्यतइति सूत्रार्थः ॥ आग्नेयं यजुः साम्नगायत्री। पशव्य मग्नि मङ्गिरसो मुनय इव भरामः हरामः ॥ का० उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिश्रिते प्राग्द्वारे पिण्डं निदधात्योषधय इति[2] । उखासम्भरणार्थं मुद्धृतस्याहवनीयस्योत्तरे पूर्वमेव कृते परिश्रिते आच्छादितप्रदेशे ओषधय इति मन्त्राभ्यां पिण्डं स्थापयति। कीदृशे परिश्रिते उद्धते कृतोल्लेखने अवोक्षिते सिक्ते प्रागदिशि द्वारं यस्य तादृशे सिकताव्याप्ते एतादृशे इति सूत्रार्थः ॥

ऋतꣳसत्यमृतꣳसत्यमग्निम्पुरीष्यमङ्गिरस्वद्भराम: । ओषधय:प्रतिमोदध्वमग्निमेतꣳशिवमायन्तमभ्यत्रयुष्मा: ।

व्यस्यन्विश्वाअनिराअमीवानिषीदन्नोअपदुर्म्मतिञ्जहि ॥ ४७ ॥

त्रिष्टुबनुष्टुभावोषधिदेवत्ये व्यस्यन्नित्यर्चोऽग्निर्देवतः। हे ओषधयः यूय मेत मग्निं प्रति मोदध्व मभ्युत्थानादिभिः प्रतिहर्षयत । कीदृश मग्निं शिवं शान्तम् । अत्रास्मिन् प्रदेशे स्थिताः युष्माः युष्मानभिमुखीकृत्य आयन्त मागच्छन्तम् । एव मर्द्धर्चेनौषधीरुक्त्वाथाग्निमाह हे अग्ने त्व मत्र निषीदन्निविशमानः सन्नोऽस्माकं दुर्म्मतिं दुर्बुद्धिं नास्ति दत्तं नास्ति हुतमित्येवमादिका मपजहि अपनय । किं कुर्वन् विश्वाः सर्वा अनिरा ईतीः अमीवा व्याधींश्च व्यस्यन्निरस्यन् नास्ति इरा अन्नं याभिस्ता अनिराः इरेत्यन्ननाम[3] अतिवृष्ट्याद्याः ॥ ४७ ॥

हे ओषधयः एत मग्निं प्रतिगृभ्णीत गृह्णीत स्वीकुरुत । यूयं कीदृश्यः पुष्पवतीः वाच्छन्दसीति पूर्वसवर्णदीर्घः पुष्पवत्यः

१——१६,२,१२ । २——१६,२,१४ । ३——निघ० २,७,१२ ।

कां० धारयत्येषा मुपरि पिण्ड मनुपस्पृशन् प्रैतु वाजी वृषाग्नि मित्यश्वखरयोरिति[1]। अश्वादीना मुपरि पिण्डं धारयति तांनस्पृशन् प्रैतु वाजीत्यश्वोपरि वृषाग्निमिति खरोपरीति सूत्रार्थः॥ महापङ्क्तिस्त्र्यवसाना अष्टार्णषट्पादा महापङ्क्तिः आद्यावर्धर्चावश्वदेवत्यौ तृतीयोऽर्धर्चो रासभदेवत्यः तृतीयतुर्यौ पादौ व्यूह्यौ। वाजी अश्वः प्रैतु प्रकर्षेण गच्छतु किं कुर्वन् कनिक्रदत् अत्यर्थं हेषितशब्दं कुर्वन् यङ्लुगन्तम्। रासभश्च प्रैतु यवसवाहनार्थम्। किं कुर्वन् नानदत् सोपहासमुच्यते गर्दभरटितेन सर्वा दिशो नादयन् यङ्लुगन्तम्। कीदृशो रासभः पत्वा पतनशीलः पत्लृ गतावित्यस्मादन्येभ्योऽपि दृश्यन्तइति क्वनिप्। अश्वमन्त्रे रासभोपादानं रासभोपहासार्थम् तथा च श्रुतिः यदश्वस्य यजुषि रासभं निराह तद्रासभे शुचं दधातीति[2]। किञ्च अय मश्वः पुरीष्यं पशव्य मग्निं भरन्धारयन् आयुषः पुरा कर्म्मणः पूर्वं मा पादि मा विनश्यतु कर्म्मसमाप्तिपर्य्यन्तं जीवत्वित्यर्थः आयुःशब्देन श्रुत्या कर्मोक्तम् यज्ञसम्बन्धिनैवाश्वादीनां स्तुतिः क्रियते॥

वृषाग्निं वृषणम्भरन्नपाङ्गर्भꣳ समुद्रियम्। अग्न आयाहि वीतये॥ ४६॥

अथ रासभमन्त्रः वृषा सेक्ता रासभः अग्निं भरन्धारयन् सन् प्रैतु इति शेषः। कीदृश मग्निम् वृषणं सेक्तारं फलाभिवर्षणसमर्थम् आहुतिपरिणामेनेति भावः। अपां गर्भम् जलमध्येऽवस्थानादेवमुच्यते मेघस्थानां जलानां मध्ये विद्युद्रूपं वा। समुद्रियं समुद्रे वडवाग्निरूपेणोत्पन्नं यद्वा समुद्रे ह्यग्निचयने भवः समुद्रियः तम् यजो ह वै समुद्रा अग्निर्यजुषां महाव्रतꣳ साम्नां महदुक्थ मृचामिति श्रुतेः॥ का० अग्न आयाहीत्याहृत्य खराच्छागस्यर्तꣳ सत्यमित्या निधानात्[3]। अग्नइति मन्त्रेण रासभात् पिण्ड माहृत्य ऋतं सत्यमिति मन्त्रेणाजस्योपरि पिण्डं धारयेत् परिहृते निधानपर्य्यन्तमिति सूत्रार्थः॥ एकपदा गायत्री अग्निदेवत्या। हे अग्ने वीतये हविर्भक्षणाय आयाहि आगच्छ॥ ४६॥

१——१६,३,१०। २——६,४,४,७। ३——१६,२,११।

सुत्यत्वात् शिशुः शंसनीयो वा। अक्तूनिति लिङ्गव्यत्ययः अक्तूनि तमांसि रात्र्युपलक्षितानि अन्धकाराणि परि परिहरन् मातृभ्यो अधि ओषधिवनस्पतिभ्यः सकाशात् कनिक्रदत् अत्यन्तं शब्दं कुर्वन् प्रगाः प्रकर्षेण गच्छ इणो गा लुङीति गादेशः अडभावश्छान्दसः छन्दसि लुङ्लङ्लिट इति सर्वकाले लुङ् प्रेत्युपसर्गो गा इत्यनेन सम्बध्यते। दाधर्तिदर्धर्तीत्यादिना कनिक्रददिति यङ्लुगन्तो निपातः ॥४३

रासभदेवत्यानुष्टुबुष्णिग्वा। इयर्ति प्रति पदार्थं गच्छतीत्यर्वा रासभः हे अर्वन् गमनकुशल स्थिरः चलनरहितः सन् त्वं वीड्वङ्गः दृढकायो भव वीडुशब्दो दृढार्थः वीड्वन्यङ्गानि यस्य सः। आशुः वेगवान् सन् वाजी अन्नहेतुर्भव। पृथुः विस्तीर्णः सन् अग्नेः सुषदः

स्थिरोभववीड्वङ्गआशुर्भववाज्यर्वन्। पृथुर्भवसुषदस्त्वमग्नेःपुरीषवाहणः ॥ ४४ ॥

शिवोभवप्रजाभ्योमानुषीभ्यस्त्वमङ्गिरः। माद्यावापृथिवीअभिशोचीर्मान्तरिक्षम्मावनस्पतीन् ॥ ४५ ॥

प्रैतुवाजीकनिक्रदन्नानदद्रासभःपत्वा। भरन्नग्निम्पुरीष्यम्मापाद्यायुषःपुरा।

सुखासनः स्थास्येयो भव सुखेन सद्यते स्थीयते यस्मिन् स सुषदः। कीदृशस्त्वं पुरीषवाहणः पुरीषशब्देन पांशुरूपा मृदुच्यते तां वहतीति पुरीषं पशव्यं यवसं वहतीति वा पुरीषवाहणः कव्यपुरीषपुरीष्येषु ञ्युडिति ञ्युट्प्रत्ययः ॥ ४४ ॥

अजदेवत्या पथ्या बृहती। अङ्गिरोभिर्ऋषिभिः पूर्वं सम्पादितत्वात् अङ्गसौष्ठवाद्वा अङ्गिरा अग्निः तत्सम्बोधनं हे अङ्गिरः अग्निरूप अज मानुषीभ्यः मनोः सम्बन्धिभ्यः प्रजाभ्योऽर्थे त्वं शिवः शान्तो भव अङ्गिरा वाअग्निराग्नेयोऽज इति[1] श्रुतेः। किञ्च द्यावापृथिवी मा अभिशोचीः मा सन्तापय तथान्तरिक्षं माभिशोचीः तथा वनस्पतीन्माभिशोचीः ॥ ४५ ॥

[1] ——६,४,४,५,।

[1]का० ऊर्ध्वबाहुः प्राञ्चं प्रगृह्णात्यूर्ध्व ऊ षु ण इति[1]। प्रसारितबाहुः प्राञ्चं पिण्डं गृह्णाति ॥ अग्निदेवत्योपरिष्टाद्बृहती कण्वदृष्टा चतुर्थः पादो द्वादशार्णोऽन्ये त्रयोऽष्टार्णाः सोपरिष्टाद्बृहती। हे अग्ने नोऽस्माकमूतये रक्षणाय ऊर्ध्व उ सु तिष्ठ ऊर्ध्वं एव सुतरां सर्वस्थितो भव द्व्यचोऽतस्तिङ इति दीर्घस्तिष्ठा इत्यत्र नश्च धातुस्थोरुषुभ्य इति न इत्यस्य णत्वम्। क इव देवो न सविता न इवार्थे सविता देव इव यथा सविता देव ऊर्ध्वः सन्नस्मानवति तद्वत् स त्वमूर्ध्वः सन्वाजस्य सनिता अन्नस्य दाता भवेति शेषः षणु दाने यद्यस्मात्कारणात् अञ्जिभिर्मन्त्राभिव्यञ्जकैर्वाघद्भिः हव्यवाहकैर्ऋत्विग्भिः सह त्वा विह्वयामहे विविधमाह्वयामः तस्मादूर्ध्व एव तिष्ठेति पूर्वेणान्वयः। अञ्जन्ति व्यक्तीकुर्वन्तीत्यञ्जिनस्तैः यद्वा अञ्जिभिः द्रव्याणां व्यञ्जकैः रश्मिभिः सहितं त्वां विह्वयामहे कीदृशैरञ्जिभिः वाघद्भिः हविषां वोढृभिः ॥ ४२ ॥

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता। ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ४२ ॥

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु। चित्रः शिशुः परि तमाᳬंस्यक्तून्प्र मातृभ्यो अधि कनिक्रदद्गाः ॥ ४३ ॥

का० अवहृत्योपरिनाभि धारयन्नश्वप्रभृतीनभिमन्त्रयते स जात स्थिरो भव शिवो भवेति[2]। पिण्डं नीचैरवतार्य नाभ्युपरि हस्ताभ्यां धारयन्नश्वगर्दभाजान् स जात इत्यावृत् क्रमेण प्रतिमन्त्रं मन्त्रयते एकैकं पश्यन्नेकैकं मन्त्रं जपतीति सूत्रार्थः ॥ अश्वदेवत्या त्रिष्टुप् त्रितदृष्टा। अश्व मग्नीकृत्य स्तौति हे अग्ने स त्वं रोदस्योः द्यावापृथिव्योर्गर्भः सन्निदानीं जातोऽसि। कीदृशस्त्वं चारुः शोभनः पूज्यः। ओषधीषु पुरोडाशादिलक्षणासु दातव्यासु विभृतः विहृतः। चित्रः नानावर्णाभिर्ज्वालाभिर्विचित्ररूपः। इदानीं

१——१६,३,८। २——१६,३,९।

का० आस्तीर्णयोरन्तानुद्गृह्णाति सुजात इति[१] । अस्यार्थः । आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयोः प्रान्तानूर्ध्वमादत्त इति ॥ अग्निदेवत्यानुष्टुप् द्वितीयो नवार्णः । सुजातः सुष्ठूत्पन्नोऽयमग्निः ज्योतिषा स्वकीयेन तेज... सह शर्म सुखं यथा भवति तथा स्वः स्वर्गसदृशं वरूथं वरणीयं गृहं कृष्णाजिननिर्मित मासदत् आसीदतु प्राप्नोतु ॥ का० त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासोऽग्न इति[२] । उद्गृहीतान् कृष्णाजिनपुष्करपर्णयोरन्तान् मुञ्जयोक्त्रेण बध्नात्युत्तरार्धेनेति सूत्रार्थः । हे विभावसो विभा दीप्तिरेव वसु धनं यस्य स विभावसुः तत्सम्बोधनं हे विभावसो हे अग्ने विश्वरूप बहुप्रकाररूप विचित्रं वासः वस्त्रं कृष्णाजिनरूपं संव्ययस्व सम्यक् परिधत्स्व व्येञ् संवरणे अस्य रूपम् ॥ ४० ॥

सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः । वासो अग्ने विश्वरूपं संव्ययस्व विभावसो ॥ ४० ॥

उदु तिष्ठ स्वध्वरावा नो देव्या धिया । दृशे च भासा बृहता सुशुक्वनिराग्ने याहि सुशस्तिभिः ॥ ४१ ॥

का० उत्तिष्ठति पिण्डमादायोदु तिष्ठेति[३] । तं पिण्डं गृहीत्वोत्तिष्ठेदिति सूत्रार्थः ॥ अग्निदेवत्या पथ्या बृहती विश्वमनोदृष्टा तृतीयो द्वादशार्णः अन्ये अष्टार्णाः । हे स्वध्वर शोभनोऽध्वरो यज्ञो येन सुष्ठु यागनिर्वाहक हे अग्ने उत्तिष्ठ उ उत्तिष्ठैव उत्थाय च देव्या देवनस्वभावया धिया क्रीडापरया बुद्ध्या नोऽस्मानव पालय द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । किञ्च हे अग्ने सुशस्तिभिः शोभनकीर्तिभिः सह यद्वा साधुशिष्टैरश्वैः कृत्वा आयाहि आगच्छ । किं कर्तुम् बृहता भासा प्रौढेन तेजसा दृशे सर्वान् प्राणिनो द्रष्टुम् दृशे विख्ये चेति पश्यतेस्तुमर्थो निपातः । कीदृशस्त्वं सुशुक्वनिः साधु शुचो रश्मीन्वनति सम्भजति सुशुक्वनिः रश्मिप्रसारक इत्यर्थः । आ अग्ने याहीति पदच्छेदः ॥ ४१ ॥

१——१६,३,५ । २——१६,३,६ । ३——१६,३,७ ।

का० अपः स्वभ्रेऽवनयत्यपो देवीरिति[1]। मृत्पिण्डगर्ते जलं सिञ्चति॥ अब्देवत्या न्यङ्कुसारिणी सिन्धुद्वीपदृष्टा द्वितीयो द्वादशार्णोऽन्ये त्रयोऽष्टार्णा यस्याः सा न्यङ्कुसारिणी। पूर्वऽर्चो ऽग्ने इति सम्बोधन मध्याक्रियते द्यौरध्वर्युर्वा सम्बोध्यते हे अग्ने यद्वा हे द्यौः यद्वा हे अध्वर्यो देवीः देवनशीला अपः उपसृज अस्मिन् खननप्रदेशे आसिञ्च। कीदृशीरपः मधुमतीः रसवतीः आरोग्यदात्रीः। किमर्थं प्रजाभ्यः अयक्ष्माय पञ्चमी षष्ठ्यर्थे यक्ष्मणोऽभावोऽयक्ष्मं तस्मै प्रजाना मारोग्याय। तासां सिक्ताना मपां स्थानात्सुचेत्ररूपाद-स्मात् खननप्रदेशात् ओषधयः आ समन्तादुज्जिहता मुद्गच्छन्तु। कीदृश्य ओषधयः सुपिप्पलाः शोभनं पिप्पलं फलं यासां ताः॥ ३८॥

का० सन्तइति वात मपश्चिपति[2]। पिण्डगर्ते वायुं प्रेरयति॥ त्रिष्टुप् अर्द्धं पृथिवीदेवत्य मर्द्धं वायुदेवत्यम्। हे पृथिवि

**अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः। तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः॥ ३८॥**

**सन्तेवायुर्मातरिश्वादधातूत्तानायाहृदयंयद्विकस्तम्। योदेवानाञ्चरसिप्राणथेनकस्मैदेववषडस्तुतुभ्यम्॥ ३९॥**

उत्तानायाः ऊर्ध्वाभिमुखेनावस्थितायास्ते तव यद्धृदयं हृदयसदृशं खननस्थानं विकस्तं पिण्डावटरूपेण विकसितम् दृढभात्र आर्षः तत्स्थानं वायुः सन्दधातु पूर्वोक्तेन जलप्रक्षेपेण तृणादिपूरणेन च वायुर्यथा पूर्वं तथा सम्यक्करोतु। कीदृशो वायुः मातरिश्वा मातर्यन्तरिक्षे सर्वप्राणिना मवच्छेदकारिणि श्वयति गच्छति मातरिश्वा। एवं पृथिवीं मुक्त्वा वायु माह हे देव द्योतनादिगुणयुक्त वायो यस्त्वं देवाना मग्न्यादीनां प्राणथेन प्राणभावेन चरसि प्राणानां भावः प्राणथम् भाषि छान्दसस्थल्प्रत्ययः। कस्मै प्रजापतिरूपाय तुभ्य मियं पृथिवी वषडस्तु वषट्कृता भवतु नो हैतावत्यन्याहुतिरस्ति यथैषेति[3] श्रुतिः॥ ३९॥

१——१६,३,२। २——१६,३,३। ३——६,४,२,४।

आग्नेयी त्रिष्टुप् गृत्समदद्दृष्टा। नीत्युपसर्गोऽसदद्दित्यनेन सम्बध्यते। अग्निः होतृषदने न्यसीदत् होता यस्मिन् सीदति तद्धोतृषदनम् होमनिष्पादकयोग्यस्थाने उत्तरवेदिरूपे सम्यगुपविष्टवान्। कीदृशोऽग्निः होता देवाना माह्वाता। विद्वान्: स्वाधिकारं जानन्। त्विषः त्विष दीप्तौ पचाद्यच् त्विषतीति त्विषः दीप्तिमान्। दीदिवान् दीव्यतीति दीदिवान् दिवु क्रीडादौ अस्मात्क्वसुः तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः लोपोव्योर्वलीति वलोपः होतृधिष्ण्यादौ गमनवान्। सुदक्षः साधु कुशलः क्षिप्रकारी। अदब्धव्रतप्रमतिः दभु वधे अदब्ध मनुपहतं व्रतं कर्म यस्य सोऽदब्धव्रतः प्रकृष्टा मतिर्बुद्धिर्यस्य स प्रमतिः अदब्धव्रतश्चासौ प्रमतिश्चेति सः। तथा वसिष्ठः वसति स्वस्थानेइति वस्ता अत्यन्तं वस्ता वसिष्ठः वस्तृतमः तुरिष्ठेमेयःस्विति इष्ठनि परे तृचो लोपः।

संॅ सीदस्व महाँ२ असि शोचस्व देववीतमः। विधूममग्ने अरुषम्मियेध्य सृज प्रशस्त दर्शतम्॥ ३७॥

सहस्रम्भरः सहस्रं सर्वजनं बिभर्त्ति पुष्णाति सहस्रम्भरः। शुचिजिह्वः शुचिः शुद्धा होमयोग्या जिह्वा ज्वाला यस्य सः नाना देवत्यानि हवींष्यभ्यवहरन्नप्युच्छिष्टं न करोतीति भावः॥ ३६॥

आग्नेयी बृहती प्रस्कण्वदृष्टा तृतीयो द्वादशार्णोऽन्ये ऽष्टार्णाः। मेध्यशब्दस्य छान्दसो विप्रकर्षः हे मियेध्य मेध्य यज्ञिय यज्ञार्ह हे प्रशस्त उत्कृष्ट हे अग्ने त्वं संसीदस्व पुष्करपर्णे सम्यगुपविश। यस्त्वं महानसि अनेकक्रतुहेतुत्वात् स त्वं शोचस्व शुच दीप्तौ दीप्यस्व। कीदृशस्त्वं देववीतमः देवान्वेति तर्पयति देववीः वी कान्त्यादौ क्विप् अतिशयेन देववीः देववीतमः। किञ्च दर्शतं दर्शनीय मरुष मरोचनं धूमं विसृज विमुञ्च वीत्युपसर्गः सृजेत्यनेन सम्बध्यते इतो वाश्रय मूर्ध्वंॅ रेतः सिञ्चति धूमॅ सामुत्र वृष्टिर्भवतीति श्रुतिः॥ ३७॥

:पथि वर्तमानः पाथ्यः सन्मार्गवर्ती यद्वा पाथसि अन्तरिक्षे हृदयाकाशे भवः पाथ्यः पाथोनदीभ्यां ड्यण्निति पाथःशब्दात् ड्यण् प्रत्ययः टिलोपः। वृषा सेक्ता मनः हे अग्ने त्वा त्वां समीधे सन्दीपयति मनसा हि ब्रह्मपत्न्या उपलभ्यते अतः पाथ्यः। मनसैवानुद्रष्टव्यमिति श्रुतेः मनसैवाभिलष्य स्त्रियां रेतः सिञ्चतीति वृषा हि मनः। मनो वै पाथ्यो वृषेति[1] श्रुतेः। कोदृशं त्वां दस्युहन्तमम् दस्यून् हन्तीति दस्युहा अतिशयेन दस्युहा दस्युहन्तमस्तम् नलोपःप्रातिपदिकान्तस्येति नलोपे दस्युहतम इति प्राप्ते नाद्घस्येति तमपो नुडागमः अतिशयेन शत्रूणां हन्तारम् रणे रणे धनञ्जयं तेषु तेषु सङ्ग्रामेषु धनस्य जेतारम् ॥ ३४ ॥

आग्नेयी त्रिष्टुप् देवश्रवोदेववाताभ्यां दृष्टा। हे होतः देवाना माह्वातः हे अग्ने स्वे उ लोके उ एवार्थे स्वकीये एव स्थाने

**सीद होतः स्वऽउ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ। देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः॥३५**

**नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः। अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः॥३६**

कृष्णाजिनाख्ये त्वं सीद उपविश कीदृशस्त्वं चिकित्वान् चेतनवान् स्वाधिकारं जानन् किञ्च सुकृतस्य साधुकृतस्य कर्मणो यज्ञस्य योनौ स्थाने कृष्णाजिने यज्ञं सादय स्थापय। अन्येषा मपि दृश्यत इति संहितायां क्रियापदस्य दीर्घः। यज्ञे क्रियमाणेऽवघातपेषण-सोमनिधानादीनि कृष्णाजिनएव भवन्तीति कृष्णाजिनं सुकृतस्य योनिः कृष्णाजिनं वै सुकृतस्य योनिरिति[2] श्रुतेः। हे अग्ने यतो देवावीः देवानवति प्रीणातीति देवावीः त्वं हविषा हव्येन कृत्वा देवान्यजासि यजसि लेटोऽडाटावित्याडागमः पूजयसि-अतो यजमाने वृहन्महद्वय आयुरन्नं वा धाः धेहि दधातेर्लुङि मध्यमैकवचने अधा इति प्राप्ते बहुलं छन्दस्यमाङ्योगेऽपीत्य-डभावः ॥ ३५ ॥

१——६,५,२,५।

२——६,४,२,६।

पश्व्योऽसि विश्वभरा असि विश्वं सर्वं जगद्बिभर्ति धारयति पुष्णाति वा विश्वभरा: असुन् प्रत्ययः। हे अग्ने प्रथमः इतरेभ्यः पूर्वभावी अथर्वाख्य ऋषिः प्राणो वा त्वा त्वां निरमन्थत् निःशेषेण मथितवान्॥ का० पाणिभ्यां परिगृह्णात्यैनं दक्षिणोत्तराभ्यां दक्षिणः साभ्रिस्त्वामग्नइति पश्चिमः सर्वं सकृत्कृत्वा पुष्करपर्णे निदधातीति[1]। दक्षिणेनाभ्रिं हस्तोभाभ्यां कराभ्यां सर्वं पिण्डं त्वामग्नइति षड्चेन सकृद्गृहीत्वा पुष्करपर्णे स्थापयतीति सूत्रार्थः। अग्निदेवत्यास्तिस्रो गायत्री भरद्वाजदृष्टाः। हे अग्ने अथर्वा प्राणः पुष्करादधि उदकात्मकाकाशात्त्वां निरमन्थत निःशेषेण मथितवान् आपो वै पुष्करं प्राणोऽथर्वेति[2] श्रुतेः। वाघत इति ऋत्विङ्नामसु[3] पठितं विश्वस्य सर्वस्य जगतः सम्बन्धिनो वाघतः ऋत्विजस्त्वां मूर्ध्नोऽर्थादरणेः शिरसो निरमन्थतेति व्यत्ययः यद्वा विश्वस्येति

तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः। वृत्रहणं पुरन्दरम्॥ ३३॥

तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्। धनञ्जयꣳ रणेरणे॥ ३४॥

षष्ठ्येकवचनं प्रथमाबहुवचनार्थे विश्वे सर्वे वाघत इत्यर्थः। यद्वा ऋचोऽयमर्थः हे अग्ने अथर्वाख्य ऋषिः पुष्करादधि पद्मपत्रस्योपरि त्वां निरमन्थत कीदृशात् पुष्करात् मूर्ध्नः उत्तमाङ्गवत्प्रशस्तात् विश्वस्य वाघतः सर्वजगतो वाहकात् पुष्करपर्णमग्निमन्थनयज्ञनिष्पादनद्वारेण सर्वं जगन्निर्वहति॥ ३२॥

हे अग्ने अथर्वणः ऋषेः पुत्रः दध्यङ्नामक ऋषिः तमु त्वा उ एवार्थे तमेव त्वाम् ईधे प्रज्वालितवान् कीदृशं त्वां वृत्रहणं वृत्रस्य पाप्मनो हन्तारं ब्रह्मभ्रूणवृत्रेषु हन इति क्विप्. पुरन्दरं रुद्ररूपेणासुरसम्बन्धिनां त्रयाणां पुराणां विदारयितारम्। वाचंयमपुरन्दरौ चेति[4] खशि निपातः॥ ३३॥

1——१६,२,२८;३,९। 2——६,४,२,२। 3——निघ० ३,१८,२।

का० आलभतउभे शर्मं च स्थ इति[1]। ऋग्द्वयेन कृष्णाजिनपुष्करपर्णे सहैव स्पृशेदिति सूत्रार्थः। कृष्णाजिनपुष्करपर्णदेवत्ये द्वे अनुष्टुभौ। हे कृष्णाजिनपुष्करपर्णे उभे युवां शं च स्थः अग्नेः सुखकारिणी अपि भवथः वर्म च स्थः कवचवद्रक्षके अपि भवथः चौ समुच्चये। कीदृशे युवां अच्छिद्रे छिद्ररहिते सकले बहुले विस्तीर्णे व्यचस्वती व्यचनं व्यचः असुन् प्रत्ययः तद्वती अवकाशवती। तथाविधे युवां पुरीष्यं पशव्यं मग्निं संवसाथां सम्यगाच्छादयतम् वस आच्छादने अदादिः आच्छाद्य चाग्निं भृतं विभृतं धारयतं बिभर्तेः बहुलं छन्दसीति शपो लुक् ॥ ३० ॥

शर्म्म च स्थो वर्म्म च स्थोऽछिद्रे बहुले उभे। व्यचस्वती संवसाथां भृतमग्निं पुरीष्यम् ॥ ३० ॥

संवसाथाꣳ स्वर्विदा समीची उरसा त्मना। अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ॥ ३१ ॥

पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने। त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः ॥ ३२ ॥

हे कृष्णाजिनपुष्करपर्णे ज्योतिष्मन्तं तेजस्विनमजस्रमित् निरन्तरमेवाग्निमन्तरुदरे भरिष्यन्ती धारयिष्यन्ती युवां उरसा त्मना उरोरूपेण भवदीयशरीरेणाग्निं संवसाथां सम्यगाच्छादयतम् कीदृशे युवाम् स्वर्विदा विभक्तेराकारः स्वर्वित्तं इति स्वर्विदौ यज्ञसूयदेवाहर्वाचो स्वःशब्दः स्वर्गलाभसाधने इत्यर्थः तथा समीची सम्यगञ्चने सङ्गते एकचित्ते इत्यर्थः ॥ ३१ ॥

का० पिण्डं पुरीष्योऽसीति[2]। प्रतिष्ठागायत्री अष्टौ सप्त षट् चेति प्रतिष्ठेति पिङ्गलोक्तिः। अग्निदेवत्या। हे अग्ने त्वं पुरीष्यः

[1] —— १६,२,२६।
[2] —— १६,२,२७।

का० अभ्रा पिण्डं खनति देवस्य त्वेति[1]। अभ्रा कृत्वा पिण्डं परितः खनति कण्डिकया। देवस्य त्वा व्याख्यातम्। पृथिव्याः आग्नेयं यजुः अत्यष्टिच्छन्दः। अहं पृथिव्याः सधस्थादुपरिप्रदेशात्पुरीष्यं पशव्यमग्निमङ्गिरस इव खनामि कीदृशमग्निं ज्योतिष्मन्तं ज्वालायुक्तम्। हे अग्ने ईदृशं त्वां पृथिव्याः सहस्थानात् अङ्गिरस इव वयं खनामः। कीदृशं सुप्रतीकं सुमुखम्। अजस्रेणानुपचीर्णेन निरन्तरं वर्तमानेन भानुना रश्मिना दीद्यतं दीप्यमानं छान्दसो धातुः। प्रजाभ्यः प्रजोपकारार्थं शिवं शान्तमत एवाहिंसन्तं हिंसामकुर्वन्तम् पुनरुक्तिरादरार्था॥ २८॥

का० कृष्णाजिनमास्तीर्योत्तरतस्तस्मिन् पुष्करपर्णमपां पृष्ठमिति[2]। अस्यार्थः। मृत्पिण्डोत्तरभागे प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तत्रापां पृष्ठमिति पादत्रयात्मकमन्त्रेण कमलिनीपत्रमास्तृणाति। पुष्करपर्णदेवत्या स्वराट्पङ्क्तिः आद्यौ दशकावन्त्यावे-

**अपाम्पृष्ठमसियोनिरग्नेः समुद्रमभितः पिन्वमानम्। वर्द्धमानोमहाँ२ऽआचपुष्करेदिवोमात्रयावरिम्णाप्रथस्व॥२९॥**

कादशकाविति द्व्यक्षराधिका पङ्क्तिः स्वराट्पङ्क्तिः द्वाभ्यां विराडित्युक्तेः। अथ मन्त्रार्थः। हे पुष्करपर्ण त्वमपां जलानां पृष्ठमसि उपर्यवस्थानात् अग्नेः अग्न्यर्थस्य पिण्डस्य योनिः कारणमसि समुद्रमभितः उदकस्य परितः पिन्वमानं प्रीतिकरं यद्वा पिन्वमानमिति समुद्रविशेषणम् पिन्वमानं सिञ्चन्तं समुद्रमुदकमभितः वर्धमानं सत् महत् प्रभूतं भवेति शेषः वर्धमानो महानिति लिङ्गव्यत्ययश्छान्दसः पुष्करे जले आ सीद च यद्वा पुष्करे आ समन्तात् महत्प्रभूतं सत् वर्धमानं वृद्धियुक्तं त्वमसि॥ का० विमार्ष्टीनद्दिव इति[3]। एनत्पुष्करपर्णं विपुलं करोति। हे पुष्करपर्ण दिवो मात्रया द्युलोकस्य परिमाणेन वरिम्णा उरुत्वेन त्वं प्रथस्व विस्तृतं भव उरोर्भावो वरिमा तेन प्रथस्वेत्यादिना उरोर्वरादेश इमनि॥ २९॥

१——१६,२,२३। २——१६,२,२४। ३——१६,२,२५।

आग्नेयो त्रिष्टुब्वत्समदृष्टा प्रथमान्त्यावेकादशार्णौ द्वितीयतृतीयौ दशार्णौ पादौ यदा तदा पङ्क्तिरेव तृतीयचतुर्थौ दशार्णौ यदा तदा विराट्स्थाना त्रिष्टुप् द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थानेत्युक्तेः। अथ मन्त्रार्थः। हे नृपते नृणां पालक हे अग्ने त्वं द्युभिरहोभिर्निमित्तभूतैर्मथ्यमानो जायसे प्रतिदिनं मथ्यस इत्यर्थः यद्वा द्युभिः स्वर्गैः निमित्तभूतैस्तत्र तत्र यागशालासु जायसे त्वमाशुशुक्षणिः आर्द्रां भूमिं शीघ्रमेव शोषयित्वा यद्वा आशु क्षिप्रं शुचा दीप्त्या क्षणोति हन्ति तमः सनोति सम्भजते वा आशु-

त्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि। त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणान्नृपतेजायसेशुचिः॥२७॥

देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम्। पृथिव्याःसधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामि।

ज्योतिष्मन्तन्त्वाग्नेसुप्रतीकमजस्रेणभानुनादीद्यतम्। शिवम्प्रजाभ्योहिंसन्तम्पृथिव्याः

सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामः॥ २८॥

शुक्षणिः। त्वमद्भ्यो वर्षधाराभ्यो विद्युदात्मना जायसे त्वमश्मनः परि पाषाणस्योपरि पाषाणान्तरसङ्घट्टनेन जायसे त्वं वनस्पतिभ्योऽरणिकाष्ठेभ्यो जायसे त्वमोषधिभ्यो वंशादिभ्यो जायसे वंशद्वयसङ्घर्षणेन त्वं नृणां मनुष्याणामग्निहोत्रिणां गृहे जायसे पुत्रो ह्येष सन्त्स पुनः पिता भवतीति श्रुतेः। किम्भूतस्त्वं शुचिः शुद्धिहेतुः पुनःपाकान्महीमयमिति स्मृतेः॥ २७॥

लिखति परया परया वहिर्वहिःप्रदेशे यथा तथा। परि वाजपतिरिति प्रथमं लिखति परि त्वेति तद्वद्वितीयं त्वमग्नइति तद्वत्तृतीयमित्यर्थः॥ आग्नेयी गायत्री सोमकदृष्टा। अयमग्निर्हव्यानि नानादेवत्यानि हवींषि पर्यक्रमीत्परिक्रान्तवान् परिक्रमणं भक्षणार्थं स्वीकरण मित्यर्थः। कीदृशोऽग्निः वाजपतिः वाजस्यान्नस्य पतिः पालयिता कविः क्रान्तदर्शनः। किं कुर्वन् हव्यानि पर्यक्रमीत् दाशुषे हवींषि दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधत् प्रयच्छन् दाशृ दाने अस्य धातोर्दाश्वान्साह्वानित्यादिना क्वसुप्रत्ययान्तो निपातः दाशति स्म दत्ते स्म इति दाश्वान् तस्मै दाशुषे। दधाति दत्तइति दधत् धाधातुर्दानेऽपि डुधाञ् विधारणे पुष्टौ दानइति कल्पद्रुमोक्तेः॥ २५॥

आग्नेय्यनुष्टुप्यायुदृष्टा। परीत्युपसर्गस्य धीमहीत्यनेन सम्बन्धः। सहस्य सहसि बले भवः सहस्यः बलेन मथ्यमानस्य जायमान

परि॑त्वाग्ने॒ पुरं॑व॒यंविप्र॑ꣳसहस्य धीमहि। धृ॒षद्व॑र्ण॒न्दि॒वेदि॑वे ह॒न्तारं॑भङ्गु॒राव॑ताम्॥ २६॥

त्वात् तत्सम्बोधनं हे सहस्य हे अग्ने वयं त्वा त्वां परिधीमहि सर्वतो ध्यायामः ध्यायतेः सम्प्रसारणं छान्दस मित्युक्तम्। कीदृशं त्वां पुरं पुरीरूपेण-स्थितम् आग्नेय्यादिपुराणां रक्षकत्वात् यद्वा पिपर्ति पालयतीति पूस्तम् पॄ पालनपूरणयोः क्विप् उदोष्ठ्यपूर्वस्येति उदादेशे पूरिति रूपम्। तथा विप्रं मेधाविनं ब्राह्मणजातिं वा। धृषद्वर्णं ञिधृषा प्रागल्भ्ये अतो व्यत्ययेन तौदादिकाच्छतृ-प्रत्ययः धृष्णोति धृषन् प्रगल्भो वर्णो यस्य तम् असह्यरूप मित्यर्थः। दिवे दिवे प्रतिदिनं भङ्गुरावतां हन्तारं भङ्गुरं भञ्जनीयं पापं तद्येषा मस्ति ते भङ्गुरवन्तो विघातका राक्षसादयः यद्वा भङ्गुरं मनवस्थितं मनो येषां ते भङ्गुरवन्तोऽनवस्थितचित्तवृत्तयस्तेषां विनाशयितारम् भङ्गुरावतामिति संहितायां दीर्घः॥ २६॥

बहुकालव्याप्तिः देशकालानवच्छिन्नमित्यर्थः। तथा व्यचिष्ठं व्यचनं व्यचोऽवकाशः सोऽस्यास्तीति व्यचवान् अतिशयेन व्यचवान् व्यचिष्ठः अतिशायने तमबिष्ठनाविति इष्ठन् विन्मतोर्लुगिति इष्ठनि परे मतुपो लुक्। अन्नैः रभसं रभ राभस्ये घृताद्यन्नैः सोत्साहम् अनेकान्नैर्हुतैरप्यस्य शक्तिचयो नास्तीति भावः। तथा दृशानं दर्शनीयं दृश्यमानं वा अन्ये देवा अदृश्या अयं तु दृश्यत इति भावः दृशः शानन् प्रत्ययः ॥२३॥

अहमग्निं माजिघर्मि समन्तात्सिञ्चामि दीपयामि च किंभूतं विश्वतः प्रत्यञ्चं सर्वतः प्रत्यगात्मतया प्रतीयमानम्। सोऽग्निररक्षसा क्रौर्यरहितेन अक्रुध्यमानेन प्रसन्नेन मनसा चित्तेन तत् हुतं जुषेत जुषतां सेवतां प्रार्थनायां लिङ्। कीदृशोऽग्निः मर्यश्रीः मर्यै-

आविश्वतःप्रत्यञ्चञ्जिघर्म्यरक्षसामनसातज्जुषेत। मर्यश्रीस्पृहयद्वर्णोअग्निर्नाभिमृशेतन्वाजर्भुराणः ॥ २४ ॥

परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानिदाशुषे ॥ २५ ॥

मनुष्यैः श्रीयत आश्रीयते सेव्यते इति मर्यश्रीः मनुष्यैराश्रयणीयः। स्पृहयद्वर्णः स्पृहयन् स्पृहणीयो वर्णो रूपं यस्य यजमानैः स्पृहणीयरूप इत्यर्थः। अभिमृश्यतइत्यभिमृट् न अभिमृश्यते नाभिमृट् तस्मै नाभिमृशे चतुर्थी तृतीयार्थे तनोर्विशेषणं नाभिमृशा अभिमर्शनं कर्तुमयोग्यया दाहकत्वात् ईदृश्या तन्वा शरीरेण ज्वालालक्षणेन जर्भुराणः जृम्भतइति जर्भुराणः जृभी गात्रविनामे इतस्ततश्च गच्छन् जृभेरौणादिक उराणप्रत्ययः। ईदृशमग्निं माजिघर्मीति योज्यम् ॥ २४ ॥

का० अभ्र्या पिण्डं त्रिः परिलिखति परि वाजपतिरिति वहिर्वह्निरुत्तरयोत्तरयेति[१]। अस्यार्थः। अभ्र्या वारत्रयं मृत्पिण्डं परि-

१—१६.२.२३।

का० उदक्रमीदित्यभिमन्त्रयते[1]। पिण्डादुत्तारिताश्वं मन्त्रयते ॥ आश्वी त्रिष्टुप्। अर्वा अरणशील: चञ्चलो द्रविणोदा: धनदाता वाजी अश्व: यत्प्रदेशादुदक्रमीत् उत्क्रान्तवान् पृथिव्यां तं सुलोकं शोभनं लोकं प्रदेशं सुकृतं पुण्यरूपं मकः कृतवान् करोतेर्लुङि बहुलं छन्दसीति शपो लुकि गुणे तिलोपे रूपम्। ततः प्रदेशाद्वय मग्नि मग्निहेतुं मृदं खनेम कीदृश मग्निं सुप्रतीकं शोभनं प्रतीकं मुखं यस्य तं कीदृशा वयं स्वः स्वर्ग मधिरुहाणा अधिरोहन्तः अधिरोहणकामा एतत्कर्म कुर्म इति भावः। अधीतुरपरिभावे ऐश्वर्ये वा। किम्भूतं स्वः नाकं नास्त्यकं यत्र तं कं सुख मकं दुःखं तद्रहितं तथा उत्तम मुत्कृष्टम् ॥ २२ ॥

का० उपविश्य मृद मभिजुहोत्या त्वा जिघर्मीति व्यतिषक्ताभ्या मृग्भ्या माहुती स्रुवेणाश्वपदे[2]। अस्यार्थः। आज्यं संस्कृत्य पिण्डसमीपे उपविश्य मृदमभि अश्वपदे मृत्पिण्डोपरिस्थिताश्वपदमुद्रायामा त्वा आ विश्वत इति ऋग्भ्यां व्यतिषक्ताभ्यां स्रुवेणाहुती द्वे

**आत्वाजिघर्म्मिमनसाघृतेनप्रतिक्षियन्तम्भुवनानिविश्वा। पृथुन्तिरश्चावयसाबृहन्तंव्यचिष्ठमन्नैरभसन्दृशानम्॥२३॥**

जुहोति व्यतिषङ्गश्चैवम् आ त्वा जिघर्मीति पूर्वस्याः पूर्वार्धं मर्यश्रीरित्युत्तरस्या उत्तरार्धं पठित्वैकाहुतिः आ विश्वत इत्युत्तरस्याः पूर्वार्धं पृथुं तिरश्चेति पूर्वस्या उत्तरार्द्धं च पठित्वा द्वितीयाहुतिरिति ॥ गृत्समददृष्टे आग्नेय्यौ द्वे त्रिष्टुभौ। हे अग्ने मनसा श्रद्धायुक्तेन चित्तेन घृतेनाज्येन कृत्वा त्वा माजिघर्मि आसिञ्चामि दीपयामि वा घृ क्षरणदीप्त्योः ह्वादिः। कीदृशं त्वां विश्वानि भुवनानि प्रतिक्षियन्तं सर्वाणि भूतानि प्रत्येकं निवसन्तं क्षि निवासगत्योः तुदादिकादस्माच्छतृप्रत्ययः। तिरश्चा पृथुं तिरोऽञ्चतीति तिर्यक् तेन तिर्यगञ्चनेन ज्योतिषा पृथुं विस्तीर्णं वयसा धूमेन बृहन्तं महान्तम्। इतो वाऽअयमूर्ध्वं रेतः सिञ्चति धूमं सामुत्र वृष्टिर्भवतीति श्रुतेः। यद्वा तिरश्चा तिर्यक्प्रमाणेन पृथुं विस्तृतमिति बहुदेशव्याप्तिः। वयसा वयउपलक्षितेन कालेन बृहन्तमिति

१——१६,२,२०।    २——१६,२,२२।

का० द्यौस्त इति पृष्ठस्योपरि पार्ष्णिं धारयन्ननुपस्पृशन्निति[१] । पिण्डोपरि पदं दधत मश्व मस्पृशंस्तिष्ठन्नध्वर्युर्दक्षिणकर मश्वपृष्ठे धारयन्मन्त्रं पठतीति सूत्रार्थः ॥ आर्षी बृहती अश्वदेवत्या । हे अश्व द्यौः द्युलोकस्ते तव पृष्ठं पृथिवी भूलोकस्तव सधस्थं सहस्थानं पादौ अन्तरिक्ष मन्तरिक्षलोकस्तवात्मा शरीरान्तर्वर्ती जीवात्मा समुद्र उदकं तव योनिः उत्पत्तिस्थान मप्सुयोनिर्वा अश्व इति श्रुतेः । एवं स्तूयमानस्त्वं चक्षुषा विख्याय उभाभ्यां पद्भ्यां पदं विलोक्य पृतन्यतः सङ्ग्रामं कर्तुमिच्छतः शत्रून् राक्षसादींस्तेषां पदि गूढं स्थितानभितिष्ठ पादैराक्रम्य विनाशय । पृतना मिच्छन्ति सुप आत्मनः क्यच् कव्यध्वरपृतनस्यर्चि लोप इति क्यचि परे पृतनाशब्दस्यान्तलोपः ततः शतृप्रत्ययः ॥ २० ॥

उत्क्राममहतेसौभगायास्मादास्थानाद्द्रविणोदावाजिन् । वयꣳस्यामसुमतौपृथिव्याअग्निङ्खनन्तउपस्थेअस्याः ।.२१॥

उदक्रमीद्द्रविणोदावाज्यर्वाकःसुलोकꣳसुकृतम्पृथिव्याम् । ततःखनेमसुप्रतीकमग्निꣳस्वोरुहाणाअधिनाकमुत्तमम् ॥२२

का० उत्क्रामेत्युत्क्रमयतीति[२] । मृत्पिण्डादश्व मुत्तारयतीत्यर्थः ॥ विराडश्वदेवत्या दशार्णचतुष्पादा विराट् पङ्क्तिः द्वितीय एकादशार्णस्ते नैकाधिका । हे वाजिन् महते सौभगाय महाभाग्याभिवृद्धये ऽस्मात् आस्थानात् खननप्रदेशाद्यत्र त्वं तिष्ठसि तस्मादुत्क्राम भगशब्द ऐश्वर्यवाची शोभनं भग मैश्वर्यं यस्य स सुभगस्तस्य भावः सौभगं तस्मै । कीदृशस्त्वं द्रविणोदाः द्रविणो धनं ददातीति द्रविणस् शब्दः सान्तः त्वयि उत्क्रान्ते वयं पृथिव्याः भूमेः सुमतौ शोभनमतौ सानुग्रहे चित्ते स्याम भवेम कीदृशा वयम् अस्याः पृथिव्या उपस्थे उत्सङ्गे उपरिभागे अग्नि मग्न्यर्थं मत्पिण्डं खनन्तः खनितु मुद्योगं कुर्वन्तः ॥ २१ ॥

१——१६,२,१९ । २——१६,२,१९ ।

का॰ आगत्येत्यभिमन्त्रयतेऽश्वमिति[1]। मृत्पिण्डान्ते तिष्ठन्नश्वमभिमन्त्रयते॥ अश्वदेवत्यानुष्टुब्मयोभूदृष्टा। वाजी वेगवानयमश्वः अध्वानं मार्गमागत्य प्राप्य सर्वा मृधः सर्वान् सङ्ग्रामान् पाप्मनः अमान्विधूनुते विविधं कम्पयति अपनयतीत्यर्थः ततो विगतश्रमः सन् महति उत्कृष्टे सधस्थे सहस्थाने पृथिव्यां वर्तमानमग्निमग्निहेतुं मृदं चक्षुषा निचिकीषते पश्यति पश्यत्यर्थश्छान्दसोऽयं धातुः॥ १८॥

का॰ आक्रम्येत्येतेन मृत्पिण्डमधिष्ठापयतीति[2]। एतेनाश्वेन गर्तस्थं मृत्पिण्डमधिष्ठापयति क्रमयति मृत्पिण्डोपर्यश्वस्य सव्यं पदं

आगत्यवाज्यध्वानꣳसर्वामृधोविधूनुते। अग्निꣳसधस्थेमहतिचक्षुषानिचिकीषते॥ १८॥

आक्रम्यवाजिन्पृथिवीमग्निमिच्छरुचात्वम्। भूम्याहृत्वायनोब्रूहियतःखनेमतंवयम्॥ १९॥

द्यौस्तेपृष्ठम्पृथिवीसधस्थमात्मान्तरिक्षꣳसमुद्रोयोनिः। विख्यायचक्षुषात्वमभितिष्ठपृतन्यतः॥ २०॥

स्थापयतीत्यर्थः सूत्रस्य॥ अश्वदेवत्यानुष्टुप् हे वाजिन् अश्व पृथिवीं भूमिमाक्रम्याधिष्ठाय पादस्पर्शेन परीक्ष्य रुचा दीप्त्या कृत्वा त्वमग्निमिच्छ अग्नेरन्वेषणं कुरु अग्निहेतुं मृदं निश्चिन्वित्यर्थः। किञ्च भूम्या हृत्वाय हृतु वर्तने क्त्वाप्रत्ययः क्त्वो यक् अत्र स्पर्शनार्थः धातूनामनेकार्थत्वात् भूमेः प्रदेशं स्पृष्ट्वा नोऽस्माकं त्वं ब्रूहि अयं प्रदेशो अग्निहेतु मृद्योग्य इति कथय यतो यस्मात् प्रदेशाद्वयं तमग्निं खनेम खननेन सम्पादयाम यद्वा यतः प्रदेशात्ताहृशी मृत्प्राप्यते तं प्रदेशं वयं खनेम विदारयाम॥ १९॥

१—१६,२,१७। २—१६,२,१८।

मग्नि मङ्गिरस्व दङ्गिरस इवाभर आहर ॥ का० अग्निषु प्रज्वलत्सु पिण्डं गच्छन्त्यग्निं पुरीष्यमिति[१] । त्रिषु अग्निषु दीप्यमानेषु ब्रह्म-यजमानाध्वर्यवश्चतुष्कोणश्वभ्रस्थं मृत्तिकापिण्डं प्रति गच्छन्त्यश्वमर्दभाजा अपीति सूत्रार्थः ॥ साम्नगायत्री छन्दः । पुरीष्यं पशव्य मग्नि मङ्गिरसद्व वय मच्छेमः अच्छ अभिमुख मिमं गच्छामः । अच्छाभेराप्तुमिति शाकपूणिरिति[२] यास्कः ॥ का० अनड्वापुरुष-मीक्षते देवपितृमनुष्यानर्थकमग्निं पुरीष्यमिति । देवपितृमनुष्याणां निष्प्रयोजनोऽनड्वापुरुषस्तं पश्यतीति सूत्रार्थः ॥ आग्नेयं यजुः मानुषानुष्टुप् । पशव्य मग्नि मङ्गिरस इव वयं भरिष्यामः सम्पादयिष्यामः ॥ १६ ॥

का० वल्मीकवपा मादाय छिद्रेण पिण्डं मीक्षतेऽन्वग्निरिति[३] । वल्मीकस्य योऽवयव उन्नतत्वेनाभिदृष्टः सा वल्मीकवपा पिण्डा-

**पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभराग्निम्पुरीष्यमङ्गिरस्वदच्छेमोग्निम्पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥१६॥**

**अन्वग्निरुषसामग्रमख्यदन्वहानिप्रथमोजातवेदाः । अनु सूर्य्यस्यपुरुत्राचरश्मीननुद्यावापृथिवीआततन्थ ॥ १७ ॥**

हवनीयान्तराले स्थापितास्ति तां गृहीत्वा तत्स्थाने स्थित्वा तच्छिद्रेण पिण्डं पश्यतीति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुप्पुरोधोदृष्टा प्रथमस्य व्यूहनम् । अग्निरुषा मुषःकालाना मग्र मुपक्रम मन्वख्यत् अनुक्रमेण प्रकाशितवान् । जातं जातं वेत्ति वेदयति वा जात-वेदाः अयमग्निः प्रथमः मुख्यः सन् अहानि दिनानि अन्वख्यत् किञ्च सूर्यस्य रश्मीन् किरणान् पुरुत्रा बहुधा अन्वख्यत् । किञ्च द्यावा-पृथिवी उभे अपि अनु क्रमेण आततन्थ आतेनिथ आततान सर्वतो व्याप्तवान् । व्यत्ययो बहुल मिति पुरुषव्यत्ययः बभूथाततन्थेत्यादिना निपातः । सर्वप्रकाशको लोकस्रष्टा योऽग्निस्तं पश्याम इति शेषः ॥ १७ ॥

१——१६,२,१२ । २——निरु० ५,२८, ३——१६,२,१५ ।

कर्मणि तवस्तरं बलवत्तर मुखाहवन्तम्। तव इति बलनाम[1] तवो बलमस्यास्तीति तवस्वो अस्मायेत्यादिना विन् अत्यन्तं तवस्वो तवस्वरस्तम् अतिशये तरप् विन्मतोर्लुगिति तरपि विनो लुक् ॥ १४ ॥

का० अनुपस्पृशन्, तच्छामयत्येनान् प्राचः प्रतिमन्त्रं प्रतूर्वन्, वन्तरिक्षं पृथिव्याः सधस्थादिति[2]। स्पर्शमकुर्वन्नश्वादीन् भयं दर्शयन् प्राचो गमयति ॥ विराड्रूपा त्रिष्टुप् यजुर्मध्या उर्वन्तरिक्षं वीहीत्येतावद्यजुः। त्रय एकादशाक्षराश्चतुर्थो अष्टाक्षरः पादो यस्याः सा विराड्रूपा अत्र द्वितीयो द्वादशार्णस्तेनैकाधिका। ऋचो मध्ये यजुः। अस्याः पूर्वार्धस्याश्वो देवता। हे अश्व त्वमेहि आगच्छ किं कुर्वन् प्रतूर्वन् तूर्वतिर्वधकर्मा शत्रून् हिंसन्। अशस्तीः भ्रातृव्यैः क्रियमाणा अपकीर्त्तीरवक्रामन्पादैरवष्टभ्यन्निवारयन्नित्यर्थः। आगमने को गुण इति चेत् मयोभूः मयः सुखं भावयतीति मयोभूः अस्माकं सुखं भावयन् सन् रुद्रस्य क्रूरदेवस्य गणवतो गाणपत्यं

प्रतूर्वन्नेह्यवक्रामन्नशस्तीरुद्रस्य गाणपत्यम्मयोभूरेहि। उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्पूष्णा सयुजा सह ॥ १५ ॥

गणपतित्वमेहि आ समन्तात् प्राप्नुहि अत्रागमने गणपतित्वं लप्स्यसइति भावः ॥ उर्वन्तरिक्षम् यजुः सहितोत्तरार्धस्य रासभोत्क्रमणे विनियोगः। हे गर्दभ अभयानि कृण्वन् ऋत्विग्यजमानानां व्याघ्रादिभ्यो भयपरिहारं कुर्वन् सयुजा समानयोगिन्या पूष्णा पृथिव्या सह उरु विस्तीर्णमन्तरिक्षं वीहि विशेषेण प्राप्नुहि। इयं वै पृथिवी पूषेति[3] श्रुतेः। सह युङ्क्ते सा सयुक् तया। किञ्च त्वं स्वस्ति-गव्यूतिः स्वस्तीत्यविनाशनाम[4] स्वस्ति विनाशरहितो गव्यूतिर्मार्गो यस्य। भयवर्जितप्रभूतयवसोदकमार्गः सन्नागच्छेत्यर्थः। नैवो ऽध्वानं प्रपद्येतेति न्यायात्पूष्णा सहेतुक्तिः ॥ १५ ॥

अजोत्क्रमणे विनियोगः। यजुः। आसुरी गायत्री आग्नेयी। हे अग्ने पृथिव्याः भूमेः सधस्थात्सहस्थानात् पुरीष्यं पशव्य-

१—निघ०२,९,४। २—१६,२,२। ३—६,३,१,८। ४—निरु० ३,२१।

वर्त्तिलम् नाभिशब्देन प्रकृष्टं शरीरमुपलक्ष्यते। पृथिव्या अधि उपरि तव योनिः स्थानमित एव पादाविवेत्यर्थः भूमौ ते निवासस्थानं प्रत्यक्षं दृश्यते। विराड्रूपेणाश्वः स्तूयते एवं महिमा त्वं शीघ्रमागच्छेत्यर्थः ॥ १२ ॥

गर्दभदेवत्या गायत्री कुश्रिदृष्टा। गर्दभं मन्त्रयते। अध्वर्युयजमानावुच्येते। वृषा सेक्ता गर्दभो वसु धनं ययोस्तौ वृषण्वसू वर्षतीति वृषा कनिन्युं इत्यादिना वर्षतेरौणादिकः कनिन् प्रत्ययः यद्वा यागनिष्पादनद्वारा वृष फलाभिवर्षुकं वसु धनं ययोस्तौ नलोपाभाव आर्षः तयोः सम्बोधनं हे वृषण्वसू अध्वर्युयजमानौ यजमानदम्पती वा युवं युवां रासभं गर्दभं युञ्जाथां बध्नीतम् युजेर्लोटि आत्मनेपदे मध्यमद्विवचनं युञ्जाथामिति। क्व अस्मिन्नग्निकर्मणि यद्वा यामो मृद्वहनरूपो नियमविशेषस्तस्मिन्निमित्तभूते

युञ्जाथाᳬ रासभं युवमस्मिन्यामे वृषण्वसू। अग्निम्भरन्तमस्मयुम् ॥ १३ ॥

योगेयोगे तवस्तरं वाजेवाजे हवामहे। सखाय इन्द्रमूतये ॥ १४ ॥

सति। कीदृशं रासभम् अग्निं भरन्तं वोढुं समर्थमित्यर्थः। तथा अस्मयु मस्मान् कामयमान मस्मद्धितैषिण मित्यर्थः। इदंयुरिदं कामयमान इति[1] यास्कः। अस्मानिच्छतीत्यस्मयुः सुप आत्मनः क्यजिति क्यच् प्रत्ययः अस्मदष्टेरत्वं छान्दसम् क्याच्छन्दसीति उप्रत्ययः ॥ १३ ॥

अजदेवत्या गायत्री शुनःशेपदृष्टा। अजं मन्त्रयते ॥ सखायः परस्परसख्यं प्राप्ता ऋत्विग्यजमाना वयमिन्द्र मिन्द्रियवन्तं वीर्यवन्त मिन्द्रियप्रदं वा अज मूतये अवनाय रक्षणाय हवामहे आह्वयामः ह्वः शपि सम्प्रसारणम्। क्व सति वाजे वाजे तत्तदन्ने मनुष्याणां देवानां च दातव्ये सति तत्तदन्नप्राप्तिनिमित्तं वा किम्भूतमजं योगे योगे तवस्तरं युज्यतेऽनुष्ठीयतइति योगः कर्म तस्मिन् तत्तत्

[1] —— निरु० ६, ३१।

नारी ईप् छान्दसः खननकाले अश्मादिना तव कुण्ठीभावो नास्तीत्यर्थः किञ्च त्वया युक्ता वयं सधस्थे पृथिव्या उत्सङ्गे वर्तमानमग्निं जागतेन छन्दसा खनितुं शकेम शक्ता भवेम शक्नोतिर्व्यत्ययेन शप् अङ्गिरस्वदिति दृष्टान्तः पूर्ववत् ॥ १० ॥

अनुष्टुब्यजुरन्ता आनुष्टुभेनेत्यादि यजुः तस्य यजुषस्त्रिष्टप्छन्दः। तृतीयतुर्यपादयोर्व्यूहेन पूर्तिः। अग्निदेवत्या। सविता प्रेरकः प्रजापतिर्हस्ते हिरण्ययीं स्वर्णरूपा मभ्रिमाधाय स्थापयित्वा बिभ्रत् तामेव धारयन् सन् अग्नेः सम्बन्धि ज्योतिर्निचाय्य निश्चित्य दृष्ट्वा पृथिव्या अधि भूमेः सकाशात् आनुष्टुभेन छन्दसा आभरत् आहृतवान् अङ्गिरस्वदिति पूर्ववत् ॥ ११ ॥

का० अश्वप्रभृतींश्च प्रह्वाचं प्रतूर्तं युञ्जाथां योगे योगइति[१]। ऋक्त्रयेण प्रह्वाच मश्वगर्दभाजानभिमन्त्रयतेऽभ्रिहस्त उपविष्ट एव ॥

हस्तऽआधायसवितबिभ्रदभ्रिꣳहिरण्ययीम्। अग्नेर्ज्योतिर्निचाय्यपृथिव्याऽअध्याभरदानुष्टुभेनछन्दसाङ्गिरस्वत्॥११

प्रतूर्त्तंवाजिन्नाद्रववरिष्ठामनुसंवतम्। दिवितेजन्मपरममन्तरिक्षेतवनाभिःपृथिव्यामधियोनिरित्॥ १२ ॥

अश्वदेवत्या आस्तारपङ्क्तिः नाभानेदिष्ठदृष्टा यस्या अन्त्यौ द्वादशकावाद्यावष्टकौ सास्तारपङ्क्तिः। वन सम्भक्तौ संवन्यते सम्यग्भज्यते मृद्ग्रहणार्थं सेव्यतइति संवत् सम्पूर्वस्य वनतेः क्विप्येतद्रूपम् मृत्खननयोग्या भूमिः संवत् सा च पाषाणाद्यभावेनातिप्रशस्तत्वाद्वरिष्ठेत्युच्यते। हे वाजिन् शीघ्रगामिन्नश्व वरिष्ठा मुत्कृष्टां संवतं भूमि मनुलक्ष्य प्रतूर्तं शीघ्र माद्रव आगच्छ नसत्तनिषत्तेत्यादिना तार्क्षो निपातस्वरतः। ते तवाश्वस्य दिवि द्युलोके परम मुत्कृष्टं जन्मादित्यरूपेण भविष्यति आगतस्य सतः यद्वा ते जन्म दिवि रोहितादिदेवाश्वरूपेण प्रसिद्धम्[२]। अन्तरिक्षे तव नाभिः उदरम् यद्वा नियुन्नामकाश्वस्त्रा अन्तरिक्षे सञ्चरन्ति तद्रूपेणास्यान्तरिक्ष-

१——१६,२,१०। २——निघ० १,१५,१-१०।

हस्त आधायेति(११) ऋचा एना मभ्रि मभिमन्त्रयते ॥ देवस्य त्वा प्रजापतिः साध्या वा ऋषयः सावित्रं यजुः। व्याख्यातम् ॥ आददे अभ्रिर्देवता अतिधृतिश्छन्दः। हे अभ्रे सवितुर्देवस्य प्रसवे प्रेरणे सति अश्विनोः सम्बन्धिभ्यां मणिबन्धपर्यन्ताभ्यां बाहुभ्यां पूष्णः सम्बन्धिभ्यां साङ्गुलिभ्यां हस्ताभ्यां साधनभूताभ्यां गायत्रेण छन्दसा सहायभूतेन युक्तः सन् त्वा त्वामाददे गृह्णामि। तत् दृष्टान्तः अङ्गिरस्वत् अङ्गिरोभिस्तुल्य मङ्गिरोवदिति प्राप्ते अयस्मयादीनि छन्दसीति भसञ्ज्ञाया मङ्गिरस्वदिति रुत्वाभावः अङ्गिरस ऋषयः पूर्वं यथा त्वा मगृह्णन् तद्वत्। हे अभ्रे त्वं गृहीता सती पृथिव्याः सधस्थात् सहस्थानादुत्सङ्गात् अग्नि माभर आहर ब्रुयहीर्भश्छन्द.

सधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभरत्रैष्टुभेनच्छन्दसाङ्गिरस्वत्॥ ९ ॥

अभ्रिरसिनार्य्यसित्वयावयमग्निᳬशकेमखनितुᳬसधस्थआ। जागतेनच्छन्दसाङ्गिरस्वत्॥ १०॥

सीति ह्रस्य भः। त्रैष्टुभेन छन्दसा कृत्वा अङ्गिरस्वत् अङ्गिरसो यथाग्नि माजह्रुः पुनरङ्गिरस्वदिति दृष्टान्तोऽर्थातिशयार्थः अभ्यासे भूयांसमर्थं मन्यन्तइति[1] यास्कोक्तेः। किम्भूतमग्निं पुरीष्यं पशवो वै पुरीषमिति[2] श्रुतेः पुरीषेभ्यः पशुभ्यो हितः पुरीष्यस्तं पशव्यम् यद्वा पुरीषशब्देन पांशुरूपा शुष्का मृदुच्यते तदर्हतीति पुरीष्योऽग्निः मृद मादायोखां कृत्वा तस्या मग्निः स्थाप्यते यतोऽतो मृदग्न्योर-भेदोपचारेण मृदाहरणमेवाग्न्याहरण मित्यभिप्रायेण पुरीष्य मग्नि माहरेतुच्यते अयं चोपचारोऽग्निचयनप्रकरणे सर्वत्रानुवर्तिष्यते॥९॥

त्वमभ्रिरसि उखां निर्मातुं मृत्खननहेतुभूतकाष्ठविशेषोऽसि नारी असि स्त्रीरूपा चासि यद्वा न विद्यते अरिः शत्रुर्यस्याः सा

[1]——निरु० १०,४२। [2]——६,३,१,३८।

अवसानपर्यन्तं यजुः तस्य प्राजापत्या जगती छन्दः । हे सवितर्देव नोऽस्माकमिमं यज्ञं प्रणय प्रापय । कीदृशं यज्ञं देवाव्यं देवा अव्यन्ते तर्प्यन्ते यस्मिन्नसौ देवावीः तम् अव प्रीणनादौ अस्मादौणादिक ईप्रत्ययः । तथा सखिविदं सखायं स्वनिष्पादकं यजमानं वेत्तीति तम् विद ज्ञाने सखीनृत्विजो विन्दते प्राप्नोतीति वा सखिवित्तम् विद्लृ लाभे सखायो विद्यन्ते यस्मिन्निति वा विद सत्तायाम् । सत्राजितं सत्राणि द्वादशाहादीनि जयति वशीकरोतीति सत्रजित्तम् तानि हि चीयमानमग्निमपेक्षन्ते यद्वा सत्राशब्दः सत्यवाची[1] सत्रा सत्यं ब्रह्म जयतीति । धनजितं धनं गवादिफलरूपेण यो जयति सम्पादयतीति धनजित् । स्वर्जितं

इमन्नोदेवसवितर्य्यज्ञम्प्रणयदेवाव्यꣳसखिविदꣳसत्राजितन्धनजितꣳस्वर्जितम् ।

ऋचास्तोमꣳसमर्द्धयगायत्रेणरथन्तरम्बृहद्गायत्रवर्त्तनिस्वाहा ॥ ८ ॥

देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् । आददेगायत्रेणच्छन्दसाङ्गिरस्वत्पृथिव्याः

स्वः स्वर्गं जयति फलत्वेन सम्पादयति स स्वर्जित्तम् ॥ किञ्च ऋचा स्तोमम् गायत्री अवसानरहिता यजुरन्ता स्वाहेति यजुः । हे सवितः ऋचा स्तोत्रहेतुसामाधारभूतया ऋचा सह स्तोमं त्रिवृदादिकं समर्धय समृद्धं कुरु गायत्रेण साम्ना सह रथन्तरं साम समर्धय बृहत् साम च समर्धय कीदृशं बृहत् गायत्रवर्तनि गायत्रं सामैव वर्तनिर्मार्गो यस्य तत् बृहत्साम्नो गायत्रं साम वर्त्मभूतमित्यर्थः ॥ ८ ॥

का० देवस्य त्वेत्यभ्रिमादाय हस्तमाधायेत्येनामभिमन्त्रयते[2] । अस्यार्थः देवस्य त्वेति कण्डिकाद्वयात्मकमन्त्रेण वैणवीमभ्रिमादाय

१——निघ० ३,१०,३ । २——१६,२,८ ।

यजमानस्य श्लोकं शृण्वन्तु। के। ये दिव्यानि दिवि भवानि धामानि स्थानानि आतस्थुः अधिष्ठितवन्तः ते सर्वेऽस्य कीर्तिं शृण्वन्त्वित्यर्थः ॥ ५ ॥

सावित्री जगती प्रथमस्य व्यूहेन पूरणम्। अन्ये देवा यस्य सवितुः प्रयाणं प्रवृत्तिमनुययुरित् अवश्यमनुगच्छन्त्येव यत्प्रवृत्तिमनुवर्तन्त इत्यर्थः अन्ये देवा यस्य देवस्य महिमानं महत्वं च ओजसा बलेनानुययुः यश्च सविता पार्थिवानि रजांसि विममे पृथिवीप्रभृतीन् त्रीन् लोकान्विमीते। लोका रजांस्युच्यन्त इति[1] यास्कः। स देव महित्वना स्वकीयेन महाभाग्येन एतशः एतज्जगत्त्रयं स्थावरजङ्गमं प्राणभावेन शेते व्याप्नोतीतीरतशः महेर्महतो भावो महित्वं तेन। भावे छान्दसस्त्वन्प्रत्ययः। यद्वा एतश इत्यश्वनामसु[2] पठितम्। स देव

यस्यप्रयाणमन्वन्यइद्ययुर्देवादेवस्यमहिमानमोजसा। यःपार्थिवानिविममेसएतशोरजाᳬंसिदेवःसवितामहित्वनाई

देवसवितःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय। दिव्योगन्धर्वःकेतपूःकेतन्नःपुनातुवाचस्पतिर्वाचन्नःस्वदतु॥ ७ ॥

एतशः अश्वरूपेण सर्वं जगदवष्टभ्य स्थितः। उषा वा अश्वस्य मेध्यस्य शिर इति[3] श्रुतेः। सूरादश्वं वसवो निरतष्टेति[4] वक्ष्यमाणत्वाच्च॥६॥

त्रिष्टुप् व्याख्यातापि[5] वाच्यते। हे देव सवितः यज्ञं प्रसुव प्रकर्षेण प्रेरय यज्ञपतिं यजमानं च भगाय सौभाग्याय प्रसुव। किञ्च दिव्यो दिवि भवः स्वर्गस्थः केतपूः केतं परचित्ते वर्त्तमानं ज्ञानं पुनाति शोधयतीति केतपूः ईदृशो गन्धर्वः गां वाचं धारयतीति गन्धर्वः सविता नोऽस्माकं केतं चित्तवर्त्ति ज्ञानं पुनातु ब्रह्मविवर्त्तनेन शोधयतु। वाचः वाण्याः पतिः सविता नोऽस्मदीयां वाचं स्वदतु स्वादयतु अस्मदुक्ता वाक्तस्मै रोचतामित्यर्थः ॥ ७ ॥

१——निरु० ६,१९। २——निघ० १,१४,१०। ३——१०,६,४,१। ४——२९अ० १३क०। ५——९अ० १क०।

जगती व्याख्यातापि[१] विशेषतो व्याख्यायते। विप्रस्य ब्राह्मणस्य यजमानस्य विशेषेण प्राति पूरयति दक्षिणान्नदानादिनेति विप्रस्तस्य सम्बन्धिनो विप्रा ऋत्विजो मनो युञ्जते प्रथमं स्वकीयं मनो विषयेभ्यो निवर्त्य समाहितं कुर्वते। उत अपि च धियः इष्टकादिविषयाणि ज्ञानानि युञ्जते सम्पादयन्ति कीदृशस्य विप्रस्य बृहतः प्रभोः अग्निचयनोद्योगेनाभिवृद्धस्य। तथा विपश्चितः विदुषः प्रयोगाभिज्ञस्य। विप्राः कीदृशाः होत्राः होमशीलाः जुह्वतीति होत्राः त्रप्रत्ययः कर्म्मण्यालस्यरहिता इत्यर्थः। नन्विदमृत्विग् यजमानादिकं कुतो जातं तत्राह एक इत् एक एव सविता विदधे सर्वमिदं निर्म्मितवान् कीदृशः वयुनावित् वयुनानि प्रज्ञानानि वेत्तीति वयुनवित् अन्येषामपि दृश्यतइति दीर्घः विपश्चित् ऋत्विग्यजमानाभिप्रायज्ञः। कथमेक एव सर्वमिदं कृतवानित्यत आह यतः सवितुर्देवस्य परिष्टुतिर्म्महो परितः सर्ववेदेषु श्रूयमाणा स्तुतिर्म्महती अचिन्त्यः सवितुर्म्महिमेत्यर्थः॥ ४॥

युजेवाम्ब्रह्मपूर्व्यन्नमोभिर्विश्लोकएतुपथ्येवसूरेः॥ शृण्वन्तुविश्वेअमृतस्यपुत्राआयेधामानिदिव्यानितस्थुः॥ ५॥

त्रिष्टुप् आद्यद्वितीयतुर्य्याणां व्यूहेन पूरणम्। पत्नीयजमानौ वामिति पदेनोच्येते। हे पत्नीयजमानौ वां युवयोरर्थे नमोभिरन्नैः इदानीं हुतैष्टेतैः सहितं पूर्व्यं पुरातनैर्म्महर्षिभिरनुष्ठितं ब्रह्म परिवृढ मग्निचयनाख्यं कर्म्माहं युजे युनज्मि सम्पादयामि व्यत्ययेन तुदादित्वाच्छः यद्वा ब्रह्मशब्देन प्राणाः सप्त ऋषयो ब्राह्मणाश्चोच्यन्ते वामर्थे पूर्व्यं पुरातनं ब्रह्म ब्राह्मणजातिं नमोभिरन्नैर्युजे योजयामि अन्नैर्विप्रांस्तर्पयामीत्यर्थः। किमर्थमिति चेत् सूरेः पण्डितस्य यजमानस्य श्लोकः कीर्त्तिर्व्येतु विविधं गच्छतु लोकद्वयं व्याप्नोतु व्यवहिताश्चेति वि-एतु अनयोर्व्यवधानम् तत्र दृष्टान्तः पथ्याइव पथोऽनपेता पथ्या यज्ञभागप्रवृत्ता आहुतिर्यथा लोकद्वयं व्याप्नोति एवं यजमानस्य श्लोक उभयलोकसञ्चारी भवत्विति भावः। किञ्च अमृतस्य मरणधर्म्मरहितस्य प्रजापतेः पुत्राः विश्वे सर्वे देवा

गायत्री तृतीय: पाद: पञ्चार्णस्तेन शङ्कुमती तदुक्तं पिङ्गलेन एकस्मिन् पञ्चके छन्द: शङ्कुमतीति। सवितुर्देवस्य प्रजापते: सवे प्रसवे आज्ञायां वर्तमाना वयं यजमाना युक्तेनेन्द्रियेभ्यो नियमितेनैकाग्रेण मनसा स्वर्ग्याय स्वर्गसाधकाय कर्म्मणे शक्त्या स्वसामर्थ्येन प्रयत्नं कुर्म्म इति शेष: ॥ २ ॥

अनुष्टुप् द्वितीय: सप्तार्णस्तेनैकोना। सविता तान् प्रसिद्धान् देवान् प्रसुवति। षू प्रेरणे तुदादि: लेटोऽडाटावित्यडागम: प्रसौति अभ्यनुजानाति प्रेरयतीत्यर्थ:। किं कृत्वा युक्त्वाय युक्त्वा कृत्वा यक्ष्यग्निकर्म्मणि संयोज्य। किम्भूतान् देवान् धिया बुद्ध्या कर्म्मणा वा

युक्तेनमनसावयन्देवस्यसवितु:सवे। स्वर्ग्यायशक्त्या ॥ २ ॥

युक्त्वायसवितादेवान्त्स्वर्यतोधियादिवम्। बृहज्ज्योति:करिष्यत:सविताप्रसुवातितान् ॥ ३ ॥

युञ्जतेमनउतयुञ्जतेधियोविप्राविप्रस्यबृहतोविपश्चित:। विहोत्रादधेवयुनाविदेकइन्महीदेवस्यसवितु:परिष्टुति:॥४॥

अन्येन दिवं दीव्यति प्रकाशत इति दिवम् इगुपधेति कप्रत्यय: द्योतनं स्व: स्वर्गं यतो गच्छत: इण: शत्रन्तस्य यत इति रूपम्। पुन: कीदृशान् बृहत् महत् ज्योति: आदित्यलक्षण मात्मत्वेन करिष्यत: संस्कुर्वत:। कीदृश: सविता सविता प्रेरयिता अन्येन कर्म्मणा स्वर्गं गच्छतो देवानग्निकर्म्मणि सविता प्रेरयिता सविता प्रजापति: तान् देवानिन्द्रियविशेषान्युक्त्वा विषयेभ्यो नियम्य प्रसुवति प्रकर्षेणाग्निकर्म्मणि प्रेरयति कीदृशान् स्वर्यत: स्वर्गप्राप्त्यै उद्यतान् तथा बृहत् प्रौढं ज्योति: चीयमानस्याग्नेस्तेज: धिया दिवं करिष्यत: तत्रादिष्टकादिविषयया प्रज्ञया द्योतमानं कर्तुमुद्यतान् ॥ ३ ॥

विश्वकर्म्मा च तृतीयां चितिमपश्यंस्तएव तस्या आर्षेयमृषयश्चतुर्थीं चितिमपश्यनृषय एव तस्या आर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत् परमेष्ठ्येव तस्या आर्षेयमिति[1] ॥ चयनं कर्तुमिच्छन् फाल्गुनकृष्णप्रतिपदि पौर्णमासेष्टिं कृत्वा पुरुषाश्वगोऽव्यजानालभ्याजेन यागं कृत्वा पशूनां शिरांसि घृताक्तानि प्रथमचितावुपधानार्थं क्वचित् संस्थाप्य तेषां कबन्धान्यजशेषं च मृद्युक्ते तड़ागादिजले प्रास्येत् उखार्थमिष्टकार्थं च मृदं जलं च तत एवादेयम् ततः फाल्गुनकृष्णाष्टम्यामुखासम्भरणम् तदर्थमाहवनीयदक्षिणाग्नीउद्धृत्याहवनीयात् प्राक् कृते चतुष्कोणे गर्ते ततस्तड़ागान्मृत्पिण्डमानीय भूसमं स्थापयेत् पिण्डाहवनीयान्तराले सच्छिद्रां वल्मीकमृदं निदध्यात् आहवनीयाद्दक्षिणदेशेऽश्वगर्दभाजाः प्राङ्मुखाः प्रागपरा मुञ्जरसनाबद्धाः स्थाप्याः आहवनीयोत्तरे वैणव्युभयतस्तीक्ष्णा कल्माषी हिरण्मयी वाभ्रिः स्थाप्या ततः कर्म्माह का० अष्टागृहीतं जुहोति सन्ततमुद्द्रवन्युञ्जान इति[2] । अस्यार्थः । गार्हपत्ये घृतं संस्कृत्य जुह्वं स्रुवं च संमृज्य स्रुच्यष्टागृहीतमाज्यमाहवनीये परिस्तरणसमिदाधानपूर्वकं सन्ततमविच्छिन्नधारया स्रुचमूर्ध्वां कुर्वन्नध्वर्युर्जुहोति युञ्जान इत्याद्यष्टकण्डिकाभिः सान्तत्यं चाष्टर्चान्ते स्वाहाकारपर्यन्तम् ॥ आद्यानुष्टुप् तृतीयः सप्ताक्षरः । अष्टानां सवितापि ऋषिः देवोऽपि सविता । अथ मन्त्रार्थः । सविता सर्वस्य प्रेरकः प्रजापतिः अग्नेर्ज्योतिः चीयमानस्य वह्नेः सम्बन्धि तेजः निचाय्य पञ्चपशुषु प्रविष्टं निश्चित्योपलभ्य यद्वा सफलानां कर्म्मणां साधनभूतं निश्चित्य । पृथिव्याः पशुशरीरान्वितायाः भूमेः सकाशादध्याभरत् अध्याहृतवान् इष्टकाः कृत्वाग्निं चितवानित्यर्थः । सवितृशब्देन श्रुतौ प्रजापतिरुक्तः प्रजापतिर्वै युञ्जान इति[3] श्रुतेः । किम्भूतः प्रथममग्न्यारम्भे मनो युञ्जानः समादधानः युङ्क्तेऽसौ युञ्जानः किं कृत्वा धियो बुद्धीरिष्टकादिविषयाणि ज्ञानानि तत्वाय तनित्वा विस्तार्य मनसा पर्य्यालोच्य बुद्ध्यावधार्येत्यर्थः । तनु विस्तारे समानकर्तृकयोः पूर्वकाल इति क्त्वाप्रत्ययः अनित्यमागमशासनमितीडागमाभावः अनुदात्तोपदेशेत्यादिना नलोपः क्त्वो यगिति क्त्वाप्रत्ययान्तस्य यगागमः ॥ १ ॥

१——६,२,३,१०। २——१६,२,७। ३——६,२,१,१२।

पालितवन्तौ ।[*] कैः काव्यैः कवीनां मन्त्रद्रष्टॄणां सम्बन्धिभिर्मन्त्रैः कवीनामिमे काव्यास्तैः । तथा दंसनाभिः दंस इति कर्मनाम[1] दंससः करणं दंसना तत्करोति तदाचष्ट इति णिचि जाते ण्यासश्रन्थो युजिति युच्प्रत्यये दंसनेति रूपम् । दृष्टान्तमाह पुत्रमिव पितरौ यथा मातापितरौ पुत्रं पालयतस्तथाश्विनौ त्वामावतुः अश्विनाविन्द्रस्य रक्षणं कृतवन्ताविति कथमवगम्यते तत्राह यदिति यद्यस्मात्कारणात् हे इन्द्र त्वं शचीभिः कर्मभिर्नमुचिवधादिकर्माणि कृत्वेत्यर्थः सुरामं सुष्ठु रमणीयं सोमं व्यपिबः विशेषेण पीतवानसि पिबतेर्लङि मध्यमैकवचने रूपम् हे मघवन्धनवन्निन्द्र यस्माच्च सरस्वती देवी त्वा त्वामभिष्णक् उपसेवते त्वत्कृतसोमपानेन सरस्वतीकृतत्वत्सेवनेन च अश्विनौ त्वा मावतुरिति ज्ञायतइत्यर्थः । भिष्णज् उपसेवायां कण्ड्वादिः अस्माल्लङि कण्ड्वादिभ्यो यगिति प्राप्तस्य यको व्यत्ययेन लुक् हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हलिति तिपो लुक् लुङ्लङ्लृङ्क्ष्वडुदात्त इति अडागमः वावसानइति जकारस्य ककारः अभिष्णगिति रूपम् ॥ ३४ ॥

॥ १० ॥ श्रीमन्महीधरकृते वेददीपे मनोहरे । अगमद्दशमोऽध्यायो राजसूयान्तवर्णनः ॥ १० ॥

युञ्जानः प्रथमं मनस्तत्वाय सविता धियम् । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥

रमाकान्तं नमस्कृत्य गणेशं शारदां गुरुम् । संहितैकादशाध्याये मन्त्रदीपो वितन्यते ॥ ॥ एकादशमारभ्याष्टादशाध्यायपर्यन्तमग्निचयनमन्त्राः ॥ तेषां प्रजापतिर्ऋषिः साध्या ऋषयो वा ॥ सोऽग्निः पञ्चचितियुक्तः प्रथमचितिमन्त्राणां प्रजापतिर्ऋषिः द्वितीयचितेर्देवा ऋषयः तृतीयचितेरिन्द्राग्निविश्वकर्माण ऋषयः चतुर्थचितेर्ऋषय एवऽर्षयः पञ्चमचितिमन्त्राणां परमेष्ठी ऋषिः । तथा च श्रुतिः । प्रजापतिः प्रथमां चितिमपश्यत् प्रजापतिरेव तस्या आर्षेयं देवा द्वितीयां चिति मपश्यन्देवा एव तस्या आर्षेय मिन्द्राग्नी च

[1] —— निघ० २,१,२ ।

का० ग्रहाणां युवं सुराम पुत्रमिवेति[1]। युवं सुराम पुत्रमिवेति द्वे ऋचौ सुराग्रहाणां याज्यानुवाक्ये प्रथमानुवाक्या पुत्रमिवेति याज्या॥ अनुष्टुप् अश्विसरस्वतीन्द्रदेवत्या। हे अश्विना अश्विनौ युवं युवां कर्मसु निमित्तेषु इन्द्र मावत मपालयतं स्वकर्मधम मकुरुत मित्यर्थः। अवतेर्लङि मध्यमद्विवचनम्। किम्भूतौ युवाम् असुर एव आसुरस्तस्मिन्नमुचौ नमुचिसञ्ज्ञे आसुरे असुरे दैत्ये स्थितं सुरामं सुष्ठु रमयतीति सुरामं सुष्ठु रमणीयं सोमं सचा सह एकीभूय विपिपाना विपिपानौ विविधं पिबन्तौ विविधं पिबतस्तौ विपिपानौ पिबतेर्व्यत्ययेन द्वार्दित्वे शानच्प्रत्यये रूपम्। तदर्थं श्रुताविति‍हासः[2]। नमुचिर्नामासुर इन्द्रस्य

युव॑ꣳ सु॒राम॑मश्विना॒ नमु॑चावासु॒रे सचा॑। वि॒पि॒पा॒ना शु॑भस्पती॒ इन्द्रं॒ कर्म॑स्वावतम्॥ ३३॥

पु॒त्रमि॑व पि॒तरा॑वश्विनो॒भेन्द्रा॒वथुः॒ काव्यै॑र्द॒ꣳस॑नाभिः। यत्सु॒रामं॒ व्यपि॑बः॒ शची॑भिः॒ सर॑स्वती त्वा मघवन्नभिष्णक्॥ ३४॥

॥ १०॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां दशमोऽध्यायः॥ १०॥

सखासीत् स विश्वस्तस्येन्द्रस्य वीर्यं सुरया सोमेन सह पपौ तत इन्द्रोऽश्विनौ सरस्वतीं चोपाधावत् नमुचिना पीतवीर्योऽस्मि ततोऽश्विनौ सरस्वती चापां फेनरूपं वज्रमिन्द्राय ददुः तेनेन्द्रो नमुचेः शिरश्चिच्छेद ततो लोहितमिश्रः ससुरः सोमस्तदुदरादश्विभ्यां पीत्वा शुद्ध इन्द्रायार्पित इति तदर्पणेनेन्द्र मश्विनावरक्षतामित्यर्थः। पुनः कीदृशौ शुभः पती शोभनं शुप् शुभ दीप्तावित्यस्मात्सम्पदादित्वाद्भावे क्विप् तस्य शुभः शोभनस्य कर्मणः पती पालकौ षष्ठ्याः पतिपुत्रेत्यादिना पतिशब्दे परे विसर्गस्य सकारः॥ ३३॥

त्रिष्टुप् अश्विसरस्वतीन्द्रदेवत्या हे इन्द्रोभा अश्विना उभौ अश्विनौ त्वा मावथुः अवतेर्लिटि मध्यमद्विवचनं पुरुषव्यत्ययः आवतुः

१—१२,६,८। २—१२,७,४,१।

का० ग्रहं गृह्णाति कुविदङ्गेति त्रीन्वा प्रतिदेवतमेतयैवेति[१]। पूतायां सुरायां बदरीफलचूर्णं प्रक्षिप्य कुविदङ्गेत्येकं ग्रहं वैकङ्कत-पात्रेण गृह्णाति। यद्वा कुविदङ्गेत्यृचैव त्रीन् ग्रहान् प्रतिदेवतं गृह्णाति। यथा। कुविदङ्ग० उपयाम गृहीतोस्यश्विभ्यां त्वेति प्रथमम्। कुविदङ्ग० उपयामगृहीतोसि सरस्वत्यै त्वेति द्वितीयम्। कुविदङ्ग० उपयामगृहीतोसीन्द्रायत्वा सुत्राम्णइति तृतीयम्। ऋचं काक्षीवतसुकीर्ति ददृशे। आद्या सोमदेवत्याऽनिरुक्ता त्रिष्टुप्। कुविदिति बहुनाम[२]। अङ्गेति क्षिप्रनाम[३]। चिदिति वितर्के। हे सोम यथा यवमन्तः। यवा विद्यन्ते येषां ते यवमन्तः। मादुपधायाश्चमतोर्वोऽयवादिभ्यः इति यवादीनां निषेधान्मतोर्मकारस्य वकारा-

कुविदङ्गयवमन्तोयवञ्चिद्यथादान्त्यनुपूर्व्वं वियूय। इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमउक्तिंयजन्ति।

उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णे ॥ ३२ ॥

भाव:। बहुयवसम्पन्नाः कृषीवलाः। कुवित् बहुलं यवं सर्वं यवमयं सस्यं चित् विचार्य अनुपूर्वं मानुपूर्व्येण वियूय पृथक्कृत्य अङ्ग क्षिप्रं दान्ति लुनन्ति। दाप् लवने लट्। तथा एषां यजमानानां सम्बन्धीनि भोजनानि भोज्यानि वस्तूनि इह इह अस्मिन्नेव यज-माने कृणुहि कुरु। एषां केषां ये यजमाना बर्हिष उपरि स्थिता नमउक्तिं यजन्ति नम इत्यन्ननाम[४]। उक्तिर्वचनम्। हविर्लक्षणमन्न मादाय उक्तिं याज्या मभिधाय यजन्ति। यागं कुर्वन्ति। हे सोम त्वमुपयामेन गृहीतोसि अश्विभ्यां त्वा त्वां गृह्णामि सरस्वत्यै त्वां गृह्णामि सुत्राम्णे रक्षकायेन्द्राय त्वां गृह्णामि ॥ ३२ ॥

१——१५,१०,१२। २——निघ० ३,१,१२। ३——निरु० ५,१७। ४——निघ० २,७,२२।

देवयागे ब्रह्मत्वकर्त्रा बृहस्पतिना। तेजसा ओजसा ओजस्विना वरुणेन। तेजस्विना अग्निना। राज्ञा ओषधिविप्राधिपेन दीप्यमानेन वा सोमेन चन्द्रेण। दशम्या दशसङ्ख्यापूरिकया विष्णुना देवतया यज्ञाधिष्ठात्रा विष्णुरूपेण देवेन। एतैराज्ञप्तः प्रसर्पामीत्यर्थः॥ ३०॥ ॥ इति राजसूयः समाप्तः॥

अथ राजसूयगतचरकसौत्रामणीमन्त्रा उच्यन्ते॥ राजसूयप्रान्ते विहिता सौत्रामणी चरकसौत्रामणीत्युच्यते तन्मन्त्राणामश्विनावृषी॥ का॰ पक्त्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति संसृजतीति[1]। विरूढा जाताङ्कुरा अजाताङ्कुराश्च व्रीहयः चोभे बद्धाः सन्ति तन्मध्ये अजाताङ्कुराणां व्रीहीणामोदनं पक्त्वा विरूढान् व्रीहींश्चूर्णीकृत्योदनेन मिश्रयति। त्रीणि यजूंषि सुरादेवत्यानि। हे सुरे त्वमश्विभ्यां पच्यस्व अश्विनोरर्थाय पाकं कुरु पाको नाम विपरिणामश्रेष्ठता। सरस्वत्यै देव्यै पच्यस्व।

**अ॒श्विभ्यां॑ पच्यस्व॒ सर॑स्वत्यै पच्य॒स्वेन्द्रा॑य सु॒त्राम्णे॑ पच्यस्व। वा॒युः पू॒तः प॒वित्रे॑ण प्र॒त्यङ्क्सोमो॒ अति॑स्रुतः। इन्द्र॑स्य॒ युज्यः॒ सखा॑॥ ३१**

सुष्ठु त्रायत इति सुत्रामा तस्मै सुत्राम्णे शोभनत्राणकर्त्रे सुत्रातव्याय वा इन्द्राय पच्यस्व यतः सौत्रामण्येन्द्रस्य भैषज्यं कर्तव्यमस्ति॥ का॰ वपामार्जनान्ते कुशैः परिस्रुतं पुनाति वायुः पूत इति[2]। पशूनां वपामार्जनान्ते कर्मणि कृते दर्भैः सुरां कस्मिंश्चित्पात्रे पुनाति। सोमदेवत्या गायत्री। वायुः सुपां सुलुगित्यादिना तृतीयैकवचनस्य सु आदेशः सोमो वायुः वायुना पूतः शोधितः पवित्रेण कुशमयेन पूतः सन् प्रत्यङ् नीचैरधोमुखः सन् अतिस्रुतः अतिक्रम्य गतः। किम्भूतः इन्द्रस्य युज्यो योगार्हः सखा सखिभूतः। सोमः पूर्वं पूतिगन्धोऽभूत्ततो देवैर्वायुरुक्तस्त्वं सोमं सुगन्धं कुर्विति ततो वायुना सोमो दुर्गन्धमपहृत्य सुगन्धः कृत इति[3] श्रुत्योक्तम् तदयं मन्त्रो वदतीत्यर्थः॥ ३१॥

१——१५,९२५। २——१५,१०,१०। ३——१२,७,३।

चात्यूतभूमौ चिपति। अचदेवत्यम्। हे अचा यूयं स्वाहाकृता: स्वाहाकारपूर्विकयाहुत्या तर्पिता: सन्तः सूर्यस्य रश्मिभिः किरणैर्यतध्वं स्पर्धां कुरुत सजातानां समानजन्मनां भ्रातॄणां चत्रियाणां मध्यमेष्ठ्याय मध्यमप्रदेशे यजमानावस्थानाय च यतध्वं यत्नं कुरुत यजमानं सर्वचत्रियश्रेष्ठं कुरुतेत्यर्थः। मध्ये भवो मध्यमः मध्यमे प्रदेशे तिष्ठतीति मध्यमेष्ठः तस्य भावो मध्यमेष्ठ्यं तस्मै ॥२९

का० पितामहदशगणं सोमपानां सङ्ख्याय सर्पणं सवित्रेति वानुवाकमुक्त्वेति[१]। पित्रादयः पूर्वजाः पितामहशब्देनोच्यन्ते। ऋत्विजोऽन्ये विप्राश्च मिलिताः शतसङ्ख्याः सन्तो दशपेययागे सौत्येऽहनि प्रतिसवनं सर्पणात्प्राक् स्वं स्वं सोमयाजिनां पित्रादीनां दशानां गणं गणयित्वा अमुकः प्रथमः सोमपः असौ द्वितीयोऽसौ तृतीय इत्यादिदशमपर्यन्तान् सोमयाजिनो गणयित्वा विभूरसीत्यादि

सवित्राप्रसवित्रासरस्वत्यावाचात्वष्ट्रारूपैःपूष्णापशुभिरिन्द्रेणास्मेबृहस्पतिनाब्रह्मणावरुणेनौ

जसाग्निनातेजसासोमेनराज्ञाविष्णुनादशम्यादेवतयाप्रसूतःप्रसर्प्पामि ॥ ३० ॥

सर्पणं धिष्ण्योपस्थानं कुर्वन्ति सर्पणं भक्षणकाले सदःप्रवेशो वा। पचान्तरमाह सवित्रेति। यद्वा सवित्रा प्रसवित्रेत्येककण्डिकात्मकमनुवाकं पठित्वा शतं विप्राः सर्पणं कुर्वन्ति। दशानां सोमयाजिनामसम्भवाद्यमेव पक्षः श्रेयानिति सूत्रार्थः। सवित्रादिदेवत्यात्वष्टिः। एताभिर्दशभिर्देवताभिः प्रसूत आज्ञप्तोऽहं प्रसर्पामि सर्पणं करोमि। प्रत्येकपाठादेकवचनं सर्पामीति काभिर्दशभिः प्रसूत इत्यत आह प्रसवित्रा अभ्यनुज्ञानकारिणा सवित्रा सूर्येण। वाचा वाग्रूपया सरस्वत्या। रूपै रूपलचितेन त्वष्ट्रा देवेन त्वष्टा रूपाणामधिपतिरित्युक्तेः। पशुभिरुपलचितेन पूष्णा देवेन। अस्मे अनेन इन्द्रेण विभक्तेः शे-आदेशः बृहस्पतिना ब्रह्मणा

१——१५,८,१५-१६।

सुखयिता। त्वं ब्रह्मासीत्येतावदेव पञ्चमं प्रतिवचनम् ॥ का० बहुकारेति च ह्वयत्येवं नामानमिति[1]। यजमानं बहुकारेत्यादि-शुभफलनामानं नरमाकारयति। लिङ्गोक्तदेवतम्। हे बहुकार बहु कार्यं करोति बहुकारः श्रेयः करोति श्रेयस्करः भूयो बहुतरं करोति भूयस्करः तेषां सम्बोधनानि हे बहुकारेत्यादिकल्याणनामन् त्वामाह्वयइति शेषः॥ का० स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वेन्द्रस्य वज्र इति[2]। अस्मै यजमानाय स्फ्यं ददाति द्यूतभूमिकरणाय। स्फ्यदेवतम्। हे स्फ्य इन्द्रस्य वज्रस्त्वमसि इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारेत्यादि तस्य स्फ्यस्तृतीयमिति[3] श्रुतेः। तेन हेतुना मे मम यजमानं रध्य रध्यतिर्वशगमने वशवर्तिनं

अग्निः पृथुर्धर्मणस्पतिर्जुषाणो अग्निः पृथुर्धर्मणस्पतिराज्यस्य वेतु स्वाहा

स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वꣳ सजातानां मध्यमेष्ठ्याय ॥ २९ ॥

कुरु। यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवतीति[4] श्रुतेः। यद्वा तेन मे रध्य यस्मात्त्वं वज्ररूपस्तेन कारणेन मम रध्य द्यूतभूमौ परिलेखनरूपं कार्यं साधय ॥ २८ ॥

का० द्यूतभूमौ हिरण्यं निधायाभिजुहोति चतुर्गृहीतेनाग्निः पृथुरिति[5]। एवं कृतायां द्यूतभूमौ कनकं निधाय तदुपरि चतुर्गृहीताज्यं जुहुयात्। अग्निदेवत्यम्। अग्निः आज्यस्य वेतु कर्मणि षष्ठी घृतं पिबतु स्वाहा सुहुतमस्तु। किम्भूतोऽग्निः पृथुः देवानां प्रथयत्वाद्विशालः। तथा धर्मणः पतिः धारणं धर्मं जगतो धारणस्य धर्मस्य वा स्वामी। जुषाणः प्रीयमाणः हूयमानं हविः सेवमानो वा। अग्निः पृथुर्धर्मणस्पतिरिति पुनःपाठ आदरार्थः॥ का० अथाग्निवपति स्वाहाकृता इति[6]। पूर्वोक्तपञ्चा-

१—१५,७,१०। २—१५,७,११। ३—१,२,४,१। ४—५,४,४,१५। ५—१५,७,१५। ६—१५,७,१६।

समर्था भवन्तु । कलेः सर्वाद्याभिभावकत्वात्सुन्वतोऽपि जयापेक्षित्वात्पञ्चाद्यव्यापकत्वमिति भावः ॥ का० वरं दत्वा ब्रह्मन्नित्या- मन्त्रयते पञ्चकृत्वः प्रत्याह व्यत्यासं सविता वरुण इन्द्रो रुद्र इति त्वं ब्रह्मासीत्यादिभिरादिनैवान्त्यमिति[1] । यजमानो राज्यं मेऽस्त्वि त्यादि द्रव्यं सम्प्रार्थ्य पञ्चवारं ब्रह्मन्निति मन्त्रेण ब्रह्माणं मामन्त्रयते एवमामन्त्रितो ब्रह्मा त्वं ब्रह्मासीत्यादिभिः सवितासि वरुणोऽसि इन्द्रोऽसि रुद्रोऽसीत्येतैर्मन्त्रैर्व्यत्यासं यजमानं प्रत्याह तेन चतुर्णामपि मन्त्राणामादौ त्वं ब्रह्मासीति प्रयोगः । व्यत्यासमित्यादौ यजमानो ब्रह्मन्नित्यामन्त्रयते ब्रह्मा त्वं ब्रह्मासि सवितासि सत्यप्रसव इति प्रत्याह । पुनर्यजमानो ब्रह्मन्निति ब्रह्माणं मामन्त्रयते ब्रह्मा त्वं ब्रह्मासि वरुणोऽसि सत्यौजा इति प्रत्याह । पुनर्यजमानो ब्रह्मन्निति ब्रह्माणं मामन्त्रयते ब्रह्मा त्वं ब्रह्मासि इन्द्रोऽसि विशौजा इत्याह । पुनर्यजमानो ब्रह्मन्निति ब्रह्माणं मामन्त्रयते ब्रह्मा त्वं ब्रह्मासि रुद्रोऽसि सुशेव इत्याह । अन्त्यं च पञ्चमं प्रतिवचनमादिनैव

रुद्रोसिसुशेवः । बहुकारश्रेयस्करभूयस्कर इन्द्रस्यवज्रोसितेनमेरध्य ॥ २८ ॥

त्वं ब्रह्मासीत्येतावतैव कार्यं ब्रह्मणेति सूत्रार्थः ॥ ब्रह्मन् । ब्रह्मदैवतम् । यजमानः प्रथमं ब्रह्माणं मामन्त्रयते हे ब्रह्मन् ऋत्विक् त्वामा- मन्त्रय इति शेषः । त्वं ब्रह्मासि । पञ्च यजूंषि यजमानदेवत्यानि । ब्रह्मामन्त्रितो यजमानं प्रत्याह हे यजमान त्वं ब्रह्मासि महान् भवसि सविता प्रेरकश्चासि सत्यप्रसवः सत्यः प्रसवोऽनुज्ञा यस्य । द्वितीयं प्रत्याह त्वं ब्रह्मासि वरुणोऽनिष्टनिवारकोऽसि सत्यौ- जाः सत्यमोजो यस्य अमोघवीर्योऽसि सत्ये वा ओजो यस्य । तृतीयं प्रत्याह त्वं ब्रह्मासि इन्द्रोऽसि ऐश्वर्यवानसि विशौजाः विशु प्रजास्वोजस्तेजो यस्य विडोजा इति प्राप्ते विशौजा इति छान्दस मतएव पदकारो नावग्रहं चकार । चतुर्थं प्रत्याह त्वं ब्रह्मासि रुद्रोऽसि हे राजन् त्वं रुद्ररूपोऽसि शत्रूणां रोदनाद्द्रावणाच्च । सुशेवः शेव इति सुखनाम[2] शोभनं शेवः सुखं यस्मात् शोभनं

१——१५,७,७-९ । २——निघ० ३,६,१७ ।

हे यजमान स्योनां सुखकरी मासन्दी मासीद आरोह सुषदां सुखोपवेशनयोग्या मासन्दी मासीद ऋतस्य योनिं स्थान मासन्दी मासीद ॥ २६ ॥

का० निषसादेत्युरोऽस्यालभतइति[1]। अध्वर्युर्यजमानहृदयं स्पृशति। वरुणदेवत्या गायत्री शुनःशेपदृष्टा अष्टषट्सप्तवर्णपादत्वाद्वर्धमाना गायत्री। असौ यजमानः पस्त्यासु विक्षु प्रजासु आ निषसाद। विशो वै पस्त्या इति[2] श्रुतेः। आधिपत्येनोपविवेश यदासन्द्यां निषण्णः स प्रजास्वेव निषण्ण इत्यर्थः। व्यवहिताश्चेति आङ उपसर्गस्य क्रियापदेन व्यवस्थानम्। किम्भूतो यजमानः धृतव्रतः धृतं व्रतं यज्ञलक्षणं कर्म येन स्वीकृतयज्ञः। वरुणः वारयत्यनिष्टमिति वरुणः। तथा सुक्रतुः शोभनसङ्कल्पः शोभनप्रज्ञो वा। किमर्थं निषसाद साम्राज्याय सम्राजो भावः साम्राज्यम् सम्राड्भावाय राज्यायेति[3] श्रुतेः ॥ २७ ॥

निषसादधृतव्रतोवरुणःपस्त्यास्वा। साम्राज्यायसुक्रतुः ॥ २७ ॥

अभिभूरस्येतास्तेपञ्चदिशःकल्पन्ताम्ब्रह्मंस्त्वम्ब्रह्मासिसवितासिसत्यप्रसवोवरुणोसिसत्यौजाइन्द्रोसिविशौजा

का० अभिभूरित्यस्मै पञ्चाक्षान् पाणावाधायेति[4]। यजमानहस्ते द्यूतसाधनभूतान् पञ्चाक्षान्सौवर्णकपर्दान्निदध्यात्। अक्षा यजमानो वा देवता। चतुर्णामक्षाणां कृतसञ्ज्ञा पञ्चमस्य कलिरिति यदा पञ्चाप्यक्षा एकरूपा पतन्ति उत्ताना अवाञ्चो वा तदा देवितुर्जयः तत्र कलिः सर्वानन्यानभिभवति तं प्रत्युच्यते तत्सम्बन्धेन यजमानं प्रति वा। हे अक्ष यद्वा हे यजमान त्वमभिभूरसि अभिभविता अभितो व्याप्तासि। एताः कपर्दिकोपलक्षिताः पञ्च दिशः पूर्वादयस्तस्र ऊर्ध्वा चेति पञ्च दिशः ते त्वदर्थं कल्पन्तां त्वत्प्रयोजन-

१—१७,७,४। २—५,४,४,५। ३—५,४,४,५। ४—१५,७,५।

सौवर्णौ मणी यजमानः स्पृशति ॥ द्वे द्वादशाक्षरे यजुषी शतमानदेवत्ये । हे रुक्म त्वमियदसि एतावत्परिमाणं शतरक्तिका-परिमितमसि आयुरसि जीवनमसि तस्मादायुः शताब्दपरिमितं मयि धेहि यो हि यदात्मकः स तद्दातु मुत्सहते यतस्त्वं शातमानमसि ततः शताब्दपरिमितमायुर्मयि रोपय । युङ्ङसि युनक्ति यज्ञं सम्भारनिचयेन दक्षिणादानेन वेति युङ् वर्चस्तेजस्वी भवसि अतो मे मम वर्चः तेजो धेहि ॥ का० तौ ब्रह्मणे दत्त्वोर्गसीति शाखा मुपस्पृशतीति[1] । तौ शतमानौ ब्रह्मणे दत्त्वा पूर्वोक्तरथवाहने एवोपगूहितारमौदुम्बरीं शाखा मुपस्पृशेत् । शाखादेवत्यम् । हे औदुम्बरि शाखे त्वमूर्गसि अन्नरूपा भवसि तत ऊर्जं मन्नं मयि धेहि स्थापय ॥ का० इन्द्रस्य वामित्यवहरते बाहू पयस्यायां व्याघ्रचर्मदेशे स्थितायामिति[2] । अध्वर्युर्यजमानबाहू व्याघ्रचर्मस्थापितायां

स्योनासिसुषदासिक्षत्रस्ययोनिरसि । स्योनामासीदसुषदामासीदक्षत्रस्ययोनिमासीद ॥ २६ ॥

मैत्रावरुण्यां पयस्यायां नीचौ करोति । बाहुदेवत्यम् । वीर्यकृतौ वीर्यकारिणः इन्द्रस्य परमैश्वर्ययुक्तस्य यजमानस्य सम्बन्धिनौ हे बाहू अहं वां युवा मुपावहरामि मैत्रावरुणीपयस्यां प्रति नीचौ करोमि ॥ २५ ॥

का० प्राक् स्विष्टकृतः खादिरी मासन्दीं रज्जूतां व्याघ्रचर्मदेशे निदधाति स्योनासीतीति[3] । पयस्यायाः स्विष्टकृद्धोमात्प्राक् रज्जुभिर्व्युतां खादिरीं मञ्चिकां व्याघ्रचर्मदेशे मैत्रावरुणधिष्ण्यस्य पुरो निदधाति । आसन्दीदेवत्यम् । हे आसन्दि त्वं स्योना सुखरूपासि सुखकारी भवसि । सुषदासि सुखेन सीदन्ति यस्यां सा सुषदा सुखेनोपवेष्टुं योग्यासि ॥ का० अधीवासमस्या-मास्तृणाति क्षत्रस्य योनिरिति[4] । आसन्द्यां वस्त्र माच्छादयति । अधीवासदेवतम् । हे अधीवास त्वं क्षत्रस्य क्षत्रियस्य योनिर्माहृ-वस्थारकत्वेन कारणमसि ॥ का० सुन्वन्त मस्या मुपवेशयति स्योनामासीदेति[5] । आसन्द्यां यजमानं स्थापयेत् । यजमानदेवत्यम् ।

१——१,६,२० । २——१५,६,३१ । ३——१५,६,३३;७,१ । ४——१५,७,२ । ५——१५,७,३ ।

ष्येषु प्राणभावेन सीदतीति नृषत्। वरेषु उत्कृष्टेषु स्थानेषु सीदति वरसत्। ऋते यज्ञे सीदतीति ऋतसत्। व्योम्नि आकाशे मण्डलरूपेण सीदतीति व्योमसत्। एवं सर्वत्रस्थितत्वेन स्तुत्वा सर्वोत्पत्तिद्वारेण स्तौति यः अब्जाः अप्सु उदकेषु जायते मत्स्यादिरूपेणेत्यब्जाः। गवि पृथिव्यां जायते चतुर्विधभूतग्रामरूपेणेति गोजाः। ऋते सत्ये जायते ऋतजाः। अद्रौ पाषाणे अग्निरूपेण जायत इत्यद्रिजाः। अद्रिर्मेघो वा[1] अद्रौ मेघे जलरूपेण जायत इति वा। ऋतम् ऋ गतौ सर्वत्र गतम्। बृहत् महत्परिवृद्धमपर्यन्तम् परब्रह्मरूपो यो हंसस्तं प्रति रथादवतरामीति भावः॥ यद्वा हंसशब्देन रथ उच्यते हन्ति पृथिवीमिति हंसः रथः बृहत् महत् प्रौढमृतं यज्ञं सम्पादयत्विति शेषः। किम्भूतो हंसः शुचिषत् शुचौ देवयजने रथवाहने वा सीदतीति। वसुः स्वस्योपरि यजमानं वासयतीति। अन्तरिक्षसत् वृक्षगुल्माद्यनवरुद्धेऽन्तरिक्षे सीदतीति। होता होतृसमानः तदेव कथमित्यत आह वेदिषत् वेद्यां सीदतीति। अतिथिः अतिथिवत्

**इयदस्यायुरस्यायुर्म्मयि धेहि युङ्ङसि वर्चोऽसि वर्चो मयि धेह्यूर्गस्यूर्जम्मयि धेहि। इन्द्रस्य वां वीर्य्यकृतो बाहू अभ्युपावहरामि** ॥ २५ ॥

पूज्यः। दुरोणसत् दुरोणे यज्ञगृहे सीदतीति। नृषत् नृषु वाहकत्वेन सीदतीति। वरसत् वरे श्रेष्ठे राजगृहे सीदतीति। ऋतसत् ऋते यज्ञे वाजपेयादौ सीदतीति। व्योमसत् सूर्यं वोढुं व्योमन्याकाशे सीदतीति। अब्जाः अप्सुयोनिर्वा अश्व इति श्रुतेरश्वो जातेरश्वैकरूपत्वादब्जाः। गोजाः गोशब्दवाच्याद्वज्राज्जायत इति गोजाः। इन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधा व्यभवत्तस्य स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयमिति तैत्तिरीयश्रुतेः। ऋतजाः ऋतं यज्ञमुद्दिश्य जातत्वादृतजाः। अद्रिजाः अद्रिभ्यः पाषाणसदृशकाष्ठेभ्यो जातत्वादद्रिजाः॥ २४॥

का० उपस्पृशति शतमानाविषदसीति[2]। शालादक्षिणभागे स्थापितस्य रथवाहनस्य दक्षिणचक्रे बद्धौ शतमानौ शतरक्तिकानिर्मितौ

१——निघ० १,१०,१। २——१५,६,२९।

का० अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रमिति[1]। रथविमोचनीयसञ्ज्ञाश्चतस्र आहुतीर्जुहोति ॥ चत्वारि यजूंषि लिङ्गोक्तदेवत्यानि। गृहाश्रमपालकायाग्नये स्वाहा सुहुतमस्तु। वनस्पतिरूपिणे सोमाय हविर्दत्तमस्तु। इन्द्रस्येन्द्रः सम्बन्धिने इन्द्रियाय वीर्याय स्वाहा। मरुतां सम्बन्धिने ओजसे बलाय हविर्दत्तमस्तु ॥ का० भूमिमवेक्षते पृथिवि मातरिति[2]। रथस्थ एव यजमानो भूमिं पश्येत् ॥ भूमिदेवत्यम् हे मातर्जगन्निर्मात्रि हे पृथिवि भूमे त्वं मा मां मा हिंसीः हिंसां मा मा कार्षीः अहमपि त्वां पृथिवीं मो मा उ हिंसिषम् ॥ २३ ॥

पृथिविमातर्म्मामाहिꣳसीर्म्मोऽअहन्त्वाम् ॥ २३ ॥

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।

नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ २४ ॥

का० अवरोहति हंसः शुचिषदिति[3]। यजमानो रथादवरोहति ॥ सप्रपञ्चपरब्रह्माभिधायिनी सूर्यदेवत्यातिजगती-वामदेवदृष्टा। हन्त्यहङ्कारमिति हंसो भगवानादित्य एवंविधः तं प्रत्यवतरामीति वाक्यशेषः। किम्भूतो हंसः शुचिषत् शुचौ दीप्तौ सीदतीति शुचिषत् आदित्यरूपेण। तथा वसुर्वासयिता नराणां प्रवर्तकः अन्तरिक्षे सीदतीत्यन्तरिक्षसत् वायुरूपेण। होता आह्वाता देवानाम् वेदौ सीदतीति वेदिषत् अग्निरूपेण। अतिथिः सर्वेषां पूज्यः। दुरोणे यज्ञगृहे सीदतीति दुरोणसत् आहवनीयादिरूपेण। नृषु मनु-

१——१५,६,२३। २——१५,६,२४। ३——१५,६,२५।

प्रेरयेत् ॥ धुर्यदैवतम् । हे धुर्य मरुतां देवानां प्रसवेनाज्ञया त्वं जय शत्रूनिति शेषः ॥ का० गवां मध्ये स्थापयत्यापामेति[१] । पूर्वमेवाहवनीयोत्तरतः स्थापितानां गवां मध्ये तं रथं स्थापयेत् ॥ यजमानदैवत्यम् । वयं मनसा सह आपाम प्राप्तवन्तो यदुपक्रान्तं तत्कर्म ॥ का० धनुरार्त्न्योपस्पृशति गां यजमानः समिन्द्रियेणेति[२] । धनुःकोट्या गां स्पृशेत् ॥ यजमानदैवत्यम् । वयमिन्द्रियेण वीर्येण सङ्गताः स्म ॥ २१ ॥

का० तावद्भूयो वा गोस्वामिने दत्वा पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मातइति[३] । स्थापितगवां पतयें स्वभावे तावत् शतमधिकं वान्यद्दत्वा यूपात्पूर्वदिशि परीत्यान्तःपात्यदेशे रथं स्थापयेत् ॥ इन्द्रदेवत्या त्रिष्टुप् संवरणदृष्टा । हे वज्रहस्त वज्रं

माॅतइन्द्रतेवयन्तुराषाडयुक्तासोअब्रह्मताविदसाम । तिष्ठारथमधियंवज्रहस्तारश्मीन्देवयमसेस्वश्वान् ॥ २२ ॥

अग्नयेगृहपतयेस्वाहासोमायवनस्पतयेस्वाहामरुतामोजसेस्वाहेन्द्रस्येन्द्रियायस्वाहा ।

हस्ते यस्य तत्सम्बुद्धिः हे देव दीप्यमान त्वं यं रथमधि तिष्ठ लडर्थे लोट् अधितिष्ठसि । द्व्यचोऽतस्तिङ इति दीर्घः । यस्य च रश्मीन् प्रग्रहानायमसे आयच्छसि । किम्भूतान् रश्मीन् स्वश्वान् शोभना अश्वा येषु तान् । हे तुराषाट् तूर्णं सहते शत्रूनभिभवतीति तुराषाट् हे इन्द्र ऐश्वर्ययुक्त ते त्वदीया वयं ते तव तस्मिन् रथे अयुक्ताः तस्माद्भिन्नाः सन्तो मा विदसाम दस उपक्षये विविधमुपक्षीणा मा भवाम । तत्र दृष्टान्तः अब्रह्मता लुप्तोपमानम् अब्रह्मतेव ब्रह्म विज्ञानानन्दस्वभावमनश्वरम् तस्य भावो ब्रह्मता न ब्रह्मता अब्रह्मता यथा ब्रह्मभावादन्यहस्तु विदस्येदेवं वयं मा विदस्येमहीत्यर्थः ॥ २२ ॥

१—१५,६,१९ । २—१५,६,२० । ३—१५,६,२२ ।

पालाशेनाभिषेकपात्रेणाभिषेकोदकशेषानाग्नीध्रीयाग्नेरुत्तरभागे जुहोति ॥ रुद्रदेवत्यम् । हे रुद्र यत्ते तव क्रिवि कर्तृ हिंसितृ वा परमुत्कृष्टं नामास्ति । क्रिवि हिंसाकरणयोः इप्रत्ययः । एवं रुद्रं सम्बोध्य होमद्रव्यमाह । हे हविः तस्मिन् रुद्रनाम्नि त्वं हुतमसि अमेष्टं चासि अमाशब्दो गृहवाची[1] मदीये गृहे इष्टं दत्तमसि स्वाहा सुहुतमस्तु ॥ २० ॥

का० वाजपेयवद्रथमवहृत्य दक्षिणस्यां वेदिश्रोणौ युनक्ति पूर्ववन्मित्रावरुणयोरिति चतुर्भिरिति[2] । वाजपेये इव रथवाहणाद्रथमिन्द्रस्य वज्रोसीति मन्त्रेण भूमाववतार्य मित्रावरुणयोरिति मन्त्रेण चतुर्भिरश्वैर्वाजपेयवदेव युनक्ति प्रत्यक्षं मन्त्रः इन्द्रस्य वज्रोऽसीत्येव मन्त्रो न वाजपेयसम्बन्धी सर्वः तावन्मात्रस्यैवात्र पाठात् पूर्ववदिति धूर्गृहीतं दक्षिणश्रोणिदेशे वेद्यामानीय युनक्ति पूर्वं दक्षिणं

**इन्द्रस्य वज्रोऽसि मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि । अव्यथायै त्वा स्वधायै त्वारिष्टो अर्जुनो मरुतां प्रसवेन जयापाम मनसा समिन्द्रियेण ॥ २१ ॥**

तत उत्तरं ततो दक्षिणप्रष्टिं ततः सव्यप्रष्टिम् अनिर्देशात्त्रयाणां योजने प्राप्ते चतुर्भिरित्युक्तमिति सूत्रार्थः ॥ रथदेवत्यम् । हे रथ त्वमिन्द्रस्य वज्रोऽसि ॥ युनक्ति । रथदेवत्यम् । प्रशास्त्रोः मित्रावरुणयोः देवयोः प्रशिषा प्रशासनेन हे रथ त्वां युनज्मि योजयामि ॥ का० अव्यथायै त्वेति सुन्वन्नारोहतीति[3] । यजमानश्चात्वालदेशस्थः रथमारोहति ॥ रथदेवत्यम् । अरिष्टोऽनुपहिंसितः अर्जुनोऽर्जुनतुल्य इन्द्र इत्यर्थः । अर्जुनो ह वै नामेन्द्र इति[4] श्रुतेः। एवम्भूतोहं हे रथ त्वा त्वामव्यथायै । व्यथ भयचलनयोः । अभयाय अचलनाय वा । स्वधायै अन्नरसाय च त्वामधितिष्ठामि॥ का० मरुतामिति दक्षिणधुर्यं प्राजतीति[5] । यजमानेन सहारूढो यन्ता दक्षिणाश्वं कशया

१——निघ० ३,४,११ । २——१५,६,१३ । ३——१५,६,१० । ४——५,४,३,७ । ५——१५,६,१८ ।

विष्णोर्व्यापनशीलस्य यज्ञपुरुषस्य जगदीश्वरस्य त्रिविक्रमावतारस्य विक्रमणं प्रथमपादप्रक्षेपेण जितो भूलोकोऽसि । हे द्वितीय प्रक्रम त्वं विष्णोः विक्रान्तं द्वितीयपादप्रक्षेपेण जितमन्तरिक्षमसि । हे तृतीय प्रक्रम त्वं विष्णोः क्रान्तं तृतीयपादप्रक्षेपेण जितं त्रिविष्टपमसि । इदं मन्त्रत्रयं लोकत्रयजये हेतुभूतं तित्तिरिराह विष्णुक्रमान् क्रमते विष्णुरेव भूत्वेमांल्लोकानभिजयतीति । इमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तमिति[1] श्रुतेः ॥ १९ ॥

का० शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धे प्रजापतइति[2] । ततः सदसः शालाया मागत्य पुत्रेऽन्वारब्धे शालाद्वार्येऽग्नौ जुहोति ॥ प्रजापतिदेवत्या त्रिष्टुब्यजुर्मध्या तृतीयचतुर्थपादमध्येऽयममुष्येतियजुर्युक्ता । हे प्रजापते त्वत्तः अन्यो देवताविशेषः तानि एतानि

प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव । यत्कामास्तेजुहुमस्तन्नोअस्त्वयममुष्यपितासावस्य

पितावयꣳस्यामपतयोरयीणाꣳस्वाहा । रुद्रयत्तेक्रिविपरन्नामतस्मिन्हुतमस्यमेष्टमसिस्वाहा ॥ २० ॥

विश्वा विश्वानि सर्वाणि रूपाणि नानाजातीयानि वर्तमानभूतभविष्यत्कालविषयाणि न परिबभूव परिभवितुं समर्थो नाभूत् । परिभवः सृष्टिरप्युपलक्षणम् त्वदन्यो देव एतानि भूतानि स्रष्टुं संहर्तुं चाप्यशक्त इत्यर्थः । अतो वयं यत्कामास्ते जुहुमः यः कामो येषां ते यत्कामाः येन कामेन त्वां जुहुमः तत्कामरूपं फलं नोऽस्माकमस्तु ॥ यजुर्व्याख्यायते । अयममुष्य पितेति पुत्रं पित्रीकृत्य तयोर्नाम गृह्णाति अयं रामोऽमुष्य दशरथस्य पिता । असावस्य पितेति यथायथमेव नामग्रहः यथा असौ दशरथोऽस्य रामस्य पितेति ॥ सर्वथा सपुत्रा वयं रयीणां धनानां पतयः स्याम भवेम ॥ का० आग्नीध्रीये पालाशेन शेषान् जुहोति रुद्र यत्तइत्युत्तरार्धइति[3] ।

१—५,४,२,६ । २—१५,६,११ । ३—१५,६,१२ ।

मावीस्याचातुर्मास्यादीनि विद्यन्ते यस्य स पर्वतस्तस्य। पर्वमरुभ्यां त इति तप्रत्यय। किम्भूता नाव: स्वसिच: स्वेनैवात्मनैव सिञ्चन्ति स्वसिच:। तथा इयाना: यन्तीत्येवंशीला:। इयाना: एतेस्ताच्छील्यवयोवचनशक्तिषु चानशिति चानशप्रत्यय: चित्वादन्तोदात्तं पदम्। गमनशीला: ता हि आदित्यमण्डलं प्राप्य मध्यस्थानमागच्छन्ति मध्यस्थानात्पृथिवीम्। तदुक्तम्। अग्नौ प्रास्ताहुति: सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं तत: प्रजा इति[1]। ता आहुतिपरिणामभूता आप आदित्यमण्डलं प्राप्याधराक् आववृतन् अधस्तादावर्तन्ते वृतेर्णिजन्ताल्लुङि रगागमश्छान्दस:। किम्भूतास्ता: उदक्ता: ऊर्ध्वमक्ता:। अञ्चु गतिपूजनयो:। ऊर्ध्वं गता: सत्य:। अहिं मेघमनु रीयमाणा: मेघमनुसरन्त्य: रीयतिर्गत्यर्थ:। किम्भूतमहिं बुध्न्यं बुध्नमन्तरिक्षं तत्र भवो बुध्न्य: अन्तरिक्षे वर्तमानम्॥ यद्वायमर्थ:। पर्वतशब्देनादित्य उच्यते वृषभस्य वर्षितु: पर्वतस्यादित्यस्य पृष्ठादियाना: निर्गच्छन्त्यो नाव: स्तुत्या आप: प्रचरन्ति सर्वतो गच्छन्ति किम्भूता: स्वसिच: स्वयं सेक्त्र्य: आदित्योपरिष्टादापो नाव्या उच्यन्ते। तथा च श्रुति:। नाव्या आप एव यजुष्मत्य इष्टका इत्युपक्रम्य षष्टिश्च वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्तीत्याह[2]। ता उदक्ता व्यक्ता: सत्य: बुध्न्यमन्तरिक्षस्थमहिं मेघमनुरीयमाणा अनुप्रविश्य गच्छन्त्य: सद्य: प्रावृट्काले अधराक् अधस्ताद्भूमिं प्रति आववृतन् आवर्तन्ते आगच्छन्ति॥ यद्वायमर्थ ऋचोऽस्या:। वृषभस्य वर्षणसमर्थस्य पर्वतस्य हिमवदित्यादे: पृष्ठादियाना गच्छन्त्यो वहन्त्यो नाव्या नौतार्या महानद्यो गङ्गाद्या: प्रचरन्ति स्वसिच: स्वमात्मीयं यजमानक्षेत्रं सिञ्चन्ति ता: ता एव नद्योऽधराक् अधस्तात् आववृतन् राजसूययाजिनोऽर्थायावर्तन्ते। किम्भूता: उदक्ता: अभिषेकपात्रेषु उत्क्षिप्ता: प्रक्षिप्ता:। तथा बुध्न्यं बुध्नशब्देन मूलमुच्यते तत्र भवं बुध्न्यं प्रधानमित्यर्थ:। अहिं महान्तं शत्रूणां यजमानमनु रीयमाणा: यजमानं प्रति सिच्यमाना:॥ का० चर्मणि त्रिर्विक्रमयति विष्णोरिति प्रतिमन्त्रमिति[3]। अध्वर्युर्यजमानेन व्याघ्रचर्मणि त्रिभिर्मन्त्रैस्त्रिवारं पादप्रक्षेपं कारयेत्॥ त्रीणि यजूंषि यजमानदेवत्यानि। हे मदीय प्रथम प्रक्रम त्वं

१——मनु: ३,७६। २——१०,५,६,१४ ३——१५,६,९।

इमं देवाः। व्याख्यातापि[१] व्याख्यायते। हे देवाः सोमादयो दशरथस्य पुत्रं कौशल्यायाः पुत्रं कोशलायै विशे प्रजायै तिष्ठन्त मिमं राममसपत्नं शत्रुरहितं कृत्वा महते चत्राय महते ज्येष्ठत्वाय महते जानराज्यायेन्द्रस्येश्वर्यार्थं यूयं सुवध्वं प्रेरयध्वम्। हे अमी कोशला एष रामो वो युष्माकं राजा अस्माकं ब्राह्मणानां तु सोमो राजा। एतावन्तं मन्त्रं पठित्वा पुरोहितो ऽध्वर्युर्वाभिषिञ्चेत्॥ राजभ्रातुर्मन्त्रमाह। अग्नेर्भ्राजसाभिषिञ्चामि चत्राणामित्यादिरिन्द्रस्येन्द्रियायेत्यन्तो मन्त्रः। हे यजमान अग्नेर्वैश्वानरस्य भ्राजसा तेजसा त्वामभिषिञ्चामि चत्राणामित्यादिः पूर्ववद्व्याख्या॥ राजमित्रमन्त्रमाह। सूर्यस्य वर्चसाभिषिञ्चामि चत्राणामित्यादि पूर्ववत्।

प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः। ता आववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनु रीयमाणाः।

विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि॥ १९॥

हे यजमान सूर्यस्य तेजसा त्वामभिषिञ्चामि। अन्यत्पूर्ववत्॥ वैश्यमन्त्रमाह। इन्द्रस्येन्द्रियेणाभिषिञ्चामि चत्राणामित्यादि पूर्ववत्॥ अन्त्या तु दुग्धादिशब्दैर्वीर्याख्येव व्याख्यातानि॥ १८॥

का॰ कण्डूयन्त्याभिषेकेण प्रतिलिम्पते प्र पर्वतस्येति[२]। यजमानः कृष्णविषाणया कृत्वाभिषेकोदकेन स्वाङ्गलग्नेन स्वाङ्गं लिम्पति॥ अब्देवत्या त्रिष्टुप्। प्रेत्युपसर्गश्चरन्तीति पदेन सम्बध्यते। नावः प्रचरन्ति। नूयन्ते स्तूयन्ते स्तोत्रशस्त्रमन्त्रैरिति। नावः यद्वा नुदन्ति प्रेरयन्ति फलप्राप्तौ ता नावः। आहुतिपरिणामभूता आपः प्रचरन्ति गच्छन्ति आदित्यमण्डलं प्रति। ग्लानुदिभ्यां डौरिति नुदतेर्डौप्रत्ययः। किं कृत्वा वृषभस्य वर्षितुरग्नेः पृष्ठात्पृष्ठप्रदेशात् उत्थायेति शेषः। किम्भूतस्य वृषभस्य पर्वतस्य पर्वाणि पौर्णमास्य-

१——१५० ४० क०। २——१५,६,८।

का० क्षिप्रं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात्पालाशेन प्रथमं पश्चादितरे द्वितीयेन स्व तृतीयेन मित्रो राजन्यो वैश्यश्च-तुर्थेन सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्र मभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात् क्षत्राणां क्षत्रपतिरेधीति चेम ममुष्ये ति च प्रथमो देवसूव-दिति[१]। अस्यार्थः। रुक्मसहितव्याघ्रचर्मणि प्राङ्मुखमवस्थितं राजानं पुरोहितादयः पुरस्तादवस्थायाभिषिञ्चेयुः। पालाशोदुम्बरन्य-ग्रोधाश्वत्थानि चतुर्विधान्यभिषेकजलपात्राणि स्थापितानि। तत्र पालाशपात्रेण पुरोहिताध्वर्य्वोरन्यतरः प्रथम मभिषिञ्चेत्। इतरे स्वादयः पश्चादवस्थिता अभिषिञ्चेयुः तानेवाह। स्वो राज्ञो भ्राता द्वितीयेनौदुम्बरपात्रेण। मित्रभूतः कश्चित् क्षत्रियस्तृतीयेन वटपात्रेण। वैश्यश्चतुर्थेनाश्वत्थपात्रेणाभिषिञ्चति। चतुर्णामभिषेक्तॄणां क्रमेण सोमस्याग्नेः सूर्यस्येन्द्रस्येति चत्वारो मन्त्राः। अभिषिञ्चामीति

इमन्देवाअसपत्नꣳसुवध्वम्महतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येन्द्रियाय।

इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशएषवोमीराजासोमोस्माकम्ब्राह्मणानाꣳराजा ॥ १८ ॥

पद मग्रिमेषु त्रिषु मन्त्रेष्वनुवर्तते। क्षत्राणा मित्ययमर्थोऽपि प्रथमादिमन्त्रेषु योज्यः। इम ममुष्ये ति मन्त्रं प्रथमः पुरोहितोऽध्वर्युर्वा देवसूहविःष्विव नामग्रहणयुक्तं पठति। प्रथमग्रहणादन्येषा मिमममुष्येति मन्त्रशेषो न भवति ब्राह्मणानां राजेति मन्त्रलिङ्गादिति सूत्रार्थः॥ चतुर्णां मन्त्राणां यजमानो देवता। हे यजमान सोमस्य द्युम्नेन चन्द्रस्य यशसा त्वा त्वामभिषिञ्चामि तेनाभिषिक्तः सन् क्षत्राणां क्षत्रपतिरेधि क्षत्रियाणां सर्वेषां मध्ये क्षत्रपतिः क्षत्रियेश्वरः एधि भव अति दिद्यून्पाहि। दो अवखण्डने द्यन्ति खण्डयन्ति दिद्यवो बाणाः। इषवो वै दिद्यव इषुबधमेवैनमेतदतिनयतीति[२] श्रुतेः ताननतिक्रम्य शत्रुप्रयुक्तानिष्वादीनपसार्य इमं यजमानं हे सोम त्वं पाहि पालय॥ १७॥

१——१५,५,३०-३३.   २——५,४,२,२।

वरुणौ पुरुषो गर्त इति[1] श्रुतिरध्यात्मविषयं व्याचष्टे। पुरुपारोहणानन्तरमदितिमखण्डितां स्वसेनां दितिं खण्डितां परसेनां चक्षाथां क्रमेणानुग्रहनिग्रहदृष्ट्या समीक्षेयाम्। तौ कौ यौ युवा सुभो हौ उषसो विरोके रात्रेः समाप्तौ उदिथः उदयं कुरुथः। एतेर्लटि मध्यमद्विवचने इथ इति रूपम्। सूर्योदयानन्तरं स्वस्वव्यापारे प्रवर्तेथे इत्यर्थः। सूर्यश्च उदेति ययोर्युवयोः कार्यसम्पादनायेत्यर्थः। किंभूतौ युवां हिरण्यरूपौ हिरण्यवद्रूपं ययोस्तौ सुवर्णखचितकटकाद्यलङ्कारेण हिरण्यवद्भासमानौ। तथा इन्द्रौ सामर्थ्योपेतौ॥ एवमध्यात्मम् अर्थः। अधिदैवं त्वयमर्थः। हे वरुण हे मित्र मित्रावरुणौ देवविशेषौ युवां गर्तं रथोपरिभागं गर्त्तसदृशमारोहतम्। परवाणेभ्यो रक्षितुं चर्मकीलकादिभिराच्छादितो रथस्योपरिभागो गर्तसदृशो भवति। रथोऽपि गर्त उच्यते गृणाति स्तुतिकर्मण इति[2]

त॒तश्च॑क्षाथा॒मदि॑ति॒न्दिति॑ञ्च मि॒त्रो॑सि॒ वरु॑णोसि ॥ १६ ॥

सोम॑स्य॒त्वा द्यु॒म्नेना॒भि षि॑ञ्चाम्य॒ग्नेर्भ्राज॑सा॒ सूर्य॑स्य॒ वर्च॑सेन्द्र॑स्येन्द्रि॒येण॑। क्ष॒त्राणां॑ क्ष॒त्रप॑तिरे॒ध्यति॑ दि॒द्यून्पा॑हि ॥ १७

यास्कोक्तो गर्तो रथः। यौ युवा मुषसो विरोके उषःकालानन्तरम् उदिथः उद्गच्छथः सूर्यश्च तदा उदेति। किंभूतौ हिरण्यरूपौ अतितेजस्विनौ। इन्द्रौ परमेश्वरौ। ततो रथारोहनानन्तरमदितिं दितिं च युवां चक्षाथाम् अदितिमदीनं विहितानुष्ठातारं दितिं दीनं नास्तिकवृत्तं च पश्यतम् अयं पापी अयं पुण्यवानिति युवां पश्यतमित्यर्थः। अमुमर्थं श्रुतिराह ततः पश्यतं स्वं चारणं चेत्थैवैतदाहेति[3]। काँ० मित्रोऽसि वरुणोऽसीति वा[4]। अनेन मन्त्रेण वा बाहू उद्गृह्णाति। हे वामबाहो मित्रोऽसि हे दक्षिणबाहो त्वं वरुणोऽसि ॥ १६ ॥

१——५,४,१,१५। २——निरु० ३,५। ३——५,४,१,१५। ४——१५,५,२९।

एवमाम्नातः। एकादशभ्यो हिङ्करोति स तिसृभिः स सप्तभिः एकयैकादशभ्यो हिङ्करोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिङ्करोति स सप्तभिः स एकया स तिसृभिरन्तो वै त्रयस्त्रिंश इति[1]। प्रथमपर्याये प्रथमां त्रिर्गायेन्मध्यमां सप्तकृत्व उत्तमां सकृत् द्वितीय पर्याये प्रथमां सकृन्मध्यमां त्रिरुत्तमां सप्तकृत्वः तृतीयपर्याये प्रथमां सप्तकृत्वो मध्यमां सकृदुत्तमां त्रिर्गायेत् सोऽयं त्रयस्त्रिंशः स्तोमः सर्वेषां स्तोमानामन्तः॥ का० आक्रम्य पादेन सीसं निरस्यति प्रत्यस्तमिति[2]। व्याघ्रचर्मपश्चाद्भागे निहितं सीसमाक्रम्य पादेन क्षिपेत्॥ असुरदेवत्यम्। नमुचेरसुरस्य शिरो मस्तकं प्रत्यस्तम्। अस्य क्षेपणं प्रतिगृह्य क्षिप्तं सीसरूपेण ॥ १४ ॥

का० व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति[3]। अभिषेकार्थं राजानं व्याघ्रचर्मणि स्थापयेत्॥ चर्मदैवत्यम् व्याख्यातम्[4] ॥ का०

सोमस्यत्विषिरसितवेवमेत्विषिर्भूयात्। मृत्योःपाह्योजोसिसहोस्यमृतमसि ॥ १५ ॥

हिरण्यरूपाउषसोविरोकउभाविन्द्राउदिथःसूर्यश्च। आरोहतंवरुणमित्रगर्त्त

रुक्ममधःपदं कुरुते मृत्योरिति[4]। पादतले हिरण्यं कुर्यात्॥ रुक्मदैवतम्। हे सुवर्ण मृत्योः सकाशान्मां पाहि पालय॥ का० शिरसि च नवतृण्णं शततृण्णं वौजोऽसीति[5]। नवच्छिद्रं शतच्छिद्रं वा सौवर्णमण्डलं यजमानशिरसि कुर्यात्॥ रुक्मदैवतम्। हे हिरण्य त्वमोजोऽसि अमुं जेष्यामीति मनोवृत्तिरोजः तद्रूपं त्वमसि। शारीरं बलं सहस्तद्रूपमसि। अमृतं विनाशरहितं त्वमसि ॥ १५ ॥

का० बाहू उद्गृह्णाति हिरण्यरूपाइति[6]। यजमानबाहू ऊर्ध्वौ करोति॥ मित्रावरुणदेवत्या त्रिष्टुप् यजुरन्ता मित्रोऽसीति यजुः। हे वरुण शत्रुनिवारक दक्षिणबाहो हे मित्र सखिवत्पालक वामबाहो तौ युवां गर्तं पुरुष मारोहत मारोहणं कुरुतम्। बाहू वै मित्रा-

१——ता० ब्रा० ३,३। २——१५,५,२४। ३——१५,५,२५। ४——१५,५,२६। ५——१५,५,२७। ६——१५,५,२८।

वैराजं साम । एकविंशः स्तोमः । शरदृतुः । फलं यज्ञफललक्षणं । द्रविणं धनम् । एते त्वा मवन्तु ॥ एकविंशस्तोमस्त्वेव माम्नातः सप्तभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स तिसृभिः सप्तसप्तिन्येकविंशस्य विष्टुतिरिति[1] । प्रथमपर्याये प्रथममध्यमे त्रिर्गायेदुत्तमां सकृत् द्वितीयपर्याये प्रथमां सकृद्गायेन् मध्यमोत्तमे त्रिः तृतीयपर्याये मध्यमां सकृद्गायेत् प्रथमोत्तमे त्रिरित्येकविंशस्तोमस्य विष्टुतिः सप्तसप्तिनीतुरच्यत-इत्यर्थः ॥ १३ ॥

अथ पञ्चमो मन्त्रः । हे यजमान ऊर्ध्वां दिश मारोह । पङ्क्तिः छन्दः । प्रो ष्वस्मै पुरोरथमित्येतस्या[2] ऋच्युत्पन्नं शाक्वरं साम

ऊर्ध्वामारोह पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रि ँशौ स्तोमौ हेमन्त

शिशिरावृतू वर्चो द्रविणं प्रत्यस्तं नमुचेः शिरः ॥ १४ ॥

रेवतीर्नः सधमाद इत्येतस्या[3] ऋच्युत्पन्नं साम रैवतम् त्रिणवत्रयस्त्रिंशौ स्तोमौ । हेमन्तशिशिरावृतू । वर्चस्तेजो ब्रह्मवर्चसं वा । द्रविणम् । एते त्वा मवन्तु । यद्वा वर्चस्तेजोऽभिमानी देवस्ते धनं रक्षतु ॥ त्रिणव स्तोम एवमाम्नातः नवभ्यो हिङ्करोति स तिसृभिः स पञ्चभिः स एकया नवभ्यो हिङ्करोति स एकया स तिसृभिः स पञ्चभिर्नवभ्यो हिङ्करोति स पञ्चभिः स एकया स तिसृभिर्वज्रो वै त्रिणव इति[4] । प्रथमपर्याये प्रथमां त्रिर्गायेन्मध्यमां पञ्चकृत्वः उत्तमां सकृत् द्वितीयपर्याये प्रथमां सकृद्गायेन्मध्यमां त्रिरुत्तमां पञ्चकृत्वः तृतीयपर्याये प्रथमां पञ्चकृत्वो मध्यमां सकृदुत्तमां त्रिर्गायेत् सोयं त्रिरावृत्तनवसङ्ख्योपेतत्वात्त्रिणवनामको वज्रसमानः स्तोमः ॥ त्रयस्त्रिंशस्तोम

१—ता० ब्रा २,१४ । २—उ० आ० ६,१,१४,१ । ३—छ० आ० २,२,१,९ । ४—ता० ब्रा० ३,१ ।

स एकया स तिसृभिः पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिरिति पूर्वोक्तस्त्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः । अन्ये तु स्तोमा एकेनैव तृचात्मकेन सूक्तेन निष्पाद्यन्ते तत्राद्य क्रमः प्रथमपर्याये आवृत्तिः पञ्चभिस्तत्राद्यो तिसृभिर्ऋग्भिर्गायेत् इतरे द्वे सकृत्सकृद्गायेत् । द्वितीयपर्याये प्रथमां सकृत् मध्यमां तिसृभिः तृतीयां सकृत् । तृतीयपर्याये आद्ये द्वे सकृत् तृतीयां तिसृभिरिति पञ्चदशस्तोमसम्बन्धिनी विष्टुतिः पञ्चपञ्चिनीत्यभिधीयत इत्यर्थः ॥ ११ ॥

अथ तृतीयो मन्त्रः । हे यजमान त्वं प्रतीचीं दिशमारोह । जगती छन्दः त्वा अवतु । यद्द्याव इन्द्र ते शतं[1] मित्यस्यामुत्पन्नं वैरूपं साम । सप्तदश स्तोमः । वर्षा ऋतुः । विट् वैश्यजातिलक्षणं द्रविणम् । एते त्वा अवन्तु । यद्वा वैश्यजातिस्ते द्रविणं भवतु ॥ सप्त-

प्रतीचीमारोह जगती त्वावतु वैरूपꣳ साम सप्तदश स्तोमो वर्षा ऋतुर्विड् द्रविणम् ॥ १२ ॥

उदीचीमारोहानुष्टुप् त्वावतु वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलं द्रविणम् ॥ १३ ॥

दशस्तोमस्त्वेवमाम्नातः[2] पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिर्दशसप्ता सप्तदशस्य विष्टुतिरिति । प्रथमपर्याये प्रथमां त्रिर्गायेत् मध्यमोत्तमे सकृत् । द्वितीयपर्याये प्रथमोत्तमे सकृत् मध्यमां त्रिर्गायेत् । तृतीयपर्याये प्रथमां सकृद्गायेत् मध्यमोत्तमे त्रिरिति सप्तदशस्तोमस्य त्रिविधा स्तुतिर्दशसप्तेत्यभिधीयत इत्यर्थः ॥ १२ ॥

अथ चतुर्थो मन्त्रः । हे यजमान त्वमुदीचीं दिशमारोह । अनुष्टुप् छन्दः । पिबा सोममिन्द्र मन्दतु त्वा[3] एतस्यामुत्पन्नं

१—ऋ० सं० ३,२,४,६ । २—ताण्ड्य २,७ । ३—ऋ० सं० ५,१,१,८ ।

राक्षसादयोऽविष्टा नाशिता भवन्त्विति शेषः। तयो ऋतुरायौं बधस्तमेवैतद्रतिनयतीति श्रुतिः[1] ॥ का० सुन्वन्त माक्रमयन्दिशः प्राचो मारो-हेति वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गमिति[2]। यजमानं यथालिङ्गं प्रतिमन्त्रं प्रतिदिशं दिश आक्रमयन्वाचयति ॥ पञ्च यजूंषि यजमानदेवत्यानि। हे यजमान त्वं प्राचीं दिशं मारोह आक्रमस्व तथाविधं त्वां छन्दसां मध्ये गायत्री च्छन्दोऽवतु रक्षतु। साम्नां मध्ये अभि त्वा शूर नोनुमः[3] इत्यस्यामृच्युत्पन्नं रथन्तरं साम[4] त्वां रक्षतु। स्तोमानां मध्ये त्रिवृत्स्तोमोऽवतु। ऋतूनां मध्ये वसन्त ऋतुरवतु। ब्रह्म ब्राह्मणजातिस्त्वदीयं द्रविणं धनं रक्षतु यद्वा धनरूपा ब्राह्मणजातिस्त्वा भवतु ब्राह्मणादीनां धनसाधनत्वाद्धनत्वमुच्यते। त्रिवृत्स्तोमस्य स्वरूपं सामब्राह्मणे[5] आम्नातम्। तिसृभ्यो हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिरिति। अस्यायमर्थः। उपास्मै गायतेत्यादीनि तृचात्मकानि त्रीणि सूक्तानि सन्ति[6] तेषु तिसृभिर्ऋग्भिर्गायेत्। काभि

दक्षिणामारोह त्रिष्टुप्त्वावतु बृहत्साम पञ्चदशस्तोमो ग्रीष्मऋतुः क्षत्रं द्रविणम् ॥ ११ ॥

स्तिसृभिः। प्रथमया। त्रिष्वपि सूक्तेषु या प्रथमा तया स उद्गाता गायेत् तथा सति तिसृभिर्गीतं भवति सोयं प्रथमपर्यायः। द्वितीये पर्याये सूक्तत्रयगतयोत्तमया गायेत्। अनेन प्रकारेण त्रिवृत्स्तोमसम्बन्धिनी विशिष्टा स्तुतिः सम्पद्यते सेयं स्तुतिरद्यतीति नाम्ना सम्पद्यत इत्यर्थः ॥ १० ॥

अथ द्वितीयो मन्त्रः। हे यजमान त्वं दक्षिणां दिशं माक्रम। त्रिष्टुप् छन्दः। त्वामिद्धि हवामहे[7] इत्यस्यामृच्युत्पन्नं बृहत्साम[8] पञ्चदश स्तोमः ग्रीष्म ऋतुः द्रविणरूपं क्षत्रं क्षत्रियजातिः एते त्वामवन्तु क्षत्रं तव द्रविणं भवत्विति वा पञ्चदशस्तोमस्त्वेवमाम्नातः। पञ्चभ्यो हिंकरोति स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया

१–५,३,१,१। २–१५,५,१२। ३–ऋ० सं० ३,२,१। ४–आ०ग्रा० १,२,१,२१। ५–ताण्ड्य २,१। ६–उ०सं० १,१,१–९। ७–ऋ०सं० ३,२,५,२। ८–आ०गा० १,२,१,२।

आविर्मर्या इति वाचयतीति[1]। इषुसमर्पणानन्तर माविर्मर्या इत्यादीन् सप्त मन्त्रानाविन्मन्त्रान् यजमानं वाचयति। प्रजापतिदैवतं। मर्या इति मनुष्यनामसु पठितम्[2]। हे मर्या मनुष्या ऋत्विजो यूयमाविः। प्रकटा भवथेति शेषः। सम्यक् कर्मानुतिष्ठतेत्यर्थः। यद्वा हे मर्या ऋत्विजोऽयं यजमान आविः। प्रकटो युष्मत्समक्षं कथ्यते इति शेषः। आवित्तो अग्निर्गृहपतिः। सुपां सुलुगिति विभक्तिव्यत्ययैर्व्याख्यायते[3]। गृहपतये गृहपालकायाग्नयेऽयं यजमान आवित्तः आवेदितः ज्ञापितः। प्रथमान्तं पदद्वयं प्रतिमन्त्रं चतुर्थ्यर्थे॥ वृद्धं श्रवो धनं कीर्तिर्वा यस्य सः वृद्धश्रवाः तस्मै इन्द्रायायं यजमान आवित्तः॥ व्रतमिति कर्मनाम[4]। धृतं व्रतं कर्म याभ्यान्तौ धृतव्रतौ। ताभ्यां धारितकर्मभ्यां मित्रावरुणाभ्या मावित्तौ। आवित्तः आवेदितः। विश्ववेदसे सर्वज्ञाय पूष्णेऽय मावित्तः॥

पूषाविश्ववेदाआवित्तोद्यावापृथिवीविश्वशम्भुवावावित्तादितिरुरुशर्म्मा ॥ ९ ॥

अवेष्टादन्दशूकाःप्राचीमारोहगायत्रीत्वावतुरथन्तरꣳसामत्रिवृत्स्तोमोवसन्तऋतुर्ब्रह्मद्रविणम् ॥ १० ॥

विश्वस्य सर्वस्य शं सुखं भवति याभ्यां ते विश्वशम्भुवौ ताभ्यां द्यावापृथिवीभ्या मावित्ते वचनलिङ्गव्यत्ययः आवित्तः॥ उरु महत् शर्म शरणं सुखं वा यस्याः सा उरुशर्मा तस्यै अदितये आवित्ता आवित्तोऽयं यजमानः॥ यद्वा यथाश्रुतमेव व्याख्या गृहपतिरग्निरावित्त आवेदितो यजमानमिति शेषः। एवमग्रेऽपि ॥ ९ ॥

— का०— अवेष्टा इति लोहायस मास्यति केशवाप्ये सदोन्त उपविष्टायेति[5]। सदःसमीपोपविष्टस्य दीर्घकेशनरस्य मुखे ताम्रं क्षिपति॥ ऋतुरनाशनं यजुः। अवपूर्वो यजिर्नाशनार्थः। दन्दशूका अत्यर्थं दशनशीला मृतुरहेतवः सर्पसदृशा यज्ञविघ्नकारिणो

१——१५,५,२१। २——निघ० २,३,११। ३——५,३,५,२१-२७। ४——निघ० २,१,७। ५——१५,५,२२।

जरायु गर्भवेष्टनचर्म हे पाण्ड्व त्वमसि ॥ का० अधीवासं प्रतिमुञ्चेति[1]। कञ्चुकं गले बध्नाति। अधीवासदैवतम्। हे अधीवास त्वं क्षत्रस्य योनिरसि गर्भसम्भवस्थानं योनिः ॥ का० उष्णीषं संवेष्ट्य निवीते ऽवगूहते नाभिदेशे परिहरते वेति[2]। शिरोवेष्टनं शिरसि संवेष्ट्य तत्प्रान्तौ परिहितवासो नीव्यां गोपयति नाभिदेशे वेष्टयति वा। उष्णीषदैवतम्। हे उष्णीष त्वं क्षत्रस्य नाभिर्गर्भबन्धनस्थानमसि नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुः[3] ॥ का० इन्द्रस्य वार्त्रघ्नमिति धनुरातनोतीति[4]। अध्वर्युर्धनुरधिज्यं करोति। धनुर्दैवतम्। हे धनुस्त्वमिन्द्रस्य सम्बन्धि वार्त्रघ्नं वृत्रोऽनेन हन्यत इति वार्त्रघ्नं वृत्रनाशकं धनुरसि तदातनोमीति शेषः ॥ का० मित्रस्य वरुणस्येत्यस्य बाहू विमार्ष्टीति[5]। मित्रस्य वरुणस्येति मन्त्राभ्यामस्य धनुषो बाहू प्रान्तौ करेण प्रत्येकं विमार्ष्टि। बाहुदैवते यजुषी। हे दक्षिणकोटे त्वं मित्रसम्बन्धी भवसि हे वामबाहो त्वं वरुणसम्बन्धी भवसि ॥ का० धनुः

आविर्मर्याआवित्तोअग्निर्गृहपतिरावित्तइन्द्रोवृद्धश्रवाआवित्तौमित्रावरुणौधृतव्रतावावित्तः

प्रयच्छति त्वयायमिति[6]। यजमानाय धनुर्ददाति ॥ धनुर्दैवतम्। हे धनुः अयं यजमानस्त्वया धनुषा कृत्वा वृत्रं शत्रुं वधेत् हन्यात् ॥ का० दृवासीति प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति पातैनमिति प्रतिमन्त्रमिति[7]। दृवासीत्यादिमन्त्रत्रयेण बाणत्रयमादाय पातैनमित्यादिमन्त्रत्रयेण प्रत्येकं यजमानाय ददाति ॥ षड्यजूंषि इषुदेवत्यानि। हे इषो त्वं दृवासि दृ विदारणे दृणाति शत्रून्विदारयति दृवा। हे इषो त्वं रुजासि रुजो भङ्गे रुजति शत्रून् भनक्ति रुजा। हे इषो त्वं क्षुमासि क्ष्मायी विधूनने क्ष्मायति शत्रून् कम्पयति क्षुमा ॥ यजमानाय ददाति। हे इषवः प्राञ्चं प्रागञ्चनं पूर्वदिश्यवस्थितमेनं यजमानं यूयं पात पालयत। प्रत्यञ्चं प्रत्यगञ्चनं पश्चिमदिश्यवस्थितमेनं यजमानं पात। तिर्यञ्चं तिर्यगञ्चनमितस्ततोऽवस्थितमेनं यजमानं पात। दिग्भ्योऽन्याभ्योऽपि दिग्भ्यः सकाशादेनं पात रक्षत ॥ ८ ॥

१—१५,५,१२। २—१५,५,१३-१४। ३—निरु० ४,२१। ४—१५,५,१७। ५—१५,५,१८। ६—१५,५,१९। ७—१५,५,२०।

पूर्वीणाद्दितेषु चतुर्धा विभज्य निनयति। वरुणदेवत्या त्रिष्टुप्। या एता आपो वर्तन्ते कीदृश्यः सधमादः सह एकस्मिन् पात्रे माद्यन्ति हृष्यन्ति मादयन्ते प्रीणन्ति वा ताः सधमादः सहपूर्वान्मादयतेः क्विप् सधमादस्थयोश्छन्दसीति सहस्य सधादेशः। द्युम्निनीः द्युम्नं वीर्यमस्ति यासां ता द्युम्निन्यः पूर्वसवर्णदीर्घः। द्युम्नं द्योततेर्यशो वान्नं वेति[1] यास्कः। अनाधृष्टाः रक्षोभिरनभिभूताः। अपस्यः। अप इति कर्मनाम[2] अपसि कर्मणि साध्व्यः अपस्याः। तत्र साधुरिति यत्। सुपां सुलुगिति जसः सुरादेशः। वसानाः वस आच्छादने वसते आच्छादयन्ति पात्राणीति वसानाः। या एवंविधा आपस्तासु अन्तर्मध्ये वरुणो देवः सधस्थं सहस्थानं चक्रे कृतवान् सह स्थीयते यस्मिन् तत्सधस्थम्। किंभूतो वरुणः अपां शिशुः बालकः अपां वा एष शिशुर्भवति यो राजसूयेन यजत इति[3] श्रुतेः वरुणो

**क्षत्रस्योल्बमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्यासि वरुणस्यासि त्वयायं**

**वृत्रं वधेत्। दृवासि रुजासि क्षुमासि। पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पात ॥ ८ ॥**

राजसूययाजित्वादपां शिशुः। किंभूतासु पस्त्यासु। पस्त्यमिति गृहनामसु पठितम्[4] गृहरूपासु सर्वेषां माधारत्वात् तथा मातृतमासु अतिशयेन जगन्निर्मात्रीषु ॥ ७ ॥

का० ताप्यंप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम्[5]। ताप्यं परिधापयतीति[6]। ताप्यपाण्ड्वाधीवासोष्णीषाणि क्रमेण चतुर्भिर्यजुर्भिः परिधत्ते ताप्यं क्षौमं वल्कलं घृताक्तवस्त्रं वा। ताप्यदैवतम्। हे ताप्य त्वं क्षत्रस्य यजमानस्य उल्वं गर्भाधारभूतमुदकमसि। यजमानो गर्भस्थानीयः ॥ का० पाण्डुं निवस्त इति[7]। रक्तकम्बलं परिधत्ते। पाण्डुदैवतम्। क्षत्रस्य गर्भस्थानीयस्य यजमानस्य

१—निरु० ५,५। २—निघ० २,१,१। ३—५,३,५,१९। ४—निघ० ३,४,६। ५—१५,५,१५। ६—१५,५,७। ७—१५,५,१२।

स्य: व्याख्यातम्[1] ॥ का० ताभ्यामुत्पुनात्यपः सवितुर्व इति[2] । सद्दिरस्याभ्यां दर्भपवित्राभ्यां मैत्रावरुणधिष्ण्याग्रासादिता औदुम्बरपात्रस्था: अभिषेकार्था अप उत्पुनाति सवितुरित्यादिना राजस्व इत्यन्तेन मन्त्रेण । अन्वेत्यम् । सवितु: सर्वप्रेरकस्य परमेश्वरस्य प्रसवेऽनुज्ञायां स्थितोऽहम् अच्छिद्रेण छिद्ररहितेन समीचीनेन पवित्रेण सूर्यस्य किरणैर्वोत्पुनामि हे आपो वो युष्मान् उत्पवनं करोमि । अनिभृष्टमसि । आपोऽत्राभिधेया: अतोऽत्रैकवचनान्ता मन्त्रावयवा: श्रुत्या बहुवचनान्ता व्याख्याता: अत: श्रुत्यनुसारेण व्याख्यायते हे आपो यूय मनिभृष्टा: स्थ । भ्रस्ज पाके अयं धातुर्भृष्टार्थे व्याख्यात: अनिभृष्टा: न नितरां भृष्टा: । अपराभूता रक्षोभि: । वाचो बन्धु: वाण्या बन्धुभूता: यावद्ध प्राणेष्वापो भवन्ति तावद्वाचा वदतीति[3] श्रुते: । आपोमयी वागिति सामश्रुतेश्च ।

**अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि स्वाहा राजस्वः ॥ ६ ॥**

**सधमादो द्युम्निनीराप एता अनाधृष्टा अपस्यो वसानाः । पस्त्यासु चक्रे वरुणः सधस्थमपा शिशुर्मातृतमास्वन्तः ॥७॥**

तथा तपोजा: तप: शब्देनात्राग्निरुच्यते तपसोऽग्नेर्जातास्तपोजा: । अग्नेर्वै धूमो जायते धूमादभ्र मभ्राद्वृष्टिरग्नेर्वा एता जायन्ते तस्मादाह तपोजा इति[4] श्रुते: । वायोरग्निरग्नेराप इति[5] श्रुत्यन्तरात् । सोमस्य दात्रमसि सोमस्य दात्र्यो दानकर्त्र्यो भवथ यदा वा एनमेताभिरभिषुण्वन्त्यथाहुतिर्भवतीति[6] श्रुते: सोमदात्र्य आप: । स्वाहा राजस्व: स्वाहाकारेण पूता: सत्य: राजस्वो जनस्य राजानं सुवते जनयन्तीति राजस्व: राजजनिका भवथ ॥ ६ ॥

का० अभिषेचनीयेष्वेना व्यानयति सधमाद इति[7] । उत्पूता अभिषेकार्था अपोऽभिषेकार्थेषु पात्राग्यौदुम्बरवाटाश्वत्थेषु पात्रेषु

१—१ अ० १२ क० । २—१५,५,५ । ३—५,३,५,१६ । ४—५,३,५,१७ । ५—तै० आ० ८,१ । ६—५,३,५,१८ । ७—१५,५,६ ।

का० व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति[1] । मैत्रावरुणधिष्ण्यागारासादितपालाशादिपात्रचतुष्टयस्य पुरस्ताद्व्याघ्रचर्मास्तृणाति ॥ चर्मदेवत्यम् । हे चर्म त्वं सोमस्य त्विषिर्दीप्तिरसि भवसि अतस्तवेव त्वत्सदृशी मे मम त्विषिः कान्तिर्भूयात् यत्र वै सोम इन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिरिति[2] श्रुतेः ॥ का० पार्थानामग्नये स्वाहेति षट् जुहोति प्रतिमन्त्रम्[3] पार्थानामिन्द्राय स्वाहेति षट् जुहोति प्रतिमन्त्रमिति[4] । पार्थसंज्ञानां द्वादशमन्त्राणां मध्ये अग्नय इत्यादीनि षट् पार्थान्यभिषेकादौ जुहोति इन्द्रायेत्यादि षट् अभिषेकान्ते सकृद्गृहीताज्यैः ॥ लिङ्गोक्तानि द्वादश यजूंषि । अङ्गतीत्यग्निः । सुनोति सोमः । सूते सुवति

सोमस्यत्विषिरसितवेवमेत्विषिर्भूयात् । अग्नयेस्वाहासोमायस्वाहासवित्रेस्वाहासरस्वत्यैस्वाहापूष्णेस्वाहा

बृहस्पतयेस्वाहेन्द्रायस्वाहाघोषायस्वाहाश्लोकायस्वाहाꣳशायस्वाहाभगायस्वाहार्यम्णेस्वाहा ॥ ५ ॥

पवित्रेस्थोवैष्णव्यौसवितुर्वःप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ।

प्रेरयति वा सविता । सरः शब्दप्रवाहो यस्याः सा सरस्वती । पुष्णाति पूषा । बृहतां साम्नां पतिर्बृहस्पतिः । इन्दति ईष्टे इन्द्रः । घुष्यति शब्दं करोति घोषः । श्लोक्यते कीर्त्यते जनैरिति श्लोकः । अंशयति विभाजयति पुण्यपापे तत्फलदानेनेति अंशः । अंश विभाजने धातुः । भज्यते सेव्यते स भगः । इयर्ति व्याप्नोति विश्वमित्यर्यमा ॥ एतेभ्यः सुहुतमस्तु ॥ ५ ॥

का० पवित्रे कृत्वा हिरण्यमेनयोः प्रबध्नातीति[5] । प्रकृतिवत् पवित्रे स्थ इति पवित्रे कृत्वा तयोः स्वर्णं बध्नाति ॥ पवित्रे

१——१५,५,१ । २——५,३,५,३ । ३——१५,५,२ । ४——१५,५,३४ । ५——१५,५,४ ।

धेनुगर्भवेष्टनीयजलं पूर्वं गृहीतमस्ति यूप मुत्तरेण तत् होमादाने। शक्वरीः । शक्ल् शक्तौ अन्येभ्योऽपि दृश्यन्त इति वनिप्प्रत्ययः वनो र चेति ङीप् रेफश्च शक्नुवन्ति वाहदोहादिभिर्जगदुद्धर्तुमिति । शक्वर्यो गावस्तत्सम्बन्धिन्यो यूयं भवथ । का० पय इति[1] । दुग्धस्य होमपूर्वं ग्रहणम् । हे आपो यूयं जनभृतो भवथ बालभावे जनान् जन्तून् बिभ्रति पुष्णन्तीति जनभृतः । का० घृतमिति[2] । घृते होमादाने । हे घृतरूपा आपो यूयं विश्वभृतः विश्वं सर्वं जगद्देवादिकं बिभ्रति विश्वभृतो भवथ राष्ट्रदाः । एवं सारस्वत्यादयो घृतान्ताः समदशाप उक्ताः। का० आपः स्वराज इति मरीचीर्गृहीत्वा गृहीत्वाञ्जलिना सर्वासु संसृजतीति[3] । रविकरतप्ता आपो मरीचयस्ता अञ्जलिनादाय पूर्वगृहीतास्वप्सु योजयेत् प्रतिग्रहणमन्त्रः संसर्गस्तूष्णीम् । नात्र होमः षोडशाहुतीर्जुहोति द्वयीषु न जुहोति सारस्वतीषु च मरीचिषु चेति[4] श्रुतेः । हे आपो मरीचिरूपा यूयं स्वराजः स्व स्वेनैव राजन्ते ताः स्वराजः अनन्याश्रितराज्या भवथ राष्ट्रदाः अतोऽमुष्मै यजमानाय राष्ट्रं देयं दत्त । का० औदुम्बरे पात्रे समासिञ्चत्येना मधुमतीरिति[5] । एनाः सारस्वत्याद्या अप उदुम्बरकाष्ठपात्रे एकीकरोति मन्त्रावृत्तिः । अब्दैवत्यं यजुः । मधुमतीः मधुरसवत्य एता आपो मधुमतीभिर्मधुरस्वादोपेताभिरद्भिः पृच्यन्तां संसृज्यन्ताम् । किंभूता एताः महि महत्क्षत्रं बलं क्षत्रियाय राज्ञे यजमानाय वन्वानाः सम्भजमानाः ददत्य इत्यर्थः वनोतिः सम्भजनार्थः । का० मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधात्यनाधृष्टा सीदतेति[6] । औदुम्बरे पात्रे एकीकृतास्ता अपो मैत्रावरुणधिष्ण्याग्रे सदसि सादयति । अब्दैवत्यम् । हे आपो यूयं सीदत तिष्ठत किंभूता यूयम् अनाधृष्टाः अपराभूता रक्षोभिः । सहौजसः ओजसा सहिताः । बलयुक्ताः तथा महि महत् क्षत्रं बलं क्षत्रियाय राज्ञे दधतीः दधत्यः स्थापयन्त्यः ॥ ४ ॥

१—१५,४,२१ । २—१५,४,२२ । ३—१५,४,२५ । ४—५,३,४,२३ । ५—१५,४,२६ । ६—१५,४,२७ ।

मान्दाः स्थ । मन्दतेर्मोदनार्थस्य रूपं मन्दन्ते मोदन्ते भूतानि यत्र बहूदकत्वात्ता मान्दाः भवथ । का० कूप्या इति[1] । कूपे भवाः कूप्यास्तत् होमादाने । हे आपो यूयं व्रजक्षितो भवथ । व्रज इति मेघनामसु पठितम्[2] अत उदकधारणसामर्थ्यात्कूप उच्यते । व्रजे कूपे क्षियन्ति निवसन्ति व्रजक्षितः । का० प्रुष्वा इति[3] । प्रुष सेचने प्रुष्णन्ति ओषधीः सिञ्चन्तीति प्रुष्वाः अवश्यायरूपाः तृणाग्रेषु

त्तशविष्ठास्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशविष्ठास्थराष्ट्रदाराष्ट्रममुष्मैदत्तशक्करीस्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशक्करीस्थराष्ट्र

दाराष्ट्रममुष्मैदत्तजनभृतस्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाजनभृतस्थराष्ट्रदाराष्ट्रममुष्मैदत्तविश्वभृतस्थराष्ट्रदाराष्ट्रम्मे

दत्तस्वाहाविश्वभृतस्थराष्ट्रदाराष्ट्रममुष्मैदत्तापःस्वराजस्थराष्ट्रदाराष्ट्रममुष्मैदत्त । मधुमतीर्म्मधुमतीभिःपृच्यन्ता

म्महिक्षत्रङ्क्षत्रियायवन्वानाअनाधृष्टाःसीदतसहौजसोमहिक्षत्रङ्क्षत्रियायदधतीः ॥ ४ ॥

स्थितास्तासु वस्त्रक्षेपेण ता आत्ताः सन्ति ता यूष मुत्तरेण हुत्वा ग्राह्याः । वाशाः स्थ । वश कान्तौ उश्यन्ते जनैः काम्यन्तेऽन्ननिष्पत्तिहेतुत्वाद्वाशा यूयं भवथ । का० मध्विति[4] । मधुनि होमादाने । हे मधुरूपा आपो यूयं शविष्ठाः । शव इति बलनाम[5] बलिष्ठा बलदात्र्यो भवथ । त्रिदोषबलशमनत्वाद्बलकरं मधु । का० गोरुल्ब्या इति[6] । उल्वं गर्भवेष्टनं तत्र भवा उल्व्याः प्रसूयमान-

१——१५,४,२२ । २——निघ० १,१०,११ । ३——१५,४,२३ । ४——१५,४,२२ । ५——निघ० २,९,२ । ६——१५,४,२२ ।

युक्ता भवथ ॥ का० अपयतीरिति[1] । वहन्तीनामपां मध्यात्या मार्गान्तरेण गत्वा पुनस्तत्र मिलन्ति ता अपयत्यस्तासु होमादाने । हे आपो यूयं परिवाहिणीः स्थ परि सर्वतो वहन्तीति परिवाहिण्यः सर्वतो वहनशीला भवथ उक्तमन्यत् ॥ का० नदीपतिमिति[2] । समुद्रस्यापां होमादाने । अपां जलानां पतिः स्वामी पालकोऽसि । का० निवेष्यादिति[3] । निवेष्य आवर्त्तस्तद्भवा निवेष्याः नद्यादौ यत्राम्भोभ्रमस्तत्र होमादाने । हे जलभ्रम त्वमपां गर्भो मध्यवर्ती भवसि ॥ ३ ॥

सूर्य्यत्वचसस्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा सूर्यत्वचसस्थ राष्ट्रदा राष्ट्रममुष्मै दत्त सूर्यवर्चसस्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा सूर्यवर्चसस्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दास्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा मान्दास्थ राष्ट्रदा राष्ट्रममुष्मै दत्त व्रजक्षितस्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा व्रजक्षितस्थ राष्ट्रदा राष्ट्रममुष्मै दत्त वाशास्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा वाशास्थ राष्ट्रदा राष्ट्रममुष्मै द

का० स्यन्दमानानां स्थावराः प्रत्यातापइति[4] । वहदपां मध्ये याः स्थिराः सदा घर्मे वर्तमानास्तासु होमादाने । हे आपो यूयं सूर्यत्वचसो भवथ सूर्यस्येव त्वचस्त्वक् यासां ताः सूर्यत्वचसः सदातापे वर्तमानत्वात् त्वचःशब्दः सान्तस्त्वग्वाची । का० अन्तरिक्षात्प्रतिगृह्यातपवर्ष्या इति[5] । आतपे वर्षति सति गगनादप आदायादौ सम्पादिताः सन्ति यूपमुत्तरेण तासु होमादाने । सूर्यस्येव वर्चस्तेजो यासां ताः सूर्यवर्चसः तादृश्यो भवथ । का० सरस्या इति[6] । तडागभवास्वप्सु होमादाने । हे आपो यूयं

१——१५,४,२६ । २——१५,४,२७ । ३——१५,४,२९ । ४——१५,४,३० । ५——१५,४,३१ । ६——१५,४,३२ ।

देहि स्वाहा हविर्दत्तमस्तु। एवं हुत्वाथ गृह्णाति वृष्ण ऊर्मिरसि राष्ट्रदा अतोऽमुष्मै यजमानाय राष्ट्रं जनपदं देहि अमुष्मै इति चतुर्थ्यन्तं यजमाननाम ग्राह्यम्। एव मुपरितना अपि मन्त्रा व्याख्येयाः। अपरोर्मिं गृह्णाति वृषसेनोऽसि वृषा सेचनसमर्था सेना जलराशिरूपा यस्य स वृषसेनः व्याख्यातमन्यत्॥ २॥

अर्थेतस्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहार्थेतस्थराष्ट्रदाराष्ट्रममुष्मैदत्तौजस्वतीस्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहौजस्वतीस्थ राष्ट्रदाराष्ट्रममुष्मैदत्तापःपरिवाहिणीस्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहापःपरिवाहिणीस्थराष्ट्रदाराष्ट्रममुष्मैदत्ता पाम्पतिरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापाम्पतिरसिराष्ट्रदाराष्ट्रममुष्मैदेह्यपाङ्गर्भोसिराष्ट्रदाराष्ट्रम्मे देहिस्वाहापाङ्गर्भोसिराष्ट्रदाराष्ट्रममुष्मैदेहि॥ ३॥

का० स्यन्दमाना इति[१]। नद्यादिप्रवाहस्था अपो गृह्णाति। अर्थेतः अर्थं प्रयोजन मुद्दिश्य नद्यादेः सकाशाद्यन्नदेशं यन्ति गच्छन्तीत्यर्थेतः इणः क्विपि तुगागमः तथाविधा यूयं राष्ट्रदा देशदातारः स्थ भवथ मे राष्ट्रं दत्त यच्छत दत्तेति बहुवचनम् अन्यद्व्याख्यातम्॥ का० प्रतिलोमाः[२]। वहन्तीनां याः प्रतिगच्छन्ति तासु होमादाने। हे आपो यूय मोजस्वतीः ओजसा बलेन

१——१५,४,२३। २——१५,४,२५।

तथा ऊर्जस्वती: ऊर्जो विद्यते यासु विशिष्टान्नरसवती: । राजस्व: राज्ञ: सुवन्ति जनयन्तीति राजस्व: नृपोत्पादिका: । चितानाः चेतयमानाः सदैवतत्वात्परिदृष्टकारिणो: । पुनस्ता एव विशिनष्टि याभिरद्भिर्देवा मित्रावरुणौ अभ्यषिञ्चन् मित्रावरुणयोरभिषेकं कृतवन्तः । याभिरद्भिर्देवा इन्द्रं देव मराती: अत्य न् अत्यनयन् अतीत्य नीतवन्तः इन्द्रं अत्य न त्यक्रामयन्नित्यर्थः छन्दसि परेऽपीति अतेरुपसर्गस्य क्रियापदात्परत्वम् । ता अपो गृह्णामीति शेष: ।। १ ।।

का० जुहोत्युत्तरासु चतुर्गृहीतं वृष्णऊर्म्यादिभि: स्वाहाकारान्तै: पूर्वै: पूर्वै: प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति[1] अवगूढात्पशो: पुरुपाद्वा पूर्वापरा ऊर्मीइति[2] । उत्तरस्वनोरादायोत्तरासु षोडशस्वसु वृष्ण ऊर्मिरित्यादिभि: स्वाहान्तै: पूर्वपूर्वमन्त्रैश्चतुर्गृहीताज्यानि

**वृष्णऊर्म्मिरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहावृष्णऊर्म्मिरसिराष्ट्रदाराष्ट्रममुष्मैदेहि ।**

**वृषसेनोसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहावृषसेनोसिराष्ट्रदाराष्ट्रममुष्मैदेहि ।। २ ।।**

गृह्यमाणासु जुहुयात् उत्तरै: स्वाहाहीनैर्मन्त्रैस्ता: क्रमेण गृह्णाति उत्तरमन्त्रेषु अमुष्मै इति पदस्थाने चतुर्थ्यन्तं यजमाननाम ग्राह्यम् वृष्ण ऊर्मिरित्यादयो विश्वभृत इत्यन्ता मन्त्राः संहितायां द्विशः पठितास्तेषां पूर्वः पूर्व: स्वाहान्तस्तेनाज्यहोम: उत्तरोत्तर: स्वाहाहीनस्तेनापा मादानम् तत्र गत्वा जले प्रविष्टात्पशोर्नराद्वा यौ पूर्वापरौ कल्लोलौ तौ हृत्वा गृह्णातीति सूत्रार्थ: । वृष्ण ऊर्मिरसीत्यादीनि आप: स्वराज इत्यन्तानि यजूंषि लिङ्गोक्तदेवतानि । हे कल्लोल त्वं वृष्णो वर्षितु: सेक्तु: पशोर्नरस्य वा सम्बन्धी ऊर्मि: कल्लोलोऽसि । राष्ट्रदाः राष्ट्रं जनपदं ददातीति राष्ट्रदा: स्वभावत एव देशप्रदो भवसि अतो राष्ट्रं मे मह्यं

[1]——१५,४,३४ । [2]——१५,४,२३ ।

महते क्षत्राय महत्यै क्षत्रपदव्यै । महते ज्यैष्ठाय ज्यैष्ठभावाय । महते जानराज्याय जनानामिदं जानं जानं च तद्राज्यं च जानराज्यं जनाना माधिपत्यायेत्यर्थः । इन्द्रस्यात्मन इन्द्रियाय वीर्याय आत्मज्ञानसामर्थ्याय इमं यजमानं सुवध्वमित्यर्थः । किम्भूतमिमम् अमुष्य पुत्रम् । अमुष्येति षष्ठ्यन्तं यजमानपितुर्नाम ग्राह्यम् । तथा अमुष्यै षष्ठ्यर्थे चतुर्थी अमुष्याः देव्याः पुत्रम् । अमुष्याइति यजमानमातुर्नामग्रहः । अस्यै विशे अस्याः कौरव्याः विशः प्रजाया अधिपतिमिति शेषः । अस्यै इति षष्ठ्यन्तं जातिनाम ग्राह्यम् । अमी इति प्रथमान्तं देशनाम ग्राह्यम् अमी हे कुरवः पञ्चालाः वो युष्माक मेष खदिरवर्मा राजास्तु । अस्माकं ब्राह्मणानां तु सोमश्चन्द्रो वल्लीरूपो वा सोमो राजा प्रभुरस्तु ॥ ४० ॥ ॥ श्रीमन्महीधरकृते वेददीपे मनोहरे । वाजपेयो राजसूयारम्भान्तो नवमोऽगमत् ॥ ९ ॥

नवमेऽध्याये वाजपेयो राजसूयसम्बन्धि कियदपि कर्मोक्तं दशमेऽभिषेकार्थजलादानादिराजसूयशेषश्चरकसौत्रामणी चोच्यते ।

अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ १

तत्र का० इडान्ते ऽपो गृह्णाति यूप मुत्तरेण नैमित्तिकीरसम्भवादितरास्तेतराः पृथक् पात्रेष्वौदुम्बरेषु[1] सारस्वतीर्गृह्णात्यपो देवा इति[2] । इडाग्रहणं कार्य्यशेषोपलक्षणं देवसूहविषां भागपरिहरणान्ते कृते अभिषेकार्था वक्ष्यमाणा अपो वक्ष्यमाणप्रकारेणौदुम्बरवृक्षपात्रेषु पृथग्गृह्णाति । तत्र विशेषः । निमित्तवशात्प्राप्या नैमित्तिक्यः यथान्तरिक्षात् प्रतिगृह्यातपवर्षाः प्रुष्वाः गोरुल्याः इत्याद्याः ता राजसूयारम्भात् प्रागेव सम्पाद्य तदानीं यूप मुत्तरेण गृह्णीयात् कुतः असम्भवात् तदानी मातपवर्षणादेर्निमित्तस्याभावात् इतरा अनैमित्तिकीरपो गत्वा तदानीमेव गृह्णीयात् । तत्र मन्त्रानाह अपो देवा इति सरस्वतीनदीसम्बन्धिनीरप आदौ गृह्णाति । चरकसौत्रामण्याः प्राग्वरुण ऋषिः । अब्देवत्या त्रिष्टुप् । देवा इन्द्रादयो या अपो ऽगृभ्णन्गृहीतवन्तः । किम्भूता अपः मधुमतीः मधुरस्वादोपेताः

[1] —— १५,४,२३ सूत्रविहितेष्वित्यर्थः [2] —— १५,४,२०-२२ ।

जाते राजा भवतीति[१]। अष्टौ देवसूहवींषि। तत्राग्निमेन वरुणाय धर्मपतय इति वारुणेन चरुणा चरित्वा यजमानान्तिके गत्वा स्रुचौ सव्ये पाणौ कृत्वा दक्षिणं तद्बाहुमादाय सविता त्वेति कण्डिकाद्वयरूपं मन्त्रमाह मन्त्रे यथास्थानं यजमानस्य तन्मातापित्रोर्यस्या जनपदजाते राजा भवति तस्याश्च नामानि गृह्णातीति सूत्रार्थः। अतिजगती यजमानदेवत्या। सविता सवानां प्रसवानामाज्ञानामाधिपत्ये हे यजमान त्वा त्वां सुवतां प्रेरयतु सर्वेषामाज्ञादानेऽधिकारी भवेत्यर्थः। अग्निर्गृहपतीनां गृहस्थानामाधिपत्ये त्वां सुवताम्। सोमो वनस्पतीनां वृक्षाणामाधिपत्ये त्वां सुवतां वृक्षाः सर्वे तवोपकारका भवन्त्वित्यर्थः। बृहस्पतिर्वागर्थं त्वां सुवतां

इमन्देवा असपत्नꣳ सुवद्ध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय।

इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा ॥ ४० ॥

॥ ९ ॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां नवमोऽध्यायः ॥ ९ ॥

पाण्डित्याय प्रेरयतु यद्वा षष्ठ्यर्थे चतुर्थी वाच आधिपत्ये सुवताम्। इन्द्रो देवो ज्यैष्ठ्याय ज्येष्ठभावाय त्वां सुवताम्। रुद्रः पशुभ्यः पश्वर्थं पश्वाधिपत्ये वा त्वां सुवताम्। मित्रो देवः सत्यः सुपां सुलुगित्यादिना चतुर्थ्याः सुआदेशः सत्याय सत्यवाक्याय सत्यं वदितुं त्वां सुवताम्। वरुणो धर्मपतीनां धर्मेश्वराणां धर्मशीलानामाधिपत्ये त्वां सुवताम्। सवित्रादयोऽष्टौ देवसूहविषां देवतास्त्वां नानाधिपत्यानि ददत्विति वाक्यार्थः ॥ ३९ ॥

अत्यष्टिर्यजमानदेवत्या। हे देवाः सवित्रादयः इममसुकसञ्ज्ञं यजमानमसपत्नं सपत्नरहितं कृत्वा सुवध्वं प्रेरयध्वम्। किमर्थं

१—१५,४,१२-१५।

का० देवस्य त्वेति जुहोतीति[1]। प्रागुदग्वा मत्वा गृहीतमुल्मुकं संस्थाप्य स्रुवेणापामार्गतण्डुलान् जुहुयात्। देवस्य त्वा व्याख्यातम्। उपांशोः। तृीणि यजूंषि रक्षोघ्नदेवत्यानि उपांशुर्नाम प्रथमो ग्रहस्तस्य वीर्येण सामर्थ्येनाहं जुहोमि अत एव रक्षो राक्षसजातिर्हतं निहतम् स्वाहा सुहुतं हविरस्तु॥ का० रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोतीति[2]। यस्यां दिशि होमं कुर्यात्तां दिशं प्रति स्रुवं प्रक्षिपेत्। रक्षसां राक्षसानां वधाय नाशार्थं त्वा त्वां प्रास्यामीति शेषः॥ का० अवधिष्म

देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम्। उपाᳪशोर्वीर्य्येणजुहोमिहतᳪ

रक्षःस्वाहारक्षसान्त्वावधायावधिष्मरक्षोवधिष्मामुमसौहतः॥ ३८॥

सवितात्वासवानाᳪसुवतामग्निर्गृहपतीनाᳪसोमोवनस्पतीनाम्।

बृहस्पतिर्व्वाचइन्द्रोज्यैष्ठ्यायरुद्रःपशुभ्योमित्रःसत्योवरुणोधर्म्मपतीनाम्॥ ३९॥

हुत्वायन्त्यनपेक्षमिति[3]। अध्वर्य्वादयः पश्चादनवलोकयन्तो देवयजनं प्रत्यागच्छन्ति। रक्षो राक्षसजातिं वयमवधिष्म हतवन्तः जातावेकवचनम्। अमुमिति अत्र नामग्रहणम् असाविति च अमुं देवदत्तं वयमवधिष्म असौ देवदत्तो हतो मारितोऽस्माभिः॥ ३८॥

का० उत्तमेन चरित्वा सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा नामास्य गृह्णाति मन्त्रे यथास्थानं मातापित्रोश्च यस्याश्च

१——१५,२,६। २——१५,२,७। ३——१५,२,७।

जुहुयादिति शेषः। ये देवा अग्निनेत्राः पुरःसदस्तेभ्यो देवेभ्यः स्वाहा। ये देवा यमनेत्राः पूर्ववद्व्याख्या। ये देवा विश्वदेवनेत्राः पश्चात्सदः। ये देवा मित्रावरुणनेत्राः ये देवा मरुन्नेत्रा इति मन्त्रयोर्विकल्पः। ये देवाः सोमनेत्राः उपरिसदः उपरि स्थिता दुवस्वन्तो हव्यवन्तस्तेभ्यः स्वाहा ॥ ३६ ॥

का० अग्ने सहस्वेत्युल्मुकादानमिति[1]। अपामार्गतण्डुलहोमार्थं दक्षिणाग्नेरुल्मुकमादद्यात्। अग्निदेवत्यानुष्टुब्देवश्रवो-

ये दे॒वाऽअ॒ग्निने॑त्राः पुरः॒सद॒स्तेभ्यः॒ स्वाहा॒ ये दे॒वा य॒मने॑त्रा दक्षिणा॒सद॒स्तेभ्यः॒ स्वाहा॒ ये दे॒वा वि॒श्वदे॑वनेत्राः प॒श्चात्सद॒स्तेभ्यः॒

स्वाहा॒ ये दे॒वा मि॒त्रावरु॑णनेत्रा वा म॒रुन्ने॑त्रा वोत्तरा॒सद॒स्तेभ्यः॒ स्वाहा॒ ये दे॒वाः सोम॑नेत्राऽउपरि॒सदो॒ दुव॑स्वन्त॒स्तेभ्यः॒ स्वाहा॑ ॥३६॥

अग्ने॒ सह॑स्व॒ पृत॑नाऽअ॒भिमा॑ती॒रपा॑स्य। दु॒ष्टर॒स्तर॒न्नरा॑ती॒र्वर्चो॑ धा य॒ज्ञवा॑हसि ॥ ३७ ॥

देववातदृष्टा। हे अग्ने त्वं पृतनाः शत्रुसेनाः सहस्व अभिभव। तथा अभिमातीः सपत्नोऽभिमातिरुच्यते स्त्रीत्वमार्षम् अभिमातीन् शत्रून् अपास्य अपक्षिप निवर्तय। असु क्षेपणे अस्य लोटि रूपम्। किञ्च यज्ञं वहतीति यज्ञवाहास्तस्मिन् यज्ञवाहसि यज्ञनिर्वाहके यजमाने वर्चोऽन्नं धाः धेहि। दधातेर्लुङि रूपम् बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः। किम्भूतस्त्वं दुष्टरः दुस्तरः केनापि तर्तुमशक्यः अशक्यप्रतिक्रियो दुर्निवार इत्यर्थः। अरातीः शत्रून् तरन् तिरस्कुर्वन्विनाशयन्नित्यर्थः ॥ ३७ ॥

[1] —१५, २, ५।

कार्यो विधेयम् तत्राहवनीयं प्रागादिदिक्षु कृत्वा मध्ये चावशिष्य स्रुवेणाज्यं पञ्चस्वग्निषु यथालिङ्गं जुहोति। अध्यायसमाप्तिपर्यन्तं देवा ऋषयः। इमा यजूंषि देवदैवत्यानि। अग्निर्नेता येषां ते अग्निनेत्रास्तेभ्यः। पुरः पुरस्तात्पूर्वस्यां दिशि सीदन्तीति पुरःसदस्तेभ्यो देवेभ्यः स्वाहा सुहुतमस्तु॥ अथ दक्षिणे जुहोति। यमनेत्रेभ्यः यमो नेता येषां तेभ्यः। दक्षिणस्यां सीदन्तीति दक्षिणासदस्तेभ्यो देवेभ्यः स्वाहा॥ अथ पश्चाज्जुहोति। विश्वदेवनेत्रेभ्यः विश्वे देवा नेतारो येषां तेभ्यः। पश्चात्सीदन्तीति पश्चात्सदस्तेभ्यः स्वाहा॥ अथोत्तरार्धे जुहोति। मित्रावरुणनेत्रेभ्यः मित्रावरुणौ नेतारौ येषां ते मित्रावरुणनेत्राः। वा यद्वा मरुतो

विश्वदेवनेत्रेभ्योदेवेभ्यःपश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवेभ्यउत्तरासद्भ्यःस्वाहा

सोमनेत्रेभ्योदेवेभ्यउपरिसद्भ्योदुवस्वद्भ्यःस्वाहा ॥ ३५ ॥

नेतारो येषां ते मरुन्नेत्राः। उत्तरस्यां सीदन्तीत्युत्तरासद उत्तरभागार्थास्तेभ्यो देवेभ्यः स्वाहा। अत्र मित्रावरुणनेत्रेभ्यो देवेभ्य उत्तरासद्भ्यः मरुन्नेत्रेभ्यो देवेभ्य उत्तरासद्भ्य इति मन्त्रयोर्विकल्पः। मध्ये जुहोति। सोमनेत्रेभ्यः सोमो नेता येषां तेभ्यः। उपरि सीदन्ति तिष्ठन्तीत्युपरिसदस्ते। दुवस्वद्भ्यः परिचर्यावद्भ्यः यद्वा दुवःशब्देन हव्यं तद्येषामस्ति ते दुवस्वन्तस्तेभ्यो देवेभ्यः स्वाहा॥ ३५॥

—का० उत्तराः समस्य ये देवा इति प्रतिमन्त्रमिति[१]। पञ्चधा विभक्तमाहवनीयमेकीकृत्य ये देवा इति पञ्च मन्त्रैः प्रत्येकं

१——१५,१,२१।

षोडशाक्षरेण छन्दसा षोडशं स्तोम मुदजयत् तेनाहमपि तं स्तोम मुज्जेषम्। प्रजापतिः सप्तदशाक्षरेण छन्दसा सप्तदशाख्यं स्तोम मुदजयत् तं स्तोमं तेन छन्दसाहमपि जयेयम्। एतान्मन्त्रान् जपेदेतैर्जुहुयाद्वा ॥ ३४ ॥ ॥ इति वाजपेयमन्त्राः समाप्ताः ॥

अथ राजसूयमन्त्राः। तेषां वरुण ऋषिः ॥ का० अष्टाकपालोऽनुमत्यै शम्यायाः पश्चाद्धविष्यमन्नं स्रुवे कृत्वा दक्षिणाभ्युल्मुक-माहाय दक्षिणा गत्वा स्वयमवदीर्णं इरिणे वाग्नौ जुहोत्येष ते निर्ऋत इति[1]। फाल्गुनाद्यदशम्या अनुमत्यै अष्टाकपालः पुरोडाशो भवति

स्तमुज्जेषमादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयꣳस्तमुज्जेषमदितिः षोडशाक्षरेण षोडशꣳ

स्तोममुदजयत्तमुज्जेषम्प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत्तमुज्जेषम् ॥ ३४ ॥

एष ते निर्ऋते भागस्तं जुषस्व स्वाहाग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा

तदर्थं गृहीतहविषः पेषणकाले दृषदधस्तान्निहितशम्यापश्चाद्भागे अन्नं पतितं यदविस्तण्डुलपिष्टरूपं तत्स्रुवे निधाय दक्षिणाग्ने-रुल्मुकमादाय दक्षिणस्यां दिशि गत्वा स्वयंस्फुटिते भूभागे ऊषरे वोल्मुकाग्निं संस्थाप्य तद्धविर्जुहोतीति सूत्रार्थः। पृथिवीदेवत्यम्। निर्ऋतिरत्र पृथिवी हे निर्ऋते पृथिवि एष पिष्टरूपस्ते तव भागः तं भागं त्वं जुषस्व सेवस्व स्वाहा सुहुतमस्तु ॥ का० पञ्चवातीय-माहवनीयं प्रतिदिशं व्युह्य मध्ये च स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्य इति प्रतिमन्त्रमिति[2]। एवं वर्षमिष्टीः कृत्वा पञ्चवातीयाख्यं

१—१५,१,९-१०। २—१५,१,२०।

सविता सर्वस्य प्रेरको देवः षडक्षरेण छन्दसा षट्सङ्ख्यान्तूनुदजयत् तान्तूनहमुज्जेषम् ॥ मरुतो देवाः सप्ताक्षरेण छन्दसा सप्तसङ्ख्यान् ग्राम्यान् पशून् गवादीनुदजयन् अहं तान् ग्राम्यान् पशून् जयेयम् ॥ बृहस्पतिरष्टाक्षरात्मकेन छन्दसा गायत्रीच्छन्दोऽभिमानिनीं देवता मुदजयत् तां तादृशीं गायत्रीं जयेयम् ॥ ३२ ॥

मित्रो देवो नवाक्षरेण छन्दसा त्रिवृतं स्तोम मुदजयत्तं तादृशं स्तोम मह जयेयम् । वरुणो देवो दशाक्षरेण छन्दसा विराजम्

मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयत्तमुज्जेषं वरुणो दशाक्षरेण विराजमुदजयत्तामुज्जेषमिन्द्र एकादशाक्षरेण

त्रिष्टुभमुदजयत्तामुज्जेषं विश्वे देवा द्वादशाक्षरेण जगतीमुदजयꣳस्तामुज्जेषम् ॥ ३३ ॥

वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयꣳस्तमुज्जेषꣳ रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयꣳ

दशाक्षरा विराडिति श्रुतिप्रसिद्धां तदभिमानिनीं देव ता मुदयजयत्तां विराज मह मप्युज्जेषम् । इन्द्रो देव एकादशाक्षरेण छन्दसा त्रिष्टुप्छन्दोऽभिमानिनीं देवता मुदजयत् तां त्रिष्टुभ महमुज्जेषम् । विश्वे देवा द्वादशाक्षरेण छन्दसा जगत्यभिमानिदेवता मुदजयन् अहमपि तां जगतीं जयेयम् ॥ ३३ ॥

वसवस्त्रयोदशाक्षरेण छन्दसा त्रयोदशं स्तोम मुदजयन् तं स्तोमं जयेयम् । रुद्रा देवाश्चतुर्दशाक्षरेण छन्दसा चतुर्दशं स्तोममुदजयन् तं स्तोम महमपि जयेयम् । आदित्या देवाः पञ्चदशाक्षरेण छन्दसा पञ्चदशं स्तोममुदजयन् तं स्तोमं जयेयम् । अदितिर्देवमाता

स्वाहेति प्रतिमन्त्रं वाचयति वेति यत्पूर्वमुक्तं तद्वत्कल्प इत्यर्थः तैर्नैतैर्मन्त्रैर्जुहोति सप्तदश मन्त्रान्वाचयति वेत्यर्थः ॥ एते मन्त्रा उज्जिति-संज्ञाः। सप्तदश यजूंषि लिङ्गोक्तदेवतानि। ओं आवयेति चतुरक्षरमस्तुश्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष सप्तदशाक्षरात्मकः प्रजापतिरधियज्ञं समासव्यासाभ्यामुज्जीयते ॥ अग्निरेकाक्षरेण छन्दसा प्राणं पञ्चवृत्तिक मुदजयत् उत्कृष्टं जितवान् तथाहमपि तादृशं तं प्राणमुज्जेषमुत्कृष्टं जयेयं वशीकुर्यामित्यर्थः ॥ अश्विनौ देवौ द्व्यक्षरेण

त्रींल्लोकानुदजयत्ताउज्जेषᳬसोमश्चतुरक्षरेणचतुष्पदःपशूनुदजयत्तानुज्जेषम् ॥ ३१ ॥

पूषापञ्चाक्षरेणपञ्चदिशउदजयत्ताउज्जेषᳬसवितापडक्षरेणषडृतूनुदजयत्तानुज्जेषम्मरुतःसप्ताक्षरेण

सप्तग्राम्यान्पशूनुदजयᳬस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेणगायत्रीमुदजयत्तामुज्जेषम् ॥ ३२ ॥

अक्षरद्वयात्मकेन छन्दसा द्विपदः पादद्वयोपेतान्मनुष्यानुदजयतां जितवन्तौ तथाहमपि तेनैव द्व्यक्षरेण छन्दसा तान् तादृशान्मनुष्यानुज्जेषमधिकं जयेयम्। विष्णुस्त्र्यक्षरेणाक्षरत्रयात्मकेन छन्दसा त्रीन्भूरादीन् लोकानुदजयत् अहमपि तान् लोकानुज्जेषम् ॥ सोमोऽक्षरचतुष्टयात्मकेन छन्दसा चतुःपदः पादचतुष्टयोपेतान् पशूनुदजयत् अहमपि तेन तान्पशूनुज्जेषम् ॥ ३१ ॥

पूषा देवः पञ्चाक्षरेण छन्दसा पञ्चसङ्ख्याः पूर्वाद्यास्तसोऽवान्तरदिशं चेति पञ्च दिश उदजयत् अहमपि ता दिशो जयेयम् ॥

१—१४,५,१। २—९अ० २०क० १४,५,१का०।

गायत्री अर्यमपूषबृहस्पतिवाग्देवत्या। अर्यमा सूर्यविशेषो नोऽस्मभ्यं प्रयच्छतु अभीष्टं ददातु पूषा प्रयच्छतु उपसर्गावृत्त्या क्रियापदावृत्तिः बृहस्पतिः प्रयच्छतु देवी दीप्यमाना वाक् नोऽस्मभ्यं ददातु स्वाहा ॥ २९ ॥

का० शेषेणाभिषिञ्चति यजमानं देवस्य त्वेति। होमद्रव्यशेषेण यजमानं शिरसि सिञ्चेत् ॥ यजमानदेवत्यम् सवितुर्देवस्य प्रसवे वर्तमानोऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वा त्वां वाचो वाण्या यन्तुर्यन्त्राः। पुंस्त्वमार्षम्। नियमनकर्त्र्याः सरस्वत्याः षष्ठ्यर्थे

प्र नो॑ यच्छत्वर्य॒मा प्र पू॒षा प्र बृह॒स्पतिः॑। प्र वाग्दे॒वी द॑दातु नः॒ स्वाहा॑ ॥ २९ ॥

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम्।

सर॑स्वत्यै वा॒चो य॒न्तुर्य॒न्त्रिये॑ दधामि॒ बृह॒स्पते॒ष्ट्वा साम्रा॑ज्येना॒भिषि॑ञ्चाम्यसौ ॥ ३० ॥

अ॒ग्निरेका॑क्षरेण प्रा॒णमुद॑जय॒त्तमुज्जे॑षम॒श्विनौ॒ द्व्य॑क्षरेण द्वि॒पदो॑ मनु॒ष्या॒नुद॑जयतां॒ तानुज्जे॑षं॒ विष्णु॒स्त्र्य॑क्षरेण

चतुर्थी सरस्वत्याः यन्त्रिये नियमने ऐश्वर्ये दधामि स्थापयामि। किञ्च बृहस्पते साम्राज्येन सम्राड्भावेन त्वा त्वामभिषिञ्चामि असाविति तन्नामग्रहणम् ॥ ३० ॥

का० अग्निरेकाक्षरेणेत्यनुवाकं द्वादशवत् सर्वं तिः। चतुःकण्डिकात्मकमनुवाकं द्वादशवत् द्वादश स्रुवाहुतीर्जुहोत्यापये

सर्वतः स्वेच्छया गच्छति । किम्भूतः विद्वान् स्वाधिकारं जानन् तथा अस्मे अस्मासु प्रजां पुत्रादिसन्ततिं पुष्टिं धनपोषं च वर्धयमानः वर्धयन् स्वाहा सुहुतमस्तु ॥ २५ ॥

तिस्रोऽनुष्टुभस्तापसदृष्टाः । प्रथमा सोमाग्न्यादित्यविष्णुसूर्यबृहस्पतिदेवत्या । अवसे रक्षणार्थं तर्पणाय वा सोमं राजानमग्निं वैश्वानरमादित्यान् द्वादश विष्णुं सूर्यं ब्रह्माणं बृहस्पतिं चान्वारभामहे अन्वारभ्य माह्वानं कुर्महे स्वाहा सुहुतमस्तु ॥ २६ ॥

अर्यमबृहस्पतीन्द्रवाग्विष्णुसरस्वतीसवितृदेवत्या । हे ईश्वर त्वमर्यमादीन्देवान्दानाय धनप्रदानार्थं चोदय प्रेरय बृहस्पतिमिन्द्रं

सोमꣳराजानमवसेऽग्निमन्वारभामहे । आदित्यान्विष्णुꣳसूर्य्यम्ब्रह्माणञ्च बृहस्पतिꣳस्वाहा ॥ २६ ॥

अर्य्यमणम्बृहस्पतिमिन्द्रन्दानायचोदय । वाचंविष्णुꣳसरस्वतीꣳसवितारञ्चवाजिनꣳस्वाहा ॥ २७ ॥

अग्ने अच्छावदेहनः प्रतिनः सुमनाभव । प्रनोयच्छसहस्रजित्त्वꣳहिधनदा असिस्वाहा ॥ २८ ॥

देवीं वाचं वागधिष्ठात्रीं सरस्वतीं विष्णुं सवितारं सर्वस्य प्रसवकर्तारं सूर्यम् । वाजिन मन्नवन्तमिति सर्वेषां विशेषणं वाजिनं देवाश्वं वा । स्वाहा सुहुतमस्तु ॥ २७ ॥

अग्निदेवत्या । हे अग्ने इहास्मिन् कर्मणि नोऽस्माक मच्छ वद आभिमुख्येन ब्रूहि हितमिति शेषः । निपातस्य चेति संहितायां दीर्घोऽच्छशब्दस्य । किञ्च नोऽस्मान् प्रति सुमनाः कल्याणार्द्रचित्तो भव हे सहस्रजित् सहस्रस्य बहुनो वसुनो जेतः सहस्राणां योधानां वा जेतः हि यस्मात्त्वं स्वभावतो धनदा धनस्य दातासि अतस्त्वं नोऽस्मभ्यं प्रयच्छ धनं देहि स्वाहा ॥ २८ ॥

जनयित्र्य ओषधय आपश्चास्मभ्य मस्मदर्थं मधुमतीर्मधुमत्यो रसवत्यो माधुर्योपेता भवन्तु भोगयोग्या भवन्तु वयं च ताभिरभिषिक्ता राष्ट्रे स्वकीये देशे जागृयाम अप्रमत्ता भवाम। पुरोहिताः यागानुष्ठानादौ पुरोगामिनः प्रधाना इत्यर्थः स्वाहा सुहुतमस्तु ॥ २३ ॥

वाजस्यान्नस्य प्रसव उत्पादक ईश्वर इमां पृथिवीं दिवं द्युलोकं च इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि च शिश्रिये आश्रितवान् स च सम्राट् सर्वेषां भुवनानां राजा भूत्वा अदित्सन्तं हविर्दानमनिच्छन्तं मां प्रजानन् अवगच्छन् मदीय-

वाजस्येमाम्प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट्।

अदित्सन्तन्दापयति प्रजानन्त्स नो रयिꣳ सर्ववीरन्नियच्छतु स्वाहा ॥ २४ ॥

वाजस्य नु प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः। स नेमी राजा परियाति विद्वान्प्रजाम्पुष्टिं वर्द्धयमानो अस्मे स्वाहा ॥ २५ ॥

बुद्धिप्रेरणेन हविर्दापयति ततो नोऽस्मभ्यं सर्ववीरं सर्वैः पुत्रभृत्यादिभिर्युक्तं रयिं धनं नियच्छतु नियमनेन ददातु दाण् दाने पाघ्राध्मेत्यादिना यच्छादेशः स्वाहा सुहुतमस्तु ॥ २४ ॥

नु इति विस्मये वाजस्य प्रसवः प्रजापतिः इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतानि सर्वतोऽवस्थितानि हिरण्य-गर्भादिस्तम्बपर्यन्तानि आबभूव सम्भावितवानुत्पादितवानित्यर्थः। सनेमीति पुराणनाम[1] सनेमि चिरन्तनो राजा दीप्तः सन् परियाति

१——निघ० ३,२७,४।

वो युष्माकं वर्चांसि तेजांसि अस्मे अस्मासु सन्तु भवन्तु। अस्माकं सम्बन्धि युष्मत्सामर्थ्य मस्त्विति भावः॥ का० नमो मात्र इति भूमि मवेक्षतइति[1]।- यूपारूढ एव यजमानो भूमिं पश्यति। पृथिवीदेवत्यम्। मात्रे मातृरूपायै पृथिव्यै नमो नमस्कारोऽस्तु। अभ्यासे भूयांस मर्थं मन्यन्तइति[2] हिरुक्तिः॥ का० उत्तरवेदि मपरेणौदुम्बरी मासन्दीं वस्तचर्मणास्तृणातीयन्तइति[3]। आसन्दीदेवत्यम्। हे आसन्दि ते तव इयं राट् इदं राज्यं राजनं राट् सम्पदादित्वाद्भावे स्त्रियां क्विप् अभिषिक्तासि त्वमिति भावः॥ का० सुब्रन्त मस्या मुपवेशयति यन्तासीति[4]। आसन्द्यां यजमान मुपवेशयेत्। यजमानदेवत्यम्! हे यजमान त्वं यन्ता सर्वस्य नियन्तासि यमनः स्वयं संयमनकर्ता भवसि अनवच्छिन्नं तव यमनमिति भावः। तथा ध्रुवः स्थिरोऽसि धरुणो धारकोऽसि। कृष्यै कर्षणाय

इयन्ते राडयन्तासियमनो ध्रुवोसिधरुणः। कृष्यैत्वाक्षेमायत्वारय्यैत्वापोषायत्वा॥ २२॥

वाजस्येमम्प्रसवः सुषुवेग्रेसोम ँ राजानमोषधीष्वप्सु। ताअस्मभ्यम्मधुमतीर्भवन्तुवय ँ राष्ट्रे जागृयामपुरोहिताः स्वाहा॥ २३॥

कृषिसिद्ध्यर्थं त्वा त्वामुपवेशयामीति सर्वत्र शेषः। क्षेमाय लब्धपरिपालनाय त्वामुप०। रय्यै धनाय त्वामुप०। पोषाय पशुपुत्रादि पुष्ट्यै त्वामुप०॥ २२॥

का० स्रुवेण सम्भृताञ्जुहोति वाजस्येममिति प्रतिमन्त्रमिति[5]। औदुम्बरपात्रे एकीकृताद्दुग्धव्रीह्यादिधान्यात् स्रुवेणाहवनीये सप्त मन्त्रै र्जुहोति॥ तिस्रस्त्रिष्टुभः प्रजापतिदेवत्याः। प्रसूतेऽसौ प्रसवः पचादित्वादच् वाजस्यान्नस्य प्रसव उत्पादकः प्रजापतिः अग्रे सृष्ट्यादौ ओषधीषु अप्सु च वर्तमानमिमं सोमं वल्लीरूपं राजानं दीप्तिमन्तं पदार्थं सुषुवे उत्पादयामास ता इत्थम्भूताः सोमस्य

१——१४,५,१२। २——निरु० १०,४२। ३——१४,५,१३। ४——१४,५,१४। ५——१४,५,२१।

का० षट्पोत्तरा:[1] । षट् आयुर्यज्ञेनेत्याद्यायथ्यन्नाज्जुहोति वाचयति वा । प्राजापत्यानि षड्यजूंषि । मदीयमायुर्यज्ञेन वाजपेयाख्येन कॢप्तां क्लृप्तं भवतु । मुखनासिकाप्रभवः पञ्चवृत्तिकः प्राणवायुरप्यनेन यज्ञेन कॢप्तो भवतु । चक्षुरिन्द्रियं यज्ञेन कॢप्तं भवतु । श्रोत्रेन्द्रियं यज्ञेन कॢप्तमस्तु । पृष्ठं रथन्तरादिकं शरीरस्य पृष्ठं वा यज्ञेन कल्पताम् । यज्ञेन मदीयेन वाजपेयाख्येन यज्ञो यज्ञाधिष्ठाता विष्णुः कल्पताम् ॥ का० प्रजापतेरित्यारोहत इति[2] । पत्नीयजमानौ निश्रेण्या यूप मारोहतः । यजमानदेवत्यानि त्रीणि यजूंषि । वयं प्रजापतेः सम्बन्धिन्यः प्रजा अभूम अपत्यानि जातानि ॥ का० स्वरिति गोधूम मालभत

आयुर्यज्ञेनकल्पताम्प्राणोयज्ञेनकल्पताञ्चक्षुर्यज्ञेनकल्पताᳯश्रोत्रंयज्ञेनकल्पताम्पृष्ठंयज्ञेनकल्पतांयज्ञो

यज्ञेनकल्पताम् । प्रजापतेःप्रजाअभूमःस्वर्देवाअगन्मामृताअभूम ॥ २१ ॥

अस्मेवोअस्त्विन्द्रियमस्मेनृम्णमुतक्रतुरस्मेवर्चाᳯसिसन्तुवः । नमोमात्रेपृथिव्यैनमोमात्रेपृथिव्या

इति[3] । गोधूमपिष्टनिर्मितं चषालं यजमानः स्पृशेत् । हे देवा वयं स्वः स्वर्गं मगन्म प्राप्ताः ॥ का० शिरसा यूपमुज्जिहीतेऽमृता इति[4] । यूपादुर्ध्वं शिरः करोति । वयममृता मरणधर्मरहिता अभूम सम्भूताः ॥ २१ ॥

का० अस्मे व इति दिशो वीक्षतइति[5] । यूपारूढ एव यजमानो दिशः पश्यति । दिग्देवत्यम् । हे दिशो वो युष्मत्सम्बन्धि इन्द्रियं वीर्यं मस्मे अस्मास्वस्तु, नृम्णं धनं युष्मत्सम्बन्धि अस्मे अस्मास्वस्तु । उत अपि च क्रतुः कर्म युष्मत्सम्बन्धि अस्मास्वस्तु ।

१—१४,५,२ । २—१४,५,६ । ३—१४,५,७ । ४—१४,५,८ । ५—१४,५,९ ।

बृहस्पतिः सर्व्वस्मिन् भागं वह भवजिघ्रत आघ्राणं कुरुत। किम्भूताः वाजजितः वाजस्यान्नस्य जेतारः। वाजमन्नं जेतुं सदवांसः सृतवन्तो गतवन्तः सर्तेः क्वसुप्रत्यये रूपम्। निमृजानाः मृजूष शुद्धौ शानच् प्रत्ययः शोधयन्तः चरुमेनं यजमानं वा पुनन्त इत्यर्थः ॥ १९ ॥

का० द्वादश स्रुवाहुतीर्जुहोत्याप्तये स्वाहेति प्रतिमन्त्रं वाचयति वेति[१]। प्राजापत्यानि द्वादश यजूंषि। संवत्सराभिमानी प्रजापतिः स्तूयते तस्यैवैतानि नामानि। आप्नोतीत्यापिस्तस्मै सुहुतमस्तु। शोभय माप्नोतीति स्वापिः तस्मै। अपि जायते पुनः पुनरुत्पद्यते इत्यपिजस्तस्मै स्वाहा। क्रतुः सङ्कल्पो भोगादिविषयो यज्ञो वा तस्मै। वसवे निवासहेतवे। अह्नां दिवसानां

आ॒पये॒ स्वाहा॑ स्वा॒पये॒ स्वाहा॑पि॒जाय॒ स्वाहा॒ क्रत॑वे॒ स्वाहा॒ वस॑वे॒ स्वाहा॑ह॒र्पत॑ये॒ स्वाहाह्ने॑ मु॒ग्धाय॒ स्वाहा॑ मु॒ग्धाय॑ वैनꣳ

शि॒नाय॒ स्वाहा॑ विनꣳशि॒न आ॑न्त्याय॒नाय॒ स्वाहान्त्या॑य भौव॒नाय॒ स्वाहा॒ भुव॑नस्य॒ पत॑ये॒ स्वाहाधि॑पतये॒ स्वाहा॑ ॥२०॥

पतिरहर्पतिस्तस्मै। अतश्चत्वारि नामान्युभयविशेषणविशिष्टानि। मुह वैचित्ते मुह्यतीति मुग्धस्तस्मै अह्ने दिवसाय। विनश्यन्तीति विनंशिनः विनाशशीलाः पदार्थाः। मस्जिनशोर्झलीति छान्दसत्वादझल्यपि नुमागमः। विनंशिषु भवो वैनंशिनस्तस्मै मुग्धाय मोहकाय स्वाहा। अन्ते भव मन्त्यमन्त्यं च तदयनं च अन्त्यायन मन्त्यस्थानं तत्र भव आन्त्यायनस्तस्मै विनंशिने विनाशशीलाय स्वाहा। अन्ते भवोऽन्त्यः भुवने भवो भौवनस्तदुभयविशिष्टाय स्वाहा। भुवनस्य पतये जगतः पालयित्रे। अधिपतये सर्वलोकानां स्वामिने स्वाहा सुहुतमस्तु ॥ २० ॥

[१] — १८,५,१।

पालयत। किम्भूता यूयम् विप्रा मेधाविनः परिदृष्टकारिणः अमृता अमरणधर्माणः ऋतज्ञाः सत्यज्ञाः यज्ञज्ञा वा। किञ्च अस्य मध्वः पिबत कर्मणि षष्ठी इदं मधु धावनात्पूर्वं पश्चाच्चावघ्रायमाणं नैवारचरुलक्षणं मधुरं हविः पिबत पीत्वा च मादयध्वं तृप्ता भवत ततस्तृप्ताः सन्तो देवयानैर्देवाधिष्ठितैः पथिभिर्मार्गैर्यात गच्छत॥ १८॥

का० अवरुह्य नैवार मालभते तीर्थं स्थितमा मा वाजस्येति[१]। यजमानो रथादवतीर्य चात्वालोत्करान्तरे स्थितं नैवारं चरुं स्पृशति। प्रजापतिदेवत्या त्रिष्टुब्वसिष्ठदृष्टा। वाजस्यान्नस्य प्रसव उत्पत्तिर्मा मामाजगम्यात् अगच्छतु। गच्छतेर्व्यत्ययेन

वाजेवाजेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः। अस्यमध्वःपिबतमादयध्वन्तृप्तायातपथिभिर्देवयानैः॥१८॥

आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे। आमागन्ताम्पितरामातराचामासोमोअमृतत्वेनगम्यात्।

वाजिनोवाजजितोवाजꣳससृवाꣳसोबृहस्पतेर्भागमवजिघ्रतनिमृजानाः॥१९॥

ह्लादित्वे लिङि रूपम्। आ इमे विश्वरूपे सर्वरूपात्मिके इमे द्यावापृथिव्यौ मां प्रत्यागच्छेताम्। पितरा मातरा। पितरामातरा च च्छन्दसीति द्विरूपैकशेषो निपात्यते। अस्मदीयः पिता माता च मा मां प्रति आगन्ता मागच्छताम्। व्यत्ययेनादादित्वे लोटि रूपम्। सोमश्चामृतत्वेन सहितो मा मामागम्यात्। चतुर्थ्यर्थे तृतीया। अमृतत्वाय मम देवत्वजन्मने सोमो मां प्रत्यागच्छेत् लिङि रूपम्॥

का० यजुर्युक्तानाघ्रापयति वाजिन इति[२]। मन्त्रेण युक्तानश्वान्नैवारचरु माघ्रापयेत्। अश्वदेवत्यं यजुः। हे वाजिनोऽश्वा यूयं

१——१४,४,११। २——१४,४,१२।

देवानां कर्म देवतातिः सर्वदेवात्तातिलिति देवशब्दात्कर्मणि तातिल्प्रत्ययः । लितीति प्रत्ययात्पूर्वस्य वकारस्योदात्तत्वम् । तस्य सप्तम्यां सुपां सुलुगित्यादिना ङेराकारः । देवताता देवतातौ यज्ञे हवेषु आह्वानेषु सत्सु वाजिनोऽश्वा नोऽस्माकं शं सुखकरा भवन्तु । किंभूताः मितद्रवः मितं परिमितं द्रवन्ति गच्छन्तीति मितद्रवः क्विपि तुगभाव आर्षः । स्वर्काः शोभनोऽर्को येषां ते सुरुचः स्वर्चना वा । तथा अहिं सर्पं वृकं मरणस्थानं रक्षांसि राक्षसान् च जम्भयन्तो नाशयन्तः । किञ्च तेऽश्वा अस्मत्सकाशात्सनेमि क्षिप्रममीवा व्याधीन्युयवन् पृथक् कुर्वन्तु । यु पृथग्भावे अस्य ह्वादित्वे लङि रूपम् गुणाऽभावावार्षौ । सनेमीति पुराणनाम[1] इह तु क्षिप्रवाचकः ॥ १६ ॥

अश्वदेवत्या जगती नाभानेदिष्ठदृष्टा । विश्वे सर्वे ते वाजिनोऽश्वा नोऽस्माकं हवमाह्वानं शृण्वन्तु । किंभूताः अर्वन्तः

ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ।

सहस्रसा मेधसाता सनिष्यवो महो ये धनꣳ समिथेषु जभ्रिरे ॥ १७ ॥

इयर्ति कुटिलं गच्छन्तीत्यर्वन्तः । ऋ गतावित्यस्माद्वनिप् अर्वणस्त्रसावनञ इति तृ इति नन्तादेशे रूपम् । हवनश्रुतः हवनमाह्वानं शृण्वन्तीति हवनश्रुतः । मितद्रवः यजमाने चित्तानुकूल्येन परिमितगामिनः । सहस्रसाः सहस्रस्यानेकजनतृप्तिक्षमस्य महतोऽन्नराशेः सनितारो दातारः । मेधसाता सनिष्यवः मेधो यज्ञः सन्यते सम्भज्यते यत्र सा मेधसातिर्यज्ञशाला ङेर्डाकारः तस्यां सनिष्यवः सम्भक्तारः पूरयितारः । ते के ये ऽश्वाः समिथेषु सङ्ग्रामेषु महः महत्पूज्यं वा धनं जभ्रिरे जह्रिरे आहृतवन्तः ॥ १७ ॥

अश्वदेवत्या त्रिष्टुब्वसिष्ठदृष्टा । हे वाजिनोऽश्वा वाजे वाजे सर्वस्मिन्नन्ने उपस्थिते सति धनेषु चोपस्थितेषु सत्सु नोऽस्मानवत

[1]—निघ० ३,२७,४ ।

गच्छन् दाधर्तिदर्धर्तीत्यादिना स्यन्दतेर्यङ्लुकि निपातोऽयम्। तथा पथां मार्गाणामङ्कांसि लक्षणानि कुटिलानि निम्नोन्नतानि अन्वापनिफणत् अतिशीघ्रं प्राप्नुवन् समत्वमापादयन्नित्यर्थः। अन्वाङ्पूर्वस्य फणतेर्गत्यर्थस्य यङ्लुकि निपातः पूर्ववत्। एवंविधोऽश्वस्तुरण्यतीति सम्बन्धः। स्वाहा सुहुतमस्तु॥ १४॥

उत स्म अपि च अस्याश्वस्य अङ्कसं शृङ्गारचिह्नं वस्त्रचामरादिकं परि सर्वस्मिन्नपि देहे वर्तमानं सत् अनुवाति गच्छन्तमश्वमनु उत्क्षिप्तत्वेन दृश्यमानं गच्छति। कस्य किमिव वेः पक्षिणः पर्णं न पक्ष इव यथा त्वरया गच्छतः पक्षिणः पक्ष उत्क्षिप्तो गच्छन्नवलोक्यते तथा धावतोऽश्वस्याङ्कसरूपं वस्त्रचामरादिकं विस्पष्टमवलोक्यत इत्यर्थः। किंभूतस्याश्वस्य द्रवतो गच्छतः तथा तुरण्यतस्त्वरयतः प्रगर्धिनः प्रगर्ध्यतीति प्रगर्धी अवधिं प्राप्तुं काङ्क्षतः। पक्षिमात्रस्य पर्णमङ्कसदृष्टान्तत्वेनाभिहितम् शीघ्रधावने श्येनदृष्टान्त उच्यते। श्येनस्येव ध्रजतो गच्छतो वेगेन ध्रजगतौ दधिक्राव्णः दधीन् क्रमते दधिक्रावा धारकपर्वताद्यतिक्रामिणः। अन्येभ्योऽपि दृश्यन्त इति क्रमतेर्वनिपि विड्वनोरिति आकारः। ऊर्जा बलेन सह तरित्रतः मार्गं भृशं तरतः यङ्लुकि निपातोऽयम्। स्वाहा सुहुतमस्तु॥ १५॥

उतस्मास्यद्रवतस्तुरण्यतः पर्णन्नवेरनुवातिप्रगर्द्धिनः। श्येनस्येवध्रजतोअङ्कसम्परिदधिक्राव्णःसहोर्ज्जातरित्रतः स्वाहा॥१५

अन्नोभवन्तुवाजिनोहवेषुदेवतातामितद्रवःस्वर्काः। जम्भयन्तोहिं वृकꣳरक्षाꣳसिसनेम्यस्मद्युयवन्नमीवाः॥१६॥

का० उत्तरेण त्वचेन चेति[1]। शन्न इति ऋक्चतुष्टयेनाज्यहोमोऽश्वाभिमन्त्रणं वा। अश्वदेवत्या विराड्वसिष्ठदृष्टा दशाक्षरचतुःपादा।

[1] —— २०,४,५।

काष्ठोच्यते। क्रान्त्वा स्थितो भवतीति[1] यास्कोक्तेः। काष्ठोत्कर्षे स्थितौ दिशीत्यभिधानाच्च। किम्भूता यूयं वाजजितः अन्नस्य जेतारः। तथा अध्वनो मार्गान् स्कभ्नुवन्तः रुन्धन्तः चोभयन्तः स ह्यश्वस्वभावः। तथा योजना योजनानि मिमानाः अतिशीघ्रतया परिच्छिन्दन्तः ॥१३

का० एष स्य इति प्रत्यृचं जुहोत्यनुमन्त्रयते वेति[2]। ऋग्द्वयेनाज्यं जुहोत्यश्वाननुमन्त्रयते वा॥ द्वे अश्वदेवत्ये जगत्यौ दधिक्रावदृष्टे। त्यच्छब्दस्तच्छब्दपर्यायश्छान्दसः स्यः एष वाजी सोऽयमश्वः क्षिपणिं। क्षिप्यते प्रेर्यतेऽनया सा क्षिपणिस्तां। कशां कशाघातमनु तुरण्यति तूर्णमध्वानमश्नुते। यद्वा क्षिपणिं तुरण्यति कशां त्वरयति कशायास्त्वरया शीघ्रं धावतीत्यर्थः। किम्भूतोऽश्वः ग्रीवायामपि

वाजिनोवाजजितोऽध्वनस्कभ्नुवन्तोयोजनामिमानाःकाष्ठाङ्गच्छत ॥ १३ ॥

एषस्यवाजीक्षिपणिन्तुरण्यतिग्रीवायाम्बद्धोऽअपिकक्षऽआसनि।

क्रतुन्दधिक्राऽअनुसꣳसनिष्यदत्पथामङ्काꣳस्यन्वापनीफणत्स्वाहा ॥ १४ ॥

कक्षे आसनि आस्ये च बद्धः तत्तदुचितरज्जुविशेषैः। पद्दन्न इत्यादिना आस्यशब्दस्यासनादेशः सप्तम्याम्। ग्रीवायामुरोबन्धेन बद्धः। कक्षयोः समीपे अपि कक्षं पर्याणदेशस्तत्र सन्नाहरज्ज्वा बद्धः। आस्ये मुखे कविकया बद्धः। तथा दधिक्राः दधाति अश्ववारमिति दधिः आदृगमेति किप्रत्ययः दधिः सन् क्रमतेऽध्वानमिति दधिक्राः विटि क्रमतेराकारः यद्वा दधीन्धारकान् मार्गावरोधानद्रिपाषाणगर्तकण्टकादीनप्यतिक्रामतीति दधिक्राः। तथा क्रतुं सादिनोऽभिप्रायमनु संसनिष्यदत् सम्यगनु सन्दधानः सादिसङ्कल्पानुसारेण

१——निरु० २,१८। २——१४,४,२-४।

स्वाद्भ्यः ॥ पूर्वो मन्त्रो विप्रगृह्य उत्तरः चात्वे । हे दुन्दुभयो वो युष्माकमेषा वाक् सत्या समभूत् तथा जाता यया वाचा बृहस्पतिं वाज मजीजपत । पुनर्बृहस्पतिं वाज मजीजपत अभ्यासे भूयांसमर्थं मन्यन्त इति[1] यास्कोक्तेर्भूयानर्थो ग्राह्यः अत्यन्तं बृहस्पतिमन्नजयं कारितवन्तो यूयं यया वाचा सा सत्या जातेत्यर्थः । जयतेर्णिजन्तस्य लुङि मध्यमबहुवचनेऽजीजपतेति रूपम् । हे वनस्पतयो वनस्पति-विकारा दुन्दुभयो यूयं विमुच्यध्वं कृतकृत्याः सन्तो विमोचनं कुरुत ॥ चात्वे यन्त्रे उत्तरो मन्त्रः । यया वाचा इन्द्रं वाज मजीजपत सा सत्याभूदतो यूयं विमुच्यध्वं तुल्यम् ॥ १२ ॥

एषावःसासत्यासंवागभूद्ययाबृहस्पतिंवाजमजीजपताजीजपतबृहस्पतिंवाजंवनस्पतयोविमुच्यद्ध्वम् ।

एषावःसासत्यासंवागभूद्ययेन्द्रंवाजमजीजपताजीजपतेन्द्रंवाजंवनस्पतयोविमुच्यद्ध्वम् ॥ १२ ॥

देवस्याहꣳसवितुःसवेसत्यप्रसवसोबृहस्पतेर्वाजजितोवाजञ्जेषम् ।

का० देवस्याहमिति यजुर्युक्तमारोहति यजमानः[2] । मन्त्रयुक्तं रथं यजमान आरोहेत् । सत्यप्रसवसः सत्याभ्यनुज्ञस्य सवितुर्देवस्य सवेऽनुज्ञायां वर्तमानोऽहं वाजजितोऽन्नजेतुर्बृहस्पतेः सम्बन्धिनं वाज मन्नं जेषं जयेयं जयतेर्लेटि उत्तमैकवचने लेटोऽडाटावित्यडागमे सिब्बहुलं लेटीति सिप्प्रत्यय इतश्च लोपः परस्मैपदेष्विति मिप इकारलोपे गुणे च जेषमिति रूपम् । यद्वा लुङि अडि उत्तमैकवचने ऽडभावे ॥ का० वाजिन इति वाचयतीति[3] ॥ हे वाजिनोऽश्वा यूयं काष्ठां गच्छत आज्यन्तं प्राप्नुत उत्कर्षं गच्छतेत्यर्थः । आज्यन्तोऽपि

१——निरु० १०,४२ । २——१४,३,१८ । ३——१४,३,२२ ।

स्थितं रथचक्रं ब्रह्मारोहेत् ॥ ब्राह्मणकल्पे वाजपेये लिङ्गोक्तदैवतम् । सत्यसवसः सत्याभ्यनुज्ञस्य सवितुर्देवस्य सवेऽनुज्ञायां वर्तमानोऽहं बृहस्पतेः सम्बन्धिन मुत्तम मुत्कृष्टं नाकं स्वर्गं रुहेय मारोहामि । क्षत्रियवाजपेये चक्रारोहमन्त्रः । तत्र इन्द्रस्य नाकं रुहेयमिति विशेषः ॥ का० आगतेषु ब्रह्मावरोहति देवस्याहमिति[1] । यजमानादीनां सप्तदशरथेषु सप्तदशशरप्रक्षेपप्रदेशे निखाता मौदुम्बरीं शाखां प्रदक्षिणीकृत्य देवयजनदेश मागतेषु सत्सु ब्रह्मा रथचक्रादवरोहति । विप्रयज्ञे पूर्वमन्त्रेण चात्रे उत्तरेण । सत्यं प्रकृष्टं च सवो यस्येति सत्यप्रसवाः अत्र प्रशब्दः प्रकर्षद्योतकः । अरुहमिति भूतकालः नाकमारूढवानस्मीत्यर्थः । शेषं पूर्ववत् ॥ १० ॥

का० बृहस्पते वाजमित्येकं दुन्दुभि माहन्ति तूष्णी मितरानिति[2] । अन्तर्वेदुच्छ्रित्य तस्याखारोपितसप्तदशदुन्दुभीनां मध्ये एकं

बृहस्पतिवाजञ्जयबृहस्पतयेवाचंवदतबृहस्पतिंवाजञ्जापयत । इन्द्रवाचंजञ्जयेन्द्रायवाचंवदतेन्द्रंवाजञ्जापयत॥११॥

मन्त्रेणाहन्ति षोड़श तूष्णीम् ॥ यजुः विप्रयज्ञे मन्त्रः । हे दुन्दुभयो यूयं बृहस्पतये इति वाचं वदत किम् यत् हे बृहस्पते त्वं वाज-मन्नं जय । किञ्च हे दुन्दुभयो यूयमेव बृहस्पतिं वाज मन्नं जापयत बृहस्पतिनान्नजयं कारयतेत्यर्थः । जि जये इत्यस्य हेतुमण्णिचि क्रीङ्जीनां णाविति धातोराकारे कृते अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णाविति पुगागमे लोण्मध्यमबहुवचने जापयतेति रूपम् ॥ क्षत्रयज्ञे दुन्दुभिवादनमन्त्रः । हे दुन्दुभयो यूय मिन्द्रायेति वाचं वदत यत् हे इन्द्र त्वं वाजं जय । इन्द्रं वाजं यूयं जापयतेति पूर्ववत् ॥ ११ ॥

का० एषा व इति मन्त्राहत मवहरते तूष्णी मितरानिति[3] । सप्तदशदुन्दुभीनां मध्ये मन्त्रवादितं मन्त्रेणावतारयति षोड़श तूष्णीं

१——१४,४,८ । २——१४,३,१५ । ३——१४,४,९-१०

ध्येनांख्ये पचिणि यो जवः परोत्तः त्वय्येव परिदत्तः सन् अचरत् चरति प्रवतते यश्चते जवः परिदत्तः सन् वाति अचरत् वायौ चरति। परिपूर्वाद्ददातेर्निष्ठाया मचउपसर्गात्त इति तादेशे दस्तीति दादेशे तकारे परे इगन्तोपसर्गस्य दीर्घे परोत्त इति। हे वाजिन् तेन त्रिविधेन बलेन वेगलक्षणेन बलवान्वेगवान् सन्नोऽस्माकं वाजजित् अन्नस्य जेता भव। च पुनः ममनि सङ्ग्रामे पारयिष्णुः पारयिता च भव पारप्रापको भव। पार तीर कर्मसमाप्तावित्यस्माच्चुरादिणिजन्तात् णेश्छन्दसीति इष्णुप्रत्ययः॥ का० बार्हस्पत्य मेना-

वाजिनोवाजजितोवाज्ꣳसरिष्यन्तोबृहस्पतेर्भागमवजिघ्रत॥ ९॥

देवस्याहꣳसवितुःसवेसत्यसवसोबृहस्पतेरुत्तमन्नाकꣳरुहेयम्। देवस्याहꣳसवितुःसवेसत्यसवस इन्द्रस्योत्तमन्नाकꣳरुहेयम्। देवस्याहꣳसवितुःसवेसत्यप्रसवसोबृहस्पतेरुत्तमन्नाकमरुहम्। देवस्याहꣳसवितुःसवेसत्यप्रसवसइन्द्रस्योत्तमन्नाकमरुहम्॥ १०॥

नाघ्रापयति वाजिन इति[1]। बार्हस्पत्यं चरु मश्वानाघ्रापयेत्। अश्वदेवत्यं यजुः। वाजजितोऽन्नस्य जेतारो वाज मन्नं प्रति सरिष्यन्तो गमिष्यन्तो हे वाजिनो अश्वा यूयं बृहस्पतेर्भागं चरु मवजिघ्रत आघ्राणं कुरुत॥ ९॥

का० देवस्याहमिति ब्रह्मा रथचक्र मारोहतुत्करे नाभिमात्रे स्थाणौ स्थितमिति[2]। उत्करप्रदेशे निखातस्य नाभिमात्रकाष्ठस्याग्रे

१—१४,३,६०। २—१४,३,१८।

का० दक्षिणं युनक्ति वातो वेति[1] । दक्षिणमश्वं रथे योजयेत् ॥ अश्वदेवत्या उष्णिक् । *वाशब्दौ समुच्चयार्थौ । वातो वायुर्मन इन्द्रियं सप्तविंशतिर्नक्षत्राणि गन्धर्वा गोर्भूमेर्धर्तारः ते वातादयोऽग्रे पूर्वमश्वमयुञ्जन् रथे योजितवन्तः ते च वातादयोऽस्मिन्नश्वे जवं वेगमादधुः स्थापितवन्तः ॥ ७ ॥

का० उत्तरं वातरंहा इति[2] । उत्तरमश्वं युनक्ति ॥ अश्वदेवत्या त्रिष्टुप् । हे वाजिन्वेगवन्नश्व युज्यमानः सन् त्वं वातरंहा वातवद्वेगयुक्तो भव वातस्येव रंहो यस्य । किञ्च दक्षिणो दक्षिणभागे स्थितस्त्वमिन्द्रस्याश्व इव श्रिया शोभया युक्त एधि भव । किञ्च विश्व-

वातोवामनोवागन्धर्वाःसप्तविꣳशतिः । तेअग्रेश्वमयुञ्जꣳस्तेअस्मिञ्जवमादधुः ॥ ७ ॥

वातरꣳहाभववाजिनुय्ज्यमानइन्द्रस्येवदक्षिणःश्रियैधि । युञ्जन्तुत्वामरुतोविश्ववेदसआतेत्वष्टापत्सुजवन्दधातु ॥ ८ ॥

जवोयस्तेवाजिन्निहितोगुहायःश्येनेपरीत्तोअचरच्चवाते । तेननोवाजिन्बलवान्बलेनवाजजिच्चभवसमनेचपारयिष्णुः ।

वेदसः सर्वज्ञाः सर्वधना वा मरुतो हे अश्व त्वां युञ्जन्तु रथे नियोजयन्तु । किञ्च त्वष्टा देवः हे अश्व ते तव पत्सु पादेषु जवं वेगमादधातु स्थापयतु ॥ ८ ॥

का० दक्षिणाप्रष्टिं जवो यस्त इति[3] । दक्षिणायां धुरि प्रकृष्टं देशमश्नुत इति दक्षिणाप्रष्टिस्तादृशं तृतीयमश्वं युनक्ति ॥ अश्वदेवत्या जगती । हे वाजिन्नश्व यस्ते तव जवो वेगः गुहा गुहायां हृदयप्रदेशे निहितो वस्थापितः । सुपां सुलुगिति गुहाशब्दात् ङेर्लुक् । श्येने

१—१४,३,६ । २—१४,३,७ । ३—१४,३,८ ।

कृतवन्तः कुर्महे वा करोतेः अपि रूपम्। किंभूतां भूमिं मातरं जगन्निर्मात्रीं महीं महतीं महनीयां वा अदितिं मदीनामखण्डितां वा। किंच इदं विश्वं भुवनं सर्वं भूतजातं यस्यां भूमावाविवेश आविष्टम्। सविता देवस्तस्यां भूमावेव नोऽस्माकं धर्मं धारणमवस्थानं साविषत् प्रसुवतां प्रेरयतु। षू प्रेरणे इति धातोर्णिजन्तस्य लेटि साविषदिति रूपम् सिब्बहुलं लेटि लेटोऽडाटौ इतश्च लोपः परस्मैपदेष्विति ॥ ५ ॥

का० अश्वान् प्रोक्षत्यपोऽवनीयमानान् स्नातान्वागतानप्स्वन्तरिति देवीराप इति वा समुच्चयो वेति[1]। स्नानार्थमपो नीयमानान् स्नात्वागतान्वाश्वानप्स्वन्तरिति देवीराप इति मन्त्रेण द्वाभ्यां वा प्रोक्षेत्॥ अब्देवत्यावसानरहिता पुरउष्णिक् अस्याः पाद

अप्स्वन्तरमृतमप्सुभेषजमपामुतप्रशस्तिष्वश्वाभवतवाजिनः।

देवीरापोयोवऊर्म्मिःप्रतूर्तिःककुन्मान्वाजसास्तेनायंवाजꣳसेत्॥ ६॥

आद्यौ द्वादशाक्षरौ द्वावष्टाक्षरौ। अप्सु उदकेषु अन्तर्मध्ये अमृतमवस्थितमप्सु भेषजमारोग्यपुष्टिकरमौषधं चावस्थितम्। हे अश्वा यूयं तत्रामृतभेषजयुतास्वप्सु वाजिनोऽन्नवन्तो भवत उतापि च अपां प्रशस्तिषु प्रशस्तेषु भागेषु यूयं भवत॥ द्वितीयः प्रोक्षणमन्त्रः अब्देवत्यं यजुः। हे देवीः देव्यो दीप्यमाना आपो वो युष्माकं य ऊर्मिः कल्लोलस्तेन सिक्तोऽयमश्वो वाजमन्नं सेत् सनुयाद् बध्नीयाद्वा। किंभूत ऊर्मिः प्रतूर्तिः प्रकृष्टा तूर्तिर्वेगो यस्य प्रत्वरणशीलः। तथा ककुन्मान् ककुच्छब्देन वृषभस्कन्धे उन्नतप्रदेश उच्यते सादृश्ये मतुप् तत्सामान्यादुदकनिचयैः संयुक्तो बहुलोदकसङ्घातवान् ककुन्मानित्युच्यते। तथा वाजसाः अन्नस्य दाता॥ ६॥

१——१४,३,२-५।

सोमगृह मञ्चोपरि धारयति नेष्टा सुरागृह मञ्चाधस्तात् सहैव धारणं मन्त्रपाठश्च। गृहदेवते यजुषी। हे सोम सुरागृहौ यौ युवं सम्पृचौ स्थः सम्पृक्तौ भवथः। पृचो सम्पर्के क्विप्। तौ युवां मा मां भद्रेण भन्दनीयेन कल्याणेन सम्पृङ्क्तं संसृजतं संयोजयतम्॥ का० विपृचाबित्याहरत इति[1]। अध्वर्युनेष्टारौ स्वं स्वं गृहं स्वसमीपमानयतः। हे गृहौ यतो युवां विपृचौ वियुक्तौ स्थः ततो मा मां पाप्मना विपृङ्क्तं वियोजयतम्॥ ४॥

का० मरुत्वतीयान्त इन्द्रस्य वज्र इति रथावहरणमिति[2]। महामरुत्वतीयान्ते माहेन्द्रात्पूर्वं रथवाहनाच्छकटाद्रथमवतारयति। रथदेवत्यं यजुः। हे रथ त्वमिन्द्रस्य वज्रोऽसि। इन्द्रेण यदा वृत्राय वज्रं प्रहृतं तत्त्रिधा जातं तस्यैको भागो रथ इतीन्द्रो ह यत्र

इन्द्रस्यवज्रोसिवाजसास्त्वयायंवाजꣳसेत्। वाजस्यनुप्रसवेमातरम्महीमदितिन्नामवचसाकरामहे।

यस्यामिदंविश्वम्भुवनमाविवेशतस्यान्नोदेवःसविताधर्म्मसाविषत्॥ ५॥

वृत्राय वज्रं प्रजहारेत्यादिश्रुत्या[3] उक्तम्। किम्भूतस्त्वं वाजसाः वाजमन्नं सनोति ददातीति वाजसाः षणु दाने विट्प्रत्ययः विड्वनोरनुनासिकस्यादित्याकारः। किञ्च अयं यजमानस्त्वया वज्रीभूतेन सहायेन वाजमन्नं सेत् सनोतेः सिनोतेर्वा रूपम् अन्नं सनुयात्सम्भजेत् यद्वा सिनुयाद्बध्नीयात् बह्वन्नवान् भूयादित्यर्थः॥ का० चात्वाल मावर्तयति वाजस्येति धूर्गृहीतमिति[4]। अवतारितं रथं धुरि गृहीत्वा चात्वालाद्दक्षिणेनानीय वेद्यां स्थापयेत्। पृथिवीदेवत्यातिजगती अन्त्यः पादः सवितृदेवत्यः। नु एवार्थे। वाजस्यान्नस्य प्रसवेऽनुज्ञायामेव वर्तमाना वयं यां भूमिं नाम प्रसिद्धं यथा तथा वचसा वेदवाक्येन एवंविधामनुकूलां करामहे

१—१४२,८। २—१४,३,१। ३—१,२,४,१। ४—१४,३,२।

वा अपां रसो योयं पवत इति[१] श्रुतेः । किम्भूतं रसमुद्वयसमुद्गतं वयोन्नं यस्माद्वायोः स उद्वयास्तम् वायुनैव धान्यानि निष्पद्यन्ते । किञ्च अपां रसस्य वायोर्यो रसः सारः प्रजापतिर्हिरण्यगर्भः स हि यज्ञलोककालाग्निवायुसूर्यर्ग्यजुःसामादिवपुः हे देवा वो युष्मदर्थं तं प्रजापतिमहं गृह्णामि किम्भूतमुत्तममुत्कृष्टतमम् । वः शब्दोऽनर्थको वा सोमरूपेण वायुं तदभिमानिनं प्रजापतिं च गृह्णामीत्यर्थः । उपयामिति व्याख्यातम् । एष त इति सादनम् ॥ ३ ॥

अथ पञ्चमम् । ग्रहदेवत्यानुष्टुप् हे ग्रहास्तेषां वो युष्माकं सम्बन्धिनमिषमन्नमूर्जं रसं चाहं समग्रभं समगृहं सम्यग्गृह्णामि ।

गृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ ३ ॥

ग्रहाऊर्ज्जाहुतयोव्यन्तोविप्रायमतिम् । तेषांविशिप्रियाणांवोहमिषमूर्ज्जꣳसमग्रभमुपयामगृहीतो

सीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् । सम्पृचौस्थःसम्माभद्रेणपृङ्क्तंविपृचौस्थोविमापाप्मनापृङ्क्तम् ।

किम्भूतानां विशिप्रियाणाम् शिप्रे हनू नासिके वा इह तु हनू शिप्रयोर्हन्वोः कर्म शिप्रियं हनुचलनम् विगतं शिप्रियं येषु ग्रहेषु ते विशिप्रियाः सम्यगभिषुताः सुपूताश्च तत्र हि हन्वोर्व्यापारो नास्ति सुपेयत्वात् । तेषां केषां ये यूयमूर्जाहुतयः ऊर्जं मन्त्ररसमाह्वयन्ति ये यैर्वा ते ऊर्जाहुतयः । तथा विप्राय मेधाविने इन्द्राय मतिं विशिष्टबुद्धिं व्यन्तः जानन्तो गमयन्तो वा वीत्यस्य गतिकर्मणो धातोः शतृप्रत्यये रूपम् ॥ उपयाम० एष त इति व्याख्याते ॥ का० ऊपर्युपर्यु चमध्वर्युर्धारयत्यधोऽधो नेष्टा सम्पृचाविति[२] । अध्वर्युः

१—५,१,२,३ । २—१८,२,१ ।

गृह्णानादाय षोडशिनं चादाय पञ्चेन्द्रदेवत्यान् गृहान् गृह्णीयात्। त्रीणि यजूंष्यैन्द्रदेवत्यानि। हे सोम त्वम् उपयामगृहीतोऽसि उपयामो गृहस्तेन गृहीतोऽसि। इन्द्राय जुष्टं प्रियं त्वा त्वां गृह्णामि किम्भूतं त्वां ध्रुवसदं ध्रुवे स्थिरेऽस्मिन् लोके सीदतीति ध्रुवसत्तम् नृषु मनुष्येषु सीदतीति नृषत्तम् मनसि सीदतीति मनःसत्तम् सोमाहुतिपरिणामभूतो रस एषु लोकेष्वावर्तमानः सोमाध्यस्त उच्यते। सादयति हे गृह एष खरप्रदेशस्तव स्थानम्। इन्द्राय प्रियतमं त्वां सादयामीति शेषः। अथ द्वितीयम् अप्सुषदमुदकसदं

अप्सुषदन्त्वा घृतसदं व्योमसदमुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्।

पृथिविसदन्त्वान्तरिक्षसदन्दिविसदन्देवसदन्नाकसदमुपयामगृहीतोसीन्द्राय

त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्॥ २॥

अपाᳫं रसमुद्वयसᳫं सूर्य्ये सन्तᳫं समाहितम्। अपाᳫं रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयाम

घृते सीदतीति व्योम्नि अन्तरिक्षे सीदतीति। शेषो व्याख्यातः। अथ तृतीयम्। पृथिव्यामन्तरिक्षे दिवि स्वर्गे देवेषु नास्ति अकं दुःखं यस्मिन् तस्मिन्नाके सुखान्विते स्वर्गविशेषे सीदतीति तादृशम् शेषमृजु॥ २॥

अथ चतुर्थम्। रसदेवत्यानुष्टुप् सूर्ये समाहितं समारोपितं स्थापितं सन्तमपामुदकानां रसं सारं वायुमहं गृह्णामि एष

वह्वीरयुक्तं यथा तथा पाहीत्यर्थः। सुवर्णाश्ववीरान्मह्यं देहीत्यर्थः। किञ्च हे सोम गोमन्तं धेनुयुक्तं वाज मन्न माभर आहर अन्नं धेनूंश्च देहीत्यर्थः। स्वाहा सुहुतमस्तु ह्यग्रहोर्भिश्छन्दसीति भकारः॥ ६२॥ ॥ प्रायश्चित्तानि समाप्तानि॥

॥ ८॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। गृहगृह्यानिमित्तान्तोऽष्टमोऽध्यायः समीरितः॥ ८॥

चतुर्थाध्यायमारभ्याष्टमान्त मध्यायपञ्चके अग्निष्टोममन्त्रास्तदीयप्रासङ्गिका मन्त्राश्चोक्ताः। नवमेऽध्याये वाजपेयमन्त्रा उच्यन्ते चतुस्त्रिंशत्कण्डिकापर्यन्तम्। तेषां बृहस्पतीन्द्रावृषी। तत्र का० देवसवितरिति जुहोति यजत्यादिष्विति[1]। वाजपेयाङ्गभूतानां यजतीनां दीक्षणीयाप्रायणीयादीना मादिषु सकृद्गृहीत माज्यं जुहोति। सवितृदेवत्या त्रिष्टुप्। हे सवितः सर्वस्य प्रेरकान्तर्यामिन्

देवसवितःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय। दिव्योगन्धर्वःकेतपूःकेतन्नःपुनातुवाचस्पतिर्वाचन्नःस्वदतुस्वाहा॥ १॥

उपयामगृहीतोऽसि ... ध्रुवसदन्त्वानृषदम्मनःसदमुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम्।

हे देव दीप्यमान यज्ञं वाजपेयलक्षणं यागं प्रसुव अभ्यनुजानीहि प्रवर्तयेत्यर्थः। यज्ञपतिं यजमानं भगाय भजनीयायानुष्ठान-रूपायैश्वर्याय प्रसुव प्रेरय। एवं मण्डलाधिष्ठातारं पुरुष मुक्त्वेदानीं मण्डलं प्रत्याह त्वत्प्रसादाद्दिवि भवो दिव्यो गन्धर्वो गवां रश्मीनां धारयिता केतपूः केतशब्देनान्नमुच्यते केतमन्नं पुनातीति केतपूः अन्नस्य पावयिता सूर्यमण्डलरूपो देवो नोऽस्माकं केतमन्नं पुनातु शोधयतु। किञ्च त्वत्प्रसादाद्वाचस्पतिः प्रजापतिर्नोऽस्माकं वाजमन्नं हविर्लक्षणं स्वदतु आस्वादयतु स्वाहा सुहुतमस्तु॥ १॥

का० प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं पञ्च चैन्द्रान्ध्रुवसदमिति प्रतिमन्त्रमिति[2]। प्रातःसवन आग्रयणानन्तरं चोन्नति-

[1] — १४,१,११। [2] — १४,१,२६;२,१।

का० सोमिज्योपपाते चैकैकां यथाकालं हुत्वा यज्ञस्य दोह इति वाचयतीति[1]। सोमयागे यज्ञाङ्गविनाशे परमेष्ठ्यादिचतुस्त्रिंशदाहुतीनां मध्ये यथाकाल मथ यदि पवमान इत्यादि[2] श्रुत्युक्ते काले एकैका माहुतिं हुत्वा यजमानं वाचयेत्। यज्ञदेवत्या त्रिष्टुप् पूर्वार्धः परोक्षो द्वितीयः प्रत्यक्षोऽतो यच्छब्दाध्याहारे सा योजना। हे यज्ञ स त्वं मे मम प्रजायां सन्ततौ महि महिमानं धुक्ष्व चर देहीत्यर्थः। यद्वा महि महान्तं पूर्वोक्तं दोहं धुक्ष्व अहं च त्वत्प्रसादाद्रायो धनस्य पोषं पुष्टिं विश्वं सर्वमायुश्चाशीय व्याप्नुयाम्। स कः यस्य यज्ञस्य यजनीयस्य तव दोह आहुतिपरिणामः स प्रसिद्धो यज्ञफलरूपः पुरुत्रा बहुधा विततः प्रसृतः

यज्ञस्यदोहोविततःपुरुत्रासोअष्टधादिवमन्वाततान। सयज्ञधुक्ष्वमहिमेप्रजायाᳪरायस्पोषंविश्वमायुरशीयस्वाहा॥६२

आपवस्वहिरण्यवदश्ववत्सोमवीरवत्। वाजङ्गोमन्तमाभरस्वाहा॥ ६३ ॥

॥ ८ ॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां अष्टमोऽध्यायः ॥ ८ ॥

सन् दिग्भेदेनाष्टधा भिद्यमानो द्युलोकमन्वा ततान व्याप भूमिमन्तरिक्षं च व्याप्य स्वर्गं व्यापेत्यर्थः। ब्रह्मादिस्तम्बपर्यन्तो भूतग्रामा यज्ञपरिणाम इति भावः॥ ६२ ॥

का० आपवस्व हिरण्यवदित्युद्गातृहोमो ध्वाङ्क्षारोहणे यूपस्येति[3]। पशौ सोमे च यूपस्य काकारोहणे उद्गात्रा होमः कार्यः। सोमदेवत्या गायत्री कश्यपदृष्टा। सोम त्वमापवस्व आगच्छ तत्र क्रियाविशेषणानि कथं हिरण्यवत् कनकयुक्तं मश्ववदश्वयुक्तं वीर-

१—२५,६,७। २—१२,५,१,१०। ३—२५,६,९।

प्राप्य दिवं द्युलोकमगन् अगच्छत् ततो द्युलोकस्थाद्यज्ञात् द्रविणं विशिष्टभोगसाधनरूपं धनं यज्ञफलभूतं मा मामष्टु व्याप्नोतु अश्नोतेः पदविकरणयोर्व्यत्ययः । अनेन सूक्तिना मारोहक्रम मभिधायेदानी मवरोहक्रम माह । ततो द्युलोकादवरोहणकाले यज्ञो मनुष्यान्मनुष्यलोकमागच्छन् अन्तरिक्षलोकमगन गतः तत्र स्थिताद्यज्ञाद् द्रविणं यज्ञफलं मामष्टु व्याप्नोतु । दक्षिणायने गमनागमन माह अथ यज्ञो धूमादिमार्गेण पितॄन् प्राप्य पृथिवीं भूलोकमगन् तत्र स्थिताद्यज्ञाद् द्रविणं मामष्टु व्याप्नोतु । किं बहुना यं कञ्च यं कमपि लोकं यज्ञोऽयन् मतस्तस्माद् यज्ञात् मे मम भद्रं कल्याण मभूद्भूयादिति यजमानेनाशास्यते ॥ ६० ॥

पृथिवीमगन्यज्ञस्ततोमाद्रविणमष्टुयङ्कञ्चलोकमगन्यज्ञस्ततोमेभद्रमभूत् ॥ ६० ॥

चतुस्त्रिꣳशत्तन्तवोयेवितत्निरेयइमंयज्ञꣳस्वधयाददन्ते । तेषाञ्छिन्नꣳसम्वेतद्दधामिस्वाहाघर्मोअप्येतुदेवान् ॥ ६१ ॥

घर्मदेवत्या पङ्क्तिस्त्रिष्टुब् वा द्वाचत्वारिंशदक्षरत्वात् । कात्यायनेनास्या विनियोगो नोक्तः । महावीरभेदे घृतहोमः शाखान्तरे । तन्वन्ति प्रायश्चित्तमनेन यज्ञं विस्तारयन्तीति तन्तवो देवाश्चतुस्त्रिंशत्संख्याका ये परमेष्ठ्याद्य इमं यज्ञं वितत्निरे वितेनिरे वितन्वन्ति तनोतेर्लिटि तङि प्रथमबहुवचने लिटि धातोरनभ्यासस्येति द्वित्वे तनिपत्योश्छन्दसीत्युपधालोपे तत्निरे इति रूपम् । ये चेमं यज्ञं स्वधयान्नेन ददन्ते धारयन्ति दद दानधारणयोः तेषां यज्ञं वितन्वतां देवानां यत् छिन्नं तदेतत् अहं सन्दधामि । उकारः पादपूरणः । स्वाहा सुहुतमस्तु अनेन घृतहोमेन महावीरः संहितो भवत्वित्यर्थः । घर्मो महावीरः संहितः सन्देवानप्येतु देवान् प्रति गच्छतु ॥ ६१ ॥

ध्याहारः तौ विष्णू तौ वरुणा वरुणौ। एकत्र विष्णुशब्दस्यैकशेषोऽन्यत्र वरुणशब्दस्य। तुल्यकार्यत्वादुभावपि विष्णू उभावपि वरुणौ कर्मभूतौ प्रति अगन् गतं स्वात्रं यज्ञसाधन मिति शेषः। कदा पूर्वहूतौ पूर्वस्मिन्नाह्वाने यावत्प्रधानं हूयते तावदेव विष्णुं वरुणं च प्रति स्वात्रं हविर्गतमित्यर्थः। विशेषणं वा पूर्वं हूयेते तौ पूर्वहूतौ विष्णुवरुणौ प्रति हविरगान्निति सम्बन्धः। तौ कौ ययोर्विष्णुवरुणयोरोजसा बलेन रजांसि लोकाः स्कभिता स्तभितानि। लोका रजांस्युच्यन्त इति[1] यास्कः। स्कभ्नोतिः स्तम्भनार्थः। किञ्च या यौ विष्णुवरुणौ पत्येते ईशाते ऐश्वर्यं कुर्वाते जगता मीश्वरावित्यर्थः। पत ऐश्वर्ये दिवादिरात्मनेपदी यद्वा पत्येते

वीर्य्येभिर्वीरतमाशविष्ठा। यापत्येतेअप्रतीतासहोभिर्विष्णू अगन्वरुणापूर्वहूतौ ॥ ५८ ॥

देवान्दिवमगन्यज्ञस्ततोमाद्रविणमष्टुमनुष्यानन्तरिक्षमगन्यज्ञस्ततोमाद्रविणमष्टुपितृन्

परसैन्येषु श्येनाविव पततः। किम्भूतौ वीर्येभिर्वीर्यैर्बलैर्वीरतमा अत्यन्तं वीरौ। तथा शविष्ठा। शव इति बलनाम[2]। अत्यन्तं बलवन्तौ अतिशयेन बलिनौ शविष्ठौ विन्मतोर्लुगिति विनिलोपे इष्ठनि टिलोपे शविष्ठाविति रूपम्। तथा सहोभिर्बलैरप्रतीता अप्रतिगतौ न केनापि सम्मुखं गन्तुं शक्यौ अनन्ययोध्याविव्यर्थः न प्रतीयेते तावप्रतीतौ। एवंविधौ विष्णुवरुणौ प्रति स्वात्रं हविर्गत मित्यर्थः ॥ ५८ ॥

का० देवान्दिवमिति सोमे[3]। सोमे स्वत्रं देवान्दिव मित्यभिमर्शनम्॥ अत्यष्टिर्यज्ञदेवत्या यजमानाशीः। अयं यज्ञो देवान् वाय्वादीन्

१—निरु० ४,१९। २—निघ० २,९,२। ३—२५,२,८।

सोमोऽसुरसञ्ज्ञो भवति तदा असवे स्वा०। हूयमानः सोमो रुद्रो भवति तदा रुद्राय स्वा०। अभ्यावृत्तः होमशेषीभूतः सदः प्रति भक्षणार्थ मानीतः सोमो वातो भवति तदा वाताय स्वा०। प्रतिख्यातः ब्रह्मन्नुपह्वयस्वेत्यादिना भक्षणार्थं पृष्टः सोमो नृचक्षा भवति नॄन् मनुष्यान् चष्टे शुभाशुभकारिणः पश्यतीति नृचक्षाः तदा नृचक्षसे स्वा०। भक्ष्यमाणः पीयमानः सोमो भक्षो भवति तदा भक्षाय स्वा०। भक्षयित्वा सन्नः खुरेषु सादितः सोमो नाराशंसाः पितरो भवन्ति नरा अभिमासीना शंसन्तीति नराशंसा यज्ञस्तत्र हिता योग्या वा नाराशंसा नाराशंसगुणविशिष्टाः पितरः तदा निमित्तापत्तौ पितृभ्यो नाराशंसेभ्यः स्वा० ॥ ५८ ॥

प्रतिख्यातोभक्षोभक्ष्यमाणःपितरोनाराशꣳसाः सन्नः ॥ ५८ ॥

सिन्धुरवभृथायोद्यतःसमुद्रोऽभ्यवह्रियमाणःसलिलःप्रप्लुतोययोरोजसास्कभितारजाꣳसि

अवभृथार्थ मुद्यतः सोमः सिन्धुर्भवति तदा सिन्धवे स्वाहेति जुहुयात्। जल मभिमुखं नीयमानः सोमः समुद्रो भवति तदा समुद्राय स्वा०। प्रप्लुतोऽप्सु निमग्नः सोमः सलिलो भवति तदा प्रायश्चित्तापत्तौ सलिलाय स्वा०। एताभिर्यज्ञाहुतिभिर्यज्ञः चिकित्सितः प्रतिसंहितश्च भवतीत्यर्थः। तथा च श्रुतिः। ता वाएताश्चतुस्त्रिंशत माज्याहुतीर्जुहोति चयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंश एतद्वै सर्वैर्देवैर्यज्ञं भिषज्यति सर्वैर्देवैर्यज्ञं प्रतिसन्दधातीति ॥ का० ययोरोजसेति चोदकेनोपसिञ्चेदिति[१]। अभिमर्शनेन विकल्पः। स्वामं रसरूपं सोमं जलेन सिञ्चेत् कालाहुतिहोमं वाचनं च कुर्वीति ज्ञेयम्। विष्णुवरुणदेवत्या त्रिष्टुप्। पूर्वार्धे यच्छब्दोपादानात्तच्छब्दो

१——२५,२,९।

भवति तदेन्द्राय स्वाहेति जु०। हृदे त्वा मनसे त्वेति मन्त्रेण कण्डनार्थ मुपावह्रियमाणः आनीयमानः सोमोऽथर्वनामको भवति तदाथर्वणे स्वाहेति जु० ॥ ५६ ॥

अंशुषु सोमंखण्डेषु न्युप्तः कण्डनं स्थलारोपितः सोमो विश्वदेवनामको भवति तदा विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयात्। अंशुरंशुष्ट(१,७) इत्यादिमन्त्रेण आप्याय्यमानः वर्ध्यमानः सोम आप्रीतपा विष्णुर्भवति। आ समन्तात्प्रीतान् स्वस्मिन् प्रीतिमतो भक्तान् पाति

विश्वे देवा अꣳशुषु न्युप्तो विष्णुराप्रीतपा आप्याय्यमानो यमः सूयमानो विष्णुः सम्भ्रियमाणो

वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीः ॥ ५७ ॥

विश्वे देवाश्चमसेषून्नीतोऽसुर्होमायोद्यतो रुद्रो हूयमानो वातोऽभ्यावृत्तो नृचक्षाः।

एवतीत्याप्रीतपाः तद्गुणविशिष्टः। तदा विष्णवे आप्रीतपाय स्वाहेति जु०। अभिषूयमाणः सोमो यमो भवति तदा यमाय स्वा०। सम्भ्रियमाणः पुञ्जमानः सोमो विष्णुर्भवति तदा विष्णवे स्वा०। दशापवित्रेण पूयमानः सोमो वायुर्भवति तदा वायवे स्वा०। पूतः सोमः शुक्रो भवति तदा शुक्राय स्वा०। क्षीरेण दुग्धेन श्रीयते मिश्रीक्रियत इति क्षीरश्रीः तदा शुक्र एव सोमो भवति तदापि शुक्राय स्वा०। सक्तुभिर्मिश्रितः सोमो मन्थी भवति तदा मन्थिने स्वा० ॥ ५७ ॥

चमसेषु ग्रहपात्रे पून्नीतो गृहीतः सोमो विश्वदेवसञ्ज्ञो भवति तदा विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयात्। होमार्थमुद्यतः

सम्भृतौ सत्यां सोमः सवितृनामको भवति तदा प्रायश्चित्तापत्तौ सवित्रे स्वाहेति जुहुयात्। अथ यदि स्रातः किञ्चिदापद्यत सवित्रे स्वाहेति जुहुयादिति[1] श्रुतेः। दीक्षायां सत्यां सोमो विश्वकर्मेत्युच्यते तदा विश्वकर्मणे स्वाहेति जुहुयात्। सोमः क्रीयतेऽनया सा सोमक्रयणी गौस्तस्यामानीतायां सत्यां सोमः पूषा भवति। तदा निमित्ते पूष्णे स्वाहेति जुहुयात्॥ ५४॥

क्रयाय द्रव्यदानेनात्मसात्करणायोपोत्थितः उपस्थापितः सोम इन्द्रो मरुन्नामकश्च भवति तदा इन्द्राय मरुत्वते स्वाहेति जु०। क्रीयमाणः सोमोऽसुरो भवति असुराय स्वाहेति तदा जु०। यजमानेन क्रीतः सोमो मित्रो भवति तदा मित्राय स्वाहेति जु०। ऊरौ यजमानोत्सङ्गे आसन्नः स्थितः सोमः शिपिविष्टो विष्णुर्भवति। शिपिषु प्राणिषु यज्ञेषु वा विष्टः प्रविष्ट एतन्नामको विष्णुरित्यर्थः।

इन्द्रश्चमरुत्वांश्चक्रयायोपोत्थितोऽसुरःपण्यमानोमित्रःक्रीतोविष्णुःशिपिविष्टऊरावासन्नोविष्णुर्नरन्धिषः

प्रोह्यमाणः॥ ५५॥ सोमआगतोवरुणआसन्द्यामासन्नोऽग्निराग्नीध्रइन्द्रोहविर्धानेऽथर्वोपावह्रियमाणः॥ ५६॥

तदा प्रायश्चित्तापत्तौ विष्णवे शिपिविष्टाय स्वाहेति जु०। प्रोह्यमाणः शकटेनोह्यमानः सोमो विष्णुर्नरन्धिषो भवति नरा ध्रीयन्ते आरोप्यन्ते यस्मिन् स नरन्धिः संसारः तं स्यति नाशयति नरन्धिषः जगत्संहर्तृविशिष्टो विष्णुः यद्वा रध हिंसायाम् रध्यति हिनस्ति रन्धिषः हन्ता न रन्धिषो नरन्धिषः जगत्पालको वा विष्णुः। तदा विष्णवे नरन्धिषाय स्वाहेति जुहुयात्॥ ५५॥

शकटादागतोऽवरूढः सोमनामको भवति तदा सोमाय स्वाहेति जुहुयात्। आसन्द्यां मञ्चिकाया मुपविष्टः सोमो वरुणो भवति तदा वरुणाय स्वाहेति जु०। आग्नीध्रे वर्तमानः सोमोऽग्निर्भवति तदाग्नये स्वाहेति जु०। हविर्धाने वर्तमानः सोम इन्द्रो

१ —— १२,५,१,६।

इचिणेऽस्थनि हुत्वा दोहयेत्पृषदाज्यस्कन्दने चैक इति[1] । मृन्मयघर्मपात्रभेदे भिन्नमभिमृश्य परमेष्ठिने स्वाहा प्रजापतये स्वाहेत्यादीन् सलिलाय स्वाहेत्यन्तांश्चतुस्त्रिंशद्धोमान् जुहोति घर्मदुहो गोर्मरणे तत्स्थाने उदङ्मुख्याः स्थितायाः पत्नीशालापूर्वभागे प्राङ्मुख्या वा पुच्छाद्दचिणेऽस्थनि परमेष्ठिने स्वाहेति चतुस्त्रिंशतमाज्याहुतीर्हुत्वा तां दोहयेत् स्थालीस्थस्य स्रुक्स्थस्य वा पृषदाज्यस्य. वा भ्रंशे एके आचार्याः परमेष्ठ्यादीन् जुह्वतीति सूत्रार्थः । परमेष्ठ्यादयो देवा यज्ञस्य शरीराणि तस्मात्तत्तदवस्थायां होमे यज्ञश्चिकित्सितः प्रतिसंहितो भवति । तथा च श्रुतिः । सोमो वै राजा यज्ञः प्रजापतिस्तस्यैतास्तन्वो या एता देवता या आहुतीर्जुहोति स यद्यज्ञस्यार्छेद्यां तत्प्रति देवतां मन्येत तामनुसमीक्ष्य जुहुयाद्यदि दीचोपसत्स्वाहवनीये यदि प्रसुत आग्नीध्रे विवाएतद्यज्ञस्य पर्व स्रंसते

परमेष्ठ्यभिधीतःप्रजापतिर्वाचिव्याहृतायामन्धोअच्छेतःसवितासन्यांविश्वकर्म्मादीक्षायाम्पूषासोमक्रयण्याम्॥५४

यद्बलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञं भिषज्यति तया देवतया यज्ञं प्रतिसन्दधातीति[2] । अथ मन्त्रार्थः । आध्यायाद्वसिष्ठ ऋषिः । यदा सोमो यजमानेनाभिधीतः सङ्कल्पितो भवति मनसाभिध्यातस्तदा परमेष्ठी भवति । अयमर्थः । मनसा ध्यातः सोमो यदि नोपनमेत् तदा परमेष्ठिने स्वाहेति जुहुयादिति । तथा च श्रुतिः । स यद्येनं मनसाभिध्यातो यज्ञो नोपनमेत्परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्यप पाप्मानं हतउपैनं यज्ञो नमतीति[3] । वाचि व्याहृतायां सोमेन यक्ष्ये इति वचस्युच्चारिते सति सोमः प्रजापतिनामको भवति तदा प्रायश्चित्तापत्तौ प्रजापतये स्वाहेति जुहुयादित्यर्थः । यदा सोमः अच्छाभिमुख्येन इतः प्राप्तस्तदा अन्धो भवति । सोमं प्रति गतौ किञ्चिन्निमित्तं चेत्तदा अन्धसे स्वाहेति जुहुयात् । सन्यां सोमस्य

१——२४,६,१-६ । २——१२,५,१,१-२ । ३——१२,५,१,३ ।

इन्द्रदेवत्यात्यष्टिरवसानत्रयोपेता षट्षष्ट्यक्षरत्वात् द्वाभ्यां न्यूना आद्योऽर्धर्चं इन्द्रपर्वतदेवत्यः। हे पुरोयुधौ पुरोयुधा पुरोग्रे युध्येते तौ पुरोयुधौ इगुपधेति कप्रत्ययः शत्रूणां पुरतो युद्धस्य कर्तारौ हे इन्द्रापर्वता हे इन्द्रपर्वतौ युवं युवां तं शत्रुमपहतं विनाशयतम् आदरे. वीप्सा तं तम् इदेवार्थे तं तमेव शत्रुमपहतं तत्तत्समान मेव सर्वमपि शत्रुं विनाशयतम् तत्रापि विशेष्यते वज्रेण वज्राख्येनायुधेन तं तमित् तं तमेव शत्रुं विनाशयतम्। तदो वीप्साश्रवणाद्यदोऽपि वीप्सा यो यः शत्रुर्नोऽस्मान् पृतन्यात् पृतनां सेनां कुर्यात् योधयेदित्यर्थः। इदानीमिन्द्रः प्रत्यक्षो वज्रस्य कर्तृत्वं चोच्यते हे शूर इन्द्र त्वदीयो वज्रो यद्यदा गहन मत्यन्तगम्भीरं वनं जलं वा प्रति दूरे चत्ताय चततिर्गतिकर्मा वनेऽतिदूरगताय शत्रवे छन्त्सत् छन्दतिः कामनार्थः शत्रुं प्राप्तुं कामयते तदा तमपि दूरगत

**अस्माकꣳ शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः। भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः ॥५३॥**

मिनच्चत् प्राप्नुयात् इनक्षतिर्व्याप्तिकर्मा[1] वने दूरगतमपि इच्छन् गृह्णात्येवेत्यर्थः। ततो दर्मा दारयतीति दर्मा दॄ विदारे अन्येभ्योऽपि दृश्यन्त इति मनिन् प्रत्ययः विदारणशीलो वज्रः अस्माक मस्मदीयान्विश्वतः सर्वतः स्थितान्विश्वतः सर्वान् शत्रून् परि दर्षीष्ट परितो विदारयतु दीर्यतेराशीर्लिङि तङि रूपम्॥ का० पृथक्कामेषु भूर्भुव इति[2]। नानाकामेषु यजमानेषु सर्वे वाग्विसर्जनं कुर्युः। हे भूर्भुवःस्वः अग्निवायुसूर्याः वयं प्रजाभिः सुप्रजाः स्याम वीरैः पुत्रैः सुवीराः स्याम पोषैः पुष्टिभिः सुपोषाः स्याम भवेम। एकवचनान्तोयं व्याख्यातः[3] अत्र तु बहुवचनान्तो मन्त्रः॥ ५३॥ ॥ सत्रोत्थानं समाप्तम्॥ ॥

का० परमेष्ठ्यादींस्त्रयस्त्रिंशतं जुहोति घर्मदुग्घाले चादोहे चोदीच्या दोहस्थानेऽन्यस्याः शालाया वा पुरस्तात्प्राच्याः पुच्छकाण्डा

१——निघ० २,१८,२। २——१२,४,२८। ३——३,३७;७,२९।

एव द्वितीयाहुतिः । उष्णिक् आद्यावष्टाक्षरी तृतीया द्वादशार्णः सोष्णिक् । धारयतीति यत् अग्निरस्मासु रायस्पोषं रायो धनस्य पशुपुत्रसुवर्णादेः पुष्टिं दीधरत् धारयतु धारयतेर्लुङि रूपं मडभाव आर्षः । किम्भूतो यत् मात्रे यत्णाम् । षष्ठ्यर्थे चतुर्थी । मातुः पृथिव्या धारयितारमग्निमुपसृजन् समीपं प्रापयन् तथा मातरं पृथिवीं धयन् पिबन् तत्रोत्पन्नं हविर्भक्षयन्नित्यर्थः । स्वाहेति होमार्थः ॥ ५१ ॥

का० सत्रस्यर्द्धिं गायन्ति सत्रस्य ऋद्धिरिति[१] । सर्वे दीक्षिता उत्तरहविर्धानापरकूवरीमालभ्य सत्रर्धिसंज्ञकं साम गायन्ति ।

सत्रस्यर्द्धिरस्यगन्मज्योतिरमृताऽअभूम । दिवम्पृथिव्याऽअध्यारुहामाविदामदेवान्त्स्वर्ज्योतिः ॥ ५२ ॥

युवन्तमिन्द्रापर्वतापुरोयुधायोनःपृतन्यादपतन्तमिद्धतंवज्रेणतन्तमिद्धतम् । दूरेचत्तायच्छन्त्सद्गहनंयदिनक्षत् ।

बृहती यजमानानां मात्मस्तुतिः सप्तैकादशनवार्णपादा । हे साम सत्रस्य ऋद्धिः समृद्धिस्त्वमसि अतो वयं यजमाना ज्योतिरादित्यलक्षणमगन्म प्राप्ताः ततः अमृता अमरणधर्मा अभूम भूताः पृथिव्याः सकाशाद्दिवं द्युलोकमध्यारुहाम अध्यारूढाः द्युलोकारूढाः ततो देवानिन्द्रादीनविदाम जानीमः पश्याम इत्यर्थः । वेत्तेर्व्यत्ययेन तुदादित्वे लङि रूपम् ज्योतिर्ज्योतीरूपं स्वः स्वर्गं चाविदाम ॥ ५२ ॥

का० युवं तमिति दक्षिणस्याधोऽक्षं प्राञ्चो निःक्रामन्तीति[२] । सर्वे यजमाना दक्षिणहविर्धानाधोमार्गेण प्राञ्चः सन्तः निःसरन्ति ।

१——१२,४,१२ । २——१२,४,१४ ।

का॰ अंशून् सोमे निदधात्युशिक्त्वमिति प्रतिमन्त्रमिति[1]। मन्त्रत्रयेणोलूखलस्थानंशून् सोमे क्षिपेत्। तत्राद्यः। हे देव दीप्यमान हे सोम उशिक् कामयमानस्त्व मग्नेः प्रियं पाथोऽन्न मपीहि अपिगच्छ। द्वितीयः। हे देव सोम वशी कान्तस्त्व मिन्द्रस्य प्रिय मन्न प्राप्नुहि। अथ तृतीयो मन्त्रः। हे देव सोम अस्मत्सखा अस्माकं मित्रभूतस्त्वं विश्वेषां देवानां प्रिय मभिरुचित मन्नं प्राप्नुहि अग्निर्वै प्रातःसवन मिन्द्रो माध्यन्दिनं सवनं विश्वे देवास्तृतीयं सवन मिति श्रुतेः सवनदेवेभ्योऽर्पणम् ॥ ५० ॥

उशिक्त्वन्देवसोमाग्नेःप्रियम्पाथोपीहिवशीत्वन्देवसोमेन्द्रस्यप्रियम्पाथोपीह्यस्मत्सखा

त्वन्देवसोमविश्वेषान्देवानाम्प्रियम्पाथोपीहि ॥ ५० ॥

इहरतिरिहरमद्ध्वमिहधृतिरिहस्वधृतिःस्वाहा। उपसृजन्धरुणम्मात्रेधरुणोमातरन्धयन्।

रायस्पोषमस्मासुदीधरत्स्वाहा ॥ ५१ ॥

अथ सत्रोत्थानमन्त्रा देवदृष्टाः[3] ॥ का॰ शालाद्वार्येऽन्वारब्धेष्विह रतिरिति जुहोतीति[2]। सर्वेषु दीक्षितेष्वध्वर्युस्पृष्टेष्विदानीन्तनगार्हपत्ये घृतं जुहुयात्। पशुदैवतं यजुः। हे गावो युष्मदीया रतिः रमण मिह यजमानेष्वस्तु इहैव यूयं रमध्वं युष्माक मिह यजमानेषु धृतिः सन्तोषोऽस्तु स्वधृतिः स्वकीयाना मपि धृतिरिहैवास्तु स्वाहा सुहुत मस्तु ॥ का॰ अपरा मुपसृजन्निति[3]। शालाद्वार्ये

१——१२,५,१८। २——१२,४,१०। ३——१२,४,११।

मेघोदरस्था आपस्तासां पतन् पतने निमित्ते वृष्टिनिष्पत्त्यर्थं त्वा त्वामाधूनोमि कम्पयामि। कुकूननानाम्। कुङ् शब्दे अत्यर्थं कुवन्त्यः शब्दं कुर्वाणा नमन्ति प्रह्वीभवन्तीति। कुकूनना मेघस्था आपस्तासां पतने त्वां कम्पयामि। भन्दनानाम्। भदि कल्याणे सुखे च भन्दन्तीति। भन्दनाः कल्याणकारिण्यः सुखयित्र्यो वा मेघ्या आपः अन्यत्पूर्ववत्। मदिन्तमानाम्। मादयन्तीति मदिन्यः अत्यर्थं मदिन्यो मदिन्तमाः तमपि पुंवद्भावः नलोपः प्रातिपदिकान्तस्येति नलोपः नाद्घस्येति छान्दसो नुडागमः। अत्यन्तं तर्पयन्त्यो मेघ्या आपः। मधुन्तमानाम् अत्यन्तं मधुस्वादोपेता मधुन्तमाः एवंविधानामपां पतने त्वां धूनोमि। किञ्च शुक्रं

ककुभꣳरूपंवृषभस्यरोचतेबृहच्छुक्रःशुक्रस्यपुरोगाःसोमःसोमस्यपुरोगाः।

यत्तेसोमादाभ्यन्नामजागृवितस्मैत्वागृह्णामितस्मैतेसोमसोमायस्वाहा॥ ४८॥

शुद्धमक्लिष्टकर्माणं त्वां शुक्रे शुद्धे अक्लिष्टकर्मणि निग्राभ्यालक्षणे जले त्वा माधूनोमि। किञ्च अह्नो दिवसस्य रूपे सूर्यस्य रश्मिषु हे सोम त्वा माधूनोमि॥ ४८॥

हे सोम वृषभस्य श्रेष्ठस्य तव ककुभं महत् आदित्यलक्षणं रूपं रोचते दीप्यते ककुभमिति महन्नामसु पठितम्[१] बृहत् महान् शुक्रः शुद्ध आदित्यः शुक्रस्य शुद्धस्य सोमस्य तव पुरोगाः पुरोगामी। सोम एव सोमस्य पुरोगाः पुरोगामी भवितुमर्हति। हे सोम ते त्वदीयमदाभ्यमनुपहिंसितं जागृवि जागरणशीलं यन्नामास्ति तस्मै त्वां गृह्णामि॥ का० तस्मै तइति जुहोतीति[२]। अदाभ्यं जुहोति। सौम्यम् हे सोम तस्मै तादृशाय ते तुभ्यं स्वाहा सुहुतमस्तु तत्सोममेवैतत्सोमाय जुहोतीति[३] श्रुतेः॥ ४८॥

१—निघ० ३,३,१९। २—१२,५,१०। ३—११,५,९,११।

• का० अदाभ्यं गृह्णात्यासिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनꣳशूनवधायाग्नये त्वा गायत्रच्छन्दस मिति प्रतिमन्त्र मुपयामः सर्वत्राविशेषादिति[1]। यस्मिन्नौदुम्बरे पात्रे अंशुर्गृहीतस्तस्मिन् होतृचमसस्था निग्राभ्यासज्ञा अप आनीय तस्मिंस्त्रयः सोमलताः प्रक्षिप्याग्नये त्वेत्यादिभिस्त्रिभिर्मन्त्रैः क्रमेणादाभ्यं ग्रहं गृह्णाति मन्त्रैः सोमलताप्रक्षेपो वेति केचित् उपयामगृहीतोऽसीत्येतत्त्रिष्वपि मन्त्रेष्वादावनुषञ्जनीयं सर्वशेषत्वादाम्नानस्येति सूत्रार्थः। तत्र प्रथमो मन्त्रः। अदाभ्यदेवत्यानि त्रीणि यजूंषि देवदृष्टानि। हे सोम त्वमुपयामेन ग्रहेण गृहीतोऽसि हे ग्रह गायत्री छन्दो यस्य ग्रहस्य तं गायत्रीच्छन्दसं त्वा मग्नयेऽग्निप्रीत्यर्थं गृह्णामि। द्वितीयो मन्त्रः। उपयामेन गृहीतोऽसि हे ग्रह त्रिष्टुप् छन्दो यस्य तादृशं त्वा मिन्द्राय गृह्णामि। तृतीयो मन्त्रः। उपयाम० जगती छन्दो

**व्रेशीनान्त्वापत्मन्नाधूनोमिकुकूननानान्त्वापत्मन्नाधूनोमिभन्दनानान्त्वापत्मन्नाधूनोमिमदिन्तमानान्त्वापत्मन्ना**

**धूनोमिमधुन्तमानान्त्वापत्मन्नाधूनोमिशुक्रन्त्वाशुक्रआधूनोम्यह्नोरूपेसूर्य्यस्यरश्मिषु ॥ ४८ ॥**

यस्य तादृशं त्वां हे ग्रह विश्वेभ्यो देवेभ्योऽर्थाय गृह्णामि। एवं सवनदेवताभ्यो वारत्रयं ग्रहणम्॥ का० अनुष्टुमद्दतुरक्ति[2]। एनं मन्त्रं पठेत्। अदाभ्यदेवत्यं देवदृष्टम्। एवं स्वच्छन्दसं सोमं गृहीत्वाथ तमाह हे सोम अनुष्टुप्छन्दस्ते तवाभिगरः अभिष्टव इत्यर्थः। गृ स्तुतौ यद्वा ऊर्ध्वं सवनेभ्यस्तदानुष्टुभमिति श्रुतेः[3] ॥ ४७ ॥

का० धूनोत्यꣳशुभिर्व्रेशीनां त्वेति गच्छन्नाहवनीयमिति[4]। आहवनीयसमीपं गच्छन्नंशुभिरदाभ्यगृहस्थानि जलानि चालयेत्। एतदादीनि विश्वेषां देवाना मित्यन्तानि सोमदेवत्यानि देवदृष्टानि। हे सोम व्रेशीनाम् व्रजतो मेघस्योदरे प्रेरते ता व्रेश्यो

१——१२,५,१३-१५। २——१२,५,१७। ३——११,५,९,७। ४——१२,५,१७।

जोषदिति रूपम् । किम्भूतः सः विश्वशम्भूः विश्वस्य शं सुखं भवत्यस्मादिति विश्वशम्भूः साधुकर्मा शोभनकर्मकर्ता । हे ग्रह उपयामगृहीतोऽसि विश्वकर्मणे सर्वकर्त्रे इन्द्राय त्वां गृह्णामि । सादयति एष ते योनिः विश्वकर्म्मणे इन्द्राय त्वां सादयामि ॥४५॥

तृतीयो मन्त्रविकल्पः । इन्द्रविश्वकर्म्मदेवत्या त्रिष्टुप् शासदृष्टा । हे विश्वकर्म्मन् वर्धनेन वर्धमानेन वर्धयित्वा वा हविषा त्वमिन्द्रं त्रातारं जगतो रक्षक मवध्यं हन्तु मशक्य मप्रतिभटं चाकृणोः कृतवानसि । तस्मै तादृशायेन्द्राय पूर्व्वा विशः प्रजाः पूर्वे

विश्वकर्म्मन्हविषावर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम् । तस्मैविशःसमनमन्तपूर्वीरयमुग्रोविहव्योयथासत् ।

उपयामगृहीतोसीन्द्रायत्वाविश्वकर्म्मणएषतेयोनिरिन्द्रायत्वाविश्वकर्मणे ॥ ४६ ॥

उपयामगृहीतोस्यग्नयेत्वागायत्रच्छन्दसङ्गृह्णामीन्द्रायत्वात्रिष्टुप्छन्दसङ्गृह्णामि

विश्वेब्भ्यस्त्वादेवेब्भ्योजगच्छन्दसङ्गृह्णाम्यनुष्टुप्तेभिगरः ॥ ४७ ॥

वसिष्ठादयो मनुष्याः समनमन्त सम्यङ्नताः यथा पञ्चम्यर्थे थाल्प्रत्ययः यथा यतः कारणात् अयमिन्द्रः उग्र उद्गूर्णवज्रो विहव्यो विविधेषु कार्येषु आह्वयत इति विहव्यश्च असद्भूत् तस्माद्विशस्तस्मै नता इत्यर्थः । विश्वकर्म्मन् त्वद्धविःसामर्थ्यादिन्द्रस्त्वाय प्रभाव इति भावः । उपयाम एष ते इति व्याख्याते ॥ ४६ ॥

दूर्ध्वं.मैन्द्रग्रहग्रहणे मन्त्रत्रयम्। तत्राद्यः। इन्द्रदेवत्यानुष्टुप् शासदृष्टा हे इन्द्र नोऽस्माकं मृधः शत्रून् सङ्ग्रामान् वा विजहि विशेषेण नाशय। किञ्च पृतन्यतः नीचा यच्छ। पृतनां सङ्ग्रामं सेनां वा इच्छन्ति ते पृतन्यन्ति पृतन्यन्तीति पृतन्यन्तस्तान् सुप आत्मनः क्यजिति पृतनाशब्दात्क्याचि प्रत्यये कव्यध्वरपृतनस्यर्चि लोप इति टिलोपे शतृप्रत्यये च रूपम्। पृतन्यतः सेना मिच्छतः शत्रून्नीचान्यग्भूतान्यच्छ निगृह्णीष्व युद्धादुपरतान् कुर्वित्यर्थः। किञ्च यथान्योऽस्मानभिदासति। दसु उपक्षये। उपक्षयति तं शत्रु मधरं निकृष्टं तमो नरकं.गमय प्रापय संहितायां दीर्घः॥ हे ग्रह त्व मुपयामेन गृहीतोसि विशिष्टो मृत् संग्रामो यस्य तस्मै विमृधे विशिष्टसङ्ग्रामवते इन्द्राय त्वां गृह्णामि। सादयति एष तव योनिः विमृद्गुणविशिष्टायेन्द्राय त्वां सादयामि॥ ४४॥

वाचस्पतिंविश्वकर्म्माणमूतयेमनोजुवंवाजेअद्याहुवेम। मनोविश्वानिहवनानिजोषद्विश्वशम्भूरवसेसाधुकर्म्मा।

उपयामगृहीतोसीन्द्रायत्वाविश्वकर्म्मणएषतेयोनिरिन्द्रायत्वाविश्वकर्म्मणे॥ ४५॥

अथ द्वितीयः। विश्वकर्मदेवता त्रिष्टुप् शासदृष्टा ईदृश मिन्द्रं वाजे महाव्रतीयलक्षणान्नविषये अद्यास्मिन्दिने वयं हुवेम आह्वयाम किमर्थं मूतये अवनाय रक्षणाय। किम्भूतं विश्वकर्माणं विश्वानि समस्तानि जगदुत्पत्त्यादीनि कर्माणि यस्य तम्। तथा वाचस्पतिं वाचां पालयितारं वाचोऽधिपतिं तस्मादाहुरिन्द्रो वागिति श्रुतेः। तथा मनोजुवं जूरिति जवनाम मनसो जूरिव जव इव जवो यस्य स मनोजूस्तम्। स ईदृश इन्द्रो नोऽस्माकं विश्वानि सर्वाणि हवनानि आह्वानानि अवसेऽन्नायान्नसमृद्धैर रक्षणाय वा जोषत् जुषताम् अस्मदाह्वानं साधु-साध्विति सेवताम्। लेटोऽडाटावित्यडागमे इतश्च लोपः परस्मैपदेष्विति तिप इलोपे

का० इडे रन्त इति दक्षिणेऽस्याः कर्णे यजमानो जपतीति[1]। पूर्वोक्ताया धेनोर्दक्षिणकर्णे यजमानो जपेत्। गोदेवत्या प्रस्तारपङ्क्तिः कुसुरुविन्दुदृष्टा यस्या आद्यौ पादौ द्वादशार्णौ सा प्रस्तारपङ्क्तिः। इड्यते स्तूयते इति इडा मनोर्दुहिता तत्तुल्या। रमयतीति रन्ता। हूयते यद्दुग्धं यज्ञेष्विति हव्या हूयते आहूयते सर्वैरिति वा हव्या। काम्यत इति काम्या मनुष्याणां ह्येतासु कामाः प्रविष्टा इति श्रुतिः। चन्दयत्याह्लादयतीति चन्द्रा। द्युत दीप्तौ द्योतयति प्रकाशयतीति ज्योता दकारस्य जः। अदितिरदीनानवखण्डिता। सरस्वती सरतीति सरः क्षीरं तद्वती सर इत्युदकनाम। सर्तेरिति[2] यास्कोक्तेः। उदकशब्देनात्र क्षीरमुच्यते। मही

इडेरन्तेहव्येकाम्येचन्द्रेज्योतेदितेसरस्वतिमहिविश्रुति। एतातेअघ्न्येनामानिदेवेभ्योमासुकृतम्ब्रूतात् ॥ ४३ ॥

विनइन्द्रमृधोजहिनीचायच्छपृतन्यतः। योअस्माँ२ अभिदासत्यधरङ्गमयातमः।

उपयामगृहीतोसीन्द्रायत्वाविश्वकर्मणएषतेयोनिरिन्द्रायत्वाविश्वकर्मणे ॥ ४४ ॥

महती। विविधं श्रूयते स्तूयत इति विश्रुतिः। न हन्तुं योग्या अघ्न्या अहन्तव्या। तासां सम्बोधनानि हे धेनो एवम्भूते ते तव एता एतानि अतिशयगुणयुक्तानि नामानि एतैर्नामभिरभिहिता सती देवेभ्यः सुकृतं सुष्ठु करोतीति सुकृत् तं सुकृतं शोभनकर्मकारिणं मां त्वं ब्रूतात् ब्रूहि वद अयं यजमानः पुण्यकर्तेति देवेभ्यो वदेत्यर्थः ॥ ४३ ॥

का० ग्रहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्मन्निति वेति[3]। गवामयनस्योपान्त्ये महाव्रतेऽहनि प्राजापत्यपशूपालम्भा-

१——१२,४,२०। २——निरु० ९,२६। ३——१३,२,१७।

ग्रहणं कार्यम्। सौरी गायत्री देवदृष्टा पुनर्व्याख्यायते त्यं तं प्रसितं जातवेदसं जातानां प्रजानां ज्ञातरं जातप्रज्ञं वा देवं देवनशीलं सूर्यं केतवः प्रज्ञाहेतवः किरणा उ आशु उद्वहन्ति उदयाचलादुद्गमयन्ति। किमर्थं विश्वाय। षष्ठ्यर्थे चतुर्थी। विश्वस्य दृशे दर्शनाय सर्वं जगद्द्रष्टुमित्यर्थः। उपयाम एष ते व्याख्याते ॥ ४१ ॥

का० हविर्धानाग्नीध्रयोरन्तरे द्रोणकलशमेनामाघ्रापयत्याजिघ्रेति[1]। गर्गत्रिरात्रादावहीने त्रिसुत्ये गोसहस्रं दक्षिणास्ति तत्र सहस्रसङ्ख्यापूरणी रोहिणी धेनुस्तां हविर्धानाग्नीध्रयोर्मध्यस्थां द्रोणकलश माघ्रापयेत्। गोदेवत्या महापङ्क्तिः कुसुरुबिन्दुदृष्टा

उपयामगृहीतोसिसूर्य्यायत्वाभ्राजायैषतेयोनिःसूर्य्यायत्वाभ्राजाय ॥ ४१ ॥

आजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः। पुनरूर्जानिवर्त्तस्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ४२

अष्टार्णषट्पादा। महीति गोनाम[2]। हे महि हे धेनो त्वं कलशं द्रोणकलशाख्यं पात्र माजिघ्र आभिमुख्येन घ्राणं कुरु किञ्च हे धेनो इन्दवः सोमाः त्वा त्वा माविशन्तु द्रोणकलशस्थाः सोमास्त्वां प्रविशन्तु। किञ्च ऊर्जा विशिष्टरसेन पयोभूतेन सह पुनः अस्मान् प्रति निवर्तस्व। या त्वमेवं मया स्तुता सा त्वं नोऽस्माकं सहस्रं धुक्ष्व सहस्रसङ्ख्यं धनं देहि यद्वा गवां सहस्रं यदस्माभिर्दत्तं तन्नोऽस्मभ्यं धुक्ष्व पुनर्देहि दुहतिर्दानार्थः। किञ्च त्वत्प्रसादादुरुधारा बहुपयोयुक्ता पयस्वती धेनुर्मां मां पुनराविशतात् आगच्छ-त्वित्यर्थः। तथा रयिः धन मपि मा मामाविशतात् ॥ ४२ ॥

१——१३,४,१८। २——निघ० २,११,५।

तृतीयोतिग्राह्यमन्त्रः। सूर्यदेवत्या गायत्री प्रस्कण्वदृष्टा यजुरन्ता। दृशेर्लुङि इरितो वेति च्लेरङादेशे ऋदृशोऽङि गुण इति उत्तमैकवचने अदर्शमिति प्राप्ते योडो रुड्वेत्ति विभाषा बहुलं छन्दसीति दृशेरुत्तरस्य मिवादेशस्यामो रुडागमो धातोर्गुणाभावश्छान्दसः अदृश्रमिति रूपम् कर्मणि लङि प्रथमपुरुषबहुवचनस्थाने द्रष्टव्य महश्यन्त इत्यर्थः। वीत्युपसर्गोऽदृश्रमित्यनेन सम्बध्यते। केतुरिति प्रज्ञानामसु[1] पठितम्। अस्य सूर्यस्य केतवः प्रज्ञाहेतवः सर्वपदार्थज्ञानकर्तो रश्मयः किरणा जनाननु सर्वप्राणिनोऽनुगता वि अदृश्रम् विशेषेणादृश्यन्त सूर्यकराः सर्वजनानुगता व्यापका दृश्यन्त इत्यर्थः। तत्र दृष्टान्तः भ्राजन्तो ज्वलन्तोऽग्नयो वह्नयो यथा

**अदृश्रमस्यकेतवोविरश्मयोजनाँ२अनु। भ्राजन्तोअग्नयोयथा। उपयामगृहीतोसिसूर्य्यायत्वाभ्राजायैषतेयोनिः**

**सूर्य्यायत्वाभ्राजाय। सूर्य्यभ्राजिष्ठभ्राजिष्ठस्त्वन्देवेष्वसिभ्राजिष्ठोहम्मनुष्येषुभूयासम्॥ ४०॥**

**उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः। दृशेविश्वायसूर्य्यम्।**

जनानुगता दृश्यन्ते तद्वत्। हे ग्रह त्वमुपयामेन गृहीतोऽसि भ्राजते दीप्यतेऽसौ भ्राजस्तस्मै सूर्याय त्वा गृह्णामि। सादयति एष तव योनिः भ्राजाय दीप्ताय सूर्याय त्वां सादयामि। तृतीयातिग्राह्यभक्षणमन्त्रः। अत्यन्तं भ्राजो भ्राजिष्ठः हे भ्राजिष्ठ अतिदीप्त हे सूर्य त्वं यथा देवेषु भ्राजिष्ठोऽसि तथाहमपि मनुष्येषु भ्राजिष्ठोऽतिदीप्तिमान् भूयासम्॥ ४०॥ इति द्वादशाहः॥

का० उदु त्यमिति ग्रहग्रहणमिति[2]। गवामयनाख्यस्य संवत्सरसत्रस्य विषुवन्नामके मध्यमेऽहनि सौर्यपशूपालम्भादूर्ध्वमतिग्राह्य-

१——निघ० ३,९,१।  २——१३,२,११।

पुत्रपश्वादिवृद्धिं पवस्व प्रवर्तयेति सम्बन्धः। उपयामयतीतुपयामो गृहः हे सोम तेन त्वं गृहीतोसि हे गृह वर्चसे वर्चस्विने तेजस्विनेऽग्नये त्वां गृह्णामीति शेषः। सादयति एष खरप्रदेशस्तव योनिः स्थानं वर्चस्विनेऽग्नये त्वां सादयामीति शेषः॥ भक्षणमन्त्रः। हे वर्चस्विन्विशिष्टतेजोयुक्त हे अग्ने त्वं देवेषु इन्द्रादिषु मध्ये वर्चस्वानतिदीप्तिमानसि अतस्त्वत्प्रसादादहमपि मनुष्येषु मध्ये वर्चस्वान् ब्रह्मवर्चससम्पन्नो भूयासं भवेयम्॥ ३८॥

द्वितीयेतिग्राह्यग्रहणमन्त्रः। इन्द्रदेवत्या गायत्री कुत्सदृष्टा यजुरन्ता। हे इन्द्र त्वमोजसा बलेन सह उत्तिष्ठन्नासनादुद्गच्छन् सन् शिप्रे हनू नासिके वा अवेपयः टुवेपृ कम्पने कम्पितवानसि किं कृत्वा सोमं पीत्वी पीत्वा स्नात्व्यादयश्चेति निपातः। किम्भूतं सोमं

**उत्तिष्ठन्नोजसासहपीत्वीशिप्रेअवेपयः। सोममिन्द्रचमूसुतम्। उपयामगृहीतोसीन्द्रायत्त्वौजसएषते योनिरिन्द्रायत्त्वौजसे। इन्द्रौजिष्ठौजिष्ठस्त्वन्देवेष्वस्योजिष्ठोहम्मनुष्येषुभूयासम्॥ ३९॥**

चमूसुतं चम्वामधिषवणचर्मणि सुतमभिषुतम् सोमपानं कृत्वातिहर्षवशात्त्वासे कम्पितवानित्यर्थः॥ हे ग्रह त्वमुपयामगृहीतोऽसि ओजसे बलवते इन्द्राय त्वां गृह्णामि। सादयति एष ते योनिः ओजसइन्द्राय सादयामि॥ भक्षणमन्त्रः। हे इन्द्र हे ओजिष्ठ ओजो बलमस्यास्तीत्योजस्वी। अस्मायेत्यादिना विनिप्रत्ययः अत्यन्तमोजस्वी ओजिष्ठः अतिशायने तमबिष्ठनाविति इष्ठन् प्रत्ययः। विन्मतोर्लुगिति इष्ठनि परे विनि लोपः। टिलोपश्च। तत्सम्बोधनमोजिष्ठ। अतिबलयुक्त त्वं यथा देवेष्वोजिष्ठोऽसि एवं मनुष्येषु मध्येऽहमोजिष्ठोऽतिबलो भूयासम्॥ ३९॥

सोमं पिबामि। जुषाणा मदीयेन भक्षेण सेवमाना वाग्देवी सरस्वती प्राणेन प्राणदेवतया सह सोमस्य तृप्यतु सोमेन तृप्ता भवतु तृप्त्यर्थानां करणे षष्ठी वेति सोमशब्दात्षष्ठी। स्वाहा सुहुतमस्तु॥ ३७॥ ॥ इति षोडशिग्रहः सम्पूर्णः॥

अथ द्वादशाहमन्त्राः॥ ॥ का० पृ४४। षडहस्तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वेऽग्ने पवस्वोत्तिष्ठन्नदृश्रमित्यन्वृचमेकेकम् अग्ने वर्चस्विन्निन्द्रौजिष्ठ सूर्य भ्राजिष्ठेति भक्षणं यजमानैरिति[1]। अस्ति कश्चित्पृष्ठ्यः षडहाख्यः क्रतुः स तु षड्भिरहोभिर्निष्पाद्यः तत्र पूर्वस्मिन्नहस्त्रये क्रमेणाग्ने पवस्वेत्यादिभिर्मन्त्रैरतिग्राह्यान् ग्रहान् गृह्णीयात्तथैवाग्ने वर्चस्विन्नित्यादिभिर्मन्त्रैस्तत्तत्ग्रहशेषं भक्षयेत्।

अग्ने पवस्व स्वपा अस्मे वर्च्चः सुवीर्य्यम्। दधद्रयिम्मयि पोषम्।

उपयामगृहीतोऽस्यग्नये त्वा वर्च्चस एष ते योनिरग्नये त्वा वर्च्चसे।

अग्ने वर्च्चस्विन्वर्च्चस्वांस्त्वन्देवेष्वसि वर्च्चस्वानहम्मनुष्येषु भूयासम्॥ ३८॥

तत्र प्रथमो यथा। अग्ने पवस्व। अग्निदेवत्या गायत्री वैखानसदृष्टा आर्षी समार्षौ पादौ एषा यजुरन्ता उपयाम एष तदिति द्वे यजुषी। हे अग्ने त्वमस्मे अस्मासु सुवीर्यं शोभनं वीर्यं यस्मिंस्तादृशं शोभनसामर्थ्योपेतं वर्चो ब्रह्मवर्चसं पवस्व पव गत्यर्थः अन्तर्भूतण्यर्थः गमय प्रापय। सुपां सुलुगिति विभक्तेः शेआदेशे अस्मे इति रूपम्। किम्भूतस्त्वं स्वपाः। अप इति कर्मनाम[2]। शोभनान्यपांसि यस्य स स्वपाः सुकर्मा। एवम्भूतस्त्विग्भिः सह संप्रार्थ्य स्वयं याचते मयि यजमाने रयिं धनं दधत् धारयन् स्थापयन् सन् पोषं पुष्टिं

१——१२,३,१-२। २——निघ० २,१,१।

भूतजातानि आविवेश अन्तर्यामिरूपेण प्रविष्टवान् सः प्रजापतिः स्वोत्पन्नप्रजापालकस्त्रीणि ज्योतींषि अग्निवायुसूर्यलक्षणानि तेजांसि विषयज्ञापकानि सचते सेवते स्वतेजसा तज्ज्योतिषा मुज्जीवनं करोतीत्यर्थः। येन सूर्यस्तपति तेजसेद्ध इत्यादिश्रुतेः। यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति[१] स्मृतेश्च। किम्भूतः प्रजापतिः प्रजया संरराणः प्रजारूपेण सम्यग्रममाणः। तथा षोडशी षोडशकलात्मकलिङ्गशरीरोपहितः स एव सर्वव्यवहाराश्रय इत्यर्थः यः सर्वेषु भूतेषु तिष्ठन्नित्यादिश्रुतेः ॥ ३६ ॥

प्रजापतिः प्रजया स꣡ꣳरराणस्त्रीणि ज्योती꣡ꣳषि सचते स षोडशी ॥ ३६ ॥

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम्।

तयोरहमनु भक्षं भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ॥ ३७ ॥

का० इन्द्रश्च सम्राडिति भक्षणमिति। षोडशिग्रहं भक्षयेत्। इन्द्रवरुणदेवत्या षोडशिदेवत्या वा त्रिष्टुब्यजुरन्ता अन्त्यपादो द्वादशार्णो सह प्राणेनेति यजुः विवस्वद्दृष्टा। हे षोडशिग्रह तौ देवौ इन्द्रावरुणौ ते तव एतं सोममग्रे प्रथमं भक्षं चक्रतुः। तौ कौ इन्द्रो वरुणश्च चकारौ समुच्चये किम्भूत इन्द्रः सम्राट् परमैश्वर्ययुक्तः वाजपेययाजीत्यर्थः। किम्भूतो वरुणः राजा राजसूययाजी राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेनेति[२] श्रुतेः। तयोरिन्द्रावरुणयोः सम्बन्धिनं भक्षमनु पश्चात् अहं भक्षयामि

१—भग० गी० १५,१२। २—५,१,१,१३।

भावः तथा कक्ष्यप्रा कक्षे भवः कक्ष्यः अश्वसन्नाहरज्जुः कक्ष्यं मध्यबन्धनं प्रातः पूरयतस्तौ कक्ष्यप्रौ स्थूलावयवावित्यर्थः। अथानन्तरं रथारोहणानन्तरं हे इन्द्र सोमपाः सोमपानं कुर्वन्नोऽस्मदीयानां गिरा सम्यजुःसामलक्षणानां वाचा मुपश्रुति मुपश्रवणं वर गच्छ प्राप्नुहि अस्मद्गिरः शृणुहीत्यर्थः। वाचं श्रुत्वास्मद्गृहमागच्छेत्यर्थः। उपयाम एष ते एते व्याख्याते। अथैतत्र संहितायां दीर्घः॥३४॥

षोडशिग्रहे तृतीयो मन्त्रविकल्पः आययथाहेन्द्रमिद्धरीइति मन्त्रोत्वेति कठसूत्रोक्तेः। इन्द्रदेवत्यानुष्टुब्गोतमदृष्टा। इत् एवार्थे हरी हरितवर्णावश्वौ ऋषीणां स्तुतीरुप वसिष्ठादीनां मुनीनां स्तुतिसमीप इन्द्रमित् इन्द्रमेव वहतः प्रापयतः। च पुनः

इन्द्रमिद्धरीवहतोप्रतिधृष्टशवसम्। ऋषीणाञ्चस्तुतीरुपयज्ञञ्चमानुषाणाम्।

उपयामगृहीतोसीन्द्रायत्वाषोडशिनएषतेयोनिरिन्द्रायत्वाषोडशिने ॥ ३५ ॥

यस्मान्नजातःपरोअन्योअस्तियआविवेशभुवनानिविश्वा।

मानुषाणां यज्ञमुप यज्ञसमीपे च हरी इन्द्रं वहतः। किम्भूतमिन्द्रम् अप्रतिधृष्टशवसम् प्रतिधर्षयितुं पराभवितुं शक्यं प्रतिधृष्टं न प्रतिधृष्टमप्रतिधृष्टं शवो बलं यस्य सोऽप्रतिधृष्टशवास्तम्। उपयाम एष ते इति व्याख्याते ॥ ३५ ॥

का० उपस्थायैनं यस्मान्न जात इति[१]। षोडशिग्रह मुपतिष्ठेत्। इन्द्रदेवत्या त्रिष्टुप् विवस्वद्दृष्टा। परब्रह्मरूपेण षोडशी स्तूयते यस्मात्पुरुषादन्यः व्यतिरिक्तः परः उत्कृष्टो देवादिर्जातः सम्भूतो नास्ति न विद्यते यश्च विश्वा विश्वानि सर्वाणि भुवनानि

१——१२,५,१९।

युञ्ज्वा हीति वेति[1]। प्रातःसवने आग्रयणग्रहणानन्तरं माग्नेय मतिग्राह्य मादाय चतुःकोणेन खादिरोलूखलेनातिष्ठ युञ्ज्वा हीति मन्त्रयोरन्यतरेण सोपयामेन षोडशिग्रहं गृह्णीयात्। इन्द्रदेवत्यानुष्टुब्गोतमदृष्टा। हे वृत्रहन्निन्द्र ते तव हरी हरितवर्णावश्वौ ब्रह्मणा त्वयौलक्षणेन इन्द्रागच्छेत्यादिमन्त्रेण युक्ता रथे संयुक्तौ अतस्त्वं रथ मातिष्ठ आरोह। इन्द्राह्वानं श्रुत्वाश्वनियोजनकालः प्राप्त इति मत्वाश्वौ स्वय मेव रथे युञ्जाते इति युक्ता इत्युक्तम्। किञ्च ग्रावा सोमाभिषवपाषाणः ते तव रथारूढस्य मनोऽर्वाचीन-मस्मत्यज्ञाभिमुखं सु कृणोतु सुतरां करोतु केन वग्नुना। वग्नुरिति वाङ्नामसु[2] पठितम्। वाचा श्रवणीयेन सोमाभिषवशब्देन। हे

उपयामगृहीतोसीन्द्रायत्वाषोडशिनएषतेयोनिरिन्द्रायत्वाषोडशिने ॥ ३३ ॥

युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा। अथानइन्द्रसोमपागिरामुपश्रुतिञ्चर।

उपयामगृहीतोसीन्द्रायत्वाषोडशिनएषतेयोनिरिन्द्रायत्वाषोडशिने ॥ ३४ ॥

सोम त्वमुपयामेन गृहीतोऽसि षोडशिने षोडशं स्तोत्र मस्यास्तीति षोडशी तस्मै इन्द्राय त्वा त्वां गृह्णामीति शेषः। सादयति हे ग्रह एष ते योनिः स्थानं षोडशिनइन्द्राय त्वां सादयामीति शेषः ॥ ३३ ॥

द्वितीयो ग्रहणमन्त्रः। इन्द्रदेवत्यानुष्टुब्मधुच्छन्दोदृष्टा। हे इन्द्र हि निश्चितं हरी हरितवर्णौ त्वदीयावश्वौ युक्ष्वा रथेन संयोजय कीदृशौ हरी केशिना प्रलम्बकेसरौ तथा वृषणा। वृष सेचने। वृषणौ वर्षितारौ सेक्तारौ तरुणौ वा। षपूर्वस्य निगमइति दीर्घा-

१—— १२,५,२। २——निघ० १,११,२५।

का० समिष्टयजुरन्ते शामित्र एव जुहुयात्तिष्ठन्मरुत इत्यस्वाहाकृत्येति¹ । समिष्टयजुर्होमान्ते शामित्रामावेव स्वाहान्तेन मन्त्रेणोष्णीषवेष्टितं गर्भं जुहोति मन्त्रान्ते स्वाहाकारमनुच्चार्य जुहुयादित्यर्थः । मरुद्देवत्या गायत्री गोतमदृष्टा । हे दिवो विमहसः विशिष्टं महो येषां ते द्युलोकसम्बन्धिना विशिष्टेन महसा तेजसा युक्ताः यद्वा विशिष्टं महन्ति पूजयन्ति ते विमहसः द्युलोकस्य पूजयितारो हे मरुतो यस्य यजमानस्य क्षये यज्ञगृहे यूयं पाथ सोमपानं कुरुथ पा पाने शपो लुक् पिबादेशाभावश्च छान्दसः संहितायां दीर्घः द्व्यचोऽतस्तिङ इति सूत्रेण । हि निश्चितं स जनः यजमानाख्यः सुगोपातमः गोपायतीति गोपा रक्षकः अत्यन्तं शोभनो गोपा यस्य स सुगोपातमः युष्मद्गुमानां भयं नास्तीत्यर्थः ॥ २१ ॥

**महीद्यौःपृथिवीचनइमंयज्ञम्मिमिक्षताम् । पिपृतान्नोभरीमभिः ॥ ३२ ॥**

**आतिष्ठवृत्रहन्रथंयुक्तातेब्रह्मणाहरी । अर्वाचीनꣳसुतेमनोग्रावाकृणोतुवग्नुना ।**

का० मही द्यौरित्यङ्गारैरभ्यूहतीति² । शामित्रे क्षिप्तं गर्भं मङ्गारैश्छादयेत् ॥ द्यावापृथिवीदेवत्या गायत्री मेधातिथिदृष्टा । मही महती द्यौः द्युलोकः पृथिवी भूलोकश्च नोऽस्माकमिमं यज्ञं मिमिक्षतम् । मिह सेचने सनन्तः सेक्तुमिच्छतां स्वैः स्वैर्भागैः पूरयतामित्यर्थः । भरीमभिः भरणैर्हिरण्यपशुधान्यादिभिः स्वैः स्वैर्भागैर्नोऽस्मदीयं गृहं पिपृतां पूरयताम् ॥ ३२ ॥ ॥

॥ इत्यग्निष्टोममन्त्राः समाप्ताः ॥

अथ षोडशी अग्ने पवस्वेत्यस्मात्प्राक् (२७) ॥ ॥ का० प्रातःसवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं खादिरेण चतुःस्रक्तिनातिष्ठ

१——२५,१०,१८ । २——२५,१०,१८ ।

गर्भो वधियः यन्नाहुः यस्यै यस्याश्च तव योनिर्हिरण्ययी सुवर्णमयी ऋत्व्यत्यादिना इति निपातः सुवर्णमयी मन्त्वेष क्रियतइत्यर्थः। तादृशीं त्वां गर्भेण सङ्गमयामीति शेषः। यस्य गर्भस्याङ्गान्यह्रुता। ह्वृ कौटिल्ये ह्रु ह्वरेश्छन्दसीति ह्रुरादेशो निष्ठाया मकुटिलानि अखण्डितानि तं गर्भं मात्रा जनन्यानूबन्ध्यालक्षणया समजीगमं सङ्गमयामि। गमेर्ण्यन्तस्य लुङि चङि रूपम् स्वाहेति होमार्थः॥२९॥

का० स्विष्टकृत मनुजुहोति पुरुदस्म इति१। प्रचरण्यां स्रुचि प्रतिप्रस्थाता सर्वं गर्भरस मवदायाध्वर्युणा स्विष्टकृद्धोमे कृते सति जुहुयात्। गर्भदैवत्यं यजुः इन्द्ररूपेण गर्भः स्तूयते। इन्द्रः क्लेदनरूपः सोमसदृशो गर्भो महिमानं महत्त्व मानञ्ज व्यक्तीकरोतु। अञ्जतेर्व्यक्तीकरणार्थस्य लिटि रूपम् तस्मान्नुड्द्विहल इति नुडागमः। विशेषणैर्महिमान माह कीदृश इन्द्रः पुरुदस्मः पुरु

पुरुदस्मोविषुरूपइन्दुरन्तर्महिमानमानञ्जधीरः। एकपदीन्द्विपदीन्त्रिपदींश्चतुष्पदीमष्टापदीम्भुवनानुप्रथन्ता स्वाहा॥३०

मरुतोयस्यहिक्षयेपाथादिवोविमहसः। ससुगोपातमोजनः॥ ३१ ॥

दस्म यस्य बहुदानयुक्तः विषुरूपः अन्तरुदरे स्थितः धीरो मेधावी एवम्भूत महिमान मानञ्जेत्यर्थः। एवं महिमवतो गर्भस्य मातर-मनूबन्ध्यां भुवना भुवनानि अनु प्रथन्तां प्रख्यातां कुर्वन्तु। विशेषणैः प्रख्याति माह कीदृशीम् एकपदी मेकं पदं यस्यास्तां वपयैकपदयुताम् द्विपदीं वपया अङ्गैश्च द्विपदयुताम् त्रिपदीं त्रीणि पदानि यस्यास्ता मुपयड्ढोमैस्त्रिपदीम् चतुष्पदीं पशोसंयाजैश्चतुर्भिः पादैर्वा चतुःपादयुताम् अष्टापदीं स्वपादैर्गर्भपादैश्चाष्टपादयुताम् एवम्भूतां वशां गणयित्वा भूतान्यनुप्रथन्ता मिति सम्बन्धः। स्वाहा सुहुत मस्तु॥ ३० ॥

१——२५,१०,१५ :

समिदसीति। स्वानानन्तर माहवनीय मेत्य तस्मिन् समिधं दध्यात् ॥ अग्निदेवतं यजुः। देवानां सम्बन्धिनी समित् इन्धन मसि। स्वाहा। देवभूताना मस्माकं समिन्धनं भवसि ॥ २७ ॥ ॥ इतः पर मनुवन्ध्यायां गर्भिण्यां प्रायश्चित्तं कथ्यते ॥

का० निरुह्यमाणमभिमन्त्रयतऽएजतु दशमास्य इति[1]। यद्यनूबन्ध्या वशा गर्भिणी स्यात्तदा विशसने मातुः सकाशात् पृथक् क्रियमाणं गर्भं मभिमन्त्रयेत ॥ अवसानत्रययुक्ता गर्भदेवत्या महापङ्क्तिः अष्टाक्षराः षट् पादा यस्याः सा महापङ्क्तिः। गर्भः जरायुणा सह एजतु। एजृ कम्पने। जरायुर्गर्भवेष्टनं तेन सह कम्पतां चलतु। किम्भूतो गर्भः दशमास्यः दश मासा जाता यस्य सः दशमासकालावच्छिन्न इव चलत्वित्यर्थः। कथं चलतु तत्राह यथा येन प्रकारेणायं वायुरेजति चलति यथा च समुद्र एजति एतौ हि

**एजतुदशमास्योगर्भोजरायुणासह। यथायंवायुरेजतियथासमुद्रएजति। एवायन्दशमास्योअस्रज्जरायुणासह॥२८**

**यस्यैतेयज्ञियागर्भायस्यैयोनिर्हिरण्ययी। अङ्गान्यह्रुतायस्यतम्मात्रासमजीगमᳪंस्वाहा ॥ २९ ॥**

सदा कम्पनशीलौ। एवेति निपात एवमर्थं एवमयं दशमास्यः सम्पूर्णावयवो गर्भो जरायुणा सह अस्रत् स्रंसताम् निर्गच्छतु यद्यप्ययं गर्भो दशमास्यो नास्ति तथापि सम्पूर्णस्येव निर्गमन माशास्यते। तमेतदप्यदशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोतीति[2] श्रुतेः। स्रंसु अधःपतने व्यत्ययेन परस्मैपदे शपो लुकि च सति हल्ङ्याब्भ्य इति तिपि लुप्ते वावसानइति सस्य दत्वे अनिदितामिति नलोपे अडागमे च अस्रदिति रूपम् ॥ २८ ॥

का० अवदानान्यनुजुहोति यस्यै तद्दति[3]। वशावदानानि हुत्वा गर्भस्य जुहुयात्। वशादेवत्यानुष्टुप् हे वशे यस्यास्ते तव

[1] —२५,१०,७। [2] —४,५,२,४। [3] —२५,१०,११।

तव एष जलसंघो लोकः स्थानं तस्मिन्नवस्थितः सन् त्वं शं वधू वह शं सुखं प्रतिप्रापय परिवक्षु च परिवह निवर्त्तय अस्मत्तः सर्वा आर्त्तीरिति शेषः। तस्मिन्नः अद्यैधि सर्वाभ्यश्च न आर्त्तिभ्यो गोपायेति[1] श्रुतिः। वहतेर्लोट् मध्यमैकवचने तङि अपि लुप्ते रूपं वक्षु इति ॥ २६ ॥

का० अवभृथेति मज्जयतीति[2]। ऋजीषकुम्भं जले प्रवेशयेत् ॥ यज्ञदैवतम्। अवाचीनानि पात्राणि जलमध्ये भ्रियन्ते यस्मिन् यज्ञविशेषे सोऽवभृथः तत्सम्बोधनं हे अवभृथ त्वं निचुम्पुण नितरां मन्दं गच्छ। चुपि मन्दायां गताविति धातोः। यद्यपि त्वं निचेरुरसि नितरां चरणशीलोसि तथाप्यत्र निचुम्पुण नितरां मन्दं गच्छ। किं प्रयोजनमिति चेत् उच्यते देवैर्द्योतनात्मकै-

अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः।

अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहिदेवानाᳬसमिदसि ॥ २७ ॥

रस्मदीयैरिन्द्रियैर्देवकृतं देवेषु हविःस्वामिषु कृत मेनः पापं यदस्ति तदवयासिषं जले अवनीतवानस्मि। देवः सुरे धने राज्ञि देव माख्यात मिन्द्रिय मित्यभिधानात्। तथा मर्त्यैर्मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिर्मर्त्यकृतं मर्त्येषु यज्ञदर्शनार्थ मागतेषु कृत मवज्ञारूपं यदेनोस्ति तदप्यह मवायासिष मित्यनुवर्तते इदमस्माभिः परित्यक्त मेनो यथा त्वां न प्राप्नोति तथा हे यज्ञ मन्दं गच्छेति भावः। किञ्च हे देवावभृथाख्य यज्ञ रिषः बधात् पाहि अस्मान् पालय। रिष बधे क्विप्। किम्भूताद्रिषः पुरुराव्णः पुरु बहु विरुद्धं फलं राति ददातीति पुरुरावा। रा दाने आतो मनिन्नित्यादिना वनिप्। विरुद्धफलदायी बधस्त्वत्प्रसादादस्माकं माभूदित्यर्थः ॥

१——४,४,५,२१। २——१०,९,३।

स्वाहा सुहुतमस्तु। इमे-इमे इति वीप्साश्वमेधविषया तत्र हि नानावभृथान्यहानि भवन्ति। उत्पूर्वाद्वहतेर्लोडर्थेऽन्यतप्रत्यय औणादिकः ॥ २४ ॥

का॰ समुद्रे त इति ऋजीषकुम्भं प्लावयतीति[1]। गतसारः सोम ऋजीषस्तेन पूर्णं कुम्भमप्सु क्षिपेत् ॥ सोमदेवत्या विराट् दशाक्षरचतुःपादा। अन्तर्वर्तमानो तच्छब्दो हृदयेन सम्बध्यते हे सोम यत्ते तव हृदयं समुद्रे अप्सु समुद्रसमानासु अप्सु बहुलोदकेषु अन्तर्मध्ये तिष्ठते वर्तत इति वा शेषः। तत्र त्वां गमयामीति शेषः तत्रस्थं त्वा त्वामोषधीरोषधयः संविशन्तु उत अपि च आपो जलानि

समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः। यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहा ॥ २५ ॥

देवीराप एष वो गर्भस्तꣳ सुप्रीतꣳ सुभृतं बिभृत। देव सोमैष ते लोकस्तस्मिञ्छं च वक्ष्व परि च वक्ष्व ॥ २६ ॥

त्वां संविशन्तु। किञ्च हे यज्ञपते यज्ञस्य पालक सोम यज्ञस्य सूक्तोक्तौ शोभनवचनोच्चारणे नमोवाके नमसो वाके नमस्कारवचने च त्वा त्वां विधेमः स्थापयामः। विदधतिः स्थापनार्थः। स्वाहा सुहुतमस्तु ॥ २५ ॥

का॰ देवीराप इति विसृज्योपतिष्ठत इति[2]। ऋजीषकुम्भं मुक्त्वोपस्थानं कुर्यात् ॥ अष्टचिंशदक्षरत्वात्पङ्क्तिर्बृहती वा पूर्वार्धमब्दैवतमुत्तरार्धं सोमदेवतम्। हे देवीर्देव्यः हे आपो वो युष्माकमेष सोमो गर्भस्थानीयः तं तादृशं सोमं यूयं बिभृत धारयत। किम्भूतं तं सुप्रीतं शोभनप्रीतियुक्तं साधुतर्पितं वा तथा सुभृतं सुपुष्टम्। इदानीं सोमं वदति हे सोम हे देव दीप्यमान ते

१—१०,९,१। २—१०,९,२।

चकार क अपदे नास्ति पदं यस्मिन् यत्र दत्तं पदं प्रतिमुद्रितं न भवति तस्मिन्नन्तरिक्षे मार्गं कृतवानित्यर्थः । तस्मादस्माकमपि अपदे अन्तरिक्षे पादा प्रतिधातवे पादौ निक्षेप्तुं विभक्तेराकारः मार्गं कः करोतु स्वर्गगमनाय मार्गं करोत्वित्यर्थः करोतेरदादित्वेन लकि शपो लुक् अडभावं आर्षः । किञ्च यो वरुणः उतापि च हृदयाविधश्चिदपवक्ता हृदयं विध्यति मर्मोद्घाटनेन पीडयति हृदयवित् नहिवृतिवृषीत्यादिना क्विबन्ते व्यधौ परे हृदयस्य दीर्घः तस्य हृदयाविधः पिशुनस्यापि अपवदिता चिच्छब्दोऽप्यर्थे निन्दकस्यापि तिरस्कर्ता किमुतान्येषां पापकारिणामित्यर्थः । ईदृशो वरुणोवभृथाय मार्गं ददात्वित्यर्थः । अन्वेतवे प्रतिधातवे अनुपूर्वादिणः प्रतिपूर्वाद्धधातेश्च तुमर्थे सेसेनित्यादिना क्रमात्तवैतवेप्रत्ययौ ॥ का० नमो वरुणायेति वाचयत्यपोवक्रमयन्निति[1] । अवभृथस्नानार्थमपः प्रवेशयन्यजमानं वाचयेत् ॥ वारुणं यजुः । वरुणस्य पाशोऽभिष्ठितः आक्रान्तस्तस्मान्न बन्धनचमस्तस्मै वरुणाय नमो नमस्कारोऽस्त्विति शेषः ॥ २३ ॥

अग्नेरनीकमप आविवेशापान्नपात्प्रतिरक्षन्नसुर्य्यम् । दमेदमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहा ॥२४॥

का० प्रास्य समिधं चतुर्गृहीतेनाभिजुहोति अग्नेरनीकमिति[2] । अप्सु समिधं प्रक्षिप्य चतुर्गृहीतेनाज्येन तदुपरि जुहुयात् ॥ अग्निदेवत्या त्रिष्टुप् । अग्नेरनीकमिति परोक्षलिङ्गं समिधं यक्ष्यग्न इति प्रत्यक्षलिङ्गमेकस्मिन्वाक्ये त्वसङ्गत मतो यच्छब्दाध्याहारेण योज्यम् । हे अग्ने यस्य तवाग्नेः अङ्गनशीलस्य सतोऽपाम्नपात्स्वरूप मनीकं मुख मप उदकान्याविवेश अभिमुखेन प्रविवेश हे अग्ने स त्वं दमे दमे तत्तद्गृहे असुर्यं असुरैः कृतं यज्ञविघ्नं प्रतिरक्षन्निवर्तयन् सन् समिधं समिन्धनसाधनं घृतं यक्षि यज सङ्गतं कुरु यजतिः सङ्गतिकरणार्थः शपो लुकि लटि रूपम् घृतमात्मसङ्गतं कुर्वित्यर्थः । ततोऽनन्तरं ते तव जिह्वा ज्वाला घृतं प्रति उच्चरण्यत् उच्चरतु उत्पुताद्‌ ।

1—१०,८,२१ । 2—१०,८,२२ ।

अथाष्टमः यज्ञदैवतं यजुः। यज्ञं विसृजति। हे यज्ञ त्वं यज्ञं गच्छ स्वप्रतिष्ठार्थं यज्ञनामकं विष्णुं गच्छ, यज्ञपतिं यजमानं गच्छ फलप्रदानेन यजमानं प्राप्नुहीत्यर्थः स्वां योनिं गच्छ स्वनिष्पत्त्यर्थं स्वां योनिं स्वकारणभूतां वायोः क्रियाशक्तिं गच्छ द्रव्यं देवता च यज्ञस्य योनिः सर्वात्मा त्वमिति भावः। स्वाहा सुहुतमस्तु॥ अथ नवमः समिष्टयजुर्मन्त्रः। यज्ञपतिदैवतम्। हे यज्ञपते यजमान एषो अनुष्ठीयमानो यज्ञस्ते तव त्वदीयोऽस्ति। कीदृशः सहसूक्तवाकः सूक्तवाकैः स्तोत्रैः सहितः। तथा सर्ववीरः सर्वे वीरा यस्मिन् स तथा सोमः पशुः सवनीयचरुपुरोडाशा वीरा उच्यन्ते तैः सहितः य ईदृशस्तं यज्ञं जुषस्व फलभोगेन सेवस्व। स्वाहा सुहुतमस्तु॥ २२॥

यज्ञयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वांयोनिङ्गच्छस्वाहा। एषतेयज्ञोयज्ञपतेसहसूक्तवाकस्सर्ववीरस्तज्जुषस्वस्वाहा। २२

माहिर्भूर्मापृदाकुः। उरुꣳहिराजावरुणश्चकारसूर्य्यायपन्थामन्वेतवाउ।

अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित्। नमोवरुणायाभिष्टितोवरुणस्यपाशः॥ २३॥

का० कृष्णविषाणामेखले चात्वाले प्रास्यति माहिर्भूरिति[1]। यजमानहस्तस्थं मृगशृङ्गं मध्ये बद्धा मेखला चेत्युभे विस्रंस्य चात्वाले क्षिपेत्॥ रज्जुदैवतम् हे रज्जो त्वमहिः सर्पो मा भूः पृदाकुः अजगरः सर्पविशेषः सोऽपि मा भूः॥ का० उरुꣳ हीति वाचयतीति[2]। अवभृथाय जिगमिषुरध्वर्युश्चात्वालसमीपस्थं प्राङ्मुखं यजमानं वाचयेत्॥ वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा। उ-शब्दोऽवधारणे। वरुण एव राजा सूर्याय अन्वेतवै षष्ठ्यर्थे चतुर्थी सूर्यस्यान्वेतुमनुक्रमेणान्वहं गन्तुं हि यस्मात् उरुं विस्तीर्णं पन्थां पन्थानं मार्गं

१——१०,८,१३। २——१०,८,१५।

स्वयमृधक् समृद्धं यथा भवति तथा अयाः यद्वा ऋध्नोतीति ऋधक् ऋध्नुवन्यज्ञं समर्धयन् सन् अयाः अयाक्षीः इष्टवानसि यज्ञं कारितवानसीत्यर्थः। यजतेश्च्लिलोपे यकारस्य छान्दसं रुत्वम्। उतापि च ऋधक् ऋध्नुवन्नेव अशमिष्ठाः यज्ञप्रायश्चित्तं शमितवानसि विघ्नशान्तिं वा अकार्षीः। स त्वमिदानीं यज्ञं प्रजानन्यज्ञं समाप्तमवगच्छन् उपयाहि स्वगृहं गच्छ किम्भूतस्त्वं विद्वान् पण्डितः स्वाधिकारं जानन्नित्यर्थः स्वाहा तुभ्यं सुहुतमस्तु ॥ २० ॥

अथ सप्तमः। वातदेवत्या विराट् मनसस्पतिदृष्टा। व्याख्यातापि उच्यते(२,२१)। कै गै शब्दे गीयते नानाविधैर्वैदिकशब्दैः प्रतिपा-

वयꣳहित्वाप्रयतियज्ञेऽअस्मिन्नग्नेहोतारमवृणीमहीह।

ऋधगयाऽऋधगुताशमिष्ठाःप्रजानन्यज्ञमुपयाहिविद्वान्त्स्वाहा ॥ २० ॥

देवागातुविदोगातुंवित्त्वागातुमित। मनसस्पतऽइमन्देवयज्ञꣳस्वाहावातेधाः ॥ २१ ॥

द्यतइति गातुर्यज्ञस्तं विदन्ति जानन्तीति गातुविदः तादृशा हे देवाः गातुं वित्त्वा अस्मदीयो यज्ञः प्रवृत्त इति विदित्वा गातुमित यज्ञं गच्छत यद्वा गातुं वित्त्वा यज्ञं समाप्तं विदित्वा गातुमित गाङ् गतौ गायते गम्यते यत्र स गातुर्मार्गस्तं गच्छत यज्ञं समाप्तं मत्वा यज्ञेन तुष्टाः सन्तः स्वकीयं मार्गं गच्छत। एवं देवानुक्त्वा प्रजापतिमाह हे मनसस्पते अस्मदीयस्य मनसो यष्टुं प्रेरणेन पालक परमेश्वर हे देव इममनुष्ठितं यज्ञं स्वाहा त्वद्धस्ते दधामि त्वं च वाते धाः वायुरूपे देवे यज्ञं धेहि स्थापय ॥ २१ ॥

यद्य सकर्म अकार्षं कृतवन्तः। सुदुरोरधिकरण इति सु उपसर्गे गमेर्डप्रत्यये सुगेति रूपं विभक्तेराकारः। करोतेश्च्लिलोपे लुङि उत्तम-बहुवचने अकर्मेति रूपम्। किञ्च हे वसवः वासयन्तीति वसवो वासयितारो निवासहेतवो देवाः अस्मे अस्मासु यूयं वसूनि धनानि धत्त स्थापयत। किंभूता यूयं यज्ञसमाप्तौ हवींषि भरमाणा ये रथिनस्ते तु रथेषु बिभ्रतः रथहीना वहमानाः स्कन्धेषु हवींषि वहन्तः यद्वा भरमाणाः पुष्यन्तः वहमानाः रथादिभिर्नयन्तः तेभ्यो युष्मभ्यं स्वाहा सुहुत मस्तु ॥ १८ ॥

अथ पञ्चमी मन्त्रः। आग्नेयी त्रिष्टुप् इदानीं देवान्विसृजति। हे अग्ने हे देव दीप्यमान उशतो हवींषि कामयमानान् यान् देवान् त्व मावहः आहूतवानसि तान् देवान् स्वे स्वकीये सधस्थे सहनिवासस्थाने प्रेरय प्रस्थापय सह तिष्ठन्ति यस्मिन् तत्सधस्थम् सधमादस्थयोश्छन्दसीति स्थे परे सहस्य सधादेशः। किमुक्त्वा प्रेरयामीति चेत् अत आह हे देवाः विश्वे सर्वे यूयं जक्षिवांसः

याँ२ आवहउशतोदेवदेवांस्तान्प्रेरयस्वेअग्नेसधस्थे। जक्षिवाꣳसःपपिवाꣳसश्चविश्वेसुंघर्मꣳस्वरातिष्ठतानुस्वाहा॥१९

घस्लृ अदने क्वसुश्चेति क्वसुः वस्वेकाजाद्घसामिति इतीट् सवनीयपशुपुरोडाशान् भक्षितवन्तः। तथा पपिवांसः सोमपानं कृतवन्तश्चेदानीं यज्ञसमाप्तौ असुं हिरण्यगर्भप्राणलक्षणं वायुं वायुमण्डलमित्यर्थः घर्ममादित्यमण्डलं वा स्वः द्युलोकं वा अन्वतिष्ठत आश्रयत यस्य यस्य यत्र गृहाः सन्ति तांस्तानन्वतिष्ठतेत्यर्थः। छन्दसि परेऽपीति अनोः क्रियापदात्परत्वम्। स्वाहा सुहुत-मस्तु हविः ॥ १९ ॥

अथ षष्ठः। आग्नेयी त्रिष्टुप् इदानीमग्निं विसृजति। हे अग्ने हि यस्मात्कारणादिहास्मिन्दिने स्थाने वा अस्मिन्यज्ञे प्रयति प्रवर्त-माने सति होतारं देवाना माह्वातारं होमनिष्पादकं वा त्वा त्वां वय मवृणीमहि वृतवन्तः अग्निर्वै दैव्यो होतेति श्रुतेः तस्मात्कारणादृत

अथ तृतीयः। धातृसवितृप्रजापतिदेवाग्निस्त्वष्टृविष्णुदेवत्या त्रिष्टुप्। धाता सविता प्रजापतिः अग्निः त्वष्टा विष्णुः एते षट् देवा इदमस्मद्धविः समिष्टयजुर्लक्षणं जुषन्तां सेवन्ताम्। किम्भूतो धाता रातिः राति प्रयच्छतीति रातिः दानशीलः। क्तिच्क्तौ च सञ्ज्ञायामिति कर्तरि क्तिच् प्रत्ययः चित्त्वादन्तोदात्तः। किम्भूतः प्रजापतिः निधिपाः निधीन् पातीति निधिपाः महापद्मपद्मादिनिधीनां नवानां पालयिता। किम्भूतोग्निः देवः दीप्यमानः। किञ्च ते एते देवाः प्रजया यजमानसम्बन्धिन्या सन्तत्या सह

धाताराति:सवितेदञ्जुषन्ताम्प्रजापतिर्निधिपादेवोअग्निः।

त्वष्टाविष्णुःप्रजयासᳬंरराणायजमानायद्रविणन्दधातस्वाहा॥१७॥

सुगावोदेवा:सदनाअकर्म्म यआजग्मेदᳬंसवनञ्जुषाणाः। भरमाणावहमानाहवीᳬंष्यस्मेधत्तवसवोवसूनिस्वाहा॥१८

संरराणाः सम्यग्रममाणाः सन्तः यजमानाय द्रविणं धनं दधात दधतु ददतु व्यत्ययेन प्रथमपुरुषस्थाने मध्यमः पुरुषः तप्तनप्तनथनाश्चेति तबादेशः तस्य ङित्वाल्लोपाभावः। स्वाहा एतेभ्यः सुहुत मस्तु॥१७॥

अथ चतुर्थः। देवदेवत्या त्रिष्टुप् तुर्यः पादो दशार्णः। हे देवा ये यूयमिदं सवनं यज्ञं जुषाणाः सेवमानाः सन्तः आजग्म आगताः गमेर्लिटि मध्यमबहुवचनम् तेषां वो युष्माकं सदना सदनानि स्थानानि सुगा सुगानि सुखेन गम्यते येषु तानि सुगानि सुगमनीयानि

विदधातु। तन्वः शरीरस्यास्मदीयस्य यद्विलिष्टं विश्लिष्टम्। लिश अल्पीभावे निष्ठान्तः विशेषेण न्यूनमङ्गं तदनुमार्ष्टु न्यूनत्वपरिहारेणानुकूलं कृत्वा शोधयतु ॥ १४ ॥

का० समिन्द्र ण इति नव समिष्टयजूंषि जुहोति प्रतिमन्त्रमिति। नवभिर्मन्त्रैः समिष्टयजुःसञ्ज्ञा नवाहुतीर्जुहुयात्। तत्राद्यः। विश्वदेवदेवता त्रिष्टुप् अत्रिदृष्टा। समितुपसर्गो नेषीत्यनेन सम्बध्यते न इत्यस्य णत्वम् हे मघवन्धनवन् हे इन्द्र मनसानुग्रहयुक्तेन नोऽस्मान् त्वं सं नेषि सन्नयसि संयोजयसि। गोभिः वाग्भिर्गवादिपशुभिर्वा सन्नेषि। व्यत्ययेन शपो लुकि लटि मध्यमैकवचने

समिन्द्रणोमनसानेषिगोभिःसꣳसूरिभिर्म्मघवन्त्सꣳस्वस्त्या।

सम्ब्रह्मणादेवकृतंयदस्तिसन्देवानाꣳसुमतौयज्ञियानाꣳस्वाहा॥ १५ ॥

संवर्चसापयसासन्तनूभिरगन्महिमनसासꣳशिवेन। त्वष्टासुदत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम्॥१६॥

नेषीति रूपम्। सूरिभिः पण्डितैर्होत्रादिभिः संयोजयसि स्वस्त्या क्षेमेण च सन्नेषि। ब्रह्मणार्थज्ञानसहितेन वेदेन सन्नेषि। देवकृतं देवार्थं कृतं कर्म यदस्ति यज्ञाख्यं देवैः कृतं दृष्टं वा यत्कर्म तेन सन्नेषि। तथा यज्ञियानां यज्ञसम्बन्धिनां देवानां सुमतौ सुमत्यानुग्रहबुद्धा संयोजयसि सुपां सुपो भवन्तीति तृतीयार्थे सप्तमी। यस्त्वमस्मानेवं मनआदिभिः संयोजयसि तस्मै स्वाहा एतद्धविः सुहुत मस्तु ॥ १५ ॥ ॥ अथ द्वितीयः। त्वाष्ट्री त्रिष्टुप् प्रजापतिदृष्टा। व्याख्याता ॥ १६ ॥

१—१०,८,११।

त्वं देवकृतस्य देवविषये विहितस्य एनसो यजनाभावादिलक्षणस्य पापस्य त्वमवयजनमसि नाशकं भवसि अवपूर्वो यजिर्नाशनार्थः अवयजतीत्यवयजनम्। मनुष्यकृतस्य मनुष्येषु कृतस्य द्रोहनिन्दादेरेनसोऽवयजनमसि। पितृकृतस्य पितृषु कृतस्यैनसः श्राद्धाकरणादेर्नाशनमसि। आत्मविषये कृतस्य पापस्यात्मनिन्दादेर्नाशनमसि। एनस एनसः यावन्ति पापानि तावतां सर्वेषां नाशनमसि। किञ्च विद्वान् जानानो ज्ञानपूर्वकं यदेनः पापमहं चकार कृतवान् अविद्वान् अज्ञानपूर्वं च यदहमेनश्चकार तस्य सर्वस्यैनसः ज्ञानाज्ञानपूर्वस्य पापस्य त्वमवयजनं नाशनमसि ॥ १३ ॥

देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्यात्मकृतस्यैनसोऽवयजनमस्येनस एनसोऽवयजनमसि। यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि ॥ १३ ॥

सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन। त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ १४ ॥

का० अपरेण चात्वालं यथास्वं चमसान् पूर्णपात्रानवमृशन्ति हरितकुशानवधाय सं वर्चसेति[1]। पूर्णपात्रानुदकपूर्णानित्यर्थः। त्वाष्ट्री त्रिष्टुप्। व्याख्यातापि[2] व्याख्यायते। वर्चसा ब्रह्मवर्चसेन वयं समगन्महि सङ्गता भवाम गच्छतेर्लङि आदादित्वाच्छपो लुकि उत्तमबहुवचने मो नो धातोरिति मस्य नकारः। पयसा क्षीरादिरसेन समगन्महीत्यनुवर्तते। तनूभिरनुष्ठानक्षमैः शरीरावयवैः समगन्महि। शिवेन समीचीनेन कर्मश्रद्धायुक्तेन मनसा समगन्महि। किञ्च सुदत्रः शोभनदानः त्वष्टा देवो रायो धनानि

१—१०,८,७। २—२अ० २४ क०।

हरिर्हरितवर्णोऽसि हरी रश्मिर्हरिः सोमो हरिर्हरितवर्णवानित्यभिधानात्। उपयामेन गृहीतश्चासि। किम्भूतस्त्वम् हारियोजनः हरी इन्द्राश्वौ योजयतीति हरियोजन इन्द्रस्तस्यायं हारियोजन इन्द्रसम्बन्धी तं त्वा त्वां हरिभ्यामृक्सामभ्यां गृह्णामीति शेषः। ऋक्सामे वै हरी ऋक्सामाभ्यां ह्येनं गृह्णातीति[1] श्रुतेः॥ का० धानाश्चावपति हर्योर्धाना इति[2]। हारियोजने भ्रष्टयवाभिदध्यात्। धानादेवत्यम्। सहसोमाः सोमेन सहिता धाना भ्रष्टयवा यूयमिन्द्राय इन्द्रस्य हर्योः हरितवर्णयोरश्वयोः स्थ भवथ इन्द्राश्वसम्बन्धिनो यूयमित्यर्थः॥ ११॥

का० यस्तेऽअश्वसनिरिति प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्तीति[3]। सर्वर्त्विजो धाना आदाय मन्त्रेणावघ्रायोत्तरवेदौ

यस्तेऽअश्वसनिर्भक्षोयोगोसनिस्तस्यतइष्टयजुषस्तुतस्तोमस्यशस्तोक्थस्योपहूतस्योपहूतोभक्षयामि॥ १२॥

क्षिपन्ति। भक्षद्रव्यदेवत्यम्। हे धानासहित सोम भक्षद्रव्य यस्ते तव भक्षो भक्षणमश्वसनिः। षणु दाने अश्वान् सनोतीत्यश्वसनिः अश्वानां दाता यश्च ते भक्षो गाः सनोति गवां दाता तस्य तादृशस्य ते तव तादृशं भक्षमुपहूतोऽनुज्ञातोऽहं भक्षयामि। कीदृशस्य ते इष्टयजुषः इष्टानि यजूंषि यस्य स इष्टयजुस्तस्य। तथा स्तुतस्तोमस्य उद्गातृभिः स्तुताः स्तोमाः स्तोत्राणि यस्य स स्तुतस्तोमस्तस्य। तथा शस्तोक्थस्य होतृभिः शस्तानि उक्थानि शस्त्राणि यस्य स शस्तोक्थस्तस्य। तथा उपहूतस्याभ्यनुज्ञातस्य तदेतानि भवन्तीत्यर्थः॥ १२॥

का० शाकलाऽधानं देवकृतस्येति प्रतिमन्त्रमिति[4]। षट् षडपशकलानि सर्वेऽग्नौ निदध्युः। षडाज्यान्यग्निदेवत्यानि। हे शकल

१—४,४,३,६। २—१०,८,२। ३—१०,८,५। ४—१०,८,६।

का० अग्ना३इ पत्नीवन्नितुत्तरार्धं जुहोतीति[१] । पात्नीवतं गृहमग्नेरुत्तरभागे जुहोति । अग्निदेवत्यम् । एचोऽप्रगृह्यस्येत्यादिना अग्ने शब्दगतस्य एकारस्य आ इ इत्यादेशो आकारस्य प्लुतत्वम् । हे अग्ने हे पत्नीवन् पत्नीयुक्त त्वष्ट्रा देवेन सजूः समानप्रीतिः सन् त्वं सोमं पिब स्वाहा सुहुत मस्तु ॥ का० पत्नीं सदः प्रवेश्यापरेणोत्तरत उपविष्टामुद्गात्रा समीक्षयति प्रजापतिर्वृषासीति[२] । नेष्टा पश्चिमद्वारेण पत्नीं सदः प्रवेश्योद्गातुरुत्तरतः स्थितामुद्गातारं पश्येति प्रेषयेत् सा च तं पश्येत् । हे उद्गातः प्रजापतिः प्रजानां

अग्ना३इपत्नीवन्त्सजूर्देवेनत्वष्ट्रासोमम्पिबस्वाहा ।

प्रजापतिर्वृषासिरेतोधारेतोमयिधेहिप्रजापतेस्तेवृष्णोरेतोधसोरेतोधामशीय ॥ १० ॥

उपयामगृहीतोसिहरिरसिहारियोजनोहरिभ्यान्त्वा । हर्य्योर्द्धानास्थसहसोमाइन्द्राय ॥ ११ ॥

पालकस्त्वं वृषासि सेक्ता भवसि रेतोधा रेतसो वीर्यस्य धारयिता चासि । एवम्भूतस्त्वं रेतो वीर्यं मयि धेहि स्थापय ततो वृष्णो वीर्यसेक्तुः रेतोधसो वीर्यस्य धारयितुः प्रजापतेस्ते तवानुग्रहात् रेतोधां रेतसो धारयितारं प्रजोत्पादनसमर्थं पुत्रमशीय प्राप्नुयाम अश्नोतेर्व्यत्ययेनादादित्वं लिङ्युत्तमैकवचने ॥ १० ॥

का० द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोऽसि हरिरसीति[३] । आग्रयणादिति शेषः । ऋक्सामदेवत्यम् । हे ग्रह त्वं

१—१०,६,१९ । २—१०,७,३ । ३—१०,८,१ ।

का० उपयामगृहीतोऽसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पात्नीवतं गृह्णातीति। उपांश्वन्तर्यामपात्रयोरेकतरेण प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति। सोमदेवतम्। हे देव दीप्यमान हे सोम त्वमुपयामेन पात्रेण गृहीतोऽसि अतस्ते तव सम्बन्धिनोऽन्यान् ग्रहानुपांशुप्रभृतीनहमृध्यासं समर्धयेयम। किम्भूतस्य ते बृहस्पतिसुतस्य बृहतो महतो यज्ञकर्मणः पतिर्ब्रह्मपतिर्यजमानस्तेन सुतस्याभिषुतस्य यद्वा बृहस्पतयो ब्राह्मणा ऋत्विजस्तैरभिषुतस्य। तथा इन्दोः उन्दी क्लेदे उनत्तीतीन्दुस्तस्य क्लेदनरूपस्य रसरूपस्येत्यर्थः। तथा इन्द्रियावतः इन्द्रियं वीर्यमस्यास्तीतीन्द्रियवान् तस्य संहितायां दीर्घः। तथा पत्नीवतः पत्नीसंयुक्तस्य॥ का०

उपयामगृहीतोसिबृहस्पतिसुतस्यदेवसोमतइन्दोरिन्द्रियावतःपत्नीवतोग्रहाँ२ऋध्यासम्। अहम्परस्तादहम

वस्ताद्यदन्तरिक्षन्तदुमेपिताभूत्। अहँ सूर्य्यमुभयतोददर्शाहन्देवानाम्परमङ्गुहायत्॥ ९॥

प्रचरणीशेषेण श्रीणात्यहमहं परस्तादिति[1]। प्रचरणीशिष्टेनाज्येन पात्नीवतग्रहं मिश्रयेत्। प्रजापतिरूपात्मदेवत्या त्रिष्टुप्। अत्र मन्त्रद्रष्टा स्वस्य सर्वगतपरमात्मरूपत्वमभिप्रेत्य वदति। अहं परमात्मरूपः सन् परस्तात् उपरि द्युलोकादौ तथाहमवस्तात् अधस्तनभूलोकादौ च तिष्ठामीति शेषः। यदन्तरिक्षं मध्यवर्तिलोकरूपमस्ति तदु तदेव मे देहधारिणो मम पिताभूत् पितृवत् पालकं भवति। अहं परमात्मरूपः सन्नुभयतः उपरिष्टादधस्ताच्च स्थित्वा सूर्यं ददर्श पश्यामि। देवानामिन्द्रादीनां यत्परमं गुहा अत्यन्तं गोप्यं हृदयेऽस्ति तदेवाहमस्मि॥ ९॥

[1] — १०,६,१७।

चनोधाः अन्नस्य धारयिता। अभ्यासे भूयांसमर्थं मन्यन्तइति[1] यास्कोक्तः यतस्त्वमत्यन्तं चनोधा असि अतश्चनोऽन्नं मयि धेहि स्थापय। किञ्च यज्ञं जिन्व प्रीणय जिन्वतिः प्रीतिकर्मा यज्ञपतिं यजमानं च जिन्व तर्पय भगाय ऐश्वर्यादिगुणयुक्ताय सवित्रे सर्वप्राणिनां प्रसवादिकर्त्रे देवाय त्वां गृह्णामीति शेषः भगमस्यास्तीति भगः अर्शआदित्वादच् ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेति ॥ ७ ॥

का० अभचितेन महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्मासीति[2]। अभचितेनैव सावित्रग्रहपात्रेण पूतभृतः सकाशान्महा-

उपयामगृहीतोसिसावित्रोसिचनोधाश्चनोधाअसिचनोमयिधेहि। जिन्वयज्ञञ्जिन्वयज्ञपतिम्भगायदेवायत्वासवित्रे॥ ७

उपयामगृहीतोसिसुशर्म्मासिसुप्रतिष्ठानोबृहदुक्षायनमः। विश्वेभ्यस्त्वादेवेभ्यएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः॥ ८

वैश्वदेवग्रहस्य ग्रहणं करोत्यध्वर्युः। वैश्वदेवम्। हे वैश्वदेव ग्रह त्वमुपयामेन गृहीतोऽसि यतः सुशर्मासि शोभनं शर्म सुखमाश्रयो वा यस्य स सुशर्मा। तथा सुप्रतिष्ठानः सुष्ठु प्रतिष्ठानं पात्रे स्थितिर्यस्य तादृशोऽसि। विशेषणद्वयेन प्राणरूपोऽसीत्यर्थः। प्राणो वै सुशर्मा सुप्रतिष्ठान इति[3] श्रुतेः। ग्रहस्यान्नरूपत्वादन्नस्य च प्राणहेतुत्वाद् ग्रहस्य प्राणत्वम्। यस्मादीदृशोऽसि तस्माद् बृहदुक्षाय बृहन्महांश्चासौ उक्षा सेक्ता च बृहदुक्षः तस्मै महते सेक्त्रे जगदुत्पादयित्रे प्रजापतये नमोऽन्नं भवितुमर्हसीति शेषः। नम इत्यन्ननाम[4] प्रजापतिर्वै बृहदुक्ष इति[5] श्रुतेः। बृहदुक्षशब्देन प्रजापतिः॥ विश्वेभ्यो देवेभ्योऽर्थाय त्वां गृह्णामि। सादयति एष ते व्याख्यातम्॥ ८ ॥

१—निरु० १०,४२। २—१०,६,२। ३—४,४,१,१४। ४—निघ० २,७,२२। ५—४,४,१,१४।

आशिषः दातारौ इति दम्पतिविशेषणं वा विभक्तेराकारः । दम्पती यज्ञफलं प्राप्नुताम् तयोः पुत्रो जायताम् स च धनं लब्ध्वा निष्पापः स्वगृहे वर्धतामिति आशीर्वचने श्रद्धां कुरुतेति सर्वार्थः ॥ ५ ॥

का० भक्षयित्वेडामुपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति[1] । सवनीयपुरोडाशेडां भक्षयित्वा सवनीयसम्बन्धि कर्म समाप्य उपांश्वन्तर्यामयोरन्यतरेण सावित्रं गृह्णाति ॥ कश्चिदेकादशात्मको मन्त्रः । सवितृदेवत्या त्रिष्टुब्भरद्वाजदृष्टा । हे सवितः सर्वस्य प्रेरयितर्देव अद्यास्मिन्दिने अस्मभ्यमस्मदर्थं वामं वननीयं कर्मफलं सावीः प्रेरय देहीत्यर्थः । षू प्रेरणे लुङ् अडभावश्छान्दसः । वाममु श्वः उ अप्यर्थे श्वोऽपि समनन्तरदिनेऽपि वामं सावीः । दिवे-दिवे तत ऊर्ध्वं दिने-दिनेऽस्मभ्यं वामं सावीः ।

**वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः । वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥६॥**

हि यस्मादयानया नलोपश्छान्दसः धिया श्रद्धायुक्तया बुद्ध्या वयं वामभाजः स्याम भवेम वामं वननीयं यज्ञकर्म भजन्ति वामभाजः स्याम भवेम वामं वननीयं यज्ञकर्म भजन्ति वामभाजः यज्ञानुष्ठातारो भवेम । किमर्थम् वामस्य सम्भजनीयस्य भूरेः विस्तीर्णस्य बहुकालीनस्य क्षयस्य स्वर्गनिवासस्य सिद्धय इति शेषः क्षयो निवास इत्याद्युदात्तत्वात् क्षयशब्दो निवासार्थः । दिवे-दिवे इत्यह्नो नामसु[2] पठितम् । यद्वोत्तरार्धस्यायमर्थः हे देव वामस्य वननीयस्य भूरेः धनपूर्णस्य क्षयस्य निवासस्य दाता भवेति शेषः । धीरिति कर्मनाम[3] अनया धिया सौमाख्येन कर्मणा वयं वामभाजोऽभिलषितभागिनो भवेम ॥ ६ ॥

सावित्रम् । हे सोम त्वमुपयामेन ग्रहेण गृहीतोऽसि हे ग्रह त्वं सावित्रः सवितृदेवत्योऽसि चन इत्यन्ननाम[4] चनोऽन्नं धत्त इति

१——१०,५,१३ । २——निघ० १,९,११ । ३——निघ० २,१,२१ । ४——निरु० ६,१६ ।

तस्मिन् पातव्ये सोमे त्वं मत्स्व मद तृप्तो तृप्तिं कुरु बहुलं छन्दसीत्यदादित्वाच्छपो लुक् ॥ का० अदस्मै नर इत्येनमवेक्षते पत्नीति[1] । पत्नीन् पूतभृतं पश्येत् ॥ आशीर्देवतया जगती नरदेवतया वा द्वादशाक्षरचतुःपादा जगती । पत्नी वदति । हे नरो नेतारः ऋत्विग्यजमानाः आशीर्दा आशिषो ददति ते आशीर्दाः सुब्लोपश्छान्दसः आशिषां दातारो यूयमस्मै वचसे आशीर्वचनाय श्रद्धातन । श्रदिति सत्यनामसु[2] पठितम् । तप्तनप्तनथनाश्चेति मध्यमबहुवचनस्य तनादेशः । श्रद्धां कुरुत आस्तिक्यबुद्धिं कुरुतेत्यर्थः मदुक्तमाशीर्वचनं भवद्भिः श्रद्धया धारितं तथैव स्यादिति भावः । किं तदाशीर्वचनमत आह यत् दम्पती जायापती पत्नीयजमानौ वामं वननीयं सम्भजनीयं

**विवस्वन्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्व । श्रदस्मैनरोवचसेदधातनयदाशीर्दादम्पतीवाममश्नुतः ।**

**पुमान्पुत्रोजायतेविन्दतेवस्वधाविश्वाहारपएधतेगृहे ॥ ५ ॥**

यज्ञफलमश्नुतः प्राप्नुतः । किं च इहैव पुमान् पुंस्त्वधर्मसम्पन्नः पुत्रः जायते किं च स च पुत्रो वसु धनं विन्दते लभते । अध अथेत्यर्थः । निपातस्य चेति संहितायां दीर्घः अथानन्तरं विश्वाहा विश्वानि च तान्यहानि च विश्वाहा कालाध्वनोरत्यन्तसंयोगइति द्वितीया । राजाहःसखिभ्यष्टजिति प्राप्तस्य टच्प्रत्ययस्य वैकल्पिकत्वाच्छान्दसो वाभावः अनन्तरं धने लब्धे सति विश्वाहा सर्वदा अरपः पापरहितः सन् गृहे स्वसदने एधते वर्धते नास्ति रपो यस्यासावरपः रपो रिप्रमिति पापनामनी भवत इति[3] यास्कः ॥ आशीर्दा

१——१०,५,४ । २——निघ० ३,१०,२ । ३——निरु० ४,२१ ।

का० दध्ना श्रीणात्येनं पश्चिमेऽन्ते मध्ये वा यज्ञो देवानामिति[1]। एनमादित्यग्रहं दध्ना मिश्रीकुर्यात्॥ आदित्यदेवत्या यजुरन्ता त्रिष्टुप् कुत्सदृष्टा आदित्येभ्यस्त्वेति यजुः। यज्ञो देवानामादित्यानां सुम्नं सुखं कर्तुं प्रत्येति प्रत्यागच्छति अतो हे-आदित्यासः आदित्या यूयं मृडयन्तः सुखयन्तः सुखकर्तारोऽस्माकं भवत। अन्येषामपि दृश्यतइति संहितायां दीर्घः। किं च वो युष्माकं या सुमतिः शोभन-बुद्धिर्भक्तानुग्रहपरा सा अर्वाची अस्मदभिमुखी अववृत्यात् आवर्ततास्। बहुलं छन्दसीति वर्ततेर्लिङि जुहोतयादित्वाच्छ्‌पः श्लु हिलं च। किञ्च अंहोश्चित् अंहुः पापकारी चित् अप्यर्थे अंहोहननशीलस्य पापिनोऽपि या सुमतिर्वरिवोवित्तरा वरिवो धनं विन्दति लभतइति

यज्ञोदेवानाम्प्रत्येतिसुम्नमादित्यासोभवताम्मृडयन्तः। आवोर्वाचीसुमति

र्वृत्यादꣳहोश्चिद्यावरिवोवित्तरासदादित्येभ्यस्त्वा॥ ४॥

वरिवोवित् अतशन्तं वरिवोवित् वरिवोवित्तमः पापिनो या सुमतिर्धनलब्ध्री असत् भवेत् सा सुमतिरस्मदभिमुखी आववृत्यादिति सम्बन्धः। हे सोम आदितेभ्यो देवेभ्यस्त्वां दध्ना मिश्रयामीति शेषः॥ ४॥

का० उपांशुसवनेन मिश्रयति विवस्वन्नादित्येति[2]। पाषाणेन दधि सोमं च मिश्रयेत्॥ आदित्यदेवतम्। तमांसि विवा-सयति नाशयति विवस्वान् यद्वा विशिष्टं वसु धन मस्येति विवस्वान् मतौ टिलोपश्छान्दसः तत्सम्बोधनं हे विवस्वन् हे आदित्य एष पात्रस्थस्ते तव सोमपीथः पातुं योग्यः पीथः पीथश्चासौ सोमश्च सोमपीथः पातव्यः सोमः आहिताग्न्यादित्वात्पीथशब्दस्य परत्वम

१——१०,४,६। २——१०,४,७।

दाशुषे षष्ठार्थे चतुर्थी हविर्दत्तवतो यजमानस्य हविः सश्चसि सेवसे कुत्र उप उप इत् नु यजमानस्यात्यन्तसमीप एव हे मघवन्धनवन्निन्द्र भूय इत् नु पुनरेव च देवस्य ते तव दानं दीयतइति दानम् तत्र देयं हविः पृच्यते त्वया सम्बध्यते। यजमानेन दत्तं हविस्त्वयाङ्गीक्रियत इत्यर्थः ॥ हे ग्रह आदित्येभ्योऽर्थाय त्वां गृह्णामीति शेषः ॥ अत्रेन्द्रनामभिरप्यादित्य एव स्तूयते ॥ २ ॥

का० अपगृह्य पुनः कदा चनेति१। धारातो विच्छिद्य पूतभृतः सकाशादात्मसमीपं नीत्वा तथैव पुनरादित्यग्रहं गृह्णीयात् ॥ कदाशब्दः कालवाची चनेतिनिपातः पुनरर्थे। हे आदित्य त्वं कदाचन प्रयुच्छसि कस्मिन् काले पुनः प्रमाद्यसि। युच्छ प्रमादे न प्रमाद्यसीति काकुः। उदयतापपाकप्रकाशैः प्राणिनोऽनुगृह्णन्नकदाचिदालस्यं करोषीति भावः। यद्वा कदा च नेति पदत्रयम् चकारोऽप्यर्थे कदापि न प्रयुच्छसि स्वकर्मणि। किं च उभे जन्मनी देवमनुष्यसम्बन्धिनी निपासि नितरां पालयसि। किञ्च तुरीय सुपां सुलुगिति

कदाचनप्रयुच्छस्युभेनिपासिजन्मनी। तुरीयादित्यसवनन्तइन्द्रियमातस्थावमृतन्दिव्यादित्येभ्यस्त्वा ॥ ३ ॥

विभक्तिलोपः। ते तव तुरीयं चतुर्थं मायातीतं शुद्धं सवनं सुवति स्वकार्ये जगत्प्रेरयति सवनं नन्द्यादित्वाल्ल्युप्रत्ययः जगत्प्रवर्तकम् अमृतमनश्वरं विज्ञानानन्दस्वभावं यदिन्द्रियं वीर्यं तद्दिवि द्युलोके मण्डलान्तरे आतस्थौ आभिमुख्येन स्थितम् तदुक्तं पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि। एवमादित्यः परापररूपेणास्यामृचि स्तुतः ॥ यद्वास्या ऋचोर्थान्तरम् प्रशब्दो निषेधे चनशब्दोऽप्यर्थे। हे आदित्य त्वं कदाचन कदापि प्रयुच्छसि न प्रमाद्यसि किन्तु उभे वर्त्तमानभाविनी जन्मनी निपासि रक्षसि। तृतीयमित्यर्थे व्यत्ययेन तुरीयशब्दः प्रयुक्तः हे आदित्य ते तव यत्तृतीयं सवनं तस्मिन्दिवि द्युलोकसमाने सवने इन्द्रियमिन्द्रियवृद्धिकरणममृतं सुधासमं हविः आतस्थौ समन्तात्स्थितम् ॥ हे आदित्यग्रह आदित्येभ्यो अर्थाय त्वां गृह्णामीति शेषः ॥ ३ ॥

१—१०,४,५।

सप्तमेऽध्याये उपांशुग्रहादिसवनद्वयगता मन्त्रा दक्षिणादानान्ता उक्ताः अष्टमे तृतीयसवनगता आदित्यग्रहादिमन्त्रा उच्यन्ते ॥ तत्र का० प्रतिप्रस्थातादित्यपात्रेण द्रोणकलशादुपयामगृहीतोऽसीति गृहीत्वा द्विदेवत्यानन्नु जुहोत्युत्तरार्धे इति[1]। द्विदेवत्यैः सह होमाय प्रतिप्रस्थातादित्यग्रहपात्रेण द्रोणकलशात्सोमं गृह्णाति ॥ सोमदेवत्यम्। हे सोम उपयामेन पात्रेण त्वं गृहीतोऽसि मया ॥ का० शेषᳬशेषमादित्यस्थाल्यामासिञ्चत्यादित्येभ्यस्त्वेति[2]। द्विदेवत्याननु हुत्वा हुतशेषमादित्यस्थाल्यां क्षिपेत् ॥ सोमदेवत्यम्। हे सोम आदित्येभ्योऽर्थाय त्वा त्वां सिञ्चामीति शेषः ॥ का० समासिच्य तेनापि दधाति विष्ण उरुगायेति[3]। संस्रवमासिच्य तेनादित्यपात्रेण स्थालीं पिदधाति ॥ विष्णुदेवतम्। हे विष्णो यज्ञपुरुष हे उरुगाय उरुभिर्बहुभिर्गीयते स्तूयत इत्युरुगायस्तत्सम्बोधनम् एष सोमस्ते

उपयामगृहीतोस्यादित्येभ्यस्त्वा। विष्णऽउरुगायैषतेसोमस्तᳬरक्षस्वमात्वादभन् ॥ १ ॥

कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे। उपोपेन्नुमघवन्भूयइन्नुतेदानन्देवस्यपृच्यतऽआदित्येभ्यस्त्वा ॥ २ ॥

तवार्पितः तं सोमं रक्षस्व गोपाय आत्मनेपदमार्षम् सोमरक्षणे प्रवृत्तं त्वा त्वां मा दभन् मा दभ्नुयुः मा हनुः रक्षांसीति शेषः दभ्नोतिर्हिंसाकर्मा ॥ १ ॥

का० आदित्यग्रहं गृह्णाति सᳬस्रवेभ्यः कदा चनेति[4]। होमशेषाः संस्रवास्तेभ्यः सकाशात् ॥ आदित्यदेवत्ये बृहत्यौ यजुरन्ते आदित्येभ्यस्त्वेति यजुः। तृतीयो द्वादशार्णस्त्रयोऽन्येऽष्टार्णाः। सा बृहती तृतीयेऽध्याये बृहदुपस्थानमध्ये इन्द्रदेवत्या प्रथमोक्ता व्याख्याता च इह त्वादित्यदेवत्या यजुरन्ता चेति विशेषः। हे इन्द्र त्वं कदा चन कदाचिदपि स्तरीर्हिंसको नासि किन्तु

१—९,९,१५। २—९,९,२०। ३—९,९,२१। ४—१०,४,४।

एधि मह्यं प्रतिग्रहीत्रे वयोऽन्नं पशुर्वा भव। दुग्धदध्यादिरूपेणान्नं सन्ततिद्वारा पशुश्च भवेत्यर्थः॥ का० बृहस्पतये त्वेति वास इति[1]। वस्त्रं गृह्णीतः। वासोदैवत्यम्। हे वासो बृहस्पतिरूपाय मह्यं वरुणः त्वां ददातु सोऽहममृतत्वमशीय, त्वञ्च दात्रे त्वगेधि त्वगिन्द्रियसुखकारी भव प्रतिग्रहीत्रे मह्यं मयः सुखं च भव॥ का० यमाय त्वेत्यश्वमिति[2]। हयं गृह्णीतः। अश्वदैवतम्। हे अश्व यमरूपाय मह्यं वरुणः त्वां ददातु स यमरूपो ऽहमश्वं गृह्णानोऽमृतत्वं व्याप्नुयाम् हे अश्व त्वं दात्रे हयोऽश्वो भव मह्यं प्रतिग्रहीत्रे वयोऽन्नं तद्दाता पशुर्वा सन्ततिद्वारा भव॥ ४७॥

कोऽदात्कस्माऽअदात्कामोऽदात्कामायादात्। कामो दाता कामः प्रतिग्रहीता कामैतत्ते॥ ४८॥

## ॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां सप्तमोऽध्यायः॥

का० कोऽदादित्यन्यदिति[3]। अन्यदन्यौदनतिलादि गृह्णीतः॥ कामदैवत्यम्। दातुर्दानाभिमानाभावाय स्वस्य च प्रतिग्रहजदोषाभावाय च देहेन्द्रियात्मसङ्घाते कामं विविनक्ति। को नरोऽदाद्दत्तवान् कस्मै नरायादात्। प्रश्नद्वयस्योत्तरमाह। कामोऽदात्कामायैवादात् न त्वं दाताहं प्रतिग्रहीता त्वत्कामाभिमानी देवो मत्कामाभिमानिनेऽदात्। एवं च काम एव दाता काम एव प्रतिग्रहीता मान्यः। हे काम एतद्द्रव्यं ते तव दातृप्रतिग्रहीतृत्वात्॥ ४८॥

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। उपांश्वादिप्रदानान्तः सप्तमोऽध्याय ईरितः॥ ७॥

१——१०,२,३०। २——१०,२,३१। ३——१०,२,३२।

हिरण्यमस्मै ददात्यस्मद्दाता इति[1]। अस्मै आग्नीध्राय। दक्षिणादेवत्यम्। हे दक्षिणा यूयमस्मद्दाताः। रा दाने अस्माभिः राता दत्ताः सत्यो देवता देवान् प्रति गच्छत। तानेत्य तेषां तृप्तिं कृत्वा ततः दातारं प्राविशत यज्ञफलं साधयन्त्यो यजमानं प्राविशतेत्यर्थः॥ ४६॥

का० अग्नये त्वेति हिरण्यं प्रतिगृह्णीत इति[2]। अध्वर्युप्रतिस्थातारावि्ति शेषः। हिरण्यदैवतम्। हे हिरण्य वरुणोऽग्नये-

अ॒ग्नये॑त्वा॒मह्यं॒ वरु॑णो॒दद॑ातु॒सो॒ऽमृ॒त॒त्वम॑शी॒यायु॑र्दा॒त्रऽए॑धि॒मयो॒मह्य॑म्प्रति॒ग्र॒ही॒त्रे। रु॒द्राय॑त्वा॒मह्यं॒ वरु॑णो॒दद॑ातु॒ सो॒ऽमृ॒त॒त्वम॑शी॒यायु॑र्दा॒त्रऽए॑धि॒मयो॒मह्य॑म्प्रति॒ग्र॒ही॒त्रे। बृह॒स्पत॑ये॒त्वा॒मह्यं॒वरु॑णो॒दद॑ातु॒सो॒ऽमृ॒त॒त्वम॑शी॒यायु॑र्दा॒त्रऽए॑धि॒वयो॒मह्य॑म्प्रति॒ग्र॒ही॒त्रे। य॒माय॑त्वा॒मह्यं॒वरु॑णो॒दद॑ातु॒सो॒ऽमृ॒त॒त्वम॑शी॒यायु॑र्दा॒त्रऽए॑धि॒मयो॒मह्य॑म्प्रति॒ग्र॒ही॒त्रे॥४७॥

ऽग्निरूपाय मह्यं त्वा त्वां ददातु पूर्वं वरुणेन कनकाद्यग्न्यादिभ्यो दत्तमतस्तेन तेनात्मना प्रतिगृह्णानो विप्रो न नश्यतीति देवतादेशः। अनेन विधिना गृह्णानः सोऽहममृतत्वमारोग्यमशीय व्याप्नुयाम् हे हिरण्य त्वं दात्रे आयुर्जीवनमेधि भव प्रतिग्रहीत्रे प्रतिग्रहकर्त्रे मह्यं मयः सुखमेधि दातायुष्मान्भवतु अहं सुखी स्यामिति भावः॥ का० रुद्राय त्वेति गामिति[3]। गां प्रतिगृह्णीतः। गोदेवत्यम्। हे गौः रुद्ररूपाय मह्यं वरुणः त्वा ददातु सोऽहममृतत्वं प्राप्नुयाम् हे गौः त्वं दात्रे यजमानाय प्राणः प्राणरूपा

१—१०,२,२०। २—१०,२,२८। ३—१०,२,२९।

पथा मार्गेण प्रेत प्रगच्छत । किम्भूता यूयं चन्द्रदक्षिणाः । चन्द्रमिति हिरण्यनाम[1] चन्द्रं सुवर्णं यजमानहस्तस्थं द्वितीयं दक्षिणा यासां ताश्चन्द्रद्वितीयदक्षिणा इति प्राप्ते शाकपार्थिवादित्वाद्द्वितीयपदलोपः ॥ का० सदो गच्छति वि स्वरिति[2] । दक्षिणादैवत्यम् । हे दक्षिणाः अहं स्वः स्वर्गं देवयानमार्गं विपश्य विपश्यामि विलोकयामि अन्तरिक्षं पितृयानमार्गं च विपश्यामि भवतीभिः सोपानभूताभिरिति भावः । व्यत्ययो बहुलमिति उत्तमपुरुषस्थाने पश्येति मध्यमः पुरुषः श्रुत्या तथा व्याख्यातत्वात् ॥ का० प्रेक्षते यतस्व सदस्यानिति सदस्यान्[3] । यजमान ऋत्विजः प्रेक्षते । दक्षिणादैवतम् । हे दक्षिणे त्वं यतस्व यत्नं कुरु यथा सदस्यैः ऋत्विग्भिः पूरितैरप्यतिरिच्यस इति शेषः । तथा त्वया यतितव्यं यथा ऋत्विजो धनैः सम्पूर्णाधिका भवेति भावः ॥ ४५ ॥

का० ब्राह्मणमद्येत्याग्नीध्रगमनमिति[4] । आग्नीध्रमृत्विजं स्वस्थानस्थं प्रति यजमानो गच्छति । ब्राह्मणदैवत्यम् । अहमद्या-

**ब्राह्मणमद्य विदेयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयꣳसुधातुदक्षिणम् । अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥४६॥**

स्मिन्दिने इदृशं ब्राह्मणं विदेयं लभेयं विद्लृलाभे । किम्भूतं पितृमन्तम् प्रशस्तः पितास्यास्तीति पितृमान् तम् पित्रा विना न कश्चिज्जायतेऽतोऽत्र प्राशस्त्यार्थे मतुप् विशिष्टजनकोत्पन्नमित्यर्थः । तथा पैतृमत्यम् पितुरिमे पैतरः तद्धितप्रत्ययलोपेऽपि छान्दसी वृद्धिः मता एव मत्याः स्वार्थे यत् पैतरः पितामहादयो मताः सम्मता जगन्मान्या यस्य स पैतृमत्यस्तम् यद्वा पितरः पूर्वजाः मताः सम्मताः श्रोत्रिया यस्य स पितृमतः पितृमत एव पैतृमत्यः यद्वा प्रशस्तजनकोत्पन्नः पितृमान् इत्युक्तं तदपत्यं पैतृमत्यः सर्वथा यस्य पितामहादयः श्रोत्रियाः स पैतृमत्य इत्यर्थः । तथा ऋषिं मन्त्राणां व्याख्यातारम् । तथा आर्षेयम् ऋषिषु विख्यात आर्षेयस्तम् जात्या प्रवरैर्ज्ञानेन सुज्ञातमित्यर्थः । तथा सुधातुदक्षिणम् शोभनो धातुः सुवर्णं दक्षिणा यस्य स सुधातुस्तम् ॥ का० उपविश्य

१——निघ० १,२,२ । २——१०,२,१७ । ३——१०,२,१८ । ४——१०,२,१९ ।

का० आग्नीध्रीयेऽग्ने नयेति[1]। आग्नीध्रीयेऽग्नौ सकृद्गृहीतमाज्यं जुहोति॥ का० अयं न इत्यपरामिति[2]। द्वितीयामाहुतिमाग्नीध्रीये जुहोति। इमे द्वे ऋचौ पञ्चमेऽध्याये[3] व्याख्याते॥ ४३॥ ४४॥

का० सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा बहिर्वेदि तिष्ठन्तीर्दक्षिणतो रूपेण व इति[4]। दक्षिणा गाः अभिमन्त्रयते। नष्टरूपानुष्टुप् दक्षिणादेवत्या नववैराजत्रयोदशैर्नष्टरूपेति लक्षणात् अत्र द्वितीय एकादशार्णस्तृतीयो द्वादशार्णस्तेन

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम स्वाहा॥४३॥

अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयं वाजाञ्जयतु वाजसातावयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा॥४४॥

रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु। ऋतस्य पथा प्रेत चन्द्रदक्षिणा वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः॥४५॥

पूर्णेव। पूर्वं पशवः स्वदानमसहमाना रूपान्तराणि जगृहुः देवाः स्वैः रूपैस्तानुपागतास्ततस्ते स्वैः रूपैराजग्मुरिति[5] मन्त्रस्य निदानम्। हे दक्षिणारूपा गाः रूपेण मूर्त्या वो युष्माकं रूपमहमभ्यागामभ्यागतोऽस्मि अतो भवतीभिरागन्तव्यं सर्वैं हि स्वरूपमागच्छन्तीति भावः। किञ्च तुथो ब्रह्मरूपः प्रजापतिर्वा युष्मान्विभजतु यथायोग्यमृत्विग्भ्यो विभज्य ददातु ब्रह्म वै तुथ इति[6] श्रुतेः। किम्भूतस्तुथः विश्ववेदाः वेदनं वेदो ज्ञानं विश्वं सर्वं वेदो यस्य स विश्ववेदाः सर्वज्ञः। किञ्च यूयमेतज्ज्ञात्वा ऋतस्य यज्ञस्य

१—१०,२,७। २—१०,२,८। ३—३६,३७ का०। ४—१०,२,१०। ५—४,३,४,१४। ६—४,३,४,१५।

पादपूरणः त्यमिति त्यच्छब्दश्छान्दसः तच्छब्दार्थे । केतवो रश्मयः त्यं तं प्रसिद्धं सूर्य्यं देवमुद्वहन्ति । देवो दानाद्द्योतनाद्वेति[1] यास्कः । किम्भूतं सूर्य्यं जातवेदसं जातं वेदो ज्ञानं धनं वा यस्मात्तम् । किमर्थमुद्वहन्ति विश्वाय दृशे षष्ठ्यर्थे चतुर्थी विश्वस्य दर्शनाय जगद्द्रष्टुमित्यर्थः । दृशे विख्ये चेति तुमर्थे निपातः । तस्मै स्वाहा सुहुतमस्तु ॥ ४१ ॥

का० चित्रन्देवानामिति द्वितायामिति[2] । चतुर्गृहीतेन शालाद्वार्ये द्वितीयामाहुतिं जुहोति ॥ सौरी त्रिष्टुप् कुत्सदृष्टा । परापररूपेण स्थितः सूर्योऽत्र स्तूयते सूर्यः चित्रमाश्चर्यं यथा तथा उदगात् उदयं प्राप्तः उद्गच्छति वा लडर्थे लुङ् उदयन्नेव स्वतेजसा नैशं तमो हन्ति अन्येषां ज्योतींष्यादत्त इत्याश्चर्यम् । किम्भूतः सूर्यः देवानाम् दीव्यन्ति द्योतन्ते इति देवाः किरणास्तेषामनीकं मुख-

चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ।

आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ४२ ॥

माश्रय इत्यर्थः यद्वानीकं समूहः किरणपुञ्ज इत्यर्थः । तथा मित्रस्य वरुणस्य अग्नेः चक्षुः नेत्रवत्प्रकाश इत्यर्थः मित्रादय उपलक्षकाः सर्वस्य सदेवमनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽभिव्यज्यन्ते अतो मित्रादीनां चक्षुः स सूर्य उद्गतः सन् द्यावापृथिवी दिवं भूमिं चान्तरिक्षं चाप्राः आपूरितवान् आपूरयति वा स्वतेजसेति शेषः । एवमपररूपेण स्तुत्वा पररूपेण स्तौति । किम्भूतः सूर्यः जगतो जङ्गमस्य तस्थुषः स्थावरस्य च जगत आत्मान्तर्यामी । यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्मेति श्रुतेः सूर्योऽहमेतमनेनोच्यते इति भावः । तस्मै स्वाहा सुहुतमस्तु ॥ ४२ ॥

१—निरु० ७,२० । २—१०,२,६

परेऽस्मच्छब्दस्य टेरद्रादेशः उगिदचामिति प्राप्तस्य नुमोऽभावश्छान्दसः। स वर्द्धमान इन्द्र ईदृशो भूत् भवतु। लोडर्थे लुङ् अडभावश्छान्दसः। कीदृशः उरुः यशसा विपुलः पृथुः बलेन विस्तृतः कर्तृभिर्यजमानैः सुकृतः साधुकृतः सत्कृतः पूजित इत्यर्थः॥ हे ग्रह त्वमुपयामेन गृहीतोऽसि महेन्द्राय त्वां गृह्णामि॥ सादयति एष ते योनिः महेन्द्राय त्वा सादयामि॥ ३९॥

माहेन्द्री गायत्री वत्सदृष्टा। माहेन्द्रग्रहणएव विकल्पेन विनियुक्ता। य इन्द्रः वत्सस्य वसनशीलस्य वत्सस्थानीयस्य वा यजमानस्य

महाँ२॥ इन्द्रो यऽओजसा पर्ज्जन्यो वृष्टिमाँ२॥ इव। स्तोमैर्वत्सस्य वावृधे।

उपयामगृहीतोसि महेन्द्राय त्वैष ते योनिर्म्महेन्द्राय त्वा॥ ४०॥

उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः। दृशे विश्वाय सूर्य्यँ स्वाहा॥ ४१॥

स्तोमैः स्तोत्रैर्वावृधे ववृधे वर्धते। कीदृश इन्द्रः ओजसा तेजसा महान्। कइव वृष्टिमान् वृष्टियुक्तः पर्जन्य इव यथा वर्षन्मेघो धाराबलेन महान्वर्धते॥ उपयाम एष ते इति व्याख्याते॥ ४०॥

का० शालाद्वार्ये दाक्षिणहोमो वासःप्रबद्धं हिरण्यं हवन्यामवधाय चतुर्गृहीतमुदुत्यमिति[1]। वस्त्रबद्धं स्वर्णं जुह्वां निधाय शालाद्वार्येऽग्नौ चतुर्गृहीताज्येन दाक्षिणसञ्ज्ञो होमः कार्यः॥ सौरी गायत्री प्रस्कण्वदृष्टा तृतीयः पादः सप्तार्णः। उ निपातः

[1] — १०,२,४-५।

प्रतिपत्प्रभृतिषु तिथिषु अभिषुतानां सोमानां राजासि ईश्वरोऽसि किमुत चतुर्दश्यन्तेऽभिषुतानाम् त्वदर्थमेव सर्वासु तिथिषु सोमोऽभिषूयतइत्यभिप्रायः । छन्दोगानां सवने प्रतिपद्विद्यते इति प्रतिपद्ग्रहणम् ॥ उपयाम एष ते, इति व्याख्याते ॥ ३८ ॥

का० माहेन्द्रं गृह्णाति वैश्वदेववन्महाँ२ इन्द्र इति[१] । यथा वैश्वदेवग्रहः शुक्रपात्रेण गृहीतस्तथा माहेन्द्रं ग्रहं तेनैव गृह्णीयात् ॥ माहेन्द्री त्रिष्टुप् भरद्वाजदृष्टा तृतीयपादो नवाक्षरः । इन्द्रो वीर्याय वीरकर्मण वावृधे वर्धते । छन्दसि लुङ्लङ्लिट इति वर्तमाने लिट् संहितायामभ्यासदीर्घः । किम्भूत इन्द्रः महान्महाप्रभवः तथापि नृवत् मनुष्यवत् आह्वयमान आगच्छति यद्वा नृवत् मनुष्यवत् आचर्षणिप्राः आ समन्ताच्चर्षणीन्मनुष्यान् प्राति अभीष्टकामैः पूरयतीत्याचर्षणिप्राः । प्रापूरणे क्विप् । यथा राजा अमात्यादिमनुष्यः सेव

**महाँ२ इन्द्रो नृवदाचर्षणिप्राउत द्विबर्हा अमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ।**

**उपयामगृहीतोसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ ३९ ॥**

कानभीष्टकामैः पूरयति तद्वत् । उतापि च द्विबर्हाः वृहि वृद्धौ बर्हणं बर्हः वृद्धिः असुन् प्रत्ययः द्वयोः प्रकृतिविकृतिरूपयोः सोमयागयोर्बर्हो यस्य स द्विबर्हाः यद्वा द्वयोः स्थानयोर्बर्हाः वृद्धः परिवृढः प्रभुः मध्यमे स्थाने उत्तमे च । तथा सहोभिः बलैः अमिनः अमितः उपमारहितः अतोलितबल इत्यर्थः । अमिनोऽमितमात्रो महान् भवत्यभ्यमितो वेति[२] यास्कोक्तिः । यद्वा सहोभिः शत्रुबलैरमितः अप्रक्षिप्तोऽनुपहिंसित इत्यर्थः । डु मिञ् प्रक्षेपे । मिञ् हिंसायाम् । इत्यस्य वा प्रयोगः । पूर्वपक्षे माङ् माने-सर्वत्र निष्ठानत्वमार्षम् । तथा अस्मद्र्यक् अस्मान् प्रत्यञ्चतीत्यस्मद्र्यक् अस्मदभिमुखः अस्मच्छब्दे उपपदेऽञ्चतेः क्विप् विष्वग्देवयोश्चेत्यादिना क्विबन्तेऽञ्चतौ

१——१०,३,१० । २——६,१६ ।

कात्यायनोक्तिः । मरुत्वां इन्द्रेति मरुत्वतीयमित्याश्वलायनोक्तेश्च । हे इन्द्र हे शूर वीर त्वं सोमं पिब किम्भूतस्त्वं सजोषाः जुषी प्रीतिसेवनयोः जोषणं जोषः प्रीतिः असुन् प्रत्ययः तेन सह वर्तमानः सन्तुष्टः मरुद्भिः कृत्वा सगणः सपरिवारः मरुद्गणसहित इत्यर्थः । वृत्रहा वृत्रं दैत्यं हन्तीति अनेन सोमपानेन वृत्रं हनिष्यसीत्यर्थः । विद्वानेतमर्थं जानानः ततः सोमं पीत्वा शत्रून् मृधादीन् जहि मारय किञ्च मृधः सङ्ग्रामान् अपनुदस्व । नुद प्रेरणे । युद्धं निवर्तयेत्यर्थः । दीर्घादटि समानपद इति शत्रूनिति नस्य रुत्वं पूर्वस्य सानुनासिकत्वम् । यद्वा मृधः इति पञ्चम्येकवचनं मृधः सङ्ग्रामात् अपनुदस्व अत्र नित्यमस्यानुषङ्गः ये हतावशिष्टाः शत्रवस्तान् सङ्ग्रामात् पलायनार्थं प्रेरयस्व प्राणदानं कुर्वित्यर्थः । एवं रिपुनाशं कृत्वाथानन्तरं नोऽस्माकं विश्वतः सर्वतः अभयं कृणुहि कुरु कृञ्

मरुत्वाँ२ इन्द्रवृषभोरणायपिबासोममनुष्वधम्मदाय । आसिञ्चस्वजठरेमध्वऊर्मिन्त्वꣳराजासिप्रतिपत्सुतानाम् ।

उपयामगृहीतोसीन्द्रायत्वामरुत्वतएषतेयोनिरिन्द्रायत्वामरुत्वते ॥ ३८ ॥

करणे स्वादिः ॥ उपयामेति व्याख्याते ॥ शत्रून्नपेत्यत्र दीर्घादटि समानपद इति नस्य रुत्वम् अत्रानुनासिकः पूर्वस्य तु वेति तत्र पूर्वस्य नकारस्यानुनासिकत्वम् ॥ ३७ ॥

हे इन्द्र त्वं सोमं पिब द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । किमर्थं मदाय तृप्तये रणाय सङ्ग्रामाय च मदे सतीन्द्रो योद्धा भवति । किम्भूतस्त्वम् मरुत्वान् मरुतोऽस्य सन्तीति मरुद्गणसंयुक्तः । वृषभः वर्षिता जलानाम् । किम्भूतं सोमम् अनुष्वधम् अनु पश्चात्स्वधा तानि पुरोडाशधानामभ्यर्द्धिपयस्यालक्षणानि यस्य सोऽनुष्वधस्तं पूर्वपदादिति षत्वम् । कथं पिबेत्यत्राह मध्वः मधुनो मधुरस्वादोपेतस्य ऊर्मिं कल्लोलं जठरे उदरे आसिञ्चस्व । अनित्यमागमशासनमिति मध्व इत्यत्र नुमभावः । सोमपाने हेतुमाह हे इन्द्र त्वं प्रतिपत्सुतानां

स्मिन्वस्मादीये यज्ञे तमिन्द्रं वयं हुवेम आह्वयामः । ह्वेञः अपि व्यत्ययेन सम्प्रसारणम् । किम्भूतमिन्द्रं मरुत्वन्तं मरुद्गणोपेतम् । वृषभं
जलस्य वर्षितारम् । वावृधानं संहितायां दीर्घः वर्धते कामान्वर्धयति वा वावृधानस्तम् बहुलं छन्दसीति वर्धतेः आनचि जुहोत्यादि-
त्वेन श्लुः श्लाविति द्वित्वम् । अकवारिं कुत्सिता अरयो यस्य स कवारिः न कवारिरकवारिस्तं यस्य अवरोऽप्यकुत्सिता इन्द्रादयः । यद्वा
अकुत्सितमियर्ति ऐश्वर्यं प्राप्नोतीत्यकवारिस्तम् उत्कृष्टैश्वर्यम् । दिव्यं दिवि भवं द्युलोकस्थम् । शासं शास्तीति शासः पचाद्यच्
शासितारं दुष्टानां यद्वा शासनं शासस्तद्वन्तम् अर्शआदित्वादच् प्रशासनवन्तम् । विश्वासाहं विश्वं पालयितुं सहते स विश्वसाट्
तम् अनलसमित्यर्थः । भजसहवहश्चामिति ण्विः यद्वा सहतिरभिभवार्थः स्वधर्मच्युतस्य विश्वस्य सर्वस्याभिभवितारम् । नूतनाय अवसे

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् । जहि शत्रूँ२ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ।

उपयामगृहीतोसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३७ ॥

नवीनाय पालनाय इदानीन्तनयजमानरक्षणाय उग्रमुद्गूर्णवज्रम् । सहोदां सहो बलं ददाति सहोदास्तं क्विप् बलप्रदम् ॥ उपयाम
एष ते एतद्यजुर्द्वयं व्याख्यातम् ॥ तृतीयं मरुत्वतीयमाह । का० कृत्सुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोऽसि मरुतां त्वौजसइति[१] ।
कुर्वन्मरुत्वतीयोऽयम् ॥ मरुत्वद्देवत्यं यजुः । हे मरुत्वतीय ग्रह मरुतां देवानामोजसे बलाय त्वा त्वां गृह्णामीति शेषः । ओज इति
बलनाम[२] स त्वमुपयामेन गृहीतोऽसि स्वबलं निधायेन्द्रं प्रत्यागता मरुतोऽनेन ग्रहेण गृहीतेन सबला जाता इति भावः ॥ ३६ ॥
वाचः स्तोमे वाचस्तोमाय त्वा इति[३]
सजोषा इन्द्रेति मरुत्वां इन्द्रेति कण्डिकाद्वयस्य सोपयामस्य मरुत्वतीयग्रहणे एव विनियोगः ।

१——१०,३,३ । १——निघ० २,९,? ३——२२,६,२४ ।

ऐन्द्रामरुत्वतीयस्त्रिष्टुभौ विश्वामित्रदृष्टाः। मरुतो देवा विद्यन्ते यस्य स मरुत्वान् तस्य सम्बोधनं हे मरुत्वः। मतुवसो रु सम्बुद्धौ छन्दसीति रुत्वम्। मरुद्भिः सहित हे इन्द्र इहास्मदीये यज्ञे सोमं पाहि पिब। कथं पातव्यस्तत्राह यथा शार्याते शर्यातिर्नाम कश्चिद्राजा तस्य सम्बन्धिनि यज्ञे सुतस्याभिषुतस्य सोमस्यांशमपिबः पीतवानसि तद्वदिह पिब। शर्यातो ह वा इदं मानवो ग्रामेण चचारेति[1] श्रुतिः। किञ्च हे शूर वीर तव प्रणीती प्रणीत्या प्रणयनेनानुज्ञया सुयज्ञाः कल्याणयज्ञाः कवयः क्रान्तदर्शनास्तव शर्मन्

इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य। तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः।

उपयामगृहीतोसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३५ ॥

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम्। विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम।

उपयामगृहीतोसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते। उपयामगृहीतोसि मरुतां त्वौजसे ॥ ३६ ॥

सुखनिमित्ते शर्मणि यज्ञगृहे वा आविवासन्ति त्वां परिचरन्ति विवासतिः परिचर्यार्थः॥ उपयामेन सोम त्वं गृहीतोसि मरुत्वत इन्द्राय त्वां गृह्णामि॥ सादयति एष ते योनिः मरुत्वते इन्द्राय त्वां सादयामि ॥ ३५ ॥

द्वितीयं मरुत्वतीयमाह। का० वग्निना मरुत्वतीयग्रहणं मरुत्वन्तमिति[2]। रिक्तेन पात्रेण शस्त्रमरुत्वतीयग्रहणम्। इहा-

१——४,१,५,२। २——१०,२,६।

ऋतुपात्रेण वैश्वदेवं ग्रहं गृह्णीयात्। वैश्वदेवी गायत्री मधुच्छन्दोदृष्टा। हे विश्वे देवासः विश्वे देवा यूयमागत आगच्छत। किंभूता यूयम् ओमासः ओमाः। अवन्तीत्योमा रक्षितारः अवितारो वावनीया वेति[1] यास्कोक्तिः। तर्पयितारस्तर्पणीया वा। अवतेर्मक्प्रत्ययः सम्प्रसारणं च। तथा चर्षणीधृतः चर्षणयो मनुष्यास्तान्धरन्ति पुष्णन्ति तैर्वा ध्रियन्ते ते चर्षणीधृतः चर्षणिशब्दस्य संहितायां दीर्घः अनिष्टनिरसनं रक्षणम् इष्टप्रापणं पोषणमित्यवनधरणयोर्भेदः। तथा सुतमभिषुतं सोमं दाशुषः दत्तवतो यजमानस्य दाश्वांसः फलं दत्तवन्तः कामान् पूरयन्त इत्यर्थः। यद्वा सुतं सोमं पातुमिति शेषः दाश्वानित्यादिना निपातः॥ हे सोम त्वमुपयामेन

विश्वे देवासऽआगतशृणुतामऽइमꣳहवम्। एदम्बर्हिर्निषीदत।

उपयामगृहीतोसिविश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः॥ ३४॥

गृहीतोऽसि विश्वेभ्यो देवेभ्योऽर्थाय त्वां गृह्णामीति शेषः॥ सादयति एष ते योनिः विश्वेभ्यो देवेभ्योऽर्थाय त्वां सादयामि॥ ३३॥

वैश्वदेवी गायत्री गृत्समददृष्टा वैश्वदेवग्रहग्रहणएव विकल्पेनाम्नाता। हे विश्वे देवासो यूयमागत अस्मद्यज्ञं प्रत्यागच्छत आगत्य च मे ममेमं हवमाह्वानं शृणुत श्रुत्वा इदं मदीयं बर्हिः आनिषीदत बर्हिषि उपर्युपविशत॥ उपयामेति पूर्ववत्॥ ३४॥

एते प्रातःसवनग्रहाः पूर्णाः॥०॥ अथ माध्यन्दिनसवनग्रहा उच्यन्ते। माध्यन्दिने सवने मरुत्वतीया गृह्यन्त इति तित्तिरिवचनात्। तत्र त्रयो मरुत्वतीयास्तत्र प्रथममाह॥ का० मरुत्वतीयमृतुपात्रेणेन्द्र मरुत्व इति[2]। ऋतुपात्रेण मरुत्वतीयं ग्रहं गृह्णीयात्।

१——निरु० १२,३३। २——१०,१,१४

अग्नीन्द्रदेवत्या गायत्री विशोकदृष्टा। अस्या विनियोगः कात्यायनेन नोक्तः। ऐन्द्राग्नग्रहे एव विकल्पः शाखान्तरे। ये यजमाना अग्निमा इन्धते आदीपयन्ति इष्टिपशुसोमचातुर्मास्यैर्यजन्तीत्यर्थः। घेत्यनर्थको निपातः। तस्य संहितायामृचि तुनुघेत्यादिना दीर्घः। ये चानुषक् आनुपूर्व्येण क्रमेण बर्हिः स्तृणन्ति आच्छादयन्ति अनुषज्यते अनु क्रमेणासज्यते स्तीर्यतइत्यनुषक् कर्मणि क्विप् अकारस्य संहितायां दीर्घः आनुषगिति नामानुपूर्वस्यानुषक्तं भवतीति[1] यास्कोक्तेरानुषक्शब्देनानुपूर्व्यमुच्यते। किञ्च येषां यज्वनां युवा जरा-

आघाऽअग्निमिन्धतेस्तृणन्तिबर्हिरानुषक्। येषामिन्द्रोयुवासखा।

उपयामगृहीतोस्यग्नीन्द्राभ्यान्त्वैषतेयोनिरग्नीन्द्राभ्यान्त्वा ॥ ३२ ॥

ओमासश्चर्षणीधृतोविश्वेदेवासआगत। दाश्वाᳪंसोदाशुषःसुतम्।

उपयामगृहीतोसिविश्वेभ्यस्त्वादेवेभ्यएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ ३३ ॥

रहितः सखा मित्रवदुपकारकः॥ हे सोम तेषां यज्ञे उपयामेन गृहीत त्वं स्वीकृतोऽसि अग्नीन्द्रदेवार्थं त्वां गृह्णामि॥ सादयति हे सोम एष ते योनिः अग्नीन्द्राभ्यामर्थं त्वां सादयामि॥ ३२ ॥

का० वैश्वदेवं गृह्णाति शुक्रपात्रेण द्रोणकलशाद्द्वारक्षे वौमास इति[2]। अध्वर्यो यज्वना स्पृष्टेऽस्पृष्टे वा सति द्रोणकलशाच्छु-

१—निरु० ६,१४। २—९,१४,१।

सुपयामेन पात्रेण गृहीतोऽसि तादृशं त्वामंहसः पतयेऽधिकमासाधिष्ठात्रे गृह्णामीति शेषः। अंहः पापं तस्य पतिः। मलमासत्वादयं द्वादशस्वपि पतति यद्वांहतेर्गतिकर्मणोऽसुन्प्रत्ययान्तस्य रूपमंह इति अंहनमंहो गतिस्तस्य पतिः त्रयोदशो मासः आदित्यगतिवशेन जायते ॥ ३० ॥

का० ऐन्द्राग्नं गृह्णाति[१]। प्रतिप्रस्थातेन्द्राग्निदेवताकं गृहं गृह्णीयात् ॥ ऐन्द्राग्नी गायत्री विश्वामित्रदृष्टा। ओ३म् इन्द्राग्नी युवां सुतमभिषुतं सोमं प्रति आगतमागच्छतम् गच्छतेर्व्यत्ययेन शपो लुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपश्च। किम्भूतं सोमम् गीर्भिरभो वरेण्यम् गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः नभ इवादित्य इव वरेण्यो वरणीयः प्रार्थनीयस्तम् नभ आदित्यो भवति नेता भासां ज्योतिषां प्रभवो

इन्द्राग्नी श्रागतꣳसुतङ्गीर्भिर्नभो वरेण्यम्। अस्य पातन्धियेषिता।

उपयामगृहीतोसीन्द्राग्निभ्यान्त्वैषतेयोनिरिन्द्राग्निभ्यान्त्वा ॥ ३१ ॥

ऽपीति[२] यास्कोक्तेर्नभ आदित्यः लुप्तोपमानम् यद्वा गीर्भिः स्तुतिरूपाभिर्वाग्भिः युतमिति शेषः नभो नभाश्रितैः स्वर्गस्थैर्देवैर्वरेण्यं प्रार्थनीयम् नभःशब्देन लक्षणया नभःस्था देवा उच्यन्ते। किञ्च हे इन्द्राग्नी युवामस्य सोमस्य सम्बन्धिनं स्वांशं पातं पिबतम्। पिबादेशाभावश्छान्दसः। किम्भूतौ युवां धियेषिता धिया यजमानबुद्ध्या इषितौ प्रेषितौ प्रार्थितौ ॥ एवं देवावुक्त्वा सोममाह हे सोम उपयामेन गृहेण गृहीतोसि हे गृह इन्द्राग्निभ्यामर्थे त्वां गृह्णामीति शेषः ॥ एषत इति सादनम्। एष तव योनिः स्थानम् इन्द्राग्निभ्यामर्थे त्वां सादयामि ॥ ३१ ॥

१——९,१३,२० । २——निरु० ३,२३ ।

तुरिति[1]। अध्वर्युप्रतिप्रस्थातारावृतुग्रहैर्द्वादशभिरनुतिष्ठतः। उपयामेत्यादयो द्वादश मन्त्राः तत्र षट्सु मन्त्रयुग्मेषु पूर्वः पूर्वो मन्त्रोऽध्वर्योः उत्तर उत्तरः प्रतिप्रस्थातुरिति मन्त्रविवेकः॥ द्वादश लिङ्गोक्तानि। हे ऋतुग्रह त्वमुपयामेन गृहीतोसि मधवे मधुनाम्ने चैत्रमासाय त्वां गृह्णामीति शेषः। माधवाय वैशाखाय त्वां गृह्णामि। मधुमाधवौ वासन्तौ मधुप्रमुखमन्नं वसन्ते प्रप्नुयति॥ शुक्राय ज्यैष्ठाय त्वां गृह्णामि। शुचये आषाढमासाभिमानिदेवार्थं त्वां गृह्णामि शुक्रशुचौ ग्रीष्ममासौ शुच शोषणइत्यस्य धातोः। नभसे श्रावणमासाय सोम त्वां गृह्णामि। नभस्याय भाद्रपदमासाभिमानिने त्वां गृह्णामि। नभोनभस्यौ वार्षिकौ मासौ मेघबा-

गृहीतोस्यूर्जेत्वोपयामगृहीतोसि सहसेत्वोपयामगृहीतोसि सहस्यायत्वोपयामगृहीतोसि

तपसेत्वोपयामगृहीतोसितपस्यायत्वोपयामगृहीतोस्यꣳहसस्पतयेत्वा॥ ३०॥

हुल्यान्न भात्यत्र सूर्य इति नभा नभस्यश्च॥ इषे आश्विनमासाय त्वां गृह्णामि ऊर्जे कार्त्तिकमासाय त्वां गृह्णामि इषमन्नम् ऊर्जं तदुपसेचनं दध्यादि तदत्र प्रचुरं भवति मतुपो लोपादभेदोपचाराद्वा ऊर्क्शब्देन शारदौ मासावुच्येते॥ सहसे मार्गशीर्षमासाय। सहस्याय पुष्यमासाय सहःसहस्यौ हैमन्तिकौ मासौ सहतेः प्रसहनार्थस्य प्रयोगः प्रसहनमभिभवनम् यतो हेमन्तः शीतेन नरानभिभवति॥ तपसे माघमासाय तपस्याय फाल्गुनाय तपस्तपस्यौ शैशिरौ मासौ तपति सूर्यो यत्रात्यन्तं स तपास्तपस्यश्च॥ का० त्रयोदशं गृह्णियादिच्छन्नुपयामगृहीतोस्यंहसस्पतये त्वेति[2]। इच्छन्नध्वर्युस्त्रयोदशमृतुग्रहं गृह्णीयात् ऐच्छिको विकल्पः॥ हे ग्रह त्व-

१—९,१२,१-४। २—९,१३,१८।

का० कोऽसीति द्रोणकलशमिति[1]। द्रोणकलशमवेक्षते ॥ प्राजापत्यावर्धमानोष्णिक्। यस्याः प्रथमः पादः षडक्षरो द्वितीयः सप्ताक्षरस्तृतीयोऽष्टार्णश्चतुर्थो नवाक्षरः सा त्रिंशद्वर्णा वर्धमानोष्णिक्। अध्वर्युस्तप्रजापतिं द्रोणकलशमाह हे द्रोणकलश त्वं कः प्रजापतिरसि कतमोऽतिशयेन प्रजापतिरसि तथा कस्य प्रजापतेरसि को नाम प्रजापतिनामासि प्रजापतेरनन्यभूतोसीत्यर्थः। किञ्च वयं यस्य ते तव नाम अमन्महि विजानीमः मन ज्ञाने च पुनर्वयं द्रोणकलशरूपं त्वां वयं सोमेन अतीतृपाम तर्पितवन्तः स त्वमस्मा-

**कोसिकतमोसिकस्यासिकोनामासि। यस्यतेनामामन्महियन्त्वासोमेनातीतृपाम।**

**भूर्भुवःस्वःसुप्रजाःप्रजाभिःस्याꣳसुवीरोवीरैःसुपोषःपोषैः ॥ २९ ॥**

**उपयामगृहीतोसिमधवेत्वोपयामगृहीतोसिमाधवायत्वोपयामगृहीतोसिशुक्रायत्वोपयामगृहीतोसि**

**शुचयेत्वोपयामगृहीतोसिनभसेत्वोपयामगृहीतोसिनभस्यायत्वोपयामगृहीतोसीषेत्वोपयाम**

न्विदितनाम्नः कुरु तर्पय च कामैरिति शेषः ॥ का० भूर्भुवः स्वरिति जपतीति[2] ॥ हे भूर्भुवः स्वः अग्निवायुसूर्याः प्रजाभिः अहं सुप्रजाः शोभनप्रजायुक्तः स्यां भवेयम् वीरैः पुत्रैः सुवीरः स्यां पोषैः धनादिपुष्टिभिः सुपोषः शोभनपोषो भवेयम् ॥ २९ ॥

का० ऋतुग्रहैश्चरतो द्रोणकलशादुपयामगृहीतोसि मधवे त्वेति द्वादश प्रतिमन्त्रमध्वर्योः पूर्वः पूर्वो मन्त्र उत्तर उत्तरः प्रतिप्रस्था-

१—९,१३। २—९,७,१५।

का० ग्रहानवेक्षयति यथागृहीतमवकाशान्वाचयन् प्राणाय मइति प्रतिमन्त्रमिति[१]। प्राणायेत्यादयो मन्त्रा अवकाशसञ्ज्ञास्तान्वाचयेत् गृहणक्रमेण गृहान्यजमानं दर्शयति ॥ लिङ्गोक्तदेवतान्येकादश। यज्ञस्यैते प्राणास्तान् प्राणरूपेण दर्शयति हे उपांशो यस्त्वं स्वभावत एव वर्चोदाः तेजसो दाता सः त्वं मे मम प्राणाय हृदयस्थितवायोर्वर्चसे पवस्व प्रवर्तस्व ॥ उपांशुसवनम्। व्यानाय मे सर्वशरीरगतवायवे पवस्व अन्यत्पूर्ववत् ॥ अन्तर्य्यामम् कण्ठदेशस्थो वायुरुदानः ॥ ऐन्द्रवायवम् वागिन्द्रियाय ॥ मैत्रावरुणम्। क्रतुः कामः दक्षस्तस्य समृद्धिः तद्द्वयसाधनरूपाय वर्चसे प्रवर्तस्व ॥ आश्विनम् श्रोत्राय श्रोत्रेन्द्रियाय ॥ शुक्रामन्थिनौ युगपत्। हे शुक्रामन्थिनौ मे मम चक्षुषोः पाटवाय तद्रूपाय वर्चसे युवां पवेथां प्रवर्तेथाम् ॥ २७ ॥

आत्मने मे वर्चोदा वर्चसे पवस्वौजसे मे वर्चोदा वर्चसे पवस्वायुषे मे

वर्चोदा वर्चसे पवस्व विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् ॥ २८ ॥

आग्रयणम्। ममात्मने जीवस्य स्वास्थ्याय वर्चसे पवस्व ॥ उक्थ्यम्। ओजः सर्वेन्द्रियपाटवं शारीरं बलं वा तद्रूपाय वर्चसे पवस्व। ध्रुवम्। आयुर्निर्दुष्टजीवनं तद्रूपाय वर्चसे पवस्व ॥ पूतभृदाधवनीयौ युगपद्वेक्षते। हे पूतभृदाधवनीयौ सर्वाभ्यो मम प्रजाभ्यः प्रजार्थं यद्वर्चस्तेजस्तदर्थं युवां पवेथाम् किम्भूतौ युवाम् वर्चोदसौ वर्चो दत्तस्तौ वर्चोदसौ सर्वत्र ददातेरसुन् प्रत्ययः। यद्वात्र प्राणायेत्यादिचतुर्थीनां षष्ठ्या विपरिणामः प्राणव्यानादीनां यद्वर्चस्तदर्थं पवस्वेत्यर्थः यद्वा यस्त्वं प्राणाय वर्चोदाः स मे वर्चसे ब्रह्मवर्चसाय पवस्व एवं सर्वत्र ॥ २८ ॥

१——९,७,९।

घृतहोमस्य विप्रुड्ढोम इति संज्ञा तमध्वर्य्वादयो जुह्वति ॥ सौमी त्रिष्टुप् स्वाहेति यजुरन्ता देवश्रवोदृष्टा । हे सोम ते तव यो द्रप्सः रसैकदेशः स्कन्दति भूमावन्यत्र वा पतति यश्च ते तवांशुः खण्डः ग्रावच्युतः ग्राव्णः सकाशात्पतितः यश्च धिषणयोः अधिषवणफलकयोः उपस्थादुत्सङ्गात् स्कन्दति वाथवा य अंशुरध्वर्योः सकाशात् स्कन्दति वाथवा य अंशुः पवित्रात्परि स्कन्दति यतः कुतश्चित्परि स्कन्दतीति भावः । हे सोम ते तव तं द्रप्समंशुञ्च स्वाहाकारेण जुहोमि । किम्भूतं तम् मनसा वषट्कृतं सङ्कल्पितं वषट्कारेण च स्वाहाकारेण

यस्ते द्रप्स स्कन्दति यस्ते अ॒ᳪशुर्ग्रावच्युतो धिषणयोरुपस्थात् ।

अध्वर्य्योर्वा परि वा यः पवित्रात्तन्ते जुहोमि मनसा वषट्कृतᳪ स्वाहा देवानामुत्क्रमणमसि ॥ २६ ॥

प्राणाय मे वर्चोदा वर्चसे पवस्व व्यानाय मे वर्चोदा वर्चसे पवस्वोदानाय मे वर्चोदा वर्चसे पवस्व वाचे मे वर्चोदा वर्चसे

पवस्व क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्व श्रोत्राय मे वर्चोदा वर्चसे पवस्व चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथाम् ॥ २७ ॥

च जुहोमीत्यर्थः ॥ का० अन्यतरत्तृणं चात्वाले प्रास्यतीति[1] । अध्वर्युणा वेदेर्ये तृणे गृहीते तयोरेकं चात्वाले क्षिपेत् ॥ चात्वालदैवतम् । हे चात्वाल त्वं देवानामुत्क्रमणमसि उत्क्रामन्ति गच्छन्ति स्वर्गं यस्मात्तदुत्क्रमणं देवास्त्वत्तः स्वर्गं गच्छन्ति अतो हि देवा स्वर्गमुपोदक्रामन्निति श्रुतेः[2] ॥ २६ ॥

१——९,६,३२ । २——४,२,५,५ ।

ध्रुवदैवतं यजुः ध्रुवग्रहणएव विनियुक्तम् । हे सोम त्वमुपयामेन पात्रेण गृहीतोऽसि ध्रुवोऽसि ध्रुवनामकोऽसि कीदृशस्त्वम् ध्रुवा स्थिरा चितिर्निवासो यस्य स ध्रुवचितिः । चितिर्वासगत्योः स्थिरनिवासः आ वैश्वदेवीशंसनप्रस्थानात् तथा ध्रुवाणामादित्यस्थाल्यादीनां मध्ये ध्रुवतमः अतिशयेन स्थिरः तथा अच्युतानां च्युतिरहितानां चरणशून्यानां मध्ये अच्युतक्षित्तमः अच्युते च्युतिरहिते पात्रे क्षियति निवसतीति अच्युतक्षित् अतिशयेनाच्युतक्षित् अच्युतक्षित्तमः ॥ एष तइति सादनम् । हे ग्रह एष ते योनिः स्थानं वैश्वानरायाग्नये त्वा त्वां सादयामि ॥ का० ध्रुवं होतृचमसेऽवनयति ध्रुवं ध्रुवेणेति । ध्रुवपात्रस्थं सर्वं सोमं होतृचमसे सिञ्चेत् ॥ बृहती पूर्वोऽर्धर्चो ध्रुवदैवतः उत्तर ऐन्द्रः प्रथमतृतीयावष्टाक्षरौ पादौ द्वितीयचतुर्थौ दशाक्षरौ सा बृहतीविराजौ गायत्री चेति पिङ्गलोक्तेः ।

उपयामगृहीतोसिध्रुवोसिध्रुवक्षितिर्ध्रुवाणान्ध्रुवतमोच्युतानामच्युतक्षित्तमएषतेयोनिर्व्वैश्वानरायत्त्वा ।

ध्रुवन्ध्रुवेणमनसावाचासोममवनयामि । अथानइन्द्रइद्विशोसपत्नाःसमनसस्करत् ॥ २५ ॥

ध्रुवेणैकाग्रेण मनसा वाचा तन्मन्त्रोच्चारणप्रवणया ध्रुवं ध्रुवगृहेऽवस्थितं सोममवनयामि होतृचमसेऽवसिञ्चामि यद्वा ध्रुवं गृहं सोमं होतृचमसस्थं प्रत्यवनयामि ॥ अथा अनन्तरमिन्द्र इत् इदेवार्थे इन्द्र एव नोऽस्माकं विशः प्रजाः ईदृशीः करत् इतश्च लोपः परस्मैपदेष्विति लोपः लेटोऽडाटावित्यडागमः । कीदृशीर्विशः असपत्नाः नास्ति सपत्नो यासां ताः सपत्नरहिताः शत्रुशून्याः तथा समनसः समानं मनो यासां ताः स्थिरमनस्का धृतियुक्ता इत्यर्थः ॥ २५ ॥

का० यस्तइति विप्रुषां होमं जुहोतीति[१] । अभिषवे ग्रहणे च पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात्तत्प्रत्यवायपरिहाराय

१—९,६,२८ ।

का० ध्रुवं मूर्धानं दिव इति[1]। ध्रुवसत्त्वं ग्रहं गृह्णीयात्॥ वैश्वानरदेवत्या त्रिष्टुब्भरद्वाजदृष्टा वैश्वानरश्चात्र सर्वात्मना स्तूयते। देवा ईदृशमग्निं जनयन्त उत्पादितवन्तः अडागमाभाव आर्षः। किम्भूतमग्निम् दिवो मूर्धानं द्युलोकस्य शिरोवदुन्नतप्रदेशे सूर्य्यरूपेणावस्थाय भासकम्। तथा पृथिव्या अरतिम् रतिरुपरतिस्तद्रहितम् नहि पृथिव्या उपरि कदाचिदप्यग्निरुपरमते किन्तु दाहपाकप्रकाशैः सर्व्वाननुगृह्णन् सर्वदा वर्ततएव यद्वा पृथिवीशब्देनान्तरिक्षमुच्यते। आकाशमापः पृथिवीत्यन्तरिक्षनामसु[2] पठितत्वात् पृथिव्या अन्तरिक्षस्यारतिमलमतिं पर्य्याप्तमतिं पूरकमित्यर्थः तत्र स्थितोऽसौ यथाकालं वृष्ट्या भूतानि पुष्णाति। तथा वैश्वानरं विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितो वैश्वानरस्तम् जठराग्निरूपेणान्नपाचकत्वात्। तथा ऋते यज्ञे यज्ञनिमित्तमाजातम् उत्पन्न-

मूर्द्धानन्दिवोऽअरतिम्पृथिव्या वैश्वानरमृतऽआजातमग्निम्।

कविᳪसम्म्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः॥ २४॥

मरणिद्वयात्। तथा कविं क्रान्तदर्शनं स्वभक्ताननुग्रहीतुमभिज्ञमित्यर्थः। तथा सम्म्राजं सम्यग्दीप्यमानमैश्वर्येण युक्तमित्यर्थः। तथा जनानां यजमानानामतिथिं हविर्भिः सत्कारयोग्यम् विज्ञायते हि अग्निरतिथिरूपेण गृहान् प्रविशति तस्मात्तस्योदकमाहरन्ति। आसन् आपात्रम् आस्यशब्दस्य सप्तम्येकवचने पद्दन्न इति सूत्रेणासन् आदेशः सुपां सुलुगिति सप्तमीलोपः आसन् आसनि आस्ये मुखे आपात्रम् आभिमुख्येन पीयतेऽनेनेत्यापात्रम् विज्ञायते हि चमसो देवपान इति। चमसेन ह वाएतेन भूतेन देवा भक्षयन्तीतिश्रुतेः[3]॥ ईदृशमग्निं देवा इन्द्रादयोऽजनयन्तेत्यर्थः॥ २४॥

१——८,६,२१। २——निघ० १,३,३। ३——१,४,२,१४।

अनवच्छिन्ना कर्मैकदेशरहिता परिसमाप्तिर्यज्ञस्यायुस्तस्मै यज्ञसमाप्तये फलपर्यन्तमवस्थानाय च गृह्णामि। यद्वा यज्ञो यजमानस्य शरीरमिति यजमानस्यायुषे गृह्णामि ॥ २२ ॥

का० मित्रावरुणाभ्यां त्वेति वा प्रशास्त्रइति[1]। मैत्रावरुणायोक्थ्यविग्रहे मन्त्रविकल्पः ॥ मित्रावरुणाभ्यामर्थे देवाव्यं देवतर्पकं त्वां यज्ञस्यायुषे गृह्णामि ॥ का० एवं प्रतिप्रस्थातोत्तराभ्यामिन्द्राय त्वेति ब्राह्मणाच्छंसिनइन्द्राग्निभ्यां त्वेत्यच्छावाकायेति[2]। ब्राह्मणाच्छंस्य-

मित्रावरुणाभ्यान्त्वादेवाव्यंयज्ञस्यायुषेगृह्णामीन्द्रायत्वादेवाव्यंयज्ञस्यायुषेगृह्णामीन्द्राग्निभ्यान्त्वादेवाव्यं-

यज्ञस्यायुषेगृह्णामीन्द्रावरुणाभ्यान्त्वादेवाव्यंयज्ञस्यायुषेगृह्णामीन्द्राबृहस्पतिभ्यान्त्वादेवाव्यंयज्ञस्यायुषे

गृह्णामीन्द्राविष्णुभ्यान्त्वादेवाव्यंयज्ञस्यायुषेगृह्णामि ॥ २३ ॥

च्छावाकाभ्यां मन्त्रविकल्पावेवम् ॥ इन्द्राय त्वां गृह्णामि इन्द्राग्नीभ्यामर्थे त्वां गृह्णामि शेषं पूर्ववत् ॥ का० उत्तरैर्विन्द्रावरुणाभ्या-मिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति[3]। उक्थ्यादिसोमसंस्थेषु मैत्रावरुणादीनां तृतीयसवने उक्थ्यविग्रहमन्त्राः ॥ इन्द्रावरुणयोरर्थे त्वां देवाव्यं यज्ञस्यायुषे गृह्णामि। एवमिन्द्राबृहस्पतिभ्यामर्थे त्वां गृह्णामि। इन्द्राविष्णुभ्यामर्थे त्वां गृह्णामि ॥ मित्रावरुणाभ्यामित्यादौ देवताद्वन्द्वे चेति पूर्वपदान्तस्य दीर्घः ॥ २३ ॥

१——९,१४,९। २——९,१४,१५। ३——१०,७,११।

गृहीतोऽसि हे उकथ्यग्रह त्वा त्वामिन्द्रार्थं गृह्णामि स्वीकरोमि। किम्भूतायेन्द्राय बृहद्वते बृहत्साम तद्वते बृहत्सामप्रियायेत्यर्थः। तथा वयस्वते वयः सोमरूपमन्नं तद्वते यद्वा वयो यौवनलक्षणं वीर्यसमेतम् सदा तद्वते। किम्भूतं त्वाम् उकथाव्यम् उकथानि मित्रावरुणब्राह्मणाच्छंस्यच्छावाकसम्बन्धीनि शस्त्राणि अवति रक्षतीत्युकथावीः तम् तत्र ह्यस्य विनियोगः॥ किञ्च एवं सोममुक्त्वा इन्द्रमाह हे इन्द्र यत्ते तव बृहत् महत् वयोऽन्नं सोमरूपमस्ति तस्मै तत्पानार्थं त्वां प्रार्थये इति शेषः। हे सोम विष्णवे विष्णुदेवतार्थं त्वां गृह्णामि। यद्वा हे इन्द्र यत्ते तव बृहत् महत् ऊर्जितम् वयः यौवनलक्षणं तस्मै सोम त्वां गृह्णामि। अत्र च ते इन्द्रेति युष्मदा-

## उपयामगृहीतोसीन्द्रायत्वाबृहद्वतेवयस्वतउकथाव्यङ्गृह्णामि। यत्तइन्द्रबृहद्वयस्तस्मैत्वाविष्णवेत्वैषते

## योनिरुकथेभ्यस्त्वादेवेभ्यस्त्वादेवाव्यंगृह्णामियज्ञस्यायुषेगृह्णामि॥ २२॥

मन्त्रिताभ्यां प्रत्यक्ष इन्द्र उच्यते त्वेति युष्मदा सोम उच्यते प्रत्यक्षः तयोः सामर्थ्यं नास्ति ततस्ते इत्यस्य पदस्य अस्येत्यनेन व्यत्ययः इन्द्रेत्यस्य इन्द्रस्येत्यनेन पदेन व्यत्ययः ततश्चायमर्थः हे सोम यदस्येन्द्रस्य बृहद्वयो तस्मै त्वा गृह्णामि विष्णवे यज्ञाय च त्वां गृह्णामि॥ एष तइति सादनम्। हे ग्रह एष ते तव योनिः स्थानमुकथेभ्योऽर्थाय त्वां सादयामीति शेषः॥ का० उकथ्यं विगृह्णाति त्रैधं देवेभ्यस्त्वेति सर्वेभ्य इति[१]। उकथस्थालीस्थं सोमं त्रेधा विभज्य गृह्णाति। सर्वेभ्यः प्रशास्तृब्राह्मणाच्छंस्यच्छावाकेभ्यस्तत्कृतया-गार्थमित्यर्थः॥ हे सोम देवेभ्योऽर्थाय त्वां गृह्णामि किम्भूतं त्वाम् देवाव्यम् देवानवति तर्पयतीति देवावीस्तम् किमर्थम् यज्ञस्यायुषे

१—९, १४,८।

भवसि किम्भूतस्त्वम् स्वाग्रयणः अग्रस्य भावः आग्रम् सुष्ठु आग्रं स्वाग्रं श्रैष्ठ्यम् अयति प्रापयतीति स्वाग्रयणः अग्रशब्दस्यायतौ परे टिलोपः । तादृशस्त्वं यज्ञं पाहि रक्ष यज्ञपतिं यजमानं च पाहि । विष्णुः यज्ञाधिष्ठाता देव इन्द्रियेण स्वसामर्थ्येन त्वां पातु त्वमपि तादृशं विष्णुं पाहि रक्ष । सवनानि प्रातरादीनि अभि पाहि सर्वतो रक्ष ॥ २० ॥

का० त्रिर्हिङ्कृत्य सोमः पवत इति[1] । हिङ्कारत्रयं कृत्वा जपेदिति शेषः ॥ वैश्वदेवम् । सोमः पवते पवतिर्गत्यर्थः सोमो गच्छति ग्रहपात्रेषु स्वकीये कर्मणि प्रवर्तत इत्यर्थः । हिङ्कृतिरादरार्था । किमर्थम् अस्मै ब्रह्मणे ब्राह्मणजातिप्रीत्यर्थम् अस्मै क्षत्राय एतत्क्ष-

सोमःपवतेसोमःपवतेस्मैब्रह्मणेस्मैक्षत्रायास्मैसुन्वतेयजमानायपवतइषऊर्जेपवतेद्भ्यओषधीभ्यःपवते

द्यावापृथिवीभ्याम्पवतेसुभूतायपवतेविश्वेभ्यस्त्वादेवेभ्यः । एषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ २१ ॥

त्रियजातिप्रीत्यर्थम् अस्मै सुन्वते सोमाभिषवं कुर्वते यजमानाय कामप्राप्त्यर्थं पवते । इषेऽन्नाय ऊर्जे तदुपसेचनाय क्षीरादये पवते निष्पत्त्यर्थमित्यर्थः । अद्भ्यो वृष्टिभ्यः ओषधीभ्यो व्रीहियवादिभ्यस्तत्सिद्ध्यर्थं पवते । द्यावापृथिवीभ्यां लोकद्वयप्रीणनाय पवते । किं वा बहुनोक्तेन सुभूताय सर्वेषां साधुभवनाय पवते । हे आग्रयणग्रह तादृशं त्वा त्वां विश्वेभ्यो देवेभ्यः सर्वदेवताप्रीत्यर्थं गृह्णामीति शेषः ॥ एष त इति सादयति । हे ग्रह एष ते योनिः स्थानं विश्वेभ्यः सर्वेभ्यो देवेभ्योऽर्थे त्वां सादयामीति शेषः ॥ २१ ॥

का० उक्थ्यमुपयामगृहीत इति[2] । उक्थ्यं ग्रहं गृह्णीयात् ॥ उपयामग्रहदेवतानि यजूंषि हे सोम त्वमुपयामेन पात्रेण

१——९,६,१५ । २——९,६,२० ।

बिभर्तीति शेषः ॥ का० निरस्तो मर्कइति प्रतिप्रस्थातेति[१]। प्रतिप्रस्थाता अप्रोक्षितं यूपशकलं निरस्येत् ॥ आभिचारिकम्। मर्कनामासुरपुरोहितो निरस्तो निराकृतः ॥ का० मन्थिन इति प्रतिप्रस्थातेति[२]। प्रतिप्रस्थाता प्रोक्षितं यूपशकलमाहवनीये प्रक्षिपेत् ॥ शकलदैवतम् हे यूपशकल त्वं मन्थिग्रहस्याधिष्ठानमधिकरणमसि ॥ १८ ॥

का० आग्रयणं द्वयोर्धारयोर्ये देवास इति[३]। धाराद्वये क्षरति सत्याग्रयणं ग्रहं गृह्णीयात् ॥ वैश्वदेवी त्रिष्टुप् परुच्छेपदृष्टा। हे

**येदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ। अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमञ्जुषध्वम्॥ १९ ॥**

**उपयामगृहीतोस्याग्रयणोसिस्वाग्रयणः**

**पाहियज्ञम्पाहियज्ञपतिंविष्णुस्त्वामिन्द्रियेणपातुविष्णुन्त्वम्पाह्यभिसवनानिपाहि ॥ २० ॥**

देवासः देवाः ये यूयं दिवि द्युलोके एकादश स्थ एकादशसङ्ख्याका भवथ केन महिना महिम्ना स्वस्वमहिम्ना स्वस्वमाहात्म्येन महिनेति पदं त्रिष्वपि स्थानेषु सम्बध्यते सर्वत्र महाभाग्याविशेषात् तथा पृथिव्यामधि पृथिव्युपरि एकादश स्थ तथा ये यूयमप्सुक्षितः अन्तरिक्षनिवासिन एकादश स्थ भवथ। अप्स्विति अन्तरिक्षनामसु[४] पठितम् क्षियतिर्निवासार्थः अप्सु अन्तरिक्षे क्षियन्ति निवसन्तीत्यर्थः। हे देवासः देवास्ते त्रिविधा यूयमिमं यज्ञं यजनीयमाग्रयणग्रहं जुषध्वं सेवध्वम् ॥ १९ ॥

आग्रयणदेवतं यजुराग्रयणएव विनियुक्तम्। हे आग्रयणग्रह त्वमुपयामेन पात्रेण स्वीकृतोसि। आग्रयणोसि आग्रयणनामा

१——९,१०,११। २——९,१०,१३। ३——९,९,१४। ४——निघ० १,३,८।

तुविनृम्णः तुवि नृम्णं यस्य बहुधनः महादक्षिणः। तुवीति बहुनाम[1]। नृम्णमिति धननाम[2]। यद्यप्यत्राध्वर्युप्रतिप्रस्थातारौ समानकर्माणौ तथापि यः सक्तुभिः श्रपणं करोति स एव प्रधान इत्याशयः॥ एष त इति सादयति। हे मन्थिग्रह ते तव एष योनिः प्रदेशः त्वं प्रजाः यजमानसम्बन्धिनीः पाहि पालय॥ का० अपमृष्टो मर्क इति प्रतिप्रस्थातेति[3]। प्रतिप्रस्थाता प्रोक्षितेन यूपशकलेन मन्थिनमाच्छाद्याप्रोक्षितेनापमार्ष्टि॥ अपमार्जनीकृतो मर्को नामासुरपुरोहितः॥ का० देवास्त्वेति निष्क्रामतो यथालिङ्गमिति[4]। प्रतिप्रस्थाता हविर्धानान्निष्क्रामेत्॥ मन्थिदैवतम् हे मन्थिग्रह मन्थिनं ग्रहं पिबन्तीति मन्थिपाः देवाः त्वा प्रणयन्तु यजतिस्थानं प्रापयन्तु॥ अनाधृष्टासीति मन्त्रो विनियोगसहितः पूर्वं[5] व्याख्यातः॥ १७॥

सुप्रजाः प्रजाः प्रजनयन्परीह्यभि रायस्पोषेण यजमानम्।
सञ्जग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषा निरस्तो मर्को मन्थिनोऽधिष्ठानमसि॥ १८॥

का० सुप्रजा इति प्रतिप्रस्थातोत्तरमिति[6]। प्रतिप्रस्थातोत्तरं यूपदेशं गच्छति॥ मन्थिदैवतम् हे मन्थिग्रह शोभना प्रजा यस्य स सुप्रजास्त्वं यजमानसम्बन्धिनीः प्रजाः प्रजनयन् उत्पादयन् सन् रायस्पोषेण धनस्य पुष्ट्या सह यजमानमभि यजमानसम्मुखं परीहि परिगच्छ आगच्छ॥ का० अपरेण यूपमरत्नी सन्धत्तः सञ्जग्मान इति[7]। प्रतिप्रस्थातारत्निं सन्धत्त इत्युक्तम्॥ मन्थी नाम ग्रहो दिवा पृथिव्या द्युलोकभूलोकाभ्यां सञ्जग्मानः सङ्गच्छमानः सन् मन्थिशोचिषा मन्थिनः स्वस्यैव दीप्त्या यूपं

१—निघ० ३,१,२। २—निघ० २,१०,२०। ३—९,१०,५। ४—९,१०,६। ५—१२ क०। ६—९,१०,९। ७—९,१०,१०।

पठितः[1] अर्चनं स्तवनमेव । किम्भूतमिमम् सूर्य्यस्यापाञ्च सङ्गमे गृहीताभिरद्भिरभिषुतमिति शेषः । सोमाभिषवार्थं वसतीवर्य्य आपो अपां सूर्य्यस्य च सङ्गमे गृह्यन्ते ता वै वहन्तीनां स्यन्दमानानां गृह्णीयाद्दिवा गृह्णीयादिति श्रुतेः । यद्वायमर्थः अपां सूर्य्यस्य सङ्गमे निमित्ते उदकसूर्य्यसमागमनिमित्तं वृष्टिगर्भनिष्पत्त्यर्थं विप्रा इमं सोमं स्तुवन्ति यथा बालं कस्यचिद्वस्तुनो लाभाय यथा कश्चित् स्तौति । ईदृश हे सोम त्वमुपयामेन ग्रहपात्रेण गृहीतोऽसि मर्कः शुक्रपुत्रोऽसुरपुरोहितस्तस्मै त्वां गृह्णामीति शेषः ॥ १६ ॥

का० सक्तुभिः श्रीणात्येनं मनो न येष्विति[2] । एनं मन्थिग्रहं यवपिष्टैर्मिश्रीकुर्य्यात् ॥ त्रिष्टुप् सोमस्तुतिः । विपः विपश्चितौ

**मनोनयेषुहवनेषुतिग्मंविपःशच्यावनुथोद्रवन्ता। आयःशर्य्याभिस्तुविनृम्णोअस्याश्रीणीतादिशङ्गभस्तावेषतेयोनिः**

**प्रजाःपाह्युपसृष्टोमर्कोदेवास्त्वामन्थिपाःप्रणयन्त्वनाधृष्टासि ॥ १७ ॥**

मेधाविनौ अध्वर्युप्रतिप्रस्थातारौ । विप इत्यत्र छान्दसः प्रातिपदिकैकादेशलोपः । येषु हवनेषु सोमहोमेषु शच्या कर्मणा कृत्वा शचीति कर्मनाम[3] मनो न मन इव तिग्मम् । तिग्मं तेजतेरुत्साहकर्मण इति[4] यास्कः । मनोवदुत्साहयुक्तं यथा तथा वनुथः प्रथमपुरुषस्थाने मध्यमपुरुषश्छान्दसः वनुतः व्याप्नुतः युगपत् शुक्रामन्थिग्रहाविति शेषः । शच्येति निमित्ततृतीया वा कर्मनिमित्तं व्याप्नुत इत्यर्थः । किम्भूतौ विपश्चितौ द्रवन्ता द्रवन्तौ गच्छन्तौ हवनेषु तेष्वेव कर्तव्येषु होमेषु प्रचरन्तौ । योऽध्वर्युः शर्य्याभिः[5] अङ्गुलीभिर्गभस्तौ पाणौ स्थितस्यास्य मन्थिग्रहस्य कर्मणि षष्ठी इमं मन्थिनमादिशं प्रतिदिशमा अश्रीणीत समन्तात् श्रीणाति सक्तुभिर्मिश्रयति । किम्भूतो यः

१——निघ० ३,१४,११ । २——९,६,१२ । ३——निघ० २,१,२२ । ४——निरु० १०,६ । ५——निघ० २,५,५ ।

होत्राशब्देन याज्याच्छन्दांस्यभिधीयन्ते । ताः काः याः मध्वो मधुनो मधुस्वादस्य सोमस्य स्विष्टाः साधु इष्टाः तत्कर्मणि नियुक्तत्वात् याश्च होत्राः सुष्ठु प्रीताः । कथं ज्ञायन्ते । यद्यस्मात् स्वाहाकारेण सुहुताः साधु हुता होमार्थं नियुक्ता इत्यर्थः ॥ का० होतारं प्रत्यङ्ङुप सीदत्ययाडग्नीदिति[1] । अध्वर्युर्होतृसमीपे प्रत्यङ्मुखस्तिष्ठेत् ॥ होतृदेवतम् । अग्निरयाट् अयाचीत् अग्नीधा याग: कृत इति होतुः कथयति ॥ १५ ॥

का० मन्थिनमयं वेन इति[2] । मन्थिग्रहं गृह्णीयात् ॥ त्रिष्टुप् अनयाधिदैवमधियज्ञञ्चावस्थितः सोमः स्तूयते ॥ अधिदैवं

अयंवेनश्चोदयत्पृश्निगर्भाज्योतिर्जरायूरजसोविमाने । इममपाᳬसङ्गमेसूर्यस्य

शिशुन्नविप्रामतिभीरिहन्ति । उपयामगृहीतोसिमर्कायत्वा ॥ १६ ॥

चन्द्रात्मना स्तूयते । वेनो वेनतेः कान्तिकर्मण इति यास्कः[3] । विनि कान्तावित्यस्य रूपम् अयं वेनः कान्तश्चन्द्रो रजसो विमाने उदकं रज उच्यते उदकस्य निर्माणकाले ग्रीष्मान्ते प्राप्ते पृश्निगर्भा अपः चोदयत् चोदति प्रेरयति वर्षतीत्यर्थः। पृश्निरादित्यो द्युलोको वा गर्भोऽवस्थानं यासां ताः द्युलोकस्था रविस्था वा अपो वर्षति । किम्भूतो वेनः । ज्योतिर्जरायुः ज्योतिर्विद्युल्लक्षणं जरायुवद्वेष्टनं यस्य स ज्योतिर्जरायुः ॥ इदानीमधियज्ञं लतात्मना सोमः स्तूयते विप्रा मेधाविनो ब्राह्मणा इमं सोमं शिशुं न शिशुमिव बालमिव मतिभिः मतिपूर्वाभिर्वाग्भिः रिहन्ति स्तुवन्ति । बालं यथा कश्चिल्लालयति तद्वद्यं सोमं स्तोत्रशस्त्ररूपाभिर्वाग्भिः स्तुवन्ति रिहतिरर्चनकर्मसु

१——९,११,१० । २——९,६,१२ । ३——निरु० १०,३८ ।

प्रत्यङ्मुखौ जुहुतः सा प्रथमेत्यध्वर्युः प्रथमं तमनु प्रतिप्रस्थातेति[1] । अध्वर्युप्रतिप्रस्थातारौ यूपोभयपार्श्वयोः स्थित्वा पश्चिमाभिमुखौ सन्तौ जुहुयाताम् । अध्वर्युरादौ शुक्रं प्रतिप्रस्थाता ततो मन्थिनं जुहोति ॥ इन्द्रदेवत्या त्रिष्टुप् सा प्रथमा मुख्या संस्कृतिः सोमसंस्कारो यस्येन्द्रस्य क्रियते इन्द्रार्थं क्रियतइत्यर्थः । सोमक्रये सा देवि देवमच्छेहीन्द्राय सोममित्युक्तत्वात्[2] । किम्भूता संस्कृतिः । विश्ववारा विश्वैः सर्वैर्ऋत्विग्भिरनृत्विग्भिश्च व्रियते यत्र सोमः सा विश्ववारा यद्वा विश्वं वृणोति क्रियमाणः सोमो यत्रेति विश्ववारा जगदुत्पत्ति-बीजत्वात् सोमस्य वरुणो मित्रः अग्निश्च स प्रसिद्धो यस्य प्रथमो मुख्यो भक्ष इति शेषः । वरुणमित्राग्नयोऽन्येषामप्युपलक्षकाः देवगणानां यः प्रभुरित्यर्थः ॥ १४ ॥

स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोत स्वाहा ।

तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहायाडग्नीत् ॥ १५ ॥

स प्रसिद्धः चिकित्वान् चेतनावानुत्कृष्टधीः बृहस्पतिः यस्येन्द्रस्य प्रथमो मुख्यो मन्त्री इति शेषः ॥ यद्वा संस्कृतिः समीचीना कृतिर्विश्वैर्देवैर्वरणीया सा प्रथमा देवानां मध्ये मुख्या यस्येन्द्रस्य वरुणमित्राग्नयोऽपि स प्रथम इन्द्र एव चिकित्वान् बृहस्पतिरपि स इन्द्र एव हे ऋत्विजः तस्मै तादृशायेन्द्राय सुतमभिषुतं सोमं स्वाहेति स्वाहाकारेणाजुहोत आभिमुख्येन जुहुत स्वाहाकारेण होमं कुरुत ॥ का० तृम्पन्त्विति जपतीति[3] ॥ होत्रादैवतम् । ताः होत्राः छन्दोभिमानिन्यो देवताः तृम्पन्तु तृप्ता भवन्तु । तृम्प प्रीतौ ।

१——८,११,१ । २——४अ० २०क० । ३——८,११,९ ।

मानस्य शौर्योपेतान्भृत्यादीन् प्रजनयन् उत्पादयन् रायः पोषेण धनस्य पुष्ट्या यजमानमभिलक्ष्य परीहि परितो गच्छ ॥ का० अपरेण यूपमरत्नी सन्धत्तः सञ्जग्मानइति यथालिङ्गमिति[१] । अध्वर्युप्रतिप्रस्थातारौ यूपपार्श्वमभागे तत्तद्ग्रहवाचकपदलिङ्गमनतिक्रम्यारत्नीः सन्धानं कुर्यातांम् शुक्रलिङ्गेनाध्वर्युः ॥ शुक्रोग्रहः शुक्रशोचिषा शुद्धदीप्त्या कृत्वा यूयं बिभर्त्तीति शेषः । किम्भूतः शुक्रः । दिवा द्युलोकेन पृथिव्या भूलोकेन च सञ्जग्मानः सङ्गच्छमानः ॥ का० अप्रोक्षितौ निरस्यति निरस्तः शण्डइत्यध्वर्युरिति[२] । अध्वर्युरप्रोक्षितं यूपशकलं निरस्येत् ॥ आभिचारिकम् शण्डनामकः शुक्रपुत्रोऽसुरपुरोहितो निरस्तः यज्ञाद्बहिर्निक्षिप्तः ॥ का० आहवनीये प्रोक्षितौ

अच्छिन्नस्यतेदेवसोमसुवीर्य्यस्यरायस्पोषस्यदद्दितारःस्याम ।

साप्रथमासँस्कृतिर्विश्ववारासप्रथमोवरुणोमित्रोअग्निः ॥ १४ ॥

प्रास्यतः शुक्रस्याधिष्ठानमित्यध्वर्युरिति[३] । अध्वर्युराहवनीये प्रोक्षितं यूपशकलं क्षिपेत् ॥ शकलदेवतम् हे यूपशकल त्वं शुक्रग्रहस्याधिष्ठानमधिकरणमसि ॥ १३ ॥

का० अच्छिन्नस्येति जपित्वेति[४] । यजमानो जपति ॥ सौम्यम् हे देव दीप्यमान सोम अच्छिन्नस्य अनवखण्डितस्य सन्ततस्य सुवीर्य्यस्य कल्याणप्रभावस्य ते तव दद्दितारः वयं स्याम भवेम रायः पोषस्य धनपोषस्य च दातारः स्याम भूयोभूयो यज्ञकरणमाशास्यते । यद्वा ते तव प्रसादात् रायः पोषस्य दद्दितारः स्याम । अच्छिन्नस्येति विशेषणद्वयं धनपोषस्यैव ॥ का० उभयतो यूपं

१—६,१०,१० । २—६,१०,१२ । ३—६,१०,१३ । ४—६,१०,१४ ।

दायापिधानं प्रोक्षिताभ्या मपमार्जनमप्रोक्षिताभ्यामपमृष्टः शण्ड इत्यध्वर्युरिति[१] । अध्वर्युप्रतिप्रस्थातारौ शुक्रामन्थिग्रहाभ्यां यथाक्रममनुतिष्ठेताम् । तत्प्रकारः । प्रोक्षिताभ्यां द्वाभ्यां यूपशकलाभ्यां सहाप्रोक्षितौ द्वौ यूपशकलावादाय प्रोक्षिताभ्यां तयोर्ग्रहयोः क्रमेणाच्छादनं कृत्वाप्रोक्षिताभ्यां ग्रहावपमृज्यात् तत्र प्रोक्षितेन शकलेन ग्रहं पिधायाप्रोक्षितेनाध्वर्युः शुक्रगृहमपमार्ष्टि इति सूत्रार्थः ॥ आभिचारिकं यजुः । शण्डनामकोऽसुरपुरोहितः शुक्रपुत्रोऽपमृष्टः अपमार्जनीकृतः ॥ का० देवास्त्वेति निष्क्रामतो यथा लिङ्गमिति[२] । अध्वर्युप्रतिप्रस्थातारौ यथाक्रमेण शुक्रमन्थीत्येतत्पदद्वयवाचकमन्त्रलिङ्गमनतिक्रम्य हविर्धानमध्यान्निर्गच्छेताम् तत्र शुक्र-

सुवीरो॑वी॒रान्प्र॑ज॒नय॒न्परी॑ह्य॒भिरा॒यस्पो॑षे॒णयज॑मानम् ।

स॒ञ्ज॒ग्मा॒नोदि॒वापृ॑थि॒व्याशु॒क्रःशु॒क्रशो॑चि॒षानिर॑स्तः॒शण्डः॑शु॒क्रस्या॑धि॒ष्ठान॑मसि ॥ १३ ॥

लिङ्गेनाध्वर्युर्निष्क्रामति ॥ शुक्रदैवतम् । शुक्रनामकगृहस्थं सोमं पिबन्ति शुक्रपा देवाः हे शुक्रग्रह त्वां प्रणयन्तु यजतिस्थानं प्रापयन्तु ॥ का० अपरेणोत्तरवेदिमरत्नी सन्धायोत्तरवेदिश्रोण्योर्निधत्तो विसृजन्तौ दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थातानाधृष्टासीति[३] । अध्वर्युप्रतिप्रस्थातारौ वेदिपश्चाद्भागे अरत्नी संयोज्य ग्रहयोर्विसर्गमकुर्वन्तौ उत्तरवेदिश्रोण्योर्ग्रहौ सादयतः दक्षिणश्रोणावध्वर्युः शुक्रम् उत्तरवेदिश्रोण्यां प्रतिप्रस्थाता मन्थिनं सादयति ॥ वेदिश्रोणिदैवतम् हे उत्तरवेदिश्रोणे त्वमनाधृष्टानुपहिंसितासि ॥ १२ ॥

का० सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युरिति[४] ॥ शुक्रदैवतम् । हे शुक्रग्रह त्वं सुवीरः शोभनवीर्योपेतः सन्वीरान्प्रज-

१——६,१०,१-५ । २——६,१०,६ । ३——६,१०,७ । ४——६,१०,८ ।

ऋषीणां साध्यादीनामिव। विश्वथा विश्वेषां सर्वेषामृषिपुत्राणामिव। इमथा इदानीन्तनानां यजमानानामिवास्य फलं दोहसं तं त्वां स्तुम इति शेषः। किम्भूतं तम् ज्येष्ठतातिम् तननं तातिः विस्तारः ज्येष्ठा उत्कृष्टा तातिर्विस्तारो यस्य तम् यद्वा वृकज्येष्ठाभ्यामित्यादिना प्रशंसायां तातिल्प्रत्ययः प्रशस्तो ज्येष्ठो ज्येष्ठेषु शस्तो वा जेष्ठतातिः। तथा बर्हिषदम् यज्ञेषु बर्हिषि सीदतीति बर्हिषदस्तम्। स्वर्विदम् स्वः द्युलोकं वेत्ति जानातीति स्वर्वित्तम् तत्र हि तस्य निवासः प्रतीचीनमात्मनोऽभिमुखम् धुनिं। धुञ् कम्पने। कम्पितारं शत्रूणाम् आशुं शीघ्रं जयन्तं जेतव्यानि वस्तूनि॥ यद्वास्या ऋचोर्थान्तरम् हे इन्द्र यस्त्वं प्रतीचीनं प्रति गमनमस्मत्प्रतिकूलम् वृजनं वर्जनीयमालस्याश्रद्धादिकं दोहसे रिक्तीकरोषि विनाशयसि। दुह प्रपूरणे प्रपूरणं रिक्तीकरणमिति

उपयामगृहीतोसिशण्डायत्वैषतेयोनिर्वीरताम्पाह्यपमृष्टःशण्डोदेवास्त्वाशुक्रपाःप्रणयन्त्वनाधृष्टासि ॥ १२ ॥

क्षीरस्वामी। किञ्च यासु क्रियासु धुनिं त्वदनुग्रहाच्छत्रून् कम्पयन्तमाशुं क्षिप्रकारिणं जयन्तं सम्यगनुष्ठानेन यजमानान्तराण्यतिशयानमेनं यजमानमनु सोमपानेन स्तुत्या च यः त्वं वर्धसे तासु क्रियासु तं त्वां स्तुमः इति शेषः। कथमिव प्रत्नथा था प्रत्यय उपमार्थः प्रत्नाः पुरातना भृग्वादयो यथा त्वामस्तुवन् पूर्वथा पूर्वे पित्रादयइव विश्वथा अतीताः सर्वे यजमाना इव इमथा इदानीन्तना वर्त्तमाना यजमाना इव वयं त्वां स्तुम इत्यर्थः। कीदृशं त्वाम् ज्येष्ठतातिं स्वार्थे तातिः ज्येष्ठमित्यर्थः। बर्हिषदं यागे सन्निहितत्वेन तिष्ठन्तम् स्वर्विदं यजमानाय दातव्यम् स्वर्गं वेत्तीति स्वर्वित्॥ एवमिन्द्रमुक्त्वा सोममाह। हे शुक्रग्रह त्वमुपयामेन गृहीतोसि शण्डाय शुक्रपुत्राय नाम्नेऽसुराय वा त्वां गृह्णामीति शेषः॥ सादयत्येष ते। हे ग्रह एष खरप्रदेशस्तव स्थानम् त्वं यजमानस्य वीरतां वीरत्वं शूरत्वं पाहि पालय॥ का० शुक्रामन्थिभ्यां चरतः शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता प्रोक्षिताप्रोक्षितौ यूपशकलावा-

हे अश्विनौ तया वाचास्मदीयं यज्ञं मिमिक्षतं मिह सेचने सनन्तः सेक्तुमिच्छतम् निष्पादयतमित्यर्थः। हे ग्रह त्वमुपयामेन गृहीतोऽसि अश्विभ्यामर्थं त्वां गृह्णामीति शेषः॥ का० सादयत्येष ते[1]। हे ग्रह एष ते योनिः स्थानम् माध्वीभ्यां मधुब्राह्मणाध्येतृभ्यामश्विभ्यामर्थं त्वां सादयामीति शेषः। मधुब्राह्मणं यावधीयाते तौ माध्वौ ताभ्यां तद्धित ईप्रत्ययः। दध्यङ् ह वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाचेति[2] श्रुतेः॥ ११॥

याव॒ङ्कशा॒मधु॑म॒त्यश्वि॑ना॒सू॒नृता॑वती॒तया॑य॒ज्ञम्मि॑मिक्षतम्।

उ॒प॒या॒मगृ॑हीतो॒स्यश्वि॒भ्यान्त्वै॒ष॑तेयोनि॒र्माध्वी॒भ्यान्त्वा॥ ११॥

तम्प्र॒त्नथा॑पू॒र्व्वथा॑वि॒श्वथे॒मथा॑ज्ज्येष्ठ॒ताति॑म्ब॒र्हि॒षद॑ꣳस्व॒र्विद॑म्। प्र॒ती॒ची॒नं॑वृ॒जन॑न्दोहसे॒धुनि॑मा॒शुञ्जय॑न्त॒मनु॒यासु॒वर्द्ध॑से।

का० शुक्रं वैल्वेन वा तं प्रत्नथेति[3]। विल्वपात्रेण वैकङ्कतेन वा शुक्रं ग्रहं गृह्णाति। जगती वैश्वदेवी काश्यपावत्सारदृष्टा द्वादशार्णचतुःपादा जगती उपयामेत्यन्तं यजुः। हे इन्द्र त्वं यासु यज्ञक्रियासु अनु वर्धसे पुनः पुनः सोमपानेन वृद्धिं प्राप्नोषि तासु। वृजनमिति बलनाम[4] बलं बलवद्यज्ञफलं दोहसे चारयसि ददासीत्यर्थः यजमानायेति शेषः। कथं दोहसे तत्र दृष्टान्तमाह। प्रत्नथा। प्रत्नपूर्वेत्यादिना थाल्प्रत्ययः उपमार्थीयः प्रत्नशब्दः पुराणवचनः चिरन्तनानां भृग्वादीनामिव फलं दोहसे। पूर्वथा पूर्वेषामिव

[1] — ९,६,८। [2] — ४,१,५,१८। [3] — ४,१,१,९। [4] — निघ० २,९,२१।

यया धेन्वा गृहे सत्या वयं राया धनेन ससवांसः वन षण सम्भक्तौ इत्यस्य क्वसौ रूपम् धनेन सम्भक्ताः सम्पन्नाः सन्तो मदेम हृष्टाः स्याम। कथमिव। हव्येनेव यथा हविषा सम्भक्ता देवा हृष्यन्ति यथा च यवसेन घासेन गवाक्षिकादिना गावो हृष्यन्ति हे मित्रावरुणौ युवं युवां तां धेनुं नोऽस्मभ्यं विश्वाहा सर्वदा धत्तं दत्तं किम्भूतां धेनुम् अनपस्फुरन्तीं। स्फुरतिर्गत्यर्थः अपस्फुरति पुरुषान्तरं गच्छतीत्यपस्फुरन्ती न अपस्फुरन्ती ताम् अनन्यगामिनीम् दत्तमित्यर्थः। एष तइति सादनम्। हे गृह एष ते योनिः स्थानम् ऋतायुभ्यां मित्रावरुणाभ्यामर्थं त्वां सादयामीति शेषः। ब्रह्म वा ऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं वरुण एवायुरिति[1] श्रुतेः ऋत-

रायावय॑ᳯससवा॒ᳯसोमदेमहव्येनदेवायवसेनगावः।

तान्धेनुम्मित्रावरुणायुवन्नोविश्वाहाधत्तमनपस्फुरन्तीमेषतेयोनिर्ऋतायुभ्यान्त्वा॥ १०॥

शब्देन मित्रः आयुशब्देन वरुणः इति श्रुतिव्याख्या। पदकारस्तु ऋतयुभ्यामिति पदं कृतवान् तेन ऋतं सत्यं यज्ञं वा कामयेते तौ ऋतयू ताभ्यामृतयुभ्याम् संहितायां दीर्घः यज्ञमिच्छद्भ्यां मित्रावरुणाभ्यामित्यर्थः पदकारस्य॥ १०॥

का० आश्विनं गृह्णात्यन्वारब्धे वा या वामिति[2]। यजमानेन्वारब्धे वाश्विनं ग्रहं गृह्णाति॥ आश्विनो गायत्री मेधातिथिदृष्टा यजुरन्ता। हे अश्विना अश्विदेवौ वां युवयोर्या कशा कशेति वाङ्नामसु पठितम्[3] काशयति प्रकाशयति वाङ्मयमिति कशा वाक् किम्भूता मधुमती मधु ब्रह्म तद्वती मधुब्राह्मणोपनिषत्प्रशंसायुता तथा सूनृतावती प्रियं सत्यं वचः सूनृतम् तद्वती सत्यप्रियवचनोपेता।

१——४,१,४,१०। २——६,७,८। ३——निघ० १,११,४३।

यण् तस्य भिसि परे तकारस्य छान्दसः सकारः तस्य रुत्वादि पयोभिरिति सिद्ध्यति प्रयोभिः प्रयद्भिः शीघ्रैरश्वैरागच्छताम्। हि यस्मादिन्दवो सोमा वां युवामुशन्ति कामयन्ते तस्मादागच्छतमित्यर्थः॥ सोममाह हे सोमरस त्वमुपयामेन पात्रेण गृहीतोसि वायवे वायुदेवतार्थं इन्द्रवायुभ्यां इन्द्रवायुदेवतार्थञ्च त्वां गृह्णामीति शेषः॥ का० दशापवित्रेण परिमृज्यैष ते योनिरिति गृहसादनमिति[1]। दशापवित्रेण गृहीतं ग्रहं परिमृज्य पात्राद्बहिर्निर्गतं सोमं मार्जयित्वा एष ते योनिरिति मन्त्रेण ग्रहस्य सादनङ्करोति। वीप्सा सर्वग्रहार्था इति सूत्रार्थः। हे पात्र एष खरस्यैकदेशः ते योनिः तव स्थानम् अतोत्र सजोषोभ्यां समानप्रीतिभ्यामिन्द्रवायुभ्यां मर्थं त्वां सादयामीति शेषः॥ ८॥

**अयंवामित्रावरुणासुतःसोमऋतावृधा। ममेदिहश्रुतꣳहवम्। उपयामगृहीतोसिमित्रावरुणाभ्यान्त्वा॥९॥**

का० मैत्रावरुणमयं वामिति[2]। मैत्रावरुणं ग्रहं गृह्णीयात्॥ मित्रावरुणदेवत्या गायत्री गृत्समददृष्टा यजुरन्ता। हे मित्रावरुणौ विभक्तेराकारः हे ऋतावृधा ऋतं यज्ञं सत्यं वा वर्धयत इति ऋतावृधौ ऋतस्य वर्धयितारौ वां युवयोरर्थाय सोमः सुतः अभिषुतः तस्मादिहास्मिन्यज्ञे ममेत् एवार्थे ममैव यजमानानां मध्ये ममैव हवमाह्वानं श्रुतं युवां शृणुतम् हे सोमरस त्वमुपयामेन मैत्रावरुणग्रहपात्रेण गृहीतोसि। मित्रावरुणाभ्यामर्थं त्वा त्वां गृह्णामीति शेषः॥ ९॥

का० पयसा श्रीणात्येनं कुशावन्तर्धाय राया वयमिति[3]। मैत्रावरुणपात्रे कुशाद्वयं व्यवधाय तत्र स्थं सोमरसं क्षीरेण मिश्रीकुर्यात्॥ मित्रावरुणदेवत्या त्रिष्टुप् वदस्युदृष्टा। उत्तरार्द्धे तामिति तदः श्रवणादिह यदोऽध्याहारः। मन्त्रद्वकामदुघां प्रार्थयते।

१—९,५,२१। २—९,६,१। ३—९,६,८।

वषट्कृतमप्राप्तमन्यदेवैः ईदृशं सोमं पिबतीति शुचिपाः पवित्रसोमपान। त्वं नोऽस्माकमुप समीपे आ भूष आक्रमस्वागच्छेत्यर्थः। भूष अलङ्कार इह गत्यर्थः। केनाह आक्रमे इति चेत् सहस्रं ते नियुतो विश्ववार। विश्वं सर्वं वृणोति व्याप्नोति विश्वैर्वा व्रियते प्रार्थ्यते इति विश्ववारस्तत्सम्बोधनम् हे विश्ववार सर्वव्यापक ते तव सहस्रं नियुतः सन्ति। नियुतो वायोरित्युक्तेः[1] नियुच्छब्देन वायुवाहनभूता मृगा उच्यन्ते तवासङ्ख्याता वाहनभूता मृगास्तैरागच्छेत्यर्थः। किञ्च मद्यं मदनीयं तृप्तिजनकमन्धः सोमलक्षणमन्नं ते तव उप समीपे एव अयामि गमयामि सोमं ते समर्पयामीत्यर्थः। हे देव दीप्यमान वायो यस्य सोमस्य पूर्वपेयं प्रथमवषट्कार-

इन्द्रवायूइमेसुताऽउपप्रयोभिरागतम्। इन्दवोवामुशन्तिहि।

उपयामगृहीतोसिवायवइन्द्रवायुभ्यान्त्वैषतेयोनिःसजोषोभ्यान्त्वा ॥ ८ ॥

लक्षणं पूर्वपानं त्वं दधिषे धारयसि दधातेर्लिटि रूपम्। एवं वायुं प्रार्थ्य सोममाह हे सोमरस वायवे वायुदेवतार्थं त्वां गृह्णामीति शेषः ॥ ७ ॥

का० अपगृह्य पुनरिन्द्रवायू इतीति[2]। एकवारमर्धमादाय पृथक्कृत्य पुनरैन्द्रवायवं गृह्णाति। ऐन्द्रवायवी गायत्री मधुच्छन्दोदृष्टा उपयामेति यजुःसहितो मन्त्रः। हे इन्द्रवायू युष्मदर्थमिमे सोमाः सुता अभिषुताः। प्रय इत्यन्ननाम[3] प्रयोभिः एतैः सोमरसरूपैरन्नैर्निमित्तैरुप समीपे युवामागतमागच्छतम् यद्वा प्रयःशब्द इण् गताविति धातोः शतृप्रत्ययान्तस्य रूपम् प्रैतीति प्रयन् इणो

१——निरु० १,१५,१०। २——९,६,६। ३——निघ० २,७,६।

यद्वा हे अन्तर्याम प्राणरूपापन्नस्य तवान्तः शरीरमध्ये द्यावापृथिव्यौ दधामि स्थापयामि किञ्च उरु विस्तीर्णमन्तरिक्षमन्तर्मध्ये च दधामि द्यावापृथिव्योर्मध्ये स्थापयामि। हे मघवन्धनवन्निन्द्र अवरैः पृथिवीस्थानैः देवेभिर्देवैः परैः द्युस्थानैश्च देवैः सजूः समानजोषणः समानप्रीतियुक्तः सन्नन्तर्यामे गृहे मादयस्व हर्षयस्वात्मानम् यद्वा तृप्यस्व मद तृप्तौ चुरादिरात्मनेपदी। देवेभिरित्यत्र बहुलं छन्दसीति ऐसोऽभावे बहुवचने झल्येदिति एकारः॥ ५॥

स्वाङ्कृतोसिविश्वेभ्यइन्द्रियेभ्योदिव्येभ्यःपार्थिवेभ्योमनस्त्वाष्टुस्वाहा।

त्वासुभवसूर्य्यायदेवेभ्यस्त्वामरीचिपेभ्यउदानायत्वा॥ ६॥

आवायोभूषशुचिपाउपनःसहस्रन्तेनियुतोविश्ववार। उपोतेअन्धोमद्यमयामियस्यदेवदधिषेपूर्व्वपेयंवायवेत्वा॥ ७॥

का० स्वाङ्कृत इति निःशेषस्यैव होमम्लिष्टतः। व्याख्यातः॥ का० प्रथमे च न्युब्जेन पाणिना प्रत्यगिति। प्रथमे परिधावधोमुखहस्तेन प्रत्यक्संस्थं मार्ष्टि देवेभ्यस्त्वेति मन्त्रेण। व्याख्यातः॥ का० उदानाय त्वेति पात्रासादनम्[1]। हे ग्रह उदानसन्तोषार्थं त्वां सादयामि॥ ६॥

का० ऐन्द्रवायवं गृह्णात्या वायविति। वायुदेवत्या त्रिष्टुप् वसिष्ठदृष्टा वायवे त्वेति यजुरन्ता। हे वायो हे शुचिपाः शुचिं पवित्रं प्रथमं

[1]——९, ६, ८।

संस्पृष्टमिति[१]। येनाश्मना सोमोऽभिषुतः स उपांशुसवनस्तं हस्तेन प्रमृज्योदगग्निमुखग्रहसंलग्नं सादयेत्। हे उपांशुसवन व्यानदेवताप्रीत्यर्थं त्वामासादयामि ॥ ३ ॥

का० उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति[२]। सूर्योदयानन्तरमन्तर्यामग्रहं गृह्णीयात्। उपयामेयतोऽत्रुपयामो गृहस्तेन गृह्यत इत्युपयामगृहीतः पचाद्यच् चित्त्वादन्तोदात्तः यमोऽपरिवेषण इति परिवेषणादन्यत्र मित्वाभावाद् द्विः तत्पुरुषे तुल्यार्थेति पूर्वपदस्वरं बाधित्वा थाथघञिति अजन्तस्यान्तोदात्तत्वम् पुनस्तृतीयासमासे तत्पुरुषे तुल्यार्थेत्यादिना तृतीयान्तस्य प्रकृतिस्वरत्वेन

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोमम्। उरुष्य राय एषो यजस्व ॥ ४ ॥

अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम्। सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन्मादयस्व॥ ५ ॥

तदेव स्थितम्। हे सोमरस त्वं तादृशोऽसि। हे मघवन् धनवन्निन्द्र त्वं तादृगं रसमन्तर्गृहपात्रमध्ये यच्छ नियच्छ नियच्छ यद्वा अन्तर्धोऽन्तर्धानं व्यवधानं यथा तथा नियमय ततः सोमं पाहि पालय तथा रायो धनानि उरुष्य रक्ष। उरुष्यती रक्षणकर्मा। यद्वा। पशवो राय इति[३] श्रुतेः पशूंश्च। आ इषो यजस्व इषोऽन्नानि आयजस्व समन्ताद्देहि यद्वान्नप्रभवत्वादिषो लक्षणया प्रजाः। प्रजा वा इष इति[४] श्रुतेः। ता यजस्व याजयस्व यायजकाः कुरु श्रुत्यैव व्याख्यातत्वात् ॥ ४ ॥

मघवद्देवत्या त्रिष्टुप् अन्तर्यामग्रहण एव विनियोगः। हे मघवन् ते तवानुग्रहात् द्यावापृथिवी अन्तर्दधामि व्यवधायिके करोमि।

१——९,४,४२। २——९,६,१। ३——४,१,२,१५। ४——४,१,२,१५।

प्रजापतिरष्टु व्याप्नोतु । अशूङ् व्याप्तौ पदविकरणव्यत्ययः । प्रजापतिर्वै मनः प्रजापतिष्टाश्नुतामिति[1] श्रुतेः । शोभनो भव उत्पत्तिर्यस्य तत्सम्बोधनं हे सुभव उत्तमजन्मन् ग्रह सूर्याय सूर्यार्थं त्वा त्वां स्वाहाकारेण जुहोमि । यद्वास्य होममन्त्रस्यायमर्थः हे प्राणरूप ग्रह त्वं स्वाङ्कृतोऽसि मया स्वीकृतोऽसि किमर्थम् दिव्येभ्यः देवजन्मनि स्थितेभ्यः पार्थिवेभ्यः मनुष्यजन्मनि स्थितेभ्यः सर्वेभ्य इन्द्रियेभ्यः इन्द्रियाणां हितायेत्यर्थः । मनश्च तेषामिन्द्रियाणामधीशं त्वामष्टु व्याप्नोतु हे सुभव प्राणरूपोपांशुग्रह तादृग्रूपं त्वां वहिःप्राणरूपाय सूर्याय स्वाहाकारेण जुहोमि आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णात इत्याथर्वणिकश्रुतेः सूर्यस्य वहिःप्राणत्वम् । स्वाङ्कृतशब्देन प्राणरूपगृहस्य स्वाधीनत्वं दिव्यपार्थिवशब्दाभ्यां च जन्मद्वयं विवक्षितमिति तित्तिरिणोक्तम् स्वाङ्कृतोऽसीत्याह प्राणमेव समकृत विश्वेभ्य इन्द्रियेभ्यः दिव्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणान्दधातीति ॥ का० प्रथमे परिधा उत्तानं पाणिं प्रागुपमार्ष्टि देवेभ्यस्त्वेति[2] । पश्चिमस्थे परिधौ सोमलिप्तमूर्ध्वाभिमुखं हस्तं कृत्वा प्रागभिमुखं यथा तथा मार्जनं कुर्यात् । दैवं यजुः हे लेप मरीचिपेभ्यः मरीचिपालकेभ्यो देवेभ्योऽर्थाय त्वा त्वां परिधौ मार्ज्मि इति शेषः ॥ का० वासउरोबाहुषु श्लिष्टमंशुमभिचरन्जुहुयाद्देवांशविति[3] । वस्त्रादिषु श्लिष्टो यः सोमांशुस्तमभिचारार्थं जुहुयात् । आभिचारिकं सोमांशुदेवतं यजुः । हे देव दीप्यमान हे अंशो सोमांशो यस्मै बधाय त्वामीडे प्रार्थयामि ईडिरध्येषणकर्मा तत् बधकर्म सत्यमस्त्विति शेषः । उपरि प्रवते प्रवतिर्गत्यर्थः गच्छतीत्युपरिप्रुत् तेनोपरि आगतेन भङ्गेनामर्देनासाविति देवदत्तादिनामनिर्देशः असौ द्वेष्यो हतो निहतः सन् फट् विशीर्णो भवतु । ञि फला विशरणे अस्य क्विबन्तस्यैतद्रूपम् फलतीति फट् डलयोरैक्यम् स्वाहाकारस्थाने फडित्यभिचारे प्रयुज्यते ॥ का० प्राणाय त्वेति पात्रासादनम्[4] । यस्मिन् प्रदेशे पूर्वमुपांशुपात्रं स्थापितं तत्रैव स्थापयेत् । हे उपांशुपात्र प्राणदेवतासन्तोषार्थं त्वाम् आसादयामीति शेषः ॥ का० उपांशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति

१——४,१,१,२२ । २——६,४,३८ । ३——६,४,३९ । ४——६,४,४१ ।

तृतीयं गृह्णाति । लिङ्गोक्तदेवतम् । हे सोम त्वं नोऽस्माकमिषोऽन्नानि मधुमतीः मधुररसोपेताः कृधि कुरु ॥ का० यत्तद्ग्याचान् सोमे निदधातीति[1] । स्वीकृतानंशून्सोमे स्थापयेत् । सौम्यम् । हे सोम ते तव अदाभ्यमहिंस्यम् दभ्नोतिर्हिंसार्थः जागृवि जागरणशीलं यन्नामास्ति सोमेति हे सोम तस्मै तन्नामवते तुभ्यं सोमाय स्वाहा दत्तमस्तु ॥ का० स्वाहेत्युक्त्वोर्वन्तरिक्षमिति निःक्रमणमिति[2] । स्वाहेत्यक्षरद्वयमुक्त्वा निःक्रमेत् । उरु विस्तीर्णमन्तरिक्षमन्वेमि अनुगच्छामि ॥ २ ॥

मधुमतीर्नऽइषस्कृधि यत्ते सोमादाभ्यन्नाम जागृवि तस्मै ते सोम सोमाय स्वाहा स्वाहोर्वन्तरिक्षमन्वेमि ॥ २ ॥

स्वाङ्कृतोऽसि विश्वेभ्यऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो

देवाꣳशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फट् प्राणाय त्वा व्यानाय त्वा ॥ ३ ॥

का० स्वाङ्कृत इति हुत्वा पात्रमुन्मार्ष्टीति[3] । उपांशुग्रहं हुत्वा पात्रमार्जनं कुर्यात् । ग्रहदैवतम् प्राणो वा अस्यैष ग्रहः स स्वयमेव कृतः स्वयं जात इति[4] श्रुतेरुपांशुग्रहः प्राणः । हे प्राणरूपोपांशुग्रह त्वं स्वाङ्कृतो भवसि स्वयं स्वेनैव कृतो भवसि छान्दसो यलोपः स्वयमुत्पन्नोऽसि । केभ्यः । विश्वेभ्यः सर्वेभ्यः इन्द्रियेभ्यः सकाशात् दिव्येभ्यः दिवि भवा दिव्या देवास्तेभ्यश्च सकाशात् पार्थिवेभ्यः पृथिवीभवेभ्यो द्विपदचतुष्पदेभ्यः सकाशात् स्वयमुत्पन्न इत्यनुवर्तते । यस्त्वमेवमकृतकः स्वतन्त्रस्तं त्वां मनः

१——९,४,२८ । २——९,४,३४ । ३——९,५,३७ । ४——४,१,१,२२ ।

किञ्च हे मघवन् हे धनवन् इन्द्र मर्डिता मृड सुखकरणे मृडतीति मर्डिता यजमानस्य सुखयिता त्वदन्यो नास्ति न विद्यते अतो हे इन्द्र ते तव वचः त्वमेव सुखयितेत्येवं रूपं त्वदीयं वचनमहं ब्रवीमि वदामि ॥ ३७ ॥

॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। अभ्यादानाद्याचनान्तः षष्ठोऽध्यायः समीरितः ॥ ६ ॥

षष्ठेऽध्याये यूपसंस्कारादिसोमाभिषवपर्यन्ता मन्त्रा उक्ताः। सप्तमे ग्रहग्रहणमन्त्रा उच्यन्ते ॥ का० उपांशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरिति। मन्त्रत्रयस्य प्रतीकोपादानात्तत्रैकैकेन मन्त्रेणोपांशुग्रहमेकैकवारं गृह्णीयात् उपयामगृहीतोसीति मन्त्रत्रयस्यादौ योज्यम् ॥ प्राणदेवत्या विराट् नववैराजत्रयोदशैर्नष्टरूपेति लक्षणान्नष्टरूपा विराट् प्रथमोष्टार्णस्तेनैकोना ॥

वाचस्पतयेपवस्ववृष्णोऽअꣳशुभ्याङ्गभस्तिपूतः। देवोदेवेभ्यःपवस्वयेषाम्भागोसि ॥ १ ॥

पूर्वोत्तरार्धयोरुपांशुग्रहस्य प्रथमद्वितीयग्रहणे क्रमेण विनियोगः। हे सोम त्वं वाचस्पतये प्राणाय पवस्व गच्छ। पव गतौ। प्राणो वै वाचस्पतिरिति[१] श्रुतेः। यद्वा पतये पालकदेवार्थं वाचः वाचा विभक्तिव्यत्ययः मन्त्रेण वाचः सम्बन्धिना मन्त्रेण वा पवस्व शुद्धो भव। किम्भूतस्त्वम् वृष्णः वर्षितुस्तव सम्बन्धिभ्यां अंशुभ्यां तौ हि तत्र क्षिप्येते। तथा गभस्तिपूतः पाणी वै गभस्ती इति श्रुतेरध्वर्योर्गभस्तिभ्यां पाणिभ्यां च पूतः। समासगतः पूतशब्दो विच्छिद्यांशुभ्यामित्यनेनापि योज्यः। द्वितीयं गृह्णाति। हे सोम देवः सन्देवेभ्योऽर्थाय पवस्व प्रवृत्तिं कुरु न ह्यदेवो देवांस्तर्पयितुमलम् केभ्यो देवेभ्यः येषां देवानां त्वं भागोऽसि तान्प्रति गच्छेत्यर्थः ॥ १ ॥

१—४,१,१,९।

शुक्त्विधाय प्रागपागिति ऋग्द्वयं निग्राभसञ्ज्ञं यजमानं वाचयेदिति सूत्रार्थः ॥ सोमदेवत्योष्णिक् ॥ सोमो दिग्भिर्मिथुनमैच्छत्तच देवाः सम्पादितवन्तस्तदेतदृचाभ्युक्तम् । हे सोम प्राक् प्रागञ्चनाः अपाक् अपागञ्चनाः दक्षिणाः पश्चिमाश्च उदक् उदगञ्चना उत्तराः अधराक् अधराञ्चनाः एवं प्रागादयः सर्वा दिशः सर्वतः स्वस्वप्रदेशात् त्वा त्वामाधावन्तु आभिमुख्येन गच्छन्तु । परस्परं किं भाष-माणास्त्वामभिधावन्त्विति तदाह हे अम्ब हे मातः निष्पर स्वैर्भागैः सोमं पूरय । पृ पालनपूरणयोः विकरणव्यत्यये लोटि रूपम् । किं प्रयोजनमिति चेत् अरीः अर्यः प्रजाः संविदां संविदताम् । प्रजा वा अरीरिति[१] श्रुतिः । अस्माकं सोमसमागमं नानादिग्वासिनो

**त्वमङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥३७॥**

**॥ ६ ॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां षष्ठोऽध्यायः ॥ ६ ॥**

जना जानन्त्वित्यर्थः । इति भाषमाणास्त्वामागच्छन्तु । विद ज्ञाने अस्माल्लटि तङि प्रथमबहुवचने आत्मनेपदेष्वनत इति झस्यादा-देशे लोपस्त आत्मनेपदेष्विति तकारलोपे सवर्णदीर्घे विदामिति रूपम् । समोगमृच्छ्यादिना तङ् ॥ ३६ ॥

इन्द्रदेवत्या पथ्या बृहती गोतमदृष्टा । अङ्गेति क्षिप्रनाम । हे शविष्ठ अतिशयेन बलवन् इन्द्र देवः दीप्यमानस्त्वं मर्त्यं मनुष्यं यजमानं प्रशंसिषः प्रशंससि स्तौषि समीचीनोऽयं यजमानो होता श्रद्धावानित्यादिस्तुतिं करोषीत्यर्थः । शंसु हिंसास्तुत्योः लिङर्थे लेट् मध्यमैकवचने सिबादेशः सिब्बहुलंलेटीति सिप्प्रत्ययः तस्यार्धधातुकस्येड्वलादेरिति इडागमः लेटोऽडाटाविति सिपोऽडागमः इतश्च लोपः परस्मैपदेष्विति सिप इकारलोपः तस्य रुत्वविसर्गौ षत्वम् प्रशंसिषः इति रूपम् तिङ्ङतिङः इति सर्वानुदात्तत्वम् ।

१——३,९,४,२१ ।

मिति क्षिप्रनाम[1] क्षिप्रकार्य्यकारिण्यः शिवा वा। वृत्रतुरः। तुर्वतिर्वधकर्म्मा वृत्रं दैत्यं तुर्वन्ति हिंसन्ति ता वृत्रतुरः क्विपि राल्लोप इति वलोपः। राधोगूर्ताः राधो धनं गुरन्ते उद्यच्छन्ति ददति ता राधोगूर्ताः। गुरी उद्यमे अस्मात् नसत्तनिषत्तेत्यादिना कर्त्तरि क्तो नत्वाभावश्च निपात्यते। अमृतस्य सोमस्य पत्नीः पालयित्र्यः! हे देवीः देव्यः तास्तथाविधा यूयमिमं यज्ञं देवत्रा देवान् प्रति नयत प्रापयत उपहूता अनुज्ञाताः सत्यो यूयं सोमस्य सोमं पिबत कर्म्मणि षष्ठी ॥ ३४ ॥

का० मा भेरिति प्रहरतीति[2]। उपांशुसवनेनाश्मना सोमे प्रहरेदिति सूत्रार्थः ॥ अर्धं सौम्यमर्धं द्यावापृथिव्यम्। हे सोम त्वं

**माभेर्मासंविक्थाऊर्जन्धत्स्वधिषणेवीडूीसतीवीडयेथामूर्जन्दधाथाम्। पाप्माहतोनसोमः॥ ३५॥**

**प्रागपागुदगधराक्सर्वतस्त्वादिशआधावन्तु। अम्बनिष्परसमरीर्विदाम्॥ ३६॥**

मा भेः मा भैषीः ञिभी भये लुङि लङि रूपम् मा संविक्थाः कम्पनं मा कृथाः। ओविजी भयचलनयोः लुङि रूपम्। यतो देवतर्पणायाहं त्वामभिषुणोमि अत ऊर्जं धत्स्व रसं धेहि। एवं सोमं सम्बोध्य द्यावापृथिव्यौ सम्बोधयति हे धिषणे हे द्यावापृथिव्यौ युवां वीड्वी सती वीडयेथाम्। वीडुशब्दो दृढवचनः। दृढे सत्यावात्मानं दृढं कुरुतम् अस्मादुद्यताद् ग्राव्णः। किं च ऊर्जं दधाथां रसं धत्तम् अस्मिन् सोमे। अनेन तु वज्रसंस्तुतेन ग्राव्णा यजमानस्य पाप्मा हतो न तु सोमः ॥ ॥ ३५ ॥

का० प्रतिवर्गं निग्राभं वाचयति होतृचमसेऽल्पानंशूनवधाय प्रागपागिति[3]। प्रतिप्रहारवर्गं होतृचमसमध्ये स्तोकान्सोमां-

१——निरु० ५,३। २——९,४,१५। ३——९,४,२०।

बृहती आद्यतृतीयावष्टार्णौ द्वितीयतुर्यौ पादौ सा विपरीता बृहती व्यूहेन द्वादशत्वम्। अस्य मन्त्रस्य श्रुतौ[1] निदानमुक्तम्- यदा सोमो देवानां हविरभूत्तदा तिस्रः स्वतनूरेषु लोकेषु न्यदधादिति तासां तनूनामनेन मन्त्रेण प्राप्तिः क्रियते। हे सोम दिवि द्युलोके ते तव यज्ज्योतिस्तेजः यच्च पृथिव्यां ज्योतिः उरौ विस्तीर्णे अन्तरिक्षे यत् ज्योतिः शरीरलक्षणम् तेन तन्वाख्येन ज्योतिषा अस्मै यजमानाय विभक्तिव्यत्ययः अस्य यजमानस्य यज्ञे उरु विस्तीर्णं स्वशरीरं अधि कुरु राये धनाय ऋत्विजां दक्षिणाप्राप्त्यर्थं च उरु शरीरं अधि। किञ्च दातृ अधि वोचः अधिकं ब्रूहि यजमानाय कृत्स्नशरीरोऽहमागत इति वदेत्यर्थः वचेर्लुङि वचेरुमिति उमागमे अड

यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे। तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोचः ॥ ३३ ॥

श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीः। ता देवीर्देवत्रेमं यज्ञं नयतोपहूताः सोमस्य पिबत ॥ ३४ ॥

भावे च वोच इति मध्यमैकवचने रूपम्। यद्वास्य मन्त्रस्य व्याख्यान्तरम् हे सोम त्रिषु लोकेषु यत्त्वदीयं ज्योतिरस्ति तेन ज्योतिषास्मै यजमानाय राये चतुर्थ्यर्थे तृतीया राया धनेन समृद्धमुरु विस्तीर्णं स्थानं अधि किञ्च दातृ फलदायेन्द्राय इति वोचः ब्रूहि यत् अधि अधिकोयं यजमानो भवत्विति ॥ ३३ ॥

का० श्वात्रा स्थेत्यासिञ्चति निग्राभ्या इति[2]। सोमस्योपरि होतृचमसेनैव निग्राभ्या आसिञ्चतीति सूत्रार्थः ॥ पथ्या बृहती तृतीयो द्वादशार्णोऽन्ये त्रयोऽष्टार्णाः पादा यस्याः सा पथ्या बृहती इयं द्वाधिका ॥ हे आपो यूयमेवंविधाः स्थ भवथ किंभूताः श्वात्राः श्वात्र

१——३,९,३,१२। २——६,४,१२।

एवं व्यासेनोक्ता पुनः समासेनाह । आत्मानं शरीरं प्रजां पुत्रादिसम्पत्तिं पशून् गवादीन् गणान् मनुष्यसङ्घांश्च तर्पयत मे मदीया गणा मनुष्यसङ्घा मा विलपन् मया द्रव्यदानेन पूरिता अपि सन्तो विगतलक्षणा मा भवन्तु अनुरक्तगणोऽहं भवेयमिति यजमान आशास्त इत्यर्थः ॥ ३१ ॥

का० उपांशुसवने सोमं मिमीत इन्द्राय त्वा वसुमते रुद्रवत इति पञ्चकृत्वः प्रतिमन्त्रमिति । उपांशुसवनं पूर्वोक्तमश्मानमधिषवणचर्मणि निधाय तदुपरि पञ्च मन्त्रैः पञ्चवारमभिषोतव्यसोममुष्टिं प्रक्षिपतीति सूत्रार्थः ॥ पञ्च यजूंषि सौम्यानि । तत्राद्यम् हे सोम इन्द्रायेन्द्रार्थं त्वा त्वां मिमे इति शेषः । किंभूतायेन्द्राय वसुमते वसवोऽस्य सन्तीति वसुमान् तस्मै वसुसंज्ञकप्रातःसवनदेवता-

**इन्द्रा॑य त्वा॒ वसु॑मते रु॒द्रव॑त॒ इन्द्रा॑य त्वादि॒त्यव॑त॒ इन्द्रा॑य त्वाभिमाति॒घ्ने । श्ये॒नाय॑ त्वा सोम॒भृते॒ऽग्नये॑ त्वा राय॒स्पोष॒दे ॥ ३२ ॥**

युक्तायेत्यर्थः । रुद्रवते रुद्राः सन्त्यस्येति रुद्रवान् तस्मै रुद्रनामकमाध्यन्दिनसवनदेवतायुक्ताय । अथ द्वितीयम् आदित्यवते तृतीयसवनदेवतायुक्तायेन्द्राय हे सोम त्वा त्वां मिमे । अथ तृतीयम अभिमातीन् शत्रून् हन्तीत्यभिमातिहा तस्मै अभिमातिघ्ने शत्रुहन्त्रे इन्द्राय सोम त्वां मिमे सपत्नो वा अभिमातिरिति[1] श्रुतेः । अथ चतुर्थम् सोमं हरतीति सोमहृत् तस्मै हृग्रहोभंश्छन्दसीति हस्य भः सोमाहरणकर्त्रे श्येनाय श्येनपक्षिरूपायै गायत्र्यै हे सोम त्वां मिमे । गायत्री श्येनो भूत्वा दिवः सोममाहरदिति[2] श्रुतेः । अथ पञ्चमम् रायस्पोषदे रा धनं तस्य पोषो वृद्धिः तं ददातीति रायस्पोषदास्तस्मै धनपुष्टिदात्रेऽग्नये हे सोम त्वां मिमे ॥ ३२ ॥

का० यत्त इति मितालम्भनमिति[3] । मितस्योपांशुसवने पञ्चवारं प्रक्षिप्तस्य सोमस्य स्पर्शं कुर्यादिति सूत्रार्थः ॥ सोमदेवत्या विपरीता

१——६,४,८।  २——३,६,३,६।  ३——३,६,३,१०।  ४——६,४,६।

महान्तं कृधि कुरु अशृणुपृक्तवृभ्यश्छन्दसीति हेर्धिः। उत्तमेनोत्कृष्टेन पविना वज्रसदृशेन त्वयाहं सोममीदृशं करोमि। किम्भूतम्। इन्द्रायेन्द्रार्थं सुषूतमं सुष्ठु सूयत इति सुसुतः अतिशयेन सुसुतः सुसुततमः तं सुष्ठु अभिषुततमम् निष्ठातकारलोपो दीर्घश्च छान्दसः तथा ऊर्जस्वन्तं रसवन्तम् मधुमन्तं मधुस्वादेन रसेनोपेतम् पयस्वन्तं पयःस्वादुना रसेनोपेतम् एवं विधं सोमं त्वयाहं करोमीत्यर्थः। का० निग्राभ्यासु वाचयत्युरस्येना निगृह्य निग्राभ्या स्थेति[1]। अभिषोतव्यस्य सोमस्य सेवनीया आपो निग्राभ्या उच्यन्ते तासु गृह्य-

उत्तमेनपविनोर्ज्जस्वन्तम्मधुमन्तम्पयस्वन्तन्निग्राभ्यास्थदेवश्रुतस्तर्पयतमा ॥ ३० ॥

मनोमेतर्पयतवाचम्मेतर्पयतप्राणम्मेतर्पयतचक्षुर्मेतर्पयतश्रोत्रम्मेतर्पयतात्मानम्मेतर्पयतप्रजाम्मे तर्पयत

पशून्मेतर्पयतगणान्मे तर्पयतगणामेमावितृषन् ॥ ३१ ॥

माणासु वाचयेत् यजमानश्च स्वोरसि निग्राभ्या निगृह्यालभ्य च मन्त्रं वक्तीति सूत्रार्थः ॥ हे आपो यूयं निग्राभ्या नि . ह्या अस्माभि र्नितरां गृहीतव्याः स्थ भवथ यस्मादिन्द्रेणोरसि यूयं गृहीयास्ततो निग्राभ्याः। हृगृहोर्भः। देवश्रुतः देवैः श्रूयन्ते ताः देवेषु प्रख्याताः ततो बहुमानान्विता यूयं मा मां तर्पयत प्रीतिं कुरुत ॥ ३० ॥

एवं समासेनोक्त्वा व्यासेनाह मे मम मनः वाचं प्राणं चक्षुः श्रोत्रं तर्पयत मदीयानि मनःप्रभृतीनीन्द्रियाणि तर्पयतेत्यर्थः।

[1]—६,४,७।

का० प्रचरणीसंस्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्न इति[1]। अग्निष्टोमसंस्थे क्रतौ प्रचरणीपात्रलिप्तमाज्यशेषं जुहुयात् शेषाज्यस्य होमपर्य्याप्ताभावे चतुर्गृहीतमादाय जुहोतीति सूत्रार्थः ॥ आग्नेयी गायत्री मधुच्छन्दोदृष्टा हे अग्ने पृत्सु सङ्ग्रामेषु यं मर्त्यं मनुष्यं त्वमवाः अवसि रक्षसि। अवतेः इतश्च लोपः परस्मैपदेष्विति सिप इकारलोपे लेटोडाटावित्याडागमे वा इति रूपम्। किञ्च वाजेषु वाज इत्यन्ननाम[2] हविर्लक्षणेष्वन्नेषु अन्ननिमित्तं यं पुरुषं त्वं जुनाः गच्छसि हवींषि ग्रहीतुं यस्य सकाशं गच्छसीत्यर्थः। जु गतौ श्ना प्रत्ययः इतश्च लोप इतीकारलोपे रूपं जुना इति। स मर्त्यस्त्वदनुग्रहेण शश्वतीरिषः नित्यान्यन्नानि धनरूपाणि यन्ता

यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जुनाः। स यन्ता शश्वतीरिषः स्वाहा ॥ २९ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आददे रावासि गभीरमिममध्वरं कृधीन्द्राय सुषूतमम्।

नियंस्यति प्राप्स्यतीत्यर्थः लुट् स्वाहा सुहुतमस्तु ॥ उक्थसंस्थे यमग्ने इति मन्त्रेणाद्यं परिधिं स्पृशेत्। षोडशिसंस्थे रराटीं स्पृशेत्। अतिरात्रे छदिः स्पृशेत्। अन्यसंस्थासु हविर्धानं प्रविशेत् ॥ २९ ॥

का० देवस्य त्वेत्यद्रिमादाय वाचं यच्छति प्राग्घिङ्कारात्स उपांशुसवन इति[3]। सोमाभिषवहेतुमश्मानं गृहीत्वा हिङ्कारात्प्राक् मौनी स्यात् सोऽश्मोपांशुसवनसञ्ज्ञः उपांशुग्रहाय सोमः सूयते येनेति सूत्रार्थः ॥ देवस्य त्वेति व्याख्यातम्। हे अभिषवसाधन पाषाण त्वं रावासि। रा दाने रातीति रावा वनिप् आहुतीनां दक्षिणानाञ्च दाता भवसि। तत इममध्वरं मदीयं यागं गभीरं गभीरं

१——९,३,१६। २——निघ० २,७,२। ३——९,४,५-६।

दीर्घश्छान्दसः पीतः सन्निन्द्रियवीर्य्यवृद्धिकारी । तथा मदिन्तमः मदयतीति मदी अतिशयेन मदी मदिन्तमः पीयमानोऽत्यन्तहर्षकारी तर्पयितृतमः । नाद्घस्येति तमपि नुमागमः । किम्भू तेभ्यो देवेभ्यः शुक्रपेभ्यः शुक्रइत्युपलक्षणम् शुक्रादीन् सोमग्रहान् पिबन्तीति शुक्रपाः तेभ्यः यद्वा शुक्रं दीप्तं सोमं पिबन्तीति । स्वाहा इदमाज्यं युष्मभ्यं हुतमस्तु । ग्रहीष्यमाणानामपां मूल्यत्वेनेयमाहुतिरित्युक्तं तित्तिरिणा । देवीरापोअपान्नपादित्याहाहुत्या वै निष्क्रीय गृह्णातीति ॥ २७ ॥

का० कार्षिरसीति मैत्रावरुणचमसेनाज्यमपोहतीति[1] । अप्सु हुतमाज्यं मैत्रावरुणचमसेन दूरीकरोतीति सूत्रार्थः ॥ कार्षिरसीत्यादिमन्त्रत्रयं मिलित्वानुष्टुप्छन्दः आद्यस्याज्यं देवता । हे आज्यपदार्थ त्वं कार्षिराकृष्टोऽसि देवतया भक्षितोसीत्यर्थः । यद्वा कर्षतीत्येवं शीलः कार्षिः अन्तर्गतशमलापनेतासि ॥ तदाह तित्तिरिः । कार्षिरसीत्याह शमलमेवासामपप्लावयतीति ॥ का० समुद्रस्य

**कार्षिरसिसमुद्रस्यत्वाक्षित्याउन्नयामि । समापोअद्भिरग्मतसमोषधीभिरोषधीः ॥ २८ ॥**

त्वेति तेन गृह्णातीति[2] । मैत्रावरुणचमसेन तड़ागादिस्था अपो गृह्णातीति सूत्रार्थः ॥ हे यजुषो आपे । आपो वै समुद्र इति[3] श्रुतेर्वसतीवरीलक्षणस्य समुद्रस्याक्षित्यै अक्षीणत्वाय हे जल त्वा त्वामुन्नयामि गृह्णामि । वसतीवरीणां वृद्धेर जलमितन्नूच्यते ॥ का० प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीषु संस्पर्शयति समाप इति[4] । जलाशयात्प्रत्यागत्य चात्वालोपरि मैत्रावरुणचमसस्थां अपो वसतीवरीभिः संयोजयतीति सूत्रार्थः ॥ आपो मैत्रावरुणचमसस्था अद्भिः वसतीवरीभिः समग्मत सङ्गच्छताम् गमेर्लुङि तङि प्रथमबहुवचने शपि लुप्ते गमहनेत्युपधालोपे समग्मतेति रूपम् । तथा ओषधीः ओषधयः मुद्गमसूरादिका ओषधीभिर्व्रीहियवादिभिः सङ्गच्छन्ताम् अपां कारणभूतत्वादोषधीनामपि योगोस्तु ॥ २८ ॥

१—९,३,८ । २—९,३,९ । ३—३,९,३,२१ । ४—९,३,१२ ।

यस्यमाने चतुर्गृहीतमाज्यं प्रचरणीसञ्ज्ञया स्रुचाध्वर्युरतिप्रणीते जुहोतीति सूत्रार्थः ॥ त्रिष्टुब्लिङ्गोक्तदेवता । अग्निः समिधा समित्पूर्विकया आहुत्या मे हवं मदीयमाह्वानं शृणोतु आपो ममाह्वानं शृण्वन्तु । चकारः समुच्चयार्थः । धिषणा देवीः वाचो देव्यश्च मे हवं शृण्वन्तु । धिषणा धीसादिन्यो वा धीसानिन्यो वेति यास्कः[1] । धियं सन्वन्ति ददति धिषणाः । षनु दाने तनादिः । तृतीयः पादः प्रत्यक्षकृतो मध्यमपुरुषयोगात् । हे ग्रावाणोऽभिषवार्थमिहोपस्थिता यूयं मम हवं श्रोत शृणुत । तप्तनप्तनथनाश्चेति लोण्मध्यमपुरुषबहुवचनस्य तबादेशे गुणे विकरणव्यत्यये च श्रोतेति रूपम् संहितायां तु दीर्घः । विदुषो न । न इवार्थे विभक्तिव्यत्ययः । विद्वांसो

धिषणास्चदेवीः । श्रोताग्रावाणोविदुषोनयज्ञꣳशृणोतुदेवःसविताहवम्मेस्वाहा ॥ २६ ॥

देवीरापोअपान्नपाद्योवऊर्मिर्हविष्यइन्द्रियावान्मदिन्तमः । तन्देवेभ्योदेवत्रादत्तशुक्रपेभ्योयेषाम्भागस्थस्वाहा ॥ २७ ॥

यज्ञमिव यथा विद्वांसः प्रत्यक्षतो जानन्तो यज्ञं शृण्वन्ति तथा यूयं हवं शृणुत तथा सविता देवः मे मम हवं शृणोतु स्वाहा सुहुतमस्तु स्वा वागाहेति वा ॥ २६ ॥

का० अपो गत्वा देवीराप इत्यप्सु जुहोतीति[2] । यच्चतुर्गृहीतमाज्यं सहनीतं तज्जलं प्रति गत्वा जुहोतीति सूत्रार्थः ॥ अब्देवत्या पङ्क्तिः पञ्चपदा चत्वारिंशद्वर्णापङ्क्तिः अत्र द्वितीयः सप्ताक्षरः तुर्यपञ्चमौ नवार्णौ तेनैकाधिका स्वाहेति यजुः । हे आपो देवीः देव्यः वो युष्माकमपां नपात् अपत्यरूपो योऽयमूर्मिरप्सङ्घातः कल्लोलोऽस्ति देवत्रा देवान् प्रति यायिनं तमूर्मिं देवेभ्यो दत्त प्रयच्छत येषां देवानां यूयं भागः स्थ भागरूपा भवथ । किम्भूत ऊर्मिः हविष्यः तथा इन्द्रियावान् इन्द्रियं वीर्यमस्यास्तीति इन्द्रियावान्

१—निरु० ८,३ । २—९,३,१ ।

हविर्धाने गत्वा सोमं विस्रस्य तदर्धं दक्षिणशकटेषान्तरालेन संमुखेष्वभिषवार्थंपाषाणेषु निदध्यात् । अश्मानां स्थूलो भागो मुखमिति सूत्रार्थः ॥ सोमदेवत्यानुष्टुप् । हे सोम हृदे बुद्धै निश्चयात्मिकायै एतन्मम स्यादिति कामरूपायै त्वा त्वामुपावहरामीति शेषः । मनसे सङ्कल्पविकल्पात्मकाय त्वामुपावहरामि । त्वाशब्दानामावृत्त्या क्रियावृत्तिर्बोध्या । दिवे द्युलोकप्राप्तये त्वामुपावहरामि । सूर्याय सूर्यमुखेभ्यो देवेभ्यस्तत्तृप्तये त्वामुपावहरामि । यद्वायमर्थः हे सोम हृदे हृदयवद्भ्यो मनुष्येभ्यः । मनसे मनस्विभ्यः पितृभ्यः दिवे द्युलोकवासिभ्यो देवेभ्यो विशेषतः सूर्याय च त्वामुपावहरामीति शेषः । एतदर्थं तित्तिरिः । स वाध्वर्युः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह

**हृदेत्वामनसेत्वादिवेत्वासूर्य्यायत्वा । ऊर्ध्वमिममध्वरन्दिविदेवेषुहोत्रायच्छ ॥ २५ ॥**

**सोमराजन्विश्वास्त्वम्प्रजाउपावरोहविश्वास्त्वाम्प्रजाउपावरोहन्तु । शृणोत्वग्निःसमिधाहवम्मेशृण्वन्त्वापो**

देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनं सर्वाभ्य उपावहरतीति । किञ्च एवमुपावहृतोऽभिषुतश्च त्वमिममध्वरं मदीयं यज्ञमूर्ध्वमुत्कृष्टं कृत्वा दिवि द्युलोकवर्त्तमानेषु देवेषु होत्राः वषट्कारवादिनः सप्त होतृकान् यच्छ नियच्छ निबध्नीहि ॥ २५ ॥

किञ्च । हे सोम राजन् विश्वाः सर्वाः प्रजा उपावरोह आधिपत्यं प्रजानां कुर्वित्यर्थः ॥ का० विश्वास्त्वामिति विसृज्योपतिष्ठतइति[1] । ग्रावसु स्थापितं सोमं विमुच्योपस्थापनं कुर्य्यादिति सूत्रार्थः ॥ हे सोम विश्वाः सर्वाः प्रजाः त्वामुपावरोहन्तु प्रत्युत्थानाभिवादनादिभिः प्राप्नुवन्तु ॥ का० अभूदुषा रुशत्पशुरित्युच्यमाने चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति[2] ।। अभूदिति मन्त्रे होता

१——९,१,९ ।    २——९,२,२४— ३,१ ।

यामि। किम्भूतस्याग्नेः अपन्नगृहस्य न पन्नं पतितं गृहं यस्य तस्य अविनश्वरगृहस्येत्यर्थः। का० दक्षिणेन निहृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्राग्न्योरिति[1]। शालाद्वार्यसमीपस्था वसतीवरीरादाय शालादक्षिणद्वारेण नीत्वोत्तरवेदेर्दक्षिणश्रोणौ निदध्यादिति सूत्रार्थः॥ हे वसतीवर्यो यूयमिन्द्राग्न्योः इन्द्राग्निदेवतयोर्भागधेयोः स्थ भागधेय्यो भागरूपा भवथ। भागा एव भागधेय्यः। नामरूपभागेभ्यः स्वार्थे धेयप्रत्ययः। केवलमामकेत्यादिना ङीप्। का० उत्तरस्यां पूर्ववन्मित्रावरुणयोरिति[2] वेति। पूर्ववदिन्द्राग्न्योरिति मन्त्रेणैव मित्रावरुणयोरिति मन्त्रेण वोत्तरवेदे रुत्तरश्रोणौ वसतीवरीर्निदध्यादिति सूत्रार्थः॥ हे वसतीवरीसञ्ज्ञका आपो यूयं मित्रावरुणयोर्देवतयोर्भागरूपा भवथ॥ का० विश्वेषां देवानामित्याग्नीध्र इति[3]। उत्तरवेदिश्रोणेः सकाशाद्वसतीवरी-

**अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीन्द्राग्न्योर्भागधेयी स्थ मित्रावरुणयोर्भागधेयी स्थ विश्वेषां देवानां भागधेयी स्थ ।**

**अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥ २४ ॥**

रादायाग्नीध्रीयस्य पश्चान्निदध्यादिति सूत्रार्थः। हे वसतीवर्यो यूयं सर्वेषां देवानां भागरूपा भवथ॥ इदानीमभिनयेन दर्शयन्नाह। अमूर्याः। ऋक् अब्देवत्या गायत्री। याः प्रसिद्धा अमूरोहस्थो वसतीवर्याख्या आपः उपसूर्ये सूर्यसमीपे स्थिताः विभक्तिव्यत्ययः। याभिर्वा। वा शब्दः समुच्चये। याभिश्चाद्भिः सह सूर्यो याति ता आपो नोऽस्माकमध्वरं यज्ञं हिन्वन्तु तर्पयन्तु हिन्वतिः तर्पणार्थः॥ २४॥

का० आज्यासादनात्कृत्वेषान्तरेणार्धसोममद्रिषु संमुखेषु निदधाति छदेत्वेति[4]। आज्यासादनपर्यन्तं कर्म कृत्वा सोममादाय

१—८,९,१८। २—८,९,२१-२२। ३—८,९,२३। ४—९,१,५।

अथ सोमाभिषवोपयुक्तानां वसतीवरीसञ्ज्ञानामपां ग्रहणमभिधीयते ॥ का० अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणं स्यन्दमानानामनस्तमितेऽस्तमितश्चेन्निनाह्यात्पुरेजानश्चेदनीजानोऽन्यस्यापि समीपावसितस्य पुरेजानस्योभयाभावउल्कुषीं हिरण्यं वोपर्युपरि धारयन् हविष्मतीरिति[1] । अग्नीषोमीयस्य पशोर्वपामार्जनपर्यन्ते कर्म्मणि कृते अनस्तङ्गते रवौ बहन्तीनामपामेकदेशाद्वसतीवरीसञ्ज्ञानां सोमार्थानामपां ग्रहणं कार्य्यं हविष्मतीरिति मन्त्रेण । यदि रविरस्तङ्गतो यजमानश्च पुरा ईजानः सोमयाजी तदा गृहे एव निनाह्यान्मणिकाद्वसतीवरीग्रहणम् निनहनीयो निखननीयो निनाह्यः । यदि च यजमानः पुरा न सोमयाजी तर्हि समीपस्थितस्य यष्टुः मणिकाद्ग्रहणम् । स्वस्य अन्यस्य च यज्ञकर्तृत्वाभावे उल्कां कनकं वा वहन्तीनामपां समीपे धारयन्वहन्तीभ्यो वसतीवरी गृह्णीयादिति सूत्रार्थः ॥ अनुष्टुब्लिङ्गोक्तदेवता । हविष्मान्हविषा संयुक्तो यजमानः हविष्मतीः हविषा संयुक्ता इमा आपः अपः

**हविष्मतीरिमा आपो हविष्मा२ऽआविवासति । हविष्मान्देवोऽअध्वरो हविष्मा२ऽअस्तु सूर्यः ॥ २३ ॥**

आविवासति वसतीवरीः परिचरति । विवासतिः परिचर्य्यायाम् यत्र वै यज्ञस्य शिरोच्छिद्यत तस्य रसो द्रुत्वापः प्रविवेशेति[2] श्रुतेरपां हविष्ट्वम् ततो देवो द्योतमानोऽध्वरो यागोऽपि स्वशरीरनिष्पत्तये हविष्मानस्तु आभिरद्भिरित्यर्थः । किञ्च सूर्य्योऽपि देवो यजमानस्य फलदानाय तत्सामर्थ्यञ्च हविष्मान् हविःसम्पन्नोऽस्तु भवतु । एतस्मै वै गृह्णाति य एष तपतीति[3] श्रुतेर्वसतीवरीभिः सूर्यस्य हविष्ट्वम् ॥ २३ ॥

का० अग्नेर्व इति निदधाति शालाद्वार्यमपरेणेति[4] । नूतनगार्हपत्यात्पश्चिमभागे ता वसतीवरीरासादयतीति सूत्रार्थः । चत्वारि यजूंष्यग्निदेवत्यानि । हे वसतीवर्यः वो युष्मान् अग्नेः शालाद्वार्यस्य सदसि सीदन्त्यस्मिन्निति सदो निकटस्थानं तत्र सादयामि स्थाप-

१——८,९,७—१० । २——३,९,२,१ । ३——३,९,२,१२ । ४——८,९,११ ।

जले प्रविश्य आलब्धस्य पशोर्हृदयस्थं मांसं यस्मिन् श्रितं स हृदयशूलस्तं शुष्कार्द्रभूप्रदेशयोः सन्धौ निगूहेत भूमावधोमुखं क्षिपेत् शुगसि माप इति मन्त्राभ्यामिति सूत्रार्थः ॥ हृदयशूलदैवतं यजुः। हे हृदयशूल त्वमपो जलानि ओषधीः च मा हिंसीः। का० धाम्नो धाम्नः सुमित्राया न इत्युपस्पृशन्त्यप इति[१]। सर्वे ऋत्विग्यजमाना मन्त्राभ्यां जलं स्पृशन्तीति सूत्रार्थः ॥ वरुणदैवतं यजुः। हे राजन् वरुण धाम्नो धाम्नः यस्माद्यस्मात्त्वदीयपाशसमन्वितात् स्थानात् वयं बिभीमस्तस्मात्तस्मात्स्थानात् नोऽस्मान् मुञ्च मोचय। यदाहुः। वरुणदेवत्या गायत्री अवसानहीना। अघ्न्या इति गोनाम[२] प्रकरणादिहानूबन्ध्याविषयम्। बहुवचनमनूबन्ध्याबहुत्वेऽर्थवत् एकानूबन्ध्यापत्ते तु पूजार्थम्। अघ्न्या इति यदाहुः वेदस्मृतिलोकवाक्यानि अघ्न्या अहन्तव्या अवध्याः पूजनीया इति वदन्ति।

**मापोमौषधीर्हिꣳसीर्द्धाम्नोधाम्नोराजँस्ततोवरुणनोमुञ्च। यदाहुरघ्न्याइतिवरुणेतिशपामहेततोवरुणनोमुञ्च।**

**सुमित्रियानआपओषधयःसन्तुदुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ २२ ॥**

इतिकरणेन वाक्यस्यार्थमभिनयेन दर्शयति। हे वरुण वयं तु इति शपामहे इति करणं प्रदर्शनार्थम्। शपति हिंसार्थः। इति एवमनेन विधिना अघ्न्या हिंस्मः अत एव त्वां याचामहे हे वरुण ततस्तस्मादघ्न्यावधजातादेनसो नोऽस्मान् मुञ्च मोचय ॥ सुमित्रियाः। आपः ओषधयश्च नोऽस्माकं सुमित्रियाः साधुमित्रत्वेनावस्थिताः सन्तु। यः शत्रुरस्मान्द्वेष्टि वयञ्च यं शत्रुं द्विष्मः द्वेषं कुर्मः तस्मै उभयात्मकाय शत्रवे आप ओषधयश्च दुर्मित्रियाः अमित्रत्वेनावस्थिताः सन्तु ॥ धाम्नो धाम्न इति मन्त्रः शूलोपगूहनमन्त्रस्य शेषो वा सुमित्रिया इति मन्त्रोऽपामभिमन्त्रणे वा ॥ २२ ॥

॥ एवमग्नीषोमीयः पशुः समाप्तः ॥

१—— ६,१०,५। २——निघ० २,११,१।

का० प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेदमनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रमिति[1]। अनुयाजेषु हूयमानेषु प्रतिप्रस्थाता पूर्वं स्थापितं गुदतृतीयभागमेकादशधा तिर्यक् प्रच्छिद्य प्रतिमन्त्रं जुहोतीति सूत्रार्थः॥ हे हविर्गुदावयवरूप त्वं समुद्रादिनामकान् देवान् गच्छ प्राप्नुहि तर्पणायेति शेषः स्वाहा सुहुतमस्तु॥ का० प्रतिवषट्कारं हुत्वा मनो मइति मुखोपस्पर्शनमिति[2]। प्रतिवषट्कारमेकैकं गुदकाण्डं हुत्वा सर्वान्ते मुखं स्पृशेदिति सूत्रार्थः। हे समुद्रादिदेवतासमूह हार्दि हृदयसम्बन्धि मे मनो यच्छ

समुद्रङ्गच्छ स्वाहान्तरिक्षङ्गच्छ स्वाहा देवᳪं सवितारङ्गच्छ स्वाहा मित्रावरुणौगच्छ स्वाहाहोरात्रेगच्छ स्वाहा छन्दाᳪंसिगच्छ स्वाहा द्यावापृथिवीगच्छ स्वाहा यज्ञङ्गच्छ स्वाहा सोमङ्गच्छ स्वाहा दिव्यन्नभोगच्छ स्वाहाग्निं वैश्वानरङ्गच्छ स्वाहा मनोमेहार्दियच्छ दिवन्तेधूमोगच्छतु स्वर्ज्योतिः पृथिवीम्भस्मनापृण स्वाहा ॥ २१ ॥

निबध्नीहि निबद्धं मनो हि स्वाहायतनात्र च्यवते॥ का० अनुयाजान्ते स्वरुं जुहोति दिवं ते धूम इति[3]॥ स्वरुदैवतम् हे स्वरो ते तव धूमः दिवं द्युलोकं गच्छतु वृष्ट्यै। तव ज्योतिः ज्वाला स्वः आदित्यं गच्छतु स्वः शब्देनादित्योऽभिधीयतेऽन्तरिक्षं वा। भस्मना पृथिवीमापृण समन्तात् पूरय। स्वाहा सुहुतमस्तु॥ २१॥

का० अभ्यवेत्य शुष्कार्द्रसन्धौ हृदयशूलमुपगूहति शुगसि तमभिशोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मो मापो मौषधीरिति चेति[4]।

१——६,९,१०। २——६,९,११। ३——६,९,१२। ४——६,१०,३।

धारयन्मुखं त्यजेत्यर्थः। तद्यथा का० दिशो व्याघारयति दिश इति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथमं मुक्तमाभ्यां मध्ये पूर्वार्धे चेति[1] ॥ षट् दिग्देवतानि अत्र स्वाहाकारः सर्वत्र साकाङ्क्षत्वादिति[2] वचनात्स्वाहा सर्वत्र युज्यते दिग्भ्यः स्वाहा प्रदिग्भ्यः स्वाहा आदिग्भ्यः स्वाहा विदिग्भ्यः उद्दिग्भ्यः स्वाहा स्वाहा सर्वाभ्यः दिग्भ्यः सुहुतमस्त्वित्यर्थः ॥ १९ ॥

का० ऐन्द्रः प्राण इति पशुं संमृशतीति[3]। पशुरूपं हविः स्पृशेदिति सूत्रार्थः। इन्द्र आत्मा तत्सम्बन्धी प्राणः प्राणवायुरस्य पशोरङ्गे अङ्गे सर्वेष्वङ्गेषु निदीध्यत् निहितः। दिधीङ् दीप्तिदेवनयोः अस्य धातोर्दधात्यर्थे वर्तमानात्कर्मणि लेट् परस्मैपदं व्यत्ययेन

ऐन्द्रः प्राणो अङ्गेअङ्गे निदीध्यदैन्द्र उदानो अङ्गेअङ्गे निधीतः। देव त्वष्टर्भूरि ते सꣳसमेतु सलक्ष्मा यद्विषुरूपं भवाति।

देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु ॥ २० ॥

लेटोऽडाटावित्यट्। तथा ऐन्द्रः इन्द्रसम्बन्धी उदानवायुः पशोः सर्वेष्वङ्गेषु निधीतः निक्षिप्तः। धीङ् आधारानादरयोः। अङ्ग इत्यादौ चेत्यङ्गशब्दस्य एङ् अति प्रकृत्या ॥ एवमनेन यजुषा पश्वङ्गेषु प्राणान्दत्वा त्वष्टारमाह। त्वाष्ट्री त्रिष्टुप्। हे त्वष्टः त्वष्टृनामक देव यत्पश्वङ्गजातं सलक्ष्मा समानलक्षणं सत् छेदनेन विषुरूपं नानारूपं भवाति भवति तत्सर्वं ते तवानुग्रहेण भूरि बहुलमत्यन्तं संसमेतु सम्यगेकीभवतु। प्रसमुपोदः पादपूरण इति समित्यस्य द्वित्वम्। पुनः पशुमाह हे पशो एवं प्राणैः स्वाङ्गस्थानेन मन्त्रेण दृढीकृतं देवत्रा यन्तं देवान् प्रति गच्छन्तं त्वा त्वां सखायो मित्रभूता इतरे पशवो माता पितरश्च अनुमदन्तु अभ्यनुजानन्तु। बहुवचनं पूजार्थम्। अवसे अवितुं प्रीणयितुम्। तुमर्थे असेप्रत्ययः। यद्वा अवितुं त्वन्मुखेन स्वर्गप्राप्त्या स्वकुलं सर्वमवितुमित्यर्थः ॥ २० ॥

१——४,४,१६-१७। २——का० ४,४,१८। ३——६,९,१।

व्यथिषत् उषान्तरिक्षं तद्धि वृत्रघ्न उषेव उषागमन्तरिक्षं वसा व्यथयतु। कर्म्मणि षष्ठी यद्वा व्यत्ययेन प्रथमार्थे षष्ठी उषा व्यथिषत्। व्यथताम् वसां पीत्वा तृष्णाधिक्येन यथा सीदति वसारूपं हविस्तथाविधं भवत्वित्यर्थः। अन्तरिक्षार्थं हि वसा गृह्यते होममन्त्रे अन्तरिक्षस्य हविरसीति लिङ्गात् इयं वसान्तरिक्षस्य तृप्तिं कृत्वातिरिक्ता भवत्वित्यर्थः अन्तरिक्षे च तृप्ते तत्प्रभवत्वाद्वायुसूर्य्ययोरपि स्वकर्म्मक्षमता भवति तस्मादुच्यते वातस्य ते भ्राज्यादित्यादि। व्यथ भयचलनयोः अस्य लिङर्थे लेडिति लेटि सिब्बहुलं लेटीति सिप्प्रत्यये इतश्च लोपः परस्मैपदेष्विति तिप इकारलोपे लेटोऽडाटाविति अडागमे व्यथिषदिति रूपम्। का० द्विरभिघार्य प्रयुतमिति पार्श्वेन संहृजत्यसिना वेति[1]। वसां द्विरभिघार्य पार्श्वेनासिना वाज्यं वसां च मिश्रयेदिति सूत्रार्थः॥ हेषो दौर्भाग्यं प्रयुतं पृथग्भूतं वसायाः सकाशात् घृतमिश्रणेन॥ १८॥

घृतघृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहा।

दिशःप्रदिशआदिशोविदिशउद्दिशोदिग्भ्यःस्वाहा॥ १९॥

का० वसैकदेशं जुहोति घृतं घृतपावान इति[2]। वसाहोमहवन्या वसाया एकदेशं जुहुयादिति सूत्रार्थः। वैश्वदेवं यजुः। वसाया द्विरभिघारितत्वाद्घृतमस्ति तत्र अत एवमाह। हे घृतपावानः घृतं पिबन्तीति घृतपावानः। पा पाने आतो मनिन्क्वनिबित्यादिना वनिप्। घृतस्य पातारो देवा यूयं घृतं पिबत। हे वसापावानः वसायाः पातारो देवा यूयं वसां पिबत। एवं देवानुक्त्वा वसामाह हे वसे त्वमन्तरिक्षस्य हविरसि स्वाहा सुहुतमस्तु। का० दिशो व्याघारयति वसाशेषेण वाजिनवदिति[3]। यथा वाजिनशेषेण दिग्व्या-

१—६,८,१२। २—६,८,१७। ३—६,८,२१।

बिभेति एवंविधं शेपे शपितवानस्मि अनपराधिनं प्रति यन्मयाभिशापो दत्तः आपः तस्मादेनसः पापात् मा मां मुञ्चतु पृथक्कुर्वन्तु पवमानश्च सोमो वायुर्वा तस्मात् पापात् मां मुञ्चतु ॥ १७ ॥

का० सं ते मन इति हृदयमभिघार्य सर्वमिति[1] । जुह्वस्थेन पृषदाज्येन पूर्वं हृदयमभिघार्य तूष्णीं सर्वं पशुमभिघारयेदिति सूत्रार्थः ॥ हृदयदेवतम् हे हृदय ते तव पशोर्मनः देवानां मनसा सङ्गच्छताम् पृषदाज्येनाभिघारितं सत् । ते तव प्राणोऽपि देवानां प्राणेन संगच्छतां सङ्गतोऽस्तु अभिघारितः ॥ का० रेडसीति वसां गृह्णीतेति[2] । मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसा तां गृह्णीयादिति सूत्रार्थः ॥ वसादेवतम् हे वसे त्वं रेट् असि । रिषतिर्हिंसार्थः कर्मणि विच् रिष्टासि हिंसितेवाभासि अल्पत्वात् ।

**सन्ते मनो मनसा सम्प्राणः प्राणेन गच्छताम् । रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन्वातस्य त्वा ध्राज्यै**

**पूष्णो रंह्या ऊष्मणो व्यथिषत्प्रयुतं द्वेषः ॥ १८ ॥**

यूष्णोऽल्पत्वं श्रुत्योक्तम्[3] रेडसीति लेलयेव हि यूरिति लेलयाशब्दश्चाल्पवाचकः । अग्निः त्वा त्वां श्रीणातु श्री पाके क्र्यादिः श्रपयन्भूयसीं करोति यद्वाग्निराहवनीयस्त्वां श्रीणातु स्वीकरोतु । किञ्च आपः त्वा त्वां समरिणन् री बधे गतौ क्र्यादिः अत्र रिणातिर्बिभर्त्यर्थे समभरन्नपुष्णन् यद्वा आपः त्वां समरिणन् सम्यक् प्राप्नुवन्तु तव शोषो माभूदित्यर्थः आपो हि पच्यमानेभ्यः पश्वङ्गेभ्यो यं रसमुत्पादयन्ति सा वसेत्युच्यते तां त्वां गृह्णामीति शेषः । किमर्थं वातस्य ध्राज्यै गत्यै वातस्यान्तरिक्षे गतिर्भवत्विति तथा पूष्णो रंह्यै आदित्यस्य गत्यै रंहतिर्गत्यर्थः आदित्यस्य द्युलोके गतिर्भवत्विति वायुादित्ययोरप्रतिहतगमनसिध्यर्थं त्वां गृह्णामीत्यर्थः । किञ्च ऊष्मणो

१——६.८.६ । २——६,८,१२ ३——३,८,३,२० ।

जानीहि ज्ञात्वा च पिबेत्यर्थः ते ह्यत्र तिष्ठन्ति । विदि ज्ञाने इत्यस्य लुङि मध्यमैकवचने दस्येति दस्य वत्वे कृते रूपम् अड्भाव आर्षः वेः विद्धि ॥ का० वपां स्रुवेणाभिघारयत्यग्निराज्यस्येति[१] ॥ अग्निराहवनीयः आज्यस्य वेतु आज्यं पिबतु स्वाहा सुहुतमस्तु ॥ का० हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरां स्वाहा कृते इति[२] । वपां हुत्वोत्तरत उपविश्य वपाश्रपण्यावाहवनीय एव क्षिपेत् तत्प्रकारः विशाखां द्विशृङ्गां प्रागग्रां क्षिपेत् इतरामेकशृङ्गां प्रत्यगग्रां क्षिपेदिति सूत्रार्थः ॥ स्वाहाकारेणाहुतिभावमुपगते सत्यौ युवां मारुतं गच्छतं वायुं प्राप्नुतां वायुर्हि प्रतिष्ठा यज्ञस्य । किम्भूतम् ऊर्ध्वनभसमूर्ध्वं नभ आकाशो यस्य स ऊर्ध्वनभाः तम् नभोमध्ये वर्त्तमानमित्यर्थः ॥ १६ ॥

इदमापः प्रवहतावद्यञ्च मलञ्च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् ।

आपो मा तस्मादेनसः पवमानश्च मुञ्चतु ॥ १७ ॥

का० चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति[३] । सर्वे ऋत्विजः चात्वालसमीपे अङ्गिरात्मानमभ्युक्षन्तीति सूत्रार्थः ॥ अब्देवत्या त्र्यवसाना महापंक्तिः पावमानश्चान्त्यः पादः यस्याः षट् पादा अष्टाक्षराः सा महापंक्तिः । हे आपः इदं पशुसंज्ञपन-निमित्तं पापं प्रवहत किञ्च यच्चावद्यमवदनीयमभिशापादि यच्च मलं शरीरलग्नं प्रसिद्धं तच्च प्रवहत अपनयत । किञ्च यदहमनृत-मसत्यमुक्त्वाभिदुद्रोह द्रुग्धवानस्मि । द्रुह जिघांसायाम् यच्चाहमभीरुणं बिभेतीति भीरुर्न भीरुरभीरुस्तमभीरुणमनपराधिनमपराधो हि

१—६,६,१७ । २—६,६,२८ । ३—६,६,२९ ।

का॰ अग्रं सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामिति[1]। यत्तृणं नाभ्यग्रे स्थापितं तस्य छिन्नस्य तृणस्याग्रं वामहस्तेन धृत्वा दक्षिणहस्तेन मूलं धृत्वा तद्द्विगुणीकृत्याग्रे मूले च पशुच्छेदननिष्पन्नेन रक्तेनाञ्ज्यादिति सूत्रार्थः। रक्षोदेवत्यम् हे लोहिताक्त तृण त्वं रक्षसां भागोऽसि ॥ का॰ निरस्तमित्यपास्यतीति[2]। लोहिताक्तं तृणमुत्करे त्यजेदिति सूत्रार्थः ॥ यद्यज्ञविघातकं रक्षोऽस्ति तन्निरस्तं परित्यक्तम् ॥ का॰ इदमहमित्यभितिष्ठति यजमान इति[3]। उत्करे क्षिप्तं रुधिराक्तं तृणं यजमानोऽभितिष्ठतीति सूत्रार्थः ॥ यत्तृणरूपं रक्षोऽध्वर्युणा निरस्तं तदिदं रक्षोऽहं यजमानोऽभितिष्ठामि अभितः पादेनोत्क्रम्य तिष्ठामि। न केवलमभितिष्ठामि किन्तु अहमिदं रक्षोऽवबाधे अवाचीनं यथा भवति तथा मारयामि किञ्च अहमिदं रक्षोऽधमन्तमो नरकं नयामि प्रापयामि ॥

रक्षसाम्भागोसिनिरस्तꣳरक्षइदमहꣳरक्षोभितिष्ठामीदमहꣳरक्षोवबाधइदमहꣳरक्षोधमन्तमोनयामि ।

घृतेनद्यावापृथिवीप्रोर्णुवाथांवायोवेस्तोकानामग्निराज्यस्यवेतुस्वाहास्वाहाकृतेऊर्ध्वनभसम्मारुतङ्गच्छतम् ॥१६॥

का॰ वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णोति घृतेन द्यावापृथिवी इति[4]। पशूदराद्वपां निष्काश्य तया वपया वपाश्रपण्यौ वाच्छादयेदिति सूत्रार्थः ॥ वपाश्रपण्योर्द्यावापृथिव्यावध्यस्ते उच्येते हे द्यावापृथिवी युवां घृतेनोदकेनात्मानं प्रोर्णुवाथामाच्छादयेथां परस्परम्। ऊर्णुञ् आच्छादने। आहुतिपरिणामाभिप्रायमेतत् तथा चोक्तं ते वा एते आहुती हुते उत्क्रामत इत्युपक्रम्याहुतिपरिणाममिदं जगदिति ॥ का॰ तृणाग्रं चाध्वर्युर्वायोवेरिति[5]। वामहस्तधृतं तृणाग्रमाहवनीये क्षिपेदिति सूत्रार्थः ॥ वायुदेवतम् हे वायो त्वं स्तोकानां वपासम्बन्धिनां विप्रुषां वेः कर्मणि षष्ठी स्तोकान्विद्धि

१——६,६,९। २——६,६,१०। ३——६,६,११। ४——६,६,१२। ५——६,६,१५।

का० शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चतो मनस्त इति शिर इति[1] । पत्नीजनशेषेण यजमानः चकाराद्ध्वर्युश्च पशोः शिरआद्यङ्गान्यनुषिञ्चतः तत्र शिरसो मन्त्रमाह मनस्त इति शिर इति सूत्रार्थः ॥ पशुदेवतानि । हे पशो ते तव मनः आप्यायतां शाम्यतु विलिङ्गत्वादस्य विनियोग उक्तः । वाक्त आप्यायतामित्यादिमन्त्राणां लिङ्गादेव विनियोगः सिद्ध इति सूत्रकृता नोक्तः । वाक्त इति मुखं प्राणस्त इति नासिके चक्षुस्त इति चक्षुषी श्रोत्रन्त इति कर्णौ एतानि मुखादीनि तव शाम्यन्तु ॥ का० यत्ते क्रूरमित्यङ्गानीति[2] । सर्वाङ्गान्यवशिष्टान्यनुषिञ्चत इत्यर्थः । हे पशो यत्ते तव क्रूरं बन्धननिरोधादिकं क्रूरमस्माभिः कृतं यच्च आस्थितं छेदादिकं कर्तुमुपस्थितं शमित्रा तत्सर्वं ते तवाप्यायतां शाम्यतु । किञ्च तत्सर्वं निष्ट्यायतां संहतं भवतु ष्ट्यै सङ्घाते अनुत्रं भवत्वित्यर्थः तत्सर्वं तव शुध्यतु

मनस्त आप्यायतांवाक्त आप्यायताम्प्राणस्त आप्यायताञ्चक्षुस्त आप्यायताꣳश्रोत्रन्त आप्यायताम् ।

यत्तेक्रूरंयदास्थितन्तत्त आप्यायतान्निष्ट्यायतान्तत्ते शुद्ध्यतुशमहोभ्यः । ओषधेत्रायस्वस्वधितेमैनꣳहिꣳसीः ॥ १५ ॥

शुद्धं भवतु ॥ का० शमहोभ्य इति पश्चात्पशोर्निषिञ्चत इति[3] । पशोर्जघनदेशे पत्नीजनशेषमुभावपि निषिञ्चतामिति सूत्रार्थः ॥ अहोभ्यः दिवसादिकालविशेषेभ्यः शं सुखमस्माकं पशोर्वा भूयादिति शेषः ॥ का० उत्तानं पशुं कृत्वाग्रेण नाभिं तृणं निदधात्योषध इति[4] । नाभेरग्रेऽङ्गुलचतुष्टये तृणं निदध्यादिति सूत्रार्थः ॥ मन्त्रो व्याख्यातः[5] ॥ का० स्वधित इति प्रज्ञातयाभिनिधाय छित्त्वेति[6] । प्रज्ञातया प्रस्तुतया कृतचिह्नया घृताक्तयासिधारयाभिनिधाय तृणोपर्यसिधारां निधाय तूष्णीं सतृणामुदरत्वचं छिन्द्यादिति सूत्रार्थः । एनं पशुं स्वधिते मा हिंसीः ॥ १५ ॥

१——६,६,४-५ । २——६,६,६ । ३——६,६,७ । ४——६,६,८ । ५——४ अ० १ कं० । ६——६,६,९

एवं यज्ञं स्तुत्वेदानीमापः स्तूयन्ते । अर्धमब्देवत्यमर्धमाशीर्देवतम् हे आपो देव्यः यूयं देवेषु वोढुं पशुमिति शेषः एनं पशुं देवान् प्रति वहत प्रापयत । वह प्रापणे अस्य लङि तङि मध्यमबहुवचने अडभावे रूपम् । किम्भूता यूयम् शुद्धाः स्वभावतः तथा सुपरिविष्टाः साधु परितः सर्वतो निविष्टाः पात्रे जनोपात्रे । किञ्च वयमपि सुपरिविष्टाः देवेष्विति पदमिहाप्यनुवर्तते वयमपि देवेषु मध्येऽवस्थितास्तैरेव देवैः सुपरिविष्टाः तर्पिताः सन्तस्तेषामेव देवानां परिवेष्टारः परिवेषणकर्तारो भूयास्मेत्याशीः ॥ १३ ॥

देवीरापः शुद्धा वोढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा वयम्परिवेष्टारो भूयास्म ॥ १३ ॥

वाचन्ते शुन्धामि प्राणन्ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रन्ते शुन्धामि ।

नाभिन्ते शुन्धामि मेढ्रन्ते शुन्धामि पायुन्ते शुन्धामि चरित्रांस्ते शुन्धामि ॥ १४ ॥

का० पशोः प्राणाञ्छुन्धति पत्नी मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान्संहृत्य वाचं ते शुन्धामीति प्रतिमन्त्रमिति[1] । पत्नी पशुसमीप उपविश्य मृतस्य पशोः प्राणान्मुखादीन्यष्टौ प्राणायतनानि प्रतिमन्त्रं शुन्धति शोधयति अद्भिः स्पृशतीति सूत्रार्थः ॥ पशुदेवतानि । हे पशो अहं ते तव वाचं वागिन्द्रियं शुन्धामि शोधयामि । एवमग्रेऽपि प्राणं प्राणवायुं प्राणेन्द्रियं चक्षुरिन्द्रियं श्रोत्रेन्द्रियं नाभिं नाभिच्छिद्रं मेढ्रं लिङ्गम् पायुं गुदम् चरन्ति गच्छन्त्येभिरिति चरित्राः पादाः एवन्त्वदीयानि सर्वेन्द्रियाणि शुन्धामि ॥१४॥

१——६,६,२-६ ।

हे त्वष्ट यद्वा वर्षों विस्तीर्णः वर्षीयसि विस्तीर्णतरे यज्ञे यज्ञपतिं यजमानं धाः धेहि ॥ का॰ देवेभ्यः स्वाहेति जुहोतीति[1]। मन्त्रयोरर्थैक्येऽपि पाठभेदतात्पर्यं तित्तिरिराह पुरस्तात् स्वाहाकृतयोऽन्ये देवा उपरिष्टात् स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेति* ॥ ११ ॥

का॰ वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति माहिर्भूरिति[2]। वपा श्रप्यते याभ्यां ते वपाश्रपण्यौ काष्ठविशेषौ ताभ्यां कृत्वा नियोजनीं पशुबन्धनरज्जुं द्विगुणां चात्वाले क्षिपेदिति सूत्रार्थः। रज्जुदेवतम् हे रज्जो त्वमहिः सर्पाकारा मा भूः मा भूयाः पृदाकुः अजगराकारापि मा भूः ॥ का॰ पान्नेजनहस्तां वाचयति नयन्नमस्त आतानेति[3]; पादौ निज्यते चाल्यते येन स पान्नेजनः

**माहिर्भूर्मा पृदाकुर्नमस्त आतानानर्वा प्रेहि। घृतस्य कुल्या उप ऋतस्य पथ्या अनु ॥ १२ ॥**

पादनेजनार्थं उदककलसः पादग्रहणमन्यावयवोपलक्षणम् पान्नेजनो मुखाद्यवयवशोधनार्थो जलकलशो हस्ते यस्याः सा पान्नेजनहस्ता तां पत्नीं नयन् गार्हपत्यसमीपात्पशुशोधनाय नयन् सन् प्रतिप्रस्थाताम् मन्त्रं तां वाचयेदिति सूत्रार्थः। यज्ञदेवतम् आ समन्तात्तन्यते विस्तार्यते इत्यातानो यज्ञः। यज्ञो वा आतानो यज्ञं हि तन्वत इति[4] श्रुतेः। हे आतान यज्ञ ते तुभ्यं नमः त्वमनर्वा शत्रुरहितः सन् प्रेहि समाप्तिपर्यन्तं प्रकर्षेण गच्छ। इयर्ति वधार्थमित्यर्वा नास्त्यर्वा यस्यासावनर्वा अनर्वा प्रेहीत्यसपत्नेन प्रेहीति श्रुतेः। अनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै इति तित्तिरिवाक्यात्। किञ्च ऋतस्य यज्ञस्य पथ्याः पथि भवाः घृतस्य कुल्याः घृतनदीः अनुलक्ष्य उप प्रेहि गच्छ सान्नाय्यपृषदाज्यकुल्योपलक्षणार्थं घृतकुल्याग्रहणम् अत्र यज्ञे बहु घृतमाहुतमित्यभिप्रायः ॥ १२ ॥

* "पुरस्तात् स्वाहाकृतयोन्ये तानेतत् प्रीणातीति शतपथेपि" – इत्यधिकः क०।    १——६,५,२४।    २——६,५,२६।    ३——६,६,१।    ४——३,८,२,२।

श्वांसयोर्मन्त्रावृत्तिः अङ्गानि अंसादीनि यजत्रैः यागैः सङ्गच्छन्ताम् इज्यन्त इति यजत्राः । अथ श्रोण्योः यज्ञपतिर्यजमान आशिषा यज्ञफलेन सङ्गच्छताम् ॥ १० ॥

का० स्वरुमादायाक्त्वोभौ जुह्वर्षे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति[१] । विशसिना दत्तं शासं गृहीत्वा स्वयमेव यूपात्स्वरुमादाय तावसिस्वरू जुह्वग्रे घृतेनाक्त्वा ताभ्यामसिस्वरुभ्यां पशोर्ललाटं स्पृशेदिति सूत्रार्थः । स्वरुशासदैवतम् हे स्वरुशासौ युवां घृतेनाक्तौ सन्तौ पशून् बहुवचनं पूजार्थम् एतं पशुं त्रायेथाम् पालयेथाम् ॥ का० रेवति यजमानइति वाचयतीति[२] । यजमानं वाचयेदित्यर्थः । वाग्देवतम् वाग्वै रेवतीति[३] श्रुतिः । हे रेवति धनवति वाग्देवते यजमानेऽस्मिन् प्रियमभिप्रेतं धाः धेहि ।

घृतेनाक्तौपशूँस्त्रायेथाᳬंरेवतियजमानेप्रियन्धाआविशउरोरन्तरिक्षात्सजूर्देवेनवातेनास्य

हविषस्त्मनायजसमस्यतन्वाभव । वर्षोवर्षीयसियज्ञेयज्ञपतिन्धाःस्वाहादेवेभ्योदेवेभ्यःस्वाहा ॥ ११ ॥

बहुलं छन्दस्यमाङ्योगेऽपीत्यड्भावः आविश ज्ञानप्रदानेन यजमानं प्रविश । किञ्च हे रेवति वातेन देवेन सजूः समानप्रीतिर्भूत्वा उरोर्विस्तीर्णादन्तरिक्षाद्यजमानं गोपायेति शेषः । किञ्चास्य पशुलक्षणस्य हविषस्त्मना आत्मना यज । मन्त्रेष्वाङ्यादेरात्मन इति आकारलोपः । किञ्चास्य पशोस्तन्वा शरीरेण सम्भव एकीभव हे रेवति यजमानरूपेण पशुरूपेण चात्मना भूत्वात्मना च यजेति तात्पर्यार्थः ॥ का० पश्चात्तृणमुपास्यति वर्षो वर्षीयसीति[४] । शामित्रस्य पश्चात्प्रागग्रं तृणमुपास्यति हस्तस्थतृणद्वयमध्ये एकं क्षिपति विशसनीयस्य पशोर्भुमिस्पर्शपरिहारार्थमिति सूत्रार्थः । तृणदैवतम् हे वर्षो वर्षादुत्पन्नं बर्हिः तत्सम्बोधनं वर्षो वर्षप्रसव

१——६,४,१२ । २——६,५,११ । ३——३,८,१,१२ । ४——६,५,१५ ।

धीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः संभवति यत्पशुरिति । किञ्च हे पशो एवं प्रोक्षितं त्वां माता भूमिरनुमन्यतां तथा पिता द्यौरनुमन्यताम् सगर्भ्यो समानगर्भे उदरे भवः सोदरो भ्राता अनुमन्यताम् सयूथ्यः समानयूथे भवः सखा सुहृत् अनुमन्यताम् ॥ ९ ॥

का० अपां पेरुरित्यास्यउपगृह्णातीति[1] । पशोर्मुखे प्रोक्षणीर्धारयेदिति सूत्रार्थः । पशुदैवतम् हे पशो त्वमपां जलानां पेरुः पानशीलोऽसि । पिबतीति पेरुः औणादिक एरुप्रत्ययः । उदकपानशीलो भवसि तत इदं पिबेत्यर्थः । का० आपो देवीरित्यधस्तादुपोक्षतीति[2] । पशोरधोभागे हृदि प्रोक्षेदिति सूत्रार्थः । हे पशो आपो देवीः अब्रूपा देव्यः स्वदन्तु त्वामास्वादयन्तु भक्षयन्तु । यद्वा आपो देव्यः स्वदन्तु पशुं भक्षयन्तु । को गुण इति चेत् स्वात्तं चित् चिदित्यव्ययं हेत्वर्थे हि यतो देवहविः देवानां हविः

अपाम्पेरुरस्यापोदेवीःस्वदन्तुस्वात्तञ्चित्सद्देवहविः ।

सन्तेप्राणोवातेनगच्छताᳪसमङ्गानियजत्रैःसंयज्ञपतिराशिषा ॥ १० ॥

पशुलक्षणं स्वात्तमास्वादितं सत् शोभनं देवयोग्यं भूयादिति शेषः । अद्भ्यस्त्वेत्यादिमन्त्रत्रयेणोपरिष्टान्मुखेऽधोभागे पशोः प्रोक्षणेन सर्वं मेध्यं करोतीति तित्तिरिणा प्रतिपादितम् तदाह उपरिष्टात्प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्यन्तरत एवैनं मेध्यं करोत्यधस्तादुपोक्षति सर्वमेवैनं मेध्यं करोतीति ॥ का० उत्तरमाघारमाघार्य पशुं पूर्वं समनक्ति ललाटांसश्रोणिषु सन्त इति प्रतिमन्त्रमिति[3] । उत्तराघारहोमानन्तरं ध्रुवासमञ्जनादर्वागेव भाले अंसयोः श्रोण्योश्च जुह्वैव पशुं समनक्ति सन्त इति त्रिभिः प्रतिमन्त्रमिति सूत्रार्थः ॥ पशुदैवतयजूंषि । ललाटाञ्जनमन्त्रः हे पशो ते तव प्राणो वायुना वातेन सङ्गच्छताम् ।

१——६,३,३१ । २——६,३,३२ । ३——६,४,२ ।

पशवो यूयं यजमानगृहे रमध्वं संक्रीडध्वम्। एवं पशुमुक्त्वा बृहस्पतिमाह हे बृहस्पते हे ब्रह्मन् वसूनि पशुलक्षणानि धारया निश्चलीकुरु ब्रह्म वै बृहस्पतिः पशवो वस्विति[1] श्रुतेः ॥ का० द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वान्तरा शृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति[2]। अवयवद्वयोपेतया व्यामद्वयपरिमितया कुशकृतया रज्ज्वा नागपाशं कृत्वा शृङ्गयोरन्तराले पशुं बध्नाति कथमभिदक्षिणम् दक्षिणशृङ्गमभिमुखं पाशं प्रतिमुञ्चेदिति सूत्रार्थः। हे देवहविः देवानां हवीरूप पशो ऋतस्यावश्यम्भाविफलोपेतत्वात्सत्यस्य यज्ञस्य पाशेन त्वा त्वां प्रतिमुञ्चामि बध्नामि प्रतिपूर्वो मुञ्चतिर्बन्धने वर्तते। एवं पशुं सम्बोध्य शमित्रे समर्पयति मानुषो धर्षा।

देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम्। अग्नीषोमाभ्याञ्जुष्टन्नियुनज्मि।

अद्भ्यस्त्वौषधीभ्योनुत्वामातामन्यतामनुपितानुभ्रातासगर्भ्योनुसखासयूथ्यः। अग्नीषोमाभ्यान्त्वाजुष्टम्प्रोक्षामि ॥९॥

ञिधृषा प्रागल्भ्ये विकरणपुरुषव्यत्ययः। मानुषः शमिता धृष्णोतु शमयितुं शक्नोतु पाशेन बद्धत्वादिति भावः। संहितायां द्व्यचोऽतस्तिङ इति सूत्रेण धर्षेत्यत्र दीर्घः ॥ ८ ॥

का० देवस्य त्वेति यूप इति[3]। यूपे पशुं बध्नातीति शेष इति सूत्रार्थः। अग्नीषोमदेवताभ्यां जुष्टमभिरुचितं पशुं नियुनज्मि निबध्नामि व्याख्यातमन्यत्। का० अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षतीति[4]। हे पशो अद्भ्यः ओषधीभ्यः। अत्र विभक्तिव्यत्ययः अद्भिरोषधिभिश्च। त्वा त्वां प्रोक्षामि मेध्यं करोमि। किम्भूतं त्वाम्। अग्नीषोमाभ्यां जुष्टं प्रीतम् दर्भैरपामुत्पूतत्वादोषधीनामपि प्रोक्षणसाधनत्वमस्त्येव। स्वमातृभक्षिताभ्यां तृणोदकाभ्यां पशोरुत्पन्नत्वात्तेनोभयेन प्रोक्षणं युक्तम्। तदाह तित्तिरिः अद्भ्यस्त्वौष-

१—३,७,३,१३। २—६,३,२६। ३—६,३,२७। ४—६,३,३०।

पृथिव्यामेव ते तव लोकः आश्रयस्थानमित्यर्थः। ननु पशवो वै यूपमुच्छ्रयन्तीति[१] श्रुतेः यूपे पशुना भवितव्यमित्यत आह ते तव आरण्योऽरण्ये भवोऽरण्यसम्बन्धी पशुः वने वर्तमानः पशुस्तवैवेत्यर्थः॥ ६॥

का॰ उपावीरसीति तृणमादायेति[२]। हे तृणविशेष त्वमुपावीरसि उप समीपमवति गच्छतीत्युपावीः। यद्वा उप समीपेऽवस्थितोऽवति रक्षतीत्युपावीः पशोर्द्वितीयः सखा त्वमसीत्यर्थः। का॰ तेन पशुमुपस्पृशत्युप देवानिति[३]। गृहीतेन तृणेन पुरस्तात्प्रत्यक्स्थितं पशुं स्पृशेदिति सूत्रार्थः। दैवीर्विशः पशवो देवानग्नीषोमादीनुप प्रागुः उपगच्छन्तु, दैव्यो वा एता विशो यत्पशव इति श्रुतेः। इण् गतावित्यस्माच्छन्दसि लुङ्लङ्लिट इति कालमात्रे लुङ् इणो गा लुङीति गादेशः। किम्भूतान्देवान् उशिजो

उपावीरस्युप देवान्दैवीर्विशः प्रागुरुशिजो वह्नितमान्। देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम्॥ ७॥

रेवती रमध्वं बृहस्पते धारया वसूनि। ऋतस्य त्वा देव हविः पाशेन प्रति मुञ्चामि धर्षा मानुषः॥ ८॥

मेधाविनः यद्वा हवींषि कामयमानान् वहन्तीति वह्नयः अतिवह्नयो वह्नितमास्तान् यजमानं स्वर्गं प्रति प्रापयतां देवानां मध्ये श्रेष्ठतमानित्यर्थः। एवं पशून् प्रार्थ्य त्वष्टारमाह हे देव हे त्वष्टः त्वं वसु पशुलक्षणं धनं रम रमय। छन्दस्युभयथेति शपोऽप्यार्धधातुकसंज्ञत्वाण्णिचो लोपः। एवं त्वष्टारमुक्त्वा पुनः पशुमाह हे पशो ते तव हव्या हवींषि स्वदन्ताम्। ष्वद ष्वाद आस्वादने। स्वादूनि भवन्तु यद्वा हवींषि स्वदन्तामास्वादयन्तु देवा इति शेषः पूर्ववण्णिचो लोपः॥ ७॥

रयिर्धनं क्षीरादि यासां ता रेवत्यः। लिङ्गवचनव्यत्ययः रेवन्तः। रेवन्तो हि पशव इति[४] श्रुतेः। हे रेवन्तः क्षीरादिधनवन्तः

१—२,७,३,४। २—६,३,१६। ३—६,३,२०। ४—२,७,३,१३।

का० त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति परिवीरसीति[१]। त्रिभिर्गुणैरवयवैरुपेता त्रिव्याममिता कुशसम्बन्धिनी या रशना रज्जुस्तया नाभिप्रमाणे यूपप्रदेशे आवृत्तित्रयं यथा भवति तथा यूपमावेष्टयेदिति सूत्रार्थः। यूपदैवत्यं यजुः। हे यूप त्वं परिवीरसि परितो रशनया वीतोवेष्टितोऽसि यद्वास्माभिः परिवारितोऽसि। व्येञ् संवरणे इत्यस्य क्तप्रत्ययार्थे क्विपि सम्प्रसारणम्। किञ्च दैवीर्विशः देवसम्बन्धिन्यः प्रजाः मरुद्गणादयः त्वा त्वां परि व्ययन्तां परितो वेष्टयन्तु। यद्वा दैवीर्विशः पशवः त्वा परिव्ययन्ताम्। दैव्यो वा एता विशो यत्पशव इति श्रुतेः। किञ्च मनुष्याणां सम्बन्धिन्यो रायो धनानि इमं यजमानं परि

**परिवीरसिपरित्वादैवीर्विशोव्ययन्ताम्परीमंयजमानꣳरायोमनुष्याणाम्।**

**दिवःसूनुरस्येषतेपृथिव्यांल्लोकआरण्यस्तेपशुः॥ ६॥**

व्ययन्तां वेष्टयन्तु यद्वा मनुष्याणामिति निर्धारणे षष्ठी मनुष्याणां मध्ये रायो धनानि इमं यजमानमेव परि व्ययन्ताम्॥ का० यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां दिवः सूनुरसीति[२]। अष्टास्रे यूपस्य याश्रिरग्निसमीपे स्थिता साग्निष्ठा तस्या उत्तरभागे रशनायां स्वरुनामकं शकलमवसृजेदिति सूत्रार्थः। हे स्वरो त्वं दिवः द्युलोकस्य सूनुः पुत्रोऽसि द्युलोकाद्वर्षति ततो यूपो जायते यूपात्स्वरुरिति प्रणालिकया दिवः सूनुः स्वरुः॥ का० वर्षिष्ठाद्दक्षिणं वितष्टं द्वादशं निदधात्येष तइति[३]। यूपैकादशिनीपक्षे वर्षिष्ठाद्यूपाद्दक्षिणभागे वितष्टमष्टास्रि* द्वादशं यूपं निदधाति स्थापयति न तु निखनतीति सूत्रार्थः। यूपदैवत्यम्। हे यूप

* "वितष्टमतष्टास्रिं" मु०। १——६,३,१५। २——६,३,१७। ३——८,८,२३।

गाङ् गतौ गानं गायः उरुर्गायो गतिर्यस्य महागतेरित्यर्थः। यद्वा उरुभिर्महात्मभिर्गीयते स्तूयतेऽसावुरुगायस्तस्य। तादृगस्थानप्राप्तिहेतुभूतकर्मणे हे यूप त्वमवटे तिष्ठेत्याशयः॥ का० ब्रह्मवनि त्वेति पांसुभिः[1]। ब्रह्म दृंहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूषतीति। द्वे यजुषी औदुम्बरीविषये व्याख्याते[2] ॥ ३ ॥

का० विष्णोः कर्माणीति वाचयति यूपमन्वारब्धमिति[3]। यूपं स्पृष्टवन्तं यजमानं वाचयेदिति सूत्रार्थः। द्वे वैष्णव्यौ गायत्र्यौ मेधातिथिदृष्टे। हे ऋत्विजः विष्णोः यज्ञाधिष्ठातुः कर्माणि सृष्टिसंहारादिचरितानि यूयं पश्यत यतो यैः कर्मभिः व्रतानि भवदीयानि लौकिकवैदिककर्माणि पस्पशे बद्धवान् निर्मितवानित्यर्थः। स्पश बन्धने। स विष्णुरिन्द्रस्य युज्यः वृत्रवधादिकर्मसु योज्योऽनुरूपः

**विष्णोःकर्म्माणिपश्यतयतोव्रतानिपस्पशे। इन्द्रस्ययुज्यःसखा ॥४॥**

**तद्विष्णोःपरमम्पदꣳसदापश्यन्तिसूरयः। दिवीवचक्षुराततम् ॥ ५ ॥**

सखा मित्रम्। यद्वा विष्णोः यज्ञस्य कर्माणि वीर्याणि पश्यत यतो यैर्वीर्यैर्व्रतानि आधानपशुसोमादीनि कर्माणि पस्पशे आत्मनि बद्धवान्. यद्वा यैर्वीर्यैर्व्रतानि कर्माणि अग्निवायुसूर्याणां स्वानि स्वानि एतान्यप्रमत्ताः कुरुतेत्येवं पस्पशे निबद्धवान् शिष्टं समानम् ॥४॥

का० तद्विष्णोरिति चषालमोचमाणमिति[4]। यूपकटकं प्रेक्षमाणं यजमानं वाचयेदिति सूत्रार्थः। सूरयः विद्वांसो वेदान्तपारगा विष्णोः तत्परमं पदं स्वरूपं सदा पश्यन्ति। कीदृशम्। दिवि आकाशे निरावरणं चक्षुरिवाततं व्याप्तम्। यद्वा यत् दिवि आकाशे चक्षुरादित्यमण्डलमाततं विस्तारितम् इवोऽनर्थकः चक्षुःशब्देनान्यत्रापि मण्डलमुच्यते चक्षुर्मित्रस्य वरुणस्य[5] तच्चक्षुर्देवहितम्[6] ॥ ५ ॥

१——६,२,१०-११। २——५ अ० २७ क०। ३——६,३,१२। ४——६,३,१३। ५——७ अ० ४२ क०। ६——३६ अ० २४ क०।

व्रीह्याद्योषधिनिष्पत्त्यर्थम् किम्भूताभ्य ओषधीभ्यः सुपिप्पलाभ्यः* शोभनफलयुक्ताभ्य इत्यर्थः ॥ का० द्यामग्रेणेत्युच्छ्रयतीति[1] । उन्नतं कुर्यादित्यर्थः । यूपदेवत्यम् यूपस्य महिमोच्यते । हे यूप त्वमग्रेणाग्रभागेन द्यां दिवमस्पृक्षः स्पृष्टवानसि । स्पृशतेर्लुङि शलइगुपधादनिटः क्स इति क्सप्रत्ययः । मध्येन मध्यभागेनान्तरिक्षमा अप्राः आपूरितवानसि । प्रा पूरणे । उपरेणाधोभागेन अनिष्टप्रदेशेन पृथिवीं भूमिमदृंहीः दृढीकृतवानसि ॥ २ ॥

का० या तइति मिनोतीति[2] । अवटे यूपं प्रक्षिपेदित्यर्थः ॥ यूपदेवत्या त्रिष्टुप् दीर्घतमोदृष्टा । हे यूप या यानि ते तव धामानि स्थानानि गमध्यै गन्तुं वयमुश्मसि उश्मः कामयामहे । तुमर्थे से इत्यादिना गच्छतेस्तुमर्थे कध्यैन् प्रत्ययः नित्त्वादाद्युदात्तः ।

याते धामान्युश्मसिगमध्यैयत्रगावोभूरिशृङ्गा अयासः । अत्राहतदुरुगायस्यविष्णोःपरमम्पदमवभारिभूरि ।

ब्रह्मवनित्वाक्षत्रवनिरायस्पोषवनिपर्य्यूहामिब्रह्मदृꣳहक्षत्रंदृꣳहायुर्दृꣳहप्रजान्दृꣳह ॥ ३ ॥

उश्मसि वश कान्तौ लटि उत्तमबहुवचने शपो लोपे संप्रसारणे इदन्तोमसीति इकारः । यानि तव स्थानानि गन्तुं वयमिच्छाम इत्यर्थः । किञ्च यत्र येषु तव स्थानेषु गावो रश्मयः अयासः । अयन्तीति अयाः अय गतौ गन्तारो वर्तन्ते सर्वे किरणा येषु स्थानेषु गता इत्यर्थः । किम्भूता गावः । भूरिशृङ्गाः भूरि बहु शृङ्गं दीप्तिर्येषां ते भूरिशृङ्गाः । प्रज्वलन्नामसु शृङ्गाणीति पठितम्[3] । अहेतिरवार्थे । विष्णोः व्यापकस्य ब्रह्मणः तत्परमम् उत्कृष्टं पदं भूरि महत् आदित्यमण्डललक्षणमत्रैव अवभारि अवभाति । तकारस्थाने छान्दसो रेफः । यद्वा भूरि बहुप्रकारं यथा तथा अत्राह अत्रैव एष्वेव स्थानेषु अवभाति शोभते । किम्भूतस्य विष्णोः उरुगायस्य

● *अतोऽनन्तरं—"शोभनं पिप्पलं फलं यासां ताभ्यः"—इत्यधिकं क० पुस्तके । "अष्टमप्रदर्शन" क० । 1—६,३,७ । 2—६,३,८ । 3—निघ० १,१७,११ ।

सौमिकवेदिप्रधाने पञ्चमाध्याये आतिथ्यमारभ्य यूपनिर्माणपर्यन्ता मन्त्रा उक्ताः अग्नीषोमीयपशुप्रधाने षष्ठेऽध्याये यूपसंस्कारमारभ्य सोमाभिषवोद्योगपर्यन्ता मन्त्रा उच्यन्ते ॥ का० देवस्य त्वेत्यभ्रिमादाय यूपावटं परिलिखतीदमहमिति[1] । यवोऽसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रं प्रोक्षामीति सर्वत्र साकाङ्क्षत्वादवटे शेषमासिञ्चति शुन्धन्तामिति बर्हींषि प्रागुदञ्चि च प्रास्यति पितृषदनमसीति[2] । एतानि षड्यजूंषि औदुम्बरीविषये व्याख्यातानि ॥ १ ॥

का० प्रथमशकलस्याग्रेणीरसीति[3] । यूपावटे प्रथमशकलं निक्षिपेदिति सूत्रार्थः । हे यूपशकल त्वमग्रेणीरसि । अग्रे प्रथमं यूपस्य छिद्यमानस्य नीयतेऽपनीयत इत्यग्रेणीः । यूपस्य प्रथमावयवभूतो भवसीत्यर्थः । यद्वा अग्रे प्रथमं यूपमवटं प्रति नयतीत्यग्रेणीः

**अग्रेणीरसि स्वावेश उन्नेतॄणामेतस्य वित्तादधि त्वा स्थास्यति देवस्त्वा सविता मध्वानक्तु सुपिप्पलाभ्यस्त्वौषधीभ्यः ।**

**द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीः ॥ २ ॥**

पुरःसरः । किंभूतस्त्वम् । उन्नेतॄणामुन्नयनकर्तॄणामध्वर्यूणां स्वावेशः सुखेन वेशयितुं शक्यः ते ह्येनं यूपावटे सुखेनावेशयन्ति लघुत्वात् । स त्वमेतस्य कर्मणो वित्तात् कर्मणि षष्ठी । एतत्कर्म विद्धि जानीहि । किं तत्कर्म । यत् यूपः त्वामधि स्थास्यति त्वदुपर्यव-स्थानं करिष्यति तत्त्वया बोद्धव्यमित्यर्थः ॥ का० देवस्य त्वेत्यनक्तीति[4] यूपमिति शेषः । यूपदेवत्यम् । हे यूप सविता देवः मध्वा मधुना मधुरेणाज्येन त्वा त्वामनक्तु । मध्वा अनित्यमागमशासनमिति नुमभावः ॥ का० चषालमुभयतोऽक्तं प्रतिमुञ्चति सुपिप्पलाभ्य इति[5] । अथ उपरि चाज्येन लिप्तं चषालं यूपाग्रे स्थापयेदिति सूत्रार्थः । हे चषाल त्वां यूपस्याग्रे प्रतिमुञ्चामीति शेषः । किमर्थमोषधीभ्यः

१——६,२,८ । २——६,२,१५-१८ । ३——६,२,१९ । ४——६,३,२ । ५——६,३,३-४ ।

का० अयं हि त्वेति शोधनमभिमन्त्रणशेषो वा सविशेषोपदेशादिति[1]। हि यस्मात् हे छिन्नवृक्ष तेतिजानोऽतितीक्ष्णोऽयं स्वधितिः कुठारो महते सौभगाय सौभाग्याय-दर्शनीयत्वाय यद्वा सुभगो यज्ञः स एव सौभगः स्वार्थेऽण् यज्ञाय त्वां प्रणिनाय प्रणयति यूपत्वं प्रापयति। छन्दसि लुङ्लङ्लिट इति वर्त्तमाने लिट्। तिज निशाने अस्मादयङन्ताच्छानचि तेतिजान इति रूपम्। अतस्त्वया छेदान्

द्यांमालेखीरन्तरिक्षम्मा हिꣳसीः पृथिव्यासम्भव। अयꣳ हित्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय।

अतस्त्वन्देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेम ॥ ४३ ॥

॥ ५ ॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां पञ्चमोऽध्यायः ॥ ५ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्। आददे नार्यसीदमहꣳ रक्षसाङ्ग्रीवा अपिकृन्तामि।

यवोसि यवयास्मद्द्वेषो यवयारातीर्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥ १ ॥

भेतव्यमिति भावः ॥ का० अतस्त्वमित्याह्वनने जुहोति यूपे वेति[2]। हे देव वनस्पते अतोऽस्मात् स्थाणोः त्वं शतवल्शः बह्वङ्कुरः सन् विरोह विशेषेण जायस्व वयञ्च सहस्रवल्शाः पुत्रपौत्रादिभिर्बहुशाखोपेता विरुहेम प्रजायेमहि ॥ ४३ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे। आतिथ्यात्स्थाणुहोमान्तः पञ्चमोऽध्याय ईरितः ॥ ५ ॥

१——६,१,३,१८.१९। २——६,१,३,२०-२१।

का० आज्यशेषमादाय स तत्रा गच्छति यूपमभिमृशत्यत्यन्यानिति प्राङ् तिष्ठन्नभिमन्त्रयते वेति[१] । यूपाहुतिशेषाज्ययुतायूपलक्षणार्थं वनं गत्वा यूपमभिमृशेदभिमन्त्रयेदेति सूत्रार्थः । वनस्पतिर्देवत्यम् । वृक्षा द्विविधाः यूप्या अयूप्याश्च पलाशखदिरबिल्वादयो यूप्याः निम्बजम्बीरादयस्त्वयूप्याः । हे पुरोवर्त्ति यूपवृक्ष त्वत्तोऽन्यान् कांश्चिद्यूपानपि समप्रदेशजन्यादिलक्षणरहितानत्यगाम् अतिक्रान्तवानस्मि अन्यांश्चायूप्यान्नोपागाम् किञ्च परेभ्यो वृक्षेभ्यो दूरवर्त्तिभ्योऽर्वाक् निकटं त्वा त्वामविदं लब्धवानस्मि अवरेभ्यो निकटेभ्यः परः परस्तादविदं विद्लृ लाभे पुष्यादित्यङ् लुङि रूपम् किञ्च हे वनस्पते वनस्य पालक हे देव दीप्यमान वृक्ष देवयज्यायै देवयागार्थं तं तादृशं त्वां वयं जुषामहे सेवामहे देवा अपि देवयज्यायै त्वा जुषन्तां सेवन्ताम् ॥ का० स्रुवेणोपस्पृशति विष्णवे त्वेति[२] ।

**अत्यन्याँ२ऽअगान्नान्याँ२ऽउपागामर्वाक्त्वापरेभ्योविदम्परोवरेभ्यः । तन्त्वाजुषामहेदेववनस्पतेदेवयज्यायै**

**देवास्त्वादेवयज्यायैजुषन्तांविष्णवेत्वा । ओषधेत्रायस्वस्वधितेमैनँ हिँसीः ॥ ४२ ॥**

हे यूपवृक्ष त्वा त्वां विष्णवे यज्ञाय उपस्पृशामीति शेषः यज्ञो वै विष्णुरिति श्रुतेः ॥ का० ओषधइति कुशतरुणं तिरस्कृत्येति[३] । यूपवृक्षस्य कुशमन्तर्धानं कुर्यादिति सूत्रार्थः । हे ओषधे त्वं त्रायस्व स्वधितिभयात् मां रक्ष ॥ का० स्वधितइति परशुना प्रहरतीति[४] । हे स्वधिते परशो एनं यूपं मा हिंसीः मा वधीः ॥ ४२ ॥

का० । द्यां मा लेखीरिति पतन्तमभिमन्त्रयतइति[५] । हे यूपवृक्ष द्यां द्युलोकं त्वं मा लेखीः मा हिंसीः । लिख अक्षरविन्यासे इह तु हिंसार्थः । अन्तरिक्षञ्च मा हिंसीः पृथिव्या सह सम्भव सङ्गतो भव । यूपस्य वज्ररूपत्वाल्लोकानां शान्तिराशास्यत-इति भावः ॥

१——६,१,५-७ । २——६,१,११ । ३——६,१,१२ । ४——६,१,१३ । ५——६,१,१६ ।

का० । अग्ने व्रतपा इत्याहवनीये समिधमाधायेति[1] । आग्नेयं यजुः यजमानोऽग्निशरीरेणात्मशरीरस्य कृतव्यत्ययोऽधस्तन कर्म्मकलापं कृत्वाथ यथा स्वशरीरं कुर्व्वाण आह हे अग्ने व्रतपाः स्वभावतः सर्वेषां व्रतानां पालकोऽसि तस्मात्कारणादिदानीमपि त्वं व्रतपाः मदीयव्रतस्य पालको भवेति शेषः । हे अग्ने व्रतप्रार्थनकाले तव सम्बन्धिनी या तनूर्मयि अभूदवस्थिता सा एषा तव तनूः त्वयि भवत्विति शेषः । यो या उ या च मम तनूस्त्वय्यभूत्सा इयं मयि भवतु । किञ्च हे व्रतपते व्रतपालकाग्ने नौ आवयोर्व्रतानि कर्म्माणि यथायथं यथास्वं स्वसम्बन्धमनतिक्रम्य सन्त्विति शेषः । अनुष्ठानरूपं व्रतं ममास्तु तत्पालनरूपं व्रतं तवास्त्वित्यर्थः । किञ्च

**अग्ने व्रतपास्त्वे व्रतपायातवतनूर्मय्यभूदेषासात्वयियोममतनूस्त्वय्यभूदियᳪसामयि । यथायथन्नौव्रतपतेव्रतान्यनुमेदीक्षान्दीक्षापतिरमᳪस्तानुतपस्तपस्पतिः ॥ ४० ॥**

**उरुविष्णोविक्रमस्वोरुक्षयायनस्कृधि । घृतङ्घृतयोनेपिबप्रप्रयज्ञपतिन्तिरस्वाहा ॥ ४१ ॥**

दीक्षापतिः दीक्षायाः पालकोऽग्निः मे दीक्षां मदीयदीक्षार्थं नियममन्वमंस्त अनुमतवानङ्गीकृतवानित्यर्थः तपस्पतिः तपसः पालकोऽग्निस्तपो मदीयमुपसदमन्वमंस्तानुमतवान् ॥ ४० ॥

इदानीं यूपसम्पादनमन्त्राः । का० गृहेषु यूपाहुतिं जुहोति चतुर्गृहीतां स्रुवेण वोरु विष्णवितीति[2] । चतुर्गृहीतमाज्यमाहवनीये जुहोति यूपं छेत्तुं गमिष्यन् सा यूपाहुतिरिति सूत्रार्थः व्याख्याता ॥ ४१ ॥

१ —— ८, ८, ८ । २ —— ६, १, ३ ।

तथा क्षधि कुरु । हे घृतयोने अग्ने घृतं पिब ह्रूयमानमिदमाज्यं भक्षय । अग्निर्यस्यै योनिरसृज्यत तस्यै घृतमुल्बमासीदिति श्रुतेर्घृतयोनित्वम् किञ्च यज्ञपतिं यजमानं प्रतिर अतिशयेन वर्धय । प्रसमुपोदः पादपूरण इति प्रशब्दस्य द्वित्वम् । स्वाहा तस्मै तुभ्यं सुहुतमस्तु ॥ ३८ ॥

का० । दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्सोमं निदधाति देव सवितरिति[1] । अनसि शकटे । सावित्रं यजुः । हे सवितः सर्वस्य प्रेरक देव एष सोमस्ते तवार्पितः तं तादृशं सोमं त्वं रक्षस्व पालय मा त्वा दभन् सोमस्य रक्षितारं त्वामसुरा मा वि-

देवसवितरेषतेसोमस्तꣳरक्षस्वमात्वादभन् । एतत्वन्देवसोमदेवोदेवाꣳउपागाइदमहम्मनुष्यान्

सहरायस्पोषेणस्वाहानिर्वरुणस्यपाशान्मुच्ये ॥ ३९ ॥

हिंसिषुः ॥ का० । एतत्त्वमिति विसृज्योपतिष्ठत इति[2] । कृष्णाजिने स्थापितं बद्धं सोमं विस्रस्योपस्थानं कुर्यादिति सूत्रार्थः । सौम्यं यजुः । हे सोम देव त्वं देवः सन् भवदीयान्देवानेतदिदानीमुपगाः प्राप्तोऽसि अहं मनुष्यो यजमानो मदीयान्मनुष्यानिदमिदानीं रायः पोषेण सह पश्वादिधनेन सार्धमुपागतोऽस्मीत्यनुषङ्गः । का० स्वाहा निरिति निष्क्रम्येति[3] । हविर्धानमण्डपान्निर्गत्येति सूत्रार्थः । हानं हा द त्वा अहा स्वस्याहा स्वाहा स्वात्यागः सोमेनात्मानं निःक्रियात्मीयोऽहमस्मीत्यर्थः । यद्वा स्वाहा सोमरूपमन्नं देवेभ्यो दत्तमस्तु अनेन सोमप्रदानेनाहं वरुणपाशान्निर्मुच्ये निर्मुक्तोऽस्मि ॥ ३९ ॥

१—८,७,१७ । २—८,७,१८ ३—८,७,१९ ।

.जुहुराणम् अभिलषितक्रियाप्रतिबन्धकमित्यर्थः। किञ्च ते तव भूयिष्ठां बहुलतमां नमउक्तिं हविषां वचनं याज्यापुरोऽनुवाक्या लक्षणम्। विधेम करवाम। नम इत्यन्ननाम[1] यद्वा नमस्कारविषयामुक्तिं सम्पादयाम ॥ ३६ ॥

का०। "उत्तरेण सदो हृत्वाग्नीध्रेऽग्निं निदधाति ग्रावद्रोणकलशसोमपात्राणि चायं न इति जुहोत्यस्मिन्निति[2]। शालामुखीय मग्निं ग्रावादीनि च सदस उत्तरभागे नीत्वाग्नीध्रमण्डपे निधाय तत्रत्यधिष्ण्यमतेऽग्नौ घृतेन जुहुयादिति सूत्रार्थः। आग्नेयी त्रिष्टुब् यजुरन्ता। अयमग्निर्नोऽस्माकं वरिवः धनं कृणोतु करोतु अयमेवाग्निर्मृधः सङ्ग्रामान् प्रभिन्दन् विदारयन् सन् पुर एतु अग्रतो यातु

अयन्नोअग्निर्वरिवस्कृणोत्वयम्मृधःपुरएतुप्रभिन्दन्।

अयंवाजाञ्जयतुवाजसाताव्यꣳशत्रूञ्जयतुजर्हृषाणःस्वाहा ॥ ३७ ॥

उरुविष्णोविक्रमस्वोरुक्षयायनस्कृधि। घृतङ्घृतयोनेपिबप्रप्रयज्ञपतिन्तिरस्वाहा ॥ ३८ ॥

अयमेवाग्निर्वाजसातौ वाजानामन्नानां सम्भजने निमित्ते वाजान् शत्रुसम्बन्धीन्यन्नानि अस्मभ्यं दातुं जयतु ततोऽयमेवाग्निर्जर्हृषाणोऽत्यर्थं हृष्यन् शत्रून् जयतु स्वाहा तुभ्यं सुहुतमस्तु ॥ ३७ ॥

का०। उरुविष्णविति जुहोतीति[3]। पूर्वमन्त्रेणाग्नीध्रीये होमोऽनेन त्वाहवनीय इति सूत्रार्थः। वैष्णव्यनुष्टुब्यजुरन्ता। हे विष्णो व्यापिन् आहवनीय उरु विक्रमस्व शत्रुषु बहुलं पराक्रमं कुरु किञ्च क्षयाय ब्रह्मगृहनिवासाय नोऽस्मानुरु बहु यथा

[1] —निघ० २,७,२२। [2] —८,७,७-९। [3] —८,७,१५

समित्समिन्धनं सम्यग्दीपकम् देवा ह्याज्यं भुक्त्वा दीप्यन्ते ॥ का॰ प्रदोसमिध्मं त्वं सोमेति[1]। प्रचरण्याभिजुहोतीति जुहूरिव होमसाधना काचित्स्रुक् प्रचरणीत्युच्यते। अवसानरहिता सोमदेवत्या गायत्री भृगुसुतकृतुदृष्टा। तनूं शरीरं कृन्तन्ति छिन्दन्तीति तनूकृतो राक्षसाः। कृती छेदने। द्विषन्तीति द्वेषांसि दौर्भाग्यानि। अन्यैरस्मद्विरोधिभिः कृतानि प्रेरितान्यन्यकृतानि। हे सोम त्वं तेभ्यो यन्ता नियन्तासि यच्छतीति यन्ता यम उपरमे तृच्। यथा तादृशा अस्मान्मा बाधन्ते तथास्मान् सुरक्षितप्रदेशे संस्थाप्य पालयसीत्यर्थः। तस्मात्त्वमेवास्माकमुरु प्रभूतं वरूथं बलमसि तस्मै तुभ्यमिदं हुतमस्तु। सोमं नेतु तमुद्दिश्यासावाज्याहुतिर्हुतेति भावः॥ का॰ जुषाणोऽप्तुरिति द्वितीयामिति[2]। जुहोतीत्यनुवर्तते। अप्तुदेवत्यैकपदा विराट् यजुरन्ता विराजो दश

**अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ।३६।**

इत्युक्तेर्दशाक्षरत्वाद्विराट्। अप्तुश्चात्र सोमः आप्नोति पीतः सन् शरीरमित्याप्तुः आप्लृ व्याप्तौ आप्नोतेर्ह्रस्वश्चेति तु प्रत्ययो धातोर्ह्रस्वश्च। जुषाणः प्रीयमाणोऽप्तुः सोम आज्यस्य वेतु आज्यं पिबतु कर्मव्यापीति केचित्। स्वाहा तस्मै सुहुतमस्तु ॥ ३५ ॥

का॰। अग्ने नयेति वाचयतीति[3]। आग्नेयी त्रिष्टुबगस्त्यदृष्टा। हे अग्ने हे देव विश्वानि सर्वाणि वयुनानि मार्गान् ज्ञानानि वा विद्वान् जानानस्त्वमस्माननुष्ठातॄन् राये धनाय यज्ञफलाय सुपथा शोभनमार्गेण नय प्रापय। किं च अस्मदस्मत्तोऽनुष्ठातृभ्यः एनः पापं युयोधि पृथक्कुरु। यु मिश्रणामिश्रणयोः यौतिः शपः श्लुः वा छन्दसीति हेः पित्वपक्षे अङितश्चेति हेर्धि पित्वाद्गुणः। किम्भूतमेनः जुहुराणम्। हुर्छा कौटिल्ये अस्मात् हुर्छतेः सनो लुक् छलोपश्चेति औणादिकसूत्रेणानच् प्रत्यये रूपम् ह्वर्छितुं कुटिलीकर्तुमिच्छतीति

१——८,७,१। २——८,७,२। ३——८,७,६।

अभिमन्त्रयत इति शेषः। हे अग्नयः सगराः गॄ स्तुतौ गरेण स्तुत्या सहिताः सगराः यूयं सगरेण नाम्ना स्तुतिसहितेन नाम्ना धिष्ण्या इति नाम्ना व्यवह्रियमाणत्वात्सगराः स्थ समानस्तुतयो भवथ समानो गरो येषां ते सगराः। हे अग्नयः ते यूयं रौद्रेणानीकेन शत्रुविनाशकत्वादुग्रेण भवदीयेन सैन्येन मा मां पात रक्षत यद्वा रुद्रदेवत्येन मुखेन मां पात अनीकं मुखं सैन्यं च।

मित्रस्य मा चक्षुषेक्षध्वमग्नयः सगराः सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन पात माग्नयः

पिपृत माग्नयो गोपायत मा नमो वोऽस्तु मा मा हिंसिष्ट ॥ ३४ ॥

ज्योतिरसि विश्वरूपं विश्वेषां देवानां समित्। त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि

वरूथं स्वाहा। जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥ ३५ ॥

हे अग्नयः मा मां पिपृत धनादिभिः पूरयत। मा मां गोपायत रक्षत। अभ्यासे भूयांसमर्थं मन्यन्त इति[1] यास्कोक्तेः निरन्तरं रक्षेत्यर्थः। वो युष्मभ्यं नमोऽस्तु मा मां मा हिंसिष्ट मा वधिष्ट निर्विघ्नं यज्ञं कारयतेत्यर्थः ॥ ३४ ॥

का॰ ध्रुवायाः पुरस्तात्पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति समिदन्तेनेति[2]। हे आज्य त्वं ज्योतिरसि किंभूतम् विश्वरूपं सर्वरूपं बहुष्वाहुतिषूपयुक्तत्वाद्विश्वरूपत्वम् आज्यत्वाद्वा दीप्यमानत्वाद्वा ज्योतिष्ट्वम्। विश्वेषां सर्वेषां देवानां

१——निरु० १०,४२। २——५,८,२६।

ब्रह्मासनम् हे ब्रह्मासन त्वं समुद्रः विश्वव्यचाश्चासि सर्वे देवाः सम्यगुत्कर्षेण द्रवन्त्यत्रेति समुद्रः समुद्र इवागाढा आसीन ब्रह्मा यत्र तिष्ठतीति वा। विश्वं सर्वं यज्ञं व्यचति गच्छति कृताकृतप्रत्यवेक्षणायेति विश्वव्यचाः॥ शालाद्वार्यम् हे प्राचीनवंशशालाद्वारवर्तिन्नग्ने त्वमजोऽसि अजति आहवनीयरूपेण यज्ञप्रदेशे गच्छतीत्यजः यद्वा परब्रह्मत्वमुपचर्यते न जायतइत्यजः। एकः पातीत्येकपात् यद्वा एकः पादः सर्वाणि भूतानि यस्येत्येकपात् पादोऽस्य विश्वा भूतानीति श्रुतिः॥ प्राजहितम् पत्नीशालापश्चिमभागवर्ती पुरातनो गार्हपत्योऽग्निः प्राजहित उच्यते हे प्राजहित त्वमहिरसि न हीयतइत्यहिः शालाद्वार्ये नूतने गार्हपत्ये उत्पन्नेऽपि अयमग्निः स्वरूपेण न हीयते। बुध्नो मूलं तत्र भवो बुध्न्यः आधानकाले प्रथममाहितत्वान्मूलभावित्वम् स हि प्रथमं मथ्यते। नामभिरेवात्र धिष्ण्यानां स्तुतिः। उक्तं च। स्तुतिः स्वनाम्ना कर्मणा वाथ रूपैरिति॥ का० वागसीति सदोऽभिमर्शनमिति[1]। हे सदः त्वं वागसि वाचास्मिन् कर्म कुर्वन्तीति वाक्शब्देनाभेदोपचारेण सद उच्यते। ऐन्द्रमिन्द्रदेवताकं चासि। सीदन्त्यस्मिन् इति सदः॥ का० ऋतस्य द्वाराविति द्वार्ये इति[2]। द्वार्ये सदोद्वारशाखे अभिमृशतीति सूत्रार्थः। हे ऋतस्य यज्ञस्य द्वारौ द्वारदेशव्यापिन्यौ शाखे युवां मा मां मा सन्ताप्तं मा सन्तापयतं प्रवेशनिःक्रमणे स्खलनादिना। तपतेर्लुङि मध्यमैकवचने झलोझलीति सिज्लोपे रूपम्॥ का० अभिमन्त्रणमुत्तरैरध्वनामध्वपत इति[3] सूर्यम्॥ उत्तरैस्त्रिभिर्मन्त्रैस्त्रयाणामभिमन्त्रणं दर्शनमित्यर्थः तत्राध्वनामिति सूर्यमभिमन्त्रयत इति सूत्रार्थः। अध्वपते मार्गपालक रवे अध्वनां मार्गाणां मध्ये वर्तमानं मा मां त्वं प्रतिर प्रवर्धय तिरतिर्वृद्ध्यर्थः। किं च अस्मिन् देवयाने देवयानप्रापके पथि यज्ञमार्गे मे मम स्वस्ति कल्याणं भूयात्॥ ३३॥

का० मित्रस्येत्यृत्विज इति[4]। अभिमन्त्रयत इति शेषः। हे ऋत्विजः मित्रस्यादित्यस्य चक्षुषा नेत्रेण मा मामीक्षध्वं पश्यत सख्युर्नेत्रेण वा सखा यथा सखायं हितचक्षुषा पश्यति तथा मां पश्यध्वमित्यर्थः॥ का० अग्नयः सगरा इति धिष्ण्यानिति[5]।

१—९,८,२२। २—९,८,२३। ३—९,८,२४-२५। ४—९,८,२६। ५—९,८,२७।

वेद्यन्ते दक्षिणामुखो मार्जालीयमिति[१]। शुन्धयतीति शुन्ध्युः मार्ष्टीति मार्जालीयः तत्र हि पात्राणि प्रक्षाल्यन्ते ॥ का० सदोद्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीयबहिष्पवमानदेशचात्वालशामित्रौदुम्बरीब्रह्मासनशालाद्वार्यप्राजहितान् सम्राडसीति प्रतिमन्त्रमिति[२]। सदो-द्वारस्य पूर्वभागेऽवस्थायाहवनीयादीन् सम्राडसीत्याद्यष्टमन्त्रैः क्रमेण निर्दिशेदिति सूत्रार्थः। तत्रादावाहवनीयम् हे उत्तरवेदि-गताहवनीय त्वं सम्राट् कृशानुश्चासि बहुविधाहुत्याधारत्वेन सम्यग्राजतइति सम्राट् पयोव्रतादिभिः कृशं क्षीणं यजमानमनु गच्छतीति कृशानुः ॥ बहिष्पवमानदेशम् हे बहिष्पवमानदेश त्वं परिषद्यः पवमानश्चासि स्तोतुं समेता ऋत्विजः परिषत् तद्योग्यः परिषद्यः अतएव शुद्धत्वात्पवमानः ॥ चात्वालम् हे चात्वाल त्वं नभोऽसि खनने छिद्ररूपत्वादाकाशः न भातीति वा।

समुद्रोऽसि विश्वव्यचा अजोऽस्येकपाद्दहिरसि बुध्न्यो वागस्यैन्द्रमसि सदोऽस्यृतस्य द्वारौ मा मा सन्ताप्तमध्वनामध्व

पते प्रमा तिर स्वस्ति मेऽस्मिन्पथि देवयाने भूयात् ॥ ३३ ॥

तथा प्रतक्वा प्रदक्षिणं तकन्ति गच्छन्ति ऋत्विजो यत्र स प्रतक्वा। तकतिर्गत्यर्थः अन्येभ्योऽपि दृश्यन्तइति वनिप्॥ शामित्रम् पशुविशसनप्रदेशः शामित्रशब्देनोच्यते हे शामित्र त्वं मृष्टोऽसि पशुविशसनस्य विहितत्वेनाशुद्धिहेतुत्वाभावात्सत्यपि विशसने शुद्धोऽसि यद्वा मृष्टः शृतत्वान्मिष्टः पक्वं हविर्मृष्टं भवति। तथा हव्यस्य हृदयाजिह्वादिरूपस्य हविषः सूदनः पाकहेतुश्चासि ॥ औदुम्बरीम् हे औदुम्बरि त्वमृतधामा ऋतं सामगानं धामोपवेशनस्थानं यस्याः सा। औदुम्बरीं स्पृष्ट्वोद्गायतीत्युक्तेः। स्वर्ज्योतिः उन्नतत्वेन स्वर्गं प्रकाशकः यद्वा सूर्यज्योतिः ॥ ३२ ॥

१—८,६,२१ । २—८,६,२२

पूर्वेणौदुम्बरीं मैत्रावरुणस्य होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान् ब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकानामिति[1]। होतुर्धिष्ण्यम् हे होतृधिष्ण्य वह्निर्हव्यवाहनश्चासि वहति यज्ञकर्म निर्वहतीति वह्निः हव्यं वहति देवान्प्रति हव्यवाहनः। यथाग्नीध्रीयधिष्ण्यस्य नामद्वयमुक्तम् तथा होत्रादिधिष्ण्यानामपि बोध्यम्। मैत्रावरुणधिष्ण्यम् हे मैत्रावरुणधिष्ण्य त्वं श्वात्रः प्रचेताश्चासि शु क्षिप्रं अततीति श्वात्रो मित्रः प्रकृष्टं चेतो ज्ञानं यस्य स प्रचेताः वरुणः तद्रूपोऽसि। ब्राह्मणाच्छंसिनः हे ब्राह्मणाच्छंसिधिष्ण्य त्वं तुथो विश्ववेदाश्चासि। ब्रह्म वै तुथ इति[2] श्रुतेः ब्रह्मरूपोऽसि। विश्वं वेत्ति विश्ववेदाः सर्वज्ञः। यद्वा तुथशब्देन देवान्प्रति दक्षिणानां विभागकर्ता पुरुष उच्यते तदाह तित्तिरिः तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजतीति ॥ २१ ॥

कविरङ्घारिरसिबम्भारिरवस्यूरसिदुवस्वाञ्छुन्ध्यूरसिमार्जालीयःसम्राडसिकृशानुःपरिषद्योसि

पवमानोनभोसिप्रतक्वामृष्टोसिहव्यसूदनऋतधामासिस्वर्ज्योतिः ॥ ३२ ॥

पोतुः। हे पोतृधिष्ण्य त्वमुशिक् कामनीयः कविः विद्वांश्चासि ॥ नेष्टुः। अङ्घस्यांहसः पापस्यारिरङ्घारिः बिभर्तीति बम्भारिः त्वं तद्रूपोऽसि हे नेष्टृधिष्ण्य। दिवि सोमरक्षकौ द्वावङ्घारिबम्भारी तथा च सोमरक्षकमन्त्रे स्वानभ्राजाङ्घारे बम्भारइत्याम्नातम्[3] ॥ अच्छावाकस्य। हे अच्छावाकधिष्ण्य त्वमवस्यूः दुवस्वान् चासि अवोऽन्नमिच्छतीत्यवस्युः। सुप आत्मनः क्यच् क्याच्छन्दसीति क्यजन्तादुप्रत्ययः दीर्घश्छान्दसः औणादिक ऊप्रत्ययो वा। दुवोऽस्यास्तीति दुवस्वान् हविष्मान् दुव इति हविर्नाम अच्छावाको हि पुरोडाशभागं लभते ॥ एवं होत्रादिधिष्ण्यान् सदसि निर्माय वेदेर्दक्षिणभागे मार्जालीयं निर्माति। तदाह का० आग्नीध्रार्द्दक्षिणं संप्रति

१—८,६,१८-२१। २—४,३,४,१५। ३—४ अ० २७ कं०।

हे रज्जो त्वमिन्द्रस्य सदोऽभिमानिदेवस्य सम्बन्धिनी स्यूः सीवनमसि सीव्यतेऽनया सा स्यूः क्विप् छ्वोः शूडनुनासिके चेति ऊडादेशः। द्वितीयः हे ग्रन्थे त्वमिन्द्रसम्बन्धी भूत्वा ध्रुवः स्थिरो भवसि। अथ तृतीयः हे सदः त्वमिन्द्रसम्बन्धि भवसि। का० हविर्धानापरान्तमुत्तरेणाग्नीध्रमग्न्यगारद्वारमन्तर्वेद्यर्धं भूयः सर्वं वा निष्ठाप्य वैश्वदेवमसीत्यालभतइति[१]। हविर्धानमण्डपस्यापरान्तो वायव्यकोणस्तस्योत्तरभागे किञ्चिदाग्नीध्रनामकमग्निस्थानं कृत्वा तस्य स्पर्शं कुर्यादिति सूत्रार्थः। हे आग्नीध्र त्वं सर्वदेवसम्बन्धि भवसि॥३०॥

इत उत्तरं षोडश धिष्ण्यमन्त्राः। तदाह का० धिष्ण्यान्निवपत्युद्धतावोक्षिते पुरीषं निवपति स्फ्येनान्वारब्ध उदङ् उपविश्य विभूरसीति प्रतिमन्त्रमिति[२]। अग्नीनामाश्रयभूता मृदा निर्मिताः स्वल्पवेदिका धिष्ण्यान्युच्यन्ते। का० आग्नीध्रीयं पूर्वमिति[३]। विभू-

इन्द्रस्यस्यूरसीन्द्रस्यध्रुवोसि। ऐन्द्रमसिवैश्वदेवमसि ॥ ३० ॥

विभूरसिप्रवाहणोवह्निरसिहव्यवाहनः। श्वात्रोसिप्रचेतास्तुथोसिविश्ववेदाः ॥ ३१ ॥

शब्दप्रवाहणशब्दावाग्नीध्रीयधिष्ण्यस्य नामनी। ते वै द्विनामानो भवन्तीति[४] श्रुतेः। अष्टयजुषां धिष्ण्या अग्नयो देवताः। हे आग्नीध्रीय धिष्ण्य त्वं विभूः प्रवाहणश्चासि विविधं भवतीति विभूः एतस्मादेव धिष्ण्यादितरधिष्ण्येष्वग्निविहरणादेतस्य विभूत्वम् प्रवाहयतीति प्रवाहणः तस्य हि दक्षिणोत्तरत ऋत्विजो गच्छन्ति हविषः प्रवाहयितृत्वाद्वा प्रवाहणत्वम्। धिष्ण्यगतानग्नीन् प्रत्यन्ये देवा ऊचुः प्रत्येकं स्वं नामधेयं सम्पादयतेति। तदाह तित्तिरिः। तान् देवा अब्रुवन् द्वे द्वे नाम्नी कुरुतेति। मैत्रावरुणहोतृब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकानां धिष्ण्यान् सदसि कुर्यात्। तदाह का० षट् सदसि प्रत्यङ्मुखा द्वारमपरेण होतुर्दक्षिण-

१——८,६,१३-१४। २——८,६,१५ ३——८,६,१६ ४——३,६,६,२२

का० ध्रुवासीति वाचयत्यौदुम्बरीमालभ्येति[1]। आलभनं स्पर्शनम्। हे औदुम्बरि त्वं ध्रुवासि स्थिरा भवसि त्वमिवायं यजमानोऽस्मिन्नायतने स्वकीये गृहे ध्रुवो भूयात्प्रजया पुत्रादिकया पशुभिः गवादिभिश्च सह स्थिरोऽस्तु। का० स्रुवेण विशाखे जुहोति घृतेनेति[2]। औदुम्बर्य्या विशाखे यस्मिन् प्रदेशे द्विधा शाखोत्पत्तिस्तत्र जुहुयादिति सूत्रार्थः। हूयमानेनानेन घृतेन द्यावापृथिवी द्यावापृथिव्यौ पूर्येथां पूरिते भवताम्। का० इन्द्रस्य छदिरिति मध्यमं छदिरारोप्येति[3]। औदुम्बरीनिखननादूर्ध्वं सदोनामकं मण्डपं निर्माय तस्योपरि प्रावरणाय मध्यं कटमारोपयेदिति सूत्रार्थः। छदिःशब्देन तृणनिर्मितः कट उच्यते। हे तृणमय कट त्वमिन्द्रस्य छदिरसि इन्द्रसम्बन्धी कटो भवसि अतस्त्वं विश्वजनस्य छाया भवेति शेषः। सदोमध्यवर्तिनः सर्वजनस्य यजमानर्त्विग्रूपस्य प्राणिनः प्रावरणाय* छाया भवेत्यर्थः। सदस इन्द्रदेवताकत्वेन तदीयछदिष इन्द्रसम्बन्धित्वम् ॥ २८ ॥

परि॑त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वन्तु वि॒श्वतः॑। वृ॒द्धायु॒मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः ॥ २९ ॥

का० परि त्वेति परिवार्येति[4]। परितः कुटावदारणं कृत्वेति सूत्रार्थः। ऐन्द्र्यनुष्टुबनिरुक्ता मधुच्छन्दोदृष्टा। गीर्भिः स्तुतिभिर्वननीयो भजनीयो गिर्वणा इन्द्रः सदोऽभिमानी। हे गिर्वण इन्द्र स्तोत्रशस्त्ररूपा गिरः त्वा त्वां विश्वतः सर्वतः कटरूपेण परि भवन्तु परिगृह्णन्तु। किम्भूतं त्वां वृद्धायुं वृद्धा आयवो मनुष्या यजमानादयो मरुतो वा यस्य तं यद्वा वृद्धः श्रेष्ठश्चासावायुश्च तं महामनुष्यम्। किम्भूताः गिरः अनुवृद्धयः अनु सवनक्रमेण वृद्धिर्यासां ताः शनैः प्रातःसवनं तत उच्चैर्माध्यन्दिनं सवनं तानस्वरेण तृतीयं सवनमिति क्रमः। किञ्च जुष्टयोऽस्मत्सेवास्तव जुष्टाः प्रियाः भवन्तु जुषी प्रीतिसेवनयोः जोषणं जुष्टिः ॥ २९ ॥

का० परिषीवणग्रन्थ्यभिमर्शनान्यैन्द्रैरिति[5]। इन्द्रदेवताकैस्त्रिभिर्मन्त्रैः परिषीवणादित्रयं कुर्य्यादिति सूत्रार्थः। तत्र प्रथमः

* प्रावरणेन क०। १——८,५,२५। २——८,५,३३। ३——८,६,१०। ४——८,६,१२। ५——८,६,२२।

मुत्तभान स्तभय ऊर्ध्वः सन् यथा न पतति तथा कुर्वित्यर्थः। अन्तरीक्षं पृण पूरय। पृथिव्यां दृंहस्व दृढ़ा भव यद्वा पृथिव्यामिति सप्तमी.द्वितीयार्थे पृथिवीं दृढ़ीकुरु। का० द्युतान इति मिनोतीति[१]। शाखां गर्ते प्रक्षिपतीति सूत्रार्थः। हे औदुम्बरि द्युतानः दीप्यमानो मारुतो वायुः ध्रुवेण स्थिरेण धर्म्मणा धारणेन त्वां मिनोतु गर्ते प्रक्षिपतु डुमिञ् प्रक्षेपे स्वादिः। तथा मित्रावरुणौ देवौ ध्रुवेण धर्म्मणा त्वां प्रक्षिपतामिति शेषः। का० पर्यूहणाद्योपसेचनात्कृत्वेति[२]। पर्यूहणमारभ्योपसेचनपर्यन्तं यथा यूपे कृतं तथात्रापि कुर्य्यादित्यर्थः। तत्र यूपस्थाने का० ब्रह्मवनि त्वेति पांशुभिः पर्यूहतीति[३]। हे औदुम्बरि त्वा त्वां पर्यूहामि परितो मृत्तिकां

ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्य्यूहामि ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह ॥ २७ ॥

ध्रुवासि ध्रुवोयं यजमानोस्मिन्नायतने प्रजया पशुभिर्भूयात्।

घृतेन द्यावापृथिवी पूर्य्येथामिन्द्रस्य छदिरसि विश्वजनस्य छाया ॥ २८ ॥

क्षिपामि किम्भूतां त्वां ब्रह्मवनि ब्रह्म ब्राह्मणजातिं वनति सम्भजत इति ब्रह्मवनिः क्षत्रं क्षत्रियजातिं वनतीति क्षत्रवनिः रायो धनस्य पोषं पुष्टिं वनतीति रायस्पोषवनिः सर्वत्र सुपां सुलुगिति विभक्तेर्लुक्। का० ब्रह्म दृंहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यृषतीति[४]। परितो दृढ़ीकुर्य्यादिति सूत्रार्थः। हे औदुम्बरि ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजातिमायुः जीवनं प्रजां पुत्रादिरूपां च दृंह दृढ़ीकुरु ॥ २७ ॥

१——८,५,३८ २——८,५,३५। ३——६,३,१०। ४——६,३,११।

खननवद्भिस्त्रोकारमारभ्य दर्भास्तरणपर्यन्तान् पदार्थान्मन्त्रैरेव कुर्यादिति सूत्रार्थः। यूपावटप्रदेशे का० देवस्य त्वेत्यभ्रिमादायेति[1]। व्याख्यातं यजुः। का० यूपावटं परिलिखतीदमहमिति[2]। एतदपि व्याख्यातम्। का० यवोऽसोत्यस्य यवानोप्येति[3]। यवदैवत्यं. हे धान्यविशेष त्वं यवोऽसि यौति पृथक्करोतीति यवः यस्मात् द्वेषो द्विष्टान् शत्रून् द्वेषो दौर्भाग्यं वा अस्मत् अस्मत्तो यवय पृथक्कुरु तथा अरातीः अदानानि च यवय पृथक्कुरु। अनेन सौभाग्यं धनं च प्रार्थ्यतइति भावः। का० प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रं प्रोक्षामीति सर्वत्र साकाङ्क्षत्वादिति[4]। तत्र प्रथमो मन्त्रः हे औदुम्बर्यग्रभाग दिवे द्युलोकप्रीत्यर्थं त्वा त्वां प्रोक्षामीति शेषः। द्वितीयः हे मध्यभाग अन्तरिक्षायान्तरिक्षलोकप्रीत्यै त्वां प्रोक्षामि। अथ तृतीयः हे मूलभाग पृथिव्यै पृथिवीप्रीत्यै त्वां प्रोक्षामि।

**यवोसियवयास्मद्द्वेषोयवयाराती र्दिवेत्वान्तरिक्षायत्वापृथिव्यैत्वाशुन्धन्तांल्लोकाःपितृषदनाःपितृषदनमसि॥ २६॥**

**उद्दिवꣳस्तभानान्तरिक्षम्पृणदृꣳहस्वपृथिव्यान्द्युतानस्त्वामारुतोमिनोतुमित्रावरुणौध्रुवेणधर्मणा।**

का० अवटे शेषमासिञ्चति शुन्धन्तामिति[5]। हे यजुषो पित्र्यो पितरः सीदन्ति येषु लोकेषु ते पितृषदनाः लोकाः शुन्धन्तामनेनोदकसेचनेन शुद्धा भवन्तु। खननेनोत्पन्नस्य क्रौर्यस्य शान्त्यर्थमिदमुदकसेचनम्। तदाह तित्तिरिः। क्रूरमिव वा एतत्करोति यत्खनति यत्पयोऽवनयति शान्त्यै तदिति। का० बर्हींषि प्रागुदञ्चि च प्रास्यति पितृषदनमसीति[6]। तस्मिन्नवटे प्रागग्रानुदगग्रांश्च दर्भानास्तृणातीति सूत्रार्थः। पितरः सीदन्त्युपविशन्ति यस्मिन् तत्पितृषदनम्। हे बर्हिः त्वं पितृषदनमसि॥ २६॥

का० उद्दिवमित्युच्छ्रयतीति[7]। उच्छ्रयणमूर्ध्वाग्रत्वेन स्थापनम्। पञ्च यजूंष्योदुम्बरीदैवत्यानि। हे औदुम्बरि त्वं दिवं द्युलोक-

१—६,२,८। २—६,२,९। ३—६,२,१५। ४—६,२,१५-१६। ५—६,२,१७। ६—६,२,१८। ७—८,५,२३।

अधिषवणफलके तयोरुभयोर्मध्ये द्व्यङ्गुलव्यवहिते अरत्निप्रमाणे संतृणे ईषद्व्यन्यनोपेते चतुर्णां गर्तानामुपरि स्थापयेत् तयोः परितो मृदा छिद्रपिधानं कुर्यादित्यर्थः । तत्रोपधानमन्त्रः यावधिषवणफलकविशेषौ रक्षोहणौ रक्षसां नाशकौ वलगहनौ कृत्याविनाशकौ वैष्णवी वैष्णवौ विष्णुदेवताकौ लिङ्गव्यत्ययः तौ वां युवामहमुपदधामि द्वयोर्गर्तयोरुपरि एकैकं फलकं स्थापयामि ॥ अथ पर्यूहण-मन्त्रः पर्यूहामि मृदा परितश्छादयामि अन्यत् पूर्ववत् । का॰ तयोश्चर्माधिषवणं परिकृत्तं सर्वरोहितं निदधाति वैष्णवमसीति[1] । यस्मिंश्चर्मणि सोमोऽभिषूयते तच्चर्माधिषवणाख्यम् अग्रभागे छिन्नं सर्वमपि लोहितवर्णं तयोः फलकयोरुपरि स्थापयेदिति सूत्रार्थः ।

रक्षोहणौवांवलगहनाउपदधामिवैष्णवीरक्षोहणौवां

वलगहनौपर्य्यूहामिवैष्णवीवैष्णवमसिवैष्णवास्थ ॥ २५ ॥

देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् । आददेनार्य्यसीदमहꣳरक्षसाङ्ग्रीवाअपिकृन्तामि

हे चर्म त्वं वैष्णवमसि यज्ञरक्षकविष्णुसम्बन्धि भवसि । का॰ तस्मिन् ग्राव्णः पञ्च वैष्णवा स्थेति[2] । निदधातीत्यनुवर्तते तस्मिंश्चर्मणि सोमाभिषवहेतून् पञ्च पाषाणान् स्थापयेदिति सूत्रार्थः । हे ग्रावाणो यूयं वैष्णवा स्थ यज्ञरक्षकविष्णुसम्बन्धिनो भवथ ॥ २५ ॥

इत उत्तरमौदुम्बरीमन्त्राः । का॰ औदुम्बरीं मिनोति यजमानमात्रीं यूपवच्छेदाद्यादि करोत्यन्वस्तरणादिति[3] । उदुम्बर-वृक्षादुत्पन्नां काञ्चिच्छाखां यजमानदेहमितां सदोमण्डपमध्ये निखनेत् सा च शाखा निखननात्पूर्वं यूपवद्भूमौ शयिला वर्तते यूपावट-

१—८.५.२६। २—८.५.२७। ३—८.५.३१-३२

का० स्वराडित्यभिमर्शयति यथाखातं प्रतिमन्त्रमिति[1] । खननक्रमेण चतुर्षु गर्तेषु यजमानहस्तस्य स्पर्शं चतुर्भिर्मन्त्रैः कारयेदिति सूत्रार्थः । चत्वारि यजूंषि औपरवाणि । तत्र प्रथमं हे प्रथमगर्त त्वं स्वराडसि स्वेनैव राजतइति स्वराट् स्वयमेव राजमानो भवसि अतः संपत्नहा शत्रुघाती भवेति शेषः । अथ द्वितीयम् सत्रराट् सत्रेषु द्वादशाहादिषु राजतइति सत्रराट् अभिमातिहा शत्रुघाती । अथ तृतीयम् जनराट् जनेषु यजमानेषु राजतइति जनराट् रक्षोहा यज्ञविनाशकराक्षसघाती । अथ चतुर्थम् सर्वराट् सर्वेषु राजतइति सर्वराट् अमित्रहा शत्रुघाती ॥ २४ ॥

का० प्रोक्षत्येनान् रक्षोहण इति भेदे मन्त्रावृत्तिरिति[2] । चतुरो गर्तान्मन्त्रेण प्रोक्षेत् तस्य मन्त्रस्य गर्तभेदे सत्यावृत्तिः कर्तव्येति

**स्वराडसिसपत्नहासत्रराडस्यभिमातिहाजनराडसिरक्षोहासर्वराडस्यमित्रहा ॥ २४ ॥**

**रक्षोहणोवोवलगहनःप्रोक्षामिवैष्णवान्रक्षोहणोवोवलगहनोवनयामिवैष्णवान्रक्षोहणोवोवलग**

सूत्रार्थः । सप्त यजूंषि वैष्णवानि । वैष्णवान्विष्णुदेवताकान् गर्तान्वो युष्मान् प्रोक्षामि कीदृशान् रक्षोहणो राक्षसहन्तॄन्वलगहनः अभिचारसाधनहन्तॄन् । का० अवनयनेऽवस्तरणे चावटवद्रक्षोहणो रक्षोहण इति[3] । गर्तेषु प्रोक्षणशेषोदकसेचनमवनयनं दर्भैराच्छादनं संस्तरणं तयोर्द्वयोरपि क्रिययोर्गर्तभेदात्तन्मन्त्रावृत्तिर्द्रष्टव्येति सूत्रार्थः । तत्रावनयनमन्त्रः अवनयामि सिञ्चयामि अन्यत् पूर्ववत् । अथावस्तरणमन्त्रः अवस्तृणामि दर्भैराच्छादयामि अन्यत्पूर्ववत् । का० तन्नुपरि कुशान् कृत्वाधिषवणे फलके द्व्यङ्गुलान्तरे प्रक्षालिते प्राचीअरत्निमात्रे सन्तृणे वोपदधाति पर्यूहति च रक्षोहणौ रक्षोहणाविति[4] । ययोः फलकयोरुपरि सोमोऽभिषूयते ते द्वे

१——८,५,१३ । २——८,५,२२-२३ । ३——८,५,२४ । ४——८,५,२५ ।

सम्बन्धिनीम्। इदृशीं वाचमिन्द्राय वदेति सम्बन्धः। का० इदमहमित्युत्किरति यथाखातं प्रतिमन्त्रमिति[1]। येन क्रमेण चत्वारो गर्ताः खातास्तेन क्रमेण चतुर्भ्यो गर्तेभ्यः खातं मृत्तृणादिकं चतुर्भिर्मन्त्रैरुत्किरेदिति सूत्रार्थः। ष्ट्यै स्त्यै शब्दसङ्घातयोः नितरां स्त्यायति सङ्घातरूपेण सह वर्ततइति। निष्ट्यः यद्वा निर्गत्य शरीरात्स्त्यायति विस्तीर्णो भवतीति निष्ट्यः पुत्रादिः यद्वा निर्गतो वर्णाश्रमेभ्यो निष्ट्यः चण्डालादिः निसो गत इति वार्त्तिकेन निस उपसर्गात् गतार्थे त्यप् इति काशिकायाम्। अमाशब्दो गृहार्थः सहार्थो वा। अमा गृहे सह वा भवोऽमात्यः अव्ययात्त्यबिति भवार्थे त्यप्। धनिकस्य स्वामिनो धनगृहादिनिर्वाहकोऽमात्यः। केनापि निमित्तेन कुपितः पुत्रोऽमात्यो वा मे मह्यं मद्वधार्थं यं वलगं निचखान निखातवान् तं वलगमहमुत्किरामि उद्वपामि उद्धृत्यान्यत्र परित्यजामि।

मुत्किरामियम्मेसमानोयमसमानोनिचखानेदमहन्तंवलगमुत्किरामियम्मेसबन्धुर्यमसबन्धुर्निचखानेदमहन्तं

वलगमुत्किरामियम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ॥ २३ ॥

इदं शब्दः क्रियाविशेषणम् इदं प्रत्यक्षं यथा भवति तथोद्वपामीत्यर्थः। द्वितीयमुत्किरति समानो धनकुलादिभिः सदृशः असमानो न्यूनोऽधिको वा अन्यत्पूर्ववत्। तृतीयमुत्किरति सबन्धुः कुलशीलादिभिः समानो मातुलपैतृष्वसेयादिः तद्विपरीतोऽसबन्धुः अन्यत्पूर्ववत्। चतुर्थमुत्किरति सजातः समानजन्मा भ्राता तद्विपरीतोऽसजातः अन्यत्पूर्ववत्॥ का० उत्कृत्यां किरामीति पश्चात् सर्वेभ्य इति[2]। असाधारणैर्मन्त्रैः पूर्वोक्तक्रमेणोत्किरणं कृत्वा पश्चात्साधारणेन मन्त्रेण चतुर्भ्यो गर्तेभ्य उत्किरेदिति सूत्रार्थः। येयं कृत्या शत्रुभिरभिचरद्भिः सम्पादिता वलगरूपा तामुत्किरामि उद्धृत्य दूरे क्षिपामि ॥ २३ ॥

१——८,५,८। २——८.५,९

प्रसवे वर्त्तमानः सन्नश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे स्वीकरोमि ॥ त्वं तु नार्यसि खननसाधनत्वेन कर्मोपयोगित्वान्नराणां पुरुषाणामनुष्ठातॄणां सम्बन्धिनी भवसि ॥ का० यूपावटं परिलिखतीदमिति[1] । यदहं चतुरोऽवटान्परिलिखामि । इदमिति विभक्तिव्यत्ययः । अनेन परिलेखनेन रक्षसां यज्ञघ्नानां ग्रीवा अपिकृन्तामि कण्ठप्रदेशान् छिनद्मि । का० बृहन्नसीति यथापरिलिखितं खनतीति[2] । आग्नेयीं विदिशमारभ्य चतसृषु विदिक्षु चतुर उपरवान् खातुं भूमिः परिलिखिता । तेन परिलेखनक्रमेण वटान् खनेदिति सूत्रार्थः । हे उपरवाख्य गर्त त्वं बृहन्नसि महान् भवसि वर्तुलस्य गर्तस्य प्रादेशपरिमाणेन विस्तृतत्वाद्बाहुपरिमाणेन खातत्वाच्च महत्त्वम् । तथा त्वं बृहद्रवाः बृहन्महान् रवो ध्वनिर्यस्य सः । सकारान्तो रवस् शब्दः । खातुं भूमौ प्रहारे महान् ध्वनिर्भवतीत्यर्थः । तस्मात्त्वमिन्द्रायेन्द्रप्रीत्यर्थं बृहतीं वाचं वद प्रौढध्वनियुक्तं वाक्यं वद ॥ २२ ॥

**रक्षोहणंवलगहनंवैष्णवीमिदमहन्तंवलगमुत्किरामियम्मेनिष्ट्योयममात्योनिचखानेदमहन्तंवलग**

किम्भूतां वाचम् रक्षोहणं रक्षांसि हन्तीति रक्षोहा ताम् रक्षोवधविषयाम् । तथा वलगहनम् वलगान् हन्तीति वलगहा ताम् । बहुलं छन्दसीति क्विप् । पराजयं प्राप्य पलायमानै राक्षसैरिन्द्रादिवधार्थमभिचाररूपेण भूमौ निखाता अस्थिकेशनखादिपदार्थाः कृत्याविशेषा वलगाः । वलगो वृणोतेरिति[3] यास्कः । यस्य वधार्थं क्रियते तं वृणुन्नाच्छादयन् गच्छतीति वलगः । ते वलगा बाहुमात्रे खातास्ततस्तदुद्धारार्थमुपरवस्य तावन्मात्रखननम् । तान् बाहुमात्रान् खनेदिति[4] श्रुतिः । तदाह तित्तिरिः । असुरा वै निर्यन्तो देवानां प्राणेषु वलगान् न्यखनन् तान् बाहुमात्रे न्वविन्दन् तस्माद्बाहुमात्राः खायन्त इति । तथा वैष्णवीं यज्ञरक्षकस्य विष्णोः

१—६,३,८ । २—८,५,१ । ३—निरु० ६,२ । ४—३,५,४,९ ।

धारतिर्यग्वंश वै सम्बोध्य पुरुषललाटत्वेनोपचर्य्यते । हे दर्भमयमालाधार वंश त्वं विष्णोः विष्णुमूर्तित्वेनोपचरितस्य हविर्धान-मण्डपस्य रराटमसि ललाटस्थानीयोऽसि ॥ का० विष्णोः श्नप्त्रे स्थ इत्युच्छ्राय्याविति[१] । उच्छ्राय्यौ रराटीप्रान्तावुपस्पृश्य वाचये-दित्यर्थः । हे रराटान्तौ युवां विष्णोः विष्णुनामकस्य हविर्धानमण्डपस्य श्नप्त्रे स्थः ओष्ठसन्धिरूपे भवथः ॥ का० द्वार्य्याः परिषीव्यति-लस्पूजनिप्रतिहृतया रज्ज्वा विष्णोः स्यूरसीति[२] । दृहत्सूचिसमर्पितया रज्ज्वा द्वारशाखाः सीव्यतीति सूत्रार्थः । हे लस्पूजनि त्वं विष्णोर्हविर्धानस्य स्यूरसि । सीव्यन्त्यनेनेति स्यूः सूचिः । षिवु तन्तुसन्ताने । क्विपि च्छोः शूडनुनासिके चेति वस्योडादेशः ॥ का० विष्णोर्ध्रुवोऽसीति ग्रन्थिं करोतीति[३] । हे रज्जुग्रन्थे त्वं विष्णोः हविर्धानस्य ध्रुवोऽसि ग्रन्थिर्भवसि । का० प्राग्वंशं हविर्धानं

देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ।

आददेनार्य्यसीदमहꣳरक्षसांग्रीवाअपिकृन्तामिबृहन्नसिबृहद्रवाबृहतीमिन्द्रायवाचंवद ॥ २२ ॥

निष्ठाप्य वैष्णवमसीत्यालभतइति[४] । प्रागग्रैर्वंशैर्मण्डपं निर्म्मायानेन मन्त्रेण स्पृशेदिति सूत्रार्थः । हे हविर्धान त्वं वैष्णवमसि विष्णुदेवताकत्वेन तत्सम्बन्धि भवसि । तस्माद्विष्णवे विष्णुप्रीत्यर्थं त्वा त्वां स्पृशामीति शेषः ॥ २१ ॥

इत उत्तरमुपरवमन्त्रा देवस्य त्वेत्यस्मात् प्राक् ॥ का० दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवानभ्र्यादि करोत्यवटवदिति[५] । यथा यूपस्यावटः क्रियते तथात्राप्युपरवनामकांश्चतुरो गर्तानभ्रिस्वीकारमारभ्य परिलेखनपूर्वकं कुर्य्यादित्यर्थः । अवटार्थमभ्रिस्वी-कारमेवाह ॥ का० देवस्य त्वेत्यभ्रिमादायेति[६] । अभ्रिशब्देन काष्ठनिर्मितं खननसाधनमुच्यते । अभ्रिर्देवता । हे अभ्रे सवितुर्देवस्य

१—८,४,१६ । २—८,४,१८ । ३—८,४,१९ । ४—८,४,२१ । ५—८,४,२५: ५१ । ६—६,२,८ ।

का० प्र तद्विष्णुरिति वाचयति मध्यमं छदिरालभ्येति[1]। तत् स प्रसिद्धो विष्णुः वीर्येणासाधारणवीरकर्म्मणा प्रस्तवते प्रस्तूयते सर्वैरिति शेषः। तदिति लिङ्गव्यत्ययः। प्रस्तवते इत्यत्र व्यत्ययेन यकः स्थाने शप्प्रत्ययः। किम्भूतो विष्णुः। मृजूष् शुद्धौ मार्ष्टि शोधयतीति मृगः। नोऽनर्थकः पादपूरणः। भीमः बिभेत्यस्मादसौ भीमः। भीमादयोऽपादानइति मप्रत्ययः। कुचरः कौ पृथिव्यां मत्स्याद्रिरूपेण चरतीति। गिरिष्ठाः गिरि वेदवाख्यां गिरौ देहे वान्तर्यामिरूपेण तिष्ठतीति गिरिष्ठाः। अथवा न इवार्थः। गिरिष्ठाः पर्वतस्थितः कुचरः कुत्सितचारी प्राणिवधजीवनो भीमः भयङ्करो मृगो न सिंह इव स यथा वीर्येण स्तूयते तद्वत्। स कौ विष्णु-

**प्रतद्विष्णुस्तवतेवीर्य्येणमृगोनभीमःकुचरोगिरिष्ठाः। यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियन्तिभुवनानिविश्वा॥२०॥**

**विष्णोररराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि। वैष्णवमसिविष्णवेत्वा॥ २१॥**

रित्याह। यस्य विष्णोरुरुषु प्रभूतेषु त्रिषु विक्रमणेषु पादप्रक्षेपणस्थानेषु लोकेषु विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अधिक्षियन्ति अधिनिवसन्ति। स स्तूयतइत्यर्थः॥ २०॥

का० विष्णो रराटमिति रराटमसिति[2]। वाचयतीत्यनुवर्तते। हविर्धानाख्ये द्वे शकटे दक्षिणोत्तरभागयोः स्थापयित्वा तदावरकत्वेन परितो हविर्धानाख्यं मण्डपं* कुर्यात् स च मण्डपो विष्णुदेवताकत्वाद्विष्णुरित्युपचर्यते। विष्णोश्च मूर्तिधरस्य सर्वावयवसद्भावाल्ललाटाख्योऽवयवोऽस्ति। तद्वद्धविर्धानमण्डपस्यापि पूर्वद्वारवर्तिस्तम्भयोर्मध्ये काचिद्दर्भमाला ग्रथ्यते। तां मालां तद्बन्धना-

१——८,४,१३। २——८,४,१५। * "मण्डपं कुर्यं" क०।

स्तोभितवान्। स ह देवा तिष्ठन्ति यस्मिन् तत्सधस्थम्। सधमादस्थयोश्छन्दसीति सहस्य सधादेशः। स्कभ रोधने। क्र्यादिभ्यः श्ना। हलः श्नः शानज्झाविति हेरनुवृत्तौ छन्दसि शायजपीति यद्यपि हौ परे श्नाप्रत्ययस्य शायजादेशो विहितस्तथाप्यत्र व्यत्ययो बहुलमिति लङ्यपि श्नः शायजादेशे अस्कभायदिति रूपम्। कीदृशो विष्णुः। त्रेधा विचक्रमाणस्त्रिषु लोकेष्वग्निवायुसूर्यरूपेण पदत्रयं निदधानः। विपूर्वस्य क्रमतेर्लिटः कानज्वेति कानचि रूपम्। तथा उरुगायः उरुर्गायो गमनं यस्य उरुभिर्महात्मभिर्गीयत इति वा॥ का० दक्षिणतः स्थूणामुपनिहन्ति विष्णवे त्वेति[1]। हे स्थूणे काष्ठ विष्णवे हविर्धानशकटाभिमानिविष्णुप्रीत्यर्थं त्वां निहन्मि निखनामीतिं शेषः॥ १८॥

दिवोवाविष्णउतवापृथिव्यामहोवाविष्णउरोरन्तरिक्षात्।

उभाहिहस्तावसुनापृणस्वाप्रयच्छदक्षिणादोतसव्याद्विष्णवेत्वा॥ १९॥

का० दिवो वेत्युत्तरं प्रतिप्रस्थातोत्तरस्थूणं पूर्ववदिति[2]। यथाध्वर्युर्दक्षिणशकटं मन्त्रेणोपष्टभ्य विष्णवे त्वेति स्थूणां निखातवानेवं प्रतिप्रस्थातोत्तरशकटे कुर्यादिति सूत्रार्थः। हे विष्णो दिवो द्युलोकादुत अपि च पृथिव्याः भूलोकात् वापि च महो महतः उरोर्विस्तीर्णादन्तरिक्षलोकाद्वा समानीतेन वसुना द्रव्येण उभा हि हस्ता उभावपि स्वकीयौ हस्तौ पृणस्व पूरयस्व। ततो धनपूर्णाद्दक्षिणादुत सव्याद्वामाद्धस्तात् आ प्रयच्छ बहुत्वत्व आहृत्य प्रकृष्टं मणिमुक्तादिधनमस्मभ्यं देहि। विष्णवे त्वेत्ययं मन्त्रः पूर्ववत्॥ १९॥

[1]——८,४,७। [2]——८,४,८-९।

रहितं मा उच्चारयतम्। प्रजां मा निर्वादिष्टं यजमानस्य प्रजां पुत्रादिरूपां मा निराकार्ष्टम्। अनेनाचशब्देनायुःप्रजयोर्निराकरणं मा भूदिति भावः। उभयबद्धो योऽक्षः स दुरवाक् वरुणदेवरूपः। तदाह श्रुतिः। वरुणो वाएष दुर्वागुभयतो बद्धो यदक्ष इति[1]। तस्माच्छापरूपदुर्वाक्यपरिहारायाशीर्वादरूपं सुवाक्यमनेन मन्त्रेण प्रार्थ्यते ॥ का० पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्या वानभ्यस्थेऽभिमन्त्रयतेऽत्र रमेथामिति[2]। वेदिनिकटस्थापिते उभे शकटे अभिमन्त्रयेदिति सूत्रार्थः। हे शकटे पृथिव्याः वर्ष्मन् वर्ष्मणि भूमेः शरीरभूतेऽत्रास्मिन्देवयजने युवां रमेथां क्रीडां कुरुतां* वर्ष्मणि स्तीर्णे वा। सुपां सुलुगिति ङेर्लोपे न ङिसम्बुद्ध्योरिति नलोपाभावः। देवयजनस्य भूमेः शरीरत्वं तित्तिरिणोक्तम्। वर्ष्म ह्येतत् पृथिव्या यद्देवयजनमिति ॥ १७ ॥

विष्णोर्नुकंवीर्य्याणिप्रवोचंयःपार्थिवानिविममेरजाꣳसि।

योअस्कभायदुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्वा। १८।

का० उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति विष्णोर्नु कमिति[3]। दक्षिणशकटस्याग्रं वोढुमाधारभूतं काष्ठं स्थापयेदित्यर्थः। तिस्रो वैष्णव्यस्त्रिष्टुभः आद्ये यजुरन्ते। विष्णवे त्वेति यजुः। नुकमित्यव्ययमवधारणार्थम्। विष्णोरेव वीर्याणि कर्म्माण्यहं प्रवोचं प्रब्रवीमि! प्रपूर्वस्य वचेर्लुङि रूपं वचेरुम् अडभावः। कानि कर्म्माणीत्याह। यो विष्णुः पार्थिवानि रजांसि पृथिव्यन्तरिक्षद्युलोकस्थानानि विममे निर्ममे। लोका रजांस्युच्यन्तइति[4] यास्कोक्तेः रजःशब्दो लोकवाचकः। यद्वा यः पार्थिवानि रजांसि पार्थिवपरमाणून्विममे अरिगणितवान्। यश्च विष्णुरुत्तरमुपरितनं सधस्थं देवानां सहवासस्थानं द्युलोकरूपमस्कभायत् यथाधो न पतति तथा

* "कुर्वन्तम्" क०। १——३,५,३,१८ २——८,४,५। ३——८,४,६। ४——निरु० नै० ४,१९।

का० दक्षिणया द्वारानीता पत्नी पाणिभ्यां शेषं प्रतिगृह्याक्षधुरावनक्ति पराग्देवश्रुताविति[1]। प्रतिप्रस्थात्रा समानीता पत्नी होमशेषेणाज्येनाक्षस्योभावग्रभागावञ्ज्यादिति सूत्रार्थः। अक्षधुरौ देवते। देवेषु श्रूयेते देवश्रुतौ शृणोतेः क्विप् तुगागमश्च। हे देवश्रुतौ देवसभायां प्रसिद्धे अक्षधुरौ अक्षाग्रभागौ युवां यजमानोऽयं यक्ष्यतीति देवेषु आघोषतम् उच्चध्वनिना कथयतम। घुषिर् शब्दे ॥ का० प्राची प्रेतमिति वाचयतीति[2]। हविर्धानाख्ये यदा प्रवर्तेते तदा यजमानं वाचयेदिति सूत्रार्थः। त्रयाणां यजुषां हविर्धाने देवते। हे उभे शकटे युवां प्राची प्राङ्मुखे प्रेतं प्रकर्षेण गच्छतम् प्राञ्चतस्ते प्राची। किंभूते युवाम्। अध्वरं कल्पयन्ती इदं कर्म समर्थं कुर्वाणे। किञ्च यज्ञमिममूर्ध्वं नयतमुपरिवर्तिदेवान् प्रति प्रापयतम्। मा जिह्वरतं मा कुटिले भवतं ह्वृ कौटिल्ये

देवश्रुतौ देवेष्वाघोषतम्प्राची प्रेतमध्वरङ्कल्पयन्तीऊर्ध्वं यज्ञन्नयतम्मा जिह्वरतम्।

स्वङ्गोष्ठमावदतन्देवीदुर्ये आयुर्म्मा निर्व्वादिष्टम्प्रजाम्मा निर्व्वादिष्टमत्र रमेथांवर्ष्मन्पृथिव्याः ॥ १७ ॥

णिजन्तस्य लुङि रूपम्। यद्वा ह्वल चलने मा चलतम्॥ का० स्वं गोष्ठमिति च खर्जतीति[2]। प्रवर्त्यमानयोः शकटयोरक्षे खर्जति ध्वनिं कुर्वति सति स्वं गोष्ठमिति यजमानं वाचयेदिति सूत्रार्थः। दुर्यशब्दो गृहवाची। गृहा वै दुर्या इति[4] श्रुतेः। तेन गृहसदृशे शकटे लक्ष्येते। हे दुर्ये देवी गृहसदृशशकटद्वयरूपे देवते स्वं गोष्ठं स्वकीयं गोस्थानमावदतं सर्वतः कथयतं योऽयमक्षशब्दस्तेन यजमानस्य गृहं बहूनां गवां यथा स्थानं भवति तथा कथयतमित्यर्थः युवाभ्यामुच्चारितं तथैव स्यादिति भावः। किञ्च आयुर्मा निर्वादिष्टं यजमानस्यं यावदायुरस्ति तावत्सर्वं मा निराकार्ष्टम्। वदतेर्लुङि मध्यमद्विवचने रूपम्। यद्वा निकृष्टं पशुधनादि-

१—८,२,३२ २—८,३,२। ३—८,३,६। ४—३,५,३,१८।

पदं पद्यते ज्ञायतइति पदमद्वैताख्यं स्वरूपं समूढमन्तर्हितमज्ञातमक्तताल्मभिः । कस्मिन्निव । पांसुरे इव लुप्तोपमानं पांसुले रजस्वले प्रदेशे निहितं यथा न ज्ञायते तद्वत् । तदुक्तं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इति[१] । स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ १५ ॥

का० स्रुक्स्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावतीइति पूर्ववदिति[२] । यथा दक्षिणशकटदक्षिणचक्रमार्गे अध्वर्युर्हुतवान् तथा उत्तरशकटसम्बन्ध्युत्तरचक्रमार्गे प्रतिप्रस्थाता जुहुयादिति सूत्रार्थः । वैष्णवी त्रिष्टुब्वसिष्ठदृष्टा । हे रोदसी द्यावापृथिव्यौ युवामीदृश्यौ भूतं भवतम् भवतेर्लुङि मध्यमद्विवचने रूपम् अड्भावश्छान्दसः । किंभूते युवाम् । इरावती इरावत्यौ अन्नवत्यौ सस्यवत्यौ ।

इरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ।

व्यस्कभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैःस्वाहा ॥ १६ ॥

धेनुमति बहुधेनुयुक्ते । सुयवसिनी सुष्ठु यवसानि विद्यन्ते ययोस्ते सुयवसिनी । यवसशब्देनात्राभ्यवहार्याणि वस्तूनि । तथा मनवे दशस्या । मनुते जानातीति मनुर्ज्ञानवान्यजमानः तस्मै दशस्या दात्री यज्ञसाधनानाम् । दाश दाने दाशतस्ते दशस्या । असुन् प्रत्यये उपधाह्रस्वः औविभक्तेर्यादेशश्च । एवं द्यावापृथिव्यौ सम्प्रार्थ्य विष्णुमाह । हे विष्णो एते रोदसी त्वं व्यस्कभ्नाः विभज्य स्तम्भितवानसि । किञ्च पृथिवीं मयूखैः स्वतेजोरूपैर्नानाजीवैर्वराहाद्यनेकावतारैर्वा अभितो दाधर्थ दधर्थ सर्वतो धारितवानसि । तुजादीनां दीर्घोऽभ्यासस्येत्यभ्यासदीर्घः । स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ १६ ॥

१—६श०५ । २—८,३,३५ ।

एव विदधे ससर्ज। किम्भूत एकः। वयुनावित् वयुनं वेत्तिः कान्तिर्वा प्रज्ञा वेति[1] यास्कोक्तेर्वयुनं प्रज्ञां सर्वभूतानां मनोवृत्तिं वेत्तीति वयुनवित्‌ संहितायां दीर्घः सर्वधीसाक्षीत्यर्थः। नन्वेकस्य सर्वसृष्टौ कथं सामर्थ्यम्। तत्राह। यतः सवितुः प्रेरकस्यान्तर्यामिणो देवस्य परिष्टुतिः सर्वदोक्ता स्तुतिः मही महती। तथा चाथर्वणिकाः। यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति। बृहदारण्यकेऽपि स एव सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्चेति[2]। श्वेताश्वतराश्च। परस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति। यद्वास्य मन्त्रस्यार्थान्तरम्। विप्रा ऋत्विजो विपश्चितो यज्ञस्य। कर्म्मणीति शेषः। मनो धियो वाचश्च युञ्जते प्रयुञ्जते। यज्ञो वै विपश्चिदिति[3] श्रुतेः। किम्भूतस्य विपश्चितः विप्रस्य विशेषेण प्राति पूरयति फलमिति विप्रस्तस्य। फलदानं प्रति प्राप्तक्रियाशक्तेः। प्रा पूर्त्तौ। तथा बृहतः महतः सर्वसाधनसम्पन्नस्य। होत्रा होतारः सप्त वषट्-

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाᳪं᳖सुरे स्वाहा॥ १५॥

कर्तारः विदधे विदधते स्वस्वकर्म्मणीति शेषः। पुरुषवचनव्यत्ययः। तन्मध्ये वयुनाविदेक इत् त्रिवेदज्ञानवान् ब्रह्माख्य एक एव। सवितुर्देवस्य मही महती परिष्टुतिः स्तवनम्। ब्रह्माद्या ऋत्विजो यत्कर्म्म कुर्वते तत्सवितुः प्रेरणेनैवेति सवितुर्महती स्तुतिरित्यर्थः॥१४॥

का० दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोतीदं विष्णुरिति[4]। दक्षिणशकटसम्बन्धिदक्षिणचक्रमार्गे हिरण्यं निधाय तत्रैव होमः विष्णुदेवत्या गायत्री मेधातिथिदृष्टा। विष्णुः त्रिविक्रमावतारं कृत्वा इदं विश्वं विचक्रमे विभज्य क्रमते स्म। तदेवाह। त्रेधा पदं निदधे भूमावेकं पदमन्तरिक्षे द्वितीयं दिवि तृतीयमिति क्रमादग्निवायुसूर्यरूपेणेत्यर्थः। पांसवो भूम्यादिलोकरूपा विद्यन्ते यस्य तत्पांसुरं तस्मिन् पांसुरे अस्य विष्णोः पदे समूढं सम्यगन्तर्भूतं विश्वमिति शेषः। यद्वायमर्थः। अस्य विष्णोः

१——निरु० नै० ५,१४। २——मा० ४,२,२४। का० ४,४,२२। ३——३,५,२,११। ४——८,३,३१।

अस्ति तावत्प्राचीनवंशा शाला। तस्यामाहवनीयाद्यग्नित्रयमैष्टिकवेदिश्चास्ति। तस्याः शालायाः पुरतः षट्त्रिंशत्पददीर्घा सौमिकी वेदिर्विधेया। तद्वेद्या अग्रभागे पूर्व्वोक्तोत्तरवेदिः ततः पश्चान्मध्यभागे हविर्धानाख्यो मण्डपो विधेयः ततोऽपि पश्चात्सदोऽभिधानोदग्वंशा शाला निर्मातव्या। तस्याः स्थाने प्राचीनशालायाः पुरतो दक्षिणोत्तरभागयोर्हविर्धानसञ्ज्ञके द्वे शकटे स्थापिते स्तः तच्छकटद्वयं पुरतः प्रवर्त्य तदावरकत्वेन हविर्धानाख्यमण्डपो विधेयः। तच्छकटद्वयं सावित्रहोमादूर्ध्वं प्रवर्त्तनीयम्। तदाह तित्तिरिः। सावित्रयर्चा हुत्वा हविर्धाने प्रवर्तयतीति। तं* होमं विधत्ते कात्यायनः। चतुर्गृहीतं शालाद्वार्ये जुहोति युञ्जतइति स गार्हपत्योऽत इति[1]। प्राचीनशालाया द्वारसमीपे पूर्वसिद्ध आहवनीयो वर्तते तस्मिन् जुहुयात्स च पूर्वमाहवनीयोऽपि सन्नुत्तर-

युञ्जतेमनउतयुञ्जतेधियोविप्राविप्रस्यबृहतोविपश्चितः।

विहोत्रादधेवयुनाविदेकइन्महीदेवस्यसवितुःपरिष्टुतिःस्वाहा ॥ १४ ॥

वेद्याख्ये ऽन्यस्मिन्नाहवनीये निष्पन्ने सति तदपेक्षया स्वयं गार्हपत्यो भवतीति सूत्रार्थः। सावित्री जगती श्यावाश्वदृष्टा। विप्रस्य ब्राह्मणस्य यजमानस्य सम्बन्धिनो विप्रा ब्राह्मणा ऋत्विजो मनो युञ्जन्ति लौकिकचिन्ताभ्यो मनो निवार्य यज्ञचिन्तायां नियमयन्ति। उत धिय इन्द्रियाण्यपि यज्ञार्थेषु नियमयन्ति। कीदृशस्य विप्रस्य। बृहतो महतः। तथा विपश्चितः सर्वज्ञस्य। अधीतवेदत्वाद् बृहत्त्वमर्थाभिज्ञत्वाद्विपश्चित्त्वम्। किम्भूता विप्राः। होत्रा होमकर्तारः। तदिदं विप्राणां मनोनियमनादिसामर्थ्यमेक इत् एक

* "तती" क०। १——८,३,२९।

उत्तरवेदे त्वं सिंह्यसि सिंहरूपा भवसि तादृश्यै तुभ्यं स्वाहा हविर्दत्तम् । सिंह्यसि किम्भूता आदित्यवनिः आदित्यान्वनुते सम्भजति प्रीणयतीत्यादित्यवनिः । अन्यत् पूर्ववत् । सिंह्यसि ब्रह्मणजातिक्षत्रियजात्योः प्रीणयितृत्वमत्र विशेषः । सिंह्यसि सुप्रजावनिः पुत्रपौत्रादिरूपायाः शोभनप्रजायाः सम्पादयित्री । रायस्पोषवनिः सुवर्णरजतादिधनपुष्टेः सम्पादयित्री । सिंह्यसि यजमानाय यजमानोपकारार्थं देवानावाहयेति शेषः* ॥ का० भूतेभ्यस्त्वेति स्रुचमुद्यच्छतीति[1] । भूतेभ्यः जरायुजाण्डजादिचतुर्विधभूतग्रामप्रीत्यर्थं हे होमविशेषाज्ययुक्ते जुहूः त्वामुद्यच्छामीति शेषः । तदाह तित्तिरिः । भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति यएव देवा भूतास्तेषां तद्भागधेयं भवति तानेव तेन प्रीणातीति ॥ १२ ॥

का० नाभिं पैतुदारवैः परिदधाति पूर्ववद् ध्रुवोऽसीति प्रतिमन्त्रमिति[2] । पीतुदारुर्देवदारुः तदीयैः परिधिभिरुत्तरवेदेर्मध्य-

**ध्रुवोसिपृथिवीन्दृꣳहध्रुवक्षिदस्यन्तरिक्षन्दृꣳहाच्युतक्षिदसिदिवन्दृꣳहाग्नेःपुरीषमसि ॥ १३ ॥**

देशरूपां नाभिं परिदध्यात् पूर्ववत् दर्शपौर्णमासेष्टौ यथा पश्चिमदक्षिणोत्तरेषु तथात्रापीति सूत्रार्थः । त्रयाणां परिधयो देवताः । हे मध्यमपरिधे त्वं ध्रुवः स्थिरोऽसि अतः पृथिवीं दृंह दृढीकुरु । हे दक्षिणपरिधे त्वं ध्रुवे स्थिरे यज्ञे क्षियति निवसति ध्रुवक्षिदसि तस्मादन्तरिक्षं दृढीकुरु । अच्युते विनाशरहिते यज्ञे क्षियति निवसतीत्यच्युतक्षित् हे उत्तरपरिधे त्वं तादृशोऽसि तस्मात् दिवं द्युलोकं दृंह ॥ का० अग्नेः पुरीषमिति निवपति गुग्गुलुसुगन्धितेजनवृष्णिस्तुकाश्चोपरि शीर्षण्या अभावेऽन्यत् इति[3] । गुग्गुलुधूपद्रव्यं सुगन्धितेजनं तृणविशेषः वृष्णिस्तुका अविरोमाणि । एतानि नाभौ प्रक्षिपेदिति सूत्रार्थः । हे गुग्गुलुप्रभृतिसम्भारसमूह त्वमग्नेः पुरीषं पूरकमसि । पूरयतीति पुरीषम् । अग्नेर्ह्येतत्पुरीषं यत्सम्भारा इति तित्तिरिः ॥ १३ ॥

* "देवानावहानयेति विशेषः" मु० । १—५,४,१५ । २—५,४,१६ । ३—५,४,१७ ।

कर्म्माणि जगदुत्पत्त्यादीनि यस्य स विश्वकर्म्मा आदित्यैः द्वादशसङ्ख्यैर्गणदेवैः सहित उत्तरतः उत्तरस्यां दिशि त्वां पातु। एकदा असुरा देवान्हन्तुमागतास्तदा देवसेनाधिपतय इन्द्रघोषादयस्तत्सु दिक्षु तानसुरानपाकुर्वन्। तस्मादेतैर्मन्त्रैर्दिक्चतुष्टये रक्षा प्रार्थनीया। तदाह तित्तिरिः। असुरा वज्रमुद्यम्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादपानुददित्यादि॥ का० बहिर्वेदि शेषं निषिञ्चतीदमहं तप्तं वारिति[1]। असुरनिवारणाय येनोदकेन प्रोक्षणं कृतं तदुदकमुग्ररूपत्वात्तप्तमित्युच्यते। तप्तमिदं वाः उदकं प्रोक्षणशेषभूतं यज्ञात् बहिर्धा यज्ञप्रदेशाद्बाह्यप्रदेशेऽहं निःसृजामि निक्षिपामि॥ ११॥

का० नाभ्याः श्रोण्यंसेषु पञ्चगृहीतं जुहोत्यक्ष्णया दक्षिणेंऽसे श्रोण्यां श्रोण्यामंसे मध्ये च हिरण्यं पश्यन्सिंहासीति[2]। योऽयमुत्तर-

सि॒ꣳह्यसि॒ स्वाहा॑ सि॒ꣳह्यस्या॑दित्य॒वनिः॒ स्वाहा॑ सि॒ꣳह्यसि ब्रह्म॒वनिः॑ क्षत्र॒वनिः॒ स्वाहा॑।

सि॒ꣳह्यसि सुप्रजा॒वनी॑ रायस्पोष॒वनिः॒ स्वाहा॑ सि॒ꣳह्यस्याव॑ह दे॒वान्यज॑मानाय॒ स्वाहा॑ भू॒तेभ्य॑स्त्वा॥ १२॥

वेदेर्नाभ्याख्यो मध्यदेशस्तस्य श्रोण्यंसेषु आग्नेयैशकोणावंसौ वायव्यनैर्ऋतकोणौ श्रोणी तेषु चतुर्षु मध्ये च जुह्वां पञ्चवारं गृहीतेनाज्येन जुहुयात् कथम् अक्ष्णया कोणसूत्रप्रदेशेन। तद्यथा। प्रथमं दक्षिणेंऽसे तत उत्तरश्रोण्यां ततो दक्षिणश्रोण्यां तत उत्तरांसे ततो मध्ये। एवं पञ्चसु स्थानेषु हिरण्यं निधाय तदवलोकयन् पञ्चभिर्मन्त्रैर्जुहुयादिति सूत्रार्थः। पञ्च यजूंषि वाग्देवता। पुरा कदाचिदुत्तरवेदिर्देवता केनापि निमित्तेन देवेभ्योऽपक्रम्यासुरानप्राप्योभयोर्देवासुरसेनयोर्मध्ये सिंहरूपं धृत्वा तस्थौ। तदयं मन्त्र आह। तदुक्तं तित्तिरिणा। तेभ्योऽपक्रम्योत्तरवेदिः सिंहीरूपं कृत्वोभयानन्तरातिष्ठदिति। तदभिप्रेत्य सिंही उच्यते। हे

१—५,४,१२। २—५,४,१८।

का० सिंह्यसीति व्यूहत्युत्तरवेदिं शम्यामात्रीमिति[१] । विशेषेण पांसुभिः समां करोति । चयाणां वेदिर्देवता । वाक्पूर्वमसुरेभ्यः क्रुद्धा सिंही भूत्वा चचारेतीतिहासः[२] । सा वेदिमन्त्रे प्रोच्यते । हे उत्तरवेदे या त्वं सिंही सिंहसमाना भूत्वा सपत्नसाही सपत्नान् सहतेऽभिभवतीति सपत्नसाही कर्म्मण्यण् शत्रूणामभिभवित्री असि भवसि । अतो देवेभ्यः देवोपकारार्थं कल्पस्व समर्था उत्तरवेदिरूपेण क्षमा भव ॥ का० प्रोक्षत्युत्तरवेदिं सिकताश्च प्रकिरति सिंह्यसीति प्रतिमन्त्रमिति[३] । हे उत्तरवेदे शुन्धस्व शुद्धा भव । शुन्ध शुद्धौ । अन्यत्पूर्ववत् । हे उत्तरवेदे त्वं शुम्भस्व सिकताप्रक्षेपेण शोभिता भव । अन्यत्पूर्ववत् । शुभतिरलङ्कारार्थः ॥ १० ॥

सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्व ॥१०॥

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु

विश्वकर्म्मा त्वादित्यैरुत्तरतः पात्विदमहन्तप्तं वार्बहिर्धा यज्ञान्निः सृजामि ॥ ११ ॥

का० वेद्यन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षतीन्द्रघोष इति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गमिति[४] । चतुर्णां यजुषामुत्तरवेदिर्देवता । इन्द्र इति शब्देन घुष्यते विस्पष्टं कथ्यते यो देवः सोऽयमिन्द्रघोषः वसुभिः अष्टसङ्ख्याकैर्गणदेवैर्युक्तः सन् हे उत्तरवेदे त्वा त्वां पुरस्तात् पूर्वस्यां दिशि पातु रक्षतु । प्रचेताः प्रकृष्टप्रज्ञो वरुणो रुद्रैरेकादशसङ्ख्यैर्गणदेवैः सहितः पश्चात्पश्चिमायां दिशि त्वां पातु । मनोजवाः मनोवद्वेगयुक्तो यमो देवः पितृभिः स्वर्लोकवासिदेवविशेषैर्युक्तो दक्षिणतः दक्षिणस्यां दिशि त्वा त्वां पातु । विश्वकर्म्मा विश्वानि

१——५,३,३३ । २——३,५,१,३२ । ३——५,३,३७ । ४——५,४,११ ।

ग्निर्नभःसत्र्स्त्वदधिष्ठाताग्निर्विदेत्त्वां जानीयात्। मया खन्यमानां त्वां तदधिष्ठातानुजानात्वित्यर्थः। अग्निनामोच्चारणपुरःसरं प्रहरेत्। तथा च श्रुतिः। स वा अग्नेरेव नामानि गृह्णन्हरतीति[1] ॥ का० अग्नेऽङ्गिर इति पुरीषं प्रहरतीति[2]। पुरीषं खाता मृत्। हे अग्ने हे अङ्गिरः। अङ्गिर्गतिरस्यास्तीति अङ्गिराः मत्वर्थे रसप्रत्ययः। तत्सम्बोधनम्। हे अग्ने त्वमायुना नाम्नाभिहितः सन् एहि गच्छ। एति गच्छतीत्यायुरग्नेर्नाम। तदधिष्ठातर्यागतएवाधिष्ठेयमागच्छतीत्यग्नेरागमनादिकं प्रार्थ्यते ॥ का० योऽस्यामिति निवपति पूर्वार्धे शङ्कुसहितमिति[3]। उत्तरवेदिस्थाने मृदं निक्षिपेदित्यर्थः। हे अग्ने यस्त्वमस्यां दृश्यमानायां पृथिव्यां भूमावसि। किञ्च ते तव यज्ञियं यज्ञयोग्यं यत् नामाग्निरिति प्रसिद्धमनाधृष्यं केनापि याज्ञिकेनातिरस्कृतं तेन त्वादधे तेन नाम्ना युक्तं त्वां

**योद्वितीयस्याम्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्वादधेविदेदग्निर्नभोनामाग्नेअङ्गिरआयुना नाम्नेहियस्तृतीयस्याम्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्वादधे। अनुत्वादेववीतये ॥ ९ ॥**

स्थापयामि ॥ का० एवं द्विरपरं द्वितीयस्यां तृतीयस्यामिति विशेष इति[4]। यथा पूर्वैस्त्रिभिर्मन्त्रैः खात्वा हृत्वा मृत्प्रक्षिप्ता वेद्यर्थमेतत्त्रितयं पुनरपि द्विः कुर्यादिति मन्त्रयोः तत्रास्यामिति पदस्थाने द्वितीयस्यां तृतीयस्यामिति पाठविशेष इति सूत्रार्थः। यद्यपि पृथिवीशब्देन भूमिरेव तथापि द्वितीयस्यामिति तृतीयस्यामिति विशेषणत्वाद् द्वितीया पृथिव्यन्तरिक्षं तृतीया पृथिवी द्यौः अन्यत्पूर्ववद्व्याख्येयम् ॥ का० अनु त्वेति चतुर्थं यथार्थमाहृत्येति[5]। यथा पूर्वस्मिन्पर्यायत्रये मृदाहृत्य प्रक्षिप्ता एवं चतुर्थमपि प्रक्षेपणपर्यन्तं मृदाहरणं कुर्यादिति सूत्रार्थः। देववीतये देवानां प्रीतये हे मृत्तिके त्वा त्वामनु पूर्वोक्तमाहरणत्रयमनुसृत्याहरामीति शेषः ॥ ९ ॥

१——३,५,१,३१। २——५,२,२७। ३——५,२,२८। ४——५,२,३०-३१। ५——५,२,३२।

का० शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करं सञ्चरं परिहाप्य शम्यामुदीचीं निदधाति पुरस्ताच्च दक्षिणतः प्राचीमुत्तर… स्फ्येनान्तर्लिखति तप्तायनीति प्रतिमन्त्रमिति[1] । उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते । तत्रोत्करात् पूर्वस्यां सञ्चरपरिहारेणोदगग्रां शम्यां निधाय तत्प्रमाणां तत्पूर्वपार्श्वे स्फ्येन रेखां कुर्यात् तथा तत्पूर्वपार्श्वे तथैव शम्यां निधाय रेखां कुर्यात् अभ्यन्तरे एवं दक्षिणोत्तरयोरपि प्रागग्रां शम्यां निधाय रेखाद्वयं कुर्य्यादिति] सूत्रार्थः ॥ अस्यां कण्डिकायां चतुर्दश यजूंषि । तत्राद्यानि चत्वारि पृथिवीदेवत्यानि ॥ अत्र प्रथमं परिलिखति । हे पृथिवि त्वं मे ममानुग्रहार्थं तप्तायनी असि । तप्तं पुरुष-मयति प्राप्नोतीति तप्तायनी । यो हि दरिद्रः क्षेत्ररहितो ऽहमिति सन्तप्यते तं तापोपशान्त्यर्थं प्राप्नोषीत्यर्थः । यद्वा तप्तः सन्नरो

**तप्तायनी मेसि वित्तायनी मेस्यवतान्मा नाथितादवतान्मा व्यथितात् । विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि योस्यां पृथिव्यामसि यत्तेनाधृष्टं नाम यज्ञियं तेन त्वादधे विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि ।**

यस्यामयति सा तप्तायनी ममासि ॥ द्वितीयं लिखति । वित्तार्थं नरो यस्यामेतीति वित्तायनी । यद्वा वित्तार्थं निर्धनं पुरुष-मयतीति वित्तायनी । पृथिव्यां हि प्राप्तायां सस्यनिष्पत्तिद्वारा महद्धनं लभते ॥ तृतीयं परिलिखति । हे पृथिवि नाथितात् याचितात् मा मां त्वम् अवतात् रक्ष । तुह्योस्तातङ्ङिति हेस्तातङ्ङादेशः । यथा कमपि न याचे तथा मां कुर्वित्यर्थः । नाथति धातुर्याच्ञार्थः ॥ चतुर्थं परिलिखति । व्यथ भयचलनयोः । व्यथितात् भयाच्चलनात् स्थानभ्रंशाच्च मा मामवतात् रक्ष ॥ का० विदेदग्निरिति चात्वाले प्रहरति स्फ्येनेति[2] । प्रहरति मृत्तिकां खनेदित्यर्थः ॥ आग्नेयं यजुः । हे चात्वालगतमृत्तिके नभो नामा-

1 — ५,३,१८-२५ । 2 — ५,३,२६ ।

स्तत उपसद्देवतारूपोऽग्निर्यदा तासु पूर्षु प्रविश्य ता ददाह तदा तिस्रः पुरोऽग्निस्तनवोऽभूवन्। तदभिप्रेत्यायं मन्त्रः॥ हे अग्ने या ते तवायःशया तनूः। अयसि शेते इत्ययःशया लोहमयपुर्व्याप्तित्वेन तद्रूपा सती॥ वर्षिष्ठा देवानामतिशयेनाभिमतफलवर्षिणी॥ तथा गह्वरेष्ठा गह्वरे असुराणां विषमे देशे तिष्ठतीति गह्वरेष्ठा। हलदन्तात्सप्तम्याः संज्ञायामिति विभक्तेरलुक्॥ सा ते तनूरुग्रं वचोऽपावधीत्। छिन्धि भिन्धीत्यादिकमसुरप्रोक्तं तीव्रं वचनं विनाशितवती॥ तथा त्वेषं वचः असुरोक्तं देवाधिक्षेपरूपं प्रदीप्तं वाक्यमपावधीत्॥ स्वाहा तथाविधोपकाराय तुभ्यमग्नये हविर्दत्तम्। ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे अयस्मयीमेवास्मिंल्लोके रजतामन्तरिक्षे हरिणीं दिवीत्यादि[1]श्रुत्या अयमितिहासो निरूपितः॥ उग्रत्वेषवचसोरर्थान्तरम्। यथा असुरैः पराजिता देवा

याते॑अग्ने रजःश॒या त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा उ॒ग्रं वचो॒ अपा॑वधीत्त्वे॒षं वचो॒ अपा॑वधी॒त्स्वाहा॑।

याते॑अग्ने हरिश॒या त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा उ॒ग्रं वचो॒ अपा॑वधीत्त्वे॒षं वचो॒ अपा॑वधी॒त्स्वाहा॑॥ ८॥

अन्नपाने अलभमानाः क्षुत्पिपासाभ्यां वयं पीडिता इति यदूचुस्तदुग्रं वचः। तथा किं वा वीरहत्यादि महापातकमस्माभिः कृतमिति क्लिश्यन्तो यद्वाक्यं सन्तापहेतुत्वेन दीप्तमूचुस्तत्त्वेषं वचः। तदाह तित्तिरिः। अशनायापिपासे ह वा उग्रं वच एनश्च वै वीरहत्यञ्च त्वेषं वच इति॥ का॰ एवमितरे अन्वहं रजःशयां हरिशयां चेति[2]। यथा प्रथमदिने या तेअग्ने ऽयःशयेत्युपसदेवमितरे द्वितीयतृतीये उपसदौ द्वितीयतृतीयदिनयोरनुतिष्ठेत्। द्वितीयस्यामुपसदि रजःशयेति तृतीयोपसदि हरिशयेति मन्त्रभेद इति सूत्रार्थः॥ रजःशया रजतमयी। हरिशया हिरण्मयी। अन्यत्पूर्ववत्॥ ८॥

१——३,४,८,३। २——८,२,३८।

तथा हे सोम त्वमपि इन्द्रायेन्द्रपानायाप्यायस्व सर्वतो वृद्धो भव। अनेनोभयोरपि वृद्धिर्भवति। तदाह तित्तिरिः। उभावेवेन्द्रं सोमं चाप्याययतीति॥ किञ्च हे सोम सखीन् सखिवत्प्रीतिविषयानस्मानृत्विजः सन्या मेधया चाप्यायय प्रवर्धय। सनिर्धनदानं मेधार्थधारणशक्तिः। ऋत्विजो वाअस्य सखाय इत्युक्तेः सखिशब्देन ऋत्विजः। किञ्च हे सोम देव ते तव स्वस्ति क्षेमोऽस्तु तव प्रसादादहं सुत्यां सोमाभिषवक्रियां समाप्तिदिनमशीय प्राप्नुयाम्॥ का० प्रत्येत्य प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति[१]। सर्वेऽपि ऋत्विजः प्रस्तरे निजहस्तानुत्तानान्कृत्वा दक्षिणहस्तं वोत्तानमुपर्यवस्थाप्य निह्नुवते सोमं परिचरन्तीति सूत्रार्थः॥ रायो धनानि एष्टाः आ समन्तादिष्टा अस्माकमपेक्षिताः। सोम त्वत्प्रसादादस्माकं रायः सन्त्विति भावः॥ यद्वा रायः दक्षिणालक्षणा एष्टाः आ समन्तादत्ताः यजते रूपम् दक्षिणा दास्यन्त इति भावः। किमर्थं प्रेषे भगाय। प्रकर्षेणेष्यतइति प्रेट्।

यातेऽअग्नेयःशयातनूर्वर्षिष्ठागह्वरेष्ठाउग्रंवचोऽअपावधीत्त्वेषंवचोऽअपावधीत्स्वाहा।

तस्मै प्रेष्यमाणाय भगायैश्वर्याय॥ यद्वा प्रकर्षेण इषे अन्नाय भगाय च॥ किञ्च ऋतवादिभ्योऽग्निहोत्रिभ्यः ऋतमवश्यम्भाविफलोपेतं कर्म सम्पादयेति शेषः। ऋतं सत्यं वदन्तीति ऋतवादिनः॥ यद्वा षष्ठ्यर्थे चतुर्थी ऋतवादिनामस्माकमृतं कर्मफलमस्त्विति शेषः॥ द्यावापृथिवीभ्यां तदभिमानिदेवताभ्यां नमोऽस्तु। तयोरनुग्रहेण यजमानायाविघ्नस्थितिर्भवतीति नमस्क्रियते। तदाह तित्तिरिः। द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिँल्लोके प्रतितिष्ठतीति॥ ७॥

का० उपसदं जुहोति स्रुवेण या तइति[२]॥ आग्नेयानि त्रीणि यजूंषि। अत्रेयमाख्यायिका अस्ति। देवैः पराजिता असुरास्तपस्तप्त्वा त्रैलोक्ये त्रीणि पुराणि चक्रुर्लोहमयीं भूमौ राजतीमन्तरिक्षे हैमीं दिवि। तदा देवैस्ता दग्धुमुपसदाग्निराराधित-

१——८, २, २०। २——८, २, ३५।

तनूः मदीयं शरीरं सैषा तनूस्त्वयि भवतु। तथासति हे व्रतपते व्रतपालकाग्ने व्रतान्यनुष्ठेयानि कर्माणि नौ अग्नियजमानयोः सह प्रवर्तन्तामिति शेषः। यावान् व्रतेषु ममादरस्तावानेव तवापि भवत्वित्यर्थः। किञ्च। दीक्षापतिर्दीक्षायाः पालकः सोमो मे मम दीक्षामनुमन्यताम्। तथा तपस्पतिः उपसद्रूपस्य तपसः पालकः सोमः तपः मदीयमुपसद्रूपमनुमन्यतामित्यनुवर्तते॥ ६॥

का० यजमानप्रष्ठाः सोममाप्याययन्त्यꣳशुरꣳशुरिति[1]॥ प्रकृतिः चतुरवसाना सोमदेवत्या। अन्त्योऽर्धर्चो लिङ्गोक्तदैवतः। चतुरशीत्यक्षरा प्रकृतिः। तत्र मन्त्रद्वयम्॥ सोमवल्ल्या अवयवोंऽशुरुच्यते। वीप्सा सर्वसङ्ग्रहार्था। हे सोम देव ते तवांशुरंशुः

अꣳशुरꣳशुष्टेदेवसोमाप्यायतामिन्द्रायैकधनविदआतुभ्यमिन्द्रःप्यायतामात्वमिन्द्रायप्यायस्व।

आप्यायायास्मान्त्सखीन्त्सन्न्यामेधयास्वस्तितेदेवसोमसुत्यामशीय।

एष्टारायःप्रेषेभगायऋतमृतवादिभ्योनमोद्यावापृथिवीभ्याम्॥ ७॥

सर्वोऽप्यवयव इन्द्राय इन्द्रप्रीत्यर्थमाप्यायतां वर्धतां चिरावस्थानेन यः सोमावयवो म्लानः शुष्कश्च तदुभयं मन्त्रेणाप्यायितं भवति। तदाह तित्तिरिः। यद्देवस्य शुष्यति यन्म्लायते तदेवास्यैतेनाप्याययतीति॥ किंभूतायेन्द्राय। एकधनविदे एकं मुख्यं धनं सोमरूपं विन्दते लभते स एकधनवित् यद्वा सोमकण्डनाय यैर्जलमानीयते ते कुम्भा एकधनाः एकं धनं सोमरूपं यत्रेति तान्वेत्ति जानातीति सोमकण्डनाय जलकुम्भा आनीता इति जानातीत्यर्थः॥ किञ्च हे सोम तुभ्यं त्वत्पानार्थमिन्द्र आप्यायतां वर्धताम्

[1] ८, २, २६।

द्रोहस्तेभ्य इति[1] ॥ आज्यदैवतं यजुः । हे आज्य त्वमोट्टशमसि । किम्भूतम् । अनाधृष्टमितः पूर्वं केनाप्यतिरस्कृतम् ॥ अनाधृष्यं न आधर्षितुं शक्यमितः परमप्यतिरस्कार्यम् ॥ देवानामग्न्यादीनामोजः सारभूतम् ॥ अनभिशस्ति नास्ति अभिशस्तिर्निन्दा यस्य तत् अभिपूर्वः शंसतिर्गर्हायां वर्तते ॥ अभिशस्तिपाः अभिशस्तिरृत्विजां परस्परविरोधेन निन्दनं तस्याः पाति रक्षतीत्यभिशस्तिपाः । पुंस्त्वं छान्दसम् ॥ अनभिशस्तेन्यम् अनभिशस्ते अनिन्दिते स्वर्गादौ नयतीत्यनभिशस्तेनीः । द्वितीया प्रथमार्थे । पुंस्त्वं व्यत्ययेन ॥ यतस्त्वमीदृशमसि अतो हे तानूनप्त्राज्याहमृत्विक् अञ्जसा ऋजुमार्गेण मानसकौटिल्यरहितेन सत्यमाज्यस्पर्शरूपं शपथमुपगेषमुपगच्छेयम् । उपपूर्वस्य गायतेर्लेटुत्तमैकवचने सिब्बहुलं लेटीति सिपि इडागमे लेटोऽडाटावित्यडागमे च रूपम् इतश्च लोपः परस्मै-

अग्ने व्रतपास्त्वे व्रतपा या तव तनूरियꣳ सा मयि यो मम तनूरेषा सा त्वयि ।

सह नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः ॥ ६ ॥

पदेष्विति इलोपः । किञ्च हे आज्य स्विते शोभनमार्गे यज्ञकर्मणि मा मां त्वं धाः धेहि स्थापय । दधातेर्लुङि मध्यमैकवचनेऽडभावे रूपम् ॥ ५ ॥

का० अग्ने व्रतपा इत्याहवनीये समिधमाधायेति[2] ॥ आग्नेयं यजुः । यजमानोऽनेन यजुषाग्निशरीरात्मशरीरयोर्व्यत्ययं करोति । हे व्रतपा सर्वेषां व्रतानां पालकाग्ने त्वे व्रतपाः त्वमस्मदीयस्य वर्तमानव्रतस्य पालको भवसीति शेषः । विभक्तेः शे आदेशे त्वे इति रूपम् । तव तथाविधस्य व्रतपालकस्य या तनूः शरीरमस्ति सेयं तनूर्मयि भवत्विति शेषः । यो या उ या च मम

१——८,१,२४-२६ । २ —— ९,८ ।

दिति सूत्रार्थः ॥ वायुदेवत्यं यजुः । आ समन्तात्पतति गच्छतीत्यापतिः सततगतिवायुस्तस्मै हे आज्य त्वां गृह्णामि ॥ किम्भूताय । परिपतये परितः पततीति परिपतिस्तस्मै सर्वव्यापिने । तथा तनूनप्त्रे । तनोति विस्तारयति विश्वमिति तनूरात्मा तस्य नप्त्रे पौत्राय ॥ शाक्वराय शक्नुवन्ति स्थातुं भूतानि यत्र स शक्वर आकाशस्तस्यापत्यं शाक्वरस्तस्मै । तस्मादेतस्माद्वा आत्मन आकाशः सम्भूत आकाशाद्वायुरिति[1] श्रुतेः ॥ तथा शक्मने । शक्नोति सर्वं कर्तुमिति शक्मा तस्मै । अन्येभ्योऽपि दृश्यन्त इति वनिप् ॥ ओजिष्ठाय । ओजो बलमस्यास्तीत्योजस्वी । अस्मायामेधास्रजो विनिरिति विनिप्रत्ययः । अतिशयेनौजस्वी ओजिष्ठस्तस्मै । अतिशायने तमबिष्ठनाविति इष्ठनि प्रत्यये विन्मतोर्लुगिति विनो लोपे टिलोपः ॥ यद्वास्य मन्त्रस्यार्थान्तरं तित्तिरिव्याख्यातम् । हे आज्य त्वामापतये प्राणदेवताप्रीतये गृह्णाम्यत्र पात्रे स्वीकरोमि । आ समन्तात्पाति देहं रक्षतीत्यापतिः प्राणः । तदाह तित्तिरिः ।

**अनाधृष्टमस्यनाधृष्यन्देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुपगेषꣳ स्विते मा धाः ॥ ५ ॥**

प्राणो वा आपतिः प्राणमेव प्रीणातीति ॥ इष्टप्राप्त्युपायमनिष्टपरिहारोपायं च चिन्तयित्वा परितः पाति पालयति परिपतिर्मनस्तत्प्रीत्यै गृह्णामि । तदाह तित्तिरिः । मनो वै परिपतिर्मन एव प्रीणातीति ॥ तनूनप्त्रे । तनूं शरीरं न पातयति न विनाशयतीति तनूनप्ता जाठरोऽग्निस्तस्मै जाठराग्निदेवताप्रीत्यै आज्य त्वां गृह्णामि ॥ शाक्वराय । शक्वनशीलः शक्वरः शक्तिमान् पुरुषस्तस्येदं शाक्वरं शक्तिस्वरूपाभिमानिदेवताप्रीत्यै त्वां गृह्णामि ॥ शक्मन ओजिष्ठाय । शक्मने इति चतुर्थी सप्तम्यर्थे । शक्मनि शक्तिमति पुरुषे यदोजिष्ठं सारं तस्मै । ओजोनामाष्टमो धातुस्तत्सारमोजिष्ठं तदवष्टम्भेनैव शरीरे शक्तिरवतिष्ठते । ओजःसाराभिमानिदेवताप्रीत्यै त्वां गृह्णामीत्यर्थः ॥ का० तानूनप्त्रमितदक्षिणस्यां वेदिश्रोण्यां निधायावमृशन्त्यृत्विजो यजमानश्चानाधृष्टमित्य-

१—तै० आ० ८,१ ।

परिहृत्यास्मदनुग्रहाभिमुखत्वं समनस्त्वम् अनुग्रहे परस्परविप्रतिपत्तिराहित्यं सचेतस्त्वम्। तथा अरेपसौ पापरहितौ प्रमादादस्माभिः कृतेऽपि पापे कोपाभावः पापराहित्यम्। तदेव स्पष्टयति। यज्ञमस्मत्कर्म मा हिंसिष्टं मा विनाशयतं यज्ञपतिं यजमानं च मा हिंसिष्टम्। तथा अद्यास्मिन्ननुष्ठानदिने नोऽस्मदर्थं शिवौ शान्तौ कल्याणकारिणौ भवतं पूर्वोक्तविधिना ॥ ३ ॥

का० अग्नावग्निरिति जुहोति स्वाल्याः स्रुवेणेति[1] ॥ विराट्। दशाक्षरैश्चतुर्भिः पादैर्विराट्। अत्र द्वितीयतुर्यावेकादशार्णौ ततो द्वाधिका ॥ अग्निर्मथ्यमानोऽग्नावाहवनीये प्रविष्टः सन् चरति हविर्भक्षयति। चर गतिभक्षणयोः। किंभूतोऽग्निः ऋषीणां पुत्रः ऋत्विजो वेदविदः ऋषयः तैरुत्पादितत्वात्तेषां पुत्रवत् पुत्रः। तथा अभिशस्तिपावा अभिशस्तिर्वैकल्यनिमित्तोऽभिशापस्तस्मात्पाति

**अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा। स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहा ॥४॥**

**आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वन ओजिष्ठाय।**

रक्षतीत्यभिशस्तिपावा। आतो मनिन्निति वनिप्प्रत्ययः। हे अग्ने स तथाविधस्त्वं नोऽस्मदर्थं स्योनः सुखरूपः सन् सुयजा शोभनयागेन इहास्मिन् स्थाने देवेभ्यः इन्द्रादिभ्यः हव्यं सोमादिरूपं यज देहि अस्मद्दत्तं हविर्देवान् प्रापयेत्यर्थः। किं कुर्वन्। सद सदा अप्रयुच्छन् अप्रमाद्यन्। युच्छ प्रमादे। स्वाहा इदमाज्यं तुभ्यं हुतमस्तु। यद्वा सोऽग्निर्नो हविर्देवेभ्यो यज यजतु ददात्विति पुरुषव्यत्ययेन वा योजना ॥ ४ ॥

का० ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति द्विश स्वाल्याः स्रुवेणेति[2]। व्रतं प्रदीयते येन पात्रेण तत् पात्रे ध्रुवास्थमाज्यं गृह्णीया-

१——५, ३. ६। २——८, १, १९ २०।

जननाधारभूतमसि। जायतेऽस्मिन्निति जनित्रम् ॥ का० वृषणाविति कुशाग्रकरणे तस्मिन्निति[1]। तस्मिन् प्रकाले करोतीत्यर्थः। मन्त्रार्थस्तु। हे दर्भौ युवां वृषणौ सेक्तारौ स्थः भवथः। वर्षत इति वृषणौ। कनिन् प्रत्ययः। यथा पुत्रजननाय स्त्रीपुरुषौ वीर्यस्य सेक्तारौ तद्वद्युवामप्यरण्योरग्निजननसामर्थ्यसम्पादकावित्यर्थः॥ का० उर्वश्यसीत्यधरारणिं तयोरिति[2]। प्रकल्पस्थापितयोर्दर्भयोरधरारणिं निदध्यादिति सूत्रार्थः॥ हे अधरारणे त्वमुर्वश्यसि। यथोर्वशी पुरूरवोनृपस्य भोगायाधस्तात्तिष्ठति तद्वत्त्वमधोऽवस्थितासीत्यर्थः॥ का० आयुरसीत्युत्तरयाज्यस्थालीं संस्पृश्येति[3]। उत्तरारण्याज्यस्थालीं स्पृशेदिति सूत्रार्थः॥ हे स्थालीगताज्य त्वमायुरसि अरणिद्वयेन जनिष्यमाणस्याग्नेरायुःप्रदं भवसि॥ का० पुरूरवा इत्यभिनिधानं प्रेणयेति[4]। अधरारणेरभिमुखीमुत्तरारणिं निदध्यादिति सूत्रार्थः॥ हे उत्तरारणे त्वं पुरूरवा असि यथा पुरूरवा नृप उर्वश्या अभिमुख उपरि वर्तते तथा त्वमपीत्यर्थः। उर्वश्यसीत्यादि-

**भवतन्नः समनसौ सचेतसावरेपसौ। मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः॥ ३॥**

मन्त्रत्रयं श्रुत्या व्याख्यातम्[5]। उर्वशी वाप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरिति॥ का० मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणमिति[6]। मन्त्रत्रयेणारण्योर्मन्थनं कुर्यात्॥ हे अग्ने गायत्रेण छन्दसा गायत्रीच्छन्दोऽभिमानिना देवेनाहं त्वा त्वां मथ्नामि अरण्योर्मन्थनेनोत्पादयामि। एवमुत्तरावपि मन्त्रौ योज्यौ॥ २॥

का० भवतं न इति प्रास्यतीति[7]। मन्थनोत्थमग्निमाहवनीये प्रास्यतीत्यर्थः॥ पङ्क्तिः। यस्याः अष्टार्णाः पञ्च पादाः सा पङ्क्तिः। अत्र तु तृतीयः षडक्षरः चतुर्थो दशार्णः॥ निर्मथ्याहवनीयावग्नी देवते। हे जातवेदसावुभावग्नी नोऽस्मदर्थं युवामीदृशौ भवतम्। किंभूतौ युवाम्। समनसौ मनसा सहितौ। तथा सचेतसौ समानं चेतो ययोस्तौ परस्परं समानचित्तयुक्तौ। अन्यविषयं मनः

१—५,१,२९। २—५,१,३०। ३—५,१,३१। ४—५,१,३२। ५—३,४,१,२२। ६—५,२,२। ७—५,२,३।

सोमो राजानुचरो जगतीच्छन्दोऽधिष्ठाता । हे हविः त्वमतिथेरतिथिसञ्ज्ञस्य सोमभृत्यस्य* आतिथ्यमसि आतिथ्य नामकर्मानि रूपमसि । तिथिविशेषं विनैवातिक्षुधया पीडिते विप्रेऽतिथौ समागते तत्सत्काराय क्रियमाणः पादक्षालनभोजनसंवाहनादिसंस्कार आतिथ्यमुच्यते । अतिथेरिदमातिथ्यम् अतिथेर्ञ्य इति ञ्यप्रत्ययः । विष्णवे त्वां निर्वपामीति पूर्ववत् ॥ श्येनाय त्वा सोमभृते । श्येनो नाम देवः सोमराजानुचरः स्वर्गात्सोमाहर्ता श्येनरूपधारिगायत्र्यधिष्ठाता तस्मै श्येनाय विष्णवे सोमाय च त्वां निर्वपामि । किम्भूताय श्येनाय सोमभृते सोमं हरति आनयतीति सोमहृत्तस्मै । हृग्रहोर्भश्छन्दसीति हरतेर्हस्य भः । सोमानयनकर्त्रे । तथा च श्रुतिः सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरदिति[1] अग्नये त्वा रायस्पोषदे । रायस्पोषं धनपुष्टिं ददाति रायस्पोषदाः

अग्नेर्जनित्रमसि वृषणौ स्थ उर्वश्यस्यायुरसि पुरूरवा असि ।

गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा छन्दसा मन्थामि जागतेन त्वा छन्दसा मन्थामि ॥ २ ॥

तस्मै । क्विप् प्रत्ययः । राज्ञो धनं क्रयविक्रयादिना बहुधा पोषयित्वा राज्ञेऽर्पयति स रायस्पोषदाः अग्निसञ्ज्ञोऽपरः सोमानुचरोऽस्ति अनुक्तच्छन्दोऽधिष्ठाता देवः तस्मै धनपुष्टिदायिनेऽग्नये हे हविः त्वा त्वां गृह्णामि । विष्णवे त्वेति पूर्ववत् ॥ विष्णुशब्दाभिधेयस्य सोमस्य राज्ञो हविषा तदनुचराणामग्न्यादिदेवानां तद्द्वारा तत्सम्बन्धिनां गायत्र्यादिच्छन्दसां च तृप्तिर्भवति । तदाह तित्तिरिः । यावद्भिर्वै राजानुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दांसि खलु वै सोमस्य राज्ञोऽनुचराणीति ॥ १ ॥

अथाग्निमन्थनमन्त्राः ॥ का० अग्नेर्जनित्रमिति शकलमादाय वेद्यां करोतीति[2] ॥ शकलदैवतं यजुः । हे शकल त्वमग्नेर्जनित्रं

१——३,४,१,१२ । २——५,१,२८ ।

स्थानेषु यजन्ति तानि त्वं प्राप्नुहीत्यर्थः। यद्वा ऋत्विजो यानि धामानि प्राप्य यजन्ति तानि सर्वाणि ते तव यज्ञं परिभूरस्तु यज्ञं परितो भवितॄणि यज्ञव्यापकानि सन्तु। नपुंसकबहुवचनस्थाने पुल्लिङ्गैकवचनमार्षम्। किञ्च हे सोम त्वं दुर्यान् गृहान् प्रचर प्राप्नुहि। दुर्या इति गृहनाम[1]। द्व्यचोऽतस्तिङ इति संहितायां प्रचरेति दीर्घः। किम्भूतस्त्वम्। गयस्फानः गय इति गृहनाम[2]। स्फायी वृद्धौ। गयान् स्फाययति गयस्फानः गृहाभिवर्धकः। प्रतरणः प्रकर्षेण तरन्त्यापदो येन स प्रतरणः। यद्वा प्रतारयति यज्ञपारं प्रापयतीति प्रतरणः। सुवीरः शोभनास्त्वत्प्रसादाल्लब्धा वीरा अस्मत्पुत्रपौत्रा यस्य तव स त्वं सुवीरः। अवीरहा न वीरान् हन्तीति वीराणां परिपालक इत्यर्थः॥ ३७॥ श्रीमन्महीधरकृते वेददीपे मनोहरे। शालागमाद्यचनान्तश्चतुर्थोऽध्याय ईरितः॥ ४॥

**अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवे त्वा श्येनाय त्वा**

**सोमभृते विष्णवे त्वाग्नये त्वा रायस्पोषदे विष्णवे त्वा॥ १॥**

चतुर्थेऽध्याये सत्विग्यजमानस्य शालाप्रवेशमारभ्य क्रीतसोमस्य शालाप्रवेशपर्यन्ता मन्त्रा उक्ताः॥ अथ पञ्चमोऽध्यायस्तत्रादौ आतिथ्येष्टौ हविर्ग्रहणादिमन्त्रा उच्यन्ते॥ का० निर्वपेदग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रमिति[3]॥ पञ्च यजूंषि वैष्णवानि॥ हे हविः त्वमग्नेस्तनूरसि अग्निसञ्ज्ञो यो देवः सोमस्य राज्ञो भृत्य*स्तस्य गायत्रीच्छन्दोऽधिष्ठातुस्तनूः शरीरं भवसि तृप्तिजनकत्वात् तथाविधं हे हविर्विष्णवे बहुयज्ञव्यापिने सोमाय सोमप्रीत्यर्थं त्वा त्वां निर्वपामीति शेषः॥ सोमस्य तनूरसि। सोमसञ्ज्ञः कश्चित्सोमस्य राज्ञो भृतस्त्रिष्टुप्छन्दोऽधिष्ठाता तस्य तृप्तिहेतुत्वात्तनूरसि। अन्यत् पूर्ववत्॥ अतिथेरातिथ्यमसि। अतिथिस॰

१—निघ० ३,४,९। २—निघ० ३,४,१। ३—८,१,४। * राज्ञो यो भृत्य इति सु०।

स्तम्भनम्। का० शम्ये चोह इति वरुणस्य स्कम्भसर्जनी स्थ इतीति[1]। शकटयुगे बद्धयोर्बलीवर्दयोर्गलबहिर्भागे काष्ठनिर्मिते शम्ये ताभ्यां वृषयोरितस्ततो गमनं निवार्यते ततस्ते स्कम्भसर्जनीशब्देनोच्येते। हे शम्ये युवां वरुणस्य स्कम्भसर्जनी स्थः। स्कम्भ. सर्जं अर्जने। स्कम्भनं स्कम्भो रोधः स सर्ज्यते* क्रियते याभ्यां ते स्कम्भसर्जन्यौ। विभक्तिः पूर्वसवर्णः। व्रियते वेष्ट्यते वस्त्रादिनेति वरुणशब्देनात् वस्त्रबद्धः सोम उच्यते। वरुणदैवतत्वाच्च पञ्चस्वपि मन्त्रेषु ॥ का० औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमुतामाहरन्ति चत्वारोऽभिमृशन्त्येनां वरुणस्य ऋतसदन्यसीतीति[2]। हे आसन्दि त्वं वरुणस्य सोमस्य सम्बन्धिनी ऋतसदन्यसि। ऋताय यज्ञाय सद्यते उपविश्यते यस्यां सा ऋतसदनी। करणाधिकरणयोरिति ल्युट्प्रत्ययः। ऋतं यज्ञस्तन्निष्पत्त्यर्थमुपवेशनस्थानभूतासीत्यर्थः। का० कृष्णाजिनमस्यामास्तृणाति वरुणस्यऋतसदनमसीतीति[3]। हे कृष्णाजिन वरुणस्य बद्धस्य सोमस्य ऋतसदनं यज्ञार्थमुपवेशनस्थानमसि ॥ का० तस्मिन्त्सोमं निदधाति वरुणस्य ऋतसदनमासीदेतीति[4]। हे सोम त्वं वरुणस्य वस्त्रबद्धस्य तत्र ऋतसदनं यज्ञार्थमुपवेशनस्थानभूतमासन्दीसंस्थितं कृष्णाजिनमासीद सुखेनोपविश ॥ ३६ ॥

यातेधामानिहविषायजन्तितातेविश्वापरिभूरस्तुयज्ञम्। गयस्फानःप्रतरणःसुवीरोवीरहाप्रचरासोमदुर्यान् ॥३७॥

॥ ४ ॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां चतुर्थोऽध्यायः ॥ ४ ॥

का० या तइति वाचयतीति[5]। सोमदेवत्या त्रिष्टुप् गोतमदृष्टा। हे सोम ते तव या यानि धामानि प्रातःसवनादीनि स्थानानि प्राप्येति शेषः। हविषा त्वदीयरसरूपेण यजन्ति ऋत्विजो यागं कुर्वन्ति। यज्ञमभिलक्ष्येति शेषः। ते तव ता तानि विश्वा विश्वानि सर्वाणि स्थानानि परिभूरस्तु। परितो भवति प्राप्नोति परिभूः। भू प्राप्तौ। भवान् परितः प्राप्तवान् भवतु। ऋत्विजो येषु

1——७,९,२६। 2——७,९,२७-२८। 3——७,९,२९। 4——७,९,३०। 5——७,९,३२। * "सज्यते" इति क०।

वृणोति वरुणः। स्वरश्मिभिर्जगदावृणोति। चक्षसे चष्टे इति चक्षास्तस्मै। चक्षुष्मते द्रष्ट्रे इत्यर्थः॥ अयमर्थः। "मित्रस्य वरुणस्य चक्षसे सर्वजगतो द्रष्ट्रे मित्रावरुणशब्देन सर्वं जगल्लक्ष्यते। तथा महो महसे तेजोरूपाय सुपां सुलुगिति विभक्तिलोपः। देवाय द्योतमानाय। तथा दूरेदृशे दूरे वर्तमानैः प्राणिभिर्दृश्यत इति दूरेदृक् तस्मै। यद्वा दूरे पश्यतीति दूरेदृक्। देवजाताय देवाद् द्योतमानात्परमात्मनो जायतेऽसौ देवजातस्तस्मै। देवानुग्रहाय जातो देवजात इति वा। जाता देवा यस्मात्स देवजात इति वा। वाहिताग्न्यादिष्विति जातशब्दस्य परनिपातः। केतवे प्रज्ञारूपाय विज्ञानघनाय। केतुरिति प्रज्ञानाम[1]। दिवः पुत्राय द्युलोकस्य पुत्रवत्प्रियाय। द्युलोकाद्धि सूर्यो जायते। दिवः पुरु त्रायते स इति दिवस्पुत्रः*। दिवः पालकायेति वा। एवंविधाय

वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्य ऋतसदन्यसि।

वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद॥ ३६॥

सूर्याय तदृतं सत्यमवश्यफलप्रदज्योतिष्टोमरूपं कर्म हे ऋत्विजः यूयं सपर्यतानुष्ठानेन सपर्यां कुरुत। सपर्यतिः परिचरणकर्मा[2]। सूर्यार्थं यज्ञं कुरुतेत्यर्थः। यद्वा तदृतं सत्यं ब्रह्म सपर्यत परिचरत। किञ्च शंसत शंस स्तुतौ सूर्यप्रीत्यर्थं स्तुतिं कुरुत। शस्त्राणि पठतेत्यर्थः। यागानुष्ठाने तस्यावश्यकत्वादित्यर्थः॥ ३५॥

का० समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमितीति[3]। पञ्च यजूंषि वारुणानि। हे काष्ठ त्वं वरुणस्योत्तम्भनम[सि] वरुणस्य सोमस्योन्नमनं भवसि न तु शकटस्येत्यर्थः। उत्तभ्यते उन्नम्यते† शकटमुखाग्रमुन्नतत्वेन स्थाप्यते यस्मिन् काष्ठे त[त्]

* "दिवः पुत्रायत इति पुत्रः"—इति क०। † "उन्नम्यते"—इति मु० पु० नास्ति। १—निघ० ३,६,१। २—३,५,३। ३—७,९,२५।

कल्याणे। हे भुवःपते भूशब्देन भूमौ स्थितानि भूतानि* यजमानाध्वर्युप्रभृतीन्युच्यन्ते। तेषां भूतानां पालकत्वात्पतिः सोमः। भूतानि मित्तिरिः प्रच्यवस्व भुवस्पत इत्याह भूतानां ह्येष पतिरिति। तथाविध हे सोम विश्वानि सर्वाणि धामान्यभि स्थानानि पत्नीशालाहविर्धानप्रभृतीनि अभिलक्ष्य प्रच्यवस्व। प्रकर्षेण गच्छ। चुरङ्गतौ। प्रच्यवमानं त्वा त्वां परिपरिणो मा विदन् मा जानन्तु। सर्वतः सञ्चरन्तस्तस्करविशेषाः परिपरिण उच्यन्ते। तथा परिपन्थिनो यागस्य प्रतिषेधकाः शत्रवस्त्वां मा विदन्। छन्दसि परिपरिपन्थिपरिणौ पर्यवस्थातरीति निपातावेतौ। तथा वृका विकर्तनशीला आरण्यश्वानो दुर्जना वा त्वां मा विदन्। किम्भूता वृकाः। अघायवः परस्याघं कर्तुमिच्छन्ति ते अघायवः। सुप आत्मनः क्यजिति क्यचि अश्वाघस्यादित्याकारः। क्याच्छन्दसीति क्यजन्तादुप्रत्ययः।

अघायवोविदन्श्येनोभूत्वापरापतयजमानस्यगृहान्गच्छतन्नौसꣳस्कृतम् ॥ ३४ ॥

नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतꣳसपर्यत। दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्य्यायशꣳसत ॥ ३५ ॥

किञ्च श्येनो भूत्वा श्येनरूपमास्थाय श्येनाख्यपक्षिवच्छीघ्रगामी वा भूत्वा परापत उत्पत यजमानस्य गृहान्गच्छ। तत्र तत् यजमानगृहेषु नौ आवयोः तव मम च संस्कृतं सर्वोपकरणसंयुक्तं स्थानमस्तीति शेषः ॥ ३४ ॥

का० शालां पूर्वेण प्रतिप्रस्थाताग्नीषोमीयं पशुमादाय तिष्ठति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गं नमो मित्रस्येत्येनमालभ्य वाचयतीति[1]। सौरी जगती सूर्यदृष्टा। द्वादशाक्षरचतुःपादा जगती। अत्र मन्त्रे सूर्यरूपेण सोमः स्तूयते। एवंविधाय सूर्याय नमः। किम्भूताय मित्रस्य वरुणस्य। चतुर्थ्यर्थे षष्ठी। मित्राय वरुणाय मित्रवरुणदेवतारूपेण वर्तमानाय। जगतां हितकारिणे।

* भूतानीति नास्ति सु० पुस्तकादन्यत्र। 1——७,९,२१-२२।

रोह । तथा अग्नेर्वङ्केरक्ष्णो नेत्रस्य कनीनकं तारकां चारोह तयोश्चक्षुस्तराभव यथैताभ्यां दृश्यस इत्यर्थः। यत् यस्मिन्नेतयोर्दर्शने विपश्चिता विदुषा सर्वज्ञेन सूर्येणाग्निना च भ्राजमानः दीप्यमानः सन्नेतशेभिरेतशैरश्वैस्त्वमीयसे गच्छसि। एतश इत्यश्वनामसु पठितम्[1]। यत् त्वमश्वैर्गच्छसि। ईङ् गतौ दिवादिरात्मनेपदी। एतशैरिति करणतृतीया। यद्वा कर्मणि रूपमेतशैरिति कर्तरि तृतीया। यताश्वैस्त्वं नीयसे इत्यर्थः॥ कृष्णाजिनस्य पुंस्त्वमार्षम्। सूर्याग्निदृष्टिविषयत्वे सति मार्गो रक्षोबाधरहितो भवति। तदुक्तं तित्तिरिणा। एष वास्य खलु रक्षोहणः पन्था योऽग्नेश्च सूर्यस्य चेति॥ ३२॥

का० अनड्वाहौ युनक्त्युस्रावेतमितीति[2]। आनडुही ऊर्ध्वबृहती। यस्यास्त्रयः पादा द्वादशाक्षराः सोर्ध्वबृहतीत्युक्तेः। अत्राद्यो

**उस्रावेतन्धूर्षाहौयुज्येथामनश्रूअवीरहणौब्रह्मचोदनौ। स्वस्तियजमानस्यगृहान्गच्छतम्॥ ३३॥**

**भद्रोमेसिप्रच्यवस्वभुवस्पतेविश्वान्यभिधामानि। मात्वापरिपरिणोविदन्मात्वापरिपन्थिनोविदन्मात्वावृका**

दशार्णः द्वितीयस्त्रयोदशार्णस्तेनैकोना। हे उस्रौ अनड्वाहौ युवामेतमागतमेत्य च स्वयमेव युज्येथां रथे युक्तौ भवतम्। किंभूतौ युवाम् धूर्षाहौ धुरं सहेते तौ धूर्षाहौ शकटधुरं वोढुं समर्थौ। तथा अनश्रू नेत्रयोरश्रुरहितौ सोत्साहावित्यर्थः। अवीरहणौ न वीरान्घ्नन्तस्तौ। शृङ्गादिभिर्वीराणां शिशूनां हननमकुर्वाणौ। ब्रह्मचोदनौ ब्रह्मणो विप्रान् चोदयतस्तौ ब्राह्मणानां यज्ञं प्रति प्रेरकौ। एवं सम्बोध्य प्रयोजनमाह। तथाविधौ युवां स्वस्ति क्षेमेण यजमानस्य गृहान्प्रति गच्छतम्॥ ३३॥

का० भद्रो मेऽसीति वाचयतीति[3]। सौम्यं यजुः। हे सोम मे मह्यं यजमानाय मदुपकारार्थं त्वं भद्रोऽसि कल्याणरूपोऽसि।

१—निघ० १,१४,१०। २—७,९,११। ३—७,९,१९।

साणं जानातीत्यर्थः तथा सम्राट् सम्यग्राजमानो वरुणो विश्वा विश्वानि सर्वाणि भुवनानि आसीदत् लोकान्व्याप्नोति। विश्वा विश्वानि सर्वाणि इत् एवार्थे सर्वाण्येव वरुणस्य व्रतानि कर्माणि। यद्वा इदित्यव्ययमित्यमर्थे। इदित्थं तानि द्युलोकस्तम्भनादीनि वरुणस्य व्रतानि व्रतवन्नियतानि। सर्वदा तानि करोतीत्यर्थः ॥ ३० ॥

का० वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परितत्यति[1]। बन्धनहेतुना वस्त्रेण परितो वेष्टयित्वेत्यर्थः। वि उपसर्गस्ततानेत्यनेन सम्बध्यते। वरुणो वनेषु वनगतवृक्षाग्रेषु अन्तरिक्षमाकाशं विततान। यद्यपि सर्वगतमन्तरिक्षं तथापि तत् मूर्तद्रव्याभावादत्यन्तं विस्तारितवान्। तथार्वत्सु अश्वेषु वाजं बलं विततानेत्यनुवर्तते। यद्वार्वत्सु पुरुषेषु वाजं वीर्यं विततान वीर्यं वै वाजः

वनेषुव्यन्तरिक्षन्ततानवाजमर्वत्सुपयउस्रियासु। हृत्सुक्रतुंवरुणोविक्ष्वग्निन्दिविसूर्य्यमदधात्सोममद्रौ ॥ ३१

सूर्य्यस्यचक्षुरारोहाग्नेरक्ष्णःकनीनकम्। यत्रैतशेभिरीयसेभ्राजमानोविपश्चिता ॥ ३२ ॥

पुमांसो अर्वन्त इति[2] श्रुतेः तथा उस्रियासु पयः क्षीरं विततान उस्रियाशब्दो गोनामसु पठितः[3] हृत्सु हृदयेषु क्रतुं सङ्कल्पं तच्छक्तियुतं मनो विततान। विक्षु प्रजासु अग्निं जठराग्निम्। दिवि द्युलोके सूर्यं विततान। अद्रौ पर्वते सोमं वल्लीरूपमदधात् स्थापितवान्। पर्वतपाषाणसन्धिषु सोमवल्ल्या उत्पद्यमानत्वादद्रौ सोमस्थापनमुक्तम्। तदाह तित्तिरिः। सोममद्रावित्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोमं निदधातीति। य एवं मन्त्रद्वयोक्तद्युलोकस्तम्भनादिसामर्थ्यवान् परब्रह्मलक्षणो वरुणस्तं वयं स्तुम इति शेषः ॥ ३१ ॥

का० कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरितीति[4]। कृष्णाजिनदेवत्यानुष्टुप्। हे कृष्णाजिन त्वं सूर्यस्य चक्षुर्नेत्रं त्वमा-

१——७,८,९। २——३,३,४,७। ३——निघ० २,११,३। ४——७,९,९।

पन्थान-स्तौति। पन्थां पन्थानं मार्गं प्रत्यपद्महि वयं प्रत्यपद्यामहि प्रतिपन्नाः प्राप्ता अभूमेत्यर्थः। पद गतावित्यस्य व्यत्ययेन अपि लुप्ते लङि रूपम्। विभक्तेः पूर्वसवर्णो पन्थामिति रूपम्। किंभूतं पन्थानं स्वस्तिगां स्वस्ति क्षेमेण गम्यते यत् स स्वस्तिगास्तं क्षेमेण गन्तुं योग्यम्। गमेर्विटि प्रत्यये विड्वनोरनुनासिकस्यादिति मकारस्याकारे रूपम्। तथा अनेहसम् एहः पापरूपश्चोरादि बाधस्तद्रहितम्। यद्वा एह इत्यपराधनाम। यत्र गतानामपराधो नास्ति। येन पथा गच्छन् पुरुषो विश्वाः विश्वान् सर्वान् द्विषो द्वेषिणश्चोरादीन् परिवृणक्ति परितो वर्जयति। वृजी वर्जने रुधादिः। वसु विन्दते धनं च लभते तं पन्थानमिति पूर्वत्रान्वयः। विद्लृ लाभे॥ २९॥

अदि॑त्यास्त्वगस्यदि॑त्यै॒सद॒ आसी॑द। अस्त॑भ्ना॒द्द्यां वृ॑ष॒भो अ॒न्तरि॑क्ष॒ममि॑मीत वरि॒माणं॑ पृथि॒व्याः॥

आसी॑द॒द्विश्वा॒ भुव॑नानि स॒म्राड्विश्वेत्तानि॒ वरु॑णस्य व्र॒तानि॑॥ ३०॥

का० कृष्णाजिनमश्विनास्तृणात्यदित्यास्त्वगितीति[1]। अश्विन् शकटे इत्यर्थः। हे कृष्णाजिन त्वमदित्यास्त्वगसि अखण्डितायाः पृथिव्याः त्वग्रूपं भवसि॥ का० तस्मिन्सोमं निदधात्यादित्यै सद इतीति[2]। हे सोम त्वमदित्यै सदः अदितेर्भूमेः सम्बन्धि स्थान मासीद सर्वतः प्राप्नुहि तत्रोपविशेत्यर्थः॥ का० अस्तभ्नाद् द्यामिति सोममालभ्य वाचयतीति[3]। द्वे वरुणदेवते त्रिष्टुभौ। क्रीतसोमस्य वरुणदेवतत्वाद्वरुणो ब्रह्मरूपेण स्तूयते। वृषभः श्रेष्ठो वरुणो द्यामस्तभ्नात् द्युलोको यथा न पतति तथा स्वकीययाज्ञया स्तम्भितवान्। तथान्तरिक्षमप्यस्तभ्नात्। तथा पृथिव्या वरिमाणं भूमेरुरुत्वममिमीत मिमीते। उरोर्भावो वरिमा तम्। एतावती भूरिति परि-

1—७,९,१। 2—७,९,१। 3—७,९,८।

स्वनति स्वानः। भ्राजते शोभतेऽसौ भ्राजः। अङ्घस्य पापस्यारिरङ्घारिः। बिभर्ति पुष्णाति विश्वमिति बम्भारिः हसति हस्तो सर्वदा हृष्टरूपः। शोभनौ हस्तौ यस्य सुहस्तः। कृशं दुर्बलमनिति जीवयतीति कृशानुः। स्वानादयः सप्तसोमरक्षका देवविशेषाः। हे स्वानादयः सप्त देवाः वो युष्माकमेते सोमक्रयणाः सोमः क्रीयते यैस्ते सोमं क्रेतुमानीता हिरण्यादिपदार्थाः पुरतः स्थापिताः। तान् पदार्थान् यूयं रक्षध्वमवत। वो युष्मान्मा दभन्वैरिणो मा हिंसिषत। स्वानादयो धिष्ण्याधिष्ठातारः सोमरक्षकाः। तदाह तित्तिरिः। स्वान भ्राजेत्याह ते वामुष्मिंल्लोके सोममरक्षन्निति॥॥ २७॥

का० गृहीतसोमं परि माग्न इति वाचयतीति[1]। अग्निदेवत्या पुरस्ताद्बृहती। यस्या आद्यो द्वादशाक्षरस्त्रयोऽष्टाक्षराः पादाः

**परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज। उदायुषा स्वायुषोदस्थाममृताँ२॥ऽअनु॥ २८॥**

**प्रति पन्थामपद्महि स्वस्तिगामनेहसम्। येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु॥ २९॥**

सा पुरस्ताद्बृहती। आद्यश्चेत्पुरस्ताद्बृहतीत्युक्तेः। हे अग्ने दुश्चरितात्पापान्मा मां परिबाधस्व परितो निवारय। मे पापे प्रवृत्तिर्मा भूदित्यर्थः। सुचरिते शोभने चरिते सदाचाररूपे पुण्ये मा मां यजमानमाभज सर्वतो भज स्थापयेत्यर्थः॥ का० उदायुषेत्युत्थानमिति[2]। उदायुषा उत्कृष्टेन चिरजीवनलक्षणेनायुषा निमित्तेन तथा स्वायुषा यागदानादिना शोभनेनायुषा निमित्तभूतेन अमृताननु सोमादिदेवाननुसृत्य उदस्थामहमुत्थितवानस्मि। तिष्ठतेर्लुङि रूपम्॥ २८॥

का० शीर्ष्णि सोमं कृत्वा पाणिमन्तर्धाय प्रति पन्थामित्यनोऽभ्येतीति[3]। शकटमभिलक्ष्य गच्छेदित्यर्थः। अनुष्टुप्पथिदेवत्या।

१—७,९,१। २—७,९,३। ३—७,९,४।

स्तुत्वा सोममाह। परमेणोत्कृष्टेन पशुनाजया त्वं क्रीयसे ततोऽहं सहस्रपोषं सहस्रं प्राणिनां पुष्णातीति सहस्रपोषं धनं पुषेयं पुष्णीयां वर्धयेयमित्यर्थः। पुष्णातेर्व्यत्ययेन शे प्रत्यये लिङि पुषेयमिति रूपम् ॥ २६ ॥

का० सख्येनाजां प्रयच्छन्मित्रो न इति दक्षिणेन सोममादायेति[1] ॥ सौम्यम्। हे सोम त्वं नोऽस्मान्प्रत्येहि आगच्छ। किंभूतस्त्वं मित्रः सखा प्रीतियुतः यद्वा मित्रः रविरूपः। तथा सुमित्रधः शोभनानि मित्राणि दधाति पुष्यति सुमित्रधः। क्रीत्वा वाससा बद्धस्य सोमस्य वरुणदेवताकत्वेन क्रूरत्वात्तच्छान्त्यर्थी मित्रत्वेन प्रार्थ्यते। तदाह तित्तिरिः। वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रध इत्याह शान्त्यै इति ॥ का० दीक्षितोरौ दक्षिणे प्रतुद्य वासो निदधातीन्द्रस्योरुमितीति[2]। वासः प्रतुद्य वस्त्र-

निवोनएहिसुमित्रधइन्द्रस्योरुमाविशदक्षिणमुशन्नुशन्तᳬस्योनःस्योनम् ॥

स्वानभ्राजाङ्घारेबम्भारेहस्तसुहस्तकृशानवेतेवःसोमक्रयणास्तान्रक्षध्वम्मावोदभन् ॥ २७ ॥

मुपरि स्थाप्य सोमं निदध्यादित्यर्थः ॥ यजमानरूपेण परमैश्वर्येणोपेतत्वादत्रेन्द्रशब्देन यजमानः। तथा च श्रुतिः। एष वा अत्रेन्द्रो भवति यद्यजमान इति[3]। हे सोम त्वमिन्द्रस्य यजमानस्य दक्षिणमूरुमाविश दक्षिणे ऊरावुपविशेत्यर्थः। किंभूतस्त्वमुशन् वश कान्तौ वष्टि उशन् शतृप्रत्ययः ऊरुं कामयमानः। तथा स्योनः सुखभूतः। किंभूतमूरुमुशन्तं सोमं कामयमानं स्योनमुपवेशे सुखकरम्। पुरा देवाः सोमं क्रीतमिन्द्रस्योरावुपवेशयंस्तस्मादत्रेन्द्रशब्देन यजमानः। तदाह तित्तिरिः देवा वै सोममक्रीणंस्तमिन्द्रस्योरौ दक्षिण आसादयन् स खलु वा एतर्हीन्द्रो यो यजते तस्मादेवमाहेति। का० स्वान भ्राजेति जपति सोमविक्रयिणमोच्यमाण इति[4]।

१——७,८,२१। २——७,८,२३। ३——३,२,३,१०। ४——७,८,२४।

चन्द्रेणाह्लादकरेण तथामृतेनाग्निसंयोगादिनापि विनाशरहितेन ॥ सग्मे तदिति सोमविक्रयिणं हिरण्येनाभिकम्पयतीति[1]। यो हिरण्यमादाय सोमं विक्रीणीते तं हिरण्येनाभिकम्पयेत्। तद्धस्ते हिरण्यं दत्त्वा दत्त्वा स्वीकुर्वन्तं निराशं कुर्यादिति सूत्रार्थः ॥ षष्ठी प्रथमार्थे। हे सोमविक्रयिन् गोः गौः सोममूल्यत्वेन तुभ्यं दत्ता सा त्वदीया गौः पुनः प्रत्यावृत्य सग्मे यजमाने तिष्ठतु। हिरण्यमेव तवास्तु गौर्मा भूदित्यर्थः ॥ यद्वा ते गौः सग्मे वर्तते। गोग्मा क्ष्मा क्षामेत्युक्तेः[2] ग्मा गौः तया सह वर्तमानः सग्मस्तस्मिन् सग्मे ते गोरिति। यजमाने ते गौरिति[3] श्रुतेः सग्मो यजमानः ॥ का० अस्मे तदिति यजमानसहितं निदधातीति[4] यजमाने प्रत्यर्पितं यद्द्रव्यं तत्पुनर्यजमानसहितं सोमविक्रयिणः पुरतो निदध्यादिति सूत्रार्थः। हे सोमविक्रयिन् ते चन्द्राणि तुभ्यं दत्तानि यानि हिरण्यानि तान्यस्मे अस्मासु प्रत्याहृत्य तिष्ठन्तु तव गौरेव सोममूल्यमस्तु हिरण्यानि मा भुवन्नित्यर्थः। का० अजां प्रत्यक्षुखीमालभ्य वाचयति तपसस्तनूरितीति[5]। अर्धं अजा देवतास्य यजुषोऽर्धे सोमः। हे अजे त्वं तपसः पुण्यस्य तनूरसि देहोऽसि। दिवि स्थितस्य यज्ञियस्यानयनायाजां* गृहीत्वा गायत्री जगामेति तित्तिरिणा सोमाहरणोपाख्याने उक्तत्वादजायाः पुण्यशरीरत्वम्। किञ्च हे अजे त्वं प्रजापतेर्वर्णोऽसि वर्णो देहः। यथा प्रजापतिः सर्वदेवताप्रिय एवमजापि। तदुक्तं तित्तिरिणा। सा वा एषा सर्वदेवत्या यदजेति। एवमजामुक्त्वा सोमं प्रत्याह। हे सोम परमेण पशुना उत्तमेनाजालक्षणेनानेन पशुना त्वं क्रीयसे। तपसस्तनूत्वादजाया उत्तमत्वम्। अतस्तव प्रसादात्सहस्रपोषं पुत्रपश्वादिसहस्राणां पोषो यथा भवति तथा पुषेयं पुष्टो भूयासम् ॥ यद्वायमर्थः। हे अजे त्वं प्रजापतेस्तपसस्तनूरसि प्रजापतितपोरूपासि तत उत्पन्नत्वात्। तदुक्तं श्रुत्या। तपसो ह वा एषा प्रजापतेः सम्भूता यदजेति[6]। किञ्च प्रजापतेर्वर्णो रूपं त्वमसि। त्रिगुणत्वात्प्रजापतेस्त्रिरूपत्वम्। अजापि प्रतिसंवत्सरं त्रिवारं प्रसूते तत्साम्यात्† प्रजापतेर्वर्णत्वम्। तदुक्तं श्रुत्या। सा यत्त्रिः संवत्सरस्य जायते तेन प्रजापतेर्वर्ण इति[7]। एवमजां

१——७,८,१७। २——निघ० १,१,२। ३——३,३,३,७। ४——७,८,१८। ५——७,८,२०। ६——३,३,३,८। ७——३,३,३,९।

* "यज्ञियस्य सोमस्यानयनायाजां"—इति क०। † "तस्मात्" मु०।

दीप्तिः । मतिरपि प्रकाशरूपत्वाद्दीप्तिः । अमतिशब्दस्य वा अमतिभावः । सविशेषभाविशेषणम् । आत्मप्रकाशमयी ततिर्मतिर्वा यस्य भाः आद्दिदुयतत् । किं निमित्तम् । सवीमनि अनुज्ञानिमित्तं सर्वान् कर्माण्यनुज्ञातुमित्यर्थः । षु प्रसवैश्वर्ययोः इस्त्तुभ्य ईमनिजिति ईमनीच् । गुणावादेशौ । सवीमा प्रसवोऽनुज्ञेत्यभिधानम् ॥ स स्वरादित्यः । *क्रपा कल्पनया अमिमीत सोममिति शेषः । एतावतान् सोमं इति तदीयं परिमाणं निश्चितवानित्यर्थः । किम्भूतः स्वः हिरण्यपाणिः हिरण्यं पाणौ यस्य सौवर्णाभरणयुक्तहस्तः । सुक्रतुः साधुसङ्कल्पः ॥ का० अन्तान्त्सङ्गृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेति[1] । हे सोम ! प्रजाभ्यः प्रजानामुपकाराय त्वां त्वां बध्नामीति शेषः ॥ का० अङ्गुल्या मध्ये विवृणोति प्रजास्त्वानुप्राणन्त्विति[2] । उष्णीषेण बद्धस्य सोमदेवस्य श्वासरोधो मा भूदिति विवरं कुर्यादिति

शुक्रन्त्वाशुक्रेणक्रीणामिचन्द्रञ्चन्द्रेणाम्तममृतेन । सग्मे तेगोरस्मे तेचन्द्राणितपसस्तनूरसि

प्रजापतेर्वर्णःपरमेणपशुनाक्रीयसेसहस्रपोषम्पुषेयम् ॥ २६ ॥

सूत्रार्थः । हे सोम प्रजास्त्वामनुप्राणन्तु श्वासं कुर्वन्तु त्वामनुसृत्य सर्वाः प्रजाः श्वासं कुर्वन्तु जीवन्तु । तथा हे सोम प्रजा अनुश्वासं कुर्वतीः प्रजा अनुसृत्य प्राणिहि श्वासं कुरु । प्रजानां तव[†] कदाचित् श्वासरोधो मा भूत् परस्परमनुसृत्य जीवनं भवत्वित्यभिप्रायेण विवरकरणमित्यर्थः ॥ २५ ॥

का० शुक्रं त्वेति हिरण्यमालभ्य वाचयतीति[3] । हे सोम शुक्रं दीप्यमानं त्वा त्वां शुक्रेण दीप्यमानेन हिरण्येन क्रीणामि क्रीतं करोमि । किम्भूतं त्वां चन्द्रं चदि आह्लादने फलहेतुत्वेनाह्लादकरम् । तथा अमृतं स्वादुत्वेनामृतसमानम् । किम्भूतेन शुक्रेण

* "कल्पते क्रप्" इति पूर्वभागीऽधिकः क० पुस्तके । † "प्रजानां तव च" इति मु० । १—७,७,२० । २—७,७,२१ । ३—७,८,१६ ।

देवता यत्र तिष्ठन्ति स छन्दोलोकस्तदाधिपत्यं प्रापय्य सोमं क्रीणानः स्वाधिपत्यभाग्भवतीत्यभिप्रायः ॥ का० प्राङ्ङुपविश्य स्वाको-ऽसीति सोममालभतइति[1]। हे सोम त्वं क्रयपथमागतः सन्नास्माकोऽसि। शुक्रः शुक्लसम्बन्धः ते तव ग्रह्यः। ग्रह एव ग्रह्यः। शुक्रपदमैन्द्रवायवादिग्रहाणा मुपलक्षणम्। शुक्रादयः सर्वे तव ग्रहा इत्यर्थः॥ विचितः। विचिन्वन्तीति विचितः विवेकेन चयनस्य कर्तारः त्वां विचिन्वन्तु विविक्तं कुर्वन्तु सारासारविवेकं कृत्वा सारभूतं समूहयन्त्वित्यर्थः ॥ २४ ॥

का० सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति प्राग्दशमुदस्वा तस्मिन्सोमं मिमीते दशकृत्वोऽभित्यमितीति[2]। सावित्र्यष्टिः। त्वं तं सवितारं देवमभ्यर्चामि सर्वतः पूजयामि। किम्भूतं देवम्। ओण्योः द्यावापृथिव्योरन्तरा वर्तमानमिति शेषः। ओण्याविति

अभित्यन्देवꣳसवितारमोण्योःकविक्रतुमर्चामिसत्यसवꣳरत्नधामभिप्रियम्मतिङ्कविम्। ऊर्द्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः॥ प्रजाभ्यस्त्वाप्रजास्त्वानुप्राणन्तुप्रजास्त्वमनुप्राणिहि ॥ २५ ॥

द्यावापृथिवीनामसु पठितम्। तथा कविक्रतुं कविः क्रतुः यस्य तं मेधाविकर्माणम्। सत्यसवं सत्यः सवो यस्य अवितथप्रेरणम्। तथा रत्नधाम् रत्नानि दधातीति रत्नधास्तं रत्नानां धारकं पोषकं दातारं वा। अभिप्रियं सर्वतः प्रीतिविषयम्। मतिं मन्यतइति मतिस्तं मननयोग्यम्[3]। कविं क्रान्तदर्शनम्। किञ्च यस्य सवितुर्भा दीप्तिः अमतिः केनापि मातुमशक्या सती ऊर्ध्वा गगनाभिमुखी सवीमन्यदिद्युतत् सवः प्रसवः प्रवृत्तिर्नक्षत्रादीनां यस्मिन् स सवीमा तस्मिन् गगनप्रदेशे सर्वाणि वस्तूनि द्योतयन्ति॥ यद्वायमर्थः। यस्यामतिरात्ममयी भा ऊर्ध्वा गगने सर्वमदिद्युतत्। अमात्यमन्द आत्मवचनः आत्ममयी ततिर्मतिर्वा अमतिः। तन्यतइति ततिः

१——७,७,९। २——७,७,१२-१३। ३——निघ० ३,२०,१५।

पत्न्या आयुः मा प्रमोषीः मा खण्डय। मुष स्तेये लुङि रूपम्। मो अहं तव। तव सोमक्रयण्या आयुरहं पत्नी मा उ मैव प्रमोषिषमित्यध्याहारः। मार्थे मो इत्यव्ययं वा। अहं तवायुर्न नाशयामीत्यर्थः। किञ्च वीरं विदेय तव देवि संदृशि हे देवि गौः तव संदृशि सन्दर्शने सति वीरं पुत्रं विदेय लभेय। सन्दर्शनं संदक् भावे क्विप्। विदॣ लाभे इत्यस्य व्यत्ययेन तुदादिभ्यः श इति शप्रत्यये लिङि रूपम्॥ २३॥

का० एष तइति वाचयतीति[१]। मन्त्रचतुष्टयं यजमानः पठेत्। हे अध्वर्यो सोमाय सोमाभिमानिने देवाय मे इति वचो ब्रूयात्त्वं ब्रूहि कथय। इति किम्। हे सोम ते तव एष पुरो दृश्यमानो भागो गायत्रो गायत्रीसम्बन्धी। गायत्रीच्छन्दोऽर्थं तव क्रयो न तु

एषतेगायत्रोभागइतिमेसोमायब्रूतादेषतेत्रैष्टुभोभागइतिमेसोमायब्रूतादेषतेजागतोभागइतिमेसोमाय

ब्रूताच्छन्दोनामानाᳪंसाम्राज्यङ्गच्छेतिमेसोमायब्रूतादास्माकोसिशुक्रस्तेग्रह्योविचितस्त्वाविचिन्वन्तु॥ २४॥

बधार्थमिति यजमानाभिप्रायः। तं ममाभिप्रायं सोमाय कथयेत्यर्थः॥ ते तव एष त्रैष्टुभः त्रिष्टुप्छन्दसः सम्बन्धी भाग इति मे अभिप्रायमध्वर्यो सोमाय त्वं ब्रूहि। एवमग्रेऽपि॥ जागतो जगतीछन्दसः सम्बन्धी। अन्यत्पूर्ववत्॥ छन्दोनामानाम् छन्द इति नाम येषामस्त्येषामप्युष्णिगादीनां ताः छन्दोनामानः। तेषां साम्राज्यं गच्छ सर्वेषां छन्दसामाधिपत्यं प्राप्नुहि। इति मे वचः सोमाय ब्रूतात्कथय। यः सोमाय छन्दसामाधिपत्यं दत्त्वा क्रीणाति तं स स्वानामाधिपत्यं प्राप्नोति। तदुक्तं तित्तिरिणा यो वै सोमं राजानं साम्राज्यलोकं गमयित्वा क्रीणाति गच्छति स्वानां साम्राज्यमिति। अत एतैर्मन्त्रैः सोमस्य राज्याप्तिः सूचिता। गायत्र्यादिच्छन्दो-

१—७,७,८।

प्रयच्छति त्वे राय इति[१] । हे यजमान त्वे त्वयि रायो धनानि एतत्पदरूपेण तिष्ठन्त्विति शेषः । यद्वात्र रायः पशवः । पशवो वै राय इति[२] श्रुतेः । त्वयि पशवः सन्तु ॥ का० मे राय इति यजमानः प्रतिगृह्णातीति[३] । मे मयि यजमाने रायो धनानि पदरूपेण तिष्ठन्तु । पशवो मयि सन्तु । ङेः शेआदेशे मे रूपम् । का० मा वयमित्यध्वर्युरात्मानं संस्पृशतीति[४] । वयमध्वर्युप्रभृतयो रायस्पोषेण धनस्य पुष्ट्या मा वियौष्म वियुक्ता मा भवाम । यौतेर्माङि लुङ्ङिति लुङि उत्तमबहुवचने वियौष्मेति रूपम् ॥ का० हुत्वा पत्नेर पदं प्रयच्छति नेष्टा तोत इत्येनां वाचयतीति तोतःशब्दः कलत्रवाची अव्ययम् । तोतः कलत्रे रायो धनानि पशवो वा पदरूपेण तिष्ठन्तु । यद्वाव्ययानामनेकार्थत्वात्तोतःशब्दो युष्मत्पर्यायः । तोतः त्वयि रायः सन्तु ॥ २८ ॥

अस्मेरमस्वास्मेतेबन्धुस्त्वेरायोमेरायोमावयꣳरायस्पोषेणवियौष्मतोतोरायः ॥ २२ ॥

समख्येदेव्याधियासन्दक्षिणयोरुचक्षसा । मामआयुःप्रमोषीर्मोअहन्तववीरंविदेयतवदेविसन्दृशि ॥ २३ ॥

का० सोमक्रयण्या च समीक्ष्यमाणां समख्यइतीति[५] । एनां वाचयतीत्यनुवर्तते । आस्तारपङ्क्तिः पत्न्याशीः । यस्या आद्यावष्टाक्षरौ पादावन्त्यौ द्वादशाक्षरौ सास्तारपङ्क्तिः । अन्त्यौ चेदास्तारपङ्क्तिरिति वचनात् ॥ सोमक्रयणीतः पत्न्याशिषमाशास्ते । हे सोमक्रयणि देव्या द्योतमानया त्वया धिया बुद्ध्या सह बुद्धिपूर्वकमहं समख्ये अद्राक्षि दृष्टेत्यर्थः । ख्या प्रकथने इत्यस्य धातोः संपूर्वस्य लुङि तङि अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङि उत्तमैकवचने कर्मणि समख्ये इति रूपम् । एकं सम्मदं पादपूरणाय । किंभूतया त्वया दक्षिणया दक्षिणात्वयोग्यया । तथा उरुचक्षसा उरु चष्टे सोरुचक्षास्तया विस्तीर्णदर्शनया । एवंविधा त्वं मे मम

१—७,६,२१ । २—२,३,१,८ । ३—७,६,२२ । ४—७,६,२३ । ५—७,६,२६ ।

का० उदीचीं नीयमानामनुगच्छतो वस्व्यसीतीति[1] ॥ अनुष्टुब्बृहती वा। सोमक्रयण्याः स्तुतिः। सोमक्रयणी गौर्वस्वादित्यादित्य रुद्रचन्द्ररूपेण स्तूयते वस्वीत्यादिपञ्चविशेषणैः। हे गौः त्वं वस्वी वसुरूपासि। अदितिर्देवमातासि। द्वादशादित्यरूपासि। रुद्रा एकादशरुद्ररूपासि। चन्द्ररूपा चासि। किञ्च बृहस्पतिः सुम्ने त्वां रम्णातु रमयतु। रमतेर्व्यत्ययेन श्नाप्रत्ययः। यद्वा रम्णातु संयमयतु। रम्णातिः संयमनकर्मा विसर्जनकर्मा वेति यास्कः[2]। रुद्रो वसुभिः अष्टदेवैः सहितः त्वामाचके, रचितु कामयताम्। आचकइति चकमान इति कान्तिकर्मसु पठितः[3] ॥ २१ ॥

का० षट्पदान्यतीत्य सप्तमं पर्युपविशन्ति हिरण्यमस्मिन्निधायाभिजुहोत्यदित्यास्त्वेतीति[4]। आज्यदेवतं यजुः। अदित्याः अख-

**वस्व्यस्यदितिरस्यादित्यासिरुद्रासिचन्द्रासि। बृहस्पतिष्ट्वासुम्ने रम्णातुरुद्रोवसुभिराचके ॥ २१ ॥**

**अदित्यास्त्वामूर्द्धन्नाजिघर्मिदेवयजनेपृथिव्याइडायास्पदमसिघृतवत्स्वाहा।**

ण्डितायाः पृथिव्याः भुवो मूर्धन् मूर्धनि शिरोरूपे देवयजने देवानां यागयोग्यस्थाने हे आज्य त्वा त्वामाजिघर्मि आघारयामि। घृ क्षरणदीप्त्योः। पृथिव्या ह्येष मूर्धा यद्देवयजनमिति तैत्तिरिश्रुतेर्देवयजनस्य पृथिवीमूर्धत्वम्। किञ्च हे स्थानविशेष त्वमिडायाः गोः पदमसि गोपदेनाङ्कितत्वात्तद्रूपमसि तच्च पदं घृतवत् घृतयुक्तं कर्तुं स्वाहा जुहोमि ॥ का० स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति[5]। हे गौः पद त्वमस्मे अस्मासु रमस्व क्रीडां कुरु ॥ का० समुद्धृत्य पदं स्थाल्यामावपत्यस्मे ते बन्धुरिति[6]। हे सोमक्रयणीपद ते तव अस्मे बन्धुः वयं बन्धुभूताः स्मः। सुपां सुलुगिति जसः शेआदेशे अस्मे इति रूपम्। का० यजमानाय पदं

१—७,६,१६। २—निरु० दै० १०,९। ३—निघ० २,६,११। ४—७,६,१७-१८। ५—७,६,१९। ६—७,६,२०।

ञ्चति सुप्राची। सुष्ठु प्रत्यङ्ङञ्चति सुप्रतीची। प्रथमं सोमस्य क्रेतारं प्रति सुष्ठु प्राङ्मुखी भूत्वा पश्चात्सोमेन सहास्मान् प्रत्यागन्तुं सुष्ठु प्रत्यङ्मुखी भवेत्यर्थः। तथा च श्रुतिः। सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनरेहीत्येवैतदाहेति[1]। किञ्च मित्रः सूर्यः पदि दक्षिणपादे त्वा त्वां बध्नीतां बन्धनं करोतु अप्रणाशाय। तथा पूषा पोषको देवः सूर्य एवाध्वनो मार्गात्पातु इयं वै पृथिवी पूषेति[2] श्रुतेः। किमर्थमिन्द्राय इन्द्रप्रीत्यर्थं किम्भूतायेन्द्राय अध्यक्षाय अधि उपरि अक्षिणी यस्य सोऽध्यक्षस्तस्मै। द्रष्टे यज्ञस्वामिने इत्यर्थः॥ १९॥

किञ्च। सोमाहरणे प्रवृत्तां त्वां माता त्वदीया जननी अनुमन्यतामनुज्ञां ददातु। पितानुमन्यताम्। उपसर्गावृत्त्या क्रियापदा-

अनुत्वामातामन्यतामनुपितानुभ्रातासगर्भ्योनुसखासयूथ्यः।

सादेविदेवमच्छेहीन्द्रायसोमꣳरुद्रस्त्वावर्त्तयतुस्वस्तिसोमसखापुनरेहि॥ २०॥

वृत्तिः। सगर्भ्यः समाने गर्भे भवः सहोदरो भ्रातानुमन्यताम्। समानस्य छन्दस्यमूर्धप्रभृत्युदर्केष्विति समानपदस्य सादेशः। सयूथ्यः समाने एकस्मिन्यूथे गोसमूहे भवः सयूथ्यः सखा वत्सोऽनुमन्यताम्॥ हे देवि सोमक्रयणि सा त्वमिन्द्राय इन्द्रार्थं सोमं देवमच्छेहि प्राप्तुं गच्छ। अच्छाभेराप्तुमिति[3] शाकपूणिः। किञ्च रुद्रः त्वा त्वां वर्तयतु सोमं गृहीत्वा स्थितां त्वां रुद्रो देवोऽस्मान् प्रति निवर्तयतु। यद्वा रुद्रः त्वां प्रवर्तयतु। यतो रुद्राज्ञां नातिक्रामन्ति पशवः। सोमो देवः सखा यस्याः सा सोमसखा। ईदृशी सोमसहिता सती स्वस्ति क्षेमेण पुनरेहि भूयो अप्यागच्छ॥ २०॥

१—— ३,२,४,१७। २—— ३,२,४,१९। ३——निरु० नै० ५,२८।

का० चिदसीत्येनामभिमन्त्रयतइति[1]। कण्डिकाद्वयेन एनां सोमक्रयणीमित्यर्थः। वागुपाध्यारोपकल्पनया सोमक्रयणी गौः स्तूयते। हे वाग्देवतारूपे सोमक्रयणि त्वं चिदसि मनासि धीरसि। अन्तःकरणस्य चित्तमनोबुद्धय इति तिस्रो वृत्तयः। तल्लक्षणानि। अचेतनदेहादिसङ्घातस्य चेतनत्वं सम्पादयन्ती बाह्यवस्तुषु वा निर्विकल्परूपं सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तं तदेवात्र चिदित्युच्यते। लोके कञ्चित्पदार्थं दृष्ट्वा एवं भवति न वेति सङ्कल्पविकल्पौ कुर्वाणा वृत्तिर्मनः तदेवात्र मनेत्युच्यते। इदमित्थं भवत्येवेति निश्चयरूपा वृत्तिर्बुद्धिः सैवात्र धीशब्देनोच्यते। वागात्मिका सोमक्रयणी चिन्मनोधीरूपत्वेन प्रशस्यते। चिदादिरूपत्वमारोप्य स्तुतिः कृता। दक्षिणादिरूपत्वं तु विद्यमानमेव स्तूयते। हे गौः त्वं दक्षिणासि। गवां देयद्रव्यत्वेन कर्मसु दक्षिणात्वं प्रसिद्धम्। यद्वा वाग्दानस्य प्रशस्तत्वाद्दक्षिणासि। भूमिदानात्परं नास्ति विद्यादानं ततोऽधिकमिति स्मृतेः। तथा क्षत्रियासि।

सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीतां पूषाध्वनस्पात्विन्द्रायाध्यक्षाय ॥ १८ ॥

सोमक्रयसाधनत्वेन। तथा हि। देवेषु क्षत्रजात्यभिमानी सोमः। तदुक्तं बृहदारण्यके यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्र इति[2]। तेन सोमेन क्षत्रेणाभिमन्त्रव्यस्य सोमलताद्रव्यस्य क्रयहेतुत्वेन त्वं क्षत्रियासि। तद्रूपं चास्याः क्रयद्वारा तत्सम्बन्धित्वादुपचर्यते। अत एव यज्ञसम्बन्धित्वाद्यज्ञिया यज्ञार्हासि। अदितिः अखण्डिता अदीना देवमातृरूपासि। नास्ति दितिर्यस्याः सा। अदितिरदीना देवमातेति[3] यास्कः। तथा उभयतःशीर्ष्णी। उभयतः शीर्षं यस्याः सा। ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम्। द्वे शीर्षे प्रायणीयोदयनीये इति[4] यास्कोक्तेः। यद्वोभयतः शीर्ष्णी सर्वतोमुखी वाग्रूपत्वात्। स यदि मया समानं संविपर्यासं वदतीति[5] श्रुतेः। सा पूर्वोक्ता चिदादिरूपा त्वं नोऽस्मदर्थं सुप्राची सुप्रतीची च एधि भव। सुष्ठु प्राक्-

१——७,६.१५। २——माध्य० १,२,१३। काण्व० १,४,११। ३——निरु० नै० ४,२२। ४——निरु० प० १२,७। ५——२.२,४,—६।

तदुक्तं तित्तिरिणा। सतेजसमेवैनं सतनुं करोतीति। यद्वायमर्थः। हे शुक्र आज्य एषा हिरण्यलक्षणा ते तनूः एतत्ते वर्चश्च। समानजन्म वै पयश्च हिरण्यं चोभयं ह्यग्निरेतसमिति[1] श्रुतेः। तया हिरण्यलक्षणया तन्वा संभव एकीभूय भ्राजं सोमं गच्छ। भ्राजतेऽसौ भ्राट् तम्। सोमो वै भ्राडिति[2] श्रुतेः। का० जूरसीति जुहोतीति[2]। वाग्देवतम्। हे वाक् त्वं जूरसि वेगयुक्तासि। यद्वा जीव प्राणधारणे। जीवयतीति जूः। डूप्रत्ययः। किंभूता त्वं मनसा धृता नियमिता। तथा विष्णवे जुष्टा यज्ञो वै विष्णुः। यज्ञार्थं प्रीतियुक्ता। यद्वा षष्ठ्यर्थे चतुर्थी। यज्ञस्य रुचिता ॥ १७ ॥

सत्यं सवो यस्याः सा सत्यसवाः तस्याः सत्यसवसोऽवितथाभ्यनुज्ञायास्तस्यास्ते तथाविधायास्तव वाचः प्रसवेऽनुज्ञायां वर्तमानो

**तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा। शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥ १८ ॥**

**चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी।**

ऽहं तन्वः शरीरस्य यन्त्रं नियमनं दार्ढ्यमशीय प्राप्नुयाम्। स्वाहा इदमाज्यं हुतमस्तु ॥ का० शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां दृ॑षं निदधातीति[4].। जुह्वां बद्धा स्थापितं हिरण्यमुद्धरेत। शुक्रमसि। हिरण्यं देवता। हे हिरण्य त्वं शुक्रमसि शोचते शुक्रम्। शुच दीप्तौ। दीप्यमानमसि। तथा चन्द्रमाह्लादकमसि। चदि आह्लादने। चन्दतीति चन्द्रम्। अमृतं विनाशरहितमसि। अग्निसंयोगेऽपि हिरण्यस्य विनाशाभावः प्रसिद्धः। अग्नौ सुवर्णमक्षीणमिति याज्ञवल्क्योक्तेः। वैश्वदेवमसि। विश्वेषां देवानामिदं वैश्वदेवम् सर्वदेवसम्बन्धि। सर्वोऽपि देवो हिरण्यदानेन तुष्येत् ॥ १८ ॥

१——३,२,४,८। २——३,२,४,९। ३——*·७,६,९। ४——७,६,१०।

का० त्वमग्न इत्याह क्रुद्वाव्रत्यं वा व्याहृत्येति[1]। दीक्षितो यदा क्रुध्यति व्रतविरुद्धं वा ब्रूते तदा त्वमग्न इत्यृचं जपेत्। गायत्र्याग्नेयी वत्सदृष्टा। व्यूहेनाक्षरपूरणम्। हे अग्ने देवो द्योतनात्मकः त्वमा मर्त्येषु मनुष्यपर्यन्तेषु सर्वप्राणिषु व्रतपा असि व्रतस्य कर्मणः पालको भवसि। तथा आ समन्ताद्यज्ञेषु त्वमीड्योऽसि। ईडिरध्येषणकर्मा चेति यास्कः। याचितव्यः पूजयितव्यो वा भवसि। अतः पाहीति शेषः। यद्वा आकारद्वयं समुच्चयार्थं देवे इति सप्तम्यन्तं पदं हे अग्ने त्वं देवेष्वा देवेषु च मर्त्येषु आ मनुष्येषु च व्रतपा असीति शेषं पूर्ववत्॥ का० लब्धमालभ्य वाचयति रास्वेयदिति[2]। क्रतौ प्राप्तं धनं स्पृष्ट्वा मन्त्रं पठेत्। रास्व।

**त्वमग्नेव्रतपाअसिदेवआमर्त्त्येष्वा त्वंयज्ञेष्वीड्यः॥ रास्वेयत्सोमाभूयोभरदेवोनःसवितावसोर्दातावस्वदात्॥ १६॥**

**एषातेशुक्रतनूरेतद्वर्चस्तयासम्भवभ्राजङ्गच्छ। जूरसिधृतामनसाजुष्टाविष्णवे॥ १७॥**

सोमदेवत्यं यजुः। हे सोम इयद्रास्व एतावद्धनं देहि भूयः पुनरपि आभर धनं आहर। हृग्रहोरिति भकारः। यतो वसोर्धनस्य दाता सविता देवो नोऽस्मभ्यं वसु अदात् पूर्वमपि धनं दत्तवान्॥ १६॥

का० आलाबाराण्यपिधाय ध्रौवं जुह्वां चतुर्गृह्णाति बर्हिस्तृणेन हिरण्यं बद्ध्वावदधात्येषा त इतीति[3]। ध्रुवास्थमाज्यं जुह्वां चतुर्गृहीत्वा तत्राज्ये दर्भतृणबद्धं स्वर्णं क्षिपेदिति सूत्रार्थः॥ एषा ते। हिरण्याज्यदैवतम्। हे शुक्र शुक्ल दीप्यमानाग्ने ते तव एषा तनूः दृश्यमानमाज्यं शरीरम्। एतत् आज्ये प्रक्षिप्यमाणं हिरण्यं ते वर्चः त्वदीयं तेजः। तया सम्भव आज्यरूपया तन्वा एकीभव। ततो भ्राजं गच्छ भ्राज दीप्तौ हिरण्यगतां दीप्तिं प्राप्नुहि। एतन्मन्त्रपाठेनाग्नेः सतेजस्त्वं सतनुत्वं च सम्पद्यते।

१—७,५,१-२। २—७,५,१६। ३—७,६,७८।

रूपम्। किञ्च। नोऽस्मान् रक्ष किं कुर्वन्नप्रयुच्छन्। युच्छ प्रमादे। अप्रमाद्यन्। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। नश्च धातुस्थोरुषुभ्य इति न इत्यस्य णत्वम् नो अप्रयुच्छन्नित्यत्र, एङः पदान्तादतीति पूर्वरूपे प्राप्ते प्रकृत्यान्तःपादमव्यपरे इति प्रकृतिभावः। किञ्च अग्ने नोऽस्मान्पुनः प्रबुधे प्रबोधाय कृधि कुरु प्रबोधनं प्रभुत्तस्यै प्रबुधे सम्पदादित्वाद्भावे क्विप्। स्वपतोऽग्नेः प्रार्थनं रक्षसां नाशाय। तदुक्तं तित्तिरिणा। अग्निमेवाधिपं कृत्वा स्वपिति रक्षसामपहत्या इति॥ १४॥

का० विबुद्धमस्वप्नान्तं पुनर्मन इति वाचयतीति[१]। मे मम यजमानस्य मनः पुनरागन् सुप्तिकाले विलीय पुनरिदानीं शरीरे समागतम्। गमेर्लुङि शपि लुप्ते हल्ङ्याब्भ्य इति प्रत्ययलोपे मकारस्य नकारे प्रथमैकवचने आगन्निति रूपम्। किञ्च स्वाप-

**पुनर्म्मनः पुनरायुर्म्मआगन्पुनः प्राणः पुनरात्मामआगन्पुनश्चक्षुः पुनः श्रोत्रम्मआगन्।**

**वैश्वानरोअदब्धस्तनूपाअग्निर्न्नः पातुदुरितादवद्यात्॥ १५॥**

काले मे मदीयमायुर्नष्टप्रायं भूत्वा पुनरागन् इदानीं पुनरुत्पन्नमिवासीत् तथा मे प्राणो वायुः पुनरागन् तथा मे आत्मा जीवः पुनरागन् तथा मे चक्षुः पुनरागन् तथा मे श्रोत्रं श्रवणेन्द्रियं पुनरागन्। सर्वं ह वाएते स्वपतोऽपक्रामन्तीति[२] श्रुतिः स्वापकाले मनआदीनामपक्रमो भवति। तेषां पुनर्यथास्थानमागमनं प्रार्थ्यते। एवं सर्वेन्द्रियेषु समागतेषु अयमग्निः अवद्यात् वदितुमयोग्यात् निन्दितात् दुरितात्पापात् नोऽस्मान् पातु पालयतु। यद्वा अवद्यात् दुर्यशसो दुरितात्पापाच्च पातु। किम्भूतोऽग्निः। वैश्वानरः विश्वेभ्यो नरेभ्यो हितः सर्वपुरुषोपकारकः। नरे सञ्ज्ञायामिति पूर्वपददीर्घः। अदब्धः केनाप्यहिंसितः तनूपाः तनूं पातीति अस्मदीयशरीरपालकः॥ १५॥

१—७,४,४०। २—३,२,२,२३।

द्वितीयाबहुवचनं। अमृताः अमरणधर्मिणो देवाः पूर्वोक्ताः प्राणा वामादयस्ता अपः स्वदन्तु आस्वादयन्तु। कीदृशीः अस्मभ्यमयक्ष्माः अस्मदर्थमस्माकं वां यक्ष्मनाशिनीः। शेषं पूर्ववत्॥ १२॥

का० भिन्दन्* कृष्णविषाणया लोष्टं किञ्चिद्वादत्तद्दयं तद्दतिः[१]। मूत्रं करिष्यन् शृङ्गेण लोष्टं किञ्चित्तृणादिकं वा गृह्णातीति सूत्रार्थः। हे यज्ञपुरुष इयं पृथिवी ते तव यज्ञिया तनूः यज्ञयोग्यो देहः। अतोऽस्या मूत्रोपहतिपरिहाराय व्यवधानं कर्तुं लोष्टं तृणं वा स्वीकरोमीति भावः। यद्वा पृथिवीं प्रत्युच्यते। हे पृथिवि इयं लोष्टरूपा ते तव यज्ञार्हा तनूस्तामाददद्दति शेषः॥ का० अपो मुञ्चामीति मेहतीति[२]। अपो-मूत्ररूपा अहं मुञ्चामि न प्रजां प्रजोत्पत्तिनिमित्तं रेतो न मुञ्चामि। अतो हे आपो मूत्राख्या यूयं

इ॒यन्ते॑य॒ज्ञिया॑त॒नूर॒पोमु॑ञ्चामि॒नप्र॒जाम्। अ॒ꣳहो॒मुचः॒स्वाहा॑कृताः पृथि॒वीमावि॑शत पृथि॒व्यास॑म्भव॥ १३॥

अग्ने॒त्वꣳसु॒जा॑गृहि व॒यꣳसुम॑न्दिषीमहि। रक्षा॑णो॒ अप्र॑युच्छन्प्र॒बुधे॑नः॒ पुन॑स्कृधि॥ १४॥

पृथिवीमाविशत प्रविशत। किम्भूताः। अंहोमुचः अंहसः पापान् मुञ्चन्ति पुरुषं पृथक्कुर्वन्तीत्यर्थः। तथा स्वाहाकृताः पूर्वं चीरपान-काले स्वाहेति मन्त्रेण स्वीकृताः। यद्वा स्वाहाकृताः सत्यो भूमिमाविशत। का० पृथिव्या सम्भवेत्यात्तं निदधातीति[३]। गृहीत-मलोष्टादिकं मूत्रस्थाने क्षिपेत्। हे लोष्टादिक पृथिव्या सह त्वं सम्भव एकीभव॥ १३॥

का० अग्ने त्वमित्युक्त्वा स्वपित्यधः प्राङ्दक्षिणत इति[४]। अनुष्टुबाग्नेयी। हे अग्ने त्वं सु जागृहि सुष्ठु निद्रारहितो भव वयं यजमानाः सु मन्दिषीमहि साधु स्वप्स्यामः। मदि मोदस्तुतिस्वप्नकान्तिगतिषु अतः स्वप्नार्थः आशीर्लिङुत्तमबहुवचने

* "मेहन"—इति मु०। [१]—७,४,३६। [२]—७,४,३७। [३]—७,४,३८। [४]—७,४,३९।

विश्वे देवा इति[1] श्रुतुक्ताः । किम्भूताः मनोजाताः दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः इच्छोत्पत्तौ तेषां प्रवर्तमानत्वात् । तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्त्तन्ते । अन्यमनस्कस्य रूपादिप्रतिभासाभावात् । यद्वा स्वप्नावस्थायां मनसा युज्यन्ते ते मनोयुजः । तथा दक्षक्रतवः दक्षाः कुशलाः क्रतवः सङ्कल्पाः येषां ते सङ्कल्पितार्थकारिण इत्यर्थः । ते देवा नोऽस्मानवन्तु यज्ञानुष्ठानविघ्नपरिहारेण पालयन्तु तेभ्यः प्राणरूपेभ्यः देवेभ्यः स्वाहा इदं चोरं हुतमस्तु ॥ ११ ॥

का० श्वात्राः पीता इति नाभिमालभतइति[2] । अब्दैवत्या जगती । हे आपः चोररूपा यूयं मया पीताः सत्यः श्वात्राः

**श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः ।**

**ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः ॥ १२ ॥**

क्षिप्रपरिणामाः शीघ्रं जीर्णा भवत । श्वात्रमिति क्षिप्रनामाशु अतनं भवतीति यास्कः[3] । किञ्च अस्माकं पीतवतामन्तरुदरे जलंपाकस्थाने सुशेवाः शोभनसुखाः भवतेत्यनुवर्त्तते । सुष्ठु शेवं याभ्यस्ताः । शेवमिति सुखनाम[4] । किञ्च । तास्तथाविधा आप अस्मभ्यमस्मदुपकारार्थं स्वदन्तु स्वादुत्वयुक्ता भवन्तु किम्भूतास्ताः । अयक्ष्माः प्रबलरोगराजरहिताः । अनमीवाः सामान्यरोगनिवर्तिकाः । नास्त्यमीवा याभ्यः । अनागसः नास्त्यागो याभ्यः अपराधहारिण्यः । ऋतावृधः ऋतं वर्धयन्ति ऋतवृधः संहितायां ऋतस्य दीर्घः । यज्ञवृद्धिहेतवः । देवीः देव्यो द्योतमानाः । अमृताः नास्ति मृतं याभ्यः मरणनिवर्त्तिकाः ॥ यद्वायमर्थः[5] ता इति

1—३,२,२,१३ । 2—७,४,२५ । 3—निरु० नै० ५,३ । 4—निघ० ३,६,१७ ।

का० व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्त्वेति[1]। मौनोपस्थितस्य यजमानस्यैतन्मन्त्रोच्चारणं वाग्विसर्जनसाधनम्। हे परिचारकाः व्रतं कृणुत दोहनादिना क्षीरं सम्पादयत। दीक्षितस्य भोजनाय यन्नियतं पयस्तद्व्रतमित्युच्यते। वाक्यावृत्तिरादरार्था। का० अग्निर्ब्रह्मेति च सकृदिति[2]। एतमपि मन्त्रं सकृत्पठेत्। अग्निर्ब्रह्म ब्रह्मशब्देन वेदत्रयमभिधीयते तस्य वेदत्रयस्याग्नित्वमुपचर्य्यते। आधानेन निष्पन्नस्य वैदिकस्याग्नेर्वेदव्यतिरेकेणासम्भवात्। तस्मादयं श्रौतोऽग्निर्ब्रह्मैव वेदरूप एव॥ अयमग्निर्यज्ञः तस्य अग्नेर्यज्ञः तस्य अग्नेर्यज्ञसाधनत्वाद्यज्ञत्वमुपचर्य्यतेऽग्निर्यज्ञ एवेति॥ वनस्पतिः। यज्ञियः यज्ञयोग्यो यो वनस्पतिः खादिरादिः सोऽपि यज्ञ इत्यनुवर्त्तते वनस्पतेर्यज्ञसाधनत्वाद्यज्ञत्वम्। तथा च श्रुतिः। न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युरिति[3]॥ का० देवीं धियमिति व्रतायोपस्पर्शनꣳ स्वासनदिति[4]। शक्वरी अतिशक्वरी वा। पूर्वार्धेनाचमनम्। वयं धियं मनामहे यज्ञानुष्ठानविषयां

यज्ञवाहसꣳसुतीर्थानोऽअसद्वशे। येदेवामनोजातामनोयुजोदक्षक्रतवस्तेनोवन्तुतेनःपान्तुतेभ्यःस्वाहा॥११॥

बुद्धिं याचामहे। मनामहइति याच्ञाकर्मसु पठितः[5]। किमर्थमभिष्टये अभि समन्ताद्यजनमभिष्टिः। अभिपूर्वस्य यजतेः क्तिनि आदिलोपः। अभिमुखत्वेन प्राप्तस्य यज्ञस्य सिद्ध्यर्थम्। किम्भूतां धियं देवीं देवसम्बन्धिनीं देवतोद्देशेन प्रवृत्तामित्यर्थः। तथा सुमृडीकाम् सुष्ठु मृडयति सुमृडीका ताम् शोभनसुखहेतुम्। तथा वर्चोधां वर्चो दधाति वर्चोधास्तां तेजसो धारयित्रीम्। तथा यज्ञवाहसम् यज्ञं वहति यज्ञवाहास्तां यज्ञनिर्वाहकर्त्रीम्। तथाविधा धीः सुतीर्था सुखेन तरीतुं प्राप्तुं शक्या सुतीर्था यद्वा सुष्ठु तीर्थमवतरणमार्गो यस्यां सा। एवं विधा सती नो वशे असत् अस्माकमधीनत्वे भवतु॥ का० ये देवा इति व्रतयत्स्यन्मय इति[6]। ये देवा इष्टयाः दीव्यन्ति द्योतन्ते तइति देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः। वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं

१——७,४,१५। २——७,४,१६। ३——३,२,२,९। ४——७,४,३२। ५——निघ० ३,१९,१६। ६——७,४,३३।

ग्रन्थिविशेषो नीविरुच्यते। अदीक्षितस्य पितृदेवत्या नीविरुक्ता दीक्षितस्य तु सोमयागाय नीविः सोमेन व्यपदिश्यते। का० शिरः प्रोर्णुते विष्णोः शर्मेति[1]। हे वस्त्र त्वं विष्णोः व्यापकस्य यज्ञस्य शर्मासि सुखहेतुर्भवसि अतो यजमानस्य शर्म सुखं कुर्विति शेषः॥ का० कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते तया कण्डूयनमुपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनीरितीति[2]। हे कृष्णविषाणे त्वं यथा पूर्वमिन्द्रस्य योनिरसि तथेदानीं यजमानस्य स्थानं भवेति शेषः। पुरा कदाचिद्यज्ञपुरुषो दक्षिणां देवीं समभवत्तस्मात्सम्भावनादिन्द्रोऽजायत तदानीमन्यत्वान्यस्योत्पत्तिर्माभूदिति विचार्येन्द्रः स्वां योनिं दक्षिणाया आच्छिद्य मृगेषु न्यदधात् निहिता सा योनिः कृष्णविषाणाभूदिति तित्तिरिय,तौ यज्ञो दक्षिणामभ्यधादित्याख्याने कथा तस्मात् कृष्णविषाणाया इन्द्रयोनित्वम्

**सुसस्याः कृषीस्कृधि। उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यꣳहस आस्य यज्ञस्योदृचः॥ १०॥**

**व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः। दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां**

का० भूमौ चोल्लिखति सुसस्या इतीति[3]। हे कृष्णविषाणि त्वं कृषीः सुसस्याः कृधि कुरु। करोतेः अपि लुप्ते अमृखित्यादिना हेर्धिः। शोभनं सस्यं यासु ताः सुसस्याः। सस्यं व्रीहियवादि। तदर्थं भूम्युल्लेखः कृषिः यजमानानां कृषयः सन्ति ताः सर्वाः शोभनधान्याः कुर्वित्यर्थः॥ का० मुखसम्मितमौदुम्बरं दण्डं प्रयच्छत्युच्छ्रयस्वेत्येनमुच्छ्रयतीति[4]। दण्डो देवता। हे वनस्पते वृक्षावयव दण्ड उच्छ्रयस्व उन्नतो भव। ऊर्ध्वो भूत्वा अंहसः पापात् मा मां पाहि रक्ष तत्र कालावधिरुच्यते। अस्यानुष्ठीयमानस्य यज्ञस्य उदृचः उत्तमायाः समाप्तिगतायाः ऋचः आ तदृक्पर्यन्तमित्यर्थः॥ १०॥

१——७,२,२८। २——७,३,२९-३१। ३——७,३,३२। ४——७,४,१-२।

शिल्पे स्थः ऋगभिमानिसामाभिमानिदेवतयोः सम्बन्धिनी शिल्पे चातुर्यं तद्रूपे भवतः। यद्वै प्रतिरूपं तच्छिल्पमिति[1] श्रुतेः। ते वां तथाविधे युवामारभे अहं स्पृशामि ते मा पातं तथाविधे युवां मा मां पालयतम्। कियन्तं कालमिति चेत्तदाह। अस्य यज्ञस्य आ उदृचः उत्तमा चरमा ऋगुदृक् तस्या उदृचः आ तत्पर्यन्तं पञ्चम्यपाङ्परिभिरिति पञ्चमी। एतद्यज्ञसमाप्तिपर्यन्तमित्यर्थः। ऋक्-साभिमानिन्यौ देवते देवानां यज्ञार्थं स्थिते सत्यौ केनापि निमित्तेन कृष्णमृगरूपं कृत्वा देवेभ्यः पलाय्य दूरे कृत्वाप्यतिष्ठतां तन्मृग-चर्मणि यच्छुक्लं तदृचो रूपं यत् कृष्णं तत्साम्नो रूपम्। तदुक्तं तित्तिरिणा। ऋक्सामे वै देवेभ्यो यज्ञार्थं तिष्ठमाने कृष्णमृगरूपं कृत्वापक्राम्य तिष्ठतामिष वाऋचो वर्णो यच्छुक्लं कृष्णाजिनमस्यै साम्नो यत्कृष्णमिति॥ का० दक्षिणजानुमारोहति शर्मासीति[१]। हे कृष्णाजिन त्वं शर्म शरणमसि। अतो मे मह्यं शर्म शरणं यच्छ देहि। स्वकीयत्वेन स्वीकुर्वित्यर्थः। ते तुभ्यं कृष्णाजिनाय नमो अस्तु मा मां यजमानं मा हिंसीः मा जहि॥ ८॥

ऊर्गस्याङ्गिरस्यूर्णम्म्रदाऽऊर्जम्मयिधेहि। सोमस्यनीविरसिविष्णोःशर्म्मासिशर्म्मयजमानस्येन्द्रस्ययोनिरसि

का० मेखलां बध्नीते वेणिं त्रिवृतᳪ शणमुञ्जमिश्रामन्तरां वाससः ऊर्गसीति[२]। अङ्गिरोभिर्दृष्टं मेखलं यजुः। हे मेखले त्वमाङ्गिरसी अङ्गिरोनामकानामृषीणां सम्बन्धिनी ऊर्क् अन्नरसरूपासि। किम्भूता ऊर्णम्रदाः ऊर्णेव म्रदीयसी कम्बलवन्मृदुरसि। तथाविधा त्वमूर्जमन्नरसं मयि धेहि स्थापय। अङ्गिरसः स्वर्गं लोकं गच्छन्तोऽन्नरसं व्यभजन्त विभज्यमानेऽवशिष्टोऽन्नरसो भूमौ पतितः शणमुञ्जनामकतृणरूपेणाविर्भूतस्तस्माच्छणमुञ्जमयी मेखला अत एव मेखलाया आङ्गिरसत्वमिति तित्तिरिणा प्रत्यपादि॥ का० नीविं कुरुते सोमस्य नीविरिति[४]। हे मेखले त्वं सोमस्य नीविरसि सोमदेवतायाः प्रियभूता ग्रन्थिरसि। मूलाग्रयोरेकीकरणेन

१—३,२,१,५। २—१,३,२४। ३—४,३,२६। ४—१,३,२७।

इति चतुर्थः ॥ आपोदेवीः । लिङ्गोक्तदेवता विराट् यस्या एकादशाक्षराः त्रयः पादाः सा विराट् । दशकास्त्रयोविराडेकादशका वेत्युक्तिः१ अत्र प्रथमोद्वादशार्णस्तेनैकाधिका । हे आपः हे द्यावापृथिवी द्यावापृथिव्यौ हे उरो विस्तीर्ण अन्तरिक्ष युष्मभ्यं बृहस्पतये च हविषा विधेम हविर्दद्मः । द्वितीयार्थे तृतीया । विधतिर्दानकर्म्मा । स्वाहा सुहुतमस्तु । किम्भूता आपः । देवीः देव्यो द्योतमानाः बृहतीः बृहत्यः प्रभूताः उभयत्र पूर्वसवर्णः । विश्वशम्भुवः विश्वस्य जगतः शं सुखं भावयन्ति जनयन्ति वा विश्वशम्भुवः इति पञ्चमोमन्त्रः ॥ ७ ॥

अथ षष्ठः । सवितृदेवत्यानुष्टुप् स्वस्त्यात्रेयदृष्टा । विश्वो मर्त्तः सर्व्वो मनुष्यो नेतुः फलप्रापकस्य देवस्य दानादिगुणयुक्तस्य

विश्वोदेवस्यनेतुर्म्मर्त्तोवुरीतसख्यम् । विश्वोरायइषुध्यतिद्युम्नं वृणीतपुष्यसेस्वाहा ॥ ८ ॥

ऋक्सामयोःशिल्पेस्थस्तेवामारभेतेमापातमास्ययज्ञस्योदृचः । शर्म्मासिशर्म्ममेयच्छनमस्तेअस्तुमामाहिᳫसीः ॥९॥

सवितुः सख्यं सखिभावं वुरीत वृणुते प्रार्थयते । वृञ् वरणे अस्माल्लिङि तङि प्रथमैकवचने व्यत्ययेन शपो लुकि उदोष्ठ्यपूर्वस्येति ऋतउदादेशः । किञ्च विश्वः सर्वो जनो राये धनाय इषुध्यति सवितरं प्रार्थयते । इषुध्यतिर्याच्ञाकर्म्मसु पठितः१ किञ्च द्युम्नं द्योततेर्यशो वान्नं वा तच्च वृणीत प्रार्थयते । किमर्थं पुष्यसे पोषाय स्वप्रजापालनाय पुषेस्तुमर्थे असेप्रत्ययः । यः इत्थम्भूतः सविता तस्मै स्वाहा । इति षष्ठ औद्ग्रहणमन्त्रः । समाप्तास्ते ॥ ८ ॥

का० कृष्णाजिनयोः सन्धिमालभत ऋक्सामयोरितीति२ ॥ कृष्णाजिने देवते । हे कृष्णाजिनगते शुक्लकृष्णरेखे युवामृक्सामयोः

१——निघ० ३,१९,१४ । २——७,३,२३ ।

स्वाहा यज्ञं मनसः । मनस इति पञ्चमी तृतीयार्थे मनसा यज्ञं स्वाहा चित्तेन यज्ञमभिगच्छामि अत्र स्वाहाशब्दोऽभिगमनार्थः ॥ स्वाहोरोरन्तरिक्षात् । पञ्चमी सप्तम्यर्थे उरौ विस्तीर्णेऽन्तरिक्षे स्वाहा यज्ञ आश्रितः । स्वाहाशब्दो यज्ञार्थोऽतः प्रभृति ॥ स्वाहा द्यावापृथिवीभ्याम् । द्यावापृथिव्योः स्वाहा यज्ञः श्रितः । लोकत्रयव्यापी यज्ञ इत्यर्थः ॥ स्वाहा वातादारभे । वाताद्वायुप्रसादात् स्वाहा यज्ञमारभे प्रवर्तयामि । वायोः सर्वकर्मप्रवर्तकत्वात् ॥ स्वाहा यज्ञ एवं सिद्ध इति शेषः ॥ ६ ॥

अतः परं षडौद्ग्रभणहोममन्त्राः । चतुर्णामग्निर्देवता । का० औद्ग्रभणानि जुहोति स्वाल्याः स्रुवेणाकूत्यादीति प्रतिमन्त्रमिति[1] । आकूत्यै प्रयुजे ऽग्नये स्वाहा । अग्नये वह्निदेवाय स्वाहा सुहुतमिदमस्तु । किम्भूताय अग्नये आकूत्यै प्रयुजे । यज्ञं करिष्यामीत्येवं

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा ।

आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरो अन्तरिक्ष बृहस्पतये हविषा विधेम स्वाहा ॥ ७ ॥

विधो मानसः सङ्कल्प आकूतिः तस्यै तत्सम्पूर्त्यै प्रयुजे प्रयुङ्क्तेऽसौ प्रयुक् तस्मै । सङ्कल्पसिद्धौ निर्विघ्नं प्रेरयते इत्यर्थः । इति प्रथमो मन्त्रः ॥ मेधायै मनसेऽग्नये स्वाहा । अत्र तयोर्मन्त्रतन्त्रयोर्धारणशक्तिर्मेधा तत्सिद्ध्यर्थं मनसे मदीयमनोऽभिमानिनेऽग्नये स्वाहा सुहुतमस्तु । विद्याधारणशक्तिर्हि मनसः स्वास्थ्ये सत्येव भवति । इति द्वितीयः ॥ जपति । दीक्षायै तपसेऽग्नये स्वाहा । व्रतनियमो दीक्षा तत्सिद्ध्यर्थं मदीयशारीरतपोऽभिमानिनेऽग्नये स्वाहा । नियमसंरक्षणं तपसैव भवति । ततस्तपोदाते इत्यर्थः । इति तृतीयः सरस्वत्यै पूष्णेऽग्नये स्वाहा । मन्त्रोच्चारणशक्तिः सरस्वती तत्सिध्यर्थं पूष्णे पुष्णातीति पूषा तस्मै वागिन्द्रियपोषकायाग्नये हुतमस्तु ।

[1] — ७,३,१६ ।

यद्वा यस्मिन् कामो यस्य स यत्कामः सोमयागानुष्ठाने कामवानहं पुनि आत्मानं शोधयामि तत्सोमयागानुष्ठाने शक्तो भूयासम्। यज्ञानुष्ठानसामर्थ्यं मेऽस्त्वित्यर्थः ॥ वाक्पतिः वाचां पतिर्बृहस्पतिर्मा मां पुनातु ॥ सविता देवोऽन्तर्यामी मा. मां पुनातु। एतन्मन्त्रद्वयं पूर्ववद्योज्यम् ॥ ४ ॥

का० आ वो देवास इति वाचयतीति[1]। अध्वर्युर्यजमानं वाचयति। दैवी अनुष्टुप् आशीः। हे देवासः देवाः वयं वो युष्मान्वामं वननीयं यज्ञफलम् आ ईमहे साकल्येन याचामहे। वन्यते भज्यतइति वामम्। वन सम्भक्तौ। मप्रत्ययः। ईमहे याचतिकर्मसु पठितः द्विकर्मकः[2]। क्व। सति अध्वरे अस्मदीये यज्ञे प्रयति प्रवर्तमाने सति। प्रैतीति प्रयन् * प्रपूर्वादिणः शतरि

आवोदेवासईमहेवामम्प्रयत्यध्वरे। आवोदेवासआशिषोयज्ञियासोहवामहे ॥ ५ ॥

स्वाहायज्ञम्मनसःस्वाहोरोरन्तरिक्षात्। स्वाहाद्यावापृथिवीभ्याᳬस्वाहावातादारभेस्वाहा ॥ ६ ॥

रूपम्। किञ्च हे देवासो देवा वो युष्मान्वयं हवामहे आह्वयामः। किं कर्तुं यज्ञियासः। यज्ञस्येमा यज्ञिया यज्ञसम्बन्धिनी-राशिषः फलानि आ आनेतुं समानेतुमित्यर्थः। उपसर्गेण धातुरध्याहर्तव्यः। यज्ञफलं प्राप्तुं युष्मानाह्वयाम इत्यर्थः ॥ ५ ॥

का० स्वाहा यज्ञमित्यङ्गुलीश्चते नानाहस्तयोरेवं शेषं प्रतिमन्त्रं मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतोऽङ्गुष्ठौ तत्सहिते चोत्सृजतीति[3] ॥ आद्यमन्त्रेण हस्तद्वयकनिष्ठिकाद्वयं सङ्कोचयति एवमन्यत्रयेणान्याः। स्वाहा वातादारभइत्युत्तमेन मुष्टिद्वयं कुर्यादिति सूत्रार्थः ॥ स्वाहा यज्ञम्। चतुर्णां यजुषां यज्ञो देवता। स्वाहाशब्दस्य निपातत्वेनानेकार्थत्वादुचिता अर्था ब्राह्मणानुसारेण ग्राह्याः। तथा हि।

* "तस्मिन्नित्यधिकी मु० पुस्तके। १——७,३,६। २——निघ० ३,१९,१। ३——७,३,७–१०।

वर्चोदाः। अतिस्निग्धत्वेन कान्तिप्रदमसि पुंस्त्वमार्षमतो मे मह्यं यजमानाय वर्चो देहि कान्तिं प्रयच्छ॥ का० वृत्रस्येत्यच्चावनक्ति त्रैककुदाञ्जनेनाभावेऽन्यदिति[१]। त्रिककुत्पर्वतादुत्पन्नमाञ्जनं लभ्यते चेत्तेनाप्यदयमञ्जनात्तदभावेऽन्यदप्यञ्जनं ग्राह्यमिति सूत्रार्थः। वृत्रस्य। अञ्जनं देवता। हे अञ्जन त्वं वृत्रस्यासुरस्य कनीनकोऽसि नेत्रमध्यगतकृष्णमण्डलरूपोऽसि। यत्र वाइन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीदित्यादिश्रुतिः[२]। तथा च तित्तिरिः। इन्द्रो वृत्रमहन् तस्य कनीनिका परापतत्तदेवाञ्जनमभवदिति। चक्षुर्दा असि कनीनिकारूपत्वात्त्वं दृष्टिप्रदोऽसि अतो मे मह्यं चक्षुर्देहि सम्यग्दृष्टिपाटवं प्रयच्छ॥ ३॥

का० कुशपवित्रैः चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्रेति[१]। अच्छिद्रेणेति शेषस्त्रिष्वपि मन्त्रे-

**चित्पतिर्म्मापुनातुवाक्पतिर्म्मापुनातुदेवोमासवितापुनात्वच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः।**

**तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम्॥ ४॥**

ष्वनुषज्यते। चित्पतिर्मा। चितां ज्ञानानां पतिश्चित्पतिर्मनोऽभिमानी देवो मा मां यजमानं पुनातु शोधयतु मनो वै चित्पतिरिति तित्तिरिवाक्यात्। यद्वा चित्पतिः प्रजापतिः प्रजापतिर्वै चित्पतिरिति श्रुतेः[४]। केन अच्छिद्रेण* पवित्रेण सूर्यस्य रश्मिभिः किरणैः। वायुरच्छिद्रं पवित्रं शुद्धिहेतुत्वात् छिद्ररहितत्वाच्च यद्वादित्यमण्डलमच्छिद्रं पवित्रम्। असौ वाआदित्योऽच्छिद्रं पवित्र मिति श्रुतेः। हे पवित्रपते पवित्रान् शुद्धान् पाति पवित्रपतिस्तत्सम्बुद्धौ हे पवित्रपते शुद्धपालक ते पवित्रपूतस्य तव पवित्रेण पूर्वोक्तेन शुद्धस्य तस्य यजमानस्याभीष्टं भूयादिति शेषः। तदेव स्पष्टयति। यत्कामोऽहं पुने तत् शकेयम् यः कामो यस्य यत्कामः

१——७,२,३४। २——३.१,२,१२। ३——७,२,१। ४——३,१,२,२२। * 'छिद्राच्छिद्रेणेति मु० पाठः।

द्योतमाना आपो विश्वं हि । हि एवार्थः । सर्वमेव रिप्रं पापं प्रवहन्ति प्रकर्षेणापनयन्तु । रपोरिप्रमिति पापनामनी भवत इति यास्कः[१] । का० उदिदाभ्य इत्युत्क्रामत्युत्तरपूर्वार्धमिति[२] । अहमाभ्योऽद्भ्यः उदेमि इत् इदेवार्थे उद्गच्छाम्येव । जलान्निर्गच्छामीत्यर्थः । किम्भूतोऽहं शुचिः शुद्धः स्नानेन । तथा आपूतः समन्तात्पावितोऽन्तरपि शुद्ध आचमनेन । शुचिरापूत इति शब्दाभ्यां स्नानाचमनाभ्यां बहिरन्तश्च शुद्धिरुक्ता[३] ॥ का० क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतं चेदद्भिरभ्युक्ष्य स्नानवस्त्रं वाऽसौ तृधौतं विचितकेशं प्रसारितदशं दीक्षातपसोरिति ॥ दीक्षातपसोः । वासो देवता । हे क्षौम वस्त्र त्वं दीक्षातपसोस्तनूरसि दीक्षा दीक्षणीयेष्टिः तप उपसदिष्टिः । दीक्षाभिमानिदेवतायास्तपोऽभिमानिदेवतायाश्च त्वं शरीरवत् प्रियमसि । तां दीक्षातपसोस्तनूं तद्देवताद्वयशरीरभूतां त्वामहं

दीक्षातपसोस्तनूरसि तान्त्वा शिवाᳬ शग्माम्परिदधे भद्रं वर्णं पुष्यन् ॥ २ ॥

महीनाम्पयोऽसि वर्चोदा असि वर्चो मे देहि । वृत्रस्यासि कनीनकश्चक्षुर्दा असि चक्षुर्मे देहि ॥ ३ ॥

परिदधे धारयामि । किम्भूतां त्वां शिवां शग्मां द्वयोरपि शब्दयोः सुखवाचकत्वादत्यन्तसुखरूपां कोमलत्वात् । किम्भूतोऽहम् । भद्रं वर्णं पुष्यन् त्वत्परिधानेन कल्याणीं कान्तिं पुष्यन् ॥ २ ॥

का० शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्षोऽध्यनुलोमं सपादको महीनां पयोऽसीति[४] । प्राचीनशालापूर्वभागेषु कुशेषु स्थित्वा नवनीतं गृहीत्वा शिरस आरभ्य पादान्तं शरीराभ्यङ्गं कुर्यादिति सूत्रार्थः । महीनां पयः० । नवनीतमुच्यते हे नवनीत त्वं महीनां गवां पयोऽसि । महीति गोनामसु पठितम्[५] । नवनीतस्य क्षीरजन्यत्वात्पयस्त्वोपचारः । वर्चोदा असि । वर्चो ददातीति

१——४,२१ । २——७,२,१५ । ३——७,२,१६—१९ । ४——७,२,२३ । ५——निघ० २,११,९ ।

धनस्य पोषेण पुष्ट्या इषा इष्यमाणेनान्नेन च सम्मदेम। मदी हर्षे व्यत्ययेन शप्। हृष्टा भवेम धनैरन्नैश्च तृप्येम। किं कुर्वन्तः। ऋक्सामाभ्यामृक् च साम च ऋक्सामे अचतुरेति सूत्रेणाजन्तो निपातः। ताभ्यां यजुर्भिश्च वेदत्रयगतमन्त्रैः सन्तरन्तः समुद्रवद्घोरं सोमयागं समापयन्त इत्यर्थः॥ का० दक्षिणं गोदानं विताय्यौन्दतीमा आप इति[१]। इमा आपः। आपो देवताः। इमा आपः शिरःक्लेदाय सिच्यमाना एता आपो मे मम यजमानस्य शमु। उ एवार्थे। शं सुखार्थमव्ययम्। शं सुखकारिण्य एव सन्तु भवन्तु। किम्भूता आपः देवीः देव्यः दीव्यन्ति ताः देव्यः। द्योतना निर्मला इत्यर्थः॥ का० यूपवत्कुशतरुणं क्षुरेण चाभिनिधाय छित्त्वेति[२]। यथा पश्वर्थयूपस्य छेदे मन्त्रः एवमत्रापि तृणान्तर्धानं क्षुरस्थापनं च मन्त्रद्वयेन कर्तव्यमिति सूत्रार्थः। ओषधे।

इमा आपः शमु मे सन्तु देवीरोषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः॥ १॥

आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु। विश्वꣳ हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत एमि।

कुशतरुणं देवता। हे ओषधे कुशतरुण त्वं यजमानं त्रायस्व क्षुराद्रक्ष। स्वधिते। क्षुरो देवता। हे स्वधिते क्षुर एनं यजमानं मा हिंसीः॥ १॥

का० आपो अस्मानिति स्नात्वेति[३]। मातरः मिमते ता मातरो जगन्निर्मात्र्यो मातृवत्पालयित्र्यो वा आपः अस्मान् कृतक्षौरान् यजमानान् शुन्धयन्तु शुन्ध शुद्धौ शोधयन्तु क्षौरकर्मनिमित्तामपहृतिं निवारयन्त्वित्यर्थः। किञ्च घृतप्वः घृ क्षरणे जिघर्ति क्षरति घृतं तेन क्षरितजलेन पुनन्तीति घृतप्वः जलदेवतास्ताश्च घृतेन क्षरितजलेन नोऽस्मान् पुनन्तु शुद्धान् कुर्वन्तु। किञ्च। देवीः

१—७,१,८। २—७,२,११। ३—७,२,१४।

हे यजमान त्वां निवर्तयामि मुण्डयामि किमर्थमायुषे जीवनाय अन्नाद्यायान्नभक्षणाय प्रजननाय संन्तानाय रायो धनस्य पोषाय पुष्टै सुप्रजास्त्वाय शोभनापत्यतायै सुवीर्याय शोभनसामर्थ्याय ॥ ६३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे। अग्न्याधानादिपित्र्यान्तस्तृतीयोऽध्याय ईरितः ॥ ३ ॥

आधानाग्निहोत्राग्न्युपस्थानचातुर्मास्यमन्त्रास्तृतीयाध्याये प्रोक्ताः। चतुर्थाध्यायमारभ्याष्टमस्य द्वात्रिंशत्कण्डिकापर्यन्तमग्निष्टोममन्त्रा उच्यन्ते। तेषां प्रजापतिरृषिः। तत्र चतुर्थे यजमानसंस्कारपूर्वकं सोमक्रयमन्त्राः प्राधान्येनोच्यन्ते तत्रादौ यजमानः

निवर्त्तयाम्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्य्याय ॥ ६३ ॥

॥ ३ ॥ इति माध्यन्दिनीयायां वाजसनेयसंहितायां तृतीयोऽध्यायः ॥ ३ ॥

एदमगन्मदेवयजनंपृथिव्यायत्रदेवासोअजुषन्तविश्वे। ऋक्सामाभ्याᳬसन्तरन्तोयजुर्भीरायस्पोषेणसमिषामदेम।

सोऽग्न्यर्त्विजो हत्वारण्योरग्नी समारोप्य शालां गच्छेत्। तथा च का० समारोह्याग्नी शालास्तम्भं पूर्वार्द्धं गृहीत्वारणिपाणिरां इदमगन्मेति[1]। द्वे भत्यष्टी त्र्यवसाने। तयोः कण्डिकयोः सप्त मन्त्राः। आद्यावर्धर्चौ देवयजनदेवत्यौ ॥ आ इदम् अगन्मेति पदानि। व्यवहिताश्चेति उपसर्गक्रियापदयोर्व्यवधानम्। इदमिति हस्तेन प्रदर्श्यते। वयमिदं पृथिव्याः सम्बन्धि देवयजनं देवा इज्यन्ते यस्मिंस्तद्देवयजनं स्थानम् आ अगन्म आगताः स्मः। गच्छतेर्लङुत्तमबहुवचने व्यत्ययेन शपो लुकि म्वो नो धातोरिति मस्य नः। अडागमश्च। इदं किम्। यत्र देवयजने विश्वे देवासः सर्वे देवाः अयुषन्तप्रीयन्त प्रीत्या स्थिता इत्यर्थः। किञ्च वयं रायो

१——७,१,३६।

धनुषि ज्यासमारोपणस्य प्रयोजनाभावादवरोपणमेवेदानीं युक्तम् । तथा पिनाकावसः पिनाकाख्यं त्वदीयं धनुरावस्ते सर्वत आच्छादयन्तीति पिनाकावसः । यथा धनुर्दृष्ट्वा प्राणिनो न बिभ्यति तथा त्वदीयं धनुर्वस्त्रादिना प्रच्छाद्य गच्छेत्यर्थः ॥ का० कृत्तिवासा इत्यनवेक्षमेत्योपस्पृशन्त्यप इति[1] । उक्तेन प्रकारेण मूतद्वये(ऽ)वसज्य प्रयावर्तमाना मूतद्वयस्यावेक्षणमकृत्वा वेदिसमीपे समागत्योदकं स्पृशेयुरिति सूत्रार्थः । मन्त्रार्थस्तु हे रुद्र त्वं कृत्तिवासाः चर्माम्बरो नोऽस्मानहिंसन् हिंसामकुर्वन् शिवोऽस्मदीयपूजया सन्तुष्टः कोपरहितो भूत्वा अतीहि पर्वतमभिक्रम्य गच्छ ॥ ६१ ॥

आशीर्दैवतोष्णिक् । यस्याश्चत्वारः पादाः समाक्षराः सोष्णिक् । का० त्र्यायुषमिति यजमानो जपतीति[2] । सोऽयं जपो वपन-

त्र्यायुषञ्जमदग्नेःकश्यपस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥ ६२ ॥

शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिꣳसीः ।

कालीनः । जमदग्नेः मुनेर्यत्त्र्यायुषं त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारस्त्र्यायुषं तथा कश्यपस्यैतन्नामकस्य प्रजापतेः सम्बन्धि यत्त्र्यायुषं तथा देवेषु इन्द्रादिषु यत्त्र्यायुषमस्ति तत्सर्वं त्र्यायुषं नोऽस्माकं यजमानानामस्तु । जमदग्न्यादीनां बाल्यादिषु यादृशं चरितं तादृशं नो भूयादित्यर्थः ॥ ६२ ॥

क्षुरदैवतं यजुः । का० शिवो नामेति लौहक्षुरमादायेति[3] । हे क्षुर त्वं नाम नाम्ना शिवः शान्तोऽसि स्वधितिः वज्रं ते तव पिता । ते तुभ्यं नमोऽस्तु मां मा हिंसीः । का० निवर्तयामीति वपतीति[4] । यजमानदैवतं यजुः । निपूर्वो वृतिर्मुण्डनार्थः ।

१——५,१०,२२—२३ । २——५,२,१६ । ३——५,२,१७ । ४——५,२,१८ ।

का० कुमार्यश्चोत्तरेणेति[१] * । यजमानसम्बन्धिन्यः कुमार्योऽपि पूर्वोक्तपुरुषवदुत्तरेण † त्र्यम्बकमन्त्रेणाग्निं त्रिः परियन्ति । त्र्यम्बकं यजामहे कीदृशं पतिवेदनं पतिं वेदयतीति तं भर्तुर्लम्भयितारं ‡ विदॢ लाभे । अन्यत् पूर्ववत् । इतो मुक्षीय इतो मातृपितृभ्रातृवर्गान्मुक्षीय मुक्ता भूयासममुतो मा मुक्षीय विवाहादूर्ध्वं भविष्यतः पत्युर्मुक्ता मा भूयासं जनकस्य गोत्रं गृहं च परित्यज्य पत्युर्गोत्रे गृहे च सर्वदा त्र्यम्बकप्रसादाद्वसामीत्यर्थः । सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति[२] श्रुतेरितोऽमुतः शब्दाभ्यां पितृपतिवर्गौ ग्राह्यौ ॥ ६० ॥

रौद्र्यास्तारपङ्क्तिः यस्या अन्तौ द्वादशाक्षरावाद्यावष्टाक्षरौ पादौ सास्तारपङ्क्तिः ॥ का० मृतयोः कृत्वा वेणुयष्ट्यां वा कुपे

एतत्ते रुद्रावसन्तेनपरोमूजवतोतीहि । अवततधन्वापिनाकावसःकृत्तिवासाअहिꣳसन्नःशिवोतीहि ॥ ६१ ॥

वासंश्चोभयतः स्थाणुवृक्षवꣳशवल्मीकानामन्यतमस्मिन् तृचेपणवदासजत्येतत्त इतीति[३] । व्रीहियवादीन्वहनार्थं दृणवंशादिनिर्मितः पात्रविशेषो मूतमित्युच्यते । तयोरुभयोर्मूतयोस्त्र्यम्बकान् हविःशेषान् प्रक्षिप्य स्वकीयेनांसेन वोढुं शक्यायां वंशयष्ट्यामग्रद्वये तन्मूतद्वयमवासज्योन्नते स्थाणौ वृक्षे वंशे वल्मीके वा मूतद्वययुतां वंशयष्टिं संसृजति । ततो गोभिराघ्रातुमशक्यत्वाद्गावो रोगं न प्राप्नुवन्तीत्यर्थः ॥ अथ मन्त्रार्थः । मूजवान्नाम कश्चित्पर्वतो रुद्रस्य वासस्थानम् । अवसशब्देन देशान्तरं गच्छतो मार्गमध्ये तटाकादिसमीपे भोक्तव्य ओदनविशेष उच्यते । हे रुद्र एतत्ते तव अवसं हविःशेषाख्यं भोज्यम् तेन सहितस्त्वं मूजवतः पर्वतात्परः परभागवर्ती सन्नतीहि अतिक्रम्य गच्छ । कीदृशस्त्वम् । अवततधन्वा अवरोपितधनुष्कः । अस्मद्विरोधिनां त्वया निवारितत्वादित जह्व

* "उभयत्र पतिकामा मम कामोवा' —इति क० पुस्तके ऽधिकः पाठः ।

† "पूर्वोक्तवदुत्तरेणेति क० ।

‡ "अनुकूलपतिप्रदमित्यर्थः"— त्यधिकः क० ।

P "मात्र"—इति नास्ति क० ग० पुस्तकयोः ।

१—५,१७,१७ । २—२,६,२,१४ । ३—५,१०,२१ ।

हे रुद्र त्वं भेषजमसि औषधवत्सर्वोपद्रवनिवारकोऽसि। अतोऽस्मदीयेभ्यो गवे अश्वाय पुरुषाय च भेषज्यं सर्वव्याधिनिवारकमौषधं देहि। मेषाय मेष्यै च सुखं देहि। सुहितं खेभ्यः प्राणिभ्य इति सुखम्। अनेन मन्त्रेण गृहपशूनां क्षेमप्राप्तिर्भवति ॥ ५९ ॥

हे अगुष्टुभौ। का० अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाम्नानास्त्र्यम्बकमिति देववच्चैतेनैव दक्षिणानाम्नाना इति[१]। यथा पितृमेधे पुत्रादयः पुरुषाः स्वकीयान्वामोरूंस्ताडयन्तस्त्रिवारमप्रदक्षिणं परियन्ति। यथा च देवतासेवायां दक्षिणोरूंस्ताडयन्तस्त्रिः प्रदक्षिणं परियन्ति। एवमत्र पुरुषाः प्रथमेनैव त्र्यम्बकमन्त्रेणाग्निमप्रदक्षिणत्रयेण प्रदक्षिणत्रयेण च परियन्तीति सूत्रार्थः ॥

भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम्। सुखम्मेषाय मेष्यै ॥ ५९ ॥

त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम्। उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। त्र्यम्बकं यजामहे सुगन्धिम्पतिवेदनम्। उर्व्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥ ६० ॥

मन्त्रार्थस्तु॥ सुगन्धिं दिव्यगन्धोपेतं मर्त्यधर्महीनं पुष्टिवर्धनं धनधान्यादि पुष्टेर्वर्धयितारं त्र्यम्बकं नेत्रत्रयोपेतं रुद्रं यजामहे पूजयामः। ततो रुद्रप्रसादान्मृत्योर्मुक्षीय अपमृत्योः संसारमृत्योश्च मुक्तो भूयासम्। अमृतान्मा मुक्षीय स्वर्गरूपाच्चामृतान्मा मुक्षीय मुक्तो मा भूयासम्। एकवचनं बह्वर्थं। मुक्ता मा भूयास्मेत्यर्थः। अभ्युदयनिःश्रेयसरूपात् फलद्वयान्मम भ्रंशो मा भूदित्यर्थः। मृत्योर्मोचने दृष्टान्तः—उर्वारुकमिव बन्धनादिति। यथोर्वारुकं कर्कन्ध्वादेः फलमत्यन्तपक्वं सत् बन्धनात् स्वस्य वृन्तात् प्रमुच्यते तद्वत् ॥

१—५,१०,१५–१६।

अथ इत्येतावतः पुरोडाशान्निरूप्य ततोऽप्यधिकमेकं पुरोडाशं निर्वपेत् सोऽयमतिरिक्त उच्यते । त्र्यम्बकान्निर्वपति रौद्रानेककपालान्यावन्तो यजमानगृह्या एकाधिकानिति[१] कात्यायनोक्तेः । तत्र योऽयमतिरिक्तस्तं न जुहुयात्किन्तु मूषकोत्खाते एष तइति मन्त्रेणोपकिरेत् । अथ मन्त्रार्थः । हे रुद्र एषोऽस्माभिरुपकीर्यमाणोऽतिरिक्तः पुरोडाशः ते भागः त्वया भजनीयः तथा ते तवाखुः पशुः मूषकः पशुत्वेन समर्पितः । आखुदानेन तुष्टो रुद्रस्तयाम्बिकया यजमानपशून्न मारयतीत्यर्थः ॥ ५७ ॥

द्वे रौद्र्यौ पङ्क्तिककुभौ । यस्या द्वितीयः पादः द्वादशाक्षरः प्रथमतृतीयावष्टाक्षरौ सा ककुप् । द्वयोर्जपे विनियोगः । तथा का० आगम्यावरुद्रमदीमहीति जपतीति[२] । रुद्रमव । असौ रुद्र इति मनसा तमवगत्यादीमहि त्वदनुग्रहादन्नं भक्षयेम । तथा त्र्यम्बकं त्रीण्यम्बकानि नेत्राणि यस्य तादृशं देवमव त्रिनेत्रोऽयं देव इति मनसावमत्यादीमहीत्यनुवर्तते । यद्वा अदीमहीत्यत्र णिचो

**अवरुद्रमदीमह्यवदेवन्त्र्यम्बकम् । यथानोवस्यसस्करद्यथानःश्रेयसस्करद्यथानोव्यवसाययात् ॥ ५८ ॥**

लोपश्छान्दसः । अवयुत्यान्यदेवताभ्यः पृथक्कृत्य रुद्रमदीमहि आदयामो भोजयामः । अवगम्य ज्ञात्वा त्र्यम्बकमादयाम इति । यथा येन प्रकारेण नोऽस्मान्वस्यसः करत् वस्तृतरान् वसनशीलानसौ कुर्यात् । यथा च नोऽस्माञ्छ्रेयसः करत् ज्ञातिषु प्रशस्यतरान् कुर्यात् । यथा चास्मान् व्यवसाययात् सर्वेषु कार्येषु निश्चययुक्तान् कुर्यात् । तथैनं जपाम इत्यर्थः । आशीरियम् ॥ अदीमहि छन्दस्युभयथेत्यार्धधातुकत्वाल्लिङि णिचो लोपः ॥ वस्यसः वसतीति वस्ता तृन् अतिशयेन वस्ता वसीयान् । तुश्छन्दसीति ईयसुनि कृते तुरिष्ठेमेयःस्विति तृनो लोपः । वसीयस इति प्राप्ते ईलोपश्छान्दसः ॥ करत् छन्दसि लुङ्लङ्लिट इति लङ् विकरणव्यत्ययेन शपि गुणः । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः ॥ व्यवसाययात् लेटि आडागमे इतश्च लोपः परस्मैपदेष्विति इलोपे रूपं विपूर्वस्य स्यन्तस्य स्यतेः ॥५८॥

१—५,१०,१—२ । २—५,१०,१४ ।

सोमदेवत्या गायत्री जपे विनियुक्ता। अत्र पितृयज्ञे सोमनामको देवोऽस्ति। सोमाय पितृमते इत्येवं हविषो विहितत्वात्। हे सोम वयं यजमानाः तव व्रते कर्मणि वर्तमानाः तनूषु भवच्छरीरेषु मनो बिभ्रतः अस्मदीयं चित्तं धारयन्तः त्वत्कारुण्यात् प्रजावन्तः पुत्रपौत्रादिसम्पन्नाः सन्तः सचेमहि सेवेमहि सेवितव्यानि वस्तूनीति शेषः। यद्वा षच् सम्बन्धे सर्वदा त्वत्सम्बद्धा भवेम ॥ ५६ ॥

द्वे रौद्रे यजुषी विंशत्यक्षरद्वादशाक्षरे ॥ साकमेधगतत्र्यम्बकहविर्विषया मन्त्रा उच्यन्ते। प्रथमस्य यजुषोऽवदानहोमे विनियोगः। तथाच का० एष तइति जुहोतीति[1]। रोदयति विरोधिनां शत्रुमिति रुद्रः। हे रुद्र ते तव स्वस्रा भगिन्या अम्बिकया अम्बिका-

वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः। प्रजावन्तःसचेमहि ॥ ५६ ॥

एषतेरुद्रभागःसहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्रभागआखुस्तेपशुः ॥ ५७ ॥

नाम्ना सह एषोऽस्माभिर्दीयमानः पुरोडाशः भागः भजनीयः स्वीकर्तुं योग्यः। तं तथाविधं पुरोडाशं त्वं जुषस्व सेवस्व स्वाहा इदं हविर्दत्तं सुहुतमस्तु। अम्बिकाया रुद्रभगिनीत्वं श्रुत्योक्तम्। अम्बिका ह वै नामास्य स्वसा तयास्यैष सह भाग इति[2]। योऽयं रुद्राख्यः क्रूरो देवस्तस्य विरोधिनं हन्तुमिच्छा भवति तदानया भगिन्या क्रूरदेवतया साधनभूतया तं हिनस्ति। सा चाम्बिका शरद्रूपं प्राप्य ज्वरादिकमुत्पाद्य तं विरोधिनं हन्ति। रुद्राम्बिकयोरुग्रत्वमनेन हविषा शान्तं भवति। तथाच तित्तिरिः। एष ते रुद्र भागः सह स्वस्राम्बिकयेत्याह शरद्वा अस्याम्बिका सा भिया एषा हिनस्ति यꣳ हिनस्ति तयैवैनꣳ सह शमयतीति। का० अतिरिक्तमाखूत्करउपकिरत्येष तइतीति[3]। यजमानस्य यावन्तः पुत्रभृत्यादयः पुरुषाः सन्ति तान् गणयित्वा प्रतिपुरुषमेकैकः पुरो-

[1]—५,१०,१२। [2]—२,६,२,९। [3]—५,१०,१३।

तिस्र ऋचो मनोदेवत्या गायत्र्यो बन्धुदृष्टाः ॥ का० मनो न्वाह्वामहइति गार्हपत्यं तिसृभिरिति[१]। उपतिष्ठन्तइत्यनुवर्त्तते ॥ नु क्षिप्रं मन आह्वामहे पितृयज्ञानुष्ठानेन चित्तं पितृलोकं गतमिवासीत् अत आह्वयते। यद्वा मनः मनोऽभिमानि दैवतमाह्वामहे आह्वयामः। केन साधनेन स्तोमेन स्तोत्रेण कथंभूतेन नाराशंसेन। शंसः प्रशंसनं नराणां मनुष्याणां योग्यः शंसो नराशंसः तत्सम्बन्धी नाराशंसस्तेन। स्तोत्रं द्विविधं दैवं मानुषं च यत्र देवाः स्तूयन्ते तद्दैवं यत्र च मनुष्याः प्रशस्यन्ते तन्मानुषं तथाविधेन स्तोत्रेणेत्युक्तं भवति। किञ्च पितॄणां च मन्मभिः पितरो यैः स्तोत्रैर्मन्यन्ते ते मन्मानस्तैः तादृशैः स्तोत्रैराह्वयामः ॥ ५३ ॥

आनएतुमनःपुनःक्रत्वेदक्षायजीवसे। ज्योक्चसूर्य्यन्दृशे ॥ ५४ ॥

पुनर्न्नःपितरोमनोददातुदैव्योजनः। जीवंव्रातꣳसचेमहि ॥ ५५ ॥

नोऽस्माकं मनः पूर्वोक्तं चित्तं पुनर्भूयः आ एतु आगच्छतु किमर्थं क्रत्वे क्रतवे सङ्कल्पाय यज्ञं सङ्कल्पयितुं दक्षाय कर्मण्युत्साहाय। तथाच श्रुतिः। तदेव मनसा कामयत इदं मे स्यादिदं कुर्वीयेति स एव क्रतुरथ यदस्मै तत्समृध्यते स दक्ष इति। ज्योगिति निपातश्चिरवचनः। ज्योग्जीवसे चिरं जीवितुम्। सूर्यं दृशे च चिरकालं सूर्यमवलोकयितुं च। एतेषां सङ्कल्पादीनां सिद्धये मनः पुनरागच्छतु ॥ क्रत्वे। गुणाभावाद्यणादेशः ॥ जीवसे तुमर्थे असेप्रत्ययः ॥ दृशे विख्ये चेति साधुः ॥ ५४ ॥

हे पितरो भवदनुज्ञया दैव्यो जनो देवसम्बन्धी पुरुषः नोऽस्मभ्यं मनः पूर्वोक्तं चित्तं पुनर्भूयो ददातु प्रयच्छतु प्रेरयत्वित्यर्थः। तथा सत्यनुष्ठानं कृत्वा भवत्प्रसादाज्जीवं जीवनवन्तं व्रातं पुत्रपश्वादिकं गणं वयं सचेमहि सेवेमहि। सचतिः सेवनार्थः ॥ ५५ ॥

१—५,९,२२।

प्रीतियुक्ताः सन्तः अधूषत स्वकीयं शिरः कम्पितवन्तः। यद्वा प्रियास्तनूरवाधूषत। किं च स्वभानवः स्वयं दीप्तियुक्ताः विप्राः मेधाविनः सन्तः नविष्ठया नवतमया मती मत्या बुद्ध्या युक्ताः अस्तोषत स्तुतिं कृतवन्तः। अहो स्वाद्वन्नं बहु दत्तमहो भक्तिरित्याद्यभिधानं स्तुतिः। अतो हे इन्द्र नु क्षिप्रं ते तव हरी एतन्नामकौ हरितवर्णावश्वौ योज गमनाय रथे योजय। तवाभीष्टायाः पितृतृप्तेः सम्पन्नत्वात्तैः पितृभिः सह त्वया गन्तव्यमित्यर्थः। अचन्। अदेर्लुङि लुङ्सनोर्घस्लृ इति घस्लादेशः। मन्त्रे घसेत्यादिना च्लेर्लुक्। गमहनेत्युपधालोपः। खरि चेति चर्त्वम्। शासि वसीति षत्वम्। अडागमः॥ अमीमदन्त मद तृप्तियोगे चुरादिरात्मनेपदी लुङि णिलोपादौ रूपम्॥ अधूषत धूञ् कम्पने लुङि सिचि व्यत्ययेन गुणाभावः॥ मती सुपां सुलुगिति

**सुसन्दृशन्त्वावयम्मघवन्वन्दिषीमहि। प्रनूनम्पूर्णवन्धुरस्तुतोयासिवशाँ२॥ऽअनुयोजान्विन्द्रतेहरी॥ ५२॥**

**मनोन्वाह्वामहेनाराशँ्सेनस्तोमेन। पितृणाञ्चमन्मभिः॥ ५३॥**

तृतीयायाः पूर्वसवर्णदीर्घः॥ योज युजिर् योगे ण्यन्ताल्लोटि छन्दस्युभयथेति शप आर्धधातुकत्वाच्छेरनिटीति णिलोपः। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः॥ ५१॥

हे मघवन् वयं त्वा त्वां वन्दिषीमहि स्तुतिकर्तारो भूयास्मेत्याशास्महे। किम्भूतं त्वाम्। सुसंदृशं सुष्ठु सम्यक् पश्यति सुसन्दृक् तं शोभनदर्शनम्। अनुग्रहदृष्ट्या सर्वस्य द्रष्टारम्। इत्थमस्माभिः स्तुतः त्वं वशान् कामयमानान् यजमानाननु लक्षीकृत्य नूनं प्रयासि अवश्यं गच्छसि किम्भूतः पूर्णवन्धुरः वन्धुरशब्दो रथनीडवाची। स्तोतृभ्यो देयैर्धनैः सम्पूर्णरथनीडोपेतो भूत्वा गच्छसि। हे इन्द्र स त्वं हरी योजेति पूर्ववत्॥ ५२॥

का० देहि मइति जुहोतीति[१]। इन्द्रो वदति। हे यजमान त्वं मे मह्यमिन्द्राय देहि। हविः प्रथमं प्रयच्छ। ते तुभ्यं यजमानाय ददामि। अपेक्षितं पश्चात्प्रयच्छामि। एवं प्रथमपादोक्त एवार्थो द्वितीयपादेनादरार्थं पुनरुच्यते। मे मह्यमिन्द्राय निधेहि प्रथमं त्वं हविर्नितरां सम्पादय ते तुभ्यं यजमानाय निदधे अपेक्षितं फलं नितरां सम्पादयामि। एवमिन्द्रवाक्यं श्रुत्वो-त्तरार्धेन यजमान आह। नितरां ह्रियत इति निहारो मूल्येन क्रेतव्यं पदार्थं ब्रूते। निहारं मूल्येन क्रेतव्यवस्तुरूपं फलं मे मह्यं यजमानाय हरासि प्रयच्छ। लेटोऽडाटावित्याडागमः। उत्तरो निहारो मूल्यवाची। निहारं मूल्यभूतं हविः ते तुभ्य

देहिमेददामितेनिमेधेहिनितेदधे। निहारञ्चहरासिमेनिहारंनिहराणितेस्वाहा ॥५०॥

अक्षन्नमीमदन्तह्यवप्रिया अधूषत। अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी ॥ ५१ ॥

मिन्द्राय निहराणि नितरां समर्पयामि। स्वाहाशब्दो हविर्दानार्थः। पूर्वार्धे पादद्वयेनादरेणेन्द्रेण द्विवारं प्रोक्तमर्थमुत्तरार्धेन यजमानः सम्यगङ्गीकरोतीत्यर्थः ॥ ५० ॥

ऐन्द्रीभ्यां पङ्क्तिभ्यां साकमेधगतपितृयज्ञाख्यकर्मणि आहवनीयोपस्थानम्। यस्या अष्टाक्षराः पञ्च पादाः सा पङ्क्तिः ॥ का० यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमदन्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्यामिति[२]। पितृयज्ञाख्ये कर्मणि ये पितरः सन्ति तेऽस्मा-भिर्दत्तं हविःस्वरूपमन्नमक्षन् भक्षितवन्तः। कथमेतदवगम्यते। हि यस्मादमीमदन्त हर्षं प्राप्ताः अस्मदीयां भक्तिमवगम्य प्रियाः

१——५,६,३८। २——५,६,२१।

चेत् उच्यते। देवैर्द्योतनात्मकैरस्मदीयैरिन्द्रियैर्देवकृतं हविःस्वामिषु देवेषु कृतमेनः पापं यदस्ति तदवायासिष मस्मिन् जलेऽहमवनीतवानस्मि। तथा मर्त्यैः मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिर्मर्त्यकृतं मर्त्येषु यज्ञदर्शनार्थमागतेषु कृतमवज्ञारूपं यदेनोऽस्ति तदप्यहमवायासिषमित्यनुवर्तते। इदमस्मत्यक्तं पापं यथा त्वां न व्याप्नोति तथा मन्दं गच्छेति भावः। किं च हे देवावभृथाख्य यज्ञ रिषो बधात्पाहि पालय। रिषतेर्हिंसार्थस्य क्विबन्तस्य पञ्चम्यां रूपम्। किम्भूताद्रिषः। पुरुराव्णः। रा दाने। पुरु बहु विरुद्धं फलं ददातीति पुरुरावा तस्मात्। अतो मनिन्नित्यादिना वनिप्। विरुद्धफलदायी बधस्त्वत्प्रसादादस्माकं मा भूदित्यर्थः॥ ४८॥

द्वे ऐन्द्र्यावनुष्टुभौ। साकमेधगतं कर्म किञ्चिदुच्यते॥ का० स्थाल्या दर्व्याऽऽदत्ते पूर्णा दर्वीति[1]। दर्व्या स्थालीत ओदनग्रहणं

पूर्णा दर्वि परा पत सुपूर्णा पुनरा पत। वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो॥ ४९॥

करोति प्रथमया द्वितीयया तं जुहोति। हे दर्वि अन्नप्रदानसाधनभूते काष्ठादिनिर्मिते त्वं पूर्णा स्थाल्याः सकाशादन्नं गृहीत्वा पूर्णा भूत्वा परा पूर्णत्वादेवोत्कृष्टा सती पत इन्द्रं प्रति गच्छ। सुपूर्णा कर्मफलेन सुष्ठु पूर्णा सती पुनरापत भूयोऽस्मान्प्रत्यागच्छ। एवं दर्वीमुक्त्वा इन्द्रमाह। हे शतक्रतो बहुकर्मन् इन्द्र त्वं चाहं चोभौ वस्नेव वस्नशब्देन मूल्यं तृतीयायाः पूर्वसवर्णः मूल्येनेव। इषमभीष्टं हविःस्वरूपमन्नमूर्जं हविर्दानफलरूपं रसविशेषं च विक्रीणावहै परस्परं द्रव्यविनिमयरूपं विक्रयं करवावहै। अहं तुभ्यं हविर्ददामि त्वं मह्यं फलं देहीत्यर्थः॥ ४९॥

१—५,६,२४

आग्नेय्यनुष्टुप् ॥ का० अक्रन्कर्मेत्येनां वाचयतीति[1] । कर्म्मकृतः वरुणप्रघासाख्यकर्म्मकारिण ऋत्विजः वाचा स्तुतिरूपया सह कर्म्म वरुणप्रघासानुष्ठानरूपमक्रन् कृतवन्तः । कथम्भूतया वाचा । मयोभुवा मय इति सुखनाम[2] मयो भवति यया सा मयोभूः तया मन्त्ररूपस्तुत्येत्यर्थः । हे सचाभुवः सचेति सहार्थेऽव्ययं सहभवनशीलाः परस्परं यजमानेन पत्न्या वास्मिन् कर्म्मणि सहावस्थिता हे ऋत्विजः देवेभ्यो देवार्थं कर्म्म कृत्वा वरुणप्रघासनामकं कर्म्मानुष्ठायास्तं प्रेत गृहान् गच्छत । अस्तमिति गृहनाम[3] ॥ ४७ ॥

यज्ञदैवतं यजुः ॥ का० मज्जयत्यवभृथेति[4] । अत्र विनियोगश्चिन्त्य इति[5] । वरुणप्रघासस्य कर्म्मणोऽन्ते तदङ्गभूतं यदवभृथाख्यं

अक्रन्कर्म्मकर्म्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म्म कृत्वास्तम्प्रेत सचाभुवः ॥ ४७ ॥

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि ॥ ४८ ॥

कर्म्म जलसमीपे क्रियतेऽत्रानेन मन्त्रेण दम्पतीभ्यां जले स्नानं कर्तव्यम् । हे अवभृथ अर्वाचीनानि पात्राणि जलमध्ये भ्रियन्ते यस्मिन्यज्ञविशेषे सोऽयमवभृथः । तत्सम्बोधनम् हे अवभृथ यज्ञ हे निचुम्पुण चुप मन्दायां गतौ नितरां चोपति मन्दं गच्छति निचुम्पुणः । उणप्रत्ययो मुमागमश्च । यद्वा नीचैरस्मिन् क्वणन्ति नीचशब्देन कर्म्म कुर्वन्त्यवभृथो निचुम्पुणः । वीणाम्पूणप्रणभूणि-त्यादिना नीचैःशब्दोपपदात्क्वणतेः णक्प्रत्ययान्तो निपातः धातोः पुम्भाव उपपदस्य निचुभावश्च निपातितः । तथाविधावभृथ यद्यपि त्वं निचेरुरसि नितरां चरतीति निचेरुः । नितरां गमनशीलोऽसि तथाप्यत्र निचुम्पुणो भव मन्दगमनो भव । किम्प्रयोजनमिति

१——५,५,१३ । २——निघ० ३,६,७ । ३——निघ० ३,४,५ । ४——अवभृथे जायापत्नी स्नातः इति क० पु० पाठः । ५——नास्त्येतदंशो बहुषु पुस्तकेषु ।

रूपे प्रीतिमन्तो वयं यदेनः कलत्रभक्षणपरस्त्रीगमनादिकं चकृम। तथान्यत्रापि भृत्यस्वाम्यादौ तदेनः ताडनावज्ञादिकं चकृम। तदिदं सर्वं पापमवयजामहे विनाशयामः। अवपूर्वो यजिर्नाशनार्थः। स्वाहा। एतद्धविर्देवतायै पापविनाशिन्यै दत्तम्॥ ४५॥

ऐन्द्रमरुद्दैवत्या विराट्। यस्या दशाक्षराश्चत्वारः पादाः सा विराट्। चतुर्थ एकाधिकोऽत्र॥ क्वा॰ मो षू ण इति यजमानो जपतीति[1]। पृत्स्विति सङ्ग्रामनाम[2] हे इन्द्र अत्र पृत्सु एषु सङ्ग्रामेषु वर्तमानः देवैस्त्वया सह सख्यं प्राप्तैर्मरुन्नामकैर्देवैः सहितस्त्वं नोऽस्मान्मो विनाशयेति शेषः। मोशब्दो निषेधार्थः सुशब्दो विनाशभावस्य सौष्ठवं ब्रूते। तथा सति विनाशलेशो मा भूदित्यर्थः सम्पद्यते। क उपकार इति चेत्। शुष्मेति बलनाम[3]। हे शुष्मिन् बलवन्निन्द्र ते तव अवयाः अवयुतो यागः पृथग्भागोऽस्ति हि

**मोषूणइन्द्रात्रपृत्सुदेवैरस्तिहिष्माते शुष्मिन्नवयाः। महश्चिद्यस्यमीढुषोयव्याहविष्मतोमरुतोवन्दतेगीः॥ ४६॥**

स्म विद्यत एव खलु। अवपूर्वस्य यजतेरेतद्रूपम्। मिह सेचने धातुः। मीढुषो वृष्टिप्रदत्वेन सेक्तुः। हविष्मतो हविर्योग्यस्य तव यव्या यवमयैः करम्भपात्रैर्निष्पन्ना होमक्रिया महश्चित्पूजा खलु। तस्य यथोक्तपूजोपेतस्य तवास्मासु कृपालुत्वं युक्तमिति भावः। किं च गीरस्मदीया स्तुतिरूपा वाक् मरुतो भवतः सखीन्वन्दते नमस्करोति। नमो मरुद्भ्य इत्येव माकारायाः स्तुतेर्नमस्काररूपत्वात्। मरुद्विषयनमस्कारेणापि तुष्टस्य तव कृपैव युक्तेत्यर्थः। मो सु न अत्र सुञ इति षत्वम्। अन्येषामपि दृश्यत इति दीर्घः। नश्च धातुस्थोरुषुभ्य इति न इत्यस्य णः। स्म इत्यस्यापि पूर्वपदादिति षत्वम्। अवयाः श्वेतवाः पुरोडाश्चेति विजन्तो निपातः। मीढुषः। दाश्वान्साह्वान्मीढ्वांश्चेति क्वसन्तो निपातः॥ ४६॥

१——५,५,१२।  २——निघ॰ २,१७,२१।  ३——निघ॰ २,९,११।

मुदानयंस्तदीयं जारं पृच्छेत् केन चरसीति। सापि तं ब्रूयात्॥ आख्याते प्रघासिन इत्येनां वाचयति नयन्निति[1]। पत्न्या जारे कथिते सति एनां पत्नीं नयन् प्रतिप्रस्थातः प्रघासिन इति मन्त्रं वाचयति। मारुती गायत्री। वयं मरुतो हवामहे। चकारेण तदीयपरिचारकाः समुच्चीयन्ते। किम्भूतान्मरुतः प्रघासिनः घस्लृ अदने प्रकर्षेण घस्यते भक्ष्यते इति प्रघासो हविर्विशेषः। स एषा मस्तीति तान् प्रघासिनः। एतन्नामकान्। शुक्रज्योतिरित्यादयः सप्त सप्तका मारुता गणाः। तत्र स्वतवांश्च प्रघासी चेति पठ्यते[2] प्रघासैरुपलक्षितान् मरुतः आह्वयामः। पुनः किम्भूतान्। रिशादसः रिशतिर्हिंसार्थः। रिशां वैरिकृतां हिंसां दस्यन्ति उपक्षयन्तीति रिशादसः। दसु उपक्षये क्विप्। यद्वा रिशन्ति हिंसन्तीति रिशाः। इगुपधेति कः। रिशान् हिंसकान् दस्यन्तीति रिशादसः।

यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यदेनश्चकृमा वयमिदन्तदवयजामहे स्वाहा ॥ ४५ ॥

यद्वा रिशन्ति रिशन्तः शतरि दीर्घश्छान्दसः। रिशतोऽस्यन्ति क्षिपन्ति ते रिशादसः। अस्यतेर्विच्। तथा करम्भेण सजोषसः यवमयो हविर्विशेषः करम्भः। तेन सजोषसः समानप्रीतयस्तान्। तथाविधान्मरुतो हवामहे ॥ ४४ ॥

मारुत्यनुष्टुप्। का० करम्भपात्राणि जुहोति शूर्पेण मूर्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखो जायापती वा दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिं मपरेण वा यद्ग्राम इतीति[3]। यवपिष्टेन निर्मितानि सन्तानपरिमितान्येकाधिकानि वर्तुलादिरूपाणि करम्भपात्राणि। तानि शूर्पेण पत्नी दक्षिणाग्नौ जुहुयादित्येकपक्षः दम्पती द्वौ[4] जुहुयातमित्यपरः पक्षः। तौ च दक्षिणेन मार्गेण तानि पात्राण्याहृत्य वेदेः पूर्वदिशि पश्चिमदिशि वा स्थित्वा जुहुयाताम्। अथ मन्त्रार्थः। ग्रामे वसन्तो वयं यदेनः पापं ग्रामोपद्रवरूपं चकृम कृतवन्तः। तथारण्ये वसन्तो यदेनो मृगोपद्रवरूपं चकृम। तथा सभायां स्थिता यदेनो महाजनतिरस्कारादिकं चकृम। तथेन्द्रिये जिह्वोपस्थ-

१——५,५,१०॥ २——१७,८५ अ०। ३——५,५,११। ४——द्वौ वा सु०।

वः वसाना महापङ्क्तिः। यस्या अष्टार्णाः षट् पादाः सा महापङ्क्तिः। पञ्चमो नवमार्णस्तेनैकाधिका। इह गृहेषु गाव उपहूताः धेनवो बलीवर्दाश्च सुखेन तिष्ठन्त्वित्येवमनुज्ञाताः। तथा इह गृहेषु अजावयः उपहूताः। अजात्वाविलजातिद्वययुक्ताः पशवः उपहूताः सुखेन वर्तन्तामित्यस्माभिरनुज्ञाताः। अथो अपि च अन्नस्य कीलालः अन्नसम्बन्धो रसविशेषो नोऽस्मदीयेषु गृहेषु उपहूतः समृद्धो भवत्वित्येवमस्माभिरनुज्ञातः॥ क्षेमाय व इति प्रविशतीति[1]। हे गृहा वो युष्मान् प्रपद्ये प्राप्नोमि। क्षेमाय विद्यमानस्य वस्तुनो रक्षणं क्षेमस्तदर्थम्। शान्त्यै मम सर्वानिष्टशमनाय। शंयोः शमिति सुखनाम[2] तत्कामयते इति शंयुः। इदंयुरिदं कामय

उपहूताइहगावउपहूताअजावयः। अथोअन्नस्यकीलालउपहूतोगृहेषुनः।

क्षेमायवःशान्त्यैप्रपद्येशिवꣳशग्मꣳशंय्योःशंय्योः॥ ४३॥

प्रघासिनोहवामहेमरुतश्चरिशादसः। करम्भेणसजोषसः॥ ४४॥

मान इति[3] यास्कोक्तत्वात् तादृशस्य मम शिवं शग्ममिति द्वे सुखनामनी[4] तत्राद्यमैहिकं द्वितीयमामुष्मिकम्। उभयविधं सुखं भूया दिति शेषः। शंयोरित्यभ्यासोऽत्यादरार्थः॥ ॥ इत्युपस्थानमन्त्राः समाप्ताः॥ ४३॥

अथ चातुर्मास्यमन्त्राः। प्रजापतिदृष्टाः। चातुर्मास्याख्यो यागः। स पर्वचतुष्टयात्मकः। वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चत्वारि पर्वाणि। तत्र वरुणप्रघासाख्ये द्वितीये पर्वणि दक्षिणोत्तरयोर्वेद्योर्हविःष्वासादितेषु प्रतिप्रस्थाता पत्नी

१——४,१२,२३। २——निघ० ३,६,१९। ३——निरु० ६,३१। ४——निघ० ३,६,१८—१९।

का० गृहा मा बिभीतेति गृहानुपैतीति[1]। ग्रामान्तरादागतो गृहा मेत्यादि मन्त्रत्रयेण गृहं प्राप्नुयात्। तिस्रोऽपि वास्तुदेवत्याः
शंयुदृष्टाः तिष्टुब्विराड्रूपा। यस्या एकादशार्णास्त्रयः पादा एकोऽष्टार्णः सा विराड्रूपा। अत्र प्रथमो दशार्णस्तेनैकोना। हे
गृहा यूयं मा बिभीत। पालको यजमानो गत इति भयं मा कुरुत। मा च वेपध्वम्। कोऽपि शत्रुरागत्य विनाशयिष्यतीति बुद्ध्या
कम्पं मा कार्ष्ट। यतो वयमूर्ज्जं बिभ्रतो धारयमाणानक्षीणान्नानेव युष्मानेमसि। आ इमः आगताः स्मः। यथा यूयमूर्ज्जं बिभ्रतः
तथाहमपि ऊर्जं बिभ्रत् धारयन् सुमनाः शोभनमनस्कः सुमेधाः शोभनधारणप्रज्ञोपेतः मनसा दुःखरहितेन मोदमानः हृष्यन् वो
युष्मान् गृहानेमि आगच्छामि। एमः ऐमीत्यात्मनि विकल्पेन बहुवचनमस्मदो द्वयोश्चेत्युक्तेः ॥ ४१ ॥

गृहा मा बिभीत मा वेपध्वमूर्ज्जं बिभ्रत एमसि। ऊर्ज्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥ ४१ ॥

येषामध्येति प्रवसन्येषु सौमनसो बहुः। गृहानुपह्वयामहे ते नो जानन्तु जानतः ॥ ४२ ॥

अनुष्टुप्। प्रवसन् देशान्तरं गच्छन् यजमानो येषामध्येति। इक् स्मरणे। यान् गृहान् स्मरति। अधीगर्थदयेशां कर्मणीति
षष्ठी। गृहविषयं क्षेमं सदा चिन्तयतीत्यर्थः। तथा येषु गृहेषु यजमानस्य बहुः सौमनसो सुमनसो भावः प्रीत्यतिशयः। वयं तान्
गृहानुपह्वयामहे आह्वयामः। गृहाभिमानी देवोऽस्मत्समीपमागच्छत्वित्यर्थः ते[2] गृहदेवा आहुताः सन्तः जानतः उपकाराभिज्ञान्
नोऽस्मान् जानन्तु एते कृतघ्ना न भवन्तीत्यवगच्छन्तु ॥ ४२ ॥

१——४,१८,२२। २——तेन सु०।

दपि जन्ममगत्वैव प्रथममेवाग्न्यागारं प्राप्यागन्मेत्यादिमन्त्रत्रयेणाहवनीयादीनुपतिष्ठतइति सूत्रार्थः । अनुष्टुबाहवनीयदेवत्या । हे अग्ने सम्राट् सम्यक् राजते दीप्यते सम्राट् तथाविधाग्ने आहवनीय वयं त्वामागन्म त्वामुद्दिश्य ग्रामान्तरात् प्रत्यागताः । किंभूतं त्वाम् । विश्ववेदसं विश्वं वेत्ति वेदयतीति वा विश्ववेदास्तम् विश्वं वेदो धनं यस्येति वा । सर्वज्ञं सर्वधनं वा । पुनः किंभूतम् । अस्मभ्यं वसुवित्तममस्मदर्थमतिशयेन वसुनो धनस्य वेदितारं लब्धारम् । किञ्च । हे अग्ने द्युम्नं सहस्व अस्मभ्यमभि-आयच्छस्व । दाण् दाने । पाघ्रेत्यादिना यच्छादेशः । यशो बलं चास्मभ्यं देहि । द्युम्नं द्योततेर्यशो वान्नं वा सह इति बलनाम यच्छस्वेति यमे रूपं वा । आयच्छस्व आगमय । यच्छतिः स्थापनार्थो वा । अस्मासु यशो बलं च स्थापय ॥ ३८ ॥

अयमग्निर्गृहपतिर्गार्हपत्यःप्रजायावसुवित्तमः । अग्नेगृहपतेभिद्युम्नमभिसहआयच्छस्व ॥ ३९ ॥

अयमग्निःपुरीष्योरयिमान्पुष्टिवर्द्धनः । अग्नेपुरीष्याभिद्युम्नमभिसहआयच्छस्व ॥ ४० ॥

गार्हपत्यमुपतिष्ठते । न्यङ्कुसारिणी बृहती । यस्या द्वितीयः पादो द्वादशाक्षरोऽन्ये त्रयोऽष्टाक्षराः सा न्यङ्कुसारिणी । अत्र तृतीयो नवार्णस्तेनैकाधिका । अयं पुरोऽवस्थितो गार्हपत्य एतन्नामकोऽग्निर्गृहस्य पतिः पालकः । प्रजायाः पुत्रपौत्रादिकायाः अनुग्रहार्थं वसुवित्तमः अतिशयेन धनस्य लब्धा । हे अग्ने स त्वं द्युम्नं सहश्चाभ्यायच्छस्व देहि ॥ ३९ ॥

दक्षिणाग्निमुपतिष्ठते । अनुष्टुप् । योऽयमग्निः पुरीष्यः पशव्यः । पशवो वै पुरीषमिति श्रुतेः । रयिमान् धनवान् पुष्टिवर्द्धनः पोषस्य वर्धयिता । तं याचे । हे अग्ने पुरीष्य पशुहित द्युम्नं सहश्चाभ्यायच्छस्व देहि ॥ ४० ॥

अथ चुल्लकोपस्थानमासुरिदृष्टम् ॥ का० भूर्भुवः स्वरिति वोभाविति[1] । वाशब्दो विकल्पार्थः । पूर्वोक्तेनोपप्रयन्त इत्यादिना वक्ष्यमाणेन भूर्भुवः स्वरित्यादिना वोभावग्नी उपतिष्ठेतोभयोपस्थानं कुर्यादिति सूत्रार्थः । हे अग्ने भूर्भुवः स्वः त्वं व्याहृत्यादित्रयात्मकः तदर्थभूतलोकत्रयात्मको वा । अतस्त्वत्प्रसादादहं प्रजाभिः बन्धुभृत्यादिरूपाभिः कृत्वा सुप्रजाः स्यामनुकूलत्वेन शोभनाः प्रजा यस्य तादृशो भवेयम् तथा वीरैः पुत्रैः सुवीरः स्यां शास्त्रीयमार्गवर्तिशोभनपुत्रयुक्तो भवेयं तथा पोषैः हिरण्यादिपोषणैः सुपोषः स्यां बहुमूल्याढ्यहिरण्यादियुक्तो भवेयम् ॥

॥ प्रवत्स्यदुपस्थानमागतोपस्थानं चादित्यदृष्टम् ॥

भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याᳩं सुवीरो वीरैः सुपोषः पोषैः । नर्य्य प्रजां मे पाहि शᳩंस्य पशून्मे पाह्यथर्य्य पितुं मे पाहि ॥ ३७ ॥

आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् । अग्ने सम्राडभि द्युम्नमभि सह आयच्छस्व ॥ ३८ ॥

का० प्रवत्स्यन्त्सर्वान्नर्येति प्रतिमन्त्रमिति[2] । यदा यजमानो ग्रामान्तरं गन्तुमिच्छति तदानीं सर्वानग्नीन्नर्येत्यादिमन्त्रैरुपतिष्ठेत । अथ मन्त्रार्थः । नर्य नरेभ्यो हित गार्हपत्य मे प्रजां पाहि ॥ आहवनीयमुपतिष्ठते । हे शंस्य अनुष्ठातृभिः शंसितुं योग्याहवनीय मे मम प्रजां पाहि रक्ष ॥ दक्षिणाग्निमुपतिष्ठते । हे अथर्य दक्षिणाग्ने मे पितुमन्नं पाहि । अतनवानथर्यः । अत सातत्यगमने । सततं गार्हपत्यात्स्वस्थानं दक्षिणाग्निर्गच्छति । तेनाथर्यः । निपातोऽयम् ॥ ३७ ॥

का० समित्पाणिरनुपेत्य कश्चिदुपतिष्ठत आहवनीयगार्हपत्यदक्षिणाग्निनागन्मेति प्रतिमन्त्रमिति[3] । समिधं हस्ते आदाय कश्चि

१—४,१२,१२ । २—४,१२,१३ । ३—४,१२,१८ ।

स्वभावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा आदित्यान्तस्पुरुषस्य वा ब्रह्मणो वरेण्यं वरणीयं सर्वैः प्रार्थनीयं भर्गो सर्वपापानां सर्वसंसारस्य च भर्जनसमर्थं तेजः सत्यज्ञानानन्दादिवेदान्तप्रतिपाद्यं वयं धीमहि ध्यायामः। छान्दसं सम्प्रसारणम्। यद्वा अक्षलं पुरुषो रश्मय इति चयं भर्गःशब्दवाच्यम्। भर्गो वीर्यं वा। वरुणाद्वा अभिषिषिचानाद्भर्गो ऽपचक्राम वीर्यं वै भर्ग इति श्रुतेः[1]। तस्य कस्य। यः सविता नोऽस्माकं धियः बुद्धीः कर्म्माणि वा प्रचोदयात्प्रकर्षेण चोदयति प्रेरयति सत्कर्म्मानुष्ठानाय॥ यद्वा वाक्यभेदेन योजना।

तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि। धियोयोनःप्रचोदयात्॥ ३५॥

परितेदूडभोरथोस्माँ२॥ अश्नोतुविश्वतः। येनरक्षसिदाशुषः॥ ३६॥

सवितुर्देवस्य तत् वरेण्यं भर्गो ध्यायामः। यश्च नो बुद्धीः प्रेरयति तं च ध्यायामः। स च सवितैव। लिङ्गव्यत्ययेन वा योजना। सवितुर्देवस्य तत् भर्गो धीमहि यो यत् भर्गो नो बुद्धीः प्रेरयति॥ ३५॥

आग्नेयी गायत्री वामदेवदृष्टा जपे वि०। हे अग्ने ते तव रथोऽस्मान्यजमानान्विश्वतः सर्वासु दिक्षु पर्यश्नोतु परितो व्याप्नोतु अस्मद्रक्षणाय सर्वतस्तिष्ठतु। किम्भूतो रथः दूडभः दम्भोतिर्बधकर्म्मा। दुःखेन दभ्यते दुर्दभः। केनापि सहसा हिंसितुमशक्यः। उकारं दुर्दइति प्रातिशाख्यसूत्रेण[2] दुरो रेफस्य उकारः अग्रिमदस्य डः। येन रथेन त्वं दाशुषो यजमानान् रक्षसि पालयसि। यजमाना वै दाश्वांस इति श्रुतेः[3]॥ इदुपस्थानं समाप्तम्॥ ३६॥

१—५,४,५,१। २—का० प्रा० ३,२,४। ३—२,२,४,१८।

कथं तद्रक्षितानां मनुष्याणां भयाभावस्तदाह। हि यतस्ते अदितेः अखण्डितशक्तेर्देवमातुः पुत्रासः पुत्राः पूर्वोक्ता मित्रार्यमवरुणा मर्त्याय मनुष्याय यजमानायाजस्रं निरन्तरमनुपक्षीणं ज्योतिः तेजः प्रयच्छन्ति किमर्थं जीवसे जीवितुं यथा चिरं जीवनं भवति तथा तदुपायज्ञानं प्रयच्छन्तीत्यर्थः ॥ ३३ ॥

ऐन्द्री पथ्या बृहती मधुच्छन्दोदृष्टा जपे विनियुक्ता। यस्यास्तृतीयः पादो द्वादशार्णोऽन्ये त्रयोऽष्टाक्षराः सा पथ्या बृहती। हे इन्द्र परमैश्वर्ययुक्त कदा चन कदापि त्वं स्तरीर्नासि। स्तृञ् हिंसायाम् स्तृणातीति स्तरीः हिंसको नासि किं तर्हि दाशुषे

तेहिपुत्रासोअदितेःप्रजीवसेमर्त्याय। ज्योतिर्य्यच्छन्त्यजस्रम्॥ ३३॥

कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे। उपोपेन्नुमघवन्भूयइन्नुतेदानन्देवस्यपृच्यते॥ ३४॥

सश्चसि। द्वितीयार्थे चतुर्थी। दाश्वांसं हविर्दत्तवन्तं यजमानं सेवसे। सश्चतिः सेवनकर्मा। किंच। हे मघवन् धनवन् देवस्य प्रकाशमानस्य ते तव भूय इत् बहुतरमेव दानं नु इत् क्षिप्रमेव दाश्वांसमुपपृच्यते। पृचो सम्पर्के यजमानेन सह सम्पर्कं प्राप्नोति। प्रसमुपोदः पादपूरणे इत्येक उपशब्दः पादपूरणे। इच्छब्दावेवार्थौ। नु क्षिप्रार्थः। न कदाचिद्यजमानं प्रति क्रुध्यसि सेवसे च तं त्वदीयं भूयो धनं दाश्वांसमुपपृच्यत इति भावः ॥ ३४ ॥

विश्वामित्रदृष्टा सावित्री गायत्री जपे वि०। तदिति षष्ठ्यर्थे तस्य देवस्य द्योतनात्मकस्य सवितुः प्रेरकस्यान्तर्यामिणो विज्ञानानन्द-

हिंसा। ध्वरति धूर्वतीति वधकर्म्मसु पठितत्वात् अवुकृतमनिष्टचिन्तनं अथ कृता हिंसा चास्मान् मा व्याप्नोत्वित्यर्थः। किञ्च हे अग्ने वसते वेदस्य पालकास्मे नोऽस्मान् रक्ष। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। णत्वं पूर्ववत ॥ ३०॥

सत्यधृतिष आदित्यदेवत्यस्तृचोगायत्रो जपे विनियुक्तः पथि जप्त उपद्रवनाशकश्च। मित्रस्यार्यम्णो वरुणस्येति त्रीणां त्रयाणां देवानां सम्बन्धि अवः पालनमस्तु। किम्भूतमवः। महि महत् तथा द्युक्षं द्युमन्ति सुवर्णादिद्रव्याणि क्षियन्ति निवसन्ति यस्मिन् पालने तथाविधम्। दुराधर्षं तिरस्कर्तुमशक्यम्। त्रीणां त्रिशब्दस्यामि छन्दसि त्रयादेशो वेति वाच्यम् ॥ ३१ ॥

महि त्रीणामवोऽस्तु द्युक्षम्मित्रस्यार्यम्णः। दुराधर्षं वरुणस्य ॥ ३१ ॥

नहि तेषाममा चन नाध्वसु वारणेषु। ईशे रिपुरघशꣳसः ॥ ३२ ॥

अमाशब्दो गृहनामसु पठितः[१]। चनशब्दोऽप्यर्थे। अमा चन गृहेऽपि वर्त्तमानानां तेषां तथा वारणेषु चोरव्याघ्रादयो यत्र स्थिता निवारयन्ति पथिकान् ते वारणास्तेषु चोरव्याघ्रभयाढ्येषु अध्वसु मार्गेषु वा वर्त्तमानानां तेषां मित्रार्यमवरुणैस्त्रिभिर्देवैः पालितानां यजमानानाम् उपद्रवायेति शेषः। अघशंसः सर्वदा पापस्य प्रशंसको रिपुः शत्रुः नहि ईशे। समर्थो न भवति। लोपस्त आत्मनेपदेष्विति तलोपः। अधीगर्थदयेशां कर्म्मणीति इति तेषामिति षष्ठी। मित्रादिभिः पालितानामस्माकं गृहेऽरण्ये वा नास्ति शत्रुबाध इत्यर्थः ॥ ३२ ॥

१——निघ: ३,४,११।

सोमानामभिषोतारम् स्वरणं स्व शब्दोपतापयोः शब्दयितारम्। कृणुहि कुरु। मामिति शेषः। सुनोतीति सोमा तम्। अन्येभ्योऽपि दृश्यते इति मनिन् स्वरतीति स्वरणः नन्द्यादित्वात् ल्युः। सोमयागकर्तारं स्तुतिरूपशब्दयुक्तं च धनप्रदानेमां कुर्वित्यर्थः। तत्रोपमानमुच्यते। कक्षीवन्तं कक्षीवन्नामकमृषिं दीर्घतमः पुत्रं यथा सोमयागयुक्तं स्तुतियुक्तं च कृतवानसि तथा मां कुरु। उपमानद्योतक इवशब्दोऽत्र लुप्तो द्रष्टव्यः। कोसौ कक्षीवान्। य औशिजः उशिजः पुत्रः उसिक् कक्षीवतो माता ॥ २८ ॥

यो ब्रह्मणस्पतिः रेवान् धनवान्। यश्चामीवहा अमीवस्य रोगस्य हन्ता। अम रोगे। अमेरीवः। वसुवित् वसु धनं वेत्तीति यश्च पुष्टिवर्धनः पोषणस्य वर्धयिता यश्च तुरः तुर वेगे इगुपधेति कः वेगवान् अविलम्बितकारी[1]। स ब्रह्मणस्पतिर्नोऽस्मान् सिषक्तु

योरेवान्योअमीवहावसुवित्पुष्टिवर्द्धनः। सनःसिषक्तुयस्तुरः ॥ २९ ॥

मानःशꣳसोअररुषोधूर्त्तिःप्रणङ्मर्त्यस्य। रक्षाणोब्रह्मणस्पते ॥ ३० ॥

सेवताम् सिषक्ति सचत इति सेवमानस्य[२]। यद्वा अनयर्चा पुत्रः प्रार्थ्यते। यः पुत्रो रेवान्धनवान् यश्च व्याधेर्हन्ता जपादिना यो धनस्य लब्धा पुष्टेश्च वर्द्धयिता। यः तुरः शीघ्रकारी तादृशः पुत्रोऽग्नेः प्रसादान्नोऽस्मान् सिषक्तु सेवताम् ॥ २९ ॥

रा दाने इति धातोः क्वसुवन्तस्य षष्ठ्येकवचने ररुष इति रूपम्। ररौ इति ररिवांस्तस्य ररुषः। दानं कृतवत इत्यर्थः। तस्य निषेधादररुष इति। कदाचिदपि हविर्दानमकृतवतः इत्यर्थः। तादृशस्य मर्त्यस्य मनुष्यस्य शंसो धूर्त्तिश्च नोऽस्मान् मा प्रणक् प्रकर्षेण व्याप्नोतु। नशिर्व्याप्त्यर्थः। यद्वा नश अदर्शने। मा प्रणक् प्रकर्षेण मा नाशयतु। शंसनं शंसोऽनिष्टचिन्तनम्। धूर्तिः

१——अविलम्बेन कारी मु०। २——निरु० ३,२१।

बुधश्राः लोण्मध्यमैकवचने सेह्यपिच्चेति हि। बहुलं छन्दसीति शपो लुक्। हुझल्भ्यो हेर्धिः। छन्दसि गुणे घलोपौ। शृधी॥ शृणुकृधि छन्दसीति हेर्धिः। संहितायामन्येषामपि दृश्यत इति दीर्घः। उरुष्य उरुष्यतीति रक्षणकर्मा। ऋचि तुनुघेत्यादिना दीर्घः। नच धातुस्थोरुषुभ्य इति न इत्यस्य णत्वम्। अघायतः। अघं परस्येच्छति अघायति। सुप आत्मनः क्यजित्यत्र छन्दसि परेच्छायामपि वक्तव्यमिति क्यच्। अश्वाघस्यादित्याकारः अघायतीत्यघायन्। तस्मात् अघायतेः शतृप्रत्यये रूपम्॥ २६॥

का० गां गच्छतीडएहीति[1]। हे यजुषी गव्ये। हे इडे एहि। हे अदिते एहि आगच्छ होमस्थानम्। इडा मनोर्दुहिता अदितिर्देवमाता। इडा मनुदिवाश्मनेहि। अदितिरादित्यानिवाश्मानेहि। तस्मिंस्तच्छब्दस्तदर्थतिदेशार्थः। का० काम्या एतेत्या-

इडएह्यदितएहिकाम्याएत। मयिवःकामधरणम्भूयात्॥ २७॥

सोमानᳪस्वरणङ्कृणुहिब्रह्मणस्पते। कक्षीवन्तंयऔशिजः॥ २८॥

लभत इति[2]। गामालभते। मनुष्याणां स्त्रोतासु कामाः प्रविष्टा इति काम्याः। हे काम्याः सर्वैः कामयितव्याः यूयमेत आ इत आगच्छत। वो युष्माकं कामधरणं कामानां धरणं मपेक्षितफलधारकत्वं यदस्ति तत् मयि अनुष्ठातरि भूयात् युष्मत्प्रसादादहम-भीष्टफलस्य धारयिता भूयासमित्यर्थः। अहं वः प्रियो भूयासमिति[3] श्रुतिर्व्याचष्टे॥ २७॥

का० सोमानमित्यनुदकं व्रतोपायनवत्[4]। व्रतेत्यपरेणाहवनीयं प्राङ्तिष्ठन्नव्च जपतीति सूत्रार्थः। सोमानं स्वरणं द्वचो गायत्री ब्रह्मणस्पतिदेवत्यस्तेनैव दृष्टः। दर्भोमोचनमाणस्य यजमानस्य जपे विनियुक्तः। हे ब्रह्मणस्पते वेदस्य पालक सोमानं

१——४, १२, ८। २——४, १२, ९। ३——२, ३, ४, २४। ४——४, १२, १०।

त्वमः सर्वदा समीपवर्ती भव। अम गतौ भजने शब्दे अमति समीपं प्राप्नोतीत्यम् क्विप् अतिशयितोऽम अन्तमः अम शब्दात्तमप्। यद्वान्तिकशब्दात्तमपि पृषोदरादित्वेन साधुः। उतापि च त्राता पालयिता। शिवः शान्तः। वरूथ्यः वरूथाय हितो वरूथाः तादृशश्च भव। पुत्रादिसमूहो वरूथः। यद्वा वरूथं गृहम् तस्मै हितो भव। किंभूतः त्वं वसुः वासयतीति वसुः। जनानां वासयिता। तथा अग्निः। अङ्गतीत्यग्निः। अगि गतौ। आहवनीयादिरूपेण गमनशीलः। तथा वसुश्रवाः वसुना धनेन श्रवः कीर्तिर्यस्यासौ वसुश्रवाः। धनप्रदायमिति यस्य कीर्तिरित्यर्थः। किं च हे अग्ने त्वमच्छा नक्षि अभिव्याप्नुहि अस्मान्। अच्छाभेराप्तुमिति शाकपूणिः[1] नक्षतिराप्नोतिकर्मा। यद्वा हे अच्छ निर्मलस्वभाव अग्ने नक्षि अस्मदीयमस्थानं गच्छ। नक्ष गतौ। यदा

तन्त्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः। सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात्॥ २६॥

यदा वयं जुहुयामस्तदा समागच्छेत्यर्थः। किं च द्युमत्तमं रयिं दाः अति दीप्तियुक्तं रयिं धनं देहि। ददातेर्लुङि रूपम्। बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः॥ २५॥

हे शोचिष्ठ दीप्तिमत्तम हे दीदिवः सर्वस्य दीपयितः तं पूर्वोक्तगुणयुक्तं त्वा त्वां सखिभ्योऽर्थाय सुम्नाय द्वितीयार्थे चतुर्थी सुम्नं सुखं नूनं निश्चयेन ईमहे याचामहे। यद्वा सुम्नाय सुखार्थं सखिभ्योऽस्मत्सखीनामुपकाराय च त्वामीमहे। स त्वं नोऽस्मान् भवत्सेवकान् बोधि बुध्यस्व हवमस्मदीयमाह्वानं श्रुधी शृणु। समस्मात्सर्वस्मात् अघायतः शत्रोर्नोऽस्मानुरुष्य रक्ष। समशब्दः सर्वपर्यायः॥ शोचिरिति ज्वालानाम[2] शोचिरस्यास्तीति शोचिष्मान् मतुप्। अतिशयेन शोचिष्मान्शोचिष्ठः। अतिशायने तमबिष्ठनौ विन्मतोर्लुगितीष्ठनि मतुपो लुक्॥ दीदिवः दिवेर्ज्वलनार्थस्य लिडादेशक्वसन्तस्य रूपम्। मतुवसो रुः सम्बुद्धौ छन्दसीति रुत्वम्॥ बोधि

[1]—५, २८ निरु०। [2]—१, १७ निघ०।

क्रियापदमनुवर्त्तते । वयमीदृशमग्निमुपैमः । कीदृशं राजन्तं दीप्यमानमध्वराणाम् । गोपां गोपायतीति गोपास्तं यज्ञानां गोप्तारम् । ऋतस्य सत्यवचनलक्षणस्य व्रतस्य दीदिविं दीपयितारम् । अग्निसमीपे व्रतं गृहीत्वा सत्यं वदतीत्याशयः । स्वे दमे अस्मदीये गृहे वर्धमानं चातुर्मास्यसोमपश्वादिभिरभिवृद्धिं गच्छन्तम् । दाम्यन्ति गृहस्था यत्रेति दमो गृहम् ॥ दिविः क्विप्रत्ययो बाहुलकात् । लिड्वद्भावात् द्वित्वम् । तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः । देवयतीति दिदीविः ॥ २३ ॥

हे अग्ने गार्हपत्य स पूर्वोक्तगुणयुक्तस्त्वं नोऽस्माकं सूपायनो भव । सुखेनोपैतुं शक्यः सूपायनः । सुखेनोपप्राप्तुं शक्यो भव ।

राजन्तमध्वराणाङ्गोपामृतस्यदीदिविम् । वर्द्धमानꣳस्वेदमे ॥ २३ ॥

सनःपितेवसूनवेऽग्नेसूपायनोभव । सचस्वानःस्वस्तये ॥ २४ ॥

अग्नेत्वन्नोअन्तमउतत्राताशिवोभवावरूथ्यः । वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमꣳरयिन्दाः ॥ २५ ॥

तत्र दृष्टान्तः । सूनवे पितेव यथा पुत्राय पिता भयं विना सुखेन प्राप्तुं शक्यः । किं च नोऽस्माकं स्वस्तये क्षेमाय सचस्वानेन कर्मणा समवेतो भव । षच समवाये इति धातुः यद्वा सचस्व सेवस्व । षच सेवने ॥ २४ ॥

चतस्रो द्विपदा विराज आर्ष्यः । दशार्णपादा विराट् । बन्ध्वादिदृष्टाः । हे अग्ने गार्हपत्य त्वं नोऽस्माकमन्तमः अन्तिक

ऽहविश्शेष सञ्चारप्रदेश:[1]। सर्वदास्मिन् लोके लोकदर्शने यजमानदृष्टिविषये रमध्वम्। रात्रौ अस्मिन् चये यजमानगृहे रमध्वम्। चयो निवास इत्याद्युदात्तः। चयशब्दो निवासवाची। किञ्च। इहैव स्त यजमानगृहे एव भव। मा अपगात अन्यत्र मा गच्छत। इणो गा लुङीति एतेर्लुङि गादेशे रूपम ॥ २१ ॥

का०। सꣳहितेत्यालभत इति[2]। गामित्यनुवर्त्तते। हे गौः त्वं संहितासि चौराज्यरूपहविर्दानाय यज्ञकर्मभिः संयुक्तासि। किम्भूता विश्वरूपी विश्वं रूपं यस्याः सा। शुक्लकृष्णादिबहुरूपैर्युक्ता। त्वमूर्ज्जा क्षीरादिरसेन गोपत्येन गोस्वामित्वेन मामाविश सर्व्वतः प्रविश। त्वत्प्रसादान्मम बहुविधो रसो बहुविधं गोस्वामित्वं च सम्पद्यतामित्यर्थः। गार्हपत्यं गत्वोपतिष्ठतउपत्वेतीति[3]।

सꣳहितासिविश्वरूप्यूर्ज्जामाविशगौपत्येन। उपत्वाग्नेदिवेदिवेदोषावस्तर्द्धियावयम्। नमोभरन्तएमसि ॥ २२ ॥

उप त्वा तिस्रो गायत्र्य आग्नेय्यो मधुच्छन्दोदृष्टाः। हे दोषावस्तः हे अग्ने दोषा रात्रिस्तस्यामपि वसति अजस्रं धार्य्यमाणत्वान्नोपशाम्यतीति दोषावस्ता। यद्वा अग्नौ हे देवा इत्युपक्रम्य तैः संगृह्य रात्रिं प्रविवेशेतीतिहासेन अग्ने रात्रौ प्रवेश उक्तस्तमयं मन्त्र आह। हे दोषावस्तः रात्रौ वसनशील गार्हपत्य दिवेदिवे प्रतिदिनं वयं यजमानाः त्वा त्वामुप एमसि त्वां प्रत्यागच्छामः। इदन्तो मसि। किम्भूता वयम्। धिया श्रद्धायुक्तया बुद्ध्या नमोभरन्तः नमस्कारं सम्पादयन्तः। यद्वा नम इत्यन्ननाम अन्नं[4] हविर्बिभ्रतः ॥ २२ ॥

१——विश्रमणसञ्चारप्रदेश: क०। २——४, १२, ६,। ३——४, १२, ७। ४——निघ० २,७,१२।

स्थ। चौराज्यादिरूपस्यान्नस्य जनकत्वादन्नत्वोपचारः। अतो भवत्प्रसादादहं युष्मत्सम्बन्धि अन्धः चौराज्यादिरूपमन्नमहं भक्षीय सेवेय। भज सेवायामित्यस्माद्धातोर्लिङ्यात्मनेपदैकवचने रूपम् ॥ तथा यूयं महस्थ। मह पूजायाम्। अतो वो युष्माकं पूजानां प्रसादादहमपि महो भक्षीय पूज्यत्वं सेवेय गोर्न पदा स्पृष्टव्येत्यादिस्मृतेर्गवां पूज्यत्वप्रसिद्धिः। यद्वा महःशब्देन दश वीर्य्याण्युच्यन्ते तानि। यथा गौर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति श्रुत्युक्तानि। प्रतिधुक् तत्कालदुग्धम्। शृतमुष्णं तत्। शरो दुग्धमण्डः मस्तु दधिरसः आतञ्चनं दधिपिण्डः। आमिक्षा स्फुटितं दुग्धम् ॥ वाजिनमामिक्षाजलमिति श्रुत्यर्थः ॥ एतद्दशवीर्यरूपा यूयं स्थ। अतो वो महो वीर्य्यं

रेवतीरमध्वमस्मिन्योनावस्मिन्गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षये। इहैव स्त मापगात ॥ २१ ॥

मह सेवेयेत्यर्थः ॥ तथा यूयमूर्जस्थ बलरूपाः स्थ गोक्षीरादेर्बलहेतुत्वात् बलरूपत्वोपचारः। ऊर्ज्ज बलप्राणनयोः। वो युष्माकं प्रसादादूर्ज्जं भक्षीय बलं सेवेय ॥ तथा रायस्पोषस्थ धनपुष्टिरूपाः स्थ। वैश्या हि क्षीराज्यादिविक्रयेण धनं पुष्णन्ति। अतो धनपुष्टित्वोपचारः। वो युष्माकं प्रसादाद्रायस्पोषं धनपुष्टिं भक्षीय सेवेय। अन्धस्येत्यादौ खर्परे शरीति विसर्गलोपः ॥ २० ॥

हे रेवतीः रेवत्यः धनवत्यो गावः। धनहेतुत्वेन धनवत्त्वं गवाम्। रयिर्विद्यते यासां ता रेवत्यः। रयिशब्दात् मतुप्। रयेर्मतौ बहुलमिति रयेर्मतौ परे सम्प्रसारणम्। सम्प्रसारणाच्चेति पररूपमाद्गुणः। पशवो वै रेवन्त इति श्रुतेः[1] हे रेवत्यः अस्मिन्योनौ हूयमानेऽग्निहोत्रहविर्दोहनस्थाने यूयं रमध्वं क्रीडत दोहनादूर्ध्वमस्मिन् गोष्ठे यजमानसम्बन्धिगोवाटे रमध्वम्। गोष्ठशब्देन गृहाद-

१ —— २,३,४,२९।

कां० सं त्वमित्युपविश्येति[1] ॥ उपप्रयन्त इत्यादिभिश्चित्रावसो इत्यन्तैर्मन्त्रैरुत्थायोपस्थान मत्र उपविश्येति विशेषः । हे अग्ने त्वं सूर्यस्य वर्चसा तेजसा समगथाः रात्रौ सङ्गतोऽसि । तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति तेनैतदाहेति श्रुतेः[2] । ऋषीणां मन्त्राणां स्तुतेन स्तोत्रेण समगथाः । बहवो मन्त्रा अग्निं स्तुवन्ति । तद्यदुपतिष्ठते तेनैतदाहेति श्रुतेः[3] । प्रियेण धाम्ना प्रियाभिराहुतिभिः समगथाः । आहुतयो वा अस्य प्रियं धामेति श्रुतेः[4] । यथा त्वमेतैस्त्रिभिः सङ्गतः एवमहमपि त्वत्प्रसादादायुषा अपमृत्युदोषरहितेन संग्मिषीय सङ्गतो भूयासम् । तथा वर्चसा विद्यैश्वर्यादिप्रयुक्ततेजसा संग्मिषीय । तथा प्रजया

सन्त्वमग्ने सूर्यस्य वर्चसागथाः सम्दृषीणां स्तुतेन । सम्प्रियेण धाम्ना समहमायुषा सं

वर्चसा सम्प्रजया स(ँ)रायस्पोषेण ग्मिषीय ॥ १९ ॥

अन्धस्थान्धो वो भक्षीय महस्थ महो वो भक्षीयोर्जस्थोर्जं वो भक्षीय रायस्पोषस्थ रायस्पोषं वो भक्षीय ॥ २० ॥

पुत्रादिकया संग्मिषीय । तथा रायस्पोषेण धनस्य पुष्ट्या संग्मिषीय । आयुरादीनि मम सन्त्वित्यर्थः । समगथाः गमेः समो गम्यृच्छीत्यादिना तङ्मध्यमैकवचने लुङि सिचि गमस्येति सिचः कित्त्वेऽनुदात्तोपदेशेत्यादिना मलोपे ह्रस्वादङ्गादिति सिचो लोपे रूपम् ॥ ग्मिषीय । गमेराशीर्लिङि उत्तमैकवचने इटोऽदित्यकारे परे सीयुटि कृते छान्दसे इडागमे गमहनेत्युपधालोपे रूपम् ॥ १९ ॥

का० गां गच्छत्यन्धस्थेति[5] । अन्धस्थ—रेवती रमध्वमिति यजुर्द्वयेन गां गच्छति । गौर्देवता । हे गावो यूयमन्धस्थ अन्नरूपाः

१——४,१२,४ । २——२,३,४,२४ । ३——२,३,४,२४ । ४——२,३,४,२४ । ५——४,१३,५ ।

अग्निदेवत्या महापङ्क्तिः। यस्याः षट् पादा अष्टाक्षरा सा महापङ्क्तिः। अत्र षष्ठः सप्ताक्षरः। हे अग्ने शतं हिमाः शतं वर्षाणि अस्मदायुषि वर्तमानान् शतं सम्वत्सरान्त्वां समिधीमहि नैरन्तर्येण वयं दीपयामः। किम्भूतावयम्। इन्धानाः त्वदनुग्रहेण दीप्यमानाः तथा वयस्वन्तः। वय इति अन्ननाम[1] अन्नवन्तः। सहस्वन्तः बलवन्तः। सह इति बलनाम[2] अदब्धासः अदब्धाः अनव-हिंसिताः केनापि। दभ्नोतिर्हिंसाकर्मा। आज्जसेरसुगिति असुक्। किम्भूतं त्वां द्युमन्तं दीप्तिमन्तम्। वयस्कृतं वयोऽन्नं करोतीति वयस्कृत् तम्। सहस्कृतं सहो बलं करोतीति सहस्कृत् तम्। सपत्नदम्भनं सपत्नानां शत्रूणां हिंसितारम्। अदाभ्यम्

इन्धानास्त्वाशतꣳहिमाद्युमन्तꣳसमिधीमहि। वयस्वन्तोवयस्कृतꣳसहस्वन्तःसहस्कृतम्॥

अग्नेसपत्नदम्भनमदब्धासोऽअदाभ्यम्। चित्रावसोस्वस्तितेपारमशीय॥ १८॥

केनापि हिंसितुमयोग्यम्॥ चित्रावसो। रात्रिदेवत्यं यजुरुष्णिक्त्रिष्टुप्। रात्रिर्वै चित्रावसुः सा हीयꣳ सङ्गृह्येव चित्राणि वसतीति[3] श्रुतेश्चित्रावसुशब्देन रात्रिः। चित्राणि विविधानि चन्द्रनक्षत्रान्धकाररूपाणि वसन्ति यस्यां रात्रौ सा चित्रावसुः। हे चित्रावसो रात्रे स्वस्ति क्षेमं यथा तथा ते तव पारं समाप्तिमशीय व्याप्नवानि। अश्नुतेर्बहुलं छन्दसीति शपो लुकि लिङुत्तमैकवचने रूपम्। यथा लोके मनुष्येषु सुप्तेषु चोरा गृहे प्रविशन्ति तद्वदत्र देवयजने रक्षांसि प्रविशन्तीति शङ्कया तन्निवारणाय रात्रिप्रार्थनम्॥ १८॥

१——निघ० २,७,७। २——निघ० २,९,१७। ३——२,२,४,२१।

मयस्युपचर्यंते। सा हैनानुदीक्ष्य हिंचकारेत्युपक्रम्य ते देवा विदाञ्चक्रुरेष साम्नो हिङ्कार इत्यादिना ग्रन्थेन गोभिर्हिंङ्कारो दृष्ट इति प्रत्यपादि। यद्वा सहस्रसामृषिमिति विभक्तिलिङ्गवचनव्यत्ययेन अङ्गय इत्यस्य विशेषणद्वयम्। किंभूता अङ्गयः सहस्रसाः ऋषयः। पूर्ववदर्थो वा ॥ १६ ॥

अथ यजूंषि चत्वार्यग्निदेवत्यानि। हे अग्ने त्वं स्वाभावत एव तनूपा असि। अग्निहोत्रिशरीराणां पालकोऽसि। तनूं पाति पालयतीति तनूपाः। उदराग्नौ सत्यन्ने जीर्णे शरीरपालनमतो मे मम तन्वं शरीरं पाहि पालय। तन्वम् वा छन्दसीत्यमि पूर्व-

तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि।

अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥ १७ ॥

रूपाभावे यणादेश इत्युक्तम्। हे अग्ने त्वमायुर्दा असि आयुषो दाता भवसि। अतो मे मम आयुर्देहि। अपमृत्युपरिहारेण। यावत्कालं वपुष्युदराग्ने रौष्ण्यमुपलभ्यते तावन्न म्रियत इति प्रसिद्धम्। हे अग्ने त्वं वर्चोदा असि वर्चसो दातासि। अतो मे वर्चो देहि। वैदिकानुष्ठानप्रयुक्तं तेजो वर्चः। यद्दर्शनादेव महानयं ब्राह्मणो विद्वांस्तपसाग्निरिव ज्वलतीति बुद्धिर्नॄणां भवति। किंच हे अग्ने मे मम तन्वा मदीयशरीरस्य यदङ्गं चक्षुरादिरूपमूनं दृष्टिपाटवादिरहितं तदङ्गं मे आपृण सर्वतः पूरय ॥ १७ ॥

गायत्रावत्सारदृष्टा गोऽग्निपयोदेवत्या। अस्याग्नेः प्रत्नां चिरन्तनकालभवां द्युतमनु दीप्तिमनुसृत्य। अह्रयः नास्ति ह्रीर्येषां मौढ्या लज्जारहिता दोग्धारः ऋषिं गां शुक्रं शुक्लं पयो दुदुह्रे दुदुहिरे। दुहेर्लिटि इरयो रे इति रे॥ इरः दैशे रूपम्। ऋष गतौ। ऋषति दोहनस्थाने गच्छतीति ऋषिर्गौः। तां होमार्थं दुग्धवन्तः। सायं दोहनकालेऽग्निप्रकाशाभावे दुह्यमानं पयो भूमौ पतिष्यतीति शङ्कया दोग्धॄणां लज्जा भवति। सत्यामग्निदीप्तौ स्कन्दशङ्कानुदयाल्लज्जाभावादह्रयो दोग्धारः। किम्भूतामृषिं सहस्रसाम्। षोऽन्तकर्मणि। सहस्रसङ्ख्याकानि कर्माणि स्यति समापयति क्षीरदध्याज्यहविःप्रदानेनेति सहस्रसा ताम्। स्यतेः क्विप्। तद्वाख्या ऋषोऽर्थान्तरम्। गाम्प्रकृत्याग्निहोत्रब्राह्मणे श्रूयते। तामु हाग्निरभिदध्यौ मिथुन्येऽनया स्यामिति ताᳪसम्बभूव तस्याᳪ रेतः

अस्य प्रत्नामनु द्युतᳪ शुक्रन्दुदुह्रे अह्रयः। पयः सहस्रसामृषिम्॥ १६॥

प्रासिञ्चत्तत्पयोऽभवदित्यादि[१]। तदभिप्रायमेषा ऋग्वदति। अह्रयः गावः नास्ति ह्रीर्लज्जा यासां ता अह्रयः अलज्जा उज्ज्वलाः प्रशस्ता इत्यर्थः। मलिनो हि लज्जते। अह्रयो गावोऽस्याग्नेः प्रत्नां चिरन्तनीमात्मानुषक्तां द्युतं दीप्तिं शुक्रं शुक्ररूपापन्नां द्युतमेव पयो दुग्धं दुदुह्रे दुहन्ति क्षरन्ति। अग्निना शुक्ररूपेण सिक्तां स्वकान्तिमेव गावो दुग्धरूपेण क्षरन्तीत्यर्थः। सहस्रसामृषिमिति विशेषणद्वयं पयसः। सहस्रं सनोति सहस्रसास्तम्। चातुर्मास्यपशुसोमानां सम्भक्तारम्। पुंस्त्वमार्षम्। जनसनखनक्रमगमो विडिति विट्प्रत्यये विड्वनोरनुनासिकस्यादित्याकारे वेर्लोपे सहस्रसा इति रूपम्। तथा ऋषिं द्रष्टारम्। गवि वर्त्तमानं द्रष्टृत्वं

१——१,२,४,१५।

कर्मकाले दीप्तोऽभूः। हे अग्ने तं गार्हपत्यं जानन् स्वजनकमवगच्छन् आरोह। पुनरुद्धरणाय कर्मान्ते प्रविश। अथानन्तरं नोऽस्मदर्थं रयिं धनं वर्धया पुनर्योगाय समृद्धं कुरु। अन्येषामपि दृश्यत इति संहितायां वर्धयेति दीर्घः॥ १४॥

जगती वामदेवदृष्टा। द्वादशाक्षराश्चत्वारः पादा जगत्यां। द्वितीयोऽत्र व्यूहेनैकादशः चतुर्थो व्यूहेन द्वादशकस्तेनैकोना जगती। अयमाहवनीय इह कर्मानुष्ठानस्थाने प्रथमो मुख्यः सन् धातृभिर्धायि। अधायि आधानकर्तृभिराहितोऽभूत्। बहुलं छन्दस्यमाङ्योगेऽपीडभावः। दक्षिणाग्न्यपेक्षं प्राथम्यम्। किम्भूतः। होता देवानामाह्वाता। यजिष्ठः अतिशयेन यष्टा।

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे॥१५॥

अतिशायने तमबिष्ठनाविती इष्ठनि परे तुरिष्ठेमेयःस्विति तृचो लोपः। तथा अध्वरेषु सोमयागादिषु ईड्यः ऋत्विग्भिः स्तुत्यः। अप्नवानो भृगवो विशेविशे यमाहवनीयं वनेषु विरुरुचुः। अन्तर्भावितो णिच् रोचयामासुः दीपितवन्तः। अप्नशब्दोऽपत्यनामसु पठितः[1] अप्नवानः पुत्रवन्तो भृगुवंशोत्पन्ना मुनयः। यद्वा अप्नवानस्तत्प्रभृतयो भृगवश्च मुनयः। विशेविशे विडिति मनुष्यनाम[2] यजमानरूपाय तस्मै तस्मै मनुष्याय तदुपकाराय। वनेषु ग्रामाद्बहिर्यजनाख्येष्वरण्यप्रदेशेषु यमग्निं विरुरुचुः दीपयन्ति स्म। किम्भूतं यम्। चित्रं विविधकर्मोपयोगित्वेन आश्चर्यकारिणम्। अतएव विभ्वं विभुं विभुत्वशक्तियुतं यथादेशः॥ १५॥

१——निघ० २,२,७। २——निघ० २,३,१।

भरद्वाजदृष्टा ऐन्द्राग्नी त्रिष्टुप् छन्दः। इन्द्रशब्देनात्राहवनीयः। तस्य यज्ञसाधकत्वरूपैश्वर्ययुक्तत्वात्। अग्निशब्देन गार्हपत्यः अग्रं नीयत इत्यग्निरिति[1] यास्कव्युत्पत्तेः। स हि प्रथममाधीयते। हे इन्द्राग्नी वां युवामुभा आहुवध्यै आह्वातुमिच्छामीति शेषः। ह्वयतेस्तुमर्थे कध्यैप्रत्ययः। किं च राधसः धनाद्धविर्लक्षणात् सह मादयध्यै युगपदेककर्मणि उभौ युवां मादयितुं हर्षयितुं वा इच्छामीति शेषः। मदी हर्षे मद तृप्ताविति धातोर्वा णिजन्तात्तुमर्थे शध्यैप्रत्ययः। गुणः। यत उभौ युवामिषामन्नानां रयीणां

उभावामिन्द्राग्नीआहुवध्याउभाराधसःसहमादयध्यै।

उभादाताराविषांरयीणामुभावाजस्यसातयेहुवेवाम्॥ १३॥

अयन्तेयोनिर्ऋत्वियोयतोजातोअरोचथाः। तञ्जानन्नग्नआरोहाथानोवर्द्धयारयिम्॥ १४॥

धनानां दातारौ अत उभौ वां युवां वाजस्यान्नस्य सातये दानाय हुवे आह्वयामि। उभा उभशब्दस्य विभक्तेराकारः। सातये षणु दाने अस्य धातोरूतियूतीति क्तिन्नन्तो निपातः। हुवे बहुलं छन्दसीति ह्वयतेः शपि सम्प्रसारणे उवङ्॥ १३॥

तिस्र आग्नेय्यः। आद्यानुष्टुप् देवश्रवोदेववातदृष्टा। हे अग्ने आहवनीय ते तवायं गार्हपत्यो योनिः उत्पत्तिस्थानम्। किम्भूतः ऋत्वियः। उत्पादनयोग्यः काल ऋतुरुच्यते। ऋतुः प्राप्तोऽस्येति ऋत्वियः। छन्दसि घसिति ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे घस्। तस्य इयादेशः। सायंप्रातःकाले उत्पादनयोग्यो योनिः। यतो यस्मादृतुकालोपेताद्गार्हपत्याज्जात उत्पन्नस्त्वमरोचथाः

१—निरु दै० १,१४।

:क्रमेण गौतमविरूपाभ्यामपि दृष्टे ॥ आहवनीयोपस्थानमन्त्रा आदौ । वयमनुष्ठातारोऽग्नयेऽस्मदर्थं मन्त्रं मननेन त्राणकरं शब्दसमूहं वोचेम उच्याम । किंभूता वयम् । अध्वरं यज्ञमुपप्रयन्तः उपगच्छन्तः । किंभूतायाग्नये आरे दूरे अस्मे अस्माकं समीपे इति शेषः शृण्वते दूरे समीपे चास्मदीयं वाक्यं श्रोतुमुद्युक्ताय ॥ वोचेमेति वक्तेराशीर्लिङि परस्मैपदोत्तमबहुवचने परे लिङ्याशिष्यङिति अङ् यासुट् अतो येयः वच उम् छन्दस्युभयथेति सार्वधातुकत्वाल्लिङः सलोपोऽनन्त्यस्येति सलोपः यलोपः वोचेम । अस्मे सुपां सुलुगिति शे आदेश आमः ॥ ११ ॥

अ॒ग्निर्मू॒र्द्धा दि॒वः क॒कुत्पतिः॑ पृथि॒व्या अ॒यम् । अ॒पाᳪ रेताᳪसि जिन्वति ॥ १२ ॥

अयमग्निः अपां रेतांसि जिन्वति द्युलोकाद्वृष्टिरूपेण पतन्तीनामपां रेतांसि साराणि व्रीहियवादिरूपेण परिणतानि जिन्वति । जिन्वतिः प्रीतिकर्मा प्रीणयति वर्धयतीत्यर्थः । यद्वा अपां रेतांसि कारणानि जिन्वति पुष्णाति । आहुतिपरिणामेन वृष्टिं जनयतीत्यर्थः । ते वा एते आहुती उदक्रामत इत्यादिश्रुतेः । किंभूतोऽग्निः । दिवो मूर्धा द्युलोकस्य शिरःसमानः । यथा शिरः शरीरोपरि वर्तते तथायमग्निरहनि स्वतेजसा आदित्ये प्रविष्टत्वादादित्यरूपेण द्युलोकस्योपरि वर्तते । तथा ककुत् । ककुच्छब्दो गोपृष्ठोन्नतावयववाची तद्वदादित्यरूपेण सर्वोपरिस्थत्वात्ककुत्सदृशः । यद्वा ककुदमिति महन्नाम[1] तस्यान्त्यलोप आर्षः । महत् जगत्कारणमित्यर्थः । तथा पृथिव्याः पतिः पालकः । दाहपाकप्रकाशैर्भूलोकस्थानामुपकारकत्वात् ॥ १२ ॥

१——निघ० ३,३,१९ ।

का० सजूरिति वेति[1]। जुहोतीत्यनुवर्तते। पूर्वोक्तमन्त्रैः सह सजूरित्यादिमन्त्रद्वयं विकल्पितम्। सजूर्देवेन। अग्निर्वेतु। अस्मदीयं कर्म प्राप्नोतु। यद्वा वेतु आहुतिं भक्षयतु। वी प्रजननकान्त्यसनखादनेष्विति धातोः प्रयोगः। किंभूतोऽग्निः सविता देवेन प्रेरकेण परमेश्वरेण सह सजूः। जुषी प्रीतिसेवनयोः। जोषणं जूः समाना जूः प्रीतिर्यस्यासौ सजूः। तथा इन्द्रवत्या रात्र्या इन्द्रेण देवेनार्पितया रात्रिदेवतया सजूः समानप्रीतिः। तथा जुषाणोऽस्मासु प्रीतियुक्तः। य उक्तगुणवानग्निर्देवस्तस्मै स्वाहा

सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या। जुषाणो अग्निर्वेतु स्वाहा॥

सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या। जुषाणः सूर्यो वेतु स्वाहा॥ १०॥

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये। आरे अस्मे च शृण्वते॥ ११॥

हूयमानमिदं द्रव्यं दत्तम्। प्रातः सूर्य उच्यते। अग्निमन्त्रवदयं सूर्यमन्त्रो व्याख्येयः। पूर्वार्धे रात्रिदेवताया स्थाने उषोदेवता योजनीया॥ १०॥

का० सायमाहुत्याᳬ हुतायां यजमानोऽग्नी उपतिष्ठते वात्सप्रेण न वा तिसृभिरुपप्रयन्तो ऽस्य प्रत्नां परि ते चित्रावसविति चेति[2]। आहवनीयगार्हपत्यावग्नी उपप्रयन्तो अध्वरमित्यारभ्य सुपोषः पोषैरित्यन्तं त्र्यहदुपस्थानं देवदृष्टम्। तत्राद्ये द्वे आग्नेय्यौ गायत्र्यौ

[1]—४,१४,९। [2]—४,१२,१-३।

अथाग्निहोत्रहोममन्त्राः। अग्निर्ज्योतिरित्यारभ्य उपप्रयन्त[1] इत्यतः प्राक्। तन्मन्त्राणां प्रजापतिऋषिः सामान्यतः। यत्र ऋषिविशेषोऽभिधीयतेऽनुक्रमणीकारैस्तत्र द्रावप्यृषी। यथाग्निर्वर्चो द्वे तचापश्यत्परां जीवलश्चैलकिरिति[2]। सप्त लिङ्गोक्तदेवता गायत्र्यः आद्याः षडेकपदाः। अग्निर्ज्योतिः सूर्यो ज्योतिः एते द्वे एकपदे गायत्र्यौ तचा मुनिरपश्यत्। परां ज्योतिः सूर्यः इमां चैलकस्य पुत्रो जीवल ऋषिरपश्यदित्यर्थः॥ अथ का० प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरितीति[3]। या समित् प्रदीप्ता तामभिलक्ष्य जुहुयात्। 'अग्निर्ज्योतिषमिति[4] काण्वशाखोक्तमन्त्रेण समित्प्रक्षेपः। मन्त्रार्थस्तु। योऽयमग्निर्देवः स एव ज्योतिर्दृश्यमानज्योतिः स्वरूपम्। यच्चेदं दृश्यमानं ज्योतिः तदेवाग्निर्देवः। देवस्य ज्योतिषश्च कदाचिदप्यवियोगादेकत्वेन प्रतिपादनम्। स्वाहा ज्योतीरूपायाग्नये हविः प्रदत्तम्। अयं सायंकालीनोऽग्निहोत्रहोममन्त्रः। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्होममन्त्रः सायंहोममन्त्रवद्व्याख्येयः। सूर्यसम्बन्धि तेजो रात्रावग्निं प्रविशतीति सायमग्निर्ज्योतिरिति मन्त्रो युक्तः। उदयकालेष्वग्निसम्बन्धि ज्योतिः सूर्यं प्रविशति। तस्मात् प्रातः सूर्यो ज्योतिरिति। मन्त्रः। अग्निमादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे। उभे हि तेजसी सम्पद्येते 'उद्यन्तं वादित्यमग्निरनु समारोहति तस्माद्धूम एवाग्निर्दिवा ददृश इति तित्तिरिश्रुतेः।[*] का० अग्निर्वर्च इति ब्रह्मवर्चसकामस्येति[5]। ब्रह्मवर्चसकामस्तु अग्निर्वर्चः सूर्यो वर्च इति सायं प्रातश्च जुहुयात्। योऽग्निर्वर्चोऽनन्यभूतः। यस्य तज्ज्योतिर्वर्चोऽनन्यभूतम्। तस्मै सुहुतमस्तु। एवं सूर्यो वर्च इति॥ का० ज्योतिः सूर्यं इति वा प्रातर्हितेति[6]। प्रातर्होममन्त्रः ज्योतिः सूर्यं इति। यत् ज्योतिः स सूर्य एव। यः सूर्यः स ज्योतिरेव। तस्मै स्वाहा॥ ९॥

१——श० ११। २——अनु १,११। ३——४,१४,१३। ४——३,२,१ अध्या। ५——४,१४,१५। ६——४,१५,११।

विराजति शोभयते स्तूयमाना सा वाक् पतङ्गाय धीयते अग्न्यर्थमुच्चार्यते। पतन् गच्छति पतङ्गः। अग्निः। स ह्युद्धरणीः पतन् गार्हपत्यभावं गच्छति गार्हपत्यात्पतन्नाहवनीयतामित्यादि। सर्वदेवसम्बन्धिनीभिः स्तुतिभिरग्निरेव सर्वात्मत्वात्स्तूयते इत्यर्थः। न केवलं त्रिंशत् धामसु या वाग्विराजति सैव पतङ्गाय धीयते किं तर्हि प्रति वस्तोः प्रत्यहं या स्तुतिलक्षणा वाक् या च द्युभिः अहोभिः यागपरायणाद्युत्सवभूतैः स्तुतिलक्षणा वाग्विराजति सा पतङ्गायैव धीयते। नान्यस्यै देवतायै। वस्तोः द्युः भानुरित्यहर्नामसु पठितम्[1]। अहेति निपातो विनिग्रहे। सर्वकालं सर्वा स्तुतिवागग्न्यर्थैवेत्यर्थः। यद्वास्या ऋचोऽयमर्थः। धाम स्थानं तच्च त्रिंशत् त्रिंशत्संख्याकमासगतदिनभेदेन। तद्विराजति विशेषेण दीप्यते। आलस्यरहितानां यजमानानामनुष्ठानेनाहवनीयाद्यग्नीनां स्थानं मासगतेषु

अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा। अग्निर्वर्च्चो ज्योतिर्वर्च्चः स्वाहा

सूर्य्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा। ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा॥ ९॥

त्रिंशत्संख्याकेषु दिनेषु विशेषेण शोभत इत्यर्थः। वाक् स्तुतिरूपा पतङ्गायाग्नये धीयते उच्चार्यते। पतङ्गः पक्षी। तत्सदृशत्वादग्निः पतङ्गः। यथा कश्चित्पक्षी एकस्मात् स्थानात् स्थानान्तरं गच्छति तद्वदग्निरपि गार्हपत्यस्थानादाहवनीयस्थानं गच्छतीत्यग्नेः पक्षिसादृश्यम्। अहेति निपातः पूर्वोक्तनिषेधार्थः। अस्या ऋचः पूर्वार्द्धेऽग्निमाहात्म्यज्ञापकं वाक्यद्वयेनार्थद्वयं यदुक्तं तावदेव न भवति किन्त्वन्यदप्युच्यत इत्यर्थः। वस्तोरित्यहर्नामसु पठितम्। प्रति वस्तोः प्रत्यहं द्युभिः द्योतनैरयमग्निः स्तूयत इत्यध्याहारः। द्यु द्योतनं दीप्यतिः प्रयोगः॥ ८॥ ॥ इत्यग्न्याधेयमन्त्राः॥

[1] — निघ० १,९,१।

एवमादित्यरूपेणाग्निं स्तुत्वा वायुरूपेण स्तौति । अस्याग्ने रोचना रुच दीप्तौ दीप्तिः काचिच्छक्तिः वायुराख्या अन्तश्चरति द्यावापृथिव्योर्मध्ये शरीरमध्ये चरति । अन्तरिक्षेऽयं तिर्य्यङ्ङायुः पवत इति श्रुतिः । किं कुर्वती । प्राणादपानती सर्व्वशरीरेषु प्राणव्यापारादनन्तरमपानव्यापारं कुर्व्वती । अपानादनन्तरं प्राणतीत्यप्यर्थो लभ्यते सामर्थ्यात् प्राणापानयोर्वायुविशेषयोः प्रेरिकेत्यर्थः । सति हि जठराग्नौ जीवनहेतोरौष्ण्यस्य शरीरे सद्भावात्प्राणापानौ प्रवर्त्तेते । तस्मादग्निः प्राणापानरूप इत्यर्थः । एवं वाय्वादित्याभ्यां स्वशक्तिभूताभ्यामिदं जगदनुगृह्य य एनमुपतिष्ठते तस्य किं करोतीत्याह । व्यख्यदिति । महिषोऽग्निः दिवं व्यख्यत् द्युलोकं भोगस्थानमनुष्ठातृभ्यो विशेषेण प्रकाशितवान् प्रकाशयति च । महि माहात्म्यं यागकर्तृस्वरूपं सनोति ददाति स महिषः ।

**अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ ७ ॥**

**त्रिꣳशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रति वस्तोरहद्युभिः ॥ ८ ॥**

अग्निर्वै महिषः स इदं जातो महानिति श्रुतेः । व्यख्यत् विपूर्वस्य ख्या प्रकथन इत्यस्यास्यतिवक्तिख्यातिभ्योऽङिति च्लेरङ् । आलोपः । छन्दसि लुङ्लङ्लिट इति सर्व्वकालेषु लङ् । अपान इवाचरतीत्यपानती क्विबन्तादपानशब्दाच्छतृप्रत्ययः । उगितश्चेति ङीप् ॥ ७ ॥

सुपां सुलुगित्यादिना त्रिंशच्छब्दाद्धामशब्दाच्च सुपो लुक् । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति[1] । अत्र धामशब्देन स्थानमुच्यते । अहोरात्रस्य त्रिंशन्मुहूर्ता धामशब्देनाभिप्रेताः । त्रिंशत्सु धामसु मुहूर्ताख्येषु स्थानेषु या वाक्

[1] — निरु० ६० ९,२८ ।

एवमहं महत्त्वेन सर्वप्राणिनामाश्रयभूतो भूयासम्। यद्वा पूर्वार्धस्यायमर्थः। किंभूतमग्निं मूर्ध्ना द्यौरिव वर्तमानम्। यथा द्यौनक्षत्रादिबहुत्वेन युक्ता तथा ज्वालाबहुत्वेन युक्तं। किं च वरिमणा पृथिवीव स्थितम्। यथा पृथिवी सर्वप्राण्याश्रयत्वरूपेण श्रेष्ठत्वेनोपेता। तथा सर्ववस्तुशोधकत्वरूपेण श्रेष्ठत्वेनोपेतम्। अत एव क्वचिद्विधिवाक्ये अग्नये पावकायेत्याम्नातम्॥ ५॥

॰का॰ आयङ्गौरिति चोपतिष्ठते सार्पराज्ञीभिर्दक्षिणाग्निमादधातीति[1]। आयङ्गौरित्यादीनां तिसृणामृचां सार्पराज्ञीति नामधेयम्। सर्पराज्ञी कद्रूः पृथिव्यभिमानिनी तया दृष्टत्वात् ताभिर्ऋग्भिराहवनीयमुपतिष्ठते ततो दक्षिणाग्निमादध्यादिति सूत्रार्थः। गायत्र्यस्तृचः। अग्निः परावररूपेण स्तूयते। अयं हूयमानोऽग्निः आ अक्रमीत् सर्वत आहवनीयगार्हपत्यदक्षिणाग्निस्थानेषु सर्वतः

आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः। पितरञ्च प्रयन्त्स्वः॥ ६॥

क्रमणं पादविक्षेपं कृतवान्। किंभूतोऽग्निः। गच्छतीति गौः। यज्ञनिष्पत्तये तत्तद्यजमानगृहेषु गन्ता। गमेर्डोप्रत्ययः तथा पृश्निः चित्रवर्णः। लोहितशुक्लादिबहुविधज्वालोपेतः। आक्रमणमेवाह। पुरः प्राच्यां दिशि मातरः पृथिवीमसदत् आसीदत्। आहवनीयरूपेण प्राप्तवान्। तथा स्वः प्रयन् आदित्यरूपेण स्वर्गे सञ्चरन् पितरं च द्युलोकमपि असदत् प्राप्तवान्। स्वःशब्देन सूर्यः[2]। द्युलोकभूलोकयोर्मातापितृत्वमन्यत्रापि श्रूयते। द्यौः पिता पृथिवी मातेति॥ ६॥

1 —— ४,९,१८–१९।   2 —— निघ॰ १,४,१।

का० दारुभिर्ज्वलन्तमादधाति भूर्भुव इति सम्भारेष्विति[1]। भूर्भुवःस्वरिति पूर्ववदिति चेति[2]। अस्यार्थः। आपो हिरण्यमूषा-दृत्काः शर्करेति पञ्च सम्भारान्सम्पाद्य स्फ्येनोल्लिखितायां शुद्धायां भूमौ तान् सम्भारानवस्थाप्य[3] तेषु शुष्ककाष्ठैर्ज्वलन्तमग्निं भूर्भुवः स्वरिति पश्चान्मन्त्रमुच्चारयन्नादध्यात्[4]। इदमाहवनीयाधानम्। एवमष्टाक्षरत्वादग्नेर्गायत्रत्वं श्रुत्योक्तम्। गायत्रीसहितस्याग्नेः प्रजापतिमुखादुत्पन्नत्वात् ॥ अथ मन्त्रार्थः। एष्वाधानमन्त्रेषु भूरिति प्रथमा व्याहृतिः। भुव इति द्वितीया। स्वइति तृतीया[5]। एतास्तिस्रो व्याहृतयः पृथिव्यादिलोकत्रयनामानि। एतदुच्चारणपूर्वकं प्रजापतिना लोकत्रयस्य सृष्टत्वात्। अत एवाभिः स्थापयन् लोकत्रयमनेन स्मरेत्। एतासां व्याहृतीनां महिमा भूयादिति। भूर्भुवःस्वःशब्देन ब्रह्मक्षत्त्रविशो वा आत्मप्रजापशवो वा। सर्वे मद्वशगा भूयासुरिति

भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा। तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥ ५ ॥

प्रार्थयमानोऽग्निमादध्यादित्यर्थः ॥ का० इषपूर्वार्धं गृहीत्वा द्यौरिव भूम्नेत्याहेति[6]। देवा इज्यन्ते यस्यां पृथिव्यां सा देवयजनी तथाविधे हे पृथिवि तस्यास्ते तव पृष्ठे देवयजनयोग्यायास्तवोपरि। अन्नादमन्नस्य हुतस्यात्तारमग्निं गार्हपत्यादिरूपमादधे स्थापयामि। किमर्थं-मन्नाद्याय। अन्नं च तदाद्यं च तस्मै भाद्यस्यान्नस्यात्तु योग्यस्यान्नस्य सिद्ध्यर्थम्। आहिताग्न्यादित्वात्परनिपातः। यद्वान्नस्याद्याय भक्षणाय। यस्याः पृष्ठेऽग्निमाधाय भूम्ना द्यौरिव भूयासमिति शेषः। बहोर्भावो भूमा तेन। यथा द्यौर्नक्षत्रैर्बहुत्वेन बह्वी। एवं पुत्रपश्वादिभिर्बहु भूयासम्। वरिम्णा पृथिवीव भूयासम्। उरोर्भावो वरिमा तेन। यथा पृथिवी उरुत्वेन सर्वप्राणिनामाश्रयभूता

१——४,८,१। २——४,८,१६। ३——अथस्याप्य सं०। ४——भूर्भुवइत्यक्षरत्रयमुच्चारयन्नादध्यात् मु०। ५——सुवरिति तृतीया मु०। ६——४,८,१७।

जातवेदसे जातं वेत्ति वेदयति वा जातवेदास्तस्मै । जातप्रज्ञानाय वा । किञ्च नं घृतं तीव्रं स्वादुतमं समग्रं वा पटुतरं वा । ग्रहणोद्दासनाधिश्रयणाविच्चणादिभिः संस्कृतमित्यर्थः ॥ २ ॥

हे अङ्गिरः अङ्गतिर्गत्यर्थः । अङ्गिर्गतिरस्यास्तीति अङ्गिराः । रस्प्रत्ययो मत्वर्थीयः । तत्तद्यागेषु गमनवत्त्वमग्ने । अङ्गिरा उ ह्यग्निरिति[1] श्रुतिः । तं य उक्तगुणस्तथाविधं त्वा त्वां समिद्भिर्यज्ञसम्बन्धिकाष्ठैर्घृतेन संस्कृताज्येन च वर्धयामसि वर्धयामः प्रवृद्धं कुर्मः । इदन्तो मसीति इकारश्छान्दसः । हे यविष्ठ्य युवतम कदाचिदपि स्थविरत्वरहित इत्यर्थः । तथाविधाग्ने बृहत् महत् प्रवृद्धं यथा तथा शोचा दीप्यस्व । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । अतिशयेन युवा यविष्ठ । इष्ठनि परे स्थूलदूरयुवेत्यादिना वादिलोपे गुणे च रूपम् । यविष्ठ एव यविष्ठ्यः । स्वार्थे तद्धितयकारः ॥ ३ ॥

तन्त्वासमिद्भिरङ्गिरोघृतेनवर्द्धयामसि । बृहच्छोचायविष्ट्य ॥ ३ ॥

उपत्वाग्नेहविष्मतीर्घृताचीर्यन्तुहर्यत । जुषस्वसमिधोमम ॥ ४ ॥

का० उप त्वेति जपतीति[2] । हे अग्ने हविष्मतीर्हविष्मत्यः हविर्युक्ता घृताचीः घृताच्यो घृताक्ता एताः समिधस्त्वा त्वामुपयन्तु । प्रत्युपगच्छन्तु । हे हर्यत प्रेप्सावन् । हर्यतः प्रावक इति कान्तिकर्मसु पठितत्वात्[3] । तथाविध हे अग्ने मम मदीयाः समिधः त्वं जुषस्व सेवस्व त्वामुपयतीरङ्गीकुर्वित्यर्थः[4] । छन्दसि परेऽपि व्यवहिताश्चेति उपयन्तु इत्युपसर्गक्रियापदयोर्व्यवहितत्वम् । हविष्मतीरित्यादौ वा छन्दसीति पूर्वसवर्णदीर्घत्वम् ॥ ४ ॥

१——१,४,१,२५ । २——४,८.६ । ३—— निघ०२,६,१० । ४——उपयन्त्यङ्गीकुर्वित्यर्थः इति सं० पु० ।

अध्यायद्वयेन दर्शपौर्णमासेष्टिविषया मन्त्रा उक्ताः । अथाधानमन्त्रा उच्यन्ते । प्रागग्निर्ज्योतिरित्यन्तेभ्यः[1] देवानां प्रजापतिरग्निर्गन्ध-र्वाणां वार्षे ॥ आग्नेय्यस्तस्रो गायत्र्यः । तत्र कात्यायनः अमावास्यायामग्न्याधेयमित्यादिना[2] कालविशेषादीनि ब्रह्मौदनपाकपर्य-न्तानि कार्याण्युक्त्वा पश्चादिदमाह । तं चातुष्प्राश्यं पचत्युद्धास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आद-धाति समिधाग्निमिति प्रत्यृचमिति[3] । अस्यार्थः । चतुर्भिर्ऋत्विग्भिः प्राशितुं योग्यमोदनं पक्त्वा वहिरुद्धास्य तस्यौदनस्य मध्ये घृतसेचनाय निम्नं स्थानं कृत्वा तत्सर्पिरापूर्य[4] तिस्रः समिधस्तस्मिंस्सर्पिष्यभ्यज्य तिसृभिर्ऋग्भिः[5]रग्नावभ्यादधातीति । समिधाग्निम् ।

॥ हरिः ॥ ॐ ॥ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥ १ ॥

सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे ॥ २ ॥

हे ऋत्विजः यूयं समिधा कृत्वा अग्निं दुवस्यत परिचरत । दुवस्यतिः परिचरणार्थः । सम्यगिध्यते दीप्यते वह्निर्यया काष्ठरूपया सा समित्तया । घृतैः होष्यमाणैः पूर्णाहुतिसम्बन्धिभिरतिथिमातिथ्यकर्मणा पूजनीयमग्निं बोधयत प्रज्वालयत अस्मिन् प्रज्वलितेऽग्नौ हव्या नानाविधानि हवींषि आ जुहोतन सर्वतो जुहुत । तप्तनप्तनथनाश्चेति तनबादेशः ॥ १ ॥

हे ऋत्विजः अग्नये यूयं घृतं[6] जुहोतन जुहुत । जुहोतेः परस्य लोट् मध्यमबहुवचनस्य तस्य 'तप्तनप्तनथनाश्चेति तनबादेशे गुणे जुहोतनेति रूपम् । किम्भूतायाग्नये । सुसमिद्धाय शोभनतया सम्यग्दीप्ताय । अत एव शोचिषे शोचिष्मते दीप्तिमते ज्वलिताय ।

1—रित्यन्तेभ्यः म० (९ ख० ) । 2—६,७,१ । 3—४,८,४—५ । 4—तत्सर्पिषापूर्य मु० । 5—तिसृभिर्ऋग्भिः इति सं० पु० पाठः । 6—घृतेन मु० ।

का० आधत्तेति मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामेति[1]। गायत्री पितृदेवत्या[2] हे पितरो यथा इहास्मिन्नृतौ पुरुषः असत् पुरुषः देवपितृमनुष्याणामपेक्षितार्थस्य पूरयिता भूयात् तथा कुमारं गर्भं पुत्ररूपं गर्भं यूयमाधत्त सम्पादयत। किम्भूतं कुमारं येन प्रकारेणेह पुष्करस्रजं पुष्कराणां पद्मानां स्रक् माला ययोस्तौ पुष्करस्रजौ। अश्विनौ। अश्विनीकुमारौ पुष्करस्रजौ पद्ममालिनौ देवानां भिषजौ। तत्तुल्यः[3] कुमारः पुष्करस्रक् तम्। अश्विसाम्यकथनेन रोगहीनं सुन्दरं च पुत्रमाधत्तेति सूचितम् ॥ ३३ ॥

आधत्त पितरो गर्भङ्कुमारम्पुष्करस्रजम्। यथेह पुरुषोऽसत् ॥ ३३ ॥

ऊर्जं वहन्तीरमृतङ्घृतम्पयः कीलालम्परिस्रुतम्। स्वधा स्थ तर्पयत मे पितॄन् ॥ ३४ ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां द्वितीयोऽध्यायः ॥ २ ॥

का० ऊर्जमित्यापो निषिञ्चतीति[4]। अब्देवत्या विराट्। हे आपः यूयं स्वधा स्थ पित्रन्नहविःस्वरूपा भवथ। अतो मे पितॄंस्तर्पयत। कथम्भूता आपः। परिस्रुतं वहन्तीः। पुष्पेभ्यो निःसृतं सारं वहन्त्यः। तच्च सारं त्रिविधम् ऊर्जशब्देन घृतशब्देन पयःशब्देन चाभिधेयम्। तत्रोर्जशब्दोऽन्नगतं स्वादुत्वमभिधत्ते। घृतपयसी प्रसिद्धे। तच्च त्रिविधमपि कीदृशममृतं सर्वरोगविनाशकं मृत्युनाशकं च[5]। नास्ति मृतं यस्मात्तत्। पुनः कीदृशं कीलालम् कील बन्धने। कीलनं कीलो बन्धः। तमलति वारयति कीलालम्। अल वारणपर्याप्त्योरिति धातुः सर्वबन्धनिवर्तकम्। ईदृशस्य त्रिविधस्य सारस्य वहनादपां पितृतर्पकत्वमुपपन्नम् ॥ ३४ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे। दर्शप्राचादिपित्रन्तो द्वितीयोऽध्यायईरितः ॥ २ ॥

१——४,१,२२। २——गायत्रीत्यादिपाठो मु० पुस्तके नास्ति। ३——यत्तुल्यः मु०। ४——४,१,१९। ५——मृत्यु इत्यादि स० पुस्तके नास्ति।

यथाभागमावृषायिषत स्वं भागमनतिक्रम्य वृषवत् स्वीचक्रुः । लुङि रूपम् । यथाभागमाशिषुरित्येवैतदाहेति[1] श्रुतिः । भागं स्वं जग्मुरित्यर्थः ॥ ३१ ॥

का० नमो व इत्यञ्जलिं करोतीति[2] । षट्कृत्वो नमस्करोति । षड्वा ऋतवः पितर इति श्रुतेः रसादिशब्देन वसन्तादिषडृतव उच्यन्ते । ते च पितॄणां स्वरूपभूताः अतस्तेभ्यो नमस्करोति हे पितरो वो युष्माकं सम्बन्धिने रसाय रसभूताय वसन्ताय नमः । यतो मध्वादयो रसा वसन्ते जायन्तेऽतो रसशब्देन वसन्तः । युष्मद्रूपाय वसन्ताय नम इत्यर्थः । एवमग्रेतना मन्त्रा व्याख्येयाः । शोषाय । शुष्य-

नमो॑ वः पितरो॒ रसा॑य॒ नमो॑ वः पितरः॒ शोषा॑य॒ नमो॑ वः पितरो जी॒वाय॒ नमो॑ वः पितरः स्व॒धायै॒ नमो॑ वः पितरो घो॒राय॑ । नमो॑ वः पितरो म॒न्यवे॒ नमो॑ वः पितरः॒ पितरो॒ नमो॑ वो गृ॒हान्नः॑ पितरो दत्त स॒तो वः॑ पितरो देष्मै॒तद्वः॑ पितरो॒ वास॒ आ ध॑त्त ॥ ३२ ॥

न्त्योषधयो यत्रेति[3] शोषो ग्रीष्मः । जीवाय । जीवनहेतुभूताय जलाय वर्षर्तवे । स्वधायै । शारदे । स्वधा वै शरत् स्वधा वै पितॄणामन्नमिति श्रुतेः । शरदि हि प्रायशोऽन्नानि भवन्ति । घोराय । विषमाय हेमन्ताय । हेमन्तः शीतप्रचुरत्वेन दुःखदत्वात् घोरः । मन्यवे । मन्युः क्रोधः तद्रूपाय शिशिराय । शिशिरस्तु इवौषधीर्दहति । हे पितरः एवंविधऋतुरूपेभ्यो वो युष्मभ्यं नमः हे पितरो वो नम इत्यभ्यास आदरातिशयार्थः । हे पितरो नोऽस्मभ्यं गृहान् दत्त । भार्यापुत्रपौत्रादयो गृहाः । हे पितरो वो युष्मभ्यं सतः विद्यमानात् देष्म ददामः । सतो धनाद्युष्मभ्यमस्माभिर्दातव्यम् । ददतामस्माकं कदाचिद्व्ययो मास्त्वित्यर्थः ॥ का० एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णां दशां वा वयस्युत्तरे यजमानलोमानि वेति[4] । हे पितरः वो युष्मभ्यमेतद्वासः सूत्रमेव परिधानमस्तु ॥ ३२ ॥

१——२,४,२,२२ । २——४,१,१५ । ३——शुष्यन्त्योषधयोयत्रेति स० पु० पाठः । ४——४,२,१६—१८ ।

का० उल्मुकं परस्तात्करोति ये रूपाणीति[1]। इयं त्रिष्टुप् कव्यवाहनाग्निदेवत्या। स्वधया पैतृकान्नेन निमित्तेन पितॄणामन्नमस्माभिर्भक्षणीयमिति हेतोः स्वीयरूपाणि प्रतिमुञ्चमानाः पितृसमानरूपाणि स्वीकुर्वन्तः सन्तो ये असुरा देवविरोधिनश्चरन्ति पितृयज्ञस्थाने प्रसरन्ति। तथा ये असुराः परापुरः निपुरश्च भरन्ति। पराक्रान्ताः पुरः परापुरः स्थूलदेहान्। निकृष्टाः पुरः निपुरः सूक्ष्मदेहान् ये धारयन्ति। स्वमसुरत्वं प्रच्छादयितुं ये स्थूलसूक्ष्मशरीराणि बिभ्रति। अग्निरुल्मुकरूपः। अस्माल्लोकात्पितृयज्ञस्थानात्तानसुरान् प्रणुदाति प्रणुदतु प्रेरयतु प्रकर्षेणापसारयत्वित्यर्थः ॥ ३० ॥

**येरूपाणिप्रतिमुञ्चमानाअसुराःसन्तःस्वधयाचरन्ति। परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात्॥३०॥**

**अत्रपितरोमादयध्वंयथाभागमावृषायध्वम्। अमीमदन्तपितरोयथाभागमावृषायिषत ॥ ३१ ॥**

का० अत्र पितर इत्युक्त्वोदङ्ङास्त आ तमनादावृत्यामीमदन्तेति जपतीति[2]। आ तमनात् श्वासनिरोधेन ग्लानिपर्यन्तमुदङ्मुख आस्ते इति सूत्रार्थः। हे पितरो यूयमत्रास्मिन् बर्हिषि मादयध्वं हृष्टा भवत। ततो हविषि यथाभागं स्वं स्वं भागमनतिक्रम्य आवृषायध्वं समन्ताद् वृषवदाचरत। यथा वृषः स्वाभीष्टं घासं प्राप्य तृप्तिपर्यन्तं स्वीकरोति तद्वत् स्वीकुरुत। आङ्पूर्वाद् वृषशब्दात्कर्तुः क्यङ् सलोपश्चेति क्यङ् ततो लोट्। पितरः अमीमदन्त। यान् पितॄन् प्रति मादयध्वमित्युक्तं ते पितरोऽमीमदन्त हृष्टाः

१—४,१,९। २—४,१,१२-१४।

तदनुसारेण व्रतं विसृजेत् । हे अग्ने हे व्रतपते कर्मपालक अहं व्रतमचारिषं कर्मानुष्ठितवानस्मि तदशकं शकितवान् । त्वत्प्रसादात्तत्कर्माशकोऽस्वम् । त्वया च तन्मे मदीयं कर्म अराधि साधितम् । द्वितीयो मन्त्रः । हे अग्ने इदं कर्म समाप्य योऽहं कर्मणः पुरा अस्मि स एव मनुष्योऽस्मि ॥ २८ ॥

॥ इति दर्शपूर्णमासेष्टिमन्त्राः समाप्ताः ॥ ॥ अतः परं पिण्डपितृयज्ञमन्त्रास्तेषां प्रजापतिर्ऋषिः ॥

अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा । अपहता असुरा रक्षांसि वेदिषदः ॥ २९ ॥

का० सारतण्डुलमपूर्णꣳ श्रपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च । कवयः क्रान्तदर्शिनः पितरस्तेषां सम्बन्धि कव्यं हविः । तद्वोढुमधिकारो यस्यास्ति स कव्यवाहनः । तस्मै अग्नये स्वाहा हविर्दत्तम् । पितृमान् पितृसंयुक्तः तस्मै सोमनामकाय देवाय स्वाहा हविर्दत्तम् । स्वाहाकारेण वषट्कारेण वा देवेभ्यो प्रदानस्य तद्दैवाविमौ मन्त्रौ ॥ का० दक्षिणेनोल्लिखत्यपहता इतीति[2] । वेद्यां सीदन्ति वेदिषदः तादृशा असुराः अपहता वेदिसकाशादपगताः । तथा रक्षांसि वेद्या अपहतानि । असुरत्वं रक्षस्त्वं चेति जातिविशेषौ देवविरोधिनौ ॥ २९ ॥

१——४,१,१७ । २——४,१,१८ ।

का० गार्हपत्यमुपतिष्ठतेऽग्ने गृहपतऽइति[1]। हे गृहपतेऽस्मदीयगृहस्य पालक हे अग्ने त्वया गृहपतिना गृहपालकेन कृत्वा त्वत्प्रसादेनेत्यर्थः। अहं सुगृहपतिः शोभनो गृहपतिः भूयासं भवेयम्। तथा हे अग्ने त्वमपि मया गृहपतिना मदीयसेवये त्यर्थः। सुगृहपतिः शोभनो गृहपालको भूयाः भव। अग्ने पदस्यावृत्तिरादरार्था। एवं सति नौ आवयोर्गार्हपत्यानि गृहपतिभ्यां स्त्रीपुरुषाभ्यां निष्पाद्यानि कर्माणि शतं हिमाः वर्षाणि शतवर्षपर्यन्तमस्थूरीव सन्तु। निरन्तरमव्यवहितानि प्रवर्त्तन्ताम्। एकपार्श्वे बलीवर्दयुक्तं शकटं स्थूरि न स्थूरि अस्थूरिं। लुप्तोपमानम् बलीवर्दयुक्तं शकटं यथा निरन्तरं अव्यवहितं प्रसरति

अग्नेगृहपतेसुगृहपतिस्त्वयाग्ने गृहपतिनाभूयासꣳसुगृहपतिस्त्वम्मयाग्ने गृहपतिनाभूयाः।

अस्थूरिणौगार्हपत्यानिसन्तुशतꣳहिमाः सूर्य्यस्यावृतमन्वावर्ते॥ २७॥

अग्ने व्रतपतेव्रतमचारिषन्तदशकन्तन्मे राधीदमहंयएवास्मिसोस्मि॥ २८॥

तथास्माकं गार्हपत्यानि सन्तु। गृहपतिना संयुक्तेत्या इति आप्रत्ययः॥ का० सूर्य्यस्येत्यावर्तते प्रदक्षिणमिति[2]। व्याख्यातम्॥ २७॥

का० इतं विसृजते येनोपेयादिति[3]। व्रतग्रहणे मन्त्रद्वयमुक्तं तयं मध्ये येन व्रतादानं कृतं प्रथमेन द्वितीयेन वा। अत्रापि

1——३,८,२१। 2——३,८,२३। 3——३,८,२५।

पुरुषः । जागतेन छन्दसा जगतीच्छन्दोरूपेण स्वकीयपादेन दिवि द्युलोके व्यक्रंस्त विशेषेण क्रमणं कृतवान् । तथा सति ततो
द्युलोकात् निर्भक्तो भागरहितः कृत्वा निःसारितः । कः । योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । योऽस्मान् दृष्ट्वा न प्रीयते[1] यं च दृष्ट्वा
वयं न प्रीयामहे स द्विविधोऽपि शत्रुर्दिवो निःसारितः । एवमुत्तरावपि विष्णुक्रममन्त्रौ व्याख्येयौ ॥ का० अस्मादन्नादिति भाग-
मवेक्षत इति[2] । योऽयम्भागोऽवेक्ष्यते अस्मादन्नाद्यजमानभागान्निर्भक्त इति वाक्यशेषोऽनुवर्तनीयः ॥ का० अस्यै प्रतिष्ठाया इति
भूमिमिति[3] । अवेक्षत इति चतुर्षु मन्त्रविनियोगेष्वनुवर्तते । अस्यै अस्याः पुरतो दृश्यमानायाः प्रतिष्ठाहेतोर्यज्ञियभूमेः निर्भक्त

**क्रौयोस्मान्द्वेष्टियञ्च्वयन्द्विष्मोस्मादन्नादस्यैप्रतिष्ठाया अगन्मस्वः सञ्ज्योतिषाभूम ॥ २५ ॥**

**स्वयम्भूरसिश्रेष्ठोरश्मिर्वर्चोदाअसिवर्चोमेदेहि । सूर्यस्यावृतमन्वावर्त्ते ॥ २६ ॥**

इत्यादि पूर्ववत् ॥ का० अगन्म स्वरिति प्रागिति[4] । पूर्वस्यां दिशि स्थितं स्वः स्वर्गं सूर्यं वा वयमगन्म प्राप्ताः । यज्ञानुष्ठानेन ॥
का० सं ज्योतिषेत्याहवनीयमिति[5] । ज्योतिषाहवनीयलक्षणेन वयं समभूम सङ्गता अभूम । २५ ॥
का० स्वयम्भूरिति सूर्यमिति[6] । हे सूर्य त्वं स्वयम्भूरकृतकः स्वयंसिद्धोऽसि । श्रेष्ठो प्रशस्ततमो रश्मिः मण्डलशरीराभिमानी
हिरण्यगर्भाख्योऽसि । सूर्यस्य सप्त रश्मयः सन्ति । चतुर्दिक्षु चत्वारः । एक उपर्येकोऽधस्तात् सप्तमो मण्डलाभिमानी हिरण्य-
गर्भः पुरुषः स श्रेष्ठः स त्वमसि । यतस्त्वं वर्चोदा असि तेजसो दातासि अतो मे वर्चः ब्रह्मवर्चसं देहि ॥ का० सूर्यस्येत्यावर्त्तते
प्रदक्षिणमिति[7] । आवर्त्तनमावृत् । सूर्यस्य सम्बन्धिनीमावृतमावर्त्तनमनुसृत्याहमपि आवर्त्ते प्रादक्षिण्येनावर्त्तनं करोमि ॥ २६ ॥

१—नाद्रीयते क० । २—३,८,१३ । ३—३,८,१४ । ४—३,८,१५ । ५—३,८,१६ । ६—३,८,१७ । ७—३,८,१९ ।

त्वष्टृदेवत्या त्रिष्टुप्। इतः परं याजमानम्॥ का॰ पूर्णपात्रं निनयति परीत्य सव्रतं यजमानोऽञ्जलिना प्रतिगृह्णाति सं वर्चसेति मुखं विमृष्ट इति[1]। समित्युपसर्गोऽगन्महीत्यनेन सम्बद्धः प्रत्येकम्। वर्चसा ब्रह्मवर्चसेन वयं समगन्महि सङ्गता भवामः। पयसा क्षीरादिरसेन समगन्महि। तनूभिरनुष्ठानक्षमैः शरीरावयवैः यद्वा तनूभिर्भार्यापुत्रादिभिः समगन्महि। शिवेन शान्तेन कर्मश्रद्धायुक्तेन[2] मनसा समगन्महि। यज्ञमुपगच्छतो नरस्य वर्चसाद्यपैति तदनेन पुनराप्याययति। किं च सुदत्रः शोभनदानः त्वष्टा रायो धनानि विदधातु करोतु। तन्वः शरीरस्य मदीयस्य यत् विलिष्टं विशेषेण न्यूनमङ्गं तदनुमार्ष्टु। न्यूनत्वपरिहारे-

संवर्चसापयसासन्तनूभिरगन्महिमनसासꣳशिवेन। त्वष्टासुदत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम्॥ २४॥

दिविविष्णुर्व्यक्रꣳस्तज्जागतेनच्छन्दसाततोनिर्भक्तोयोऽस्म द्वेष्टियञ्चवयन्द्विष्मोऽन्तरिक्षेविष्णुर्व्यक्रꣳस्तत्त्रै

ष्टुभेनच्छन्दसाततोनिर्भक्तोयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः पृथिव्यांविष्णुर्व्यक्रꣳस्तगायत्रेणच्छन्दसाततोनिर्भ

णानुकूलं कृत्वा शोधयतु। धनस्य शरीरस्य पुष्टिं करोत्वित्यर्थः। सुष्ठु ददातीति सुदत्रः। सुपूर्वाद्ददातेः ष्ट्रन्। सार्वधातुभ्य इति ष्ट्रन्। बाहुलकत्वाद्ध्रस्वः॥ २४॥

का॰ विष्णुक्रमान् क्रमते दिवि विष्णुरिति प्रतिमन्त्रमिति[3]। विष्णुपादबुद्ध्या स्वपादस्य भूमौ प्रक्षेपा विष्णुक्रमाः। विष्णुर्यज्ञ-

१——३,८,८-१०। २——कर्मश्रद्धायुक्तेन क॰ नास्ति। ३——३,८,११।

का० बर्हिः सम्बर्हिरितीति[१]। बर्हिर्जुहोति। इयमृक् त्रिष्टुप् विराड्रूपा बर्हिर्देवत्या। इन्द्रो हविषा हविःसंस्कारयुक्तेन घृतेन बर्हिः दर्भं समङ्क्ताम्। विश्वदेवेभिर्विश्वनामकैश्च गणदेवैः सहितः समङ्क्ताम्। समित्यस्योपसर्गस्याहत्तरा अङ्क्तामित्यस्य क्रियापदस्याप्यावृत्तिर्बोद्धव्या। वस्वादिसहितेनेन्द्रेण समङ्क्तां तद्बर्हिर्येहि दिव्यं नभो आदित्यलक्षणं ज्योतिः तद्गच्छतु आदित्यं प्राप्नोतु। स्वाहा इदं बर्हिर्देवोद्देशेन दत्तम्। नभ इत्यादित्यनामसु पठितं दिवि भवं दिव्यम्॥ २२॥

सम्बर्हिरङ्क्ताᳩहविषाघृतेनसमादित्यैर्वसुभिःसमरुद्भिः। समिन्द्रोविश्वदेवेभि

रङ्क्तान्दिव्यन्नभोगच्छतुयः स्वाहा॥ २२॥

कस्त्वाविमुञ्चतिसत्वाविमुञ्चतिकस्मैत्वाविमुञ्चतितस्मैत्वाविमुञ्चति। पोषायरक्षसाम्भागोऽसि॥ २३॥

का० वेद्यां प्रणीता निनयति परित्यं कस्त्वेति[२]। व्याख्यातो मन्त्रः प्रजापतिर्दैवतः तत्र यज्ञयोगे नियुक्तः अत्र तु यज्ञविमोके। पोषाय यजमानं पुत्रादिभिः पोषयितुं त्वां निनयामीति शेषः। यज्ञं प्रयुज्याविमोके यजमानस्याप्रतिष्ठापत्तेर्विमोकः कार्यः। यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवतीति श्रुत्यन्तरवचनात्॥ का० पुरोडाशकपालेन कणानवास्यत्यधः[४] कृष्णाजिनᳩ रक्षसामितीति[५]। हे कणसमूह त्वं रक्षसां भागोऽसि तेषां नीचजातित्वान्निकृष्टकणरूपो भागो युक्तः॥ २३॥

१——३,८,५। २——हविः क०। ३——३,८,६। ४——अपीह्यत्यधः क०। ५——३,८,७।

का० यत्नो वेद प्रमुच्चति वेदोऽसीति[१]। हे कुशमुष्टिनिर्मित पदार्थ त्वं वेदोऽसि। ऋगाद्यात्मकोऽसि। यद्वा वेत्तीति वेदः ज्ञातासि। हे देव द्योतनात्मक वेद हे वेद येन कारणेन त्वं देवेभ्यः। षष्ठ्यर्थे चतुर्थी। देवानां वेदोऽभवः ज्ञापकोऽभूः तेन कारणेन मह्यमम वेदो भूयाः ज्ञापको भव॥ का० समिष्टयजुर्जुहोति देवा गातुविद इतीति[२]। इयं विराट्छन्दस्का वातदेवत्या मनसस्पतिदृष्टा ऋक्। अस्याः पूर्वार्धेन देवता विसृजति। गै शब्दे। गीयते नानाविधैर्वैदिकशब्दैः प्रतिपाद्यते इति गातुर्यज्ञः तं विदन्ति जानन्तीति गातुविदः। हे गातुविदः यज्ञवेत्तारो देवाः गातुं वित्त्वा विदित्वा। विद ज्ञाने। अस्मदीयो यज्ञः प्रवृत्त

वेदोसियेनत्वन्देववेददेवेभ्योवेदोभवस्तेनमह्यंवेदोभूयाः। देवागातुविदोगातुंवित्वागातुमित।

मनसस्पतइमन्देवयज्ञ&ध्स्वाहावातेधाः॥ २१॥

इति ज्ञात्वा। गातुमित यज्ञं प्रत्यागच्छत। यद्वा गातुर्गन्तव्यो मार्गः तं गच्छत। अस्मदीययज्ञेन तुष्टाः सन्तः स्वमार्गं गच्छत। एवं देवान्विसृज्य चन्द्रं प्रत्याह। हे मनसस्पते। मनोऽधिपश्चन्द्रः। यद्वा देवान्प्रष्टुं मनसः प्रवर्तकः परमेश्वरः। तं प्रत्युच्यते। हे मनसस्पते परमेश्वर हे देव इममनुष्ठितं यज्ञं स्वाहा त्वदस्ते ददामि। त्वं च तं यज्ञं वाते वायुरूपे देवे धाः स्थापय। वाते हि यज्ञोऽवतिष्ठते। तदुक्तं श्रुत्या। वायुरेवाग्निस्तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येतीति॥ २१॥

१—३,८,१। २—३,८,४।

का० सुकस्रुव .प्रगृह्यात्यग्ने ऽदब्धायविति[१] । दभ्नोतिः हिंसाकर्मा[२] । आयुरिति मनुष्यनाम[३] । अदब्धोऽनुपहिंसित आयुर्मनुष्यो यजमानो यस्य सोऽदब्धायुः । अश भोजने । अश्नाति भुङ्क्ते इत्यशी । यद्वा अशू व्याप्तौ · अश्नुते व्याप्नोतीत्यशी ।· अतिशयेनाशी अशितमः ।· दीर्घश्छान्दसः । हे अदब्धायो अहिंसितयजमान हे अशितम भोक्तृतम यद्वा व्यापकतम । हे अग्ने गार्हपत्य मा मां दिद्योः वज्रात्पाहि । अव प्रयुक्ताद्वज्रसमादायुधान्मां पाहि । दिद्युरिति वज्रनाम[४] । प्रसित्यै प्रसितिर्बन्धनहेतुभूताज्जालान्मां पाहि । प्रसितिः प्रसयनात्तन्तुर्वा जालं वेति यास्कः[५] । दुष्टा इष्टिर्दुरिष्टिः अशास्त्रीयो यागः । तस्मान्मां पाहि । दुरद्मनी । अदनमद्मनी ।

अग्ने॑ दब्धायोऽशीतम॒ पा॒हि मा॑ दि॒द्योः पा॒हि प्रसि॑त्यै पा॒हि दुरि॑ष्ट्यै पा॒हि दु॑रद्म॒न्या अ॑वि॒षन्नः॑ पि॒तुङ्कृ॑णु सु॒षदा॒ योनौ॒

स्वाहा॒ वाड॒ग्नये॑ संवे॒शप॑तये॒ स्वाहा॒ सर॑स्वत्यै य॒शोभ॒गिन्यै॒ स्वाहा॑ ॥ २० ॥

दुष्टा अद्मनी दुरद्मनी दुर्भोजनं ततो माम्पाहि । चतुर्थ्यः पञ्चम्यर्थे । भीत्रार्थानामिति पञ्चमी । किं च नोऽस्माकं पितुमन्नमविषं कृणु हविर्विषरहितं कुरु । योनिरिति गृहनाम । सुष्ठु सद्यते स्थीयते यस्यां सा सुषदा । तस्यां सुषदा विभक्त्याकारः ।· सम्यगवस्थानयोग्ये गृहे मां स्थापयेति शेषः । यद्वा गृहे स्थितानां नोऽस्माकं पितुमविषं कुरु । स्वाहा वाडिति पदे व्याख्याते । का० दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति चेति[६] । स्त्रीपुंसयोरभिलाषपूर्वकमेकत्र शयनं संवेशः । तस्य पतिर्योऽग्निस्तस्मै स्वाहा हविर्दत्तम् । जीवतः पुरुषस्य प्रशंसा यशः तस्य यशसो भगिनी वाग्रूपा सरस्वती तस्यै हविर्दत्तम् ॥२०॥

१——३,७,१७ । २——निघ० २,१९,१ । ३——निघ० २,३,१७ । ४——निघ० २,२०,५ (दिद्युत्) । ५——निरु० ६,१२ । ६——३,७,१८ ।

देवानां मध्ये कथयन्तो यूयमस्मिन् बर्हिषि यज्ञेऽस्मिन्नासद्योपविश्य मादयध्वं मोदयध्वं[1] तृप्यध्वं वा। स्वाहेति वाडिति च शब्दौ हविर्दानार्थौ। सर्वथा दत्तमित्यादरं दर्शयितुं शब्दद्वयप्रयोगः। यद्यपि स्वाहाकारेण वा वषट्कारेण वेति श्रुतेर्वषट्कारो दानार्थः। तथापि देवानां परोक्षप्रियत्वात्प्रत्यक्षत्वपरिहाराय वाडिति शब्दः प्रयुक्तः॥ १८॥

का० घृताची स्थ इति धुरि निदधातीति[2]। जुहूपभृतौ शकटधुरि निदध्यात्। हे जुहूपभृतौ युवां घृताची स्थः। घृतमञ्चतः प्राप्नुतः इति घृताच्यौ। पूर्वसवर्णदीर्घः। तथाविधे युवां धुर्यावनड्वाहौ पातं रक्षतं धुरं वहतस्तौ धुर्यौ। किं च युवां सुम्ने सुखरूपे स्थः भवथः तस्मात्सुम्ने सुखे मा मां धत्तं स्थापयतम्॥ का० यज्ञ नमश्च तऽइति वेदिमालभत इति[3]। अस्य मन्त्रस्य शूर्प-

घृताचीस्थो धुर्य्यौपातꣳसुम्नेस्थःसुम्ने माधत्तम्। यज्ञनमश्चतउपचयज्ञस्यशिवेसन्तिष्ठस्वस्विष्टेमेसन्तिष्ठस्व॥१९॥

यवमान् कृषिकृल्लालवान् धानान्तर्वानिति पञ्च ऋषयः। यज्ञो देवता। हे यज्ञ ते तुभ्यं नमः अस्तु उप उपचयो वृद्धिश्च तेऽस्तु। चकारावन्योन्यसमुच्चयार्थौ। नमउपशब्दाभ्यां यज्ञस्य यदतिरिक्तं यच्च न्यूनं जातं तत्पूर्णं जायते। तथा च श्रुतिः। स यदतिरेचयति तन्नमस्कारेण शमयति अथ यदूनं करोत्युप चेति तेन तदन्यूनं भवतीति। किं च। यज्ञस्य शिवे संतिष्ठस्व अन्यूनातिरिक्तं यज्ञं कुर्वित्यर्थः। यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिवं तेन तदुभयं शमयतीति श्रुतेः। मे मम स्विष्टे संतिष्ठस्व। साधु इष्टं स्विष्टम्। शोभने यागे तिष्ठसि प्राप्तिं कुर्वित्यर्थः॥ १९॥

१——मोदयध्वमिति मु० नास्ति। २——२,६,१९। ३——२,६,२७।

प्ररिहितवानसि स्थापितवानसि। तं तव जोषं प्रियं तमेतं परिधिमनु भरामि वह्नौ प्रक्षिपामि। अनुर्भिन्नक्रमः। हरतेर्हस्य भः। एष परिधिः त्वत् त्वत्तः सकाशात् त्वं। इत् एवार्थे नैव अपचेतयातै। मा अपचेतयतु। त्वत्तोऽपगन्तुं मा जानात्वित्यर्थः। त्वय्येव तिष्ठतु। चिती संज्ञाने णिजन्तात् लेट्। तस्यात्मनेपदे प्रथमैकवचनं तान्तम्। टित आत्मनेपदानामिति तस्यैकारः। वैतोऽन्यत्रेति लेडैकारस्य पाक्षिक ऐ। लेटोऽडाटावित्याडागमः। गुणायादेशौ। अपपूर्वः अपचेतयातै। अपचेतयतु। एष परिधिस्त्वत्तोऽपगतचित्तो माऽस्त्वित्यर्थः॥ का० इतरौ च युगपदग्नेः प्रियमितीति[1]। दक्षिणोत्तरौ परिधी अग्नेः प्रियं पाथः युवामपीतमपिगच्छतम्। पाथ इत्यन्ननाम[2] आहवनीयस्याभिप्रेतमन्नमपिगच्छतम्। अग्नेरन्नत्वं भवद्भ्यां प्राप्यतामित्यर्थः॥ १७॥

सꣳस्रवभागास्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः। इमां वाचमभि विश्वे गृणन्त

आसद्यास्मिन्बर्हिषि मादयध्वꣳ स्वाहा वाट्॥ १८॥

का० सꣳस्रवभागा इति सꣳस्रवान् जुहोतीति[3]। वैश्वदेवी त्रिष्टुब्यजुरन्ता। स्वाहा वाडिति यजुः। सोमशुष्म ऋषिः। हे विश्वे देवा यूयं संस्रवभागाः स्थ। विलीनमाज्यं संस्रवः। स एव भागो येषां ते संस्रवभागाः। तथाविधाः भवथ। तथा इषा संस्रवलक्षणेनान्नेन बृहन्तो महान्तः स्थ। किं च ये प्रस्तरेष्ठाः प्रस्तरे तिष्ठन्तीति प्रस्तरेष्ठाः प्रस्तरस्थायिनः। ये च परिधेयाः परिधिभवाः सन्ति। ते विश्वे देवा इमां मदीयां वाचमभि गृणन्तः सर्वत्र वर्णयन्तः। अयं यजमानः सम्यक् यजतीत्येवं सर्वेषां

१——३,६,१७। २——नि० नै० ६,७। ३——३,६,१८।

श्विवर्णा गच्छ प्राप्नुहि। वायुवाहनवद्वेगेन गच्छेत्यर्थः। अन्तरिक्षं गच्छेत्यर्थः। वशा पृश्निर्भूत्वा। वशा स्वाधीना पृश्निरल्पतनुर्गौर्भूत्वा दिवं गच्छ। कामधेनुवत्तृप्तिकरी भूत्वा स्वर्गं गच्छेत्यर्थः। ततः स्वर्गप्राप्तेरनन्तरं नोऽस्मदर्थं वृष्टिमावह भूलोके वृष्टिमानय। यद्वा। इयं वै वशा पृश्निर्यदिदमस्यामूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरिति श्रुतेर्वशापृश्निशब्देन भूमिरुच्यते[1]। वशा पृश्निर्भूत्वा पृथिवी भूत्वा दिवं गच्छ पृथिवीसम्बन्धिभागानादाय द्युलोकं तर्पयेत्यर्थः। हे प्रस्तर त्वमन्तरिक्षं गत्वा तत्रत्यास्मरुतः सवाहनान् सन्तर्प्य स्वर्गं गत्वा देवांश्च सन्तर्प्य पृथिव्यां वृष्टिं कुर्वित्याहुतिपरिणामः सूचित इति भावः॥

यम्परिधिम्पर्यधत्थाअग्ने देवपणिभिर्गुह्यमानः। तन्त्एतमनुजोषम्भराम्येषनेत्वदपचेतयाताअग्नेःप्रियम्पाथोपीतम्॥ १७॥

का० चक्षुष्पा इत्यात्मानमालभत इति[2]। हे अग्ने त्वं यतश्चक्षुष्पा असि। चक्षुः पातीति चक्षुष्पाः। ज्वालयान्धकारं निवर्त्य चक्षुःपालकोऽसि। अतो मे मम चक्षुः पाहि पालय प्रस्तरप्रहरणप्रसक्तं चक्षुष उपद्रवं परिहरेत्यर्थः॥ १६॥

का० परिधीननुप्रहरति यं परिधिमिति प्रथममिति[3]॥ एकादशिनस्त्रयोऽष्टकस्य विराड्रूपः। प्रथमोऽष्टकः। यं परिधिन्। त्रिष्टुब्विराड्रूपा आग्नेयी यजुरन्ता। अग्नेः प्रियमिति यजुः। देवलदृष्टा॥ हे अग्ने देव आहवनीय पणिभिरसुरैः गुह्यमानः। गुह संवरणे संव्रियमाणः संरुध्यमानः सन् त्वं यं परिधिं पश्चिमदिशि पर्यधत्थाः। असुरोपद्रवनिवारणाय

१——१,८,३,१५। २——२,६,१५। ३——३,६,१७।

का० जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रतिमन्त्रमिति[1]। हे मध्यमपरिधे वसुभ्यः वसुदेवताप्रीत्यर्थं त्वा त्वामनज्मीति शेषः। एवं दक्षिणोत्तरपरिधिमन्त्रौ व्याख्येयौ। परिधित्रयाञ्जनेन सवनत्रयदेवताः प्रीयन्त इति भावः॥ का० सञ्ज्ञानथामिति प्रस्तरादानमिति[2]। हे द्यावापृथिवी द्युलोकभूलोकदेव्यौ युवां सञ्ज्ञानाथां गृह्यमाणं प्रस्तरं सम्यगवगच्छतम्। किं च हे प्रस्तर मित्रावरुणौ प्राणापानवायू वृष्ट्या जलवर्षणेन त्वा त्वामवतां रक्षताम्। वायुर्वै वर्षस्येष्टे[3] इत्युक्तत्वाद्वर्षाधीशो वायुः स चाध्यात्मगतः प्राणोदानरूपो मित्रावरुणशब्दाभ्यामुच्यते। स च प्रस्तररूपं यजमानं वृष्ट्यावतु। यजमानो वै प्रस्तर इति श्रुतेः[4]।

वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वा सञ्ज्ञानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावताम्। व्यन्तु वयोक्तꣳ रिहाणा मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह। चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि॥ १६॥

का० अनक्त्येनं व्यन्तु वय इत्यग्रं जुह्वामुपभृति मध्यं मूलमितरस्यामिति[5]। इतरस्यां ध्रुवायाम्॥ वयः पक्षिणः व्यन्तु। वी गतिव्याप्तिप्रजननकान्त्यसनखादनेषु। पक्षिरूपापन्नानि गायत्र्यादीनि छन्दांसि गच्छन्तु। प्रस्तरमादायेति शेषः। किंभूताः वयः। अक्तं रिहाणाः। अक्तं घृतलिप्तं प्रस्तरं लिहानाः आस्वादयन्तः। रलयोरैक्यम्॥ का० मरुतामिति नीचैर्हृत्वा तृणमादायानुप्रहरतीति[6]। एकं तृणं प्रस्तरात्पृथक्कृत्य प्रस्तरं नीचैर्हृत्वाग्नौ प्रक्षिपेदिति सूत्रार्थः। मरुतामिति प्रस्तरदेवत्या बृहती कपिदृष्टा चतुर्थः पाद आग्नेयः। हे प्रस्तर त्वं मरुतां पृषतीर्गच्छ मरुन्नामकानां देवानां सम्बन्धिनीः पृषतीर्वाहनरूपा अश्वा-

१——३,५,२४। २——३,६,२। ३——१,८,३,१२। ४——१,८,१,४४। ५——३,६,४-७। ६——३,६,८।

का० जुह्वुपभृतौ व्यूहत्यग्नीषोमयोरितीति[1] । तत्र जुहूं प्राचीं प्रेरयति यजमानः । व्यूहनं परस्परविपरीतत्वेनापनोदनम् । अग्नीषोमयोर्द्वितीयपुरोडाशदेवतयोरुज्जितिमनु अविघ्नेन हविःस्वीकाररूपमुत्कृष्टं जयमनुसृत्याहमुज्जेषमुत्कृष्टं जयं प्राप्तवानस्मि । वाजस्यान्नस्य पुरोडाशादेः प्रसवेनाभ्यनुज्ञया मां प्रोहामि मां यजमानं जुहूरूपधारिणं प्रोत्साहयामि । यद्यप्यूहतिधातुर्वितर्कार्थस्तथाप्युपसर्गवशादुत्साहार्थः । अन्यत्पूर्ववत् ॥ उपभृतं प्रतीचीं प्रेरयति । यः शत्रुरसुरादिरस्मान्द्वेष्टि अस्मदीययज्ञविनाशाय द्वेषं

**अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । अग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मो वाजस्यैनम्प्रसवेनापोहामि । इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । इन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मो वाजस्यैनम्प्रसवेनापोहामि ॥ १५ ॥**

करोति । यं च वयं द्विष्मः । यमालस्यादिरूपमस्मदीयानुष्ठानविरोधिनं शत्रुं द्विष्मः विनाशायोद्योगं कुर्मः । तमुभयविधं शत्रुमग्नीषोमौ देवावपनुदतां निराकुरुताम् । किं च । अहमप्येनं द्विविधं शत्रुमुपभृद्रूपं वाजस्य प्रसवेन पुरोडाशदेवताया अभ्यनुज्ञयापोहामि निराकरोमि । उत्तरौ मन्त्रौ दर्शदेवताविषयौ समानार्थौ ॥ १५ ॥

१ —— ३,५,१७-१८ ।

ब्रह्मत्वात्। तत इमं यज्ञमरिष्टं हिंसारहितं कृत्वा सन्दधातु। इडाभक्षणेन हि मध्ये यज्ञो विच्छिन्न इत्येवमुच्यते। किं च विश्वे देवासः सर्वे देवा इह यज्ञकर्मणि मादयन्ताम्। मद तृप्तौ चुरादिः। तृप्यन्ताम्। एवं प्रार्थितः सविता देवः ओम्प्रतिष्ठेत्यनुज्ञां प्रयच्छतु। ओमित्यङ्गीकारार्थः। तथास्तु। प्रतिष्ठ प्रयाणं कुरु। समिदाधानकाले यजमानस्याभिप्रेतं प्रयाणमवगम्य सविता देवोऽङ्गीकृत्य प्रयाणे प्रेरयतीत्यर्थः॥ १३॥

का०. एषा त इति होतानुमन्त्रयतऽइति[1]। ब्रह्मत्वं समाप्तम्। अतः प्राकृतमार्षम्। इयमनुष्टुबग्निदेवत्या। हे अग्ने

एषातेऽअग्ने समित्तयावर्द्धस्वचाचप्यायस्व। वर्द्धिषीमहिचवयमाचप्यासिषीमहि।

अग्नेवाजजिद्वाजन्त्वासस्वाꣳसंवाजजितꣳसम्मार्ज्मि॥ १४॥

एषा ते तव समित् समिन्धनहेतुः काष्ठविशेषः। तया समिधा त्वं वर्धस्व वृद्धिं गच्छ। आ प्यायस्व च। अस्मानपि सर्वतो वृद्धिं प्रापय। तथा च सति त्वत्प्रसादाद्वयं वर्द्धिषीमहि वृद्धिं प्राप्नुयाम। प्यासिषीमहि च अस्मदीयपुत्रपश्वादीन् सर्वतो वृद्धान् करवाम॥ का०. सम्मार्ष्टि पूर्ववदपरिक्रामꣳ सकृत्सकृत्सस्वाꣳसमितीति[2]। पूर्वमग्ने वाजजिदिति मन्त्रेण यथेध्मसन्नहनैरग्नेः सम्मार्गः कृतस्तथात्रापि सम्मार्ष्टि। तत्र परिक्रम्य त्रिस्त्रिः कृतः। अत्र तु परिक्रमणं विनैकैकवारमिति विशेष इति सूत्रार्थः। मन्त्रो व्याख्यातः। इयान्विशेषः। हे अग्ने त्वां सम्मार्ज्मि। किम्भूतं त्वां वाजं सस्वांसमन्नमुद्दिश्य गतवन्तमन्नं सम्पादितवन्तमित्यर्थः। अन्यत्पूर्ववत्॥ १४॥

1 — ३,५,२। 2 — ३,५,४।

का० एतं तऽइति समिदामन्त्रित: प्रसौतीति[1]। समिधमाधातुमनुज्ञाप्रदानाय बोधितो ब्रह्मा मन्त्रेणानुजानीयात्। एतं त इत्यादि: ओम्प्रतिष्ठेत्यन्तो मन्त्र:। हे देव दानादिगुणयुक्त हे सवित: प्रसवित:। एतं यज्ञमिदानीं क्रियमाणमिमं मखं ते तुभ्यं त्वदर्थं प्राहुर्यजमाना: कथयन्ति अनुज्ञापयन्तीत्यर्थ:। किं च त्वया प्रेरितो देवानां यज्ञे यो ब्रह्मा तस्मै ब्रह्मणे बृहस्पतये च प्राहु:। बृहस्पतिर्वै देवानां ब्रह्मा। तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति। किं च। तेन हेतुना त्वदीयत्वेन यज्ञमव रक्ष। तथा तेनैव हेतुना यज्ञपतिं यजमानं चाव रक्ष। तथा तेनैव हेतुना माम्ब्रह्माणमव[2] पालय ॥ १२ ॥

एतन्तेदेवसवितर्य्यज्ञम्प्राहुर्बृहस्पतयेब्रह्मणे। तेनयज्ञमवतेनयज्ञपतिन्तेनमामव ॥ १२ ॥

मनोजूतिर्ज्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु।

विश्वेदेवासइहमादयन्तामोꣳप्रतिष्ठ ॥ १३ ॥

किं च। मनो आज्यस्य जुषताम्। कर्मणि षष्ठी। मन: घृतं सेवताम्। हे सवितस्त्वदीयं चित्तं यज्ञसम्बन्धिन्याज्ये स्थापयेत्यर्थ:। किम्भूतं मन:। जूति:। जवतेर्गतिकर्मणो जूतिरिति क्तिन्प्रत्ययान्तो निपात:। स्त्रीत्वं छान्दसम्। अतीतानागतवर्तमानकालगतपदार्थेषु गमनशीलं हि मन: जवते शीघ्रं गच्छतीति जूति:। किं च बृहस्पतिरिमं यज्ञं तनोतु विस्तारयतु।

१ ——— १,२,२७।   २ ———सांब्रह्माणमध्वर्युमव क०।

प्राश्नात्युपहूता पृथिवीतीति[1] ॥ यदा होता द्यावापृथिव्योरुपह्वानं करोति तदोभयोः पुरोडाशयोरेकैकमंशं षड़वत्ते षड़वत्ते कृत्वाग्नीधे[2] ददाति स चोपहूतेति मन्त्रेण तत्प्राश्नातीति सूत्रार्थः ॥ उपहूता येयं पृथिवी दृश्यते सा जगतां माता निर्मात्री मयोपहूता अभ्यनुज्ञाता:सा च पृथिवी माता मातृत्वेनास्माभिर्भावितप्र सती मामुपह्वयतामनुजानातु हविःशेषभक्षणायाज्ञां ददातु । अहं चाग्नीध्रात् । अग्नीधः[2] इदं कर्माग्नीध्रं तस्माद्धेतोरग्निः सन् तं भागं प्राश्नामीति शेषः । स्वाहा सुहुतमस्तु जाठरेऽग्नौ ॥ १० ॥

उप॑हूतो॒ द्यौष्पि॒तोप॒ मां द्यौष्पि॒ता ह्व॑यताम॒ग्निराग्नी॑ध्रा॒त्स्वाहा॑ । दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्या॑म्

पूष्णो॒ हस्ता॑भ्या॒म्प्रति॑गृह्णा॒म्य॒ग्नेष्ट्वा॒स्येन॒ प्राश्ना॑मि ॥ ११ ॥

द्वितीयं प्राश्नाति । एवं द्यौः पिता जगत्पालक उपह्वयतामित्यादि समानार्थम् । देवस्य त्वा । इतः प्रभृति श्रीं प्रतिष्ठेत्यन्तं ब्रह्मत्वम् । तस्याङ्गिरसो बृहस्पतिर्ऋषिः ॥ का० देवस्य त्वेति प्रतिगृह्णातीति[4] ॥ ब्रह्मा देवस्य त्वेति प्राशित्रं गृह्णाति मन्त्रो व्याख्यातः । प्रतिगृह्णामि स्वीकरोमीति शेषः । का० अग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्निति[5] । हे प्राशित्र अग्नेः आस्येन वह्निदेवताया मुखेन त्वा त्वां प्राश्नामि भक्षयामि ॥ ११ ॥

१——३,४,१८-१९-२० । २——अकृत्वाग्नीध्रे क० । ३——अग्नीध्रस्य क० । ४——२,२,१६ । ५——२,२,१८ ।

कर्म तथा च श्रुतिः । उभयं वा एतदग्निर्देवानाᳫं होता दूतश्चेति[1] । ईड्यं त्वां द्यावापृथिवी अवतां पालयताम् । हे अग्ने त्वमपि द्यावापृथिवी लोकद्वयदैवते[2] अव पालय । इत्थमान्यन्यपालने सति इन्द्रआजेन हविषास्माभिर्दत्तेन देवेभ्योदेवार्थं स्विष्टकृत् भूत् । सुष्ठु करोतीति स्विष्टकृत् । तादृशोभवतु । अड्भावश्छान्दसः । यद्यस्माभिरिजाते तर्त्तादृष्टं सर्वं वैकल्यरहितं करोत्वित्यर्थः । स्वाहा सुहुतम् अस्तु इन्द्रं देवमुद्दिश्य इदमाजान्दत्तमित्यर्थः । स्वाहेति निपातोदेवोद्देशेन वर्त्तते । का० जुह्वा ध्रुवां समनक्ति सञ्ज्योतिषेति । गच्छतामित्यध्याहारः । ज्योतिषा ध्रुवास्थिताज्यरूपज्योतिषा सह ज्योतिर्जुह्वासिच्यमानरूपं[3] । ज्योतिः सङ्गच्छताम् ॥९॥

मयीदमिन्द्रइन्द्रियन्दधात्वस्मान्रायोमघवानःसचन्ताम् । अस्माकᳫंसन्त्वाशिषःसत्यानःसन्त्वाशिषः

उपहूतापृथिवीमातोपमाम्पृथिवीमाताह्वयतामग्निराग्नीध्रात्स्वाहा ॥ १० ॥

का० अशासने मयीदमिति यजमानो जपतीति[4] ॥ प्रधानयागानन्तरं पुरोडाशशेषप्राशनसमये होतरि आशिषं प्रयुञ्जाने सति यजमानो जपति । इन्द्रः परमेश्वर इदमिन्द्रियं मयि दधातु । इदं अस्मदपेक्षितं इन्द्रियं वीर्यं मयि यजमाने स्थापयतु । किं च रायो धनानि दैवमानुषभेदेन द्विविधानि मघवानः धनवन्तस्तास्मान्यजमानान्सचन्तां सेवन्ताम् । सच सेवने । किं च अस्माकं यजमानानामाशिषोऽभीष्टार्थस्याशंसनानि सन्तु विद्यन्ताम् । किं च नोऽस्माकमाशिषः पूर्वोक्ताः सत्याः अवितथाः सन्तु । मघमिति धननाम[5] तद्विद्यते येषां ते मघवानः । अस्त्यर्थे वन्प्रत्ययः एकैकमाहरति द्यावापृथिव्योरुपह्वानेऽग्नीधे[6] प्रड्वत्तम्

१——१,४,५,४ । २——दैवते मु० । ३——सिच्यमानमाज्यरूपं क० । ४——३,४,२१ । ५——२,१०,१ । ६——अग्नीध्रे क० ।

सम्यक् पोषणं करोमि धारणं वा। आशीर्लिङि उत्तमे रूपम् ॥ का० दक्षिणातिक्रामत्यङ्घ्रिणाविष्णविति[1]। हे विष्णो व्यापक यज्ञपुरुष अङ्घ्रिणा पादेन त्वा त्वाम् अहं मा अवक्रमिषम् अवक्रमणं मा कार्षं पादेनातिक्रमणदोषो मे माभूदित्यर्थः ॥ का० वसुमतीमित्यवस्थायेति[2]। हे अग्ने ते तव छायां तव समीपवर्तिनीं वसुमतीं भूमिम् अहमुपस्थेषम् उपतिष्ठेयं सेवेय। उप पूर्वस्तिष्ठतिः सेवार्थः। सएव सेवाप्रकारः कथ्यते हे वसुमति त्वं विष्णोर्यज्ञस्य स्थानमसि। अत्र स्थित्वा यागकर्त्तुं प्रक्यतइत्यर्थः। आहवनीयसमीपवर्त्तित्वात् अस्याभूमेर्यज्ञस्थानत्वम्। यद्वा अयमर्थः। हे अग्ने ते तव वसुमतीं धनवतीं धनप्राप्तिकरीं छाया माश्रयं उपस्थेषं सेवेय। छायाशब्दआश्रयवाचकः युष्मत्पादच्छायायां वसामीतिवत्। यतस्त्वं विष्णोर्यज्ञस्य स्थानमसि ॥ का० इतइन्द्र

अग्नेवेर्होत्रंवेर्दूत्यमवतान्त्वान्द्यावापृथिवीअवत्वन्द्यावापृथिवीस्विष्टकृद्देवेभ्यइन्द्रआज्येन

हविषाभूत्स्वाहासंज्योतिषाज्योतिः ॥ ६ ॥

इति जुहोतीति[3]। पूर्वमन्त्रे यज्ञसम्बन्धि यत्स्थानमुक्तन्तदेव देवानां जयहेतुत्वादितःशब्देन परामृश्यते। देवयजनव्यतिरिक्तभूमेरसुराधीनत्वेन तत्र देवानां पराजयेऽपि यज्ञप्रदेशः पराजयरहितः। तदेवोच्यते मन्त्रेण। इतइन्द्रः। इतोऽस्माद्देवयजनस्थानात् उद्युक्तः सन्निति शेषः। वीर्यमकृणोत् वीरस्य कर्म्म वीर्य्यं शत्रुवधरूपमकरोत्। अतएवाध्वरोयज्ञउर्ध्वमास्थात् उन्नतः स्थितः। इन्द्रेण वीर्ये कृते शत्रुकृतविघ्नाभावादध्वरस्योन्नत्यम् ॥ ८ ॥

तस्मात् हे अग्ने त्वं होत्रं वेः। होतुः कर्म्म विद्धिः। लङि अड्भावे रूपम् दूत्यं दूतकर्म्म च वेः विद्धि। होतृत्वं दूतत्वञ्चाग्नेः

१——३,१,१७। २——३,१,१९। ३——३,२,१।

का० इध्मसन्नहनैरनुपरिधिं सम्मार्ष्ट्यग्ने वाजजिदिति त्रिस्त्रिः परिक्रामम्मिति[1]। वाजमन्नं जयतीति वाजजित् तत्सम्बुद्धौ हे वाजजित् हे अग्ने त्वामहं सम्मार्ज्मि शोधयामि। किम्भूतं त्वाम्। वाजं सरिष्यन्तमन्नमुद्दिश्य गमिष्यन्तमन्नसम्पादनोपयुक्तम्। तथा वाजजितमन्नमुद्दिश्य जयोपेतमन्नप्रतिबन्धनिवारकमित्यर्थः॥ का० अपरमाहवनीयादञ्जलिं करोति नमो देवेभ्य इतीति[2]। ये देवा अनुष्ठानमनुगृह्णन्ति तेभ्यो नमस्करोति। का० स्वधा पितृभ्य इति दक्षिणत उत्तानमिति[3]। प्राङ्मुखेनादौ देवनत्यर्थमञ्जलिः कृतः इदानीं पितृनत्यर्थं दक्षिणामुख उत्तानमञ्जलिं कुर्यात्। ये पितरः पालकाः सन्ति तेभ्यः स्वधाऽस्तु। स्वधाशब्दो

अग्ने॒ वाज॑जि॒द्वाजं॑ त्वा सरि॒ष्यन्तं॑ वाज॒जित॒ꣳ सम्मा॑र्ज्मि। नमो॑ दे॒वेभ्यः॑ स्व॒धा पि॒तृभ्यः॑ सु॒यमे॑ मे भूयास्त॒मस्क॑न्नम॒द्य ॥७॥

अस्क॑न्नम॒द्य दे॒वेभ्य॒ आज्य॒ꣳ सम्भ्रि॑यास॒मङ्घ्रि॑णा विष्णो॒ मा त्वाव॑क्रमिषं॒ वसु॑मतीमग्ने ते छा॒या

मुप॑स्थेषं॒ विष्णो॒ स्थान॑मसी॒त इन्द्रो॑ वी॒र्य॑मकृणोदू॒र्ध्वो॑ऽध्व॒र आस्था॑त् ॥ ८ ॥

निपातः पितॄनुद्दिश्य देयद्रव्यस्य दाने वर्तते। अतो यद्देयं तद्दास्याम इत्यर्थः। अनेन मन्त्रद्वयेन देवाः पितरश्चोपचर्यन्ते। का० सुयमे म इति जुहूपभृतावादायेति[4]। हे जुहूपभृतौ मे मदर्थं सुयमे सुष्ठु नियते युवां भूयास्तं भवतम्। यथा युवयोः स्थितमाज्यं न स्कन्दति तथा धारयतमित्यर्थः॥ ७ ॥

तथासति अद्यास्मिन्ननुष्ठानदिने देवेभ्यो देवोपकारायाज्यं युवयोः स्थितं घृतम् अस्कन्नं भूमौ यथा न स्कन्दति तथा सम्भ्रियासम्

१——३,१,१३। २——३,१,१४। ३——३,१,१५। ४——३,१,१६।

का० सव्याभूने जुहूं प्रतिगृह्य निदधाति घृताच्यसीतरे उत्तराभ्यां प्रतिमन्त्रमिति[1]। हे जुहु त्वं घृताची असि। घृतमञ्चति प्राप्नोतीति घृताची घृतपूर्णा भवसि नाम्ना च जुहूः। हूयतेऽनयेति जुहूः। क्विपि द्युतिगमिजुहोतीनां द्वे च जुहोतेर्दीर्घश्चेति क्विप् दीर्घश्च। सा त्वं प्रियेण धाम्ना देववल्लभेनाज्येन सह इदं प्रियं सदः प्रेमस्थलक्षणमासीद अधितिष्ठ। एतद्वै देवानां प्रियतमं धाम यदाज्यमिति श्रुतेः[2] प्रियधामशब्देनाज्यम्। उपभृतं सादयति। उप समीपे स्थित्वा बिभर्ति आज्यं धारयतीत्युपभृत्। व्याख्यातमन्यत्। ध्रुवां सादयति। ध्रुव स्थैर्ये। यथा होमार्थं जुहूपभृतोश्चलनं तद्वदस्याश्चलनाभावेन स्थिरत्वान्नाम्ना ध्रुवा। अन्यद्व्याख्यातम्।

घृताच्यसिजुहूर्नाम्नासेदम्प्रियेणधाम्नाप्रियꣳसदआसीदघृताच्यस्युपभृन्नाम्नासेदम्प्रियेणधाम्नाप्रियꣳ

सदआसीदघृताच्यसिध्रुवानाम्नासेदम्प्रियेणधाम्नाप्रियꣳसदआसीदप्रियेणधाम्नाप्रियꣳसदआसीद।

ध्रुवाअसदन्नृतस्ययोनौताविष्णोपाहिपाहियज्ञम्पाहियज्ञपतिम्पाहिमांयज्ञन्यम् ॥ ६ ॥

का० प्रियेण धाम्नेति हवीꣳषि वेद्यां कृत्वेति[3]। हे हविः प्रियेण धाम्नाऽऽज्येन सह प्रियं सद आसीदेत्येकैकं हविः सम्बोध्य वचनम्। का० ध्रुवा असदन्निति सर्वाण्यालभतऽइति[4]। ऋतस्यावश्यम्भाविफलोपेतत्वेन सत्यस्य यज्ञस्य योनौ स्थाने ध्रुवाणि यानि हवींषि असदन्नतिष्ठन्। हे विष्णो व्यापक यज्ञपुरुष ता तानि हवींषि पाहि रक्ष यज्ञं च पाहि यज्ञपतिं च पाहि। का० पाहि मामित्यात्मानमिति[5]। यज्ञं नयतीति यज्ञनीः तं यज्ञन्यमध्वर्युं मां पाहि ॥ ६ ॥

१—२,८,१२-१३। २—१,३,६;१०। ३—२,८,१८। ४—२,८,१९। ५—२,८,२०।

का० अनुपस्पृश्य द्वितीयं समिदसीतीति[१] ॥ हे इध्मकाष्ठ त्वं समिदसि अग्नेः ससिन्धनं दीपनमसि ॥ का० सूर्यस्त्वेति जपत्याहवनीयमीक्षमाण इति[२] ॥ हे आहवनीय सूर्यः पुरस्तात्पूर्वस्यां दिशि कस्याश्चिदभिशस्त्यै सर्वस्या अभिशस्तेर्हिंसायाः सकाशात्त्वा त्वां पातु रक्षतु । चतुर्थी पञ्चम्यर्थे या काचिद्धिंसा प्रसक्ता तां सर्वां परिहरत्वित्यर्थः । इतरदिक्त्रये परिधित्रयं रक्षकं पूर्वस्यां तदभावात्सूर्यः । तथा च श्रुतिः । गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोतीति[३] । का०

समिदसिसूर्यस्त्वापुरस्तात्पातुकस्याश्चिदभिशस्त्यै । सवितुर्बाहूस्थऊर्णम्रदसन्त्वास्तृणामि

स्वासस्थन्देवेभ्यआत्वावसवोरुद्राआदित्याःसदन्तु ॥ ५ ॥

बर्हिषस्तृणे तिरश्ची निदधाति सवितुरितीति[४] । तृणद्वयं प्रस्तरस्थापनार्थं तिर्यग् निदध्यात् । हे तृणे युवामुभे सवितुर्देवस्य बाहू स्थः । प्रस्तरधारणेन सूर्यस्य बाहू इव भवथः ॥ का० तयोः प्रस्तरं स्तृणात्यूर्णम्रदसमितीति[५] । ऊर्णमिव मृदु देवेभ्यो देवानां स्वासस्थं सुखेनासनेन स्थीयते यत्र तादृशं त्वां स्तृणामि ॥ का० अभिविदधात्या त्वा वसव इतीति[६] ॥ प्रस्तरं प्रति पाणी निदधाति । वसवो रुद्रा आदित्याः सवनत्रयाभिमानिनस्त्रयो देवाः त्वामासदन्तु आसादयन्तु सर्वतः प्रसारयन्तु ॥ ५ ॥

१—२,८,३ । २—२,८,४ । ३—१,३,४,८ । ४—२,८,५ । ५—२,८,१० । ६—२,८,११ ।

दिग्भिः । ईड स्तुतौ ॥ दक्षिणं परिधिं परिदधाति । इन्द्रस्य बाहुरसि । हे द्वितीयपरिधे त्वमिन्द्रस्य दक्षिणो बाहुरसि । रक्षणसमर्थत्वादिन्द्रबाहुत्वोपचारः । विश्वस्येत्यादि व्याख्यातम् । अत्राग्निशब्देन भुवनपतिनामा द्वितीयो भ्राता ॥ तृतीयमुत्तरं परिधिं परिदधाति ॥ मित्रावरुणौ । हे तृतीयपरिधे मित्रावरुणौ वाय्वादित्यौ ध्रुवेण स्थिरेण धर्मणा कर्मणा[1] धारणेन उत्तरस्यां दिशि त्वां परिधत्तां परितः स्थापयताम् । विश्वस्येत्यादि पूर्ववत् । अत्राग्निर्भूतानां पतिस्तृतीयो भ्राता ॥ ३ ॥

का० प्रथमं परिधिꣳ[2] समिधोपस्पृश्य वीतिहोत्रमित्यादधातीति[3] । इयमृक् अग्निदेवत्या गायत्रीच्छन्दस्का । हे कवे क्रान्तदर्शिन् हे अग्ने ऽध्वरे यागे निमित्ते त्वां वयं समिधीमहि अनेनेध्मकाष्ठेन दीपयामः । अतीतानागतदूरवर्तिपदार्थानां

वीतिहोत्रन्त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरे ॥ ४ ॥

यस्य युगपज्ज्ञानं स कविः । किम्भूतं त्वाम् । वीतिहोत्रम् । इण् गतौ । इतिर्गतिः व्याप्तिः पुत्रपौत्रपशुधनादिभिः समृद्धिरित्यर्थः । वीतये समृद्धै होत्रं होमो यस्य स वीतिहोत्रस्तं[4] यत्र होमे कृते समृद्धिप्राप्तिः स्यादित्यर्थः । यद्वा वीतिरभिलाषो होत्रे होत्रकर्मणि यस्य तम् । तथा द्युमन्तं । द्यौः कान्तिरस्यास्तीति द्युमान् तं स्वत एव द्युत्युपेतम् । तथा बृहन्तं महान्तम् ॥ ४ ॥

१—कर्मणेति मु० नास्ति । २—परिधिमिध्म क० । ३—२,८,२ । ४—इतिर्गतिः विविधाइतिः वीतिः—इत्येव क० ।

पलाय्योदकं प्राविशत्ततो देवैरानीय स्वाधिकारे स्थाप्यमान एवमवदद् यदेतैर्मद्भ्रातृभिर्मां परिधत्तैषां च यज्ञभागः कल्पतामिति । ततस्तेऽग्नेर्भ्रातरः परिधयो जातास्तेषां च स्वान्नं हविर्भागः कृत इति कथा[1] ॥ २ ॥

का० परिधीन् परिदधाति मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रमिति[2] ॥ आदौ पश्चात् । हे परिधे विश्वावसुनामा गन्धर्वः त्वां परिदधातु-आहवनीयस्य पश्चात्सर्वतः स्थापयतु । विश्वस्मिन् सर्वस्मिन् प्रदेशे वसतीति विश्वावसुः । द्युलोकस्थं सोमं

**गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडईडितः । इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडईडितः । मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडईडितः ॥ ३ ॥**

रक्षितुं तत्पार्श्वे सर्वत्र गन्धर्वोऽवसदिति[3] श्रुत्यन्तरकथा । किमर्थं स्थापयतु । विश्वस्यारिष्ट्यै । रिष हिंसायां रेषणं रिष्टिः न रिष्टिः अरिष्टिस्तस्यै । आहवनीयस्थानरूपस्य विश्वस्य हिंसापरिहाराय । परिध्यभावेऽसुराः प्रविश्य हिंसन्ति । किं च त्वं यजमानस्य परिधिरसि । न केवलमग्नेः परिधिः यजमानमप्यसुरेभ्यो रक्षितुं पश्चिमदिशि स्थापितोऽसि । किं च अग्निरिड़ः ईड़ितश्चासि । आहवनीयस्य प्रथमो भ्राता भुवपतिनामाग्निरूपस्त्वमसि । ईड्यते स्तूयते इतीड स्तुतियोग्यः । अत एव ईडितः स्तुतो होत्रा-

१——१,२,३,१२ = १६ । २——२,८,१ । ३——गन्धर्वोऽवसन्निति क० ।

का॰ शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमितीति[1] ॥ हे प्रोक्षणीशेषोदक त्वमदित्यै अदित्या भूम्याः व्युन्दनमसि विशेषेण क्लेदनमसि[2] ॥ का॰ बर्हिर्विस्रꣳस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरितीति[3] । हे प्रस्तर दर्भमुष्टिरूप त्वं विष्णोर्यज्ञस्य स्तुपोऽसि । ष्टै स्त्यै शब्दसङ्घातयोः । औणादिको डुपप्रत्ययः । दर्भसङ्घातरूपत्वात्केशसङ्घातरूपा शिखेव भवसि ॥ का॰ वेदिꣳ स्तृणात्यूर्णम्रदसमितीति[4] । हे वेदे त्वां स्तृणामि बर्हिषा छादयामि । किम्भूतां त्वाम् । ऊर्णम्रदसमूर्णेमिव मृदुतरमतिशयेन मृदु म्रदीयसी ईयलोपश्छान्दसः । यथा प्रभोरुपवेष्टुं भूमिः कम्बलादिनाच्छाद्यते काठिन्याभावाय तथा दर्भैराच्छादिता वेदिर्मृदुः

अदित्यै व्युन्दनमसि विष्णोस्तुपोऽस्यूर्णम्रदसन्त्वा स्तृणामि स्वासस्थान्देवेभ्यो भुवपतये स्वाहा

भुवनपतये स्वाहा भूतानाम्पतये स्वाहा ॥ २ ॥

स्यात् । पुनः किम्भूतां त्वां देवेभ्यः स्वासस्थां देवोपकाराय सुखेनासितुं स्थानभूताम् । सुखेन आसेनासनेन स्थीयते यस्यां सा स्वासस्था ताम् । का॰ स्कन्न[5]मभिमृशति भुवपतये स्वाहेति[6] ॥ एतन्मन्त्रत्रयस्यावोत्कर्षः[7] । भुवपत्यादयस्त्रयोऽग्नेर्भ्रातरः । स्वाहाशब्दो निपातो देवान् प्रति दानवाची । स्वाहाकारं च वषट्कारं च देवा उपजीवन्तीति श्रुतेः । हविर्ग्रहणकाले परिधिभ्यो बहिर्यद्धविः स्कन्नं तद्भुवपत्यादिभ्योऽग्नेर्भ्रातृभ्यो दत्तमिति मन्त्रार्थः । पुराग्नेर्भ्रातरो वषट्कारभयाद्भूमिं प्राविशंस्तद्दुःखेनाग्निरपि

१——२,७,२० । २——क्लेदनसाधनमसि क॰ । ३——२,७,२१ । ४——२,७,२२ । ५——अस्कन्न क॰ । ६——२,७,२३ । ७——स्यान्यत्रोत्कर्षः क॰ ।

का० इध्मं प्रोक्षति विस्रंस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थिं कृष्णोऽसीति प्रतिमन्त्रमिति[1] ॥ इध्मं विस्रंस्य प्रोक्षेत् । वेदिं च प्रोक्षेत् । बर्हिरादाय वेद्यां पूर्वग्रन्थिं कृत्वा प्रोक्षेत्क्रमान्मन्त्रत्रयेणेति सूत्रार्थः ॥ कृष्णोऽसि ॥ हे इध्म त्वं कृष्णोऽसि कृष्णमृगरूपो यज्ञोऽसि । इध्मपूलकस्य यज्ञसाधनत्वाद्यज्ञत्वोपचारः । किम्भूतः ॥ आखरेष्ठः ॥ आ समन्तात्खरे कठिने वृक्षे तिष्ठतीति आखरेष्ठः । यद्वा खं स्वर्गं राति ददातीति खर आहवनीयस्तत्र समन्तात्तिष्ठतीत्याखरेष्ठः । अन्तोदात्तः कृष्णशब्दो वर्णवाची अयं तु कृष्णशब्द आद्युदात्तत्वान्मृगवाची ॥ यज्ञः कदाचिद्देवेभ्योऽपक्रान्तः स्वगोपनाय कृष्णमृगो भूत्वा वने यज्ञियतरुमध्ये प्रविश्य कुत्रचित्कठिने वृक्षे तस्थौ । तदेतदभिप्रेत्य कृष्ण आखरेष्ठ इति इध्ममुच्यते । यज्ञो ह

**कृष्णोस्याखरेष्ठोग्नयेत्वाजुष्टम्प्रोक्षामिवेदिरसिबर्हिषेत्वाजुष्टाम्प्रोक्षामिबर्हिरसिस्रुग्भ्यस्त्वाजुष्टम्प्रोक्षामि ॥ १ ॥**

देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचारेत्यादिश्रुतेः[2] स्थे च भाषायामिति स्थे परपदे भाषायां सप्तम्या अलुग्निषेधाद्देऽलुक् । पूर्वपदादिति षत्वम् । अतोऽग्नये जुष्टं प्रियं त्वां प्रोक्षामि शुद्ध्यर्थं जलेनेति शेषः[3] । वेदिरसीति वेदिं प्रोक्षति । त्वं वेदिरसि । विद्यते लभ्यत इति वेदिः । विद्लृ लाभे । देवैरसुरेभ्यो लब्धत्वाद्वेदिः । अतो बर्हिर्जुष्टां बर्हिषो धारणोपयोगितया प्रियां त्वां प्रोक्षामि । पृथ्वीरूपाया वेदेः प्रजारूपस्य बर्हिषो धारकत्वं युक्तम् ॥ बर्हिरसीति बर्हिःप्रोक्षणम् । हे दर्भ त्वं बर्हिरसि प्रभूतत्वाद्वेदिबृंहणसमर्थमसि । अतः स्रुग्भ्यो जुष्टं स्रुचां धारणात्प्रियं त्वां प्रोक्षामि ॥ १ ॥

१——२,७,१९ । २——१,१,४,१ । ३——क० पुस्तकेऽस्य प्रथममन्त्रस्य व्याख्याप्रकारशब्दाऽन्यप्रकाराः ।

ज्वालोत्पद्यतेऽतस्त्वमग्नेर्जिह्वा। किंभूतं देवेभ्यो ऽर्थाय सुहूः सुष्ठु ह्वयते इति सुहूः पुंस्त्वं छान्दसम्। यद्वा जिह्वाविशेषणं सुष्ठु ह्वयन्ते देवा आह्वयन्तेऽनया सा सुहूर्जिह्वा। ज्वालां दृष्ट्वा आयान्तीत्यर्थः[1] अतो मे मम धाम्नेधाम्ने तत्तद्यागफलोपभोगस्थानसिद्ध्यर्थं[2] भव। यजुषेयजुषे तत्तद्यागसिद्धये योग्यं भवेत्यर्थः ॥ ३० ॥

का० सवितुस्त्वेत्याज्यमुत्पुनातीति[3]। सवितुर्देवस्य प्रसवे आज्ञायां वर्तमानः सन्त्वामुत्पुनामि शोधयामि। व्याख्यातमन्यत् ॥ का० प्रोक्षणीश्च पूर्ववदिति[4]। सवितुर्वः। वो युष्मानुत्पुनामीति। व्याख्यातम् ॥ का० आज्यमवेक्षते तेजोऽसीतीति[5]। हे आज्य त्वं तेजोऽसि। शरीरकान्तिहेतुत्वात्तेजस्त्वम्। शुक्रमसि दीप्तिमदसि। स्निग्धरूपत्वाद्दीप्तिमत्त्वम्। अमृतमसि विनाशरहितमसि। बहुदिवसा-

**सवितुस्त्वाप्रसवऽउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः। सवितुर्वःप्रसव०—०रश्मिभिः।**

**तेजोऽसिशुक्रमस्यमृतमसि। धामनामासिप्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ३१ ॥**

वस्थानेऽप्योदनादिवत्पर्युषितत्वादिदोषाभावादविनाशित्वम् ॥ का० स्रुवेणाज्यग्रहणं चतुर्जुह्वां धाम नामेति सकृन्मन्त्र इति[6]। हे आज्य त्वं धाम स्थानमसि धीयते स्थाप्यते चित्तवृत्तिर्देवैरत्रेति धाम। तथा नाम नामयति आत्मानं प्रति सर्वाणि भूतानीति नाम आज्यं दृष्ट्वा सर्वेऽप्यंस्तु नमन्ति। तथा देवानां प्रियमिष्टम् अनभिभूतम्। गतसारत्वदोषेणातिरस्कृतं चरुपुरोडाशादीनि चिरस्थित्या गतसाराणि स्युरितीदं न तथा। देवयजनं देवा इज्यन्तेऽनेनेति यागसाधनम् ईदृशं त्वमस्यातस्त्वां गृह्णामीति वाक्यशेषः ॥ ३१ ॥

श्रीमन्महीधरकृते वेददीपे[7] मनोहरे। शाखाद्याज्यग्रहान्तोऽयमध्यायः प्रथमोऽगमत् ॥ १ ॥

१——देवा आयान्तीत्यर्थः क०। २——तत्तदित्यादि क० पुस्तके नास्ति। ३——२,७,७। ४——२,७,८। ५——२,७,९। ६——२,७,११-१२। ७——मन्त्रदीपे मु०।

गृहीते हुते च सति अग्निर्दीप्यते। तद्दीप्त्याहुतिफलभूतमन्नं प्रकाशितं भवतीत्यर्थः॥ का० प्रतप्य प्रतप्य प्रयच्छत्यनिशितेति स्रुच इति[1]। अनिशितेति मन्त्रेण स्रुचस्तिस्रो जुहूपभृद्ध्रुवाः संमृज्य प्रत्येकं प्रत्युष्टमिति मन्त्रेण प्रतप्य प्रतप्य वेद्यां स्थापनार्थमध्वर्यवे प्रयच्छतीति सूत्रार्थः। प्रत्युष्टमिति व्याख्यातम्। अनिशितेत्यपि व्याख्यातम्। स्रुवस्य पुंस्त्वादादौ स्रुवसंमार्जनम् स्रुचां स्त्रीत्वात्पश्चात्। योषा वै स्रुग्वृषा स्रुव इत्यादिश्रुतेः[2]। जुह्वादीनां स्रुचां स्त्रीलिङ्गत्वात्तद्विशेषणयोरनिशिता वाजिनीमित्यनयोः स्त्रीत्वं विशेषः॥ २९॥

का० पत्नीं संनह्यति प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्यधीवासोऽदित्यै रास्नासीतीति[3]।

अदित्यै रास्नासि विष्णोर्वेष्पोऽस्यूर्जे त्वादब्धेन त्वा चक्षुषावपश्यामि। अग्नेर्जिह्वासि

सुहूर्देवेभ्यो धाम्ने धाम्ने मे भव यजुषे यजुषे॥ ३०॥

हे योक्त्र अदित्यै अदित्या भूम्यास्त्वं रास्नासि रशना भवसि॥ का० दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्प इति न ग्रन्थिं करोतीति[4]। हे दक्षिण पाश त्वं विष्णोः यज्ञस्य वेष्पोऽसि व्यापकोऽसि। विष्लृ व्याप्तौ॥ का० ऊर्जे त्वेत्याज्यमुद्वासयेति[5]। हे आज्य त्वामुद्वासयामीति शेषः। किमर्थम्। ऊर्जे उत्तमरसलाभाय। विलापितं घृतं सुस्वादु भवति॥ का० पत्नीमवेक्षयत्यदब्धेनेतीति[6]। दभ्नोतिर्हिंसार्थः। हे आज्य अदब्धेन अनुपहिंसितेन चक्षुषा त्वा त्वामवपश्यामि। अर्वाचीनं यथा तथाधोमुखी सती पश्यामि। किं च हे आज्य त्वमग्नेर्जिह्वासि। यदाज्यमग्नौ हूयते तदा जिह्वेव

१——२,६,४७-४८। २——१,३,१,९। ३——२,७,१। ४——२,७,२-३। ५——२,७,४। ६——२,७,५।

ब्रह्मणा दधुरिति[1] श्रुतेः ब्रह्मणा वेदेन सहेत्यर्थः। अनेन मन्त्रेण खातायां वेद्यां लोष्टकृतवैषम्यनिवृत्त्यै समीकरणरूपं मार्जनं कुर्यात्। प्रोक्षणीरासादयेति आग्निध्रं[2] प्रति प्रैषः। प्रोक्ष्यन्तेऽआभिरिति प्रोक्षण्य आपस्ता आसादय वेद्यां स्थापय॥ का० द्विषतो वध इति स्फ्यमुदञ्चं प्रहरतीति[3]। हे स्फ्य त्वं द्विषतः शत्रोर्वधोऽसि हिंसकोऽसि॥ २८॥

का० स्रुवं[4] प्रतप्य पूर्ववदिति[5]। यथा शूर्पाग्निहोत्रहवण्योः प्रत्युष्टमिति प्रतपनं कृतं तथा स्रुवस्यापि कार्यमित्यर्थः। मन्त्रो व्याख्यातः॥ का० वेदाग्रैरन्तरतः प्राक्सम्मार्ष्ट्यनिशित इतीति[6]। हे स्रुव त्वमनिशितोऽसि। शो तनूकरणे। नितरां शितस्तीक्ष्णीकृतो निशितस्तथा न भवतीत्यनिशितः। अस्मद्विषये[7] तीक्ष्ण उपद्रवकारी न भवसीत्यर्थः। यतः सपत्नक्षित्। क्षिणु

प्रत्युष्टᳬरक्षः प्रत्युष्टाऽअरातयो निष्टप्तᳬरक्षो निष्टप्ताऽअरातयः। अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै

सम्मार्ज्मि। प्रत्युष्ट०—०। अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि॥ २९॥

हिंसायाम्। सपत्नानस्मच्छत्रून् क्षिणोति हिनस्तीति सपत्नक्षित्। अत एव त्वां सम्मार्ज्मि सम्यक् शोधयामि। मृजू शुद्धौ। किंभूतं त्वां वाजिनं वाजोऽन्नमस्यास्तीति वाजिनं यज्ञद्वारा अन्नहेतुत्वादन्नवन्तम्। यद्वा वाजो यज्ञस्तद्वन्तम् यज्ञो हि देवानामन्नमिति श्रुतेः[8]। वाजं यज्ञाख्यमन्नमर्हतीति वाजिनम्। अर्हार्थे इन् प्रत्ययः। किमर्थं सम्मार्ज्मि। वाजेध्यायै ञिइन्धी दीप्तौ। इन्धनं इध्या दीप्तिः। वाजस्येध्या वाजेध्या तस्यै वाजेध्यायै यज्ञस्य दीप्त्यै प्रकाशनार्थम्। शोधितेन स्रुवेणाज्ये

१——१,२,५,१७। २——अग्निध्रं सु०। ३——२,६,४२। ४——आहृत्यस्रुवं क०। ५——२,६,४५। ६——२,६,४६। ७——अस्मद्विषये क०। ८——५,१,१,२।

का० पुरा क्रूरस्येत्यनुमार्ष्टीति[1]। अत्रेयमाख्यायिका मन्त्रेऽभिप्रेता। कदाचिद्देवानामसुरैः सह संग्राम उपस्थितस्तदा देवैर्मिथो मन्त्रितं यदस्या भूमेरुत्कृष्टं देवयजनस्थलं तच्चन्द्रे संस्थाप्य युद्धं कुर्मस्तत्र यद्यस्माकं पराजयः स्यात्तदा देवयजने यागं विधाय पुनर्दैत्यपराजयं करिष्याम इति संमन्त्र्य भूमेः सारभागं देवयजनं चन्द्रे स्थापयामासुस्तत्कृष्णवर्णमिदानीमपि दृश्यतऽइत्याख्यानमयं मन्त्रो ब्रूते[2]। पुरा क्रूरस्येति त्रिष्टुप् चन्द्रदेवत्या। विरप्शीति महन्नाम[3] विविधं रपति वेदत्रयरूपेण शब्दं करोतीति विरप्शी। यज्ञो वेदित्वं प्राप्तो विष्णुः सम्बोध्यते। हे विरप्शिन् विष्णो परमेश्वर त्वं शृणु अनुगृहाणेति[4] शेषः। क्रूरशब्दोऽत्र संग्रामवाची। संग्रामो वै क्रूरमिति[5] श्रुतेः। विविधं सर्पन्ति योधा यस्मिन्निति विसृप्। तस्येति

पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम्। यामैरयंश्चन्द्रमसि स्वधाभिस्तामु धीरासो

अनुदिश्य यजन्ते। प्रोक्षणीरासादय द्विषतो वधोऽसि ॥ २८ ॥

क्रूरविशेषणं पञ्चम्यर्थे षष्ठी। विसृपो नानायोधयुतात् क्रूरात् युद्धात् पुरार्थाद्देवाः जीवदानुं जीवं ददातीति जीवदानुस्तां जीवस्य धात्रीं सारभूतां यां पृथिवीमुदादाय ऊर्ध्वं गृहीत्वा स्वधाभिः वेदैः सह चन्द्रमसि इन्द्रो ऐरयन् प्राक्षिपत् स्थापयामासुः धीरासः धीरा मेधाविनः तामु उ एवार्थे तामेव चन्द्रस्थां पृथिवीमनुदिश्य दर्शनेन सम्पाद्य सैव भूमिरस्यां वेद्यां विद्यतऽइति भावयित्वा यजन्ते यागं कुर्वन्ति। स्वधाशब्दो यद्यप्यन्नवाची तथाप्यन्नहेतुभूता वेदत्रयी कथ्यते। यां चन्द्रमसि

१—१,२,६,२२। २—१,२,५,१८। ३—निघ३,३,२२। ४—अनुगृहाणेति वा का०। ५—१,२,५,१९।

विष्णुं निपात्य छन्दोभिरभितः पर्यगृह्णन्निति[१] श्रुतेः । हे विष्णो त्वा त्वां गायत्रेण छन्दसा गायत्र्यादिच्छन्दस्त्रयरूपतया भावितेन स्फ्येन दिक्त्रये परिगृह्णामि । एवं त्रैष्टुभेन जागतेनेत्युत्तरमन्त्रयोः । ततः[२] छन्दोदेवता दिक्त्रयेऽसुरेभ्यस्त्वां पालयिष्यन्ति । पूर्वस्यामाहवनीयएव पालकोऽस्तीति भावः । प्रजापतिपुत्रा देवा असुराश्च पूर्वं स्पर्धां चक्रुस्तदा देवान् पराजयं प्रापय्य भूमिमसुरा विभेजु[३]स्तदा देवा वामनरूपं विष्णुमग्रे कृत्वाऽसुरानागत्यास्मभ्यमपि भूम्यंशो दातव्य [illegible] तानयाचिषुः । ततोऽसुरा असूयन्तोऽयं विष्णुर्यावति भूभागे शेते तावन् भवदीयोऽस्त्वित्यूचुस्ततो देवा वह्नि तदस्माकमित्युक्त्वा ते प्राञ्चं विष्णुं निपात्य गायत्रेणेत्यादिमन्त्रैर्यज्ञभूमिं जगृहुः । यज्ञो विष्णुः स यत्र तिष्ठति सैव यज्ञभूमिरिति तैर्विदितत्वाद्वेदिरिति तद्भूमेर्नामेति[४] श्रुतिकथामनुसंधाय वेदिग्रहणं विधेयम् ॥ का० उत्तरं परिग्रहं परिगृह्णाति सुक्ष्मा स्योनोर्जस्वतीति[५] । वेदिखननात्पूर्वं क्रियमाणः पूर्वः परिग्रहः पश्चात् क्रियमाण उत्तरपरिग्रहः । तत्रापि पूर्ववद्दिक्त्रये स्फ्येन रेखात्रयं कार्यम् । हे वेदे त्वं सुक्ष्मासि शिवा शान्ता चासि । क्ष्मा भूमिः शोभना क्ष्मा सुक्ष्मा खननेनाश्मादिदोषनिवर्तनं भूमेः शोभनत्वम् । उग्रस्यासुरस्य निःकाशनेन शान्तत्वम् । गुणद्वयस्यान्योन्यसमुच्चयार्थौ चकारौ एकोऽयं मन्त्रः । स्योना सुखरूपासि । स्योनमिति सुखनाम[६] । सुषदा सुष्ठु सीदन्ति देवा यस्यां सा सुषदा । सम्यगुपवेशनयोग्या चासि । चकारौ पूर्ववत् । द्वितीयोऽयं मन्त्रः । ऊर्जस्वती पयस्वती चासि । ऊर्जःशब्दोऽन्नवाची । पयःशब्दस्तद्विकारदध्यादिवाची । तदुभयवती । चौ पूर्ववत् । तृतीयो मन्त्रः ॥२७॥

१—१,२,५,६ । २—तैन कं० । ३—विभुजु कं० । ४—१.२.५,१७ । ५—२,६,३१ । ६—निघ३,६,१५ ।

का० अपारररुमिति द्वितीयं प्रहरतीति[१]। पृथिव्यै देवयजनात् पृथिव्याः सम्बन्धिनो देवयजनाख्यादेदिस्थानात् अररुम् अररुनामानमसुरमप बध्यासम्। अपनीय यथा हतो भवति तथा करवाणि। अनेन मन्त्रेण द्वितीयवारं पूर्ववत्प्रहरेत् व्रजम् वर्षंतु बधानेति मन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत्॥ का० अभिन्यस्यत्यग्नीदुत्करमररो दिवमितीति[२]। हे अररो असुर दिवं द्युलोकं यागरूपं त्वं मा पप्तः मा गमः। स्वर्गं त्वया न गन्तव्यम् पत्लृ गतौ पतः पुमिति लुङि पुमागमे रूपम्॥

अपारररुम्पृथिव्यैदेवयजनाद्बध्यासंव्रजं०—०मौक्। अररोदिवंमापप्तोद्रप्सस्तेद्यांमास्कन्व्रजं०—०मौक्॥ २६॥

गायत्रेणत्वाच्छन्दसापरिगृह्णामित्रैष्टुभेनत्वाच्छन्दसापरिगृह्णामिजागतेनत्वाच्छन्दसापरिगृह्णामि।

सुक्ष्माचासिशिवाचासिस्योनाचासिसुषदाचास्यूर्जस्वतीचासिपयस्वतीच॥ २७॥

का० द्रप्सस्तऽइति तृतीयमिति[३]। हे वेदिदेवते ते तव पृथिवीरूपाया यो द्रप्स उपजीव्यो रसः स द्यां द्युलोकं मा स्कान् मा स्कन्दतु मा गच्छतु स्कन्दिर्गतिशोषणयोः। व्रजं गच्छेत्यादिमन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत्॥ २६॥

का० पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रतिमन्त्रमिति[४]। यस्मात्प्रदेशाददररुर्निष्का-सितस्तत्र वेदेरियत्तां निश्चेतुं दक्षिणादिदिक्त्रये स्फ्येन रेखात्रयकरणं पूर्वः परिग्रहः। विष्णुर्देवता मन्त्रत्रयस्य। ते प्राञ्चं

का० पृथिवि देवयजनीति ह्वयेऽन्तर्हिते प्रहरतीति[1] । हे पृथिवि हे देवयजनि देवा इज्यन्ते यस्यां सा देवयजनी तस्याः सम्बोधने हे देवयजनि ते तव ओषध्यास्तृणरूपाया मूलमहं मा हिंसिषम् मा विनाशयामि । का० व्रजं गच्छेति पुरीषमादत्तऽइति[2] । स्फ्यप्रहारोत्पन्ना मृत् पुरीषमुच्यते । हे पुरीष त्वं व्रजं गच्छ । व्रजन्ति गच्छन्ति स्थातुं गावो यत्र स देशो व्रजस्तं किम्भूतम् गोष्ठानम् गवां स्थानमिदानीमवस्थितिर्यत्र तम् गोयुक्तं तदीयं स्थानं गच्छेत्यर्थः ॥ का० वर्षतु त इति वेदिं प्रेचतऽइति[3] । हे वेदे ते तुभ्यं त्वदर्थं द्यौर्द्युलोकाभिमानी देवो वर्षतु जलसेकं करोतु । वृष सेचने

पृथिवि देवयजन्न्योषध्यास्ते मूलं मा हिꣳसिषं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां

पृथिव्याꣳ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥ २५ ॥

वर्षणेन खननजनितदुःखशान्तिरस्त्वित्यर्थः ॥ का० बधानेत्युत्करे करोतीति[4] । स्फ्योत्खातां मृदमुत्करे त्यजेत् । हे देव सवितः योऽस्मान्द्वेष्टि द्वेषं करोति वयं च यं शत्रुं द्विष्मस्तमुभयविधं शत्रुं परमस्यां पृथिव्यां बधान । परमा अन्तिमा पृथिवी । छान्दसः स्वांडागमः । उत्करे चितायां धूल्यां निगूढस्य शत्रोस्तत्र बन्धनं कुरु यत्र भूमेरन्तिमप्रदेशेऽन्धतामिस्रो[5] नरकोऽस्ति । तथा च श्रुतिः अन्धे तमसि बधानेति यदाह परमस्यां पृथिव्यामिति[6] । कैर्बन्धनं कर्तव्यं तदाह शतेन पाशैः शतसङ्ख्याकाभिर्बन्धनरज्जुभिः । किं च अस्मा[7]दन्धतामिस्रान्नरकात्तं मा मौक् कदाचिदपि मा मुञ्च ॥ २५ ॥

१——२,६,१५-१६ । २——२,६,१७ । ३——२,६,१८ । ४——२,६,१९ । ५——तामिस्रो-मु० । ६——१,२,४,१६ । ७——ततोऽस्मा क० ।

लनमामेभ्यो निनयत्यभितप्य प्रत्यगसꣳस्यन्दमानं त्रिताय त्वेति प्रतिमन्त्रमिति। हे पात्राङ्गुलिप्रक्षालनोदक त्रिताय त्रितनाम्ने देवाय त्वां निनयामीतिशेषः। तथा द्विताय त्वा निनयामि। तथा एकताय त्वा निनयामि। पूर्वं कुतश्चिद्धेतोः भीतोऽग्निरपः प्राविशत्ततो देवास्तं ज्ञात्वा[1] जगृहुस्तदाग्निना वीर्यमप्सु मुक्तं तत आप्त्या उत्पन्नास्त्रितद्वितैकतसंज्ञास्ते देवैः सह चरन्तो यज्ञे पात्रीप्रक्षालनजललक्षणं भागं लेभिरे इति श्रुतिकथानुसन्धातव्या[2] ॥ २३ ॥

का० देवस्य त्वेति स्फ्यमादायेति[3]। देवस्य त्वेति व्याख्यातम्। देवेभ्यो देवोपकारार्थं अध्वरकृतं अध्वरं करोतीति वेदिखननादिद्वारेणेत्यध्वरकृतं स्फ्यमहमाददे गृह्णामि। का० सव्यꣳ सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरितीति[4]।

देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम्। आददेऽध्वरकृतन्देवेभ्यइन्द्रस्यबाहुरसि

दक्षिणःसहस्रभृष्टिःशततेजावायुरसितिग्मतेजाद्विषतोवधः ॥ २४ ॥

हे स्फ्य त्वमिन्द्रस्य दक्षिणो बाहुरसि। तेन बाहुना धृतत्वात्तत्समानवीर्योपेतत्वाद्वा स्फ्यस्य बाहुरूपत्वोपचारः। किम्भूतः स्फ्यः सहस्रभृष्टिः भृष्टिर्भर्जनं पाको मारणमिति यावत् सहस्रसङ्ख्याकानां शत्रूणां भृष्टिर्यस्य स सहस्रभृष्टिः। तथा[5] शततेजाः शतं तेजांसि यस्य सः बहुधा दीप्यमानः। किंच वायुरसि न केवलमिन्द्रबाहुसदृशः किं तु वायुसदृशोऽप्यसि। अत एव तिग्मतेजाः तीक्ष्णतेजाः यथा वायुर्वह्निं प्रदीप्य तीव्रां ज्वालामुत्पादयंस्तीव्रतेजा भवति। एवं स्फ्योऽपि स्तम्ब[6]च्छेदरूपं कर्म कुर्वंस्तीव्रतेजा उच्यते। तथा द्विषतो वधः। हन्तीति वधः कर्मद्वेषिणामसुरादीनां हन्तेत्यर्थः ॥ २४ ॥

१—ज्ञात्वेति नास्ति क० पुस्तके। २—१,२,३,१,। ३—२,६,१३। ४—२,६,१४। ५—तथेति मु० नास्ति। ६—स्तम्भ क०।

पुरोडाशमिति१। हे पुरोडाश त्वं 'घर्मोसि'। घृ चरणदीप्त्योः। घर्मशब्देन दीप्यमानः प्रवर्ग्य उच्यते। श्रप्यमाणतया दीप्यमान-
त्वात् प्रवर्ग्योसि। तथा 'विश्वायुः' विश्वं कृत्स्नम् आयुर्यस्मात् सविश्वायुः। यस्माद्यजमानः सर्वमायुराप्नोतीति भावः। का०
'उरुप्रथाइति प्रथयति यावत्कपालमिति२। सर्वकपालेषु संश्लेषयितुं तं प्रसारयेत्। हे पुरोडाश त्वं स्वभावत 'उरुप्रथाः' उरु विस्तीर्णं
यथा तथा प्रथते प्रसरतीत्युरुप्रथाः। अतइदानीमपि "उरु प्रथस्व" प्रख्यातोभव। किञ्च 'ते यज्ञपतिः' तव यजमानः 'उरु' विस्तीर्णं पुत्र-
पश्वादिभिः प्रथतां प्रख्यातोभवतु। का० 'अग्निष्टइत्यङ्गारैरभिमृशतीति३। हे पुरोडाश 'अग्निः' श्रपणाय प्रवृत्तः ते तव 'त्वचं' त्वक्-
सदृशमुपरितनभागं 'मा हिंसीत्' मा विनाशयतु। अतिदाहेन मषीभावोविनाशः सोऽत्र मास्त्वित्यर्थः। अवघातपेषणोत्थः श्रप-
णाज्जायमानश्च हविषउपद्रवोजलस्पर्शेन शाम्यतीति भावः। का० 'देवस्त्वेति श्रपणमिति४। हे पुरोडाश 'सविता देवः' 'वर्षिष्ठे'

**माभेर्मासंविक्था अतमेरुर्यज्ञोतमेरुर्यजमानस्यप्रजाभूयात्त्रितायत्वाद्वितायत्वैकतायत्वा ॥ २३ ॥**

अत्यन्तवृद्धे 'नाके' द्युलोकवर्तिनि नाकनाम्नि अग्नौ 'त्वा' त्वाम् 'अधि' अधिश्रित्य 'श्रपयतु' पक्वं करोतु। मनुष्यस्य श्रपणे-
कर्तृत्वं मा भूदित्यभिप्रेत्य देवस्त्वेत्युच्यते "दिवि नाकोनामाग्निरचोहेति तित्तिरिवचनान्नाकोनाम स्वर्गस्थोऽग्निः ॥ २२ ॥
का० 'माभेरित्यालभत इति'५। हे पुरडाश त्वं 'मा भेः' भयं मा कुर्वीः६। 'मा सं विक्थाः' चलनं मा कार्षीः। ञि भी भये। ओ विजी
भयचलनयोरित्यनयोः प्रयोगौ। का० "अतमेरुरितिशृतावभिवासयति भस्मनावेदेनोपवेषेण वेति७। 'यज्ञो' यागहेतुः पुरोडाशः 'अतमेरुः'
भूयात्। तमु ग्लानौ ताम्यतीति तमेरुः औणादिक एरु प्रत्ययः न तमेरुरतमेरुः। भस्माच्छादनेन ग्लानिरहितोभवतु। यजमानस्य
प्रजा पुत्रपौत्रप्रपौत्रादिः अतमेरुः ग्लानिरहिता भूयात्। यजमानप्रजायाः कदाचिद्दुःखं मास्त्वित्यर्थः। का० 'पात्र्याङ्गुलिप्रचा-

१—२, ५, १९। २—२, ५, २०। ३—५, २, २१। ४—२, ५, २२। ५—२, ५, २३। ६—'कार्षीः' मु० पाठः। ७—२, ५, २५।

अग्नीदानयेदध्वर्युः पवित्राभ्यां प्रतिगृह्णीयात् । 'आपः' उपसर्जनीरूपाः 'ओषधीभिः' 'सं पृच्यन्ताम्' । पृची सम्पर्के सङ्गच्छन्तां सम्यगेकीभवन्तु । तथा 'ओषधयः' पिष्टाख्यारसेन उपसर्जनीरूपेणोदकेन 'सं पृच्यन्ताम्' । आपोहि ओषधीनां रसः । तथा 'रेवतीः' रेवत्यः आपः 'जगतीभिः' पिष्टाख्याभिः 'सं पृच्यन्तां' 'रेवत्यआपोजगत्यओषधयइति[1] श्रुतेः । 'मधुमतीमाः' धुर्योपेताआपः 'मधुमतीभिः' माधुर्योपेताभिः 'सं' पृच्यन्ताम् । अपामोषधीनां परस्परं प्रति हेतुत्वात् सम्पर्कोभवत्वित्यर्थः ॥ २१ ॥

का० 'संयौति जनयत्यैत्वेतीति[2] । अपां पिष्टानाञ्च मिश्रीकरणं संवपनम् । हे जलपिष्टरूपपदार्थद्वय त्वां 'संयौमि' सम्यग्मिश्रीकरोमि ।

जनयत्यैत्वासंयौमीदमग्नेरिदमग्नीषोमयोरिषेत्वाघर्मोसिविश्वायुरुरुप्रथाउरुप्रथस्वोरुतेयज्ञपतिः प्रथतामग्निष्टेत्वचम्माहिᳩसीद्देवस्त्वासविताश्रपयतुवर्षिष्ठेऽधिनाके ॥२२॥

मिश्रीकरोमि । यु मिश्रणामिश्रणयोः । किमर्थं 'जनयत्यै' यजमानस्य प्रजोत्पादनार्थं जलपिष्टयोर्यथा मिश्रणम् । तथा शुक्रशोणितमिश्रणेन यजमानस्य प्रजोत्पत्तिर्भवति तदर्थं त्वां संयौमि । यद्वा । जनयत्यै पुरोडाशोत्पत्त्यै त्वां संयौमि । का० 'समं[3] विभज्यासंहरिष्यन्नालभते इदमग्नेरिदमग्नीषोमयोरितीति[4] । मिश्रीकृतस्य पिष्टस्यावदानाङ्कितं पिण्डद्वयं कृत्वा पुनरमेलयिष्यन् 'इदमग्नेः' अग्निसम्बन्धि भवत्विति प्रथमपिण्डं स्पृशेत् । 'इदमग्नीषोमयोर्भवत्विति द्वितीयं स्पृशेत् । का० 'इषेत्वेत्याज्यमधिश्रयतीति[5] । हे आज्य 'इषे' इष्यमाणवृष्ट्यर्थं त्वामधिश्रयामीति शेषः । आज्यप्रविलापनार्थं तत्कालस्याग्नौ स्थापनमधिश्रयणम् । का० 'घर्मोसीति

१——१, २. २, २ । २——२, ५, १४ । ३——"सं विभज्येति सु० पाठः । ४——२, ५, १५ । ५——२, ५, १७ ।

दधातेर्लुङि बहुलं छन्दस्यमाङ्योगेऽपीति अडागमाभावः। यजमानस्यायुर्वृद्धौ सत्यां कर्मसन्ततिः प्रवर्ततइति भावः। यद्वायमर्थः। पूर्वमन्त्रैर्हविषः प्राणादिदानेन सजीवत्वं कृतम् अनेन पुनरायुर्दीयते हविषः हे हविः 'दीर्घां' प्रसितिं कृष्णाजिनाख्यामनु त्वां धां धारयामि कृष्णाजिने प्रक्षिपामीत्यर्थः। किमर्थम्। 'आयुषे' त्वदीयायुर्वृद्ध्यर्थम्। 'प्रसितिः प्रसयनात् तन्तुर्वा जालं वा' इति[1] यास्कोक्तेरिह पिष्टयाहकत्वात्प्रसितिशब्देन कृष्णाजिनमुच्यते। देवोवइत्यादि मन्त्रशेषोव्याख्यातः। का० 'चक्षुषे त्वेतीक्षते'[2] इति। हे हविः 'चक्षुषे' यजमानस्य चक्षुरिन्द्रियपाटवाय 'त्वा' त्वां पश्यामीति शेषः॥ यद्वा चक्षुषे तव[3]

देवस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णो हस्ता॑भ्याम् । संव॑पामि॒ सम्माप॒ ओष॑धीभिः॒ सम्मोष॑धयो॒ रसे॑न ॥

सꣳरे॒वती॒र्ज्जग॑तीभिः पृच्यन्ता॒ꣳ सम्मधु॑मती॒र्म्मधु॑मतीभिः पृच्यन्ताम् ॥ २१ ॥

चक्षुरादिबाह्येन्द्रियदानाय त्वामीक्षते। हविषः सजीवत्वे कृते चक्षुराद्यपेक्षा भवतीत्यनेन क्रियते इति भावः। का० 'पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यमिति'[4]। हे आज्य त्वं 'महीनां' गवां 'पयोसि' क्षीरमसि क्षीरोत्पन्नत्वात् घृतं पयःशब्देनोच्यते। महीति गोनाम[5] ॥ २० ॥

का० पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्य त्वेति[6]। हस्ताभ्यामित्यन्तं व्याख्यातम्। एतानि पिष्टानि 'संवपामि'। पात्र्यां सम्यक् क्षिपामि। का० 'उपसर्जनीरानयत्यन्यः पवित्राभ्यां प्रतिगृह्णाति समापइतीति'[7]। पिष्टसंवपनीया आप उपसर्ज्जन्यः। ता

१—नि० नै० ६, १२। २—२, ५, ९। ३—'तवेत्यंशो मु० पु० न दृश्यते। ४—२, ५, १०। ५—निघ० २, ११। ६—२, ५, ११। ७—२, ५, १२-१३।

त्वम् 'असि' व्यत्ययेन द्वितीयाबहुवचनम् पतनवारणायान्तरिक्षरूपेण स्तम्भनकारित्वम्। अन्तरिक्षेण हीमे द्यावापृथीवी विष्टब्धे इति[1] श्रुतेः॥ का० 'दृषदुपलां धिषणासीतीति[2]। हे उपले उपरितनशिले त्वं 'धिषणासि' पेषणव्यापारधारकासि किं भूता 'पार्वतेयी' पर्वत्या अधस्तनदृषदः पुत्री पार्वतेयी बालस्वरूपा। 'कनीयसी ह्येषा दुहितेव भवतीति[3] श्रुतिः। अतः "पर्वती" मातृसमा त्वां 'प्रतिवेत्तु' जानातु॥ १९ ॥

का०। "धान्यमसीति तण्डुलानोप्येति[4]। हे हविः त्वं 'धान्यमसि'। धिनोति प्रीणाति धान्यम्। अतो 'देवान्'

धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा॥ दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता

हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोऽसि॥ २० ॥

अग्न्यादीन् 'धिनुहि' प्रीणय। का० 'पिनष्टि प्राणाय त्वेति प्रतिमन्त्रमिति[5]। प्रकर्षेण अनिति सर्वदा मुखे चेष्टत इति प्राणः श्वासवायुः। उदनिति ऊर्द्ध्वं चेष्टत इत्युदानः उत्क्रान्तिवायुः। व्यनिति व्याप्य चेष्टते इति व्यापकोबलहेतुर्वायुः। हे तण्डुल 'त्वा' त्वां 'प्राणाय' प्राणदानार्थं पिनष्मीति शेषः। एवमुत्तरमन्त्रयोर्योज्यं। देवानां सजीवं हविर्भवतीत्यभिमन्त्रैर्हविषां प्राणदानेन सजीवत्वं क्रियत इत्यभिप्रायः॥ का० 'दीर्घामिति कृष्णाजिने प्रोहतीति[6]। प्रसयनं प्रसितिः। षिञ् बन्धने प्रबन्धः कर्मसन्ततिः। दीर्घामविच्छिन्नां 'प्रसितिमनु' कर्मसन्ततिमनुलक्ष्य 'आयुषे' यजमानस्यायुरभिवृद्ध्यर्थं हे हविः त्वा 'धां' कृष्णाजिने दधामि।

१—१, २, १, १६। २—२, ५, ५। ३—१, २, १, १७। ४—२, ५, ६। ५—२, ५, । ६—२, ५ ८७।

प्रयः । का० 'सम विभज्य द्वे दक्षिणत एवमुत्तरतश्चितस्थेतीति'। आग्नेयपुरोडाशस्याष्टकपालत्वाच्चतुर्णां स्थापितत्वादवशिष्टानां चतुर्णां मध्ये द्वे द्वे दक्षिणोत्तरयोर्निदध्यात्। चिञ् चयने क्विबन्तस्य चित इति बहुवचनं। हे कपालविशेषा यूयं 'चितः स्थ' प्रथमकपालोपचयकारिणः स्थ भवथ। तथा 'ऊर्ध्वचितः' स्थ ऊर्ध्वम् उपहितानां द्वितीयादिकपालानां उपकारिणो भवथ। का० 'भृगूणामित्यङ्गारैरभ्यूहतीति'[2]। अङ्गारैः कपालानि छादयेत्। हे कपालानि यूयं 'भृगूणामङ्गिरसां' भृगुनामकानामङ्गिरोनामकानां देवर्षीणां 'तपसा' तपोरूपेणाग्निनानेन 'तप्यध्वम्'। तप्तानि भवत। अस्याग्नेस्तदीयरूपत्वं भावयेदित्यर्थः ॥ १८ ॥

शर्म्मास्यवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु। धिषणासि पर्वती प्रति त्वादित्या

स्त्वग्वेत्तु दिवस्कम्भनीरसि धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु ॥ १९ ॥

का० 'कृष्णाजिनमादत्ते पूर्ववदिति'[3]। यथावघातार्थं कृष्णाजिनप्रयोगस्तद्वदत्रापि। शर्मासि अवधूतम् अदित्याः इति मन्त्रत्रयं व्याख्यातम् ॥ का० 'तस्मिन् दृषदं धिषणासीति'[4]। तस्मिंश्चर्मणि शिलां स्थापयेत्। हे शिले पेषणाधारभूते त्वं 'पर्वती' पर्वतात्मिका तदुत्पन्नत्वात्[5] 'धिषणासि' धियं बुद्धिं कर्म वा धिनोति व्याप्नोति ददाति वा धिषणा कृत्स्नमार्षं। पर्वतवत् धारयन्त्यसि 'अदित्याः' भूमेः 'त्वक्' कृष्णाजिनरूपा तादृशी 'त्वा' त्वां 'प्रति वेत्तु' त्वदवस्थानमवजानातु। का० 'पश्चाच्छम्यामुपोहत्युदीचीं दिव इति'[6]। दृषदः पश्चाद्भागेऽधस्ताच्छम्यां स्थापयेत्। तां प्रत्युच्यते। हे शम्ये 'दिवः' द्युलोकस्य 'स्कम्भनीः' स्तम्भनकारिणी

१—२, ४, ३४। २—२, ४, ३८। ३—२, ५, २। ४—२, ५, ३। ५—"तदुत्पन्ना"—इति मु० पु० पाठः। ६—२, ५, ४।

का० 'सव्याङ्गुल्या शून्येऽङ्गारं निदधात्यग्ने ब्रह्मेतीति'[1]। हे 'अग्ने' निधीयमानाङ्गाररूप 'ब्रह्म' प्रौढं कर्मास्माभिः क्रियमाणं 'गृभ्णीष्व' नाशकरक्षोवधेनानुगृह्णीष्व। यद्वा ब्रह्म ब्राह्मणं मामनुगृह्णीष्व। अङ्गुलीदानासक्तं मा दह इत्यर्थः। का० 'धरुणमिति पश्चादिति'[2]। पूर्वस्थापितकपालस्य पश्चाद्भागे द्वितीयं निदधाति। हे द्वितीयकपाल त्वं 'धरुणं' पुरोडाशस्य धारकम् 'असि'। अतोऽन्तरिक्षं 'दृंह' दृढीकुरु। पुरोडाशपाकोत्पन्नज्वालयान्तरिक्षलोकोपद्रवो यथा न स्यात् तथा कुरु। यद्यप्येतत्कपालं ज्वालान्तरिक्षयोर्मध्ये व्यवधायकं

अग्ने ब्रह्मगृभ्णीष्व धरुणमस्यन्तरिक्षं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय।

धर्त्रमसि दिवं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय। विश्वाभ्यस्त्वाशाभ्य

उपदधामि चितस्थोर्ध्वचितो भृगूणामङ्गिरसां तपसा तप्यध्वम् ॥ १८ ॥

नास्ति तथाप्यन्तरिक्षदार्ढ्याय कपालदेवता प्रार्थ्यते। ब्रह्मवनीत्यादि पूर्ववत्। का० 'पुरस्ताद्धर्त्रमितीति'[3]। प्रथमस्य पूर्वभागे तृतीयं स्थापयेत्। हे कपाल त्वं 'धर्त्रं' धारकम् 'असि'। 'दिवं' दृंह। ज्वालाग्रेण दाहाभावेद्युलोकस्य दार्ढ्यम्। अन्यत् पूर्ववत्। का० 'विश्वाभ्य इति दक्षिणत इति'[4]। हे चतुर्थकपाल 'विश्वाभ्यः आशाभ्यः' सर्वदिग्भ्यः सर्वदिग्दार्ढ्याय 'त्वां' 'उपदधामि'। एवं कपालत्रयोपधानेन यजमानो लोकत्रयं जयति। चतुर्थेन दिशो जयति। तद्वत् पुरोडाशो लोकत्रयरूपो भूत्वा देवताः प्रीणातीत्या-

१—२, ४, ३०। २—२, ४, ३१। ३—२, ४, ३२। ४—२, ४, ३३।

उपवेषस्समादत्ते। हे उपवेष त्वं "धृष्टिरसि" प्रगल्भोसि। जिधृषा प्रागल्भ्ये। तीव्राङ्गाराणामितस्ततश्चालने प्रभुत्वादस्य प्रागल्भ्यम्। का० 'अपाग्नेइत्यङ्गारान् प्राचः करोतीति१। तत्र त्रयोऽग्नयः सन्ति। एकः आमात्। आममपक्वमत्तीत्यामाल्लौकिकोऽग्निः। द्वितीयः क्रव्यात्। शवदाहे क्रव्यं मांसमत्तीति क्रव्यात् चिताग्निः। तृतीयो यागयोग्यः। तथा विद्वान्२ त्रीनङ्गारान् गार्हपत्यात्प्राग्भागे पृथग् कृत्य तेषां मध्ये यागयोग्यो हि एकः द्वावग्नी आमात् क्रव्यात्संज्ञौ तौ वारयितुं गार्हपत्यं प्रत्युच्यते३। हे "अग्ने" हे गार्हपत्य 'आमादमग्निम्' 'अपजहि' परित्यज। व्यवहिताश्चेति क्रियापदोपसर्गयोर्व्यवधानम्। तथा 'क्रव्यादम्' अग्निं 'निःषेध' निःशेषं दूरे गमय परित्यजेत्यर्थः। का० 'आदेवयजमित्यङ्गारमाहृत्येति४। हे गार्हपत्य 'देवयजं' देवानां यागयोग्यं तृतीयमङ्गारम् "आवह" समीपमानय। देवाइज्यन्ते यस्मिन्नसौ देवयाट् तं देवयजम्। का० 'कपालेनावच्छादयति ध्रुवमसीति५। देवयजमङ्गारं कपालेनाच्छादयेत्। हे कपाल त्वं 'ध्रुवमसि' स्थिरं भवसि। अङ्गारोपरि वर्त्तमानमपि इतस्ततो न पतसि। 'पृथिवीं' भूमिं 'दृंह' दृढीकुरु। पुरोडाशपाकसमये त्वत्कृतव्यवधानेन भूमेर्दाहकृतं शैथिल्यं न भविष्यतीत्यर्थः। किञ्च 'त्वाम्' 'उपदधामि' अङ्गारे स्थापयामि। किमर्थं 'भ्रातृव्यस्य' शत्रोरसुरस्य पाप्मनोवा 'वधाय' हिंसार्थं। व्यन् सपत्ने इत्याद्युदात्तत्वात् भ्रातृव्यशब्दः। शत्रु वाची। किम्भूतं त्वां 'ब्रह्मवनि'। वन षण सम्भक्तौ ब्रह्मणा ब्राह्मणेन वन्यते पुरोडाशनिष्पत्त्यर्थं स्वीक्रियते इति ब्रह्मवनिः। तथा 'क्षत्रवनि' सजातवनीति पदद्वयं योज्यम्। सजात्याः समानकुले जाताः यजमानस्य ज्ञातयस्तैर्वन्यत इति॥ १७॥

१——२, ४, २६। २——"तथाविधान्"- इति मु० पाठः। ३——"तेषामध्ये यागयोग्यताहीनौ द्वावग्नी आमात् क्रव्यात्संज्ञौ त्याजयितुं गार्हपत्यं प्रत्युच्यते-इति मु० पाठः। ४——२, ४, २८। ५——२, ४, २९।

तन्नूतजलेन वृद्धं वर्षवृद्धम्। वर्षवृद्धवेणुशलाकानिर्मितत्वात् शूर्पस्य वर्षवृद्धत्वम्। का० 'प्रति त्वेति हविरुद्वपतीति[१]। हे हविः 'वर्षवृद्धं' शूर्पं "त्वा" त्वां 'प्रति वेत्तु' स्वकीयत्वेन जानातु व्रीहिशूर्पयोर्वर्षवृद्धत्वाद्भ्रातृत्वम्। का० "प्रपूतमिति निःपुनातीति[२]। "रक्षः" "परापूतं" निराकृतं शूर्पेण तुषेषु परापूतेषु तद्गतं रक्षोऽपि तैः सह भूमौ पातितम्। "अरातयः" हविः प्रतिकूलाः आलस्यादिशत्रवश्च "प्रपूताः" निराकृताः। का० 'अपहतमिति तुषान्निरस्यतीति[३]। "रक्षः" "अपहतं" दूरेऽपनीय मारितं भूमौ पतितं तान् दूरे निःसारयेत्। का० 'वायुर्वइति विविनक्तीति[४]। हे तण्डुलाः "वायुः" सूर्पचालनोत्थः "वः" युष्मान् "विविनक्तु" सूक्ष्मकणेभ्यः पृथक्करोतु। का० 'देवोवइति पात्रग्रामीप्याभिमन्त्रयते[५] इति। हे तण्डुलाः 'सविता देवः' 'वः' युष्मान् "अच्छिद्रेण"

धृष्टिरस्यपाग्नेऽअग्निमामादञ्जहिनिष्क्रव्याद्ᳬसेधादेवयजं वह। ध्रुवमसिपृथिवीन्दृᳬह

ब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामिभ्रातृव्यस्यवधाय॥ १७॥

पाणिना" अङ्गुलिविश्लेषहीनेन हस्तेन 'प्रतिगृभ्णातु' स्वीकरोतु। हृग्रहोर्भश्छन्दसीति हस्य भः। पात्रीप्रक्षेपसमये भूमौ पतनं मा भूदिति सवितुर्ग्रहणं प्रार्थ्यते। किम्भूतः सविता "हिरण्यपाणिः" हिरण्ययुक्तावङ्गुलीयाद्याभरणयुक्तौ पाणी यस्य स हिरण्यपाणिः। यद्वा दैत्यैः प्राशित्रप्रहारेण छिन्नौ सवितुः पाणी देवैर्हिरण्मयौ कृताविति सवितुर्हिरण्यपाणित्वमिति बह्वृचश्रुतौ कथा॥१६॥

का० 'मूलतः शाखां परिवास्योपवेषं करोतीति। धृष्टिरसीत्युपवेषमादायेति[६] च। पलाशशाखायामूलदेशे छिन्नः काष्ठभाग-

१——२, ४, १७। २——२, ४, १८। ३——२, ४, १९। ४——२, ४, २०। ५——२, ४, २१। ६——२, ४, २५।

का० 'आहन्त्यन्योदृषदुपले कुक्कुटोसीति त्रिः शम्यया द्विर्दृषदं सकृदुपलमिति'[1]। हे शम्यारूपयज्ञायुधविशेष त्वं 'कुक्कुटोसि' असुराणां "मधुजिह्वः" चासि देवानाम्। असुराः क्क क्केति तान् हन्तुमिच्छन्योऽटति सर्वत्र सञ्चरति सः कुक्कुटः। यद्वा कुक कुक्किनशब्दं कुर्वति तनोतीति कुक्कुटः यद्वा कुक्कुटाख्यपच्चिवत् ध्वनिविशेषमसुरार्थं[2] तनोतीति कुक्कुटइत्युपचर्यते। मधु-जिह्वकनामा कश्चिद्देवानां भृत्यः। मधुर्मधुरभाषिणी जिह्वा यस्य तद्रूप हे यज्ञायुध त्वमसुरान् पराभवन् यजमानस्य 'इषमूर्जञ्चावद' अन्नं रसञ्च यथा समागच्छति तथा शब्दं कुरु। तव शब्देनासुरेषु पराभूतेषु तदीयमन्नं रसञ्च यजमानः प्राप्नोति। ततः

कुक्कुटोसि मधुजिह्व इषमूर्जमावद त्वया वयꣳ सङ्घातꣳ सङ्घातञ्जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परा

पूता अरातयोपहतꣳ रक्षो वायुर्वो विविनक्तु देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ॥ १६ ॥

'त्वया' कृत्वा "वयं सङ्घातं सङ्घातं" 'जेष्म' असुरैः सह क्रियमाणं तं संग्रामं जेष्म जयेम। कदाचिदपि पराजयोऽस्माकं मास्त्वि-त्यर्थः। सम्यक् हन्यन्ते असुरा यत्रेति सङ्घातो युद्धम्। मनोराज्ञ एकोवृषभ आसीत्तस्मिन्नसुरघ्नी वाक् स्थिता तस्मिन् शब्दं कुर्वति तस्य श्रुत्वैवासुरा म्रियन्ते। ततः किलाताकुलीनामानावसुरयाजकावनुगत्वा तेनैव ऋषभेण याजयताम् ऋषभे हते सा वाङ्मनोर्जायां प्रविष्टा। तौ पुनस्तयापि मनुमयाजयताम्। ततः सा वाग्यज्ञपात्राणि प्रविष्टेत्यसुरपराभवाय। तद्वाक्प्रकटनार्थं शम्यया दृषदुपलहननमिति श्रुत्योक्ताभिप्रायः। का० "वर्षवृद्धमसीति शूर्पमादत्तइति"[3]। हे शूर्प त्वं 'वर्षवृद्धमसि' वर्षेण वृद्धा-

[1]——२, ४, १४। [2]——'असुरभीत्यर्थं' इति मु० पाठः। [3]——२, ४, १६।

का० 'हविरावपत्यग्नेस्तनूरसीतीति[1] । हे हविः त्वं "अग्नेः" आहवनीयस्य "तनूः" शरीरमसि । इतस्त्वं त्रिप्तं हविरग्निर्भवति अतोहविः अग्नेस्तनूः । किंभूतं हविः । "वाचोविसर्जनम्" अपां प्रणयनकाले नियमिताया यजमानवाचो हविरावपनकाले विसर्गो भवति । तस्मादिदं हविर्वाचोविसर्जनम् । अतो 'देववीतये' देवानां तर्पणाय 'त्वा' त्वां 'गृह्णामि' आवपामीत्यर्थः। का० 'बृहद्ग्रावेति मुसलमादत्तइति[2] । हे मुसल त्वं यद्यपि "वानस्पत्यः" दारुमयस्तथापि 'ग्रावासि' दार्ढ्येन पाषाणसदृशोसि । तथा दीर्घत्वेन 'बृहत्' महद्असि । का० 'सइदमित्यवदधातीति[3] । हे मुसल त्वं 'देवेभ्यो' अग्न्यादिदेवोपकारार्थम् 'इदं' हविर्व्रीहिरूपं 'शमीष्व' शमय ।

**अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि बृहद्ग्रावासि वानस्पत्यः स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व । हविष्कृदेहि हविष्कृदेहि हविष्कृदेहि ॥ १५ ॥**

भक्षणविरोधितुषापनयनेन शान्तं कुरु । तस्यैव पदस्य व्याख्यानं 'सुशमीष्व' सुष्ठु शान्तं यथा भवति तथा शमीष्व । शम उपशमे व्यत्ययेन शपोलुक् । तुरुस्तुशम्यमः सार्वधातुकइति ईडागमः । शान्तिर्द्विविधा । वाह्यतुषापनयनादाद्या सा प्रथमावघातेन स्यात् । अन्तःस्थितमालिन्यस्यापनयनादन्या सा फलीकरणेन भवति । तं द्विविधं संस्कारं कुर्वित्यर्थः । का० 'हविष्कृदेहीति त्रिराह्वयतीति[4] । यजमानः पत्नी वान्योवा योव्रीहीनवहन्ति तं सम्बोध्याह्वयते हे "हविष्कृत्" हविः करोतीति हविष्कृत् 'एहि' अत्रागच्छ । त्रिवारमुक्तमर्थं देवा मन्यन्त इति त्रिराह्वानम् ॥ १५ ॥

१—२, ४, ६ । २—२, ४, ११ । ३—२, ४, १२ । ४—२, ४, १३ ।

का० 'शर्मासीति कृष्णाजिनादानमिति१ । हे कृष्णाजिन त्वमुलूखलस्य धारणार्थं 'शर्म' सुखहेतुरसि । अजिनस्य चर्मेति मानुषं नाम शर्मेति दैवं नाम । का० 'अपेत्य पात्रेभ्योऽवधूनोत्यवधूतमितीति२ । 'रक्षः' कृष्णाजिने गूढम् 'अवधूतं' कृष्णाजिनकम्पनेन भूमौ पातितम् एवमरातयोपि पातिताः । का० 'प्रत्यग्ग्रीवमास्तृणात्यादित्यास्त्वगिति३ । हे कृष्णाजिन त्वम् 'अदित्याः' भूमिदेवतायाः त्वग्रूपम् असि । ततोऽदितिर्भूमिस्त्वा त्वां 'प्रति वेत्तु' प्रतिगृह्य मदीयेयं त्वगिति वेत्तु जानातु । पुरा यज्ञो देवेषु रुष्टः कृष्णमृगो भूत्वागमत्तदा देवाः ज्ञात्वा तदीयां त्वचमुत्थिय जगृहुस्तस्माच्चर्मास्तरणमित्यभिप्रायः श्रुतावाम्नातः४ । का० 'सव्याशूल्ये निदधात्युलूखलमद्रिरसि ग्रावासीतिवा प्रतित्वेत्युभयोरिति५ । विकल्पितयोर्मन्त्रयोः प्रतित्वेति शेषो योजनीयः । हे उलूखल त्वं यद्यपि 'वानस्पत्यः' दारुमयस्तथापि दृढत्वाद् 'अद्रिरसि' पाषाणोसि किम्भूतः 'पृथुबुध्नः' स्थूलमूलः मूसलघातोपद्रवेण चाञ्चल्यराहित्याय मूलस्थूलत्वं हे उलूखल तथाविधस्त्वं 'ग्रावासि' दार्ढ्येन पाषाणसदृशोसि । 'अदित्यास्त्वक्' अधस्तादास्तीर्णा कृष्णाजिनरूपा भूमिस्त्वगस्ति सा त्वां 'प्रतिवेत्तु' स्वकीयत्वेन जानातु ॥ १४ ॥

शर्मास्यवधूतꣳरक्षोवधूताअरातयोदित्यास्त्वगसिप्रतित्वादितिर्वेत्तु ।

अद्रिरसिवानस्पत्योग्रावासिपृथुबुध्नःप्रतित्वादित्यास्त्वग्वेत्तु ॥ १४ ॥

१—२, ४, १ । २—२, ४, २, । ३—२, ४, ३ । ४—१, १, ४, १ । ५—२, ४, ४—५

हे आपः 'इन्द्रो' देवः 'वृत्रतूर्ये' तूर्यतिर्वधकर्म्मा वृत्रवधे निमित्तभूते सति 'युष्माः' युष्मान् 'अवृणीत'। आकारश्छान्दसः। सहकारित्वेन प्रार्थितवान्। 'यूयम्' अपि 'वृत्रतूर्ये' निमित्ते तम् 'इन्द्रं' 'वृणीध्वं' वृतवत्यः सहकारित्वेन। का० 'प्रोक्षिताःस्थेति तासां प्रोक्षणमिति[1]। हे आपो यूयं 'प्रोक्षिताः' भवथ असंस्कृता अन्यसंस्कारक्षमा न भवन्तीति। का० 'हविषश्चाग्नये त्वाग्नीषोमाभ्यांत्वेति यथादेवतमन्यदितिर[2]। अन्यदपि हविस्तद्देवतोच्चारेण प्रोक्षणीयम्। 'अग्नये त्वा जुष्टं प्रोक्षामि। अग्नीषोमाभ्यां त्वा जुष्टं

युष्माऽइन्द्रोऽवृणीत वृत्रतूर्य्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्ये प्रोक्षिता स्थ। अग्नये त्वा जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि। दैव्याय कर्म्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि॥ १३॥

प्रोक्षामि'। का० 'पात्राणि दैव्यायेति[3]। कृष्णाजिनोलूखलादीनि पात्राणि प्रोक्षयेत्। हे यज्ञपात्राणि! यूयं 'शुन्धध्वम्' शुद्धानि भवत। किमर्थम् 'दैव्याय कर्म्मणे' अग्न्यादिदेवतासम्बन्धिने कर्म्मणे। तदेव कर्म्म विशिष्यते। 'दैवयज्यायै' देवसम्बन्धिन्यै यागक्रियायै। किञ्च! 'अशुद्धाः' नीचजातयस्तक्षादयो 'वो' युष्माकं सम्बन्धि यदङ्गं 'पराजघ्नुः' पराहतं कृतवन्तः। छेदनतक्षणादिकाले स्वकीयहस्तस्पर्शरूपमशुचित्वं चक्रुः। 'तदिदं' 'वो' युष्माकमङ्गं 'शुन्धामि' प्रोक्षणेन शुद्धं करोमि॥ १३॥

१—२, २, २६। २—२, २, ३७-३८। ३—२, ३, ३९।

‘सूर्यस्य रश्मिभिः’ शुद्धिहेतुभिः उत्पुनामीति सम्बन्धः। वायोः सूर्यरश्मिनाञ्च पादप्रचालनाद्युपहतभूमिशुद्धिहेतुत्वं प्रसिद्धम्। का० ‘सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीरापइति[1]। उत्पूताभिरद्भिः पूरितामग्निहोत्रहवणीं सव्यहस्ते स्थापयित्वा मन्त्रमुच्चारयन् दक्षिणहस्तेनोर्ध्वं चालयेदिति सूत्रार्थः। मन्त्रार्थस्तु—हे ‘देवीः आपः’ द्योतनात्मिका आपो यूयम् ‘अद्य’ अस्मिन् दिने ‘इमम्’ इदानीं प्रवर्त्तमानं यज्ञम् ‘अग्रे’ ‘नयत’ पुरतः प्रवर्त्तयत निर्विघ्नं समापयत। किम्भूताः आपः ‘अग्रेगुवः’ अग्रे गच्छन्ति इत्यग्रेगुवः पुरतो निम्नप्रदेशं प्रति गमनशीलाः। तथा ‘अग्रेपुवः’ अग्रे पुनन्ति अग्रेपुवः। अग्रे यस्मिन् पूर्वभागे गच्छन्ति तस्मिन्नुपहतिनिवारणेन शोधनशीलाः। यद्वा। अग्रे पिबतीत्यग्रेपुवः। प्रथमं सोमरसस्य पानकर्त्र्यः। गमेः क्विप्प्रत्यये गमः क्वावित्यनुनासिकलोपे पुनातेः पिबतेर्वा क्वौ ऊङ् च गमादीनामित्युकारः। किं च ‘यज्ञपतिं’ यजमानमग्रे नयतेत्यनुवर्त्तते। फलभोगाय प्रेरयत। कथम्भूतम् “सुधातुम्” सुष्ठु दक्षिणादिना दधाति यज्ञं पुष्णातीति सुधातुस्तं ‘यज्ञस्य पतिं’ पालयितारम्। एको यज्ञपतिशब्दो योगेन व्याख्येयः एको रूढ्या। तथा “देवयुवम्”। यु मिश्रणे देवान्यौति यज्ञादिना मिश्रीकरोति देवयुस्तम्। क्विप्। अनित्यमागमशासनमिति तुगभावः। यद्वा देवान् कामयते इति देवयुस्तम्। ‘इदंयुरिदं कामयमान इति[2] यास्कोक्तेः। सुप आत्मनः क्यजिति क्यच्। क्यचि चेतीत्वे प्राप्ते न छन्दस्यपुत्रस्येति ईत्वाभावः। अश्वाघस्यादिति अश्वाघयोरेवात्वविधानादकृत्सार्वधातुकयोरिति प्राप्तो दीर्घो न भवति। ततः क्याच्छन्दसीति उप्रत्ययः। देवयुशब्दस्यामि परेऽमि पूर्व इति प्राप्तस्य वा छन्दसीति विकल्पेन तन्वादीनां वा इयङुवङाविति उवङ्॥ १२॥

१—२, ३, ३५। २—नि० नै० ६, ३१।

हन्तामित्यवरोहतीति[१]। 'पृथिव्यां' वर्त्तमाना: 'दुर्या:' गृहा: 'दृंहन्तां' दृढा भवन्तु। अनेन मन्त्रेण शकटम् अवहरोयेत्[२]। दुरो-द्वाराण्यर्हन्तीति दुर्या: गृहा: हविर्गृहीत्वोत्तरतोऽध्वर्योर्भारेण गृहक्षोभ: सम्भाव्यते। सोऽनेन मन्त्रेण वार्य्यते। का० 'गच्छत्यु र्वन्त-रिक्षमितिः[३] व्याख्यातम्। का०'अपरस्य पश्चात्सादयति पृथिव्यास्त्वे तीति[४]। हे हवि: 'पृथिव्यानाभौ' मध्ये 'त्वा' 'सादयामि' स्थापयामि। तस्यैव व्याख्यानम् 'अदित्या उपस्थे' इति। उपस्थे स्वाङ्के यथा सुप्तं बालं पुत्रं माता स्वाङ्के स्थापयति। एवमिदं हवि: अदित्या उपस्थे भूम्या अङ्के 'सादयामि'। हे 'अग्ने' तव समीपे स्थापितमिदं 'हव्यं' त्वं 'रक्ष'। सुप्तपुत्रमिव बाधकेभ्य: पालय ॥११॥

पवित्रेस्थोवैष्णव्यौसवितुर्व:प्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभि:। देवीरापोअग्रे

गुवोअग्रेपुवोग्रइममद्ययज्ञन्नयताग्रेयज्ञपतिंसुधातुंयज्ञपतिन्देवयुवम् ॥ १२ ॥

का० 'कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशै: छिनत्ति पवित्रे स्थइति त्रीन्वेति[५]। वैष्णवे इति प्राप्ते व्यत्ययोबहुलमिति स्त्रीत्वम्। हे 'पवित्रे' शोधके कुशद्वयरूपे युवां 'वैष्णव्यौ' यज्ञसम्बन्धिनौ 'स्थ:' भवथ: 'यज्ञोवै विष्णुर्यज्ञियेस्थइति[६] श्रुते:। का० 'हविर्ग्रहण्यामप: कृत्वा ताभ्यामुत्पुनाति सवितुर्वइति[७]। 'सवितु:' प्रेरकस्य 'प्रसवे' प्रेरणे सति। हे 'आप:' 'व:' युष्मान् 'उत्पुनामि' उत्कर्षेण शोधयामि। केन 'अच्छिद्रेण' छिद्रहीनेन 'पवित्रेण' शोधकेन वायुरूपेण। 'यो वा अयं पवतएषोच्छिद्र: पवित्रमिति[८] श्रुते:।

१—२, ३, २५। २—"शकटादवरोहयेत्" मु० पाठ:। ३—२, ३, २६। ४—२, ३, २७। ५—२, ३, ३२।
६—१, १, ३, १। ७—२, ३, ३३। ८—१, १, ३, ६।

अश्विनौ हि देवानामध्वर्यू पूषाहि देवानां भागधुक्। अतोग्रहणसाधनयोः स्वबाह्वोरश्विबाहुभावना कार्या हस्तयोस्तु पूषहस्तभावनेति भावः। सर्वात्मकस्याग्नेर्हविस्त्वाहृशं मनुष्येण कथं गृहीतुं शक्यमिति सवित्रानुज्ञातोऽश्विबाहुभ्यां पूष्णोहस्ताभ्यां गृह्णामीत्यर्थः। किञ्च सत्यं देवाअनृतंमनुष्याइति[1] श्रुतेः। देवानां सत्यरूपत्वात् तदनुस्मृतिपूर्वकं हविर्ग्रहणम् फलपर्यवसायित्वात्सत्यं भवति। देवतास्मृत्यभावे तु मनुष्याणामनृतरूपत्वात्तत्कृतमनुष्ठानं निष्फलत्वादनृतं भवतीति देवतास्मरणमित्यभिप्रायः। हविर्गृह्णन्तमध्वर्युं देवताः सेवन्ते मम नाम गृहीष्यतीति। अनामग्रहं हविषि गृहीते तासाम्मिथः कलहोभवेदिदं मदर्थमेव गृहीतमिति तत्कलहनिवृत्त्यर्थमग्नये जुष्टमग्नीषोमाभ्यां जुष्टमिति देवतानिर्देशपूर्वकं हविर्ग्रहणमित्यभिप्रायः ॥ १० ॥

भूतायत्वानारातयेस्वरभिविख्येषंदृᳬंहन्तान्दुर्य्याःपृथिव्यामुर्वन्तरिक्षमन्वेमि। पृथिव्यास्त्वा

नाभौसादयाम्यदित्याउपस्थेग्नेहव्यᳬंरक्ष ॥ ११ ॥

का० 'भूतायत्वेति शेषाभिमर्शनमिति[2]। हे व्रीहिशेष कटावस्थित 'भूताय' भयवनाय यागान्तराणां ब्राह्मणभोजनस्य च पुनरपि सद्भावाय 'त्वा' त्वां परिशेषयामीति शेषः। 'न' 'अरातये' अदानाय शेषयामि। का० 'स्वरिति प्राङ्ङीक्षते[3] इति। अहं 'स्वः अभिविख्येषं' यज्ञं पश्येयं 'यज्ञोवैस्वरहर्देवाः सूर्य इति[4] श्रुतेः। यज्ञदिवसे देवसूर्यौ स्वः शब्देनोच्यन्ते। स्वर्गहेतुत्वादपि स्वः शब्देन यज्ञः। ख्या प्रकथने। 'अभिविख्येषम्' अभितोविशेषेण ख्यापयेयम् पश्येयमित्यर्थः। अनेन मन्त्रेण प्राङ्मुखोयज्ञभूमीं वीक्षते। का० 'दृᳬं

१——१, ९, २, १७। २——२, ३, २३। ३——२, ३, २४। ४——१, १, २, २२।

वायुसञ्चाराय विस्तीर्णं भव। शकटस्य व्रीहीणां तृणाद्याच्छादितत्वाच्छङ्कोचे वायुप्रवेशाभावादाच्छादनमपनीय यथा वायुः प्रविशति तथा सङ्कोचं परित्यजेत्यर्थः। वायुरूपप्राणप्रवेशाद्धविः सप्राणं क्रियते मन्त्रेण। किञ्च। वायुप्रवेशरहितं सर्वं वस्तु वरुणदेवत्यं भवति। वरुणश्च बन्धकारित्वाद् यज्ञनिरोधकस्तन्निवृत्त्यर्थमयं मन्त्रः। 'यद्वै किञ्च वातोनाभिभवति तत्सर्वं वरुणदेवत्यमुरुवातायेत्याह वारुणमेवैतत्करोतीति तित्तिरिवचनात्॥ का० 'अपहतमिति निरस्यत्यन्यद्विद्यमानेऽभिमृशेद्रिति'[1]। व्रीहिभ्योन्यत्तृणादिकं यदि तत्र भवेत्तदनेन निरस्येत् तृणाद्यभावे व्रीहिनभिमृशेदिति सूत्रार्थः। अथ मन्त्रार्थः—'रक्षः' यज्ञविघातकम् 'अपहत'

देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम्।

अग्नयेजुष्टंगृह्णाम्यग्नीषोमाभ्याञ्जुष्टङ्गृह्णामि॥ १०॥

निराकृतं तृणादिकमेव रक्ष उच्यते॥ का० 'यच्छन्तामित्यालभते'[2] इति। 'पञ्च' पञ्च सङ्ख्याका अङ्गुलयो व्रीहिरूपं हविः 'यच्छन्तां' नियच्छन्तु। अनेन पञ्चाङ्गुलियुक्तेन मुष्टिना व्रीहिन् गृह्णीयादित्यर्थ उक्तो भवति॥ ९॥

का० 'देवस्यत्वेति गृह्णात्याग्नेयं चतुरो मुष्टीनेवमग्नीषोमीयं यथा देवतमन्यद्रिति'[3]। हे हविः 'सवितुर्देवस्य' 'प्रसवे' प्रेरणे सति तेन प्रेरितोऽहम् 'अग्नये' 'जुष्टं' प्रियं 'त्वा' 'गृह्णामि'। 'अग्नीषोमाभ्यां' व्यासक्तदेवताभ्यां च 'जुष्टं' त्वा 'गृह्णामि'। काभ्याम् 'अश्विनोर्बाहुभ्यां' 'पूष्णोहस्ताभ्यां' च। अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः पञ्चाङ्गुलियुक्ताग्रभागो हस्तः।

१——२, ३, १७—१८। २——२, ३, १९। ३——२, ३, २०-२१।

का० 'देवानामित्युपस्तम्भनस्य पश्चाद्दोषामितिः'। शकटस्य दीर्घं काष्ठमीषा तदग्रस्य भूमिस्पर्शोमाभूदिति ॥ तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनं तस्य पश्चाद्भागे तामीषां स्पृशेत्। देवानामसि। हे शकट त्वं "देवानां" सम्बन्धि "असि" भवसि। किञ्च त्वं 'वह्नितमम्' वह प्रापणे। वहतीति वह्निः वह्नितमं व्रीहिरूपस्य हविषोऽतिशयेन प्रापकम्। तथा 'सस्नितम' ष्णा शौचे। अतिशयेन शुद्धम्। आदृगमेत्यादिना कि प्रत्ययः। यद्वा। स्ने वेष्टने। दाढ्याय चर्मादिभिरतिशयेन वेष्टितम्। "पप्रितमम्"। प्रा पूरणे व्रीहिभिरतिशयेन पूरितम्। 'जुष्टतमं' जुषी प्रीतिसेवनयोः। देवानामतिशयेन प्रियम्। 'देवहूतमम्'। ह्वेञ् स्पर्धायां शब्दे च। देवानामतिशयेन ह्वाद्य। व्रीहिपूर्णं शकटं दृष्ट्वा देवाआहूताइव शीघ्रमागच्छन्ति ॥ ८ ॥

अह्रुतमसि हविर्धानं दृꣳहस्वमाह्वार्मा ते यज्ञपतिर्ह्वार्षीत्।*

विष्णुस्त्वाक्रमतामुरुवातायापहतꣳरक्षो यच्छन्तां पञ्च ॥ ९ ॥

अह्रुतमसि। ह्वृ कौटिल्ये। क्तप्रत्ययः। ह्रुह्वरेश्छन्दसीति निष्ठायां ह्रु आदेशः। "अह्रुतम्" अकुटिलम् "असि"। आरोहणेपि भङ्गभीति र्नास्तीत्यर्थः। "हविर्धान" डुधाञ् धारणपोषणयोः। हविषोव्रीहिरूपस्य धारकं पोषकं भवसि। अतो "दृꣳहस्व" मा ह्वाः मां ते यज्ञपतिर्ह्वार्षीदिति। पूर्ववद्व्याख्येयम्। का० 'विष्णुस्त्वेत्यारोहमितिः'। हे शकट "विष्णुः" व्यापकोयज्ञः 'त्वा' त्वां "क्रमतां" पादेनाक्रम्यारोहतु नाहं समर्थइति भावः। का० 'प्रेचेत उरुवातायेति हविर्धानितिः'। हे शकट "वाताय" "उरु" भवेति शेषः। तदन्तर्वर्तिव्रीहिषु

१——२, ३, १४, २——२, ३, १५। ३——२, ३, १६। * "ह्वार्षीत्"-इति मु० पाठः।

निःशेषेण तप्तं -संतप्तम्। तप सन्तापे। 'अरातयः' च निष्टप्ताः। अनयोर्मन्त्रयोर्विकल्पः॥ का० 'गच्छतुर्वन्तरिक्षमन्वेमीति'[१]। 'उरु' विस्तीर्णम् 'अन्तरिक्षम्' 'अवकाशम्' 'अन्वेमि' अनुसृत्य गच्छामि। गच्छतः पुरुषस्य पार्श्वयोरेव स्थितं रक्षोऽनेन मन्त्रेण निराक्रियते इत्याशयः॥ ७॥

का० 'अपणस्य पश्चादनस्तिष्ठन्तसमङ्गि धूरसीति धुरमभिमर्शनमिति[२]। अस्यायमर्थः—'अपणस्य पुरोडाशपाकहेतोर्गार्हपत्यस्य पश्चादनः' शकटं व्रीहियुक्तं तिष्ठति। तच्च "समङ्गि" सम्यगङ्गानि यस्य तत् सर्वाङ्गोपेतं तस्य 'धुरं' बलीवर्दवहनयोग्यं युगप्रदेशं धूर-

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः। देवानामसि वह्नितमꣳ

सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्॥ ८॥

सीति मन्त्रेण स्पृशेदिति॥ अथ मन्त्रार्थः—व्रीहिरूपहविर्धारकशकटसम्बन्धिनी युगस्य बलीवर्दवहनप्रदेशे कश्चिद्धिंसकोऽग्निः शास्त्रदृष्टोऽस्ति तं प्रार्थयते। 'अग्निर्वा एष धुर्यस्तमेतदत्येष्यन् भवतीति[३] श्रुतेः। हे वह्ने त्वं "धूरसि" हिंसकोऽसि। तुर्वीधुर्वीदुर्वीधुर्वी हिंसार्थाः धुर्वतेः क्विप्। यतो धूरसि अतो 'धूर्वन्तं' हिंसन्तं पाप्मानं 'धूर्व' विनाशय। किञ्च 'यः' राक्षसादिर्यागविघ्नेन 'अस्मान्' "धूर्वति" हिंसितुमुद्युक्तस्तमपि "धूर्व" विनाशय "यं" च "वयं" "धूर्वामः" तमपि 'धूर्व' यमालस्यादिरूपं वैरिणं वयमनुष्ठातारो धूर्वामो हिंसितुमुद्यतास्तमपि धूर्व विनाशय। शकटस्थिताग्न्यतिक्रमणनिमित्तमपराधमपक्रोतुमग्न्याधारभूता शकटस्य धूरनेन मन्त्रेण स्पृश्यते॥

१—२, ३, १२। २—२, ३, १३। ३—१, १, २, १०।

यतीति प्रश्नः। तच्छब्दः प्रसिद्धार्थवाची। सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति 'सः' एव परमेश्वरः हे पात्र 'त्वा युनक्ति'—इत्युत्तरम्। पुनरपि 'कस्मै' प्रयोजनाय 'त्वा युनक्ति'—इति प्रश्नः। 'तस्मै' प्रजापतये तत्प्रीत्यर्थं 'त्वा युनक्ति'—इत्युत्तरम्। सर्वकर्माणि परमेश्वरप्रीत्यतुष्टेयानीति भगवद्गीतास्वर्जुनं प्रति भगोवतोक्तम्[1]। परिस्तीर्य इन्द्वशः पात्राण्यासाद्य शूर्पं चाग्निहोत्रहवणीं चादत्ते। का० 'कर्मणे वामिति शूर्पाग्निहोत्रहवण्यादायेति[2] ॥ 'कर्मणे' हे अग्निहोत्रहवणि हे शूर्प वां युवां कर्मार्थमहमाददइति शेषः। 'वेषाय' च। विषॢ व्याप्तौ घञ्। वेषो व्याप्तिः। सूचितकर्मसु व्याप्त्यर्थं च 'वां'

कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति। कर्मणे वां वेषाय वाम् ॥ ६ ॥

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः। उर्वन्तरिक्षमन्वेमि ॥ ७ ॥

युवामहमाददे। शकटेऽवस्थितानां व्रीहीणां हविरर्थं पृथक्करणं प्रेक्षणार्थोदकधारणमित्यादयोऽग्निहोत्रहवणीव्यापाराः। व्रीहिनिर्वापधारणमुलूखले व्रीहिप्रक्षेपः पुनरुद्धरणं चेत्यादयः शूर्पव्यापाराः ॥ ६ ॥

का० 'प्रतपनं प्रत्युष्टं निष्टप्तमिति वेति[3]। 'रक्षः' राक्षसजातिः। 'प्रत्युष्टं' प्रत्येकं दग्धम्। उष दाहे। अनेनाग्निहोत्रहवणीशूर्पयोः प्रतपनेनात्र स्थिता राक्षसा दग्धा इत्यर्थः। अरातयोऽपि प्रत्युष्टाः प्रत्येकं दग्धाः। रा दाने। हविषो दक्षिणाया वा दानं रातिः। रातिः प्रतिबन्धका अरातयस्तेऽपि दग्धा अन्यथा न यज्ञसाधनमित्यर्थः। शूर्पादौ निगूढं 'रक्षो निष्टप्तं'

१——भ० गी० १८, ५६; ९, २७; ४, २४। २——२, ३, १०। ३——२, ३, ११।

का० । 'अपरेणाहवनीयं प्राङ्तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमिति वेति[1] ॥ हे व्रतपते व्रतस्यानुष्ठेयस्य कर्मणः पते पालक हे अग्ने त्वदनुज्ञया 'व्रतं चरिष्यामि' कर्मानुष्ठास्यामि । 'तत् शकेयम्' तत्कर्मानुष्ठातुं शक्तो भूयासं त्वत्प्रसादात् 'तन्मे राध्यतां' मदीयं तत्कर्म निर्विघ्नं सत् फलपर्यन्तं सिध्यतु । शकेराशीर्लिङ्यात्मनेपदम् । लिङ्याशिष्यङ् । अतोयेयः । गुणः । शकेयम् । 'अग्निर्वै देवानां व्रतपतिरिति'[2] श्रुतिः ॥ इदमहम् ॥ 'अहं' यजमानोऽस्मादनृतान्मनुष्यजन्मन उद्धृत्य 'सत्यं' देवताशरीरम् 'उपैमि' प्राप्नोमि । सत्यमनुष्ठीयमानकर्मरूपेण प्रत्यक्षमिति मन्वान इदमिति विशिनष्टि । अनृतं मनुष्यजन्म शीघ्रविनाशित्वात् । यथा स्वप्नगजादयो बोधमात्रेण शीघ्रं निवर्त्तमाना अनृता उच्यन्ते । सत्यं देवजन्म बहुकालस्थायित्वात् । यथा जागरणगजादयः ।

**अग्ने व्रतपते व्रतञ्चरिष्यामि तच्छकेयन्तन्मे राध्यताम् । इदमहमनृतात्सत्यमुपैमि ॥ ५ ॥** १।५।३०

श्रुतिरपि—'इदमहमनृतात्सत्यमुपैमीति तन्मनुष्येभ्यो देवानुपावर्तत इति'[3] । यद्वा लोकप्रसिद्धे एव सत्यानृते ग्राह्ये । नानृतं वदेदिति कर्मण्यनृतनिषेधात् । अनृतवदनादुद्धृत्याहमिदं सत्यवदनमुपैमि । अत इदं सत्यवदनं कर्माङ्गत्वात्कर्मकाले पालनीयम् ॥ ५ ॥

एवं व्रतमुपेत्य ब्रह्माणं हुत्वापां प्रणयनं कुर्यात् । का० 'ब्रह्मन्नपः प्रणेष्यामि यजमानवाचं यच्छेत्याहानुज्ञात उत्तरेणाहवनीयं सम्प्रति निदधाति कस्त्वा युनक्तीति'[4] ॥ अत्र मन्त्रं प्रयुञ्जानोऽध्वर्युर्यज्ञारम्भकर्मण्यात्मनः कर्तृत्वमपनीय प्रजापतेर्यज्ञकर्तृत्वं प्रश्नोत्तररूपाभ्यां मन्त्रवाक्याभ्यां प्रतिपादयति । प्रणीतानामपां धारक हे पात्र 'त्वां' कः पुरुषो 'युनक्ति' आहवनीयस्योत्तरभागे स्थाप-

१—४, २ २५ । २—४, २, २६ । ३—४, २, ३३ । ४—'जीर्णं सहलहेतुर्भवति' इति मु० पाठः । ५—४, २, ३४ । ६—२, २, ११ । ७—१, १, १, २ । ८—१, १, १, ४ । ९—२, २, २, ३ ।

का०१ 'प्रोक्ते साविश्वायुरित्याहेति१ । पूर्व्वोक्तप्रश्नस्योत्तरे असुं गामिति दोग्ध्रा प्रोक्ते सति साविश्वायुरिति मन्त्रेण दोग्धारमध्वर्युर्ब्रूयात् । या गौस्त्वया दुग्धा मया च पृष्टा 'सा' 'विश्वायुः' शब्देनाभिधेया विश्वमायुर्यस्याः सा विश्वायुः । यजमानस्य सम्पूर्णं आयुः प्रयच्छतीत्यर्थः ॥ का० 'एवमितरे उत्तराभ्यामिति२ । यथा प्रथमा गौः पृष्टा एवमितरे द्वितीयतृतीये गावौ तद्दोहनादुर्ध्वं कामधुक्च इति मन्त्रेण प्रष्टव्ये । दोग्धा तूत्तरेऽमूमिति प्रोक्ते सा विश्वकर्मा सा विश्वधाया इति मन्त्राभ्यां क्रमेण तयोराशिषं ब्रूयात् । या द्वितीया गौस्त्वया पृष्टा 'सा' 'विश्वधायाः' । डुधाञ् धारणपोषणयोः । विश्वान् सर्व्वान् देवान् दधाति चोरद्व्यादि-हविर्द्दानेन पुष्णाति इति विश्वधायाः । असुन् प्रत्ययो णिच्च । णित्वादातोयुक्चिण्कृतोरिति युक् । यद्वा धेट् पाने विश्वा-

**साविश्वायुः साविश्वकर्मा साविश्वधायाः । इन्द्रस्यत्वाभागꣳसोमेनातनच्मिविष्णोहव्यꣳरक्ष ॥ ४ ॥**

निन्द्रादिदेवान् चोरादि हव्यं धापयति पाययतीति विश्वधायाः ॥ का० 'उद्वास्यातनक्ति प्राग्घुतशेषेणेन्द्रस्यत्वेति३ ।- कथितं चोरमग्नेरुद्वास्य मन्दोष्णं तत्र प्रातःकालीनहोमावशिष्टेन दध्ना दधिनिष्पत्तये आतञ्चनं कुर्य्यात् । हे चोर 'इन्द्रस्य भागं' त्वां 'सोमेन' सोमवल्लीरसेन 'आतनच्मि' दध्यर्थां कठिनीकरोमि । तञ्चतिः कठिनीकरणार्थः । यद्यप्यत्रातञ्चनहेतुर्दधिशेषस्तथापि भावनया तस्यैव सोमत्वं सम्पाद्यते । यथा कश्चित्पुमान् बन्धुत्वे भावितोबन्धुर्भवति । प्रातिकूल्येन भावितः शत्रुश्च । तदुक्तं वसिष्ठेन— 'बन्धुत्वे भावितोबन्धुः परत्वे भावितः परः । विषामृतदृशैवेह स्थिति भावनिबन्धनीति । भोज्यं वा विषत्वेन भावितं वान्तिं करोति । अमृतत्वेन भावितं जीवनहेतुर्भवति४ । तथात्र दधिशेषस्य भावनया सोमत्वम् ॥ का० 'सोदकेनापि दधान्यमृण्मयेन विष्णोहव्यमि-तीति५ । हे 'विष्णो' इदं 'हव्यं' चोरं 'रक्ष' । सर्व्वत्र सृष्टौ पालने संहारे च ब्रह्मविष्णुमहेश्वराअभिमानिन्यो देवताः अतो विष्णुं सम्बोध्य हविषोरक्षा प्रार्थ्यते ॥ ४ ॥

त्वद्दिष्टक्षीरस्कन्दनेनानुष्ठानविघ्नएव यजमानस्य कौटिल्यम्। तच्च त्वद्दार्ढ्येन कौटिल्याभावेन च न भविष्यतीति प्रार्थ्यते ॥ २ ॥

का० । 'वसोः पवित्रमिति पवित्रमस्याङ्करोत्युदग्वेति'[1]। अस्यामुखायां स्थापयनीयस्य पवित्रस्य प्रागग्रत्वं सामान्यतः प्राप्तमिति सिद्धवत्कृत्वोदगग्रत्वं विकल्प्यते । हे शाखापवित्र 'वसोः' इन्द्रदेवतानिवामहेतोः पयसः शोधकं 'पवित्रं' त्वम् 'असि' । पवित्रेण अवघाते[2] सति क्षीरेण सह स्थाल्यां पततां तृणपर्णादीनां प्रतिबध्यमानत्वात्पवित्रस्य क्षीरशोधकत्वम् । किंभूतं पवित्रम् । शतधारम् । शतसङ्ख्या धारा यस्मिन् । तथा 'सहस्रधारं' सूक्ष्मैः पवित्रच्छिद्रैः स्थाल्यां पतन्तीनां क्षीरधाराणां शतसहस्रसङ्ख्याकानां सद्भावा-

वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण

शतधारेण सुप्वा कामधुक्षः ॥ ३ ॥

च्छोधकत्वमाहर्तुं वसोः पवित्रमिति द्विरुक्तिः 'अभ्यासे भूयांसमर्थं मन्यन्ते'[3] ॥ का० 'देवस्त्वेत्यासिच्यमाने जपतीति'[4] । पयोदेवतादोहनादूर्ध्वं स्थाल्यां सिच्यमान हे क्षीर 'सविता' प्रेरको देवः पूर्वोक्तरीत्या 'शतधारेण' वसोः पवित्रेण 'त्वा' त्वां 'पुनातु' शोधयतु । सुप्वेति पवित्रविशेषणं सुष्टु पुनातीति सुपूः तेन 'सुप्वा' 'नुडागमाभावश्छान्दसः'[5] ॥ का० कामधुक्षइति प्रश्नइति[6] एकस्यां गवि दुग्धायां दोग्धारमध्वर्युः पृच्छेत् । हे दोग्धः विद्यमानानां गवां मध्ये त्वं 'काम् गाम्' 'अधुक्षः' दुग्धवानसि ॥ ३ ॥

१——४, २, २१ । २——'व्यवधाने'-इति मु० पाठः । ३——नि० दै० ४, ४२ । ४——४, २, २२ । ५——नुडित्यादि मु० पुस्तके न दृश्यते । ६——४, २, २४

हेतोः पयसः शोधकं 'पवित्र'[1] त्वम् 'असि'। अनेन मन्त्रेण पवित्रं कृत्वा पर्णशाखायां बध्नीयात्। द्वौ कुशौ कुशत्रयं वा पवित्रमुच्यते ॥ कण्डिका० 'द्यौरसीति स्थाल्यादानमिति'[1]। यस्यां स्थाल्यां क्षीरं प्रक्षेप्तव्यं तद्ग्रहणार्थोऽयं मन्त्रः। हे स्थालि मृज्जलाभ्यां निष्पन्ना त्वं 'द्यौरसि' जलहेतुवृष्टिप्रदद्युलोकरूपासि। द्युसम्बन्धात्तद्रूपत्वमुपचर्यते। तथा 'पृथिव्यसि' पृथिव्याः सकाशादुत्पन्नतया मृदा निष्पन्नत्वात् पृथिवीरूपत्वम्। का० 'मातरिश्वन इत्यधिश्रयतीति'[2]। गार्हपत्यादुदीचोऽङ्गारान्निरुह्य तेषु स्थामधिश्रयति। हे उखे त्वं 'मातरिश्वनः' वायोः 'घर्मः' दीपकोऽन्तरिक्षलोकोऽसि। मातर्यन्तरिक्षे श्वसिति निश्वासचेष्टां[3] करोतीति मातरिश्वा वायुः। घर्मः घृ क्षरणदीप्त्योः घर्मः दीपकः स्वस्थानेन[4] वायोर्दीपकोऽभिव्यञ्जकोऽन्तरिक्षलोकः। हे स्थालि तवोदरेऽप्यन्तरिक्षरूपस्यावकाशस्य वायुसञ्चारस्य सद्भावात् त्वमपि वायो

**वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्वनो घर्मोऽसि विश्वधा असि। परमेण धाम्ना**

**दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ॥ २ ॥**

र्घर्मरूपासि ॥ द्यौरसि पृथिव्यसीति पूर्वमन्त्रे लोकद्वयरूपत्वमुखायाउक्तम्। अत्र मातरिश्वनः घर्मोऽसीत्यन्तरिक्षलोकरूपत्वमुच्यते। तदेषां त्रयाणां लोकानां धारणात् त्वं 'विश्वधा असि' विश्वं दधातीति विश्वधाः विश्वधारणसमर्थासि। लोकत्रयरूपत्वात्। किञ्च 'परमेण धाम्ना' उत्तमेन बहुक्षीरधारणसामर्थ्यरूपेण तेजसा हे उखे त्वं 'दृंहस्व' दृढा भव त्वन्निष्ठस्य क्षीरस्य गलनं वारयितुम् अन्यथा भग्नायास्तव छिद्रेण क्षीरं गलेत्। दृहि वृहि वृद्धाविति धातुर्यद्यपि वृद्ध्यर्थं तथापि दार्ढ्ये सति भङ्गाभावेन चिरमवस्थानाद्दार्ढ्यं नाम कालवृद्धिरेव भवति। किञ्च। हे उखे "मा ह्वाः" कुटिला मा भव। ह्वृ कौटिल्ये। यदुखा कुटिला भवेत् तदानीमवाङ्मुखायां वा सत्यां तत्स्थं क्षीरं गलेत्। अतः क्षीरधारणाय दार्ढ्यमकौटिल्यं चाप्यर्थ्यते। किञ्च "ते यज्ञपति" स्वसम्बन्धियजमानो 'मा ह्वार्षीत्' कुटिलो माभूत्

१—४, २, १९। २—४, २, २०। ३—'निश्वासवेष्टां—इति मु० पाठः। ४—'सञ्चारस्थानप्रदानेन—इति मु० पाठः॥

स्मिन्निति मतुप्। मादुपधायामतोर्वोऽयवादिभ्यइति मस्य वः। उगितश्चेति ङीप्। मतुप्-ङीपोरनुदात्तत्वात् प्रजाशब्दस्वरएव। वाच्छन्दसीति पूर्वसवर्णदीर्घत्वम्॥ 'अनमीवा' अम रोगे। अमेरिवइति इवप्रत्ययः। यद्वा। ग्रीवायह्वाजिह्वार्ग्रीवाऽपामीवा इत्यमेवंन् प्रत्ययान्तोनिपातः। तस्य नञा बहुव्रीहौ समासस्य वेत्यन्तोदात्ते प्राप्ते तदपवादेन बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादेन नञ्सुभ्यामित्यन्तोदात्तत्वम्॥ 'अयक्ष्माः' तद्वत्स्वरः॥ 'मा' निपातत्वादाद्युदात्तः॥ 'स्तेनः' स्तेन चौर्ये। स्तेनयति चोरयतीति स्तेनः। पचाद्यच्। चित्त्वादन्तोदात्तः॥ 'ईशत' ईश ऐश्वर्ये। छन्दसि लुङ्लङ्लिटइति लङ्। व्यत्ययोबहुलमिति बहुवचनम्। न माङ्योगे इत्यड़भावः। निघातश्च॥ 'अघशंसः' अघ पापकरणे। पचाद्यजन्तोऽघशब्दोऽन्तोदात्तः। अघं शंसति इच्छती-त्यघशंसः। शंसि इच्छायामच्। तत्पुरुषे तुल्यार्थेत्यादिना पूर्वपदप्रकृतिस्वरत्वम्॥ 'ध्रुवाः' ध्रुव स्थैर्ये। इगुपधज्ञाप्रीकिरःकइति कः। प्रत्ययस्वरेणान्तोदात्तोध्रुवशब्दः॥ 'अस्मिन्' इणोदमुगिति एतेर्दमुक्। अन्तोदात्तइदम् शब्दः। तस्मात् ङेः स्मिन् तस्य ऊडिदम्पदा-द्यप्पुम्रैद्युभ्यइत्युदात्तत्वम्॥ 'गोपतौ' गमेर्डोरिति गोशब्दः प्रत्ययस्वरेणोदात्तः। गवां पतिरिति तत्पुरुषे पत्यावैश्वर्येइति पूर्वपद प्रकृतिस्वरत्वं स्यात्। अस्तेः प्रार्थनायां लिङ्। तस्यस्थमिपां। यासुट्। सलोपोऽलोपश्च। तिङ्ङतिङः॥ 'बह्वीः' बहुशब्दात् वोतोगुण वचनादिति ङीष्। वाच्छन्दसीति जसः पूर्वसवर्णत्वम्। प्रत्ययस्वरेणान्तोदात्तः॥ 'यजमानस्य' पुङ्यजोः शानन्निति यजतेः शानन्। नित्त्वादाद्युदात्तः॥ 'पशून्' पश्यन्ति गम्येनेति पशवः। अर्जिदृशिकम्यमिपसिबाधामृजिपशितुक्धुक्दीर्घहकारश्चेति दृशेः कुप्रत्ययः पशादेशश्च। प्रत्ययस्वरेणान्तोदात्तः॥ 'पाहि' पा रक्षणे। लोट्। तिङ्ङतिङः। एवमग्रे पदस्वरप्रक्रियोहनीया विस्तरभयान्नोच्यते॥ १॥

कात्यायनः—'वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ विहद्दे'ति[१]। वासयति दृष्ट्यादिद्वारा स्थापयति विश्वमिति वसुः यज्ञः। 'यज्ञोवै वसुर्यज्ञस्य पवित्रमसी'ति[२] श्रुतेः। यज्ञशब्देन तदीयहविर्द्रव्यरूपं क्षीरं लक्ष्यते। हे दर्भमयं पवित्र 'वसोः' इन्द्रदेवतायाः निवास

१—४, २, १५,—१६। २—१, ७, १, ८,।

इशि त्वाशब्दस्य स्वरितत्वं मन्त्रद्वयस्य संहितायाम् ऊर्जं इत्यूकारस्य स्वरितात्संहितायामनुदात्तानामिति प्रचयाभिधायामेकश्रुतौ प्राप्तायां तदपवादकत्वेनोदात्तस्वरितपरस्य सन्नतरइत्यन्तनीचोऽनुदात्तोभवति। अग्निमस्य त्वाशब्दस्य स्वरितत्वम्। एवमुत्तरपदेषु संहितायां स्वराऊहनीयाः॥ 'वायवः' वातेर्गत्यर्थात् कृवापाजिमिस्वदिसाध्यशूभ्यउणित्युण्। सति शिष्टप्रत्ययस्वरेणान्तोदात्तोवायुशब्दः। जसः सुप्त्वादनुदात्तत्वं जसि चेति गुणेऽवादेशे च स्थानेन्तरतमइति परिभाषया उदात्तएव जाते वायवइति मध्योदात्तं पदम्। जसः स्वरितत्वं पूर्ववत्॥ 'स्थ' अस्तेर्लिटि शपोलुकि श्नसोरल्लोपइति अकारलोपः। तिङतिङइति निघातः॥ 'देवः' पचादित्वादच् चितइत्यन्तोदात्तः॥ 'वः' बहुवचनस्य वस्नसावित्यनुदात्तोवसादेशः॥ 'सविता' षू प्रेरणे। ण्वुल्तृचाविति तृच्। इडागमः। चित्त्वादन्तोदात्तः॥ 'प्र' उपसर्गाश्चाभिवर्जमित्याद्युदात्तः॥ 'अर्पयतु' ऋ गतौ। हेतुमति चेति णिच्। अर्तिह्रीब्लीरीक्नूयीत्यादिना पुक्। पुगन्तेति गुणः। निघातश्च॥ 'श्रेष्ठतमाय' प्रशस्यशब्दादतिशायने तमबिष्ठनाविति इष्ठन्। प्रशस्यस्य श्रइति श्रादेशः। ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम्। ततः पुनः तमप्। तस्य पित्त्वादनुदात्तत्वम्। स्वरितप्रचयाः पूर्ववत्॥ 'कर्मणे' करोतेर्मनिन् नित्त्वादाद्युदात्तः॥ 'आ' उदात्तः॥ 'प्यायध्वम्' ओ प्यायी वृद्धौ। हेतुमति णिच्। तस्य छन्दस्युभयथेत्यार्द्धधातुकत्वात् णेरनिटीति णिलोपः। निघातः॥ 'अघ्न्याः' 'अघ्न्या अहन्तव्या भवत्यघघ्नीति वेति यास्कः[१]। अघे नञि वोपपदे हन्तेरघ्न्यादयश्चेति यगन्तोनिपातः। स्वरबुद्धित्वादामन्त्रितस्य चेत्याष्टमिकोनिघातः॥ 'इन्द्राय' इदि परमैश्वर्ये इन्धी दीप्तौ वा। इन्दति इध्यते वा तेजोभिरिति इन्द्रः। ऋज्रेन्द्रेत्यादिना रन्प्रत्ययान्तोनिपातः। नित्त्वादाद्युदात्तः स्वरितप्रत्ययौ च॥ 'भागं' भज भागसेवनयोः। अकर्तरि च कारके सञ्ज्ञायामिति घञ्। ञित्वादाद्युदात्ते प्राप्ते कर्षात्वतोघञोन्त उदात्तइत्यन्तोदात्तत्वम्॥ तस्यामिपूर्वइत्यमा सहैकादेशएकादेशउदात्तेनोदात्तइत्युदात्तएव॥ 'प्रजावतीः' उपसर्गे च सञ्ज्ञायामिति जनेर्डप्रत्ययः ततष्टाप् तत्सहैकादेशोप्युदात्तान्तः प्रजाशब्दः। तस्मात्तदस्यास्त्य

१——ऐ० ५, ४३।

भक्षणादिना अंसोऽघशंसो व्याघ्रादिरपि मा ईशत हिंसको माभूत्। कीदृशीर्युष्मान्? प्रजावतीः बह्वपत्याः। अनमीवाः अमीवा व्याधिः सनास्ति यासान्ताः अनमीवाः कृमिदुष्टत्वादिस्वरोगरहिताः। अयक्ष्माः यक्ष्मा रोगराजः प्रबलरोगरहिताः। किञ्च। यूयमस्मिन्गोपतौ गवां युष्माकं पत्यावस्मिन् यजमाने ध्रुवाः शाश्वतिकीः बह्वीर्बहुविधाः स्यात भवत॥ का॰[1]—'यजमानस्य पशूनित्यन्यागारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहतीति'। हे पलाशशाखे त्वमुन्नतप्रदेशे स्थित्वा प्रतीक्षमाणा सती यजमानस्य पशूनरण्ये सञ्चरतश्चोरव्याघ्रादिभयात्पाहि रक्ष शाखया रक्षिता गावो निरुपद्रवाः सद्यः सायं पुनरागच्छन्तीत्याशयः। यद्यप्यचेतना शाखा तथापि तदभिमानिनीं देवतामुद्दिश्यैवमुक्तम् यथा शास्त्रज्ञा अचेतनेऽपि शालग्रामे शास्त्रदृष्ट्या विष्णुसन्निधिमभिप्रेत्य विष्णुं सम्बोध्य षोडशोपचारान् विदधतइत्युक्तं प्राक्॥

अथ व्याकरणप्रक्रिया। 'इषे' इषेरिच्छार्थस्य कर्मणि क्विप्। कित्वादुपधायागुणाभावः। तस्माच्चतुर्थ्येकवचनम्। इषशब्दगत इकारो धातुस्वरेण प्रातिपदिकस्वरेण चोदात्तः स्वरविधौ व्यञ्जनस्याविद्यमानत्वात्। चतुर्थ्येकवचनस्य प्रत्ययत्वादाद्युदात्तत्वे प्राप्ते अनुदात्तौ सुपिताविति तदपवादेनानुदात्तत्वेप्राप्तेऽपि सावेकाचस्तृतीयादिर्विभक्तिरित्युदात्तत्वम्। तस्मिन्सत्युदात्तं पदमेकवर्जमितीकारोऽनुदात्तः॥ यद्यप्येकशब्देन द्वयोरुदात्तयोरन्यतरोयः कोपि वक्तुंशक्यते तथापि सति शिष्टस्वरोबलीयानिति न्यायेन विभक्तिगतउदात्तएव प्रबलः॥ तथा सत्यनुदात्तादिकमुदात्तान्तमिदं पदं सम्पन्नम्। 'त्वा' युष्मच्छब्दस्य युष्मसिभ्यां मदिगिति मदिक् प्रत्ययान्तस्य-युष्मच्छब्दस्य द्वितीयायां त्वेति-रूपम्। तस्य प्रातिपदिकस्वरेण यद्यपि उदात्तः प्राप्तस्तथापि अनुदात्तं सर्वमपादादावित्यस्य सूत्रस्य अनुवृत्तौ सत्यां त्वामौ द्वितीयाया इति त्वादेशविधानादयं शब्दोऽनुदात्तः॥ 'ऊर्जे' ऊर्ज बलप्राणनयोरस्मात् क्विप्। ऊर्जति बलवन्तं प्राणवन्तं वा करोतीत्यूर्क् अन्नम्। 'ऊर्गित्यन्ननामोर्जयति' इति सत इति यास्कः[2]। स्वरइषेवत्। संहितायां तु उदात्तादनुदात्तस्य स्वरित

१—४, २, ११। २—ई॰ ३, २०।

वायुसादृश्याद्वत्सानां वायुत्वम्। यथा वायुः पादप्रचालनष्ठीवनादिभिरुपहताम्भूमिं शोषयित्वा पुनाति। एवं वत्सा अप्यनुलेपनहेतु भूतगोमयादिदानेन भूमिं पुनन्ति तस्माद्वायुसादृश्यम्। अथवा नृणां यथा स्वनिवासाय गृहनिर्माणसामर्थ्यमस्ति एवं पशूनां तदभावान्निरावरणेऽन्तरिक्षे सञ्चरणादन्तरिक्षमेव पशूनां देवता तस्यान्तरिक्षस्य वायुरधिपतिः[1]। स च वायुः स्वावत्सानिव पशून् पालयतीति पशूनां वायुरूपत्वं. तथः पालनाय पशून्वायवे समर्पयितुं वायुरूपत्वमापाद्य वायवस्थेति मन्त्रः प्रवर्त्तते। तदुक्तं तित्तिरिणा 'वायवस्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षोऽन्तरिक्षदेवत्याः खलु पशवो वायव एवैतान् परिददातीति। यद्वा। तृणभक्षणायाहनि तत्र तत्रारण्ये चरित्वा सायं काले वायुवद्वेगेन यजमानगृहे समागमनाय पशून् प्रवर्तयितुं वायुरूपत्वमुच्यते। कात्यायनः[2] 'देवीवइति मातृणाम् एकां व्याकृत्यैन्द्रम्भवति माहेन्द्रं वेति'। अस्यार्थः। पूर्वसूत्राच्छाखयोपस्पृशतीति पदद्वयमनुवर्तते। वत्सानां मातरो या गावः सन्ति तासां मध्ये एकाङ्गां पृथक् कृत्य देवीवइति मन्त्रेण शाखयोपस्पृशेत्। तथा सति गोसवन्धि दधिरूपं हविरैन्द्रं माहेन्द्रं वा भवतीति। देवीवइति मन्त्रस्येन्द्रो देवता। षू प्रेरणे। सुवति स्वस्वव्यापारे प्रेरयतीति सविता देवः द्योतमानः परमेश्वरः। हे गावो वो युष्मान् प्रार्पयतु.प्रभूततृणोपेतं वनं गमयतु। किमर्थम्? श्रेष्ठतमाय कर्मणे। चतुर्विधं कर्म्म। अप्रशस्तं। प्रशस्तं। श्रेष्ठं। श्रेष्ठतमञ्चेति। लोकविरुद्धं वधबन्धचौर्यादिकमप्रशस्तम्। लोकैः श्लाघनीयं बन्धुवर्गपोषणादिकं प्रशस्तम्। स्मृत्युक्तं वापिकूपतडागादिकं श्रेष्ठम्। वेदोक्तं यज्ञरूपं श्रेष्ठतममिति तल्लक्षणम्। 'यज्ञो वै श्रेष्ठतमं कर्म्मेति श्रुतिः[3] ॥ हे अघ्न्याः गावः गोवधस्योपपातकरूपत्वाद्धन्तुमयोग्या अघ्न्या उच्यन्ते। तथाविधा यूयमिन्द्राय भागम् इन्द्रमुद्दिश्य सम्पादयिष्यमाणं दधिरूपहेतु[4] क्षीरम् आप्यायध्वं समन्ताद्वर्धयध्वम्। सर्वास्वपि गोषु प्रभूतक्षीरङ्कुरुत। ओ प्यायि वृद्धौ। वो युष्मानपहतुं स्तेनश्चोरो मा ईशत ईश्वरः समर्थो माभूत् ॥ अघशंसः अघेन तीव्रपापेन



१——'तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः'——इति नि० दै० १, ५।
२——४, २, ८, १०। ३——१, ७, १, ५। ४——"हविर्हेतुरूपम्"——इति मु० पाठः।

ऊर्ज्जे त्वेति सन्नमनार्थः। सन्नमनं ऋजूकरणं शाखालग्न[1] धूल्याद्यपनयनम्। इदं पचान्तरमित्यर्थः ॥ ऊर्ज्जे त्वा ॥ शाखैव देवता। हे शाखे 'त्वा' त्वां सन्नमयामि ऋजूकरोमि। किमर्थम्? 'ऊर्ज्जे' ऊर्ज्ज बलप्राणनयोः ऊर्ज्जति सर्वान्मनुष्यपश्वादीन् बलयति पानादिना दृढ़शरीरान् करोति। यद्वा। प्राणयति प्रकर्षेण चेष्टयतीति व्युत्पत्तिद्वयेन वृष्टिगतोजलात्मकोरसऊर्ज्ज-शब्देनोच्यते। तस्मै रसाय त्वामनुमार्ज्मि। योवृष्टादूर्ग्रसोजायते तस्मै तदाहेति श्रुतिः[2]। एतन्मन्त्रद्वयपाठेनाध्वर्युरीप्समाणमन्नं बल-

ॐ यजुर्वेदायनमः ॥ हरिः ॐ ॥ इषेत्वोर्ज्जेत्वावायवस्थदेवोवःसवितापार्पयतुश्रेष्ठतमाय

कर्म्मणआप्यायध्वमघ्न्याइन्द्रायभागम्प्रजावतीरनमीवाअयक्ष्मामावस्तेनईशतमाघश्ँसो

ध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥

करमाज्यक्षीरादिरसञ्च यजमाने सम्पादयत्येव। 'इषेत्वोर्ज्जेत्वेत्याहेषमेवोर्ज्जं यजमाने दधातीति तित्तिरिवचनात् ॥ कात्यायनः[3] —'मातृभिर्वत्सान् संसृज्य वत्सं शाखयोपस्पृशति वायवस्थेति'। वायुर्देवता। वा गतिगन्धनयोः। वान्ति गच्छन्ति वायवोगन्तारः। हे वत्साः यूयं 'वायवः स्थ' मातृभ्यः सकाशात् अन्यत्र गन्तारोभवत। मातृभिः सह गमने सति सायं दोहोन लभ्यतइत्यभिप्रायः। यद्वा।

१—[illegible]मलु" इति मू० पाठः। २—१, ७, १, २। ३—४, २, ७।

शस्त्राग्न्यन्तराधानस्यैवासिद्धेः पवमानेष्टीनाञ्च दर्शपौर्णमासविकृतित्वात्सोमेऽपि दीक्षणीयप्रायणीयादिषु दर्शपौर्णमासतापे- रादौ दर्शपौर्णमासमन्त्राः गदितुं युक्ताः ते चेषेत्वादयः ॥—तत्रेषेत्वेति द्विपदस्याद्यचरो मन्त्रः। तस्य दैव्यनुष्टुप्छन्दः शाखादेवता शाखाच्छेदने विनियोगः। शाखादीनामचेतनत्वेऽपि तदभिमानिनीनां देवतानां सत्त्वाद्देवतात्वम्[1]। 'अभिमानिव्यपदेशस्त्विति व्याससूत्रोक्तेः[2]। मृदब्रवीदापोऽब्रुवन्निति श्रुतेश्च। तस्माच्छाखोखापयःस्रुक्यूपादीनामपि देवतात्वम्। तत्र प्रतिपदि दर्शयागं चिकी- र्षुरमावास्यायां प्रातरग्निहोत्रं हुत्वा दर्शयागार्थं 'ममाग्ने वर्च' इति मन्त्रेण अग्निषु समिदाधानरूपमन्वाधानं कृत्वा वत्सापाकरणं कुर्यात्[3]। दर्शयागे त्रीणि हवींषि सन्ति अग्नेयोऽष्टाकपाल ऐन्द्रं दध्यैन्द्रम्पय इति तत्र प्रतिपदि दधि होतुं दध्नो निष्पत्त्यै रात्रावमा- वास्यायां गावो दोग्धव्याः तद्दोहनार्थं प्रातर्लौकिकदोहादूर्ध्वं स्वमातृभिः सह चरन्तो वत्साः स्वमातृभ्यः पलाशशाखया पाकरणीयाः तदर्थं पलाशशाखाच्छेदनम्। 'गायत्र्या पक्षिरूपं विधाय यदा दिवः सोमवल्ल्याहृता तदा तत्पत्रम्भूमावुप्तं ततः पलाशोऽभवदिति[4] श्रुत्या पलाशस्य प्राशस्त्यं ब्रह्मत्वञ्चोक्तं तस्मात्पलाशशाखाच्छेदनम् ॥

अथ मन्त्रार्थः—क्रियापदाध्याहारेण ॥ हे शाखे! 'इषे' वृष्ट्यै 'त्वा' त्वां छिनद्मि ॥ इष्यन्ते काङ्क्ष्यन्ते सर्वैर्व्रीह्यादिधान्यनिष्पत्तये सा इट्। श्रुत्या वृष्टिर्व्याख्याता कर्मणि क्विप्। 'वृष्ट्यै तदाह यदाहेषेत्वेति[5] श्रुतेः ॥ 'पर्णशाखाञ्छिनत्ति शमिलीं वेषेत्वे त्यूर्जेत्वेति वा छिनद्मि इति वोभयोः साकाङ्क्षत्वात्सन्नमयामीति वोत्तरइति[6] कात्यायनोक्तेः। छिनद्मीति क्रियापदमध्या- हर्तव्यम्। कात्यायनसूत्रस्यायमर्थः—पलाशशाखा शमीशाखा वात्र विकल्पिता तच्छेदने इषेत्वोर्जेत्वेति द्वौ मन्त्रौ विकल्पितौ तयोः क्रियापदाकाङ्क्षत्वादर्थावबोधाय छिनद्मि इति पदमध्याहर्त्तव्यमित्येकः पक्षः। इषेत्वेति छेदनार्थो मन्त्रः।

१—मतान्तरमेतत्, वस्तुतः श्रुतिवर्णनादिकपर्यालोचनया जडानामप्युपासनादिकमेवोपलभ्यते स्फुटम्। तथैवोक्तं भगवता यास्केनापि—"अथाकारचिन्तनं देवानामित्यादि दै० १, ६। अतएव 'हवस्त्वनिर्णमिति (ऋ० १, ७, २, १०)' मन्त्रव्याख्यानावसरे चोक्तम्—'तत्रोपमार्थेन युद्धवर्णो भवन्तीत्येवमादि ॥
२—शा० सू० २, १, ५। ३—का० २, १, ३। ४—श० ब्रा० १, ७, १; ८, २, १०। ५—१, ७, १, २। ६—४, २, १, ३।

वेदं येऽधीयन्ते विदन्ति वा शिष्यपरम्परया वर्त्तमानास्तेऽपि माध्यन्दिना उच्यन्ते । अतएव 'स्वाध्यायोऽध्येतव्यः'—इति[1] स्वशाखाध्ययनं विहितम् । तच्चाध्ययनं प्रतिमन्त्रमृषिच्छन्दोदैवतविनियोगार्थज्ञानपूर्वकं विधेयम् । अन्यथा दोषश्रवणात्, 'एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यथान्तराश्वगर्तं[2] वा पद्यते स्थाणुर्वच्छर्च्छति प्रमीयते वा पापीयान् भवति' इति[3] कात्यायनोक्तेः । ऋष्यादिज्ञाने फलश्रवणाच्च । 'अथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते'—इत्युक्तेश्च[4] । तस्मादिदं मन्त्राणामृष्यादिज्ञानमर्थज्ञानञ्चावश्यकमन्यथा फलवैफल्यात् । तत्र यजुर्वेदमन्त्रेषु कानिचिद् यजूंषि कानिचनर्चः । तत्र ऋचां नियताक्षरपादावसाना नामावश्यकं छन्दः कात्यायनेनोक्तम् । यजुषां षडुत्तरशताक्षरावसानानामेकाक्षरादीनां पिङ्गलेन 'दैव्येक'मित्यादिनोक्तं[5] छन्दो बोद्धव्यम् । तदधिकानां 'होता यक्षद्वनस्पतिमभि हि' इत्यादीनां[6] नास्ति छन्दःकल्पना[7] ॥—तत्राद्याध्याये द्वितीयाध्याये चाष्टाविंशतिकण्डिकाश्चेति दर्शपौर्णमासमन्त्राः तेषां परमेष्ठी प्रजापतिर्[8] ऋषिर्देवताः प्राजापत्या वा । द्वितीयाध्यायान्तिमकण्डिकाषट्कम्पितृयज्ञमन्त्रास्तेषां प्रजापतिर्ऋषिः । आद्येऽध्याये सर्वाणि यजूंषि एका 'पुरा क्रूरस्येति[9] ऋक् यजुषां पिङ्गलोक्तं छन्दो बोद्धव्यम् विस्तरभयान्नोच्यते । ऋचान्तु छन्दांसि वक्तव्यानि । तत्राद्यायां कण्डिकायां पञ्च मन्त्राः । द्वौ त्र्यक्षरौ । तृतीयश्चतुरक्षरः । चतुर्थो द्विषडक्षरः । पञ्चमो नवाक्षरः ॥—तत्र प्रकृतित्वादादौ दर्शपौर्णमासमन्त्राः । यत्र कृत्स्नाङ्गाना मुपदेशः क्रियते सा प्रकृतिः । यत्र विशेषाङ्गमात्रमुपदिश्यतेऽङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते सा विकृतिः । तत्र प्रकृतिस्त्रिविधा । अग्निहोत्रमिष्टिः सोमश्चेति । तत्र यद्यपि कृताधानस्यैव दर्शपौर्णमासयोरधिकारादग्न्याधानमन्त्रा वक्तुमुचितास्तथाप्याधाने पवमाने

१——श० ब्रा० ११, ५, ६, ७ । २——'भवत्यथान्तराश्वगर्त्त' इति मु० पाठः । ३——अनुक्र० १, १, । ४——अनु० १, १ । ५——'छन्दः' इत्यधि 'दची'-इत्यधिकारानन्तरं 'दैव्येकम् । आसुरी पञ्चदश । प्राजापत्याष्टौ । यजुषा षट् । साम्नां द्विः । ऋचां त्रिः ।'—इत्यादि छ० [illegible], ३–८ । ६——श० २१क० ४६ । ७—दैव्येकमित्यादीनान्तु ऋक्त्वेऽस्ति चरितार्थता, यजुःषु छन्दोभावएव । ८——'प्राजापत्य'—इति मु० पाठः । ९——१, २८ ।

श्रीगणेशाय नमः। प्रणम्य लक्ष्मीं नृहरिं गणेशं भाष्यं विलोक्यौवटमाधवीयम्। यजुर्मनूनां विलिखामि चार्थं परोपकाराय वणाय ॥ १ ॥ दूराद्सूयां निर्धूय कृपां कृत्वा ममोपरि। विलोक्यो वेददीपोऽयं बुद्धिमद्भिर्द्विजोत्तमैः ॥ २ ॥ तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन्मनुष्यान्विचिन्त्य तत्कृपया चतुर्धा[1] व्यस्य ऋग्यजुःसामाथर्वाख्यांश्चतुरो वेदान्पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश। ते च स्वशिष्येभ्यः। एवं परम्परया सहस्रशाखो[2] वेदो जातः। तत्र व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो[3] यजुर्वेदमध्यापयत्। तत्र दैवात्केनापि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच मदधीतं त्यजेति। स योगसामर्थ्यान्मूर्तां विद्यां विधायोद्ववाम। वान्तानि यजूंषि गृह्णीतेति गुरूक्ता अन्ये[4] वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षयन्। तानि यजूंषि बुद्धिमालिन्यात्कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्यमाराध्यान्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालगौधेयकाण्वमध्यन्दिनादिभ्यः पञ्चदशशिष्येभ्यः[5] पाठितवान्। तथा च श्रुतिः 'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्त इति[6]। अस्यार्थः। आदित्यादधीतान्यादित्यानि शुक्लानि शुद्धानि। वाजस्यान्नस्य सनिर्दानं यस्य स वाजसनिस्तदपत्यं वाजसनेयस्तेन याज्ञवल्क्येन शिष्येभ्य आख्यायन्ते कथ्यन्त इत्यर्थः। तत्र मध्यन्दिनेन महर्षिणा लब्धो यजुर्वेदशाखाविशेषो माध्यन्दिनः। यद्यपि याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टः तथापीश्वरकृपया मध्यन्दिनसम्बन्धितया लोके प्रख्यायते। तं माध्यन्दिनं

१——चतुर्धात्वचास्ति संशयः। गद्य-पद्य-गीतीति विविधरचनापरिचयात् त्रिधैव विभक्तुं शक्यते अतएव त्रयीत्याख्यायते। अथर्ववेदस्तु आङ्गिरसाथर्वणा तेभ्यः तत्पुरस्तादेव समचिनोदित्येके। २——सहस्रशब्द इह बहुपर्यायः नि० ३, १। ३——याज्ञवल्क्यः१ चरकः२ आह्वरकः३ कठः४ प्राच्यकठः५ कपिष्ठलकठः६ आष्ठलकठः७ उपमन्युः८ चारायणः९ वारायणः१० वार्तान्तवेयः११ श्वेताश्वतरः१२ मैत्रायणः१३—इति त्रयोदशशिष्येभ्यः प्रधानेभ्य इति यावत्। ४——अन्ये प्रधानातिरिक्ताः औखः१ आपस्तम्बः२ बौधायनः३ सत्याषाढः४ हिरण्यकेशः५ औधेयः६—इति षट्। अत्रापि आपस्तम्बादीनां खाण्डिकेयेति प्रसिद्धिः। ५——जाबालः१ गौधेयः२ काण्वः३ मध्यन्दिनः४ शापेयः५ तापनीयः६ कापालः७ पौण्ड्रवत्सः८ आवटिकः९ परमावटिकः१० पाराशरः११ वैणेयः१२ वैनेयः१३ औधेयः१४ गालवः१५—इति पञ्चदशशिष्येभ्य इति यावत्। ६——बृहदार०माध्य० ५, ५, ३३।

॥ श्रीश्रीमत्परमहंसपरिव्राजकाचार्यगौडस्वामीतित्रिलोकप्रथितनामगुरुचरणारविन्देभ्योनमोनमः ॥

॥ श्रीमन्महीधरकृतवेददीपनामभाष्यसहिता उदात्तादिस्वरचिह्नसमन्विता ॥

# ॥ श्रीशुक्लयजुर्वेदः वाजसनेयिसंहिता माध्यन्दिनीशाखा ॥

॥ काश्यधीतवेदादिश्रीसत्यव्रतसामश्रमिणा संटिप्य संशोध्य च प्रकाश्यते ॥

॥ कलिकाताराजधान्यां सत्ययन्त्रे १७९९ शकाब्दीयश्रावणे लौहयन्त्रे श्रीशकाक्षरैः मुद्रयितुमारब्धा ॥

अनुष्टुब्बृहतीपङ्क्तिस्त्रिष्टुब्जगत्यति-
जगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्ट्यत्य-
ष्टिधृतयः कृतिप्रकृत्याकृतिविकृति
संकृत्यभिकृत्युत्कृतयश्चतुर्विंशत्य-
क्षरादीनि चतुरुत्तराणि । ऊना-
धिकेनैकेन निचृद्भुरिजौ द्वाभ्यां
विराट्स्वराजौ । पादपूरणार्थं
तु क्षैप्रसंयोगैकाक्षरीभावान्व्यू-
हेत् । अन्ये तु समवर्गे पादवि-
शेषात्संज्ञाविशेषास्तामनुक्रमन्त
एवोदाहरिष्यामो विराड्रूपा
विराट्स्थानाश्च बहूना अपि त्रि-
ष्टुभ एवेतुरद्दिशः तत्र दशैकादश-
द्वादशाक्षराणां वैराजत्रैष्टुभजा-
गता इति संज्ञा अनादेशेऽष्टा-
क्षराः पादाश्चतुष्पदाश्चर्चः ॥ १ ॥
प्रथमं छन्दस्त्रिपदा गायत्री । प-
ञ्चकाश्चत्वारः षट्कश्चैकश्चतुष्को
वा पदपङ्क्तिः । षट्सप्तकादशा
क्षिणिग्गर्भा । त्रयः सप्तकाः पाद-
निचृन्मध्यमः षट्कश्चेदतिनिचृद्
शकश्चेद्यवमध्या । यस्यास्तु षट्-
सप्तकाष्टकाः सा वर्धमाना विप-
रीता प्रतिष्ठा । द्वौ षट्कौ सप्त-
कश्चेति ह्रसीयसी ॥ २ ॥ द्विती
यमुष्णिक् त्रिपदान्त्यो द्वादशकः ।
आद्यश्चेत्पुरउष्णिङ्मध्यमश्चेत्ककुप्
त्रैष्टुभजागतचतुष्काः ककुबन्यङ्कु-
शि कादशिनः परः षट्कस्तनु-
शिरा मध्ये ऽन्त्ये पिपीलिकमध्याद्यः
पञ्चकास्त्रयोऽष्टका अनुष्टुब्गर्भा ।
चतुःसप्तकाष्णिगेव ॥ ३ ॥ तृती-
यमनुष्टुप् । पञ्च पञ्चकाः षट्क-
श्चैको महापदपङ्क्तिः । जागता-
वष्टकश्च कृतिः । मध्ये चेदष्टकः
पिपीलिकमध्या । नवकयोर्मध्ये
जागतः काविराट् । नववैराजत्र-
योदशेन षड्रूपा । दशकास्त्रयो वि-
राडेकादशका वा ॥ ४ ॥ चतुर्थं
बृहती तृतीयो द्वादशकः । आ-
द्यश्चेत्पुरस्ताद्बृहती । द्वितीयश्चे-
न्न्यङ्कुसारिण्युरोबृहती स्कन्धो-
ग्रीवी वा । अन्त्यश्चेदुपरिष्टाद्बृ-
हती । अष्टिनोर्मध्ये दशकौ वि-
ष्टारबृहती । त्रिजागतोर्ध्वबृहती ।
त्रयोदशिनोर्मध्येऽष्टकः पिपीलि-
कमध्या । नवकाष्टकैकादशाष्टिनो
विषमपदा । चतुर्नवका बृहत्येव ।
॥ ५ ॥ पञ्चमं पङ्क्तिः पञ्चपदा ।
अथ चतुष्पादा विराड्दशका ।
अयुजौ जागतौ सतोबृहती युजौ
चेद्विपरीतान्यौ चेत् प्रस्तारपङ्क्ति-
रन्त्यौ चेदास्तारपङ्क्तिराद्यन्त्यौ
चेत्संस्तारपङ्क्तिर्मध्यमौ चेद्वि-
ष्टारपङ्क्तिः॥६॥षष्ठं त्रिष्टुप् त्रैष्टुभ-
पदा । द्वौ तु जागतौ यस्याः सा जा-
गत जगती त्रैष्टुभे त्रिष्टुप् । वैराजौ
जागतौ चाभिसारिणी । नवकौ
वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ न-
वकस्त्रैष्टुभश्च विराट्स्थानैकाद-
शिनस्त्रयोऽष्टकश्च विराड्रूपा ।
द्वादशिनस्त्रयोऽष्टकश्च ज्योतिष्मती
षतोऽष्टकस्ततो ज्योतिः । चत्वारो-
ऽष्टका जागतश्च महाबृहती । मध्ये
जागतश्चेद्यवमध्या । आद्यो दश-
कावष्टकास्त्रयः पङ्क्त्युत्तरा वि-
राट्पूर्वा वा ॥ ७ ॥ सप्तमं जगती
जागतपदा । अष्टिनस्त्रयः द्वौ च
द्वौ महासतोबृहती । अष्टकौ स-
प्तकाः षट्कौ दशकौ नवकश्च षड्-
ष्टका वा महापङ्क्तिः ॥ माध्य-
न्दिनीये वाजसनेयके सर्वानुक्रम-
णिकैषा कृतिर्भगवतः कात्यायन-
स्यैषा कृतिर्भगवतः कात्यायनस्य

॥ इति सर्वानुक्रमणिकायां पञ्चमोऽध्यायः ॥ ग्रन्थश्च समाप्तः ॥

भारद्वाजीयं सर्वं सौम्यमानुष्टु-
भमाथर्वणिकं सर्वं 'बार्हस्पत्यं बा-
र्हतमाङ्गिरसं सर्वं वारुणं पा-
ङ्क्तमालम्बाय नीयं सर्वमैन्द्रं
त्रैष्टुभं याज्ञवल्कीयं सर्वमादित्य-
दैवतं जागतं कौत्सम् ॥ ११ ॥

ज्योतिष्टोमे दीक्षाप्रभृति व-
क्ष्यामो दीक्षायां भृगुरग्नाविष्णू
गायत्री प्रायणीयेऽङ्गिरसोऽदि-
तिरुष्णिक् क्रये विश्वामित्रः
सोमोऽनुष्टप्प्रातिथ्ये वसिष्ठो वि-
ष्णुर्बृहती प्रवर्ग्ये कश्यप आदित्यः
पङ्क्तिः उपसत्स्वात्रेय उपसद्दे-
वता त्रिष्टुप् अग्नीषोमीयेऽगस्त्यो-
ऽग्नीषोमौ जगती प्रावणीयेऽतिरा
त्रेऽग्निर्वैश्वो ऽहोरात्रे अतिजगती
चतुर्विंशत्यहे शौनकायनः सं-
वत्सरः शक्वरी अभिप्लवे षडहे
सावर्णोऽर्धमासा मासाश्चाति-
शक्वरी पृष्ठ्ये षडहे सायकायन
ऋतवोऽष्टिः अभिजिति प्रियव्रतो
ऽग्निरत्यष्टिः स्वरसामसु सरस्व-
त्यापो धृतिः विषुवती रौहिणा-
यन आदित्योऽतिधृतिः विश्वजिति
सौभर इन्द्रः कृतिः गो आयुषो-
र्वाकिर्मित्रावरुणौ प्रकृतिः दश-
रात्रे आचार्यो विश्वे देवा आ-
कृतिः दाशरात्रिके पृष्ठ्ये षडहे
भाल्लवेयो दिशो विकृतिः छन्दो-
मेषु गौल्कायन इमे लोकाः संकृति
इष्टमेऽहनि पराशरः संवत्सरोऽ-
भिकृतिः महाव्रते शैलिनः प्रजा-
पतिरुत्कृतिः उदयनीयेऽतिरात्रे
औदन्नायनो वायुश्छन्दांसि स-
र्वाणि ॥ १२ ॥ 'ऋषिभिरुपल-
क्षितं वाक्यमृषयः छन्दोभिरुप-
लक्षिता देवता मन्त्रवर्णादृग्यजु-
षयोर्विनियोगस्तु विधियः ।
समेतच्छन्दो दैवतमार्षं च वि-
ज्ञाय यत्किञ्चिज्जपहोमादि करो-
ति तस्य फलमश्नुते । ब्रह्मयज्ञा-
रम्भे यथाविधि स्नात्वा छन्दःपु-
रुषमेनोनिर्णोदनं शरीरे न्य-
सेत् तिर्यग्बिलश्चमस ऊर्ध्व-
बुध्नः तस्याश्विनौ गोतम भर-
द्वाजौ श्रोत्रे विश्वामित्रजम-
दग्नी नासिके वसिष्ठकश्यपौ वा-
गत्रिः । गायत्रीं छन्दोऽग्निदेवतां
शिरसि विन्यसेदेवमेवोष्णिहं
सवितारं ग्रीवास्वनूके बृहतीं बृ-
हस्पतिम् बाह्वोर्बृहद्रथन्तरे द्यावा-
पृथिवी मध्ये त्रिष्टुभमिन्द्रं
श्रोण्योर्जगतीमादित्यम् मेढ्रेऽति-
च्छन्दसं प्रजापतिम् पायौ यज्ञा-
यज्ञियं वैश्वानरम् ऊर्वोरनुष्टुभं
विश्वान्देवान् अष्ठीवतोः पङ्क्तिं
मरुतः पादयोर्द्विपदां विष्णुम्
प्राणेषु विच्छन्दसं वायुम् नाना-
तिरिक्तेष्वङ्गेषु नानाचरं छन्द
आपो देवतत्येवं सर्वाङ्गेषु यो-
जयित्वा वेदमयः सम्पद्यते शा-
पानुग्रहसमर्थो भवति ब्राह्मं ते-
जश्च वर्धते न कुतश्चिद्भयं विन्दते
ऋङ्मयो यजुर्मयः साममयो ब्र-
ह्ममयस्तेजोमयोऽमृतमयः सम्भूय
ब्रह्मैवाभ्येति । यस्मादेतन्नाब्रह्म-
चारिणे नातपस्विने नासंवत्सरो-
षिताय नाप्रवक्त्रेऽनुब्रूयादनेनाधी-
तेन चान्द्रायणाब्दफलमवाप्नोति
अनेन च सम्यग्ज्ञानेन ब्रह्मणः सा-
युज्यं सलोकतामाप्नोत्याप्नोति॥१३॥

इति सर्वानुक्रमणिकायां
चतुर्थोऽध्यायः ॥

अथ छन्दांसि गायत्र्युष्णिग्-

॥ मन्त्राणां सूची समाप्ता ॥

## ॥ अथ सर्वानुक्रमणिकोक्तछन्दोदैवतमार्षम् ॥

अथातश्छन्दोदेवता गायत्र्या अग्निरुष्णिहः सवितानुष्टुभः सोमो बृहत्या बृहस्पतिः पङ्क्त्या वरुणस्त्रिष्टुभ इन्द्रो जगत्या विश्वे देवा विराजो मित्रः स्वराजो वरुणोऽतिच्छन्दसः प्रजापतिर्विच्छन्दसो वायुर्द्विपदायाः पुरुष एकपदाया ब्रह्मा । सर्वा ऋच आग्नेय्यः सर्वाणि यजूꣳषि वायव्यानि सर्वाणि सामानि सौराणि सर्वाणि ब्राह्मणानि च । स्वाहाकारस्याग्निर्वषट्कारस्य विश्वे देवाः । कर्मारम्भे मन्त्राणां देवता वेदितव्याः सत्यस्य मनसि देवतां ततो हविष्क्रियते देवताम विज्ञाय यो जुहोति देवास्तस्य हविर्न जुषन्ते । स्वाध्यायमपि योऽधीते मन्त्रदेवतज्ञः सोऽमुष्मिँल्लोके देवैरपीड्यते ॥ तस्माच्च देवता वेद्या मन्त्रे मन्त्रे प्रयत्नतो । मन्त्राणां दैवतज्ञानान्मन्त्रार्थमधिगच्छति ॥ मन्त्रार्थज्ञानात्तद्विधूतपाऽप्मा नाकमभ्येति ॥ न हि कं चिद्विज्ञार्य याथातथ्ये न देवताः । श्रौतानां कर्मणां विप्रः स्मार्तानां चाप्नुते फलम् ॥ १० ॥

अनादिष्टमन्त्रादौ सर्वास्मिन् कर्मणि परिभाषितं मन्त्रगणं वक्ष्यामः । सर्वमाग्नेयं गायत्रं गौतमीयꣳ सर्वꣳ साविश्रमौष्णिहं

ङ

॥ वाजसनेयिसंहितामन्त्राणामकारादिक्रमेणसूचिः ॥

अंशुरंशुष्टे ५, ७ ।
अंशुना ते अंशुः २०, २७ ।
अंशश्च मे १८, १९ ।
अक्रन्कर्म ३, ४७ ।
अक्रन्ददग्नि १२, ६-२१-३३ ।
अक्षन्नमीमदन्त ३, ५१ ।
अक्षराजाय कितवं ३०, १८ ।
अग्न आयूंषि १९,३८ । ३५, १६ ।
अग्नये कव्यवाहनाय २, २९ ।
अग्न इन्द्र वरुण ३३, ४८ ।
अग्नये कुटरून् २४, २३ ।
अग्नये गायत्राय २९, ६० ।
अग्नये गृहपतये १०, २३ ।
अग्नये त्वामह्यम् ७, ४७ ।
अग्नयेऽनीकवते ३९, ५९ ।
अग्नये पीवा[illegible] ३०, २१ ।
अग्नये स्वाहा सोमाय २२, ६ ।
अग्नये स्वाहा सोमाय
स्वाहेन्द्राय २२, २७ ।
अग्नाऽ३इ पत्नीवन् ८, १० ।
अग्नावग्निश्चरति ५, ४ ।
अग्निस्तम्मन्ये १५, ४१ ।
अग्निं दूतम्पुरो दधे २२, १७ ।
अग्निं युनज्मि १८, ५१ ।
अग्निं स्तोमेन २२, १५ ।
अग्निं हृदयेन ३९, ८ ।
अग्निं होतारम्मन्ये १५, ४७ ।
अग्निः पशुरासीत् २३, १७ ।

अग्निः पृथुर्धर्मणः १०, २९ ।
अग्निः प्रियेषु १२, ११७ ।
अग्निमद्य होतारं २१, ५९ ।
२८, २३-४६ ।
अग्निरस्मि जन्मना १८, ६६ ।
अग्निर्ऋषिः पवमानः २६, ९ ।
अग्निरेकाक्षरेण ९, ३१ ।
अग्निर्ज्योतिर्ज्योतिरग्निः ३, ९ ।
अग्निर्ज्योतिषा ज्यो० १३, ४० ।
अग्निर्देवता वातो १४, २० ।
अग्निर्मूर्द्धा दिवः ३,१२ । १३, १४ ।
१५, २० ।
अग्निर्वृत्राणि ३३, ९ ।
अग्निश्च पृथिवी च २६, १ ।
अग्निश्च आपश्च १८, १४ ।
अग्निश्च म इन्द्रश्च १८, १६ ।
अग्निश्च मे घर्मश्च १८, २२ ।
अग्निष्वात्ताः पितर १९, ५९ ।
अग्निष्वात्तानृतुमतो १९, ६१ ।
अग्निस्तिग्मेन शोचिषा १७, १६ ।
अग्नीषोमयोरुज्जितिं २, १५ ।
अग्नेऽअच्छावदेह नः ९, २८ ।
अग्नेऽअङ्गिरः १२, ८ ।
अग्ने गृहपते २, २७ ।
अग्ने जातान्प्रणुदा १५, १ ।
अग्ने तमद्या १५, ४३ । १७, ७७ ।
अग्ने तव श्रवो १२, १०६ ।
अग्ने त्वन्नो ३,२५ । १५,४८ । २५,४७ ।